5-5

ब्रह्मसूत्रशाङ्करभाष्यम्

श्रीमदद्वैतानन्दस्वामिपादैर्विरचितेन

# ब्रह्मविद्याभरणेन

संवलितम्

[द्वितीयो भागः]

न्यायवेदान्तविशारदैः
शास्त्ररत्नाकर - पं० एस्. आर्. कृष्णमूर्तिशास्त्रिभिः
[रिसर्च प्रोफसर् संस्कृतविद्यासमितिः
भारतराष्ट्रपतिना पुरस्कृतश्च]
विरचितया लघुटिप्पण्या समन्वितं संपादितं च



मद्रपुरीसंस्कृतविद्यासमितिसचिवैः
संस्कृतिसेवारत्नैः
टि. वि. विश्वनाथार्यैः
[१६, पूर्वमाड वीथी मदरास् - ६००००४]

प्रकाशितम्

१९७९

ब्रह्मसूत्रशाङ्करभाष्यम्

श्रीमदद्वैतानन्दस्वामिपादैर्विरचितेन

# ब्रह्मविद्याभरणेन

संवलितम्

[ द्वितीयो भागः ]

न्यायवेदान्तविशारदैः

शास्त्ररत्नाकर - पं० एस्. आर्. कृष्णमूर्तिशास्त्रिभिः

[ रिसर्च प्रोपसर् संस्कृतविद्यासमितिः

भारतराष्ट्रपतिना पुरस्कृतश्च ]

विरचितया लघुटिप्पण्या समन्वितं संपादितं च




मद्रपुरीसंस्कृतविद्यासमितिसचिवैः

संस्कृतिसेवाव्रतैः

टि. वि. विश्वनाथार्यैः

[ १६, पूर्वमाड वीथी मदरास् - ६००००४ ]

प्रकाशितम्

१९७९

Dedicated to His Holiness

Sri Kanchi Kamakoti Jagadguru
Sri Sankaracharya Chandrasekharendra Saraswati Sripadah



BRAHMASŪTRA—SĀṄKARA—BHĀṢYA

WITH THE COMMENTARY

# BRAHMAVIDYĀBHARAṆA

OF

ŚRĪMAD—ADVAITĀNANDA—SWĀMIPĀDA

*Volume II*


**Edited with Tippaṇi by**

*Sastra Ratnakara*

**Pt. S. R. KRISHNAMURTHI SASTRI**

**Research Professor, Samskrit Education Society, Madras.**

**Receipient of President's Award & Certificate of Honour**






**Published by**

*Samskriti Sevaratna*

**T. V. VISWANTHA AIYAR**

*Secretary*

**THE SAMSKRIT EDUCATION SOCIETY, MADRAS**

**16, EAST MADA STREET, MYLAPORE, MADRAS-600004**

**1979**

प्रथमं संस्करणम् १९७९
First Edition 1979



Published with the aid of
Dr. Rajam Iyer Trust & other Donors.

*Volume I Contains:*

General Preface of
Dr. C. P. RAMASWAMI AIYAR

Prefatory Note by
N. RAGHUNATHA AIYAR

AND

Panditaraja
V. SUBRAHMANYA SASTRI

and the

I Adhyāya (Pp. 46 + 998)

Printed in India
at Rathnam Press, Madras-600 001.

# CONTENTS


| | |
|---|---|
| Bhūmika by the Editor | I— V |
| Table of Contents | 1— 96 |
| **Text :** | |
| II Adhyāya | 1—353 |
| III ,, | 354—733 |
| IV ,, | 734—856 |
| Errata | 857—859 |

## सभाष्यब्रह्मविद्याभरणस्य द्वितीयभागः


| द्वितीयोऽध्यायः | पुटसंख्या |
| --- | --- |
| प्रथमः पादः | 1– 88 |
| द्वितीयः पादः | 89–216 |
| तृतीयः पादः | 217–309 |
| चतुर्थः पादः | 310–353 |
| **तृतीयोऽध्यायः** | |
| प्रथमः पादः | 354–408 |
| द्वितीयः पादः | 409–484 |
| तृतीयः पादः | 485–661 |
| चतुर्थः पादः | 662–733 |
| **चतुर्थोऽध्यायः** | |
| प्रथमः पादः | 734–780 |
| द्वितीयः पादः | 781–811 |
| तृतीयः पादः | 812–839 |
| चतुर्थः पादः | 840–856 |

॥

श्रीः

## सभाष्यब्रह्मविद्याभरणस्य आन्तो द्वितीयो भागः

### व्याख्यापरिचयः

अद्वैत एव श्रुतिशिखरगिरामागमानाञ्च निष्ठा साकं सर्वैः पुराणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः, तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति-इत्यभियुक्तोक्तं इदंव्याख्यारचयितुरुद्देशादिकं च यथामत्युपपादितं प्रथमभागस्य भूमिकायाम् । अथात्र-व्याख्यारत्नस्यास्य प्रसन्नगम्भीरभाष्यभावप्रकाशनादौ ऐदंपर्यादिकं कतिपयस्थलोदाहरणेन निरूप्यते—

[ 1 ]

सृष्टिवाक्यानि जगत्कारणत्वेन उपलक्षयन्ति शुद्धं निर्विशेषं ब्रह्म, न तु कारणत्वं ज्ञेयब्रह्मस्वरूपान्तर्गतम्—इत्यौपनिषदाद्वैतसिद्धान्तः । स्पष्टीकृतश्चैतत् जन्माद्यधिकरणे तदनन्यत्वाधिकरणे कार्याधिकरणे अन्यत्र च तत्र तत्र भाष्ये । इदमेव सौत्रमिति भाष्यकृतामाशयः । अत एवोक्तमभियुक्तैः—प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्करार्यैस्तदेव-इति ।

सोऽयमर्थः सौत्र उपपादितः सविमर्शं व्याख्यातृभिरेतैः कारणत्वाधिकरणे । वेदान्तवाक्यानां कार्यांशे विगाने सत्यपि ब्रह्मणः कारणत्वे न विगानम्, अतो नाप्रामाण्यम्—इति कारणत्वेनचेतिसूत्रेणोक्तम् । तदिदं विमृश्य भाष्याशयः सम्प्रकाशितोऽत्र व्याख्याने—

"ननु कार्यांशे विगाने सति तन्निरूपितायां कारणतायामपि विगीतत्वं अवर्जनीयमेव, तथा च कथं ब्रह्मणः कारणतायां अविगीतता इति चेत्,

यदि हि कारणत्वविशिष्टमेव ब्रह्म वेदान्तप्रतिपाद्यं भवेत् तदा खलु विगानं अप्रामाण्यावहं भवेत्, न तु तथाऽस्ति, अपि तु कारणत्वोपलक्षितं सत्यज्ञानाद्यात्मकं ब्रह्म तात्पर्यविषयः, कारणत्वादिप्रतिपादनं तु तत्प्रतीत्युपायमात्रम् । तथा च कार्यद्वारा कारणतायां विगाने सत्यपि तात्पर्यविषयीभूते परिनिष्ठितस्वरूपे विरोधाभावात् नाप्रामाण्यम्" इति ।

'कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तं अविगीतार्थत्वात्' इति तत्रत्यभाष्ये गूढोऽयमर्थः ।

श्रौतश्चायमेवार्थः । 'यतो वा इमानि भूतानि जायन्ते' इति वाक्ये यत्पदेन धर्मिस्वरूपमात्रं हि निर्दिष्टम्, न तु विशिष्टम् । उक्तञ्च श्रीविट्ठलमिश्रैः दृश्यत्वहेतुनिर्वचने—"तमेव विदित्वेति । तं-शुद्धं धर्मिणं आत्मानं, यत्तदोः शुद्धधर्मिबोधकत्वात् । अत एव यद्विषयकत्वेनेतिमणिं यादृशविशिष्टविषयकत्वेनेति व्याचक्रुः तार्किकशिरोमणयः" इति ।

अत्र, एवं व्याख्यानाकरणे यत्पदस्य शुद्धधर्मिबोधकत्वेन विशिष्टधर्मिलाभासंभवः इति शिरोमणीनां भावः स्पष्टः ॥

[2]

मुक्तोपसृप्यव्यपदेशात् इति द्युभ्वाद्यधिकरणे सूत्रम् । अत्र-सिद्धान्ते मुक्तस्य स्वरूपं ब्रह्म, न तु मुक्तप्राप्यं, अतश्च सूत्राननुगुणः अद्वैतसिद्धान्तः-इति शङ्कां निराकर्तुं, मुक्तपदं अविद्यारागद्वेषादिदोषमुक्तपरं इत्युक्तं भाष्ये । अत्र मुक्तपदप्रसिद्धार्थो नोक्त इति अस्वरसपरिहाराय 'जीवन्मुक्तपरत्वमुक्तं भाष्ये' इति विवृतं एतद्व्याख्यातृभिः । तदभिप्रेत्यैव 'भिद्यते हृदयग्रन्थिः....परावरे' 'यदा सर्वे प्रमुच्यन्ते........ब्रह्म समश्नुते' इति मन्त्रद्वयं उदाहृतं मुक्तोपसृप्यव्यपदेशत्वेन भाष्ये । उक्तमन्त्रद्वयस्य ब्रह्मणो जीवन्मुक्तप्राप्यत्वप्रतिपादकत्वं समर्थयन्तः इमे व्याख्यातारः भाष्यभावप्रकाशने बद्धश्रद्धाः इति स्फुटम् ॥

[3]

अविरोधाध्याये स्मृत्यधिकरणे स्मृतिकर्तृमनुवचनस्य प्रामाण्ये 'यद्वैकिञ्च-मनुरवदत् तद्भेषजम्' इति श्रुतिवाक्यं साधकतयोपन्यस्तं भाष्ये । व्याख्यातारः केचित् अत्र मनुपदं हिरण्यगर्भपरमिति, उक्तश्रुतेः भाष्याभिप्रेतार्थासाधकत्वं उपपादयन्तः, भट्टवार्तिकोक्तं वाक्यान्तरं उदाहर्तव्यमिति वदन्ति । इमे तु व्याख्यातारः, यद्वैकिञ्चेतिवाक्यस्यैव भाष्याभिमतार्थसाधकत्वं सविमर्शं व्यवस्थापयन्ति ॥

[4]

सहकार्यन्तरविध्यधिकरणे श्रवणादीनां अपूर्वविधिरप्युक्ता भाष्ये । बहवो व्याख्यातारः दृष्टार्थत्वात् नापूर्वविधिरिति नियमविधिं व्यवस्थापयन्तः पाक्षिकापूर्वत्वपरं तद्भाष्यं व्याचख्युः । इमे तु व्याख्यातारः प्रतिबन्धकीभूतपापनिवृत्तिद्वाराऽपि श्रवणादीनां साक्षात्कारसाधनतां सप्रमाणं समर्थयन्तः मुख्यापूर्वविधित्वमपि भाष्योक्तं निरवहन् ॥

[ 5 ]

यावद्विकारन्तु विभागो लोकवत्-इति सूत्रोक्ते भिन्नत्वरूपविभक्तत्वहेतु-कानुमाने आत्मनि व्यभिचारं आशङ्क्य, धर्मिसमानसत्ताकत्वेन हेतुविशेषणेन परिहरन्ति बहवः। इमे तु व्याख्यातारः भाष्योक्तमेव अनुसरन्ति। भाष्ये हि आत्मनो विकारत्वे बाधकं उक्तम्। तदनुसारेण बाधकाभावे सतीति हेतु-विशेषणेन व्यभिचारं वारयन्ति। युक्तञ्च एतदेव। कथमन्यथा अविद्यायां व्यभिचारः परिह्रियेत। समानसत्ताकभिन्नत्वस्य हेतोः अनादौ तत्र सत्त्वात्॥

[ 6 ]

अंशोनानाव्यपदेशात्-इत्यधिकरणे जीवस्य अंशत्वं उपाधिनिबन्धना-वच्छेदरूपं व्यवस्थाप्य, 'आभास एव च' इति सूत्रेण प्रतिबिम्बत्वरूपं वा तदिति उक्तम्। भाष्येऽप्युपपादितम्। बहवो व्याख्यातारः-प्रतिबिम्बवादः न सूत्र-सम्मतः, 'अम्बुवदग्रहणात्तु' इत्यादिना चैतन्यस्य प्रतिबिम्बासम्भवमाशङ्क्य आदि-त्यादिप्रतिबिम्बसाम्यस्यैव वृद्धिह्रासभाक्त्वमित्यनेन व्यवस्थापनात्, नीरूपस्य अचाक्षुषस्य नीरूपे अविद्यान्तःकरणादौ प्रतिबिम्बासम्भवाच्च-इति, आभासएव-चेति सूत्रं न तत्परं इति च वदन्ति। भाष्यकृतान्तु उभयमपि सम्मतम्। यतः 'ममैवांशो जीवलोके' इति गीता अत्राधिकरणे अंशत्वे स्मृतिप्रमाणत्वेन उदाहृता, गीताभाष्ये च तच्छ्लोकव्याख्याने घटाकाशो जलसूर्यश्च अंशत्वे दृष्टान्तत्वेनोक्तौ। अतः भाष्यभावाभिज्ञा इमे व्याख्यातारः प्रतिध्वनेः प्रतिबिम्बत्वं व्यवस्थाप्य नीरूपस्य अचाक्षुषस्यापि प्रतिबिम्बसंभवं, उपाधिचाक्षुषत्वादेरप्रयोजकत्वं च व्यवस्थापयन्तः भाष्यभावं प्रकाशयामासुः॥

[ 7 ]

आत्मगृहीत्यधिकरणे सद्विद्यायाः सत्ताजातिपरतानिरासार्थे वर्णके, विशिष्ट ज्योतिर्ब्राह्मणवाक्यं निर्विशेषविद्यापरं उदाहृत्य विद्यैक्यं साधितम् भाष्ये। यत्किञ्चित् निर्विशेषविद्यावाक्यं उदाहृत्यापि विद्यैक्यसाधनेन पूर्वपक्षनिराससम्भवे वाक्यविशे-षोदाहरणस्य विशुद्धतत्त्वम्पदार्थप्रतिपत्तौ तयोः परस्परोपकारकत्वद्योतनाभिप्रायो भाष्यकृताम्। तमिमं आशयं विवरणकाराद्युदितं विशदीकुर्वन्त इमे व्याख्यातारः भाष्यगाम्भीर्यमस्मानुभावयन्ति॥

[8]

ऐदिकाधिकरणे -श्रीवाचस्पतिमिश्रमतेऽपि कर्मणां केषाञ्चित् प्रतिबन्धक-पापनिरसनेन विद्यासाधनत्वस्य अवश्याभ्युपगन्तव्यतां सूचयन्त इमे व्याख्यातारः, सति प्रतिबन्धे श्रवणादीनां जन्मान्तरीयविद्यासाधनत्वस्य सूत्रतद्भाष्योक्तस्य निरपवादत्वं निरूपयन्ति । अस्मिन्नर्थे "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः" इति श्रुतिवाक्यं प्रमाणयन्ति । उक्तश्रुतेरुक्तार्थसाधकतां स्वरसत उपपादयन्ति च ।

एवं बहूनि एतादृशानि निरूपणानि, कृत्स्नशास्त्रार्थपरिशीलने अकुशलानां शृङ्गग्राहिकया भाष्यार्थावबोधे बहूपकुर्वन्तीति, व्याख्यान्तरेभ्योऽतिशयितमिदं व्याख्यारत्नं ब्रह्मविद्याभरणमिति सूक्ष्मेक्षिकया निरीक्षणे स्पष्टीभवति ॥

[9]

एवं 'फलमत उपपत्तेः' इत्यधिकरणं सोपाधिकावलम्बं तत्त्वंपदार्थशोधन-पेटिकायां न सङ्गतमिति शङ्का जायेत । तत्र हृदयङ्गमः परिहारोऽभिहितः— इयता प्रबन्धेन यः तत्त्वंपदार्थविवेको दर्शितः स सर्वज्ञात् सर्वशक्तेः परम-कारुणिकात् परमेश्वरादेव भवतीति प्रतिपादनार्थं इदमधिकरणमिति पूर्वेणास्य सङ्गतिः-इति ॥

[10]

तृतीयशेषः फलाध्याये तदधिगमाधिकरणावधि अनुवर्तते—इत्युक्तं भाष्ये । अस्य भावो निरूपितोऽत्र व्याख्यायाम् आवृत्तिरसकृदुपदेशादित्यारभ्य आप्रायणादि-त्यन्तैरधिकरणैः निरूपितोऽर्थः साधनतया तृतीयान्तर्गतियोग्योऽपि 'प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः' इति परमात्मनः प्रियतया तद्विषयकप्रत्ययस्य इष्टत्वेन फलान्तर्गतिरपि विद्यते -इति द्योतयितुं फलाध्याये संबद्धः इति ॥

[11]

भामतीप्रस्थानानुसारिण्यपि इयं व्याख्या भाष्यभामत्योः वैमत्ये सति भाष्योक्तं व्यवस्थापयन्ति । यथा—मान्त्रवर्णिकसूत्रार्थे, तइन्द्रियाणीत्यधिकरणशरीरे, 'नहिंस्यात्' 'पशुमालभेत' इत्यनयोः उत्सर्गापवादभावे, 'एवमेतांस्तत्र भक्षयन्ति' इति श्रुत्यर्थे, नातिचिराधिकरणपूर्वपक्षे । एवं अन्यत्रापि कतिपयस्थलेषु ॥

[12]

यद्यप्यत्र केचनार्थाः श्रीमदप्पय्यदीक्षितेन्द्रकृतिषु तत्र तत्र दृश्यन्ते, तथापि समुचितस्थलेषु संयोजनं अतीव हृदयङ्गमं एतेषां व्याख्यातॄणाम्--यथा उत्तरज्ञानेन पूर्वज्ञानस्य बाधः किंरूप इति विचारः समन्वयाधिकरणे परिमले प्रवर्तितः । एभिस्तु व्याख्यातृभिः अध्यासाक्षेपसमाधानप्रघट्टके अपच्छेदन्यायेन आगमस्य प्रत्यक्षात् प्राबल्यसमर्थनप्रस्तावे स संयोजितः । एवं, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतौ ज्ञान-शब्दः ज्ञानवद्वाचकः उत ज्ञानवाचकः इति विचारः सविमर्शं प्रवर्त्तितः परिमले संविद्धामतीविवरणप्रस्तावे । इमे तु व्याख्यातारः 'ज्ञोऽतएव' इत्यधिकरणे, ज्ञानरूपब्रह्माभेदात् जीवो ज्ञानस्वरूप इति व्यवस्थापनप्रसङ्गे ॥

एवमादिकं यथामति तत्र तत्र टिप्पणेऽपि किञ्चित्किञ्चित् निरूपितम् ॥

तदेवं ब्रह्मविद्याभरणाख्यमिदं व्याख्यारत्नं स्वारसिकस्य भाष्यार्थस्य कार्त्स्न्येन अक्लेशेन अवबोधने व्याख्यान्तराण्यतिशेते-इति सूक्ष्मेक्षिकया निरीक्षणे स्पष्टीभवति समेषां विदुषाम् ।

सभाष्यस्यास्य संपूर्णस्य इदं प्रकाशनं श्रीकाञ्चीकामकोटिपीठाधीश्वराणां जीवन्मुक्तानां श्रीपरमाचार्याणां करुणापूर्णानुग्रहसंकल्पानुध्यानादिबलादेव सम्पन्न-मिति अनुभवागतम् । तत् सम्पूर्णमिदं ग्रन्थरत्नं सविनयसाष्टाङ्गानेकप्रणतिपूर्वकं उत्तरोत्तरं अद्वैतवासनाऽभिवृद्धिं प्रार्थयन् श्रीचरणकरकमलयोः समर्पयामि ।

सम्पूर्णस्यास्य प्रकाशने संस्कृतिसेवारत्नानां श्रीविश्वनाथार्याणां आदरः श्रद्धातिशयः श्रीपरमाचार्यसन्निधानेसमर्पणे औत्सुक्यातिशयश्च मुख्यसामग्री इत्यतः तेषां श्रीपरमाचार्यसकरुणपूर्णानुग्रहं श्रीपरमाचार्यश्रीचरणान् सम्प्रार्थये ।

एतन्मुद्रणसम्बन्धिकार्यजातनिर्वहणेन तत्तत्काले अपेक्षितसाहाय्यकरणेन च ममोपकृतवतां मद्रपुरीसंस्कृतकलाशालाध्यक्षाणां ब्रह्मश्रीशिवरामदीक्षितानां, मुद्रणा-शुद्धिपरीक्षणादिना ममोपकृतवतां मद्रपुरीसंस्कृतकलाशालाव्याकरणवेदान्ताध्यापकानां ब्रह्मश्रीविश्वनाथशर्मणाञ्च श्रीपरमाचार्याणामनुग्रहं आशासे ॥

इत्थम्

श्रीचरणयोः सहस्रकृत्वः साष्टाङ्गं प्रणिपतन्

सिद्धार्थ आषाढपूर्णिमा — श्रीपरमाचार्यैकशरणः कृष्णमूर्तिशास्त्री (S. R.)

9 - 7 - '79 — श्रीरामः सहायः

श्रीः

# सभाष्यब्रह्मविद्याभरणविषयानुक्रमणिका

## द्वितीयोऽध्यायः

### प्रथमः पादः


पृष्ठे

समन्वयनिरूपणानन्तरमविरोधनिरूपणे विषयविषयिभावस्य सङ्गतित्वनिरूपणं वृत्तानुवादपूर्वकम् ... 1

विभज्य द्वितीयाध्यायपादार्थवर्णनम् ... 2

**स्मृत्यधिकरणम्**

प्रथमं स्मृतिविरोधपरिहारे हेतुकथनम् ... 2

वेदान्तानां ब्रह्मणि समन्वयोक्ति र्नयुक्ता, सर्वज्ञकपिलप्रणीतसाङ्ख्यस्मृतिविरोधात् । अपि तु तदविरोधेन वेदान्ता व्याख्यातव्याः, न तु मन्वादिस्मृत्यनुसारेण। निरवकाशत्वेन निरतिशयज्ञानकपिलप्रणीतत्वेन च साङ्ख्यस्मृतेः मन्वादिस्मृतिभ्यः प्रबलत्वात्—इति पूर्वपक्षवर्णनम् ... 2

अपौरुषेयश्रुतिविरुद्धायाः पौरुषेयसाङ्ख्यस्मृतेः प्रामाण्यं प्रत्येव विप्रतिपत्तेः, निरवकाशयाऽपि तया न श्रुतिरन्यथानेतुं युक्ता-इति पूर्वपक्षाक्षेपः ... 3

तस्यसमाधानम्—अन्यथानयनं न पूर्वपक्षः। गहनो वेदार्थो न युक्तिभिः समन्वयाध्यायोक्ताभिः निर्णेतुं युक्तः, अपि तु उपबृह्मणानुसारेण। तत्र च साङ्ख्यस्मृतिः निरवकाशत्वात् इतराभ्यः प्रबलेति, तदनुसारेणैवेति पूर्वपक्ष इति .... 4

साङ्ख्यस्मृत्यनुसारेण उपबृह्मणे क्रियमाणे मन्वादिस्मृतीनां भूयसीनां बाधः स्यात्, स च न युक्तः, भूयोऽनुग्रहस्य न्याय्यत्वात् इति सिद्धान्तवर्णनम् ... 5

श्रुतिस्वारस्यानुसारित्वात् मन्वादिस्मृतयः प्रबलाश्च इत्युपपादनम् ... 6

मन्वादिस्मृत्युपबृह्मितश्रुतिविरुद्धत्वात् निरवकाशाया अपि कापिलस्मृतेः औदुम्बरीसर्ववेष्टनस्मृतिवत् अप्रमाणत्वस्य निरूपणम् ... 6

श्रुतिविरुद्धार्थवक्तृत्वादसर्वज्ञेन कपिलेन प्रणीतत्वादपि साङ्ख्यस्मृतिरप्रमाणमिति कथनम् ... 7

कपिलस्य ज्ञानातिशयं दर्शयन्त्याः श्वेताश्वतरश्रुतेः अद्वैतानुयायिकपिलपरताया निरूपणम्, मनुवचनप्रामाण्यस्य "यद्वै किञ्च मनुरवदत् तद्भेषजम्" इति श्रुतिसिद्धत्ववर्णनम्, उक्तश्रुतौ मनुशब्दस्य हिरण्यगर्भपरत्वशङ्का, तन्निराकरणञ्च... 7-8

पृष्ठे

मनुवचनस्य भेषजत्वश्रुतेः प्रमाणत्वप्रतिपादकतायाः आक्षेपसमाधानाभ्यां समर्थनम् ... 8

मन्वादिस्मृतीनां अद्वैतप्रतिपादनपरतायाः श्रुतिस्वारस्यानुसारितायाश्च प्रदर्शनम् ... 9

वेदानुसारिमनुवचनादिविरुद्धत्वाच्च साङ्ख्यस्मृतिरप्रमाणमिति प्रतिपादनम् ... 10

अलोकवेदप्रसिद्धमहादिकार्यांशे इव कारणांशेऽपि अप्रमाण साङ्ख्यस्मृतिरिति, अप्रमाणविरोधो न बाधक इति, न श्रौतसमन्वयासिद्धिरिति अधिकरणार्थोपसंहारः ... 10

## योगप्रत्युक्त्यधिकरणम्

पूर्वाधिकरणन्यायेनयोगस्मृतेरप्यप्रमाणत्वनिरूपणेन तद्विरोधस्यापि श्रौतसमन्वयाबाधकत्वप्रतिपादनम् ... 11

तत्त्वदर्शनोपाययोगांशे श्रुतिसंवादात् प्रमाणं योगस्मृतिः इतरांशेऽपि प्रमाणमित्यधिकाशङ्कायाः अतिदेशापेक्षितायाः निरूपणम् ... 12

श्रुत्यविरुद्धयोगांशे तात्पर्यात् प्रमाणम्, इतरांशे तात्पर्याभावात् तत्र च श्रुतिविरोधात् अप्रमाणमिति निराकरणमधिकाशङ्कायाः ... 12

प्रत्यक्षश्रुत्यविरुद्धेंऽशे सर्वस्य प्रामाण्यम्, विरुद्धे सर्वस्याप्रामाण्यम्, तथाऽपि, तत्त्वदर्शनं वेदान्तेभ्य एव, इतरेषां उपकारितामात्रमिति स्वाशयप्रदर्शनम् ... 13

## नविलक्षणत्वाधिकरणम्

स्मृतिविरोधे परिहृते युक्तिविरोधेन समन्वयाक्षेपः ... 14

पूर्वाधिकरणेन सङ्गतिप्रदर्शनम् ... 14

'वियदादिकं न ब्रह्मप्रकृतिकम्, ब्रह्मविलक्षणत्वात्' इति युक्त्याख्यानुमानाकारप्रदर्शनम् 14

धर्मे इव आगममात्रप्रमेये ब्रह्मणि विषये वेदान्तानां अनुमानविरोधशङ्का न युक्ता-इति शङ्काया निराकरणम्-ब्रह्मानुभवे अनुमानापेक्षायाः सम्भवात्, मननविधेः, सिद्धरूपत्वेन ब्रह्मणः प्रमाणान्तरयोग्यत्वसम्भवेन धर्मवैलक्षण्याच्च-इति ... 14

सिद्धरूपत्वं प्रमाणान्तरयोग्यत्वे अप्रयोजकम्—इति शङ्का, तन्निराकरणश्च ... 14-15

अचेतनत्वाशुद्धत्वाभ्यां हेतोः पक्षधर्मतानिरूपणम् ... 15-16

अचेतनत्वरूपहेतोः स्वरूपासिद्धिशङ्का, तन्निराकरणञ्च ... 16

श्रुतार्थापत्त्या जगतश्चेतनत्वसाधनेन पुनश्च असिद्धिशङ्का, तन्निराकरणञ्च ... 17

पृष्ठे

प्रत्यक्षश्रुतिमाश्रित्य पुनश्च असिद्धिशङ्का, तन्निराकरणम्, सर्वचेतनतासाधकत्वेनपराभिमतश्रुतीनां तदसाधकत्वोपपादनम्, पूर्वपक्षोपसंहारश्च ... 18-20

सिद्धान्तः—परोक्तानुमाने सामान्यव्याप्तिपक्षे विलक्षणत्वहेतोर्व्यभिचारित्वप्रदर्शनम्, विलक्षणत्वशब्दार्थं त्रेधा विकल्प्य, प्रतिकूलतर्कासिद्धिदृष्टान्ताभावैः यथाक्रमं तन्निराकरणञ्च ... 21

असिद्ध्याक्षेपः, तत्समाधानञ्च ... 21

दृष्टान्ताभावस्य आक्षेपः तत्समाधानञ्च ... 21

परकीयानुमानस्य जगत्कारणत्वधर्मिग्राहकप्रमाणबाधोपपादनम् ... 22

सिद्धरूपत्वेऽपि ब्रह्मणः प्रमाणान्तरायोग्यत्वसमर्थनेन पूर्वपक्षनिरासः ... 22

मननविधेः पूर्वपक्षानुकूलत्वनिरासः ... 23

सर्वचेतनतापक्षाश्रयणेन परकीयानुमाने असिद्धिवर्णनम् ... 23

तत्पक्षे चेतनाचेतनविभागश्रवणस्य चैतन्यविभावनाविभावनाभ्यां गतिवर्णनम् ... 23

चैतन्याविभावनं दुर्निरूपमिति शङ्का, तन्निराकरणञ्च ... 23

साङ्ख्याभिमते अचेतनप्रकृतिवादे 'विज्ञानञ्चाविज्ञानञ्च' इति श्रुतिविरोधोपपादनम् ... 23

विलक्षणयोर्ब्रह्मजगतोः उपादानोपादेयभावाभ्युपगमे सत्कार्यवाचोयुक्तेर्हानिः- इति शङ्का, तन्निराकरणञ्च ... 24

चेतनाचेतनात्मकं जगत् विशुद्धब्रह्मप्रकृतिकम्—इत्यौपनिषदे दर्शने प्रलयमाश्रित्य चतुर्विधासामञ्जस्यशङ्का ... 25

परिणामवादेनलोकसिद्धदृष्टान्तमाश्रित्य, जगतः प्रलये सूक्ष्मरूपेण ब्रह्मतादात्म्येऽपि ब्रह्मैक्याभावोपपादनेन च, तन्निराकरणम् ... 26

जगत्तादात्म्याङ्गीकारेऽपि दोषोद्भावनम्, प्रतिबन्द्या तत्समाधानञ्च ... 27

विवर्तवादेनदृष्टान्तमाश्रित्य असामञ्जस्यशङ्कानिराकरणम् ... 27

द्वितीयतृतीयासामञ्जस्यनिरासोपयोगिदृष्टान्तप्रदर्शनम् ... 27-28

चतुर्थासामञ्जस्यस्य अनभ्युपगमेन निरासः ... 28

पूर्वपक्षिणः साङ्ख्यस्य स्वपक्षेऽपि उक्तासामाञ्जस्यदोषप्राप्त्या उभयोस्समत्वादपि तददोषत्वनिरूपणम् ... 29

सूत्रोक्तं तर्काप्रतिष्ठानं दोषं सामान्यव्याप्तिमूलके परोक्ते विलक्षणत्वहेतुकानुमाने उपपाद्य सिद्धान्ते तस्य अदोषत्वोपपादनम् ... 29

पृष्ठे

विशेषव्याप्तिं लौकिकप्रवृत्त्यनुच्छेदञ्च अवलम्ब्य तर्काप्रतिष्ठानदोषपरिहारेण शङ्का, प्रकृतविषये तर्कस्य अप्रतिष्ठितत्वदोषोपपादनेन तन्निराकरणञ्च ... 30-31

**शिष्टापरिग्रहाधिकरणम्**

जगतः परममहद्ब्रह्मोपादानकत्वे वेदान्तसमन्वयस्य 'यद्यत् कार्यद्रव्यं तत् स्वन्यूनपरिमाणद्रव्यारब्धम्' इति व्याप्तिमूलकेन वैशेषिकानुमानेन विरोधशङ्का, साङ्ख्यतर्कनिराकरणयुक्त्यतिदेशापेक्षितायाः अधिकाशङ्काया निरूपणं उक्तानुमानस्य साङ्ख्यानुमानवद्दुष्टत्वाभावोपपादनेन ... 32

उक्तानुमानस्यापि दुष्टत्वोपपादनेन अधिकाशङ्कानिराकरणम् ... 33

**भोक्त्रापत्त्यधिकरणम्**

ब्रह्मोपादानकत्वेन जीवजगतोर्ब्रह्माभेदे वेदान्तसमन्वयस्य 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इतिन्यायेन जीवजगतोः परस्परमभेदापत्तिरिति तर्केण बाध इति पूर्वः पक्षः 34-35

परिणामवादेनलोकसिद्धदृष्टान्तमाश्रित्य उक्तपूर्वपक्षनिरासेन सिद्धान्तकथनम्-उपादानोपादेययोः तादात्म्यमेव नत्वैक्यम्, तथा च नोक्तदोष इति ... 35

**तदनन्यत्वाधिकरणम्**

निराकृतस्य पूर्वपक्षस्य न्यायान्तरेण पुनः निराकरणे सूत्रकारप्रवृत्तौ हेतुकथनम् ... 36

विवर्तवादमाश्रित्य पूर्वोक्तपूर्वपक्षनिरासः जगतो मिथ्यात्वप्रतिपादनेन, जगन्मिथ्यात्वस्य श्रौतत्वसमर्थनञ्च ... 37

जगन्मिथ्यात्वं न सूत्रार्थः, अनन्यत्वस्यैवोक्तेः—इति शङ्का ... 37

आरम्भणशब्देति वाचारम्भणश्रुतेर्हेतूकरणात्, तस्याश्च कार्यमिथ्यात्वप्रतिपादनस्वरसत्वात् अनन्यत्वपदं मिथ्यात्वपरमिति निराकरणमुक्तशङ्कायाः ... 37

भेदविशिष्टतयामिथ्यात्वं अनन्यत्वशब्दार्थ इति वर्णनम्, तत्प्रयोजनवर्णनञ्च... 37

प्रपञ्चसत्यत्वाविरोधेन विष्णुविशिष्टाद्वैतिभिर्वर्ण्यमानस्य वाचारम्भणश्रुत्यर्थस्य निरूपणम् ... 38

तत्र अध्याहारविपरिणामादिदोषप्रदर्शनेन तन्निराकरणम् ... 39

प्रपञ्चसत्यत्वमनुसृत्यशिवविशिष्टाद्वैतिभिर्वण्यमानतच्छ्रुत्यर्थप्रदर्शनम्, तद्दूषणञ्च ... 39

तैरेव प्रकारान्तरेण वर्ण्यमानतच्छ्रुत्यर्थप्रदर्शनम्, तद्दूषणञ्च ... 39

पृष्ठे

वाचारम्भणश्रुतेर्मिथ्यात्वपर्यवसाय्यर्थकत्वस्य आक्षेपसमाधानाभ्यां व्यवस्थापनम् ... 40
आरम्भणशब्दादीत्यादिशब्दार्थकथनम् ... 41
श्रुतिसिद्धे प्रपञ्चमिथ्यात्वे अनुमानद्वयप्रदर्शनम्, तत्र व्यभिचारशङ्का, तत्परिहारः, तत्र च अन्योन्याश्रयशङ्का, तत्परिहारश्च ... 41
ब्रह्मपरिणामवादानुवादः, तस्य भेदाभेदवादत्वविशदनम्, भेदाभेदप्रक्रियायाः द्विधात्वप्रतिपादनम्, तत्रैकस्याः सिद्धान्तसाधारणत्वेऽपि नानात्वसत्यत्वमिथ्यात्वाभ्यां परिणामवादसिद्धान्तयोर्वैलक्षण्यनिरूपणञ्च ... 42
मृदादिदृष्टान्तेषु दार्ष्टान्तिके च विकारानृतत्वस्य श्रुत्या अवधारणात् परिणामवादोऽश्रौत इत्युपपादनम् ... 43
सार्वदिकं जीवब्रह्मैक्यं समर्थ्य तदुपदेशान्यथानुपपत्त्या जगन्मिथ्यात्वसमर्थनम् ... 43
अनृताभिसन्धस्य बन्धश्रुतेः भेददृष्ट्यपवादस्य च जगन्मिथ्यात्वसाधकत्वनिरूपणम् ... 43-44
ज्ञानान्मोक्षोक्तेरपि जगन्मिथ्यात्वसाधकत्वप्रदर्शनम् .... 44
एकत्वैकान्ताभ्युपगमे प्रत्यक्षादिप्रमाणविधिप्रतिषेधमोक्षशास्त्राणां व्याघातशङ्का आत्मैकत्वासिद्धिशङ्का च ... 44
आब्रह्मसाक्षात्कारं आविद्यकद्वैतसत्यत्वोपपादनेन तत्परिहारः ... 44-45
असत्यात् सत्यसिद्धेः दृष्टान्तेन समर्थनम्, भाष्योक्तदृष्टान्तस्य उक्तार्थाननुकूलत्वशङ्का, तन्निराकरणम्, अनुकूलदृष्टान्तान्तरवर्णनञ्च ... 45-46
परमार्थसत्यतायाः अर्थक्रियाकारित्वानपेक्षितत्वोपपादनम् ... 47
अप्रमातः प्रमारूपब्रह्मसाक्षात्कारानुपपत्तिशङ्का, स्वप्नदृष्टान्तेन तन्निराकरणम्... 47
स्वप्नदृष्टान्तस्य प्रकृताननुकूलत्वमाशङ्क्य रेखाक्षरदृष्टान्तकथनम्, आक्षेपसमाधानाभ्यां तद्दृष्टान्तसमर्थनञ्च ... 48
तत्त्वमसीत्यादेः भेदाभेदपरत्वनिरासः, ऐक्यप्रमापकत्वसमर्थनञ्च ... 48-49
शून्यवादस्य अप्रामाणिकत्वस्थापनेन तदविरोधकथनम् ... 49-50
मृदादिदृष्टान्ताम्नानात् प्रपञ्चपरिणामि ब्रह्मेति शङ्का, तन्निराकरणम्, सृष्टिवाक्यावलम्बेन तच्छङ्का, तन्निराकरणञ्च ... 50-51
प्रपञ्चस्य मिथ्यात्वे ईश्वरकारणप्रतिज्ञाविरोधशङ्का, तन्निराकरणञ्च ... 51

पृष्ठे

ईश्वरत्वस्य आविद्यकत्वप्रतिपादनम् ... 51
ब्रह्मणि प्रपञ्चस्य स्वोपादानगतत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वोपपत्तये ब्रह्मणः प्रपञ्चतादात्म्यनिरूपणाय सत्कार्यवादसमर्थनारम्भः ... 52
कार्यकारणयोस्तादात्म्योपलब्ध्या तादात्म्यसाधनम् ... 53
प्रागुत्पत्तेरनन्यत्वश्रुत्या पश्चादप्यनन्यत्वरूपतादात्म्यनिरूपणम् ... 54
उत्पत्तेः प्राक् कारणव्यतिरेकेणकार्यसत्त्वनिषेधश्रवणात् कार्यस्य अनृतता चेति-उपपादनम् ... 54
'सन् घटः' इति सद्रूपेण ब्रह्मणः जगत्यनुगमात् तादात्म्यमित्युक्ते, तत्र भासमानं सत् ब्रह्मातिरिक्तमिति शङ्का, तन्निराकरणञ्च ... 55
उत्पत्तेः प्राक् कार्यस्य असत्त्वश्रवणात्, तदा सता कारणेन तादात्म्यं न सम्भवतीति शङ्का, तन्निराकरणम्, अस्य समाकर्षादितिसूत्रेण अगतत्वोपपादनञ्च 56
आरम्भवादनिराकरणाय कार्यस्य उत्पत्तेःप्राक्सत्त्वकारणतादात्म्ययोः उपादानकारणनियमान्यथानुपपत्त्या समर्थनम् ... 57
कार्यकारणयोः तादात्म्यबुद्धिभेदबुद्ध्योर्भावाभावाभ्यां तादात्म्यसमर्थनम्, कार्यकारणयोः पराभिमतस्य समवायस्य दूषणं सङ्ग्रहेण ... 58
कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु समवायेन वर्तते-इत्यारम्भवादप्रक्रियायाः कृत्स्नैकदेशवृत्तिविकल्पनेन निराकरणम् ... 58-59
उत्पत्तिपदार्थविमर्शनपूर्वकं घटउत्पद्यतइतिप्रतीत्यन्यथाऽनुपपत्त्यापि प्रागुत्पत्तेः कार्यस्यसत्त्वप्रसाधनम् ... 59
आरम्भवादे प्रागभावप्रध्वंसाभावयोर्दुरुपपादत्वोपपादनम् ... 60
सत्कार्यवादे कारकव्यापारवैयर्थ्यशङ्कायां, कार्यं कारणस्याकारविशेष इत्यङ्गीकारेण सार्थक्यनिरूपणम् ... 61
आकारस्य सत्त्वासत्त्वविकल्पनेन सत्कार्यवादाक्षेपः, सत्कार्यवादाविरोधेन आकारासत्त्वमाश्रित्य परिहारश्च ... 62
कार्यस्यप्राक्सत्त्वकारणानन्यत्वयोः श्रुतितदर्थापत्तिप्रदर्शनम्, आकारस्यासत्त्वे उत्पत्त्यनुपपत्तिशङ्का, सत्त्वेऽपिसाऽनुपपन्नेति विवेचनेन, उत्पत्त्यन्यथाऽनुपपत्त्याऽपि कार्यस्य सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वरूपमिथ्यात्वसमर्थनम् ... 62-63
एवंप्रपञ्चमिथ्यात्वेऽपि नाद्वैतसिद्धिः, प्रपञ्चमिथ्यात्वस्य मिथ्यात्वसत्यत्वयोः द्वैतापत्तेः—इति शङ्का ... 63

पृष्ठे

मिथ्यात्वनिर्वचनपूर्वकं, प्रपञ्चमिथ्यात्वस्यमिथ्यात्वे नाद्वैतहानिरिति निरूपणम्...63-64
पटप्राणदृष्टान्ताभ्यां कार्यकारणानन्यत्वोपपादनम्, श्रौतीप्रतिज्ञापि कार्य-कारणानन्यत्वे प्रमाणमिति प्रदर्शनपूर्वकं अधिकरणार्थोपसंहारः 65

इतरव्यपदेशाधिकरणम्

वेदान्तानां प्रत्यग्ब्रह्मैक्यसमन्वयस्य ऐक्यापादितसाङ्कर्यप्रयुक्तहिताकरणादि-रूपदोषापत्तिरूपप्रतिकूलतर्कबाध इति पूर्वः पक्षः ... 65
आविद्यकभेदमाश्रित्य तर्कबाधपरिहारेण सिद्धान्तः ... 66
जीवेश्वरभेदस्य अनाविद्यकत्वशङ्का, तन्निराकरणञ्च ... 67
अश्मादिदृष्टान्तैः एकस्मिन्नपिब्रह्मण्यनेकवैचित्र्यस्य उपपन्नतोपपादनम्, अनुप-पत्तेर्द्वैतमिथ्यात्वानुकूलत्वोपपादनञ्च ... 68

उपसंहारदर्शनाधिकरणम्

अधिकरणाङ्गसंशयसङ्गत्योः कथनम् ... 69
अद्वितीयाद्ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य "यद्यत् उपादानं कर्तृकारकञ्च तत् इतरकारणकलापसहितमेव कार्योत्पादकम्" इति तर्केण बाध इति पूर्वःपक्षः ... 69
अद्वितीयत्वाविरोधेन ससहायत्वशङ्का, तर्कस्याप्रयोजकत्वशङ्का च, तयो-र्निराकरणञ्च ... 69-70
क्षीरादिदृष्टान्तमाश्रित्य तर्कस्यदुष्टत्वोपपादनेन सिद्धान्तकथनम् ... 70
अचेतनक्षीरादिदृष्टान्ताश्रयणं चेतनस्य कर्तृत्वरूपनिमित्तकारणतोपपादनाय नालमिति शङ्कया देवादिदृष्टान्तावतारणम् ... 71
देवादिदृष्टान्तोऽपि विषम इति शङ्का, तन्निराकरणञ्च ... 71

कृत्स्नप्रसक्त्यधिकरणम्

निरवयवं ब्रह्म जगदुपादानमिति वेदान्तसमन्वयस्य निरवयवंनोपादानमिति-तर्कविरोधेन कृत्स्नप्रसक्त्यादिदोषेण च आक्षेपः ... 72
शब्दैकप्रमाणगम्यं यथाशब्दमभ्युपगन्तव्यम्, वेदशब्दश्च उपादानत्वनिर-वयवत्वे विचित्रशक्तियोगञ्च ब्रह्मणो वक्ति, अतो न युक्तोऽयमाक्षेप इति सिद्धान्तकथनम् ... 73
तदनन्यत्वसूत्रेण विवर्तवादो व्यवस्थापितः, तत्र च उक्ताक्षेपासम्भवात् नास्ति-पूर्वपक्षमिदमधिकरणमितिशङ्का, कृत्वाचिन्तेयमिति तन्निराकरणम् ... 74

पृष्ठे

कृत्वाचिन्तामुद्धाट्य विवर्तवादस्मारणम् ... 74

विवर्तवादेऽपि अत्रनिराकर्तव्यशङ्काविशेषं पूर्वपक्षतया प्रदर्श्य तन्निराकरणस्य स्मारणप्रयोजनत्वकथनम् ... 75

स्वप्नादिदृष्टान्ताश्रयणेन विवर्तवादे कृत्स्नप्रसक्त्यादिदोषाभावोपपादनम् ... 75

'निरवयवं नोपादानं' इति तर्कस्य स्वव्याघातकत्वेन साङ्ख्यं प्रति दुष्टत्वोपपादनम् ... 76

अणुकारणवादिनोऽपि उक्ततर्कस्य उक्तरीत्यादुष्टत्वोपपादनम् ... 77

**सर्वोपेताधिकरणम**

पूर्वाधिकरणाक्षेपसङ्गतिप्रदर्शनम् ... 78

अशरीरं ब्रह्म जगत्स्रष्टृ इति वेदान्तसमन्वयः "विचित्रशक्तियोगेऽपि यः सशरीरेन्द्रियः स एव सृजति" इतितर्कबाधित इति पूर्वपक्षकथनम् ... 78

पूर्वाधिकरणोक्तन्यायेन पूर्वपक्षनिरसनम्, निरसनीयतर्कभेदात् पूर्वाधिकरणागतार्थतेति निरूपणञ्च ... 79

**नप्रयोजनवत्त्वाधिकरणम्**

नित्यतृप्तं ब्रह्म जगत्कारणं इति वेदान्तसमन्वयः "या या प्रेक्षावत्प्रवृत्तिः सा प्रयोजनोद्देशपूर्विका" इति तर्कबाध्यः-इति पूर्वपक्षकथनम्, पूर्वाधिकरणार्थाक्षेपसङ्गतिप्रदर्शनम् ... 79-80

लीलायां व्यभिचारेण तर्कस्य दुष्टत्वोपपादनम्, लीलाशब्दार्थविवेचनेन सूत्रस्थकैवल्यपदस्य प्रयोजनवर्णनम्, क्रियालीलाविलासलीलयोःप्रकृतोपयोगिदृष्टान्तप्रदर्शनश्च ... 80

प्रपञ्चसृष्टिः परमात्मनः क्रीडा स्वभावो वेति भाष्योक्तस्य माण्डूक्यश्वेताश्वतरश्रुतिविरोधोपपादनेन आक्षेपः, उक्तश्रुत्यभिप्रायवर्णनेन तत्समाधानम् ... 81

**वैषम्यनैर्घृण्याधिकरणम्**

"निरवद्यः परमात्मा विचित्रं जगत् वैषम्येण सृजति संहरति च" इति वेदान्तसमन्वयः परमात्मनः सावद्यत्वापादकतर्कविरुद्ध इति पूर्वपक्षस्य निरूपणम्, पूर्वाधिकरणेनाक्षेपिकीसङ्गतिश्चेति ... 81-82

पूर्वाधिकरणैरस्याधिकरणस्य गतार्थत्वशङ्का, तत्परिहारश्च ... 82

पृष्ठे

विषमसृष्टौ धर्माधर्मसापेक्षतोपपादनेन तर्कविरोधं परिहृत्य सिद्धान्तकथनम्, धर्माधर्मरूपादृष्टमात्रेण वैषम्यं नोपपन्नमिति शङ्का तत्परिहारश्च ... 83

प्रलयस्य धर्माधर्मनिमित्तकता न सम्भवतीति शङ्का, तत्परिहारश्च ... 84

धर्माधर्मकारयितृत्वरूपवैषम्यस्य निर्निमित्तत्वेन तद्दोषतादवस्थ्यमितिशङ्का, तत्रापि धर्माधर्मसापेक्षतोपपादनेन तन्निराकरणम् ... 85

आद्यायां विषमसृष्टौ उक्तदोषस्य उक्तरीत्या परिहारो न सम्भवतीति शङ्का, संसारस्य प्रवाहानादित्वात् सम्भवतीति तन्निराकरणम्, संसारस्य प्रवाहानादित्वे उपपत्तिप्रदर्शनम्, "अनेन जीवेनात्मना" इति श्रुतेः प्रमाणत्वप्रदर्शनञ्च ... 85-86

उक्तश्रुतेरुक्तार्थासाधकत्वशङ्का, पूर्वतन्त्रन्यायेन तन्निराकरणम् ... 86-87

**सर्वधर्मोपपत्त्यधिकरणम्**

अस्याधिकरणस्य पादान्ते सङ्गतत्वोपपादनम्, 'निर्गुणं ब्रह्म जगत उपादानम्, इति वेदान्तसमन्वयस्य 'यन्निर्गुणं तन्नोपादानम्' इतितर्केण वाध इति पूर्वपक्षनिरूपणम्, ... 87

आविद्यकसगुणत्वोपपादनेन. तर्कस्य अप्रयोजकत्वनिरूपणेन च सिद्धान्तकथनम् ... 87-88

## द्वितीयाध्याये द्वितीयः पदः

**रचनानुपपत्त्यधिकरणम्**

वेदान्तसमन्वयविरोधिनां तर्कमूलकसाङ्ख्यादिदर्शनानां तर्कैरेव निरासाय प्रवृत्तोऽयं पादः ब्रह्मविचारशास्त्रेऽसङ्गत इति शङ्का, तन्निराकरणञ्च ... 89

प्रथमपादद्वितीयपादयोः पौर्वापर्ये नियामकस्य कथनम् ... 89

शमादिसम्पन्नाधिकारिके शास्त्रेऽस्मिन् द्वेषप्रयुक्तं परमतनिराकरणं अयुक्तं इति शङ्का तन्निराकरणञ्च ... 90

जगदुपादानत्वेन स्वतन्त्राचेतनप्रधानसाधकतया साङ्ख्याभिमतानां पञ्चानां हेतूनां तदीयकारिकया निर्देशः ... 90

तत्र समन्वयहेतोः पक्षसाध्यनिर्देशः ... 90

उक्तहेतुसाध्ययोः सामान्यव्याप्तिविशेषव्याप्त्योर्निरूपणम्, तस्य भाष्यारूढत्वविशदनञ्च ... 91

दृष्टान्ते साध्यसाधनवत्ताया आक्षेपसमाधानाभ्यां समर्थनम ... 91-92

उक्तहेतुना महत्तत्त्वेपक्षेसाध्यसिद्धेः प्रधानसिद्धिपर्यवायित्वविशदनम् ... 92

पृष्ठे

भाष्ये साध्यकोटौ सामान्यघटनाया: अर्थान्तरशङ्कानिराकरणार्थताप्रतिपादनम् ... 92

उक्तहेतोर्व्यभिचारशङ्का, तन्निराकरणञ्च ... 92

परिमाणरूपद्वितीयहेतुना प्रधानसाधनम् ... 92

शक्तित:प्रवृत्तिरूपतृतीयहेतुना प्रधानसाधनम् ... 93

वैश्वरूप्याविभागकारणकार्यविभागरूपहेतुद्वयेन प्रधानसाधनम् ... 93

उक्तानुमानेषु सिद्धसाधनसत्प्रतिपक्षान्यतरदोषशङ्का, तन्निराकरणञ्च, सौत्रानुमानशब्दार्थकथनञ्च ... 93

उक्तसाङ्ख्यानुमानानां चेतनाधिष्ठितमेवकार्योपादानमितिप्रत्यनुमानस्य सूत्रभाष्याभ्यां लम्भितस्य प्रदर्शनम् ... 93

प्रत्यनुमाने गौरवापत्तिरूपप्रतिकूलतर्कशङ्का, तन्निराकरणञ्च ... 94

प्रत्यनुमानस्य प्राबल्यसमर्थनेन परकीयानुमानबाधकत्वनिरूपणम् ... 94

समन्वयरूपहेतो: स्वरूपासिद्धत्वस्य सौत्रचकारसूचितस्य आक्षेपसमाधानाभ्यां व्यवस्थापनम् ... 95

समन्वयरूपहेतो: साध्याव्याप्यत्वोपपादनम् ... 95

परिमाणरूपहेतो: सङ्ख्येयत्वरूपत्वे अव्यापकत्वरूपत्वे च निष्कृष्टसाध्यव्यभिचारोपपादनम्, तदर्थं साध्यस्य निष्कर्षश्च ... 96

वैश्वरूप्याविभागकारणकार्यविभागयो: पराभिमतासाधकत्वोपपादनम् ... 96

शक्तितः प्रवृत्तिरपि न स्वतन्त्राचेतनप्रधानोपादानत्वसाधिकेति निरूपणार्थं प्राथमिकप्रवृत्ते: प्रधाने असम्भवनिरूपणम्, तदर्थं साङ्ख्यप्रक्रियानिरूपणञ्च... 96-97

तत्र 'चेतनस्यापि केवलस्य प्रवृत्तिर्नदृष्टा' इति साङ्ख्यस्य चोद्यम्, तस्याभिप्रायवर्णनम् ... 97

गूढाभिसन्धिना सिद्धान्तिना चोद्यसमाधानम् ... 97-98

तमजानतेव साङ्ख्येन गूढाभिसन्धिना तद्दूषणम्, सविमर्शं अभिसंधितार्थस्य समर्थनम् - स्वतन्त्रस्याचेतनस्यैवप्रवृत्तिरिति । तत्र लोकायतसंवादकथनम् ... 98

उक्तसाङ्ख्याभिसन्धेर्निरसनम्, चिन्मात्ररूपयोरपि जीवेश्वरयो: अधिष्टातृत्वसमर्थनञ्च ...99-100

अद्वितीयत्वमवलम्व्य तदाक्षेप:, तत्समाधानम्, सिद्धान्त्युक्तस्य प्रत्यनुमानस्य जलस्यन्दनादौ व्यभिचारशङ्का, तस्यपक्षसमत्वपक्षत्वोपपादनेन तत्परिहारश्च ... 100

पृष्ठे

अत्र उपसंहारदर्शनादितिसूत्रविरोधशङ्का, तत्परिहारश्च ... 101

प्रधानकारणवादे सृष्टिप्रलयव्यवस्थानुपपत्तिदोषस्य आक्षेपसमाधानाभ्यां समर्थनम् ... 101

सिद्धान्तेऽपि प्रलयानुपपत्तिशङ्का, तन्निरासश्च ... 101

सिद्धान्त्यनुमानस्य तृणादौ व्यभिचारशङ्का, तत्परिहारश्च ... 102

'चेतनाधिष्ठानं विनापि प्रधानं चेतनप्रयोजनाय प्रवर्तते' इति साङ्ख्यप्रक्रियायाः प्रयोजनविकल्पनेन दूषणम् ... 103

पुरुषस्य अनिर्मोक्षप्रसञ्जनम्, तदीयस्य अनिर्मोक्षप्रसङ्गपरिहारप्रकारस्य निर्वहितुमशक्यतानिरूपणञ्च ... 104

पुरुषाश्मदृष्टान्ताश्रयणेन साङ्ख्यस्य पुनःप्रत्यवस्थानम्, दोषानिर्मोक्षस्य बन्धानिर्मोक्षप्रसङ्गस्य च निरूपणेन तन्निवर्तनम्, परस्य दृष्टान्तवैषम्यप्रदर्शनम्, सिद्धान्ते तद्दोषप्रसङ्गाभावस्य प्रतिपादनञ्च ... 104

कार्योपादानतायां चेतनाधिष्ठानावश्यकत्वेऽपि ईश्वरो न कल्पनीय इति शङ्कायाः निराकरणम् ...104-105

प्रधानवादे प्रलयानुपपत्तेः पूर्वोक्तायाः परिहारेण साङ्ख्यस्य शङ्का, तथासति सृष्ट्यनुपपत्तितादवस्थ्यमिति तन्निराकरणञ्च ... 105

उभयोपपत्तियोग्यं प्रधानं अनुमीयते—इति पुनः शङ्का, प्राचीनानां स्वतन्त्राचेतनत्वप्रयुक्तदोषाणां स्मारणेन अनन्तरपूर्वोक्तदोषतादवस्थ्यसमर्थनेन च तन्निराकरणम् ... 106

परस्परविरुद्धाभ्युपगमात् श्रुतिस्मृतिविरुद्धाभ्युपगमाच्च साङ्ख्यानां दर्शनं असमञ्जसमिति निरूपणम् 106-107

तप्यतापकभेदग्राहिप्रत्यक्षविरुद्धाभ्युपगमात् अद्वैतदर्शनमप्यसमञ्जसम्, भोक्त्रापत्तिसूत्रोक्तन्यायेनापि न तत्परिहारसम्भवः-इति शङ्का ... 107-108

विवर्तवादाश्रयणेन तत्परिहारः, प्रतिबन्द्या तप्यतापकभेदप्रसिद्धेर्गतिनिरूपणञ्च ... 109

पारमार्थिकतद्भेदवादिनः साङ्ख्यस्य अनिर्मोक्षप्रसञ्जनम्, सिद्धान्तिनस्तदभावोपपादनञ्च ... 109-110

**महद्दीर्घाधिकरणम्**

परमाणुकारणवादिना ब्रह्मवादिन्युद्भाव्यमानदोषस्य प्रतिसमाधानपरस्यास्याधिकरणस्य द्वितीयेऽस्मिन् परमतनिराकरणपादे प्रासङ्गिकत्वप्रतिपादनम् ... 110-111

पृष्ठ

"ब्रह्म न जगदुपादानम्, गुणवैलक्षण्यात्, उपादानोपादेययोश्च गुणसालक्षण्यनियमात्" इति वैशेषिकोद्भावितदोषस्य समाधानान्तरसम्भवेऽपि, तदीयप्रक्रियामाश्रित्यैव तद्रीत्यादोषसमाधानं कर्तुं तदीयप्रक्रियाप्रदर्शनम् ...111-112

तत्र, अणुवाद्यनङ्गीकृतांशानां भाष्ये अनुवादः, तैस्तदनङ्गीकारे हेतुकथनञ्च ... 113

'अनुक्तानुवादो न युक्तः' इति शङ्कायाः, तार्किकपरिभाषा अप्रयोजिकेत्यभिप्रायेण तथानुवाद इति समाधानम्, तदर्थं अनङ्गीकारहेतूनां आभासीकरणञ्च ...113-115

तदीयनियमस्य पूर्वोक्तस्य परमाणुद्व्यणुकयोर्व्यभिचारप्रदर्शनेन ब्रह्मवादिनि तदुक्तदोषाभावविशदनम्, अस्मिन्नर्थे महद्दीर्घवदितिसूत्रयोजना च ... 115

योजनान्तरं प्रतिपादयतो भाष्यस्य आशयकथनम् ... 116

महद्दीर्घेतिनिर्देशस्य कर्मधारयत्वासम्भवः, द्वन्द्वत्वे पूर्वोक्तार्थे सूत्रयोजनानुपपत्तिः—इति शङ्का, तादर्थ्येन द्वन्द्वप्रयोजकविचारश्च ... 116

लौकिकव्यवहारालम्बनेन द्वन्द्वत्वसमर्थनेन समाधानम् ... 117

पूर्वोक्तव्यभिचारपरिहरणेन वैशेषिकप्रत्यवस्थानम्, तदीयसूत्रविरोधेन तत्परावर्तनम्, तदीयसूत्राणामर्थवर्णनञ्च, संयोगे गुणेऽपि व्यभिचारप्रदर्शनम् ...117-118

द्रव्यविषयनियमस्य गुणेव्यभिचारप्रदर्शनमनुचितमिति शङ्का, तदीयसूत्रोदाहरणेन तन्निरासः ...118-119

नविलक्षणत्वाधिकरणशिष्टापरिग्रहाधिकरणाभ्यां अस्याधिकरणस्यागतार्थत्वसमर्थनम्, तदर्थं निराकार्यनियमभेदकथनम् ... 119

अत्रनिराकर्तव्यनियमविशेषे सूत्रतद्भाष्योक्तव्यभिचारस्य उपपत्तये सामान्यगुणव्यावृत्तविशेषगुणत्वस्य दुर्निरूपत्वनिरूपणम् ... 120

तदीयपरिभाषामभ्युपगम्यापि विशेषगुणसालक्षण्यनियमस्य व्यभिचारप्रदर्शनम् ...120-121

## परमाणुजगदकारणत्वाधिकरणम्

पूर्वाधिकरणस्य प्रासङ्गिकत्वात् साङ्ख्याधिकरणेनास्य प्रत्युदाहरणसङ्गतिकथनम् ... 121

अनुमानेन परमाणुसाधनम्, तत्र हेतुदोषाणां आशङ्क्यनिरसनम् आरम्भवादसंज्ञकपरमाणुकारणवादनिरूपणञ्च ... 121-123

पृष्ठ

तद्दूषणम्-द्व्यणुकोत्पत्तिहेतुनिरवयवपरमाणुसंयोगस्य कर्मजत्वावश्यम्भावः, तच्च परमाणुष्वाद्यं कर्म तन्निमित्ताभ्युपगमे अनभ्युपगमे च उभयथापि न सम्भवति—इति ... 123

अदृष्टनिमित्तकं सम्भवतीति शङ्का, आत्मसमवेतस्य जडस्य च तस्य कर्मानिमित्तत्वोपपादनेन, अणुषु सम्बन्धाभावाच्च, तन्निराकरणम्, उक्तार्थे सूत्रयोजनञ्च ... 124

पुरुषद्वारासम्बन्धस्य प्रवृत्तिसातत्यप्रसञ्जकत्वकथनम् ... 124

सम्बन्धस्य अदृष्टपरिपाककालीनत्वेन विशेषणे उक्तदोषाभावः—इति शङ्का, सृष्ट्यारम्भोपयोगिन्यदृष्टपरिपाके तन्मते प्रमाणाभावनिरूपणेन तन्निरासः, श्रुत्यादेः प्रमाणत्वशङ्का, परमाणुकारणवादभङ्गप्रसञ्जनेन तन्निराकरणञ्च...124-125

अणोरण्वन्तरेण संयोगासम्भवनिरूपणम्, तत्र उपचयाभावप्रसङ्गेन दृष्टविपर्ययप्रसङ्गेन च कार्त्स्न्येन संयोगस्य निराकरणम् ... 125

सावयवत्वप्रसञ्जनेन एकदेशेनसंयोगस्यनिरसनम् ... 126

तन्मते, उक्तरीत्या आदिसर्गस्येव महाप्रलयस्याप्यसम्भवापादनम्, उक्तार्थेऽपि सूत्रयोजनम् ... 126

अनवस्थादोषापादकसमवायाभ्युपगमाच्च परमाणुकारणवादो दुष्ट इति निरूपणम्, तदभ्युपगमस्य दुष्टतासम्पादकत्वोपपादनम् ...126-127

समवायस्य सम्बन्धान्तरानपेक्षत्वाभ्युपगमेन अनवस्थादोषपरिहारशङ्कनम्, तन्निराकरणञ्च ... 127

समवायस्य समवायिभ्यां स्वरूपसम्बन्धाभ्युपगमेन उक्तदोषपरिहरणशङ्का, कल्पनागौरवात्समवायासिद्ध्यापादनेन तन्निरासः, सविमर्शं कल्पनागौरवसमर्थनञ्च .... 128

समवायैकत्वाङ्गीकारे प्रतीत्यतिप्रसङ्गस्य, नानात्वे स्वरूपसम्बन्धेन समवायवैयर्थ्यस्य चोपपादनम् ... 129

विशिष्टप्रतीतिनिर्वाहकत्वेन समवायसिद्धेः निराकरणम् ... 129

प्रतीतिवैचित्र्यान्यथाऽनुपपत्त्या समवायसाधनस्य दूषणम् ...129-130

अणूनां स्वभावस्य चतुर्धाविकल्प्यदूषणेन परमाणुकारणवादस्य दुष्टतोपपादनम् ... 130

परमाणूनां रूपादिमत्त्वेन हेतुना पराभिमताणुत्वनित्यत्वविपरीतस्थूलत्वानित्यत्वसाधनम् ... 130

पृष्ठ

"ब्रह्म न जगदुपादानम्, गुणवैलक्षण्यात्, उपादानोपादेययोश्च गुणसालक्षण्यनियमात्" इति वैशेषिकोद्भावितदोषस्य समाधानान्तरसम्भवेऽपि, तदीयप्रक्रियामाश्रित्यैव तद्रीत्यादोषसमाधानं कर्तुं तदीयप्रक्रियाप्रदर्शनम् ...111-112

तत्र, अणुवाद्यनङ्गीकृतांशानां भाष्ये अनुवादः, तैस्तदनङ्गीकारे हेतुकथनञ्च ... 113

'अनुक्तानुवादो न युक्तः' इति शङ्कायाः, तार्किकपरिभाषा अप्रयोजिकेत्यभिप्रायेण तथानुवाद इति समाधानम्, तदर्थं अनङ्गीकारहेतूनां आभासीकरणञ्च ...113-115

तदीयनियमस्य पूर्वोक्तस्य परमाणुद्व्यणुकयोर्व्यभिचारप्रदर्शनेन ब्रह्मवादिनि तदुक्तदोषाभावविशदनम्, अस्मिन्नर्थे महद्दीर्घवदितिसूत्रयोजना च ... 115

योजनान्तरं प्रतिपादयतो भाष्यस्य आशयकथनम् ... 116

महद्दीर्घेतिनिर्देशस्य कर्मधारयत्वासम्भवः, द्वन्द्वत्वे पूर्वोक्तार्थे सूत्रयोजनानुपपत्तिः—इति शङ्का, तादर्थ्येन द्वन्द्वप्रयोजकविचारश्च ... 116

लौकिकव्यवहारालम्बनेन द्वन्द्वत्वसमर्थनेन समाधानम् ... 117

पूर्वोक्तव्यभिचारपरिहरणेन वैशेषिकप्रत्यवस्थानम्, तदीयसूत्रविरोधेन तत्परावर्तनम्, तदीयसूत्राणामर्थवर्णनञ्च, संयोगे गुणेऽपि व्यभिचारप्रदर्शनम् ...117-118

द्रव्यविषयनियमस्य गुणेव्यभिचारप्रदर्शनमनुचितमिति शङ्का, तदीयसूत्रोदाहरणेन तन्निरासः ...118-119

नविलक्षणत्वाधिकरणशिष्टापरिग्रहाधिकरणाभ्यां अस्याधिकरणस्यागतार्थत्वसमर्थनम्, तदर्थं निराकार्यनियमभेदकथनम् ... 119

अत्रनिराकर्तव्यनियमविशेषे सूत्रतद्भाष्योक्तव्यभिचारस्य उपपत्तये सामान्यगुणव्यावृत्तविशेषगुणत्वस्य दुर्निरूपत्वनिरूपणम् ... 120

तदीयपरिभाषामभ्युपगम्यापि विशेषगुणसालक्षण्यनियमस्य व्यभिचारप्रदर्शनम् ...120-121

**परमाणुजगदकारणत्वाधिकरणम्**

पूर्वाधिकरणस्य प्रासङ्गिकत्वात् साङ्ख्याधिकरणेनास्य प्रत्युदाहरणसङ्गतिकथनम् ... 121

अनुमानेन परमाणुसाधनम्, तत्र हेतुदोषाणां आशङ्क्यनिरसनम् आरम्भवादसंज्ञकपरमाणुकारणवादनिरूपणञ्च ... 121-123

पृष्ठ

तद्दूषणम्-द्व्यणुकोत्पत्तिहेतुनिरवयवपरमाणुसंयोगस्य कर्मजत्वावश्यम्भावः, तच्च परमाणुष्वाद्यं कर्म तन्निमित्ताभ्युपगमे अनभ्युपगमे च उभयथापि न सम्भवति—इति ... 123

अदृष्टनिमित्तकं सम्भवतीति शङ्का, आत्मसमवेतस्य जडस्य च तस्य कर्मानिमित्तत्वोपपादनेन, अणुषु सम्बन्धाभावाच्च, तन्निराकरणम्, उक्तार्थे सूत्रयोजनञ्च ... 124

पुरुषद्वारासम्बन्धस्य प्रवृत्तिसातत्यप्रसञ्जकत्वकथनम् ... 124

सम्बन्धस्य अदृष्टपरिपाककालीनत्वेन विशेषणे उक्तदोषाभावः—इति शङ्का, सृष्ट्यारम्भोपयोगिन्यदृष्टपरिपाके तन्मते प्रमाणाभावनिरूपणेन तन्निरासः, श्रुत्यादेः प्रमाणत्वशङ्का, परमाणुकारणवादभङ्गप्रसञ्जनेन तन्निराकरणञ्च...124-125

अणोरणवन्तरेण संयोगासम्भवनिरूपणम्, तत्र उपचयाभावप्रसङ्गेन दृष्टविपर्ययप्रसङ्गेन च कात्स्‍र्न्येन संयोगस्य निराकरणम् ... 125

सावयवत्वप्रसञ्जनेन एकदेशेनसंयोगस्यनिरसनम् ... 126

तन्मते, उक्तरीत्या आदिसर्गस्येव महाप्रलयस्याप्यसम्भवापादनम्, उक्तार्थेऽपि सूत्रयोजनम् ... 126

अनवस्थादोषापादकसमवायाभ्युपगमाच्च परमाणुकारणवादो दुष्ट इति निरूपणम्, तदभ्युपगमस्य दुष्टतासम्पादकत्वोपपादनम् ...126-127

समवायस्य सम्बन्धान्तरानपेक्षत्वाभ्युपगमेन अनवस्थादोषपरिहारशङ्कनम्, तन्निराकरणञ्च ... 127

समवायस्य समवायिभ्यां स्वरूपसम्बन्धाभ्युपगमेन उक्तदोषपरिहरणशङ्का, कल्पनागौरवात्समवायासिद्ध्यापादनेन तन्निरासः, सविमर्शं कल्पनागौरवसमर्थनञ्च .... 128

समवायैकत्वाङ्गीकारे प्रतीत्यतिप्रसङ्गस्य, नानात्वे स्वरूपसम्बन्धेन समवायवैयर्थ्यस्य चोपपादनम् ... 129

विशिष्टप्रतीतिनिर्वाहकत्वेन समवायसिद्धेः निराकरणम् ... 129

प्रतीतिवैचित्र्यान्यथाऽनुपपत्त्या समवायसाधनस्य दूषणम् ...129-130

अणूनां स्वभावस्य चतुर्धाविकल्प्यदूषणेन परमाणुकारणवादस्य दुष्टतोपपादनम् ... 130

परमाणूनां रूपादिमत्त्वेन हेतुना पराभिमताणुत्वनित्यत्वविपरीतस्थूलत्वानित्यत्वसाधनम् ... 130

पृष्ठे

तत्र धर्मिग्राहकप्रमाणबाधस्य अप्रयोजकत्वस्य च आशङ्कनम्, सविमर्शं तन्निरसनञ्च ... 131

परमाणुनित्यतासाधकत्वेन वैशेषिकसूत्रोक्तहेत्वोः आभासीकरणम् ... 132

अप्रत्यक्षकारणकत्वस्य अगृह्यमाणविनाशकारणकत्वस्य वा परमाणुनित्यत्वसाधकत्वेनाभिमतस्य तृतीयहेतोः दूषणम्, तदर्थं आरम्भवादस्य प्रतीतिविरुद्धत्वोपपादनम्, युक्तिविरोधस्मारणम्, ततश्चपरिणामवादाश्रयणे परमाणोरनित्यत्वप्राप्तिसमर्थनञ्च ...132-133

पार्थिवादीनां परमाणूनां उपचितापचितगुणत्वे कल्प्यमाने, केषाञ्चित् गुणोपचयान्मूर्त्युपचये अपरमाणुत्वप्रसङ्गस्य अकल्प्यमाने इष्टाप्रसङ्गानिष्टप्रसङ्गयोरन्यतरस्य चोपपादनेन परमाणुकारणवादस्य अनुपपन्नताप्रतिपादनम् ... 134

मूर्त्युपचयशब्दार्थविकल्पनेन, गुणोपचयेऽपि अपरमाणुत्वाप्रसङ्गस्य आशङ्कनम् ... 134

गुणसमुदायातिरेकेण तदाश्रयद्रव्याभावं समर्थ्य तद्दोषतादवस्थ्यनिरूपणम्, तत्र 'नीलोघटः' इति प्रतीतेः साधकत्वकथनम्, नीलोघटइतिवाक्यानुसार्युक्तप्रतीतिरुक्तार्थासाधिकेति शङ्कनम्, तत्परिहरणम् ... 135

गुणोपचयान्मूर्त्युपचये ततश्चापरमाणुत्वे पुराणसम्मतिकथनम् ... 135-136

प्रधानकारणवादापेक्षया परमाणुकारणवादस्य अत्यन्तानादरणीयत्वस्य सहेतुकं निरूपणम्, वैशेषिकाभिमतपदार्थविभागः उपपत्तिशून्यः-इत्यस्य सौत्रचकारार्थत्ववर्णनम् ... 136

गुणानां द्रव्याधीनतानियतानां द्रव्यात् भिन्नता न युक्तेति साधनम्, हेतुसाध्ययोर्व्याघातशङ्का, तत्परिहारेण द्रव्यमात्रपरिशेषसमर्थनम्, तस्य पूर्वोक्तार्थेन विरोधशङ्का ... 137

मिथ्यात्वेतात्पर्यात् अन्यत्रानिर्भरात् विरोधो न दोष इति तन्निराकरणम् ... 138

गुणवत् कर्मादीनामपि द्रव्यातिरेकनिराकरणम्, तत्र, सामान्ये तदनुपपत्तिमाशङ्क्य तन्निराकरणञ्च ... 138-139

गुणादीनां द्रव्याद्भेदेऽपि स्फुटविवेकराहित्यस्य प्रयोजकत्वेन पराभिमतस्य अयुतसिद्धत्वस्य त्रेधाविकल्प्य निराकरणम् ... 139

द्रव्यगुणयोर्भेदस्य प्रतीतिविरुद्धत्वनिरूपणम् ... 140

अयुतसिद्धयोस्समवायः सम्बन्धः–इति तदभ्युपगमस्य कार्योत्पत्तिक्षणे तदभावनिरूपणेन निराकरणम्, तत्र आक्षेपः समाधानञ्च ... 140-141

पृष्ठे

संयोगसमवाययोः सम्बन्धिव्यतिरेकेणास्तित्वस्य निराकरणम्, शब्दप्रत्यय-वैलक्षण्येन तदस्तित्वाशङ्कनम्, एकस्यापि तद्वैलक्षण्यसम्भवोपपादनम्, तत्र भाष्योक्तदृष्टान्तानां विषमत्वशङ्का, तन्निराकरणञ्च ... 141

अवच्छेदकप्रदेशविधुराणां अण्वात्ममनसां पराभिमतस्य संयोगस्य असम्भवोपपादनम्, दिशामवच्छेदकत्वशङ्का, तन्निराकरणञ्च ... 142

वैशेषिकानां पदार्थविभागकल्पनाया अप्रामाणिकत्वस्य, अप्रामाणिककल्पने अतिप्रसङ्गस्य च प्रतिपादनम् ... 142

परमाणुद्व्यणुकयोः संश्लेषस्य समवायेनाश्रिताश्रयभावस्य च अनुपपन्नतानिरूपणम्, परमाणूनां सावयवत्वविनाशित्वयोरापादनञ्च ... 143

विनाशकारणाभावादविनाश इति शङ्का, परिणामवादाभिमतविनाशकारणोपपादनेन तन्निरासः 143-144

कार्योत्पत्तेरपि क्षीरजलादिदृष्टान्तेन आरम्भवादाननुसारित्वनिरूपणम्, परमते दृष्टान्तासिद्धिशङ्का, तन्निराकरणम्, सहेतुकं आरम्भवादानादरणीयत्वोपसंहारश्च ... 144

## समुदायाधिकरणम्

सर्ववैनाशिकराद्धान्तनिराकरणपरस्यास्याधिकरणस्य वैशेषिकाधिकरणेन पूर्वेण सङ्गतिप्रदर्शनम्, तदर्थं वैशेषिकानां अर्धवैनाशिकत्वनिरूपणम्, तदर्थं वैशेषिकराद्धान्ते, सावयवनिरवयवभेदभिन्नयोः पदार्थयोर्मध्ये अर्धस्य सावयवपदार्थस्य बौद्धराद्धान्तवत् क्षणिकत्वावश्यम्भावसमर्थनञ्च 145-146

सर्ववैनाशिकस्य बुद्धस्य चतुर्विधसिद्धान्तकथनम्, तत्र बुद्धप्रतिपत्तिभेदस्य निमित्तत्वकथनम्, तत्र अनुशयेन शिष्यप्रतिपत्तिभेदस्य निमित्तत्वकथनम्, तत्रैव बौद्धसम्मतिप्रदर्शनम्, माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञकानां शिष्याणां अन्वर्थसंज्ञकत्वनिरूपणेन शिष्यप्रतिपत्तिभेदविशदीकरणञ्च ...146-147

सर्वास्तित्ववादिवैभाषिकसौत्रान्तिकराद्धान्तानुवादः, भूतभौतिकरूपं बाह्यं परमाणुसमुदाय एव, चित्तचैत्तात्मकं आन्तरं पञ्चस्कन्धसमुदाय एव-इति ...147-148

रूपादिपञ्चस्कन्धस्वरूपनिरूपणम्, रूपस्कन्धस्य आन्तरत्वसमर्थनञ्च ... 148

बाह्याभ्यन्तरस्यास्य सर्वस्य प्रत्यक्षानुमानाभ्यां क्षणिकत्वनिरूपणम्, तत्र अनुमाने हेतोरप्रयोजकशङ्का, स्थायित्वे 'अर्थक्रियाकारित्वानुपपत्तिः' इत्यनुकूलतर्कनिरूपणेन तन्निराकरणञ्च ... 148

उक्तवैनाशिकराद्धान्तस्य वेदान्तसमन्वयविरोधित्वविशदनम् ... 149

पृष्ठे

उक्तराद्धान्तदूषणं सौत्रहेतुना-तत्र-अचेतनानां परमाणूनां संमिलनरूपसमुदायस्यस्वतस्सम्भवाभावप्रतिपादनम् ... 149

विज्ञानात्मकजीवाधीनः सम्भवतीति शङ्का, सर्वक्षणिकत्ववादिनस्तस्य अन्योन्याश्रयोपपादनेन तन्निराकरणम्, स्वतस्सम्भवे प्रलयाभावप्रसञ्जनञ्च .... 149

विज्ञानसन्तानाधीनः सम्भवतीति शङ्का, सन्तानस्य सन्तानिभ्योऽन्यत्वानन्यत्वविकल्पदूषणेन तन्निराकरणम् ... 149-150

क्षणिकत्वादपि परमाणूनां समुदायो न सम्भवतीति निरूपणम् ... 150

आध्यात्मिकसमुदायः स्थिरचेतनाभावेऽपि सम्भवति । समुदायापत्तेश्चेतनाधीनतायाः भूभूधरादिसमुदायापत्तौ व्यभिचारः । लोकयात्रानिर्वाहकाश्च अविद्यादयः इतरेतरनिमित्तभूताः, तत्र स्थिरचेतनापेक्षा निष्फला च। तेषामाश्रयः अहमित्यालयविज्ञानम्, तस्य वृत्तिलाभः न शुक्लशोणितसमुदायापत्तिं विनेति अर्थादाक्षिप्यते समुदायापत्तिः-इति परेषां प्रत्यवस्थानम् ... 150-151

अर्थापत्तिः ज्ञापिका, न तु कारिका, अतः न अर्थादुत्पत्तिः सङ्घातस्य भवतिइति तत्परावर्तनम् ... 152

समुदायप्राप्त्यपेक्षितानां क्षणिकवादे असम्भवादपि समुदायाप्राप्तिः इति निरूपणम् ... 152

अर्थापत्तेः कारकत्वे अन्योन्याश्रयप्रतिपादनम् ... 153

क्षणिकत्वेऽपि सन्तत्योपद्यमानानां सङ्घातानां पूर्वस्मादुत्तरोत्पत्त्यभ्युपमात् न कोऽपि दोष इति शङ्का, ... 153

पूर्वोत्तरयोः सदृशत्वनियमानियमविकल्पनतद्दूषणाभ्यां अभ्युपगमविरुद्धत्वापादनेन तन्निराकरणम् ... 153

मरणाप्राक्पश्चात्कालीनभेदेन धर्माधर्मवशेन च सादृश्यनियमानियमव्यवस्थाया उपपादने उक्तदोषपरिहारः-इति शङ्का ... 153

सर्वक्षणिकत्ववादे धर्माधर्मवशेन व्यवस्थोपपादनं दुश्शकमिति तन्निराकरणम् ... 154

भूभूधरादिषु पूर्वोक्तव्यभिचारस्य निरासः ... 154

क्षणिकानां कारणत्वासम्भवोपपादनेन अविद्यादीनां इतरेतरनिमित्तनैमित्तिकभावस्य परोक्तस्य निराकरणम् ... 154-155

क्षणिकत्वेऽपि कार्याव्यवहितपूर्वक्षणवृत्तित्वमात्रेण कारणत्वं सम्भवतीति शङ्का, तन्निराकरणम्, पूर्वक्षणमात्रवृत्तित्वेन उपादानकारणत्वानिर्वाहसोपपादनञ्च ... 155

पृष्ठे

उत्पादनिरोधयोस्त्रेधाविकल्पनिरसनेन पराभ्युपगतस्य उत्तरोत्पादे पूर्वनिरोधस्य दूषणम् ... 156

कारणस्य कार्यकालानवस्थायित्वे परेषां प्रतिज्ञाविरोधस्य प्रसञ्जनम्, तादर्थ्येन तदभ्युपगतचतुर्विधहेतुस्वरूपनिरूपणम्, कार्योत्पत्तेर्निर्हेतुकत्वेऽपि प्रतिज्ञान्तरविरोधोपपादनम्, परकीयप्रतिज्ञयोः प्रदर्शनञ्च ... 156-157

पराभ्युपगतयोः प्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधाख्ययोः निस्स्वरूपाभावभूतयोः स्थूलसूक्ष्मरूपविनाशयोः दूषणार्थं अनुवादः ...157-158

स्थूलविनाशविषये परमतात् सिद्धान्तस्य निरन्वयत्वसान्वयत्वाभ्यां वैलक्षण्यप्रदर्शनम् ... 158

भावानांक्षणिकत्वपर्यवसायिनः सूक्ष्मस्य अप्रतिसङ्ख्यानिरोधस्य, सन्तानगोचरत्वासम्भवस्य, साधकाभावबाधकसत्त्वाभ्यां सन्तानिभावगोचरत्वासम्भवस्य च निरूपणम् 158-159

वर्तमानत्वग्राहिप्रत्यक्षप्रमाणस्य क्षणिकत्वसाधकत्वशङ्का, तन्निराकरणञ्च ... 159

प्रतिसङ्ख्यानिरोधाख्यस्थूलनाशस्य तार्किकमते सिद्धान्ते च सस्वरूपत्वसमर्थनम् ...159-160

अविद्यानिरोधः प्रतिसङ्ख्यानिरोधः—इति परकल्पनायाः दूषणम्, भाष्योक्तस्य दूषणस्य शङ्कासमाधानाभ्यां समर्थनञ्च ... 160

आकाशस्य परकल्पितनिस्स्वरूपत्वस्य निराकरणम्, श्रुत्यनुमानाभ्यां सस्वरूपभावत्वप्रतिपादञ्च ... 161

आकाशस्य आवरणाभावाश्रयत्वस्य आक्षेपसमाधानाभ्यां समर्थनेन, पराभिमताया आवरणाभावरूपताया निरसनम् ... 161

स्वातन्त्र्येण अप्रत्यक्षस्याप्याकाशस्य तत्तत्पदार्थविशेषणतया प्रत्यक्षप्रतीतिविषयत्वसमर्थनं कालदृष्टान्तेन ... 162

अवकाशपदार्थस्य आवरणाभावरूपत्वनिरूपणम् ... 162

परस्य आकाशनिस्स्वरूपत्वाभ्युपगमः अभ्युपगमान्तरविरुद्ध इति प्रदर्शनम्, अभ्युपगमान्तरस्वरूपप्रदर्शनञ्च ... 162

पूर्वोत्तरदर्शनयोः कर्तुः पूर्वोत्तरदर्शनस्मरणयोः कर्तुश्च ऐक्यप्रत्यभिज्ञया स्थैर्यं प्रसाध्य, पराभिमतस्य सर्वक्षणिकतावादस्य निरसनम्, परस्यस्वानुभवविरोधप्रसञ्जनञ्च ... 163-164

पृष्ठे

साहश्यात्प्रत्यभिज्ञाभ्रमः—इति परस्य शङ्का, बाधकाभावात् न भ्रमत्वम्, सएवायमित्यत्र साहश्यानुल्लेखाच्चेति तन्निराकरणम्, साहश्यविषयकत्वेऽपि क्षणिकात्मवादभङ्गस्य उपपादनम् ... 164

साकारविज्ञानवादाश्रयणेन उक्तदोषपरिहारशङ्कनम्, विज्ञानवादस्य लोकव्यवहारविरोधित्वोपपादनेन तन्निराकरणम्, प्रत्यभिज्ञायाः साहश्यविषयकत्वनिराकरणञ्च ... 165

प्रत्यभिज्ञाया अबाधितत्वोपपादनम् ...165-166

पराभिमतस्य अभावाद्भावोत्पत्तिवादस्य दूषणार्थं अनूद्योपपादनम् ... 166

नियतकारणाभ्युपगमवैयर्थ्यापत्या, शशविषाणादीनामपिकारणत्वापत्या, अभावस्य कार्यान्वयापत्या च नायंवादोयुक्त इति निरूपणम् ... 167

कार्येषु भावान्वयोपपादनेन च अभावादुत्पत्तिनिरासः ... 168

एवंवादिनः स्वाभ्युपगमापलापविशदनम् ... 168

अभावाद्भावोत्पत्तिवादे अयत्नेनकार्यसिद्धेरापादनम् ... 168

बाह्यार्थानुमेयत्ववादस्य सौत्रान्तिकाख्यद्वितीयबुद्धशिष्याभिमतस्य उपपाद्यनिराकरणम् ... 168

नाभावाधिकरणम्

पूर्वाधिकरणेनसङ्गतिकथनम्, योगाचाराभिमतस्य विज्ञानैकस्कन्धवादस्य निरूपणोपक्रमः, अस्यैव बुद्धाभिप्रेतत्वोपपादनम्, सर्वस्य व्यवहारस्य बाह्यत्वभ्रमः, किन्तु अन्तस्स्थ एव सर्वं इति च निरूपणम् ... 169

अर्थस्य बाह्यत्वेऽपि ज्ञानाभेद एव सम्बन्ध इति निरूपणम् ... 170

विषयविषयिभावाख्यः स्वरूपसम्बन्धोऽस्तु इतिशङ्काया निराकरणं बाह्यार्थदुर्निरूपत्वोपपादनेन ... 170

पराभिमतं जातिनिराकरणम् ... 170

ज्ञानवैलक्षण्यस्य ज्ञानगतेनैवविशेषेणोपपाद्यत्वोपपादनम् ... 171

एकोपलम्भनियमहेतुकानुमानेन, स्वप्नदृष्टान्तेगृहीतव्याप्तिकेन प्रत्ययत्वहेतुकानुमानेन च, विषयस्य ज्ञानाभेदसमर्थनम् ... 171

ज्ञानवैचित्र्यं साक्षात् परम्परया वा बाह्यार्थवैचित्र्यकृतमेवेति सोपपत्तिकं शङ्कनम् ... 172

बाह्यार्थाभावेऽपि वासनावैचित्र्यात् प्रत्ययवैचित्र्यस्य समर्थनम् ... 172

पृष्ठे


वासनास्वरूपनिरूपणेन, वासनानां समानाकारत्वनियमेऽपि तत्परिपाकहेतोस्समानाकारत्वनियमस्य उपपादनेन च तन्निर्वहणम् ... 172

वासनावैचित्र्यादेव ज्ञानवैचित्र्यमित्यत्र विनिगमकप्रदर्शनम् ... 173

विज्ञानवादनिराकरणोपक्रमः— बहिरुपलब्धेः, उपलब्धिविषयत्वेनोपलब्धेश्च अस्ति ज्ञानव्यतिरिक्तोऽर्थः—इति ... 173

बाधकाभावात् बाह्यत्वोपलब्धेः भ्रमत्वाभावस्य निरूपणम् ...173-174

बाह्यार्थदुर्निरूपत्वं बाधकमिति परेषां शङ्का, ज्ञानाकारत्वेऽपि तद्दोषसाम्यस्यनिरूपणेन तन्निराकरणम्, उपलभ्यमानस्य दुर्निरूपत्वे शुक्तिरूप्यस्येव मिथ्यात्वमेव युक्तमिति निरूपणञ्च ... 174

ज्ञानाकारतामन्तरेणैव ज्ञानविषययोः विषयविषयिभावसम्बन्धोपपादनम्, विषयनियमे प्रयोजकनिरूपणम्, अतिरिक्तविषयाभावे वासनावैचित्र्याज्ज्ञानवैलक्षण्योपपादनासम्भवस्य कथनम्, ज्ञानस्य साकारत्वखण्डनञ्च ... 175

अनुवृत्तिव्यावृत्तिभ्यां ज्ञानार्थयोर्भेदसमर्थनम् ... 176

पराभिमतक्षणिकविज्ञानवादे अनेकज्ञानग्रहणजन्यज्ञानप्रमाणकानां तदीयशास्त्रगतप्रतिज्ञातार्थानामसिद्ध्यापादनम्, तादृशार्थानां प्रदर्शनञ्च ... 176

विज्ञानस्येव बाह्यार्थस्यापि अनुभूयमानत्वात् अस्तित्वस्य साधनम्, स्वयमेवानुभूयमानत्वात् विज्ञानस्यास्तित्वं नेतरस्य-इति शङ्कनम्, स्वस्य स्वविषयत्वासम्भवोपपादनेन तन्निरसनम् ... 177

विज्ञानानां स्वविषयत्वानङ्गीकारे अनवस्थाद्यापादनम्, स्वप्रकाशनित्यसाक्षिचैतन्यभास्यत्वाभ्युपगमेन तन्निरसनञ्च ... 178

साक्षिरूपनित्यज्ञानाभ्युपगमे अन्तःकरणवृत्तिरूपजन्यज्ञानवैयर्थ्यशङ्का, अन्तःकरणवृत्तेरावरणनाशार्थत्वोपपादनेन तन्निरासः ...178-179

वृत्तिज्ञानातिरिक्तसाक्षिरूपज्ञानतन्नित्यत्वस्वप्रकाशत्वादिसमर्थनम् ... 180

पराभिमतस्य जन्यविज्ञानस्य शिलाघनमध्यस्थप्रदीपसहस्रप्रथनसाम्यापादनम् ... 180

साक्षिस्वप्रकाशत्ववादस्य पराभिमतविज्ञानस्वप्रकाशत्ववादविलक्षणत्वविशदनम् ... 180

परोक्ते प्रत्ययत्वहेतुकानुमाने, सतिप्रमातरिबाध्यविषयकत्वस्य प्रमाणाजन्यत्वस्य च उपाधित्वनिरूपणम् ... 181

तत्रैवानुमाने प्रत्यक्षबाधनिरूपणम् ... 182

पृष्ठे

बाह्यार्थाभावे वासनानामप्यभावस्य, तत्प्रवाहानादित्वकल्पनायाः अन्धपरम्परातुल्यतायाश्च, निरूपणेन, ज्ञानवैचित्र्यान्यथानुपपत्त्या बाह्यास्तित्वसाधनम्... 182
अर्थवैचित्र्यादेव ज्ञानवैचित्र्यं इत्यस्य समर्थनम् ... 183
क्षणिकात्मवादे वासनाधीनस्मृत्यादिव्यवहारासम्भवापादनम् ...183-184
क्षणिकविज्ञानवादेऽपि क्षणिकत्वप्रयुक्तदोषाणां पूर्वाधिकरणोक्तानां आपादनम् ... 184
माध्यमिकाभिमतस्य मुख्यस्य बुद्धसिद्धान्तस्य निरूपणम्, प्रत्यक्षादिसर्वप्रमाणविप्रतिषिद्धत्वोपपादनेन तन्निराकरणञ्च ... 184-185
प्रत्यक्षादीनां भ्रमत्वमाशङ्क्य तन्निराकरणम् ... 185
शून्यवादनिराकरणस्यापि सूत्रोक्तत्वकथनम्, कृत्स्नमहावैनाशिकमतदूषणोपसंहारश्च ... 185
उक्तमतोपदेष्टुः अनाप्तत्वोपपादनम् ... 186

**एकस्मिन्नसम्भवाधिकरणम्**

पूर्वाधिकरणेनास्य सङ्गतिद्वयप्रदर्शनम् ... 186
आर्हतशब्दितविवसनसमयस्वरूपनिरूपणम्-तत्र तदभिमतसप्तपदार्थनिरूपणम्, तत्र बन्धमोक्षयोः तदीयमतभेदनिरूपणम्, तत्र निरन्तरोर्ध्वगमनरूपे मोक्षे अवान्तरभेदनिरूपणञ्च। तैः परिभाषितानां पञ्चास्तिकायानां स्वरूपनिरूपणञ्च ...186-188
तदभिमतस्य स्याद्वादसंज्ञकस्य सर्वानैकान्तत्तावादस्य निरूपणम्—तत्र सर्वेषां पदार्थानां एकरूपत्वनियमाभावबोधकयुक्तिसङ्ग्राहकस्य सप्तभङ्गिनयाख्यन्यायप्रतिपादकवाक्यजातस्य उदाहरणम्, तत्र सत्त्वासत्त्वयोः अनियमे युक्तिप्रदर्शनम्, तद्दृष्टान्तेन सर्वधर्माणां अनियमप्रतिपादनञ्च ... 188
तत्र अवच्छेदकभेदेन सत्त्वासत्त्वयोर्नियमः सम्भवतीत्याक्षेपः, अन्योन्याश्रयादिदोषापादनेन उक्ताक्षेपसमाधानम्, पदार्थेषु सप्तानां नियमानां तत्तद्वाद्यभ्युपगतानां अभावोपपादकसप्तभङ्गिनयाश्रयणेन स्वेतरसर्वमतनिराकरणसिद्धिरिति तदभिमतप्रयोजनवर्णनञ्च ... 189
आर्हतमतखण्डनोपक्रमः-पूर्वोक्तान्योन्याश्रयादिदोषपरिहरणेन अवच्छेदकभेदेन सत्त्वासत्त्वनियमोपपादनेन तदीयानियमवादस्य निराकरणम् ... 190
सर्वत्रानैकान्त्याभ्युपगन्तुः स्वपक्षरक्षणस्याप्यशक्यतया आपादनम्, विस्तरेण तदुपपादनञ्च ...191-192
अनिर्वचनीयवादस्य अनेकान्तवादत्वाभावनिरूपणम् ... 192

पृष्ठे


पराभिमतपुद्गलकारणवादनिराकरणम् ... 192

जीवस्य अनित्यत्वकृत्स्नशरीराव्याप्त्योरापादनेन पराभिमतस्य शरीरपरिमाण-जीववादस्य निराकरणम् ... 193

अनन्तावयवस्य जीवस्य अवयवसंकोचविकासाभ्युपगमेन, प्रभान्यायेनकृत्स्न-शरीरव्यापित्वं सम्भवतीति परेषां शङ्का, ... 193

प्रतीतिविरोधापत्तिप्रदर्शनेन तन्निराकरणम् ... 194

जीवस्य शरीरपरिमाणत्वे अनन्तावयवकत्वासम्भवप्रदर्शनम् ... 194

क्रमेण अवयवोपगमापगमाभ्युगमेन नोक्तदोष इति परेषामाशङ्का, ... 194

एवं सति जीवस्य विक्रियावत्त्वानित्यत्वमोक्षाभावप्रसङ्गैः, अवयवानामनात्मत्व - अवयवोत्पत्तिलयाधारस्यदुर्निरूपत्व - आत्मस्वरूपानवधारणप्रसङ्गैश्च तन्निराकरणम् ... 195

जीवस्य स्वरूपतोऽनित्यत्वेऽपि प्रवाहनित्यत्वाभ्युपगमेन शरीरपरिमाणत्व-प्रयुक्तदोषाभावः—इति परेषामाशङ्का, मोक्षदशायां प्रवाहस्याप्यनित्यता-प्रसञ्जनेन मोक्षाभावप्रसञ्जनेन च तन्निराकरणम् ... 196

शरीरपरिमाणकपूर्वप्रवाहस्य विच्छेदेऽपि केवलात्माऽनुवर्तते, ततश्च मोक्षोपपत्तिः—इतिशङ्का ... 196

एवञ्चेत् आत्मनि अनेकानि नित्यानि समानि परिमाणानि स्युः, अथवा - एकमेव परिमाणं आत्मनि नित्यं स्यात्, ततश्च महदल्पादिशरीरेषु आत्मनोऽकृत्स्नत्वप्रसङ्गः—इत्युपपादनेन तन्निराकरणम् ...196-197

**पाशुपताधिकरणम्**

पूर्वाधिकरणेन दृष्टान्तसङ्गतिप्रदर्शनम् ... 198

शङ्कासमाधानाभ्यां, जगन्निमित्तमात्रत्वेनेश्वराभ्युपगमपक्षनिराकरणपरमिदमधिकरणमिति व्यवस्थापनम् ... 198

आनुमानिकेश्वरपक्षश्चायं शास्त्रयोनित्वप्रकृत्यधिकरणाभ्यां निराकृत इति व्यर्थमिदमधिकरणमिति शङ्का, तन्निराकरणञ्च ...198-199

ईश्वरनिमित्ततामात्रपक्षस्य सेश्वरसाङ्ख्ययोगमाहेश्वरवैशेषिकादिपक्षभेदेन नानाप्रकारत्वकथनम् ...199-200

माहेश्वराभिमतपञ्चपदार्थानां उद्देशविभागविशेषलक्षणानां विविच्य निरूपणम्-‘निरपेक्ष फलदाता ईश्वरः’ इति ‘अथापिधर्माधर्मवैयर्थ्यम्’ इति च तत्पक्षस्य प्रदर्शनम् ...199-201

पृष्ठे

**सर्वान्नानुमत्यधिकरणम्—**

पूर्वेणसङ्गतिप्रदर्शनम् ... 696

छान्दोग्येप्राणसंवादे सर्वान्नानुज्ञानं विद्याङ्गत्वेन विधीयते- इति पूर्वपक्षप्रदर्शनम्... 696

अत्र भक्ष्याभक्ष्यविभागशास्त्रव्याघात इति शङ्का, तत्परिहारश्च ... 697

प्राणान्नत्वविज्ञानप्रशंसार्थोऽयमर्थवाद एवेति सिद्धान्तकथनम् ... 697

अत्र उषस्त्युपाख्यानस्य लिङ्गदर्शनत्वेन कथनम् ...698-699

भक्ष्याभक्ष्यविभागशास्त्राबाधायापि एवंवक्तव्यत्वकथनम् ... 699

आपद्येवसर्वान्नभक्षणस्य सार्वत्रिकतायां स्मृतिप्रदर्शनम् ... 699

अभक्ष्यभक्षणप्रतिषेधे श्रुतिप्रमाणप्रदर्शनम् .... 700

**आश्रमकर्माधिकरणम्**

पूर्वेण सङ्गतिकथनम् ... 700

विविदिषाद्वाराविद्यासाधनानि आश्रमकर्माणि विद्यामकामयमानेन नानुष्ठेयानि, तेनाप्यनुष्ठेयत्वे न विविदिषासाधनत्वम्—इति पूर्वपक्षकथनम्, तत्र खादिरवत् वचनद्वयात् उभयार्थत्वमिति शङ्का, अर्थविरोधात् वचनद्वयस्याप्रामाण्यापत्त्या विविदिषावाक्यं अर्थवाद एव- इति पूर्वपक्षाशयवर्णनम् ... 701

सिद्धान्तकथनम्—उपाधिभेदेन अर्थविरोधाभावात् उभयार्थत्वेति, विधायकवचनद्वयसत्त्वात् नित्यानित्यसंयोगविरोधाभाव इति च ...701-703

**सर्वथाधिकरणम्**

पूर्वेणास्य सङ्गतिवर्णनम् ... 703

विविदिषोद्देशेन विधेयानि यज्ञादीनि प्रसिद्धयज्ञादिभ्यो भिन्नानि, प्रकरणान्तरन्यायात्, 'मासाग्निहोत्रवत्—इति पूर्वपक्षस्य उपपादनम् ...703-704

सिद्धान्तकथनम्—अभिन्नान्येव, श्रौतात् स्मार्ताच्च लिङ्गात्—इति। तथाभूतलिङ्गप्रदर्शनञ्च ... 704

प्रकृते प्रकरणान्तरन्यायस्यानवकाशसमर्थनेन मासाग्निहोत्रवैषम्यविशदनम् ... 704

कर्मणां विद्योपयोगित्वे लिङ्गदर्शनप्रदर्शनम् ... 705

**विधुराधिकरणम्**

व्यवहिताधिकरणेनास्य सङ्गतिकथनम् ... 706

विधुरादीनां आश्रमकर्माभावात् न विद्याधिकारः—इति पूर्वपक्षस्यनिरूपणम्... 706

पृष्ठे

अत्र विद्यापदं सविशेषनिर्विशेषविद्यासाधारणम्, विद्याधिकारश्च विद्याफल-भाक्त्वम्—इत्युपपादनेन समर्थनं भाष्योक्तार्थस्य साशङ्कानिरसनम् ...706-707

रैक्ववाचक्नवीप्रभृतीनां एवम्भूतानां विद्यावत्त्वस्य श्रवणात् स्मरणाच्च लिङ्गात् अस्ति विद्याधिकार इति सिद्धान्तकथनम् ...706-707

विधुरादीनां विविदिषाद्युपयोगिसामान्यकर्मसम्भवे साधकप्रमाणप्रदर्शनम् ... 707

विधुरादीनामपि जन्मान्तरीयैराश्रमकर्मभिः विद्याधिकारःसम्भवतीति प्रतिपादनम्... 708

विधुरादीनां निर्विशेषविद्याधिकारो न सम्भवतीति शङ्का, तत्परिहारश्च ... 708

अनाश्रमित्वनिन्दावचनस्य आशयवर्णनम् ...708-709

**तद्भूताधिकरणम्**

पूर्वेणास्य सङ्गतिकथनम् ... 709

ऊर्ध्वरेतसां स्वाश्रमात् प्रत्यवरोहनिमित्तसम्भवात् प्रच्युतिःस्यादिति पूर्वपक्षस्य कथनम् ... 709

नियमश्रवणात् प्रत्यवरोहवचनाभावात् शिष्टाचाराभावाच्च प्रच्युतिर्नकर्तव्येति सिद्धान्तनिरूपणम् ...709-710

प्रत्यवरोहनिमित्तानां प्रत्यवरोहसाधुत्वासाधकतानिरूपणम् ... 710

**आधिकारिकाधिकरणम्**

पूर्वेणास्य सङ्गतिकथनम् ... 710

नैष्ठिकानां ब्रह्मचर्यभङ्गे अवकीर्णिपशुरूपप्रायश्चित्तं स्यात्—इतिपूर्वपक्षस्य, अवकीर्णिपशुविषयकपूर्वतन्त्रविचारस्य च प्रदर्शनम् ...710-711

प्रायश्चित्ताभावस्मरणात् नास्ति प्रायश्चित्तम्, अवकीर्णिपशुरुपकुर्वाणविषयः—इति सिद्धान्तकथनम् ... 711

उपपातकिमात्रत्वात् अवकीर्णित्वाविशेषाच्च भवति पूर्वोक्तं प्रायश्चित्तमिति युक्ततरसिद्धान्तकथनम्, अस्ययुक्ततरत्वोपपादनञ्च, प्रायश्चित्ताभावस्मरणस्य लाक्षणिकत्वकथनम् ... 711

भिक्षुवैखानसयोरपि प्रच्युतयोः प्रायश्चित्तकथनम् ... 712

**बहिस्तूभयथाधिकरणम्**

पूर्वेणसङ्गतिकथनम् ... 712

आरूढपतितैः कृतप्रायश्चित्तैः सह शिष्टसव्यवहारो युक्तः, इति पूर्वपक्षस्य वर्णनम् ... 712

प्रायश्चित्ताभावस्मरणात् न युक्त इति सिद्धान्तकथनम्, तादर्थ्येन पापानां शक्तिद्वयकथनञ्च ...712-713

पृष्ठे

**स्वाम्यधिकरणम्**

पूर्वेणसङ्गतिकथनम् ... 713
कर्माङ्गावबद्धोपासनानि न ऋत्विक्कर्माणि, अपि तु यजमानस्य, फलश्रवणात्, यजमानस्यैव असति विशेषवचने साङ्गप्रधानजन्यफलभागित्वात्—इति पूर्वपक्षस्य निरूपणम् ... 713
साक्षात्कर्तृत्वं ऋत्विजामेव, परिक्रयात्, यजमानस्य तु प्रयोजककर्तृत्वमेव—इति शङ्का, तदुपपादनञ्च ...713-714
उपासनार्थं परिक्रयाभावात् प्रधानत्वाच्चोपासनस्य तत्र यजमान एव कर्ता—इति परिहारः ... 714
सिद्धान्तकथनम्—अङ्गावबद्धोपासनेऽपि ऋत्विज एव कर्तृत्वम्, उपासनसाधारण्येन परिक्रयस्य अङ्गताया न्यायतः परिकल्पनात्—इति ...715-716
अत्रार्थे भाष्यवाक्यस्य आशङ्कासमाधानाभ्यां योजनम् ...716-717
असति वचनविशेषे यजमान एव फलभागीति श्रुतिप्रमाणेन प्रदर्शनम्, श्रुतेः तत्परतायाः समर्थनञ्च ... 717

**सहकार्यन्तरविध्यधिकरणम्**

सङ्गतिकथनम् .... 718
पाण्डित्यंनिर्विद्येत्यादिवाक्ये मौनं न विधीयते, अपि तु ब्राह्मण्यवत् मौनस्याप्यनुवाद एव—इति पूर्वपक्षवर्णनम् ...718-719
पाण्डित्यवत् विद्यासहकारि मौनमपि विधीयते अपूर्वत्वात्—इति सिद्धान्तस्य कथनम् ... 719
पाण्डित्यशब्दार्थो विचारः विचार्यनिर्णयसाधनतया लौकिकप्रमाणप्राप्त इति नापूर्वः, अतो दृष्टान्तासिद्धिरिति शङ्का, विस्तरेण तत्समर्थनञ्च ...719-720
पापनिरासद्वारा साधनतायाः अपूर्वत्वसमर्थनेन तत्परिहारः ... 720
अत्रापि विधिर्व्यर्थः—इति शङ्काया उपपादनम्, तत्परिहारश्च ... 720
अथवा विचारे नियमविधिरिति पक्षान्तरस्य निरूपणम् ... 721
नियमविधेरपि नावकाश इति शङ्का, तदुपपादनम्, तदुपयोगितया विचारशब्दितसाङ्ख्यमार्गयोगमार्गयोर्निरूपणम् ... 721
भृगुवरुणसंवादपर्यालोचने विधिं विनापि विचारनियमः सिद्ध इति शङ्का, तत्परिहारश्च ...721-722
नियमविधिपक्षे भाष्योक्तापूर्वत्वस्य उपपादनम्, पाण्डित्यात् मौनस्यभेदसमर्थनम् ...722-723

पृष्ठे

मौने विधिश्रवणं नास्तीति शङ्कायाः परिहारः ... 723

विद्यावतो मौनविधिरित्यत्र भाष्योक्तश्रुतेः प्रमाणत्वासम्भवशङ्का, तत्परिहारश्च भाष्यतात्पर्यवर्णनेन ... 723

मौनविधिर्व्यर्थ इति शङ्का, तत्परिहारश्च ... 724

परमात्मप्रकरणे पाण्डित्यादिविध्युपगमे वाक्यभेद इति शङ्का, तत्समाधानञ्च ... 724

एवं कैवल्याश्रमे श्रुतिसिद्धे छान्दोग्ये गृहिणोपसंहारो न युक्त इति शङ्का, तत्परिहारश्च ...724-725

उपदेशाविशेषात् आश्रमचतुष्टयस्य प्रामाणिकत्वोपपादनम् ... 725

मौनवदितरेषामिति सूत्रे भाष्यस्य इतरेषामितिबहुवचनविरोधशङ्का, तत्परिहारश्च ... 725

अनाविष्कुर्वदधिकरणम्

सङ्गतिकथनम् ... 726

बाल्येन तिष्ठासेदिति सन्न्यासिनो विहितं बाल्यं लोकप्रसिद्धं कामचाराद्येव, वचनसामर्थ्यात् न दोषः-इति पूर्वपक्षकथनम् ... 726

सन्न्यासिनो विध्यन्तराविरोधेन आन्तरो भावविशेष एव बाल्यमिति सिद्धान्त-कथनम्, अत्र स्मृतिप्रमाणकथनञ्च ... 727

ऐहिकाधिकरणम्

पूर्वसन्दर्भेण सङ्गतिकथनम् ... 728

विद्यासाधनश्रवणाद्यनुष्ठानवतां इहैव विद्याजन्म— इति पूर्वपक्षस्य निरूपणम्, चित्रान्यायेन अमुत्रापीति शङ्का, तत्परिहारश्च ... 728

उपस्थितविपाकेन कर्मान्तरेण अप्रतिबन्धे इहैव, अन्यथा अमुत्र—इति सिद्धान्तकथनम् ...728-729

अत्र 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिश्रुतेः साधकत्वनिरूपणम्, उक्तश्रुतेः समञ्जसतमस्यार्थस्य प्रतिपादनञ्च ... 729

कर्मणां विविदिषार्थत्वपक्षेऽपि केषाञ्चित्कर्मणां प्रतिबन्धकनिरासद्वारा साक्षा-द्विद्यासाधनभावस्य प्रदर्शनम्, तत्रापि पूर्वोक्तायाः श्रुतेः प्रमाणत्वोपपादनम्... 729-730

मुक्तिफलानियमाधिकरणम

सङ्गतिगर्भपूर्वपक्षनिरूपणम्—मुक्तिरूपे फलेऽपि उत्कर्षनिकर्षकृतो विशेषः स्यात्—इति ... 731

ब्रह्मरूपनिर्विशेषमुक्तौ उक्तविशेषो न सम्भवतीति शङ्का, तत्परिहारश्च ... 731

पृष्ठे


सिद्धान्तकथनम्—साधने निर्विशेषविद्यायां उत्कर्षापकर्षाभावात् भेदाभावाच्च तत्फले मुक्तौ न तारतम्यसम्भवः, एकरूपैव मुक्तिः श्रूयते च—इति ... 731

मुक्तौ पूर्वपक्षाभिमतस्य विशेषस्य निरासः ...731-732

सगुणविद्याफले विशेषसम्भवः, साधने विशेषसम्भवात्—इति निरूपणम्: अध्यायोपसंहारश्च ...732-733

**चतुर्थोऽध्यायः प्रथमःपादः**

पूर्वाध्यायेन सङ्गतिकथनम् ... 734

पादचतुष्टयप्रतिपाद्यार्थवर्णनम्, अर्थक्रमानुसारं पादक्रमः इति च कथनम् ... 734

**आवृत्त्यधिकरणम्**

निर्विशेषविद्यासाधनभूतानि श्रवणादीनि सकृदेव कर्तव्यानि शास्त्रप्रामाण्यात्, न तु यावत्फलम्, सविशेषोपासनमपि न त्वाप्रायणम्—इति पूर्वपक्षस्य निरूपणम् ... 735

अवघातन्यायेन यावत्फलमावर्तनीयमिति शङ्का, तत्परिहारश्च ... 735

दृष्टार्थत्वात् यावत्फलमावर्तनीयानीति सिद्धान्तकथनम्, दृष्टार्थत्वोपपादनञ्च...735-736

विद्युपास्त्योरावृत्तिगर्भितत्वसमर्थनम् ...736-737

आवृत्तिकर्तव्यतासाधकत्वेन सूत्रोक्तस्य असकृदुपदेशस्य आवृत्तिसूचकत्वोपपादनम् ... 737

उपासनस्यावृत्तिगर्भत्वे, छान्दोग्ये उद्गीथविज्ञानप्रस्तावे वेदनस्यावृत्तिपदेनानुवादस्य लिङ्गत्वेन निरूपणम् ... 737

श्रवणं शाब्दज्ञानमात्रं उत विचारयुक्तं शाब्दज्ञानम्? उभयथाऽपि तदावृत्तिर्व्यर्था, आवृत्तेः आत्मसाक्षात्कारसाधनतायां व्यभिचारश्च-इति शङ्का, तदुपपादनञ्च ...737-739

उक्तव्यभिचारपरिहारपूर्वकं उभयविधश्रवणस्यापि आवृत्तिकर्तव्यतासमर्थनम्, जीवस्यासंसारिब्रह्मात्मतानिर्धारणोपयोगः प्रयोजनमिति पर्यवसितार्थकथनञ्च...739-741

जीवस्यासंसारिब्रह्मात्मत्वे प्रत्यक्षादिप्रमाणविरोधपरिहरणम् ... 741

वेदान्तानां श्रवणादिविधिपरत्वे विधिनिष्ठं शास्त्रम्-इति शङ्का, तत्परिहारश्च... 742

**आत्माधिकरणम्**

सङ्गतिप्रदर्शनम् ... 743

प्रत्यग्ब्रह्माभेदः तत्त्वमिति अधिकरणार्थः, स च प्रागेव समन्वयाध्याये श्रुतिस्मृतिन्यायैः समर्थितः, अतो व्यर्थमिदमधिकरणमिति शङ्का ... 743

पृष्ठे

शङ्काविशेषनिराकरणार्थमिदमिति परिहारः, तथाभूतशङ्काविशेषोपपादनञ्च ... 743

उपपादितशङ्काविशेषनिराकरणेन भाष्यसूचितेन प्रत्यग्ब्रह्माभेदसमर्थनम् ... 744

प्रत्यग्ब्रह्माभेददर्शनस्य प्रतीकदर्शनत्वशङ्का, तन्निराकरणञ्च ... 744

विरुद्धधर्माक्रान्तत्वात्, ईश्वराभावाधिकार्यभावप्रत्यक्षादिविरोधप्रसङ्गात्, न तदभेदो मुख्य इति शङ्का, तत्परिहारश्च ... 745

प्रत्यग्ब्रह्माभेददर्शनस्य सम्यग्दर्शनत्वे तन्निवर्त्याज्ञानं कस्येति शङ्का, तत्परिहारश्च ... 745

प्रतीकाधिकरणम्

पूर्वेणसङ्गतिकथनम् ... 746

ब्रह्मणीव प्रतीकेष्वपि अहङ्ग्रहो युक्त इति पूर्वपक्षस्योपपादनम् ... 746

तत्र, वचनाभावात् न युक्त इति शङ्का, कासुचित्सविशेषविद्यास्विव अर्थादहङ्ग्रहो युक्त इति परिहारश्च ... 746

सिद्धान्तकथनम्—अन्यथोपपत्तेः आर्थिकत्वं न भवतीति ... 747

तदभिन्नाभिन्नस्य तदभिन्नत्वम्—इतिन्यायेन प्रतीकेष्वहङ्ग्रह एव युक्त इति शङ्का, विकल्प्य तद्दूषणञ्च ... 747

ब्रह्मदृष्ट्यधिकरणम्

सङ्गतिकथनं संशयप्रदर्शनञ्च—'आदित्यो ब्रह्म' इत्यादिवाक्यैः अनुसन्धेयत्वेनोक्तोऽभेदः, स च ब्रह्मण्यादित्यादेः उत आदित्यादौ ब्रह्मणः—इति, संशयबीजप्रदर्शनञ्च ...748-749

नियामकाभावादनियम इति पूर्वपक्षस्योपपादनम् ... 749

सिद्धान्तकथनम्—आदित्यादिष्वेव ब्रह्मदृष्टिः, ब्रह्मण उत्कृष्टत्वात्—इति ...749-750

शास्त्रप्रामाण्यात् निकृष्टदृष्टिरप्युत्कृष्टे सम्भवतीति शङ्का, तत्परिहारश्च ... 750

इतिपरत्वाद्ब्रह्मशब्दस्य वाक्यशेषाच्च ब्रह्मदृष्टिरादित्यादिषु—इत्येवयुक्तमित्युपपादनम् ...750-751

आदित्यादिषु ब्रह्मदृष्ट्यापि ब्रह्मणः फलदातृत्वोपपादनम् ... 751

आदित्यादिमत्यधिकरणम्

सङ्गतिकथनम् ... 751

उद्गीथादिकर्माङ्गावबद्धोपासनेषु संशयप्रदर्शनम्—उद्गीथादिषु आदित्यादिदृष्टिः उत वैपरीत्येन—इति... ... 751

पृष्ठे

नियामकाभावात् अनियमः, अथवा फलसिद्ध्युपपत्तये कर्मात्मकोद्गीथादिदृष्टय एव आदित्यादिषु कर्तव्याः—इति पूर्वपक्षप्रदर्शनम्, आक्षेपसमाधानाभ्यां तदुपपादनञ्च ... 751

'इयमेवर्क् अग्निःसाम' इति निर्देशस्य 'लोकेषु पञ्चविधं सामोपासीत' इति निर्देशस्य च पूर्वपक्षसाधकलिङ्गत्वप्रदर्शनम् ...752-753

द्वितीयस्य लिङ्गत्वं न सम्भवतीति शङ्का, तत्परिहारश्च ... 753

सिद्धान्तकथनम्—उद्गीथादिष्वेव आदित्यादिमतयः कर्तव्याः, कर्माङ्गातिशयाधायकत्वावगमेन कर्माङ्गानां प्राधान्यात्-इति ... 753

स्वतन्त्रफलेषूक्तनियामकं न सम्भवतीति शङ्का, तन्निराकरणञ्च ... 754

पूर्वाधिकरणन्यायात् उद्गीथाधिकाराच्च उद्गीथे आदित्यादिदृष्टिरेवेति कथनम् ... 755

सिद्धरूपादित्यादिदृष्टयापि फलसिद्ध्युपपादनम् ... 755

पूर्वपक्ष्युक्तनिर्देशद्वयस्य तत्र सप्तमीनिर्देशस्य च सिद्धान्ताप्रतिकूलत्वसमर्थनम् ...755-757

पूर्वपक्षसिद्धान्तयोः फलभेदप्रदर्शनम् ... 758

**आसीनाधिकरणम्**

सङ्गतिप्रदर्शनम् ... 758

कर्माङ्गसम्बद्धसम्यग्दर्शनातिरिक्तेषूपासनेषु शरीरस्थितेरनियमः मानसत्वात्-इति पूर्वपक्षस्य पदर्शनम् ... 758

आसीनस्यैव सम्भवात् आसनं नियतमिति सिद्धान्तकथनम् ... 758

ध्यायत्यर्थत्वात्, श्रौतलिङ्गात्, स्मृतेश्च, आसीनकर्मैव उपासनम् ... 759

**यत्रैकाग्रताधिकरणम्**

सङ्गतिकथनम् ... 760

वैदिकत्वात् उपासनेष्वपि दिग्देशकालनियमः—इति पूर्वपक्षस्य प्रदर्शनम् ... 760

विशेषाश्रवणात् नायं नियम इति सिद्धान्तकथनम् ... 760

श्वेताश्वतरे विशेषश्रवणमस्तीति शङ्का, तत्परिहारश्च ...760-761

**आप्रायणाधिकरणम्**

सङ्गतिकथनम् ... 761

पृष्ठ

अभ्युदयफलेषूपासनविशेषेषु चिन्ता—यावज्जीवं आवर्तयेत् उत कियन्तश्चित्कालम् इति ... 761

कियन्तश्चित्कालमेवावर्तयेत् शास्त्रार्थस्य कृतत्वात् इति पूर्वपक्षप्रदर्शनम् ... 762

इहैवोपास्याभेदसाक्षात्कारस्य द्वारत्वं येषु तेषूपासनेषु कथं कियन्तश्चित्कालमेव आवृत्तिरिति वक्तुं शक्यमिति शङ्का, तदुपपादनञ्च ... 762

अदृष्टस्यद्वारत्वावश्यम्भावात् तेनैव फलप्राप्तिसिद्धेः, प्रमाणाभावात्, न आप्रायणमावृत्तिरिति परिहारेण पूर्वपक्षसमर्थनम् ...762-763

आमुष्मिकफलानामुपासनानामन्त्यप्रत्ययापेक्षत्वात् अन्त्यप्रत्ययोपयोगिदृढसंस्कारसिद्धये आप्रायणमावृत्तिरपेक्षितेति सिद्धान्तकथनम्, ...763-764

तत्र श्रुतिस्मृतिप्रमाणप्रदर्शनम् ....764-765

तदधिगमाधिकरणम्

फलाध्यायेऽस्मिन् एतदधिकरणपर्यन्तं साधनाध्यायार्थशेषानुवर्तनस्य प्रयोजनवर्णनम् ... 765

परापरविद्यासाधारणफलभूतपापक्षयविषयिणी चिन्ता—ब्रह्माधिगमे पापं क्षीयते न वा—इति ... 766

कर्मणः फलप्रदत्वनियमात् न क्षीयते—इति पूर्वपक्षकथनम् ... 766

प्रायश्चित्तनाश्ये व्यभिचारशङ्का, तत्परिहारः, ब्रह्मविद्यायाः प्रायश्चित्तवैषम्यनिरूपणञ्च, अपरविद्यायां साम्यशङ्का, तत्परिहारश्च ... 766

अनिर्मोक्षप्रसङ्गस्य परिहरणम् ... 767

सिद्धान्तकथनम्—सति ब्रह्माधिगमे उत्तरपूर्वयोः पापयोः अश्लेषविनाशाविति, तत्र श्रुतीनां प्रमाणत्वेन निरूपणम् ... 767

कर्मणःफलप्रदत्वबोधकशास्त्रविरोध इति शङ्का, तत्परिहारश्च, पूर्वपक्ष्युक्तनियमस्य प्रायश्चित्ते व्यभिचारसमर्थनम्, अपरविद्यायाः प्रायश्चित्तसाम्यसमर्थनञ्च ...767-768

परविद्यातः कर्मक्षये उपपत्तिकथनम् ... 768

सौत्रयोरश्लेषविनाशपदयोर्विवक्षितार्थकथनम्, तेन शङ्काविशेषनिरासश्च ...768-769

पूर्वपक्षे अनिर्मोक्षप्रसङ्गस्य समर्थनम् ... 769

इतरासंश्लेषाधिकरणम्

पुण्यस्याश्लेषो विद्ययेति न युक्तम्, अविरोधात्, अश्लेषवचनस्य विषयाभावाच्च-इति विशेषाशङ्कायाः अतिदेशनिवर्त्यायाः पूर्वपक्षत्वेन निरूपणम् ... 770

पृष्ठे

विरोधित्वोपपादनेन पुण्यस्यापि ज्ञानिनः पापतुल्यत्वनिरूपणेन तत्र श्रुतिप्रमाणप्रदर्शनेन च विद्यया पुण्यस्याप्यश्लेष इति सिद्धान्तकथनम्, अश्लेषवचनस्य विषयप्रदर्शनम्, अधिकरणफलप्रदर्शनञ्च ... 770

अनारब्धाधिकरणम्

सङ्गतिप्रदर्शनम् ... 771

ज्ञाननिमित्तः कर्मक्षयः अविशेषेण उत विशेषेण इति संशये अविशेषश्रवणात् अविशेषेणेति पूर्वपक्षस्य निरूपणम् ... 771

तत्र, तस्यतावदेवचिरमितिश्रुतिविरोधशङ्का तत्परिहारश्च ... 771

अनारब्धकार्ययोरेव क्षयः-इति सिद्धान्तकथनम्, तत्र परापरविदुषां शरीरधारणस्य श्रुतिष्ववगतस्य साधकतयानिरूपणम्, सत्यपि ब्रह्मसाक्षात्कारे प्रारब्धावशेषे युक्तिप्रदर्शनञ्च ... 771

यावदधिकाराधिकरणेन पौनरुक्त्यशङ्का, तत्परिहारश्च ... 772

सिद्धान्ते एव तस्यतावदेवचिरमितिश्रुतिस्वारस्यमिति कथनम् ... 772

अग्निहोत्राद्यधिकरणम्

सङ्गतिकथनम् ... 773

नित्यनैमित्तिकपुण्यकर्मणामपि विद्यया विनाशः, विरोधात्-इति पूर्वपक्षस्य प्रदर्शनम् ... 773

परविद्याया उत्पत्तौ कर्मणामविरोधः, अपरविद्यायां साहित्यञ्च श्रुतिसिद्धं-इत्यतः विद्याफलार्थत्वं तेषां कर्मणां न तु विनाशः-इति सिद्धान्तकथनम् ...773-774

एवं सति दायसङ्क्रमणकाले सुहृद्द्विषत्सङ्क्रमणस्य श्रुतस्य विषयभूतकर्मालाभ इति शङ्का, तत्परिहारश्च ...774-775

यदेवाधिकरणम्

सङ्गतिकथनम् ... 775

कर्माङ्गसम्बद्धविद्यासंयुक्तमेव अग्निहोत्रादिकं कर्म विद्योत्पत्तिहेतुः-इति पूर्वपक्षकथनम् ... 775

विद्यानांकर्माङ्गत्वाभावात् नायं पूर्वपक्षो युक्त इति शङ्का, तदुपपादनम्, तत्परिहारश्च ...775-776

पृष्ठे

श्रुतिस्मृतिभ्यां विशिष्टत्वावगमश्च पूर्वपक्षसाधकः-इति प्रतिपादनम् ... 777

सिद्धान्तकथनम्—तमेतमितिश्रुत्या अविशिष्टस्यापि हेतुत्वावगमात् केवलमपि विद्याहेतुः—इति ... 777

यदेवविद्ययेति विशिष्टत्वावगमस्य सिद्धान्ताविरोधित्वसाधकत्वयोः समर्थनम् 777-778

**भोगेनत्वधिकरणम्**

सङ्गतिकथनम् ... 778

प्रारब्धकर्मभोगानन्तरं अवश्यम्भाविनी ब्रह्मसम्पत्तिरिति सिद्धान्तकथनम् ...778-779

सत्यपि सम्यग्दर्शने प्रारब्धभोगकाले इव पश्चादपि भेदर्शनमनुवर्ततेति पूर्वपक्षस्योपपादनम् ... 779

अनुवृत्तिहेत्वभावात् नानुवृत्तिरिति पूर्वपक्षनिराकरणेन सिद्धान्तोपसंहारः पादार्थोपसंहारश्च ... 780

## चतुर्थाध्याये द्वितीयः पादः

**वागधिकरणम्**

वागादिलयप्रकारचिन्तनस्य पूर्वेण सङ्गतिवर्णनम् ... 781

प्रायणकाले वाच एव मनसि लयः, वाङ्मनसीति श्रुतेः—इति पूर्वपक्षवर्णनम्... 781

वाग्वृत्तेरेव लयः, दर्शनात्, लयश्चात्र मनोवृत्तावस्थितायां वाग्वृत्त्युपसंहारः—इति सिद्धान्तकथनम् ...781-782

सिद्धान्तस्य सूत्रसम्मतत्वोपपादनम्, वाङ्मनसीतिसूत्रणस्याविरोधोपपादनञ्च ...782-783

प्रश्नोक्तः सर्वेन्द्रियाणां लयोऽपि वाग्लयवदेवेति निरूपणम् ... 783

सिद्धान्तस्य उपपत्त्यन्तरसूचकमपि अतएवचेति सूत्रम्—इति निरूपणम् ... 783

**मनोऽधिकरणम्**

सङ्गतिकथनम् ... 784

वागधिकरणन्यायेन 'मनःप्राणे' इत्यपि मनोवृत्तिलयाभिप्रायमेवेति सिद्धान्तकथनम् ... 784

पूर्वन्यायातिदेशनिवर्त्याधिकाशङ्काया उपपादनम्, तन्निराकरणञ्च ... 784

**अध्यक्षाधिकरणम्**

सङ्गतिकथनम् ... 785

पृष्ठे

प्राणस्तेजसीति यथाश्रुति प्राणस्यैव तेजसि लयः इति पूर्वपक्षस्य, तत्र 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्यन्तरपर्यालोचने जीवसाहित्यश्रवणात् अयुक्तत्वशङ्कायाः, प्राणशब्दस्य इन्द्रियपरत्वोपपादनेन परिहारस्य च प्रदर्शनम् ...785-786

तत्र मुख्यप्राणपरिग्रहेऽपि तेजोऽनन्तरमेव जीवो निवेशनीय इति पूर्वपक्षाभिप्रायवर्णनम् — 786

जीवः तेजसःपूर्वमेव निवेशनीयः, तथा च प्राणोऽध्यक्षे जीवे वृत्तिलयात्मकलयवान् भवतीति सिद्धान्तस्य जीवोपगमादिभ्यो हेतुभ्यः समर्थनम् ...786-787

अत्र प्राणस्तेजसीतिश्रुतिविरोधः—इति शङ्का, प्राणसम्पृक्तोऽध्यक्षः तेजस्सहचरितेषु भूतेषु इति श्रुत्यभिप्रायवर्णनेन परिहारश्च ...787-788

तेजसीत्येव श्रवणात् तेजस्सहचरितभूतेष्विति अर्थवर्णनमयुक्तमिति शङ्का, सप्रमाणप्रदर्शनं तस्य परिहारश्च ...788-789

एवमधिकरणत्रयेण निर्णीतोऽर्थः प्रश्नोपनिषद्वाक्यविरुद्ध इति शङ्का, तत्परिहारश्च ...789-790

बृहदारण्यकविरुद्ध इति शङ्का तत्परिहारश्च ... 790

अधिकरणत्रयस्य पूर्वपक्षसिद्धान्तयोः फलभेदकथनम् ... 791

## आसृत्युपक्रमाधिकरणम्

अधिकरणत्रयेणोपवर्णिता उत्क्रान्तिः अविदुषामेव, न तु विदुषाम्, ब्रह्मरूपामृतत्वप्राप्तौ गत्यपेक्षाभावात्, उत्क्रान्तेस्तदर्थत्वात्—इति पूर्वपक्षवर्णनम् ... 791

ब्रह्मविद्याप्रकरणे आम्नानात् अस्तीतिशङ्का, तत्परिहारश्च .... 791

सिद्धान्तकथनम्—अपरविद्याप्राप्यं अमृतत्वं ब्रह्मलोकावच्छिन्नं गत्यपेक्षं तदर्थोत्क्रान्त्यपेक्षञ्चेति सविशेषविदुषां अस्त्युत्क्रान्तिरिति ... 792

विद्वदविदुषोः फलवैलक्षण्यात् पूर्वोक्तोत्क्रान्तौ वैलक्षण्यमितिशङ्का, तत्परिहारश्च 793

## तदापीत्यधिकरणम्

सङ्गतिकथनम् ... 793

'तेजः परस्यां देवतायाम्' इति श्रूयमाणा सम्पत्तिः परदेवतायाः प्रकृतित्वात् स्वरूपप्रविलय एव—इति पूर्वपक्षकथनम् ... 793

सौषुप्तसम्पत्तिवत् सावशेषो लयः स्यात्—इति शङ्का, तत्परिहारश्च निर्विशेषविद्विषयमिदंवाक्यमिति समर्थनेन ...793-794

एवं सति, सम्पद्यत इति पदस्य वैरूप्यम्—इतिशङ्का, तत्परिहारश्च ... 794

वाक्यस्य निर्विशेषविदतिरिक्तविषयत्वेऽपि उक्तपूर्वपक्षस्योपपादनम् ... 794

पृष्ठ

सिद्धान्तकथनम्—इदं सम्पत्तिवचनं सर्वविषयमेव, सर्वस्यापि क्षणं ब्रह्मण्यवस्थानस्य प्रयोजनञ्चास्ति, अतः सौषुप्तवत् सावशेषलय एव—इति ...794-795
सूक्ष्मशरीरस्योत्क्रान्तिप्रसाधनं बाधकनिरसनेन ...795-796
सूक्ष्मशरीरे प्रमाणप्रदर्शनम् ... 796

**प्रतिषेधाधिकरणम्**

सङ्गतिकथनम् ... 796
निर्विशेषविदामपि उत्क्रान्तिरस्ति, 'न तस्य प्राणा उत्क्रामन्ति' इति प्रतिषेधः शारीरापादानक इति न तद्विरोधः —इति पूर्वपक्षप्रदर्शनम् ...796-797
सिद्धान्तकथनम्—आर्तभागब्राह्मणे "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति आहो न, नेतिहोवाच याज्ञवल्क्यः" इति शरीरापादानकोत्क्रान्तिप्रतिषेधस्य स्पष्टत्वात् न निर्विशेषविदामुत्क्रान्तिः—इति ... 797
उक्तवाक्ये अस्मादिति इदम्पदेन पुरुष एव परामर्शनीयः, प्रस्तुतत्वात्, एवञ्च अपादानता शारीरस्यैव पुरुषस्य—इति शङ्का, शरीरस्यापि प्रस्तुतत्वस्य अस्मादितीदम्पदेन शरीरस्यैव परामर्शनीयत्वस्य चोपपादनेन परिहारश्च ... 798
यत्रायंपुरुष इति पुरुषपदं पुरुषसामान्यविषयमिति शङ्का, तदुपपादनञ्च ...798-799
प्रस्तुतत्वात् परब्रह्मविदेव पुरुषपदार्थ इति प्रसाधनेन परिहारः ...799-800
आर्तभागसन्दर्भस्य परब्रह्मविद्विषयत्वे तत्र कर्माश्रयताप्रतिपादनमसङ्गतमिति शङ्का, तत्परिहारश्च ... 800
नतस्मात्प्राणाउत्क्रामन्तीति माध्यन्दिनपाठविरोध इति शङ्का, शरीराभेदोपचारेण स पाठ इति तत्परिहारश्च, अभेदोपचारस्य उपगन्तव्यत्वसमर्थनञ्च ...800-801
नतस्येतिवाक्ये तच्छब्देन विदुष एव परामर्शः—इति शङ्का, तत्परिहारश्च ...800-801
"न तस्य प्राणा उत्क्रामन्ति" इति वाक्यं पूर्वपक्ष्यनुकूलमिति शङ्का, तत्परिहारश्च ... 801
परब्रह्मविदः गत्युत्क्रान्त्योरभावे स्मृतिप्रमाणप्रदर्शनम् ... 802

**परसम्पत्त्यधिकरणम्**

सङ्गतिकथनम्, संशयतद्बीजप्रदर्शनञ्च ... 803
विद्वदुपाधीनां पृथिव्यादिष्वेव लय इति पूर्वपक्षस्योपपादनम् ... 803
ज्ञाने सति पृथिव्यादिपरिशेषाभावात् परब्रह्मण्येव लय इति सिद्धान्तनिरूपणम्... 803
अत्र मुण्डकवाक्यविरोध इति शङ्का, तत्परिहारश्च ... 804

**अविभागाधिकरणम्**

विद्वदुपाधीनां लयः सावशेषः लयत्वात्-इति पूर्वपक्षनिरूपणम् ... 804
वचनात् उपपत्तेश्च निरवशेष इति सिद्धान्तप्रतिपादनम् ...804-805

पृष्ठे

**तदोकोऽग्राधिकरणम्**


सङ्गतिकथनम् ... 805

उपासकानां मूर्धन्यनाड्यैवोत्क्रमणं नियतं उत अनियतं-इति संशये, अनियतमिति पूर्वपक्षस्य प्रदर्शनम् ... 805

श्रुतेः अर्थाच्च नियम इति शङ्का, तन्निराकरणं नियतत्वासम्भवनिरूपणञ्च ... 806

सिद्धान्तकथनम्— उपासकस्यामृतत्वप्राप्तिश्रुत्यन्यथाऽनुपपत्त्या मूर्धन्यनाड्योत्क्रमणं नियतम्—इति, सम्भवोपपादनञ्च ...806-807

पूर्वपक्षसिद्धान्तयोः फलभेदप्रदर्शनम् ... 807


**रश्म्यधिकरणम्**


सङ्गतिकथनम् ... 807

उपासको मूर्धन्यया नाड्योत्क्रामन् रश्म्यनुसारी अहनि रात्रौ च भवति अविशेषेण श्रवणात्—इति सिद्धान्तकथनम् ...807-808

निशि न सम्भवतीति पूर्वपक्षस्य प्रदर्शनम्, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वोपपादनेन पूर्वपक्षनिरासश्च ... 808

पूर्वपक्षबाधकानां सिद्धान्तसाधकानाञ्च प्रदर्शनम् ...808-809


**अयनाधिकरणम्**


दक्षिणायनमृतोऽपिविद्वान् रश्मिभिःसम्बद्धय ब्रह्मलोकं गच्छत्येवेति सिद्धान्तकथनं पूर्वाधिकरणन्यायेन तदुपपादनञ्च ... 809

न्यायातिदेशनिवर्त्यीया विशेषाशङ्कायाः प्रदर्शनं हेतुत्रयेण, तन्निराकरणञ्च ... 809

सिद्धान्ते भगवद्गीतावचनविरोधस्य द्वेधापरिहारः ...810-811


**चतुर्थाध्याये तृतीयः पादः**


सङ्गतिकथनम् ... 812

उत्क्रान्त्यनन्तरभाविनी अर्चिरादिमार्गप्राप्तिः, तत्र श्रुतिषु बहुधा श्रवणात् संशयः 812

भिन्ना एताःसृतयः—इति पूर्वपक्षः ... 812

उपसंहारः सम्भवतीति शङ्का, तत्परिहारः ... 812

सिद्धान्तकथनम्—अर्चिरादिः एक एव मार्गः—इति ... 813

यत्र स मार्गः न श्रूयते तत्र कथं स मार्ग इति शङ्का, तत्परिहारश्च—फलैकत्वादिति ... 813

अवधारणत्वरावचनयोर्विरोधस्य परिहारः ... 814

पृष्ठे

मार्गविभागानुगुण्यात् भूयोऽनुग्रहन्यायाच्च अर्चिरादिमार्ग एवेति, श्रूयमाणविशेषणानां तत्रैव निवेश इति च कथनम् ... 815

**वाय्वधिकरणम्**

अनुचिन्तनाय क्रमचिन्ता ... 815

अर्चिरनन्तरं वायोर्निवेश इति पूर्वपक्षस्य सोपपत्तिकं निरूपणम् ...815-816

सिद्धान्तकथनम्—आदित्यात्पूर्वं संवत्सरादनन्तरं वायोर्निवेश—इति, तत्समर्थनञ्च ...816-817

बृहदारण्यकपाठानुसारात् संवत्सरानन्तरं देवलोकः, तदनन्तरं वायुरिति निरूपणम् ... 817

देवलोकस्य एवंनिवेशस्य आक्षेपसमाधानाभ्यां समर्थनम् ... 818

**तडिदधिकरणम्**

सङ्गतिकथनम् ... 818

कौषीतक्याम्नातानां वरुणलोकादीनां अर्चिरादौ निवेशासम्भवात् मार्गान्तरमेव तदिति पूर्वपक्षकथनम् ...818-819

सिद्धान्तकथनम्—तडिदनन्तरं वरुणादीनां पाठक्रमेण निवेश इति, नेतृत्वे अमानवपुरुषेण तेषां समुच्चय इति च ... 819

**आतिवाहिकाधिकरणम्**

अर्चिरादयो मार्गचिह्नानि भोगभूमयो वा तथोपदेशात्, न त्वातिवाहिकाः, लोकशब्दात् अचेतनत्वाच्च-इति पूर्वपक्षस्य निरूपणम् ... 820

सिद्धान्तकथनम्—नेतृत्वलिङ्गात् आतिवाहिका एवेति, वैद्युतस्यैव नेतृत्वं तथा श्रुतेः-इति शङ्का, तत्र अमानवत्वविशेषणाल्लिङ्गात् इतरेषामपि नेतृत्वमिति तत्परिहारश्च ... 821

लिङ्गमात्रमगमकमिति शङ्का, न्यायस्यापि प्रदर्शनेन तत्परिहारः ...821-822

'अर्चिषोऽहः' इति निर्देशेन उपक्रमेण च विरोध इति शङ्का, परिहारश्च ... 822

वरुणादीनामपि आतिवाहिकत्वस्य समर्थनम्, तत्र सूत्राविरोधस्य च ... 823

**कार्याधिकरणम्**

मार्गप्राप्यचिन्ता, तत्र सविशेषविद्भिः प्राप्यं शुद्धं परं ब्रह्मैव, तच्च साक्षात् अर्चिरादिनैव—इति प्राप्ते, गत्युपपत्तेः सोपाधिकमेव प्राप्यमिति बादरिमतप्रदर्शनम् ... 824

पृष्ठे

तत्र ब्रह्मशब्दत्वं प्राप्यस्य श्रुतं, तच्च मुख्यं परस्यैवेति शङ्का, तत्परिहारश्च ... 824
सोपाधिकेऽपि ब्रह्मशब्दव्यपदेशस्योपपादनम् ... 825
सोपाधिकस्य प्राप्यत्वे, प्राप्तस्य अनावृत्तिश्रवणविरोध इति शङ्का, तत्परिहारः, तत्र स्मृतिप्रमाणप्रदर्शनञ्च ... 825
जैमिनिमतप्रदर्शनम्—ब्रह्मशब्दमुख्यत्वाय काठकश्रुत्यविरोधाय च परं ब्रह्मैव साक्षात् अर्चिरादिप्राप्यम्—इति ... 826
अत्र "प्रजापतेः सभां वेश्म प्रपद्ये" इति श्रुतिविरोध इति शङ्का, तत्परिहारश्च... 827
बादरिमतस्यैव सिद्धान्तत्वे नियामकप्रदर्शनम् - गत्युपपत्त्यादयः मुख्यत्वादीन् आभासीकुर्वन्तीति ... 828
जैमिनिमतस्य सिद्धान्तत्वे बाधकप्रदर्शनम्—निरुपाधिकस्य गन्तव्यत्वानुपपत्तेः—इति ...829-830
निरुपाधिकं ब्रह्म नैवास्तीति शङ्का, तन्निराकरणम् ...830-831
निरुपाधिकस्य जीवेनगन्तव्यताया असम्भवस्य समर्थनम् ...831-832
प्रसङ्गात्, विनाऽपि ब्रह्मात्मतां तज्ज्ञानं च मोक्ष इति ऐकभविकवादस्य सानुवादं निराकरणम् ...832-834
ब्रह्मात्मैकत्वज्ञानादेव मोक्ष इति निरूपणम् ... 834
ब्रह्मात्मैकत्वे लोकव्यवहारप्रत्यक्षादिप्रमाणविरोधादीनां परिहरणम् ... 834
गतिप्राप्यं सोपाधिकं अपरं ब्रह्मैवेति सिद्धान्तोपसंहारः, तादर्थ्येन परापरब्रह्मणोः श्रुतिसिद्धत्वप्रदर्शनञ्च ...834-835
तत्र अद्वितीयश्रुतिविरोधपरिहारः .... 835
सोपाधिकस्य गन्तव्यत्वादीनां समर्थनम् ... 836

**अप्रतीकालम्बनाधिकरणम्**

सङ्गतिकथनम् ... 836
प्रतीकोपासकान् अहङ्ग्रहोपासकांश्च अविशेषेण अमानवःपुरुषो नेता ब्रह्मलोकम्, अर्चिरादिना गतेः, अनियमस्सर्वासामिति न्यायाच्च—इति पूर्वपक्षप्रदर्शनम्... 836
ब्रह्मक्रतुत्वाभावात् प्रतीकालम्बनानां, तद्व्यतिरिक्तानेव विकारालम्बनान् नयतीति सिद्धान्तप्रदर्शनम् ... 837
उक्तहेतोः पञ्चाग्निविदुषि व्यभिचार इति शङ्का, तत्परिहारश्च ... 837
शास्त्रदर्पणकृतां सिद्धान्तसाधनप्रकारस्य निरूपणम् ...837-838
प्रतीकोपासनानां फलविशेषाम्नानं प्रतीकोपासकानां ब्रह्मक्रतुत्वाभावे लिङ्गम्—इति निरूपणम् ... 838
प्रतीकोपासनेषुफलविशेषाम्नाने अनुपपत्तिशङ्का, तत्परिहारश्च ...838-839

पृष्ठे

## चतुर्थाध्याये चतुर्थःपादः

अस्यपादस्य पूर्वत्रिपाद्या सङ्गतिकथनं प्रतिपाद्यकथनञ्च ... 840

निर्विशेषविद्यायाः फलं न स्वरूपमात्रेणाभिनिष्पत्तिः, किन्तु केनचिद्विशेषेण, फलत्वात्—इति पूर्वपक्षस्य उपपादनम् ... 840

सिद्धान्तकथनम्—स्वरूपमात्रेणाभिनिष्पत्तिः, स्वेनेतिविशेषणात्—इति ... 841

एवं सति पूर्वावस्थातोऽविशेष इति शङ्का, तत्परिहारश्च ... 841

स्वरूपमात्रावस्थानस्य फलत्वोपपादनम्, अभिनिष्पत्तिरूपत्वोपपादनं च ...841-842

विद्ययास्वरूपमात्रावस्थानस्य मुक्तित्वसमर्थनम् ... 842

### अविभागाधिकरणम्

सङ्गतिकथनम् ... 842

विद्यया स्वरूपावस्थानं ब्रह्मणो भेदेन, भेदनिर्देशात्—इति पूर्वपक्षस्योपपादनम् ...842-843

ब्रह्माभेददर्शनेनाभिनिष्पन्नं स्वरूपं ब्रह्माभिन्नमेव, तत्क्रतुन्यायात्-इतिसिद्धान्तकथनम् ... 843

श्रौतानाञ्चाभेददर्शनानां प्रदर्शनम्, भेदनिर्देशस्यौपचारिकत्वसमर्थनञ्च ... 843

### ब्राह्माधिकरणम्

मुक्तौ अभिव्यक्तं ब्रह्मरूपं सविशेषं उत निर्विशेषचिन्मात्रम्—इति संशये, सविशेषमेवेति तैनैवस्वरूपेणावस्थानम्—इति सहेतुकं जैमिनिमतप्रदर्शनम् ...843-844

चिन्मात्ररूपत्वात् तैनैवरूपेणेति औडुलोमिमतप्रदर्शनम् ... 844

परमार्थतो निर्विशेषं व्यवहारतः सविशेषमिति उभयाविरोध इति बादरायणमतस्योपपादनम् ... 845

### सङ्कल्पाधिकरणम्

सविशेषविद्याफलचिन्ता ... 845

सविशेषविद्याफलभूतानां पित्रादिभोग्यानां समुत्थानं न सङ्कल्पमात्रात्, तथा सति भोगापर्याप्ताः स्युः—इति पूर्वपक्षस्य प्रदर्शनम् ...845-846

सङ्कल्पादेवसमुत्थानम्, तथा श्रवणात्, अनन्याधिपतित्वाम्नानान्यथाऽनुपपत्तेश्च—इति सिद्धान्तकथनम् ...846-847

### अभावाधिकरणम्

सङ्गतिकथनम् ... 847

सविशेषविद्याविदुषः फलोपभोगाय, शरीरेन्द्रियाणामभावः 'मनसा रमते' इति व्यावर्तकविशेषणात्—इति बादरिमतस्य प्रदर्शनम् ... 847

पृष्ठे

अनेकधाभावविकल्पश्रवणान्यथानुपपत्त्या भावः शरीरेन्द्रियाणाम्—इति जैमिनिमतप्रदर्शनम् ... 848

अनेकधाभावविकल्पश्रवणस्य बादर्यभिप्रायवर्णनम्, मनसेतिविशेषणस्य जैमिन्यभिप्रायवर्णनञ्च ...848-849

उभयस्यापिश्रवणात् सङ्कल्पानुसारेण उभयसम्भवात् उभयमपि साधु, द्वादशाहवत्—इति बादरायणमतप्रदर्शनम्, दृष्टान्तस्योपपादनञ्च ... 848

सशरीरत्वे अशरीरत्वेऽपि च भोगोपपादनं—जाग्रत्स्वप्नदृष्टान्तेन ... 849

**प्रदीपाधिकरणम्**

सङ्गतिकथनम् ... 850

सविशेषविदुषां अनेकशरीरग्रहणपक्षे एकमेव शरीरं सप्रमातृकं नेतराणि—इति सहेतुकं पूर्वपक्षस्य निरूपणम् ... 850

सिद्धान्तकथनम् — एकस्यानेकधाभावश्रवणात् तत्प्रमात्रैव सप्रमातृकाणि शरीरान्तराणि प्राक्सिद्धमनोऽनुवर्तीन्येव मनोऽन्तराणि—इति — 850

मुक्तस्य सप्रमातृकशरीरसत्त्वे विशेषविज्ञानाभावश्रुतिविरोधः—इति शङ्का, तत्परिहारश्च ... 851

**जगद्व्यापाराधिकरणम्**

सविशेषविदुषां सत्यसङ्कल्पत्वात् सङ्कल्पाधीनशरीरपरिग्रहादिवत् जगत्स्रष्टृत्वादिकमपि सति सङ्कल्पे स्यात्—इति पूर्वपक्षस्य निरूपणम् ... 852

जगत्स्रष्टृत्वादिश्रुतीनां नित्यसिद्धप्रकृतेश्वरविषयत्वस्य समर्थनेन, नानाभूतसविशेषविद्विषयत्वे जगद्व्यापारव्याकुलत्वापत्तेश्चापादनेन, जगद्व्यापारवर्जमेव सविशेषविदुषामैश्वर्यमिति सिद्धान्तकथनम् ...852-853

सविशेषविदां स्वाराज्यश्रवणेन तद्विरोध इति शङ्का तत्परिहारश्च ... 853

तेषां परमात्मभावप्राप्तौ जगदीश्वरत्वं कुतो न भवतीति शङ्कायाः, परिहारः—निर्विशेषरूपाप्राप्तिवत् जगदीश्वरत्वाप्राप्तिरिति ...853-854

निर्विशेषरूपस्य श्रुतिस्मृतिसिद्धत्वप्रदर्शनम् ... 854

भोगमात्रसाम्यश्रवणस्य सिद्धान्तसाधकलिङ्गत्वेन प्रदर्शनम् ... 854

सविशेषविदां सातिशयैश्वर्ये अनावृत्तिश्रवणविरोधः—इति शङ्का, तत्परिहारश्च—क्रममुक्त्यङ्गीकारादविरोध इति, तत्र शास्त्रं प्रमाणम्—इति च ...854-856

**पादोपसंहारः**

**अध्यायोपसंहारः**

**शारीरकमीमांसाशास्त्रोपसंहारश्च** ...855-856

---

## द्वितीयोऽध्यायः

### प्रथमः पादः

### १ स्मृत्यधिकरणम्

प्रथमेऽध्याये–सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं मृत्सुवर्णादय इव घटरुचकादीनाम्, उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारण मायावीव मायायाः, प्रसारितस्य जगतः पुनः स्वात्मन्येवोपसंहारकारणं अवनिरिव चतुर्विधस्य भूतग्रामस्य, स एव च सर्वेषां न आत्मा—इत्येतत् वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम् । प्रधानादिकारणवादाश्च अशब्दत्वेन निराकृताः । इदानीं, स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रधा-

---

श्रीः

वृत्तानुवादपूर्वकं समन्वयनिरूपणानन्तरमविरोधनिरूपणे [1]विषयविषयिभावं सम्बन्धं प्रयोजकमाह—प्रथमेऽध्याय इत्यादिना द्वितीयोऽध्याय आरभ्यत इत्यन्तेन । पूर्वाध्याये अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रत्यगभिन्नं ब्रह्म वेदान्तैः प्रतिपाद्यत इति सप्रपञ्चं निरूपितम् । तदिह स्मृत्यादिविरोधोद्भावनेन असङ्गत-मित्याशङ्क्य समर्थ्यते । अतः समन्वयाध्यायार्थस्याविरोधाध्यायार्थं प्रति विषय-त्वम् । न च [2]विषयपरिज्ञानं विना [3]असाङ्गत्येन आक्षेपः समाधानं वा सम्भवति—इति पूर्वापरीभावो द्रष्टव्यः । तदाह—इदानीं स्वपक्ष इति । स्मृतिन्याय-

---

1. आ. विषयविषयिभावसम्बन्धप्रयोजकमाह

2. **विषयपरिज्ञानं**—विषयनिरूपणम् ।

3. **असाङ्गत्येनेति** न च सम्भवतीत्यत्र अयं हेतुः । सम्भवायोग्यत्वेनेति तदर्थः । कारणं विना कार्यस्योत्पत्तुमयोग्यत्वात्, निषेधरूपे आक्षेपे प्रतियोगिज्ञान-विधया विषयपरिज्ञानस्य कारणत्वात् विषयनिरूपणस्य पूर्वभावित्वावश्यम्भावः इति भावः । साङ्गत्येनेति मुद्रिते पाठः ।

नादिवादानां च न्यायाभासोपबृंहितत्वं प्रतिवेदान्तं च सृष्ट्यादिप्रक्रियाया अविगीतत्वं इत्यस्यार्थजातस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते ।

तत्र प्रथमं तावत् स्मृतिविरोधमुपन्यस्य परिहरति—

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम् । कुतः ? स्मृत्यनवकाशदोषप्रसङ्गात् । स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता अन्याश्च तदनुसारिण्यः स्मृतयः एवं सति अनवकाशाः प्रसज्येरन् । तासु हि अचेतनं प्रधानं स्वतन्त्रं जगतः कारणं उपनिबध्यते । मन्वादिस्मृतयस्तावत् चोदनादिलक्षणेनाग्निहोत्रादिना धर्मजातेन अपेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति - अस्य वर्णस्य अस्मिन्काले अनेन विधानेन उपनयनं, ईदृशश्चाचारः, इत्थं वेदाध्ययनं, इत्थं समावर्तनं, इत्थं सहधर्मचारिणीसंयोगः-इति । तथा पुरुषार्थांश्च वर्णाश्रमधर्मान् नानाविधान् विदधति । नैवं कपिलादिस्मृतीनां अनुष्ठेये विषये अवकाशोऽस्ति । मोक्षसाधनमेव हि सम्यग्दर्शनं अधिकृत्य ताः प्रणीताः । यदि तत्राप्यनवकाशाः स्युः आनर्थक्यमेवासां प्रसज्येत । तस्मात् तदविरोधेन वेदान्ता व्याख्यातव्याः ।

---

विरोधपरिहार इति प्रथमपादार्थो दर्शितः । प्रधानादिवादानां इत्यनेन द्वितीयपादार्थः । प्रतिवेदान्तं चेति तृतीयतुरीयपादार्थः ।

युक्त्यपेक्षया स्मृतीनामभ्यर्हितत्वात् तद्विरोध एव प्रथमं परिह्रियते इत्याह— तत्र प्रथमं तावदिति । चोदनादिलक्षणेनेति । चोदना-विधिः । आदिपदेन मन्त्रार्थवादौ गृह्येते । स्मृतीनां चोदनापेक्षितार्थसमर्पकत्वं च विप्रकीर्णानामस्फुटार्थानां चोदनानां अर्थमाकलय्य [1]स्फुटतया समर्पणमेव । न हि तथाविधार्थसङ्ग्रहं विना आधुनिकानामनुष्ठानं पर्यवस्यति ।

---

1. स्फुटतयेति चोदनार्थस्येत्यादिः । स्फुटतयासमर्पणं—निश्चयजननम् ।

**कथं पुनः ईक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणं इत्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते ?**

---

**कथंपुनरीक्षत्यादिभ्यो हेतुभ्य इति** । अयं भावः—श्रुत्या हि ब्रह्म उपादानं प्रतिपाद्यते । न च तत् साङ्ख्यस्मृत्या बाधितुं युक्तम् । स्मृतयो हि पुरुषवचनरूपा अलौकिकेऽर्थे न स्वयमेव प्रमाणम्, अपि तु श्रुतिमूलकतया । तत्र च श्रुतिस्मृत्योर्विरोधे उपजीव्यतया श्रुतेः स्मृत्यप्रामाण्यमेव युक्तम् । न च वाच्यं—दुर्बलाया अपि स्मृतेः बलवदाश्रयलाभे श्रुतिबाधकत्वम्, यथा 'क्षुते आचामेत्' इत्यादिस्मृतेः पदार्थाश्रयत्वात् श्रुतिप्रतिपन्नपदार्थधर्मभूतक्रमबाधकत्वम्, एवं प्रकृते दुर्बलाया अपि स्मृतेः निरवकाशत्वरूपं बलं [1]आश्रितायाः [2]श्रुतिबाधकता भविष्यति । दृष्टं च लोकेऽपि निर्धनतया दुर्बलोऽपि धार्मिकं राजानं आश्रितो न शक्यते अन्यैर्धनिकैः प्रबलैः बाधितुम्—इति । यत्र द्वयोः प्रामाण्ये न विप्रतिपत्तिः तत्रैव सावकाशस्य निरवकाशेन बाधः । न हि निरवकाशेनापि वञ्चकवचनेन सावकाशमपि प्रामाणिकपुरुषवचनं अन्यथा नीयते । न च क्षुतेआचामेदित्यादावपि स्मृतिवशेन श्रौतार्थबाधः । तत्र विरोधाभावात् । क्रमो हि श्रौतस्मार्तनित्यनैमित्तिकसकलपदार्थपर्यालोचनयैव कल्प्यते । तत्र स्मृत्या मध्ये क्षुते निमित्ते विधीयमानमाचमनमनुसन्धाय इत्थं कल्प्यते—वेद्यादीनां यथाश्रुतक्रमो योऽवगतः, स निमित्ताभावदशायाम्, निमित्ते तु सति तद्धटित एव—इति । सर्वपदार्थप्राप्त्यनुसारेणैव क्रमस्य कल्पनीयत्वात् । 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादिश्रौतनैमित्तिकपदार्थस्थलेऽपि इयमेव गतिः । ततश्च स्मार्तपदार्थप्राप्त्यनुसन्धानात् प्राक् कस्यचित् क्रमस्य अक्लृप्तत्वात् [3]न तत्र विरोधः । इह तु साङ्ख्यस्मृतेः प्रामाण्यं प्रत्येव विप्रतिपत्तेः कथं निरवकाशयाऽपि तया श्रुतेरन्यथानयनम् । साङ्ख्यस्मृतिप्रामाण्यं संरक्षणीयमिति निर्बन्धकारणाभावात् । न च साङ्ख्यस्मृतेरपि वेदवत् [4]अपौरुषेय-

---

1. आ. आश्रित्य
2. **श्रुतीति** सावकाशेत्यादिः ।
3. **न तत्र विरोध इति** तदुक्तं वार्तिके —'प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्ष्यते । यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुद्ध्यते' इति । मु. न तत्र क्रमविरोधः
4. मु. अपौरुषेयत्वमिति

भवेदयमनाक्षेपः स्वतन्त्रप्रज्ञानाम् । परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिषु अवलम्बेरन् । तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् । अस्मत्कृते च व्याख्याने न विश्वस्युः बहुमानात् स्मृतीनां प्रणेतृषु । कपिलप्रभृतीनां च आर्षं ज्ञानं अप्रतिहतं स्मर्यते । श्रुतिश्च भवति– 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानै-

---

त्वमेवेति वाच्यम् । स्पष्टपौरुषेयत्वस्मरणेन तथाकल्पनाया एव अप्रसरात्, साङ्ख्यैः तथाऽनभ्युपगमाच्च । अतः कथं 'साङ्ख्यस्मृत्यनुसारेण श्रुतेरन्यथानयनं' इति पूर्वपक्षः क्रियते—इति ।

भवेदयमनाक्षेप इति[1] । अयमर्थः—न वयं साङ्ख्यस्मृत्यनुसारेण वेदार्थो बाधनीय इति वदामः । अपि तु गहनो वेदार्थो न युष्मदुपन्यस्ताभिः ईक्षतेर्नाशब्दमित्येवमादिभिर्युक्तिभिः निर्णेतव्यः, अपि तु महर्षिप्रणीतस्मृत्यनुसारेणैव निर्णेतव्यः ।

'वेदार्थो यः स्वयं ज्ञातः तत्राज्ञानं भवेदपि ।

ऋषिभिः कथिते तस्मिन् का शङ्का स्यान्महात्मभिः ॥' इति वचनात् ।

यद्यपि गहनो वेदार्थः अनादिमीमांसकसम्प्रदायागतैः[2] न्यायैः अवधारयितुं शक्यत एव । कथमन्यथा साङ्ख्यस्मृतिप्रणेत्राऽपि वेदार्थोऽवगतः । गहना अपि न्याया [3]अविच्छिन्नसम्प्रदायतया आचार्यादप्यवगन्तुं शक्या एव । कथमन्यथा साङ्ख्यप्रणीतस्मृत्यर्थावगतिः । न्यायाश्च श्रुतिस्वारस्यानुरोधिनो भवन्ति, न साङ्ख्यस्मृतिः । अतः कथं साङ्ख्यस्मृत्यनुसारी वेदार्थो भवेत्—इत्याशङ्क्योक्तं—परतन्त्रप्रज्ञास्त्विति । तथा च मन्दमतिसमाधानाय उपबृंहणानुसारेण वेदार्थे वक्तव्ये किं साङ्ख्यस्मृत्यनुसारेण वेदार्थो ग्राह्यः उत मन्वादिस्मृत्यनुसारेणेति विचारोऽत्र क्रियते । अत एव भाष्ये प्राक् मन्वादिस्मृतीनामेव[4]सावकाशत्वं प्रतिपादितम् । सूत्रकृता

---

1. आ. भवेदयमाक्षेप इति
2. आ. संप्रदायावगतैः
3. मु. अविच्छिन्नसम्प्रदायाचार्यादवगन्तुं
4. एवेन न्यायव्यवच्छेदः ।

बिभर्ति जायमानं च पश्येत् ' (श्वे. उ. ५।२) इति । तस्मात् न एषां मतं अयथार्थं शक्यं संभावयितुम् । तर्कावष्टम्भेन च एते अर्थं प्रतिष्ठापयन्ति । तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः ।

तस्य समाधिः—नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति । यदि स्मृत्यनवकाशदोषप्रसङ्गेन ईश्वरकारणवाद आक्षिप्येत, एवं अन्या ईश्वरकारणवादिन्यः स्मृतयः अनवकाशाः प्रसज्येरन् ।

ता उदाहरिष्यामः—' यत्तत् सूक्ष्ममविज्ञेयम् ' [शान्तिप. ३३६-२८] इति परं ब्रह्म प्रकृत्य,

' स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ' । इति च उक्त्वा

' तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।' (शान्तिप. ३३६-३०) इत्याह । तथा अन्यत्रापि

' अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते ' । [शान्तिप. ३४१-३१] इत्याह ।

' अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः ।
स सर्गकाले च करोति (सर्गं)[सर्वं]संहारकाले च तदत्ति भूयः ' ॥
(शान्तिप. ३०३-११५)

---

सिद्धान्ते स्मृत्यन्तरानवकाश एवोद्भावितः । ऋषिं प्रसूतमिति । यः तं-प्रसिद्धं ज्ञानैर्बिभर्ति-पूरयति जायमानं च पश्येत् अनुग्रहदृष्ट्या, अनुग्रहेण ज्ञानिनं करोतीत्यर्थः । यः-परमेश्वरः । यत्पदस्य ' एकैकं जालं बहुधा विकुर्वन् अस्मिन् क्षेत्रे संहरत्येष देवः ' [श्वे. उ. ५-३] इति उत्तरमन्त्रे एतत्पदेन प्रतिनिर्देशो द्रष्टव्यः ।

एवमन्या[1] इति । अत्र बहुवचनेन—मन्वादिस्मृतीनां भूयसीनां बाधो भवेत् साङ्ख्यस्मृत्यनुसारेणोपबृंहणे क्रियमाणे, तथा च भूयोऽनुग्रहन्यायात् मन्वादिस्मृतीनामेवादरः कर्तव्यः इति—सूचितम् । तस्मादव्यक्तमुत्पन्नमिति । अव्यक्तस्यानादित्वेऽपि वियदादिकार्याकारेण तदुत्पत्तिर्द्रष्टव्या । [2]निष्कले-परमात्मनि ।

---

1. ' एवमप्यन्या ' इति आनन्दगिरीयसम्मतः भाष्यपाठः
2. ' निष्क्रिये ' ' निर्गुणे ' इति च पाठान्तरे

इति पुराणे। भगवद्गीतासु च—

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' (भ. गी. ७।६) इति। परमात्मानमेव च प्रकृत्य आपस्तम्बः पठति—'तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः।' (ध. सू. १।८।२३।२) इति।

एवं अनेकशः स्मृतिष्वपि ईश्वरः कारणत्वेन उपादानत्वेन च प्रकाश्यते। स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैव उत्तरं वक्ष्यामि इत्यतः अयं अन्यस्मृत्यनवकाशदोषोपन्यासः। दर्शितं तु श्रुतीनां ईश्वर-कारणवादं प्रति तात्पर्यम्।

विप्रतिपत्तौ च स्मृतीनां अवश्यकर्तव्ये अन्यतरपरिग्रहे अन्यतरपरि-त्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणं अनपेक्ष्या इतराः तदुक्तं प्रमाणलक्षणे—'विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्' (जै. सू.) १।३।३) इति।

---

संप्रलीयत इति। स्थौल्यावस्थापरित्यागेनेति शेषः। प्रभवत्यस्मादिति प्रभवः, प्रलीयतेऽस्मिन्निति प्रलयः। सः—परमात्मा, मूलं-कारणं, शाश्वतिकः-अनादिः।

श्रुत्यनुसारिण्य इति। अनेन मन्वादिस्मृतीनां बहुत्ववत् श्रुत्यनुसारित्वं अन्यत् प्राबल्यकारणमुक्तम्। विरोधे त्वनपेक्षं स्यादिति। 'औदुम्बरीं स्पृष्ट्वो-द्गायेत्' इति श्रुत्या 'सर्वौदुम्बरी वेष्टयितव्या' इति स्मृतिर्विरुद्धा। सा किं प्रमाणमप्रमाणं वेति संशये—अष्टकादिस्मृतिवत् मूलभूतश्रुत्यनुमानसम्भवात् प्रमाणम्, न च वेष्टने सति स्पर्शासम्भवात् विरुद्धयोः श्रौतस्मार्तार्थयोः कथमनुष्ठानमिति वाच्यम्, व्रीहियववद्विकल्पसम्भवात्—इति पूर्वपक्षे—राद्धान्तः—स्मृतिवचनस्य श्रुतिविरोधे सति, प्रमाणतया[1] स्मृतिवचनं अनपेक्षं—अनपेक्षणीयम्। विरुद्धार्थक-श्रुतिवचनानुसन्धाने सति मूलभूतश्रुत्यनुमानप्रतिबन्धात्, असत्येव विरोधे मूलतया श्रुत्यनुमानात्—इति। ततश्च वेष्टनस्मृतिवत् श्रुतिविरुद्धा[2] कापिलस्मृतिरपि अप्रमाणम्।

---

1. प्रमाणतया अनपेक्षं इति सम्बन्धः। प्रमाणत्वेनोपादेयं न भवतीत्यर्थः।
2. आ. श्रुतिविरोधात्

न च अतीन्द्रियानर्थान् श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुम्, निमित्ताभावात्। शक्यं कपिलादीनां सिद्धानां अप्रतिहतज्ञानत्वात् इति चेत्, न—सिद्धेरपि सापेक्षत्वात्। धर्मानुष्ठानापेक्षा हि सिद्धिः। स च धर्मः चोदनालक्षणः। ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेन अतिशङ्कितुं शक्यते।

सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात् सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यत् निर्णयकारणमस्ति। परतन्त्रप्रज्ञस्यापि न अकस्मात् स्मृतिविशेषविषयः पक्षपातो युक्तः। कस्यचित् क्वचित् पक्षपाते सति पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसङ्गात्। तस्मात् तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसारानुसारविषयविवेचनेन च सन्मार्गे प्रज्ञा संग्र[illegible]णीया।

या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता, न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं, कपिलमिति श्रुतिसामान्यमात्रत्वात्। अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुः वासुदेवनाम्नः स्मरणात्। अन्यार्थदर्शनस्य च प्राप्तिरहितस्य असाधकत्वात्।

भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः—'यद्वै किंच मनुरवदत् तद्भेषजम्' (तै. सं. २।२।१०।२) इति। मनुना च,

---

वासुदेवनाम्नः स्मरणादिति। न च तावतापि कपिलशब्दार्थसन्देह एव भवेदिति वाच्यम्। ऋषिंप्रसूतमिति वचनं श्वेताश्वतरगतम्। तच्च अद्वितीयब्रह्मप्रतिपादनस्वरसमिति चमसाधिकरणे दर्शितम्। तथा च तेन अद्वैतानुयायी वासुदेवांशः कपिल एव प्रतिपाद्यत इति निर्धारयितुं शक्यम्।

यद्वैकिञ्चमनुरवदत्तद्भेषजमिति। नन्वत्र मनुशब्दो न स्मृतिप्रणेतृमनुपरः, अपि तु समष्टिमनोऽभिमानिहिरण्यगर्भपरः। 'मानवी ऋचौ धाय्ये कुर्यात्' इति विधेर्य्ययमर्थवादः। तद्विधेययोश्चर्चोः 'देवानां य इन्मनो यजमान यियक्षति' इति श्रवणात् देवमनोऽभिमानिहिरण्यगर्भप्रकाशकता अवगम्यते। तथा च विधिगतस्य

मानवी इतिपदस्य मनुप्रकाशिके इत्यर्थपरत्वात् मनुपदस्य स्मृतिप्रणेतृमनुपरत्वे तद-सम्भवात् विधिगतस्य मनुपदस्य हिरण्यगर्भपरत्वे सति तदैकार्थ्याय 'यद्वै किञ्च मनुरवदत्' इत्यर्थवादगतस्यापि तस्य हिरण्यगर्भपरत्वमेव स्वीकर्तव्यमिति चेत्,

[1]उच्यते—अस्त्वृचो हिरण्यगर्भप्रकाशकता, तथाऽपि विधिगतस्य तद्धित-प्रत्ययस्य न प्रकाश्यप्रकाशकभावसम्बन्धपरत्वम् । अपि तु यद्वैकिञ्चमनुरवद-दितिवाक्यशेषानुसारेण 'मनुना दृष्टे मानवी' इत्यर्थ एवाश्रयणीयः । तथा च हिरण्यगर्भप्रकाशकयोरपि मनुसूक्तान्तर्गतया मनुना दृष्टत्वसम्भवात् न क्लेशेन मनुशब्दो हिरण्यगर्भपरतया व्याख्येयः ।

नन्वेवमपि कथमेतत् मनूक्तीनां प्रामाण्यप्रतिपादनपरं भवेत् । भेषजत्वमात्र-श्रवणात् । न च भेषजपदमेव लक्षणया प्रामाण्यपरमिति वाच्यम् । सन्दर्भ-विरोधेन लक्षणाश्रयणस्यानुचितत्वात् । 'यो ब्रह्मवर्चसकामस्स्यात् तस्मा एतं सोमारौद्रं चरुं निर्वपेत्' इति ब्रह्मवर्चसकामस्येष्टिं विधाय, तत्र 'आज्यं प्रोक्षणं' इत्यादी-न्यङ्गानि ब्रह्मवर्चसफलार्थवादयुक्ततया विधाय, 'अतिब्रह्मवर्चसं क्रियत इत्याहुः ईश्वरो दुश्चर्मा भवितोः' इति वाक्येन पुनरपि 'ब्रह्मवर्चसाधिक्यात् यजमानः [2]श्वित्रीभवितुं प्रभवति' इति फलमेव निन्दित्वा, 'मानवी ऋचौ धाय्ये कुर्यात्' इत्याम्नाय, तथात्वे दोषनिर्घातो भवेदिति अनेनार्थवादेन प्रतिपाद्यते 'यद्वै किञ्च मनुरवदत्तद्भेषजं' इति । अत्र दुश्चर्मत्वरोगकीर्तनानुसारेण भेषजपदं यथाश्रुतमेवा-पेक्षितमिति चेत्—

न—इदं हि यथाश्रुतार्थत्वे अत्यन्तबाधितार्थकं भवेत् । न ह्याज्यादिषु प्रोक्षणत्वेन स्वीकृतेषु यजमानस्य श्वित्रित्वं मनूक्तीनां च रोगनिवर्तकत्वं इत्यर्थः सङ्गच्छते । अतः कृत्स्नोऽप्ययमर्थवादः मानवीऋचौधाय्येकुर्यादितिविधेयस्तुत्यर्थः । तत्र च यद्वैकिञ्चमनुरितिवचनस्य आलम्बनीभूतेऽर्थे अत्यन्तासदर्थकता माभूदिति

---

1. उक्ताक्षेपं अभ्युपेत्य, 'वचनान्तरं समानार्थकं तन्त्रवार्तिकोदाहृतं उदाहरणमस्तु, भाष्योक्तं उदाहरणं अनादरेण' इत्युक्तं परिमले । अत्र तु भाष्योदाहरणमेव समर्थ्यते—उच्यतइत्यादिना ।

2. मु. श्वित्री भवेदिति

'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥' (१२।९१)

इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते। कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात्। महाभारतेऽपि च

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु।' [शान्तिप. ३५२-१]

इति विचार्य,

'बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्।' [शान्तिप. ३५२-२]

इति परपक्षमुपन्यस्य, तद्व्युदासेन,

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥'
(शान्तिप. ३५२-३)

इत्युपक्रम्य,

'ममान्तरात्मा तव च ये चान्ये [देहिसंज्ञिताः] (देहसंस्थिताः)।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥'
[शान्तिप. ३५३-४]

---

मनूक्तीनां धर्मब्रह्मावबोधकतया यद्धितसाधनत्वं प्रसिद्धं तदालम्बनीकृत्य अत्र भेषजत्वं कल्पितमिति स्वीकर्तव्यम्। अतो भवत्येतत् मनूक्तीनां [1]प्रामाण्ये मूलमिति भावः।

सर्वभूतेषु चात्मानं जीवरूपेण अन्तर्यामिरूपेण च। सर्वभूतानि चात्मनि आरोपितानि। पुरुषाणां—शरीराणां यथा एका योनिः पृथिवी भवति—सैव तेषां पारमार्थिकं स्वरूपं, तदात्मना च सर्वेषां शरीराणामेकत्वं यथा, एवं सर्वेषां भोक्तृरूपाणां जीवानां पारमार्थिकस्वरूपभूतं एकं साक्षिणं आख्यास्यामि। मम तव च शिरःपाण्यादिमतः अन्तरात्मा—भोक्ता अन्ये च ये देहिनः भोक्तारः, तेषां

---

1. **प्रामाण्ये मूलं**—प्रामाण्यज्ञापकम्, न तु भेषजपदं प्रामाण्यलक्षकं इति भावः।

विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्' ॥ [शान्तिप. ३५३-५]

इति सर्वात्मतैव निर्धारिता । श्रुतिश्च सर्वात्मतायां भवति-

'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ॥ (ई. उ. ७)

इत्येवंविधा । अतश्च सिद्धं—आत्मभेदकल्पनयाऽपि कापिलस्य तन्त्रस्य वेदविरुद्धत्वं वेदानुसारिमनुवचनविरुद्धत्वं च, न केवलं स्वतन्त्रप्रकृतिकल्पनयैव—इति । वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये, पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितं चेति विप्रकर्षः । तस्मात् वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोषः ॥

कुतश्च स्मृत्यनवकाशप्रसङ्गो न दोषः :—

## इतरेषां चानुपलब्धेः ॥ २ ॥

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके च उपलभ्यन्ते । भूतेन्द्रियाणि तावत् लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम् । अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्पते । यदपि क्वचित् तत्परमिव श्रवणमवभासते तदप्यतत्परं व्याख्यातं 'आनुमानिकमप्येकेषाम्' [ब्र. सू. १।४।१] इत्यत्र । कार्यस्मृतेरप्रामाण्यात् कारणस्मृतेरप्यप्रामाण्यं युक्तं

---

सर्वेषामपि साक्षिस्वरूपः शुद्धचैतन्यविग्रहः पारमार्थिकजीवः, । [1]एवमर्थपरत्वं च, साङ्ख्यपक्षे जीवबहुत्वमुपक्षिप्य सिद्धान्ते जीवैकत्वस्यैव वक्तव्यतयोपक्रमात् ॥ १ ॥

षष्ठस्येवेन्द्रियार्थस्येति । इन्द्रियाणां हि शब्दादयः पञ्च विषयाः प्रसिद्धाः । षष्ठस्त्वसन् । एवं साङ्ख्यकल्पितानि महदादीन्यपि लौकिकवैदिकप्रमाणविधुरत्वात् न सन्त्येवेत्यर्थः ॥ २ ॥

इति स्मृत्यधिकरणम् १

---

1. एवमर्थपरत्वं चेति 'ममान्तरात्मा तव च' इति पद्यस्येत्यादिः ।

इत्यभिप्रायः । तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः । तर्कावष्टम्भं तु 'न विलक्षणत्वात्' (ब्र. सू. २।१।४) इत्यारभ्य उन्मथिष्यति ॥

२ योगप्रत्युक्त्यधिकरणम्

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

एतेन-सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता द्रष्टव्या इत्यतिदिशति । तत्रापि, श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं महदादीनि च कार्याणि अलोकवेदप्रसिद्धानि कल्प्यन्ते ।

ननु एवं सति समानन्यायत्वात् पूर्वेणैव एतद्गतं, किमर्थं पुनरतिदिश्यते ?

अस्ति ह्यत्र अभ्यधिकाशङ्का—सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. २।४।५) इति । 'त्रिरुन्नतं स्थाप्य समं शरीरम्' (श्वे. उ. २।८) इत्यादिना च आसनादिकल्पनापुरःसरं बहुप्रपञ्चं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते । लिङ्गानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' (क. उ. २।६।११) इति, 'विद्यामेतां योग-

---

श्रोतव्यो मन्तव्य इति । योगः—चित्तवृत्तिनिरोधः, [1]श्रवणादीनां तदुपयोगितया योगत्वम् । त्रिरुन्नतमिति । स्वार्थे सुच् [2]छान्दसः । त्रीणि शरीरमध्यग्रीवाशिरांसि उन्नतानि यस्मिन् शरीरे तत् तथा । तां योगमिति मन्यन्ते इति । अत्र तत्पदेन 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्' [क. उ. ६-१०] इति पूर्वमन्त्रार्थः परामृश्यते । विद्यामेतामिति । 'मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः' [क. उ. ६-१८] इतिवाक्यैकदेशोऽयम् ।

---

1. निदिध्यासनमात्रस्य योगत्वेऽपि भाष्यमुपपद्यते, तथाऽपि सम्भवादाह—**श्रवणादीनामपीति** श्रवणमननयोरपि तु योगत्वं श्रीविद्यारण्यस्वामिभिरुक्तं आत्मानन्दप्रकरणे ।

2. **छान्दस इति** अन्यथा त्र्युन्नतमिति स्यात् ।

विधिं च कृत्स्नम्' (क. उ. २।६।१८) इति चैवमादीनि। योगशास्त्रेऽपि 'अथ तत्त्वदर्शनाभ्युपायो योगः' इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते। अतः संप्रतिपन्नार्थैकदेशत्वात् अष्टकादिस्मृतिवत् योगस्मृतिरप्यनपवदनीया भविष्यति—इति।

इयमभ्यधिका शङ्का अतिदेशेन निवर्त्यते। अर्थैकदेशसंप्रतिपत्तावपि अर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात्।

सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव निराकरणे यत्नः कृतः। सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ, शिष्टैश्च परिगृहीतौ, लिङ्गेन च श्रौतेन उपबृंहितौ 'तत् कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे. उ. ६।१३) इति। निराकरणं तु—न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति। श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ३।८) इति। द्वैतिनो हि ते सांख्या योगाश्च न आत्मैकत्वदर्शिनः।

---

अतःसम्प्रतिपन्नार्थेति। योगशास्त्रस्य योगस्वरूपतत्साधनादिनिरूपणांशे प्रत्यक्षश्रुतिमूलतया प्रामाण्यस्यावश्यवक्तव्यतया, 'प्रधानमेवोपादानम्, ईश्वरो निमित्तं' इत्यंशेऽपि श्रुतिमूलकतया प्रामाण्यं कल्पनीयम्। एकदेशाप्रामाण्ये कृत्स्नाया अपि अप्रामाण्यापत्तेः। न चेष्टापत्तिः। योगशास्त्रस्य शिष्टपरिगृहीतस्य अप्रामाण्यकल्पनाया अनुचितत्वात्—इति पूर्वपक्ष्याशयः।

अर्थैकदेशसम्प्रतिपत्तावपीति। प्रधानाद्यंशे प्रत्यक्षश्रुतिविरोधेन तदंशे योगशास्त्रस्य तात्पर्यकल्पने अंशान्तरे प्राप्तस्य प्रामाण्यस्य रक्षितुमशक्यतया तदंशे यथाश्रुतार्थे तात्पर्यमेव नास्तीति कल्प्यते। तात्पर्याभावेऽपि तत्प्रतिपादनं तु, परमात्मनोऽतिसूक्ष्मतया तस्मिन् सहसा चित्तस्य योजयितुमशक्यत्वात् प्रथमतस्तदुपयोगितया स्थूलविषयं योगं वक्तुम्। [1]तत्र पूर्वपक्षप्रसिद्धान्येव प्रधानादीनि

---

1. मु. तत्तत्पूर्वपक्ष

यत्तु दर्शनमुक्तं 'तत् कारणं सांख्ययोगाभिपन्नम्' इति, वैदिकमेव तत्र ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्येते प्रत्यासत्तेः इत्यवगन्तव्यम्। येन त्वंशेन न विरुध्येते तेन इष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम्। तद्यथा—'असङ्गो ह्ययं पुरुषः' (बृ. उ. ४।३।१६) इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरभ्युपगम्यते। तथा योगैरपि 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' (जा. उ. ४) इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते। एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि। तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेत् उपकुर्वन्तु नाम। तत्त्वज्ञानं तु वेदान्तवाक्येभ्य एव भवति, 'नावेदविन्मनुते तं बृहन्तम्' (तै. ब्रा.

---

आलम्बनतया अनूदितानि। तत्कारणमिति। 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' [श्वे. उ. ६-१३] इति पूर्वमन्त्रे परमात्मा प्रस्तुतः[1]तत्पदार्थः। वैदिकमेव तत्र ज्ञानं ध्यानं चेति। श्रवणमननिदिध्यासनसमुदायः साङ्ख्यपदार्थः, माण्डूक्यतापनीयाद्युक्तरीत्या [2]केवलमेवोपासनं योगशब्दार्थः, ताभ्यामभिपन्नं-विषयीकृतम्। साङ्ख्ययोगपदयोः [3]सामान्यश्रुतिरूपतया पूर्वाधिकरणोक्तरीत्या [4]कपिलश्रुतिवदेव श्रुत्यनुसारेण व्याख्यानोपपत्तेरिति भावः। सर्वाणि तर्कस्मरणानीति। अक्षपादादिप्रणीतसूत्राणि। तेषामपि यदि प्रमाणादिनिरूपणद्वारा वेदार्थोपकारकतया प्रामाण्यं संरक्षणीयं तदा परमाण्वादिषु तात्पर्यं नास्तीत्येव कल्पनीयमित्याह—तान्यपीति ॥ ३ ॥

**इति योगप्रत्युक्त्यधिकरणम्**

---

1. तत्पदार्थ इति पूर्वार्धे प्रस्तुताः कामाः तत्पदार्थः, तत्कारणमिति समस्तं पदं—इति कल्पतरुः।

2. केवलमेव—श्रवणमननानपेक्षम्। उपासनस्यास्य स्वरूपनिमित्तफलैः उपव्याख्यानं ध्यानदीपे स्पष्टम्।

3. सामान्यश्रुतिः सामान्यशब्दः।

4. कपिलश्रुतिः—कपिलशब्दः।

३।१२।९।७), 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ. उ. ३।९।२६) इत्येवमादिश्रुतिभ्यः ॥ ३ ॥

३. नविलक्षणत्वाधिकरणम्

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

ब्रह्म अस्य जगतो निमित्तकारणं प्रकृतिश्च—इत्यस्य पक्षस्य आक्षेपः स्मृतिनिमित्तः परिहृतः। तर्कनिमित्त इदानीं आक्षेपः परिह्रियते।

कुतः पुनः अस्मिन्नवधारिते आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः ? ननु धर्म इव ब्रह्मण्यपि अनपेक्ष आगमो भवितुमर्हति।

भवेदयमवष्टम्भः, यदि प्रमाणान्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यात् अनुष्ठेयरूप इव धर्मः। परिनिष्पन्नरूपं तु ब्रह्म अवगम्यते। परिनिष्पन्ने च वस्तुनि प्रमाणान्तरावकाशोऽस्ति, । यथा पृथिव्यादिषु ।

---

इदानीमिति। एतत्सूत्रमारभ्य आपादपरिसमाप्तेः [1]इति शेषः। पूर्वाध्याये यत् ब्रह्मणो जगदुपादानत्वमुक्तं तत् 'वियदादिकं न ब्रह्मप्रकृतिकं ब्रह्मविलक्षणत्वात्' इति तर्केण बाधितं न वेति सन्देहः। पूर्वत्र स्मृतीनां प्रधानाद्यंशे मूलाभावेनाप्रमाणभूतानां दुर्बलतया वेदान्तार्थाबाधकत्वमुक्तम्, अत्र तु अनुमानस्य व्याप्तिपक्षधर्मतादिसत्त्वेन समूलत्वात् बाधकता भविष्यतीति प्रत्यवस्थीयते—इति सङ्गतिः। [2]अत्र विशेषव्याप्तिविवक्षायां अविद्या दृष्टान्तः। 'यत् यद्विलक्षणं तत् न तत्प्रकृतिकं' इति सामान्यव्याप्तौ, यथा हिरण्यविलक्षणो घटः न हिरण्यप्रकृतिकः इत्यादिर्दृष्टान्तः[3]। नन्विति। यत इत्यर्थः।

परिनिष्पन्ने च वस्तुनि प्रमाणान्तरावकाशोऽस्तीति। ननु—परिनिष्पन्नत्वं प्रमाणान्तरयोग्यत्वे अप्रयोजकम्। अन्यथा, कार्यत्वमेव पाकादि-

---

1. आ. 'इति शेषः' नास्ति

2. अत्र—'वियदादिकं न ब्रह्मप्रकृतिकं ब्रह्मविलक्षणत्वात्' इत्यनुमाने। अविद्याया अनादित्वात् दृष्टान्ते न साध्यवैकल्यम्।

3. दृष्टान्तः—उदाहरणाख्यावयवैकदेशः।

यथा च श्रुतीनां परस्परविरोधे सति एकवशेन इतरा नीयन्ते एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयेत । दृष्टसाम्येन च अदृष्टमर्थं समर्थयन्ती युक्तिः अनुभवस्य संनिकृष्यते । विप्रकृष्यते तु श्रुतिः ऐतिह्यमात्रेण स्वार्थाभिधानात् । अनुभवावसानं च ब्रह्मविज्ञानं अविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतया इष्यते । श्रुतिरपि 'श्रोतव्यो मन्तव्यः' इति श्रवणव्यतिरेकेण मननं विदधती तर्कमप्यत्र आदर्तव्यं दर्शयति । अतः तर्कनिमित्तः पुनराक्षेपः क्रियते 'न विलक्षणत्वादस्य' इति ।

यदुक्तं चेतनं ब्रह्म जगतः कारणं प्रकृतिरिति, तन्नोपपद्यते । कस्मात् ? विलक्षणत्वात् अस्य-विकारस्य प्रकृत्याः । इदं हि ब्रह्मकार्यत्वेनाभिप्रेयमाणं जगत् ब्रह्मविलक्षणमचेतनमशुद्धं च दृश्यते । ब्रह्म च जगद्विलक्षणं चेतनं शुद्धं च श्रूयते । न च विलक्षणत्वे प्रकृतिविकारभावो दृष्टः । न हि रुचकादयो विकारा मृत्प्रकृतिका भवन्ति शरावादयो वा सुवर्णप्रकृतिकाः । मृदैव तु मृदन्विता विकाराः क्रियन्ते सुवर्णेन च सुवर्णान्विताः। तथा इदमपि जगत् अचेतनं सुखदुःखमोहान्वितं सत् अचेत-

---

दृष्टान्तेन प्रमाणान्तरयोग्यताप्रयोजकं किं न स्यादिति शङ्कासम्भवात् । तस्मात् वेदानुपजीविभिः प्रमाणान्तरैः धर्मविषयकज्ञानाजननात् फलबलकल्प्या योग्यता फलाभावादेव नास्तीति निर्णीयत इति वक्तव्यम् । तत् तुल्यं सत्यज्ञानानन्दात्मके प्रत्यगभिन्ने ब्रह्मणि । तथा च प्रमाणान्तरेण ब्रह्मण एवानवगमात् तत् उपादानं न भवतीति कथं शङ्क्यते—इति चेत्–

उच्यते—सत्याद्यात्मकं ब्रह्मेति श्रुतितो निर्धार्य, सालक्षण्य एवोपादानोपादेयभावस्य दृष्टत्वेन तावन्मात्रं न सम्भवतीत्याक्षेपोपपत्तेः । न च धर्मिग्राहकमानबाधः । धर्मिग्राहकसत्यादिवाक्यार्थाङ्गीकारेण तद्विरोधस्यैवाभावात् ।

**एकवशेनेति** । प्रबलैकवशेनेत्यर्थः । युक्तेः प्राबल्ये प्रधानभूतसाक्षात्कारसन्निकर्षमाह—**दृष्टसाम्येन चेति** । दृष्टः—सपक्षः, तत्साम्येन-साध्यवत्तया अदृष्टं-पक्षं समर्थयन्ती–अनुमापयन्ती अनुभवस्य सन्निकृष्यते–दृष्टसाधर्म्यादेव अयमपि कदाचित् द्रष्टुं योग्य इति सम्भावनाद्वारा अनुभवसन्निकृष्टेत्यर्थः ।

**सुखदुःखमोहान्वितमिति** । शीतोष्णादिर्विषयः कदाचित् सुखाय,

नस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति, न विलक्षणस्य ब्रह्मणः। ब्रह्मविलक्षणत्वं चास्य जगतः अशुद्ध्यचेतनत्वदर्शनादवगन्तव्यम्। अशुद्धं हीदं जगत्, सुखदुःखमोहात्मकतया प्रीतिपरितापविषादादिहेतुत्वात् स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च। अचेतनं चेदं जगत्, चेतनं प्रति कार्यकारणभावेनोपकरणभावोपगमात्। न हि साम्ये सति उपकार्योपकारकभावो भवति। न हि प्रदीपौ परस्परस्योपकुरुतः। ननु चेतनमपि कार्यकरणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति। न—स्वामिभृत्ययोरपि अचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात्। यो ह्येकस्य चेतनस्य परिग्रहो बुद्ध्यादिरचेतनभागः स एव अन्यस्य चेतनस्य उपकरोति, न तु स्वयमेव चेतनः चेतनान्तरस्य उपकरोत्यपकरोति वा। निरतिशया ह्यकर्तारश्चेतना इति सांख्या मन्यन्ते। तस्मात् अचेतनं कार्यकरणम्। न च काष्ठलोष्टादीनां चेतनत्वे किंचित्प्रमाणमस्ति। प्रसिद्धश्चायं चेतनाचेतनविभागो लोके। तस्मात् ब्रह्मविलक्षणत्वात् नेदं जगत् तत्प्रकृतिकम्।

---

कदाचिद् दुःखाय कदाचित् मूर्छादिसम्पादनद्वारा मोहायेति लोकसिद्धम्[1]। तेषां च सुखादिजनकत्वं स्वयं सुखाद्यात्मकत्व एव भवति। सुखदुःखमोहाश्च सत्त्वरजस्तमःपरिणामा एव। 'सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च। प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥' [भ. गी. १४-१७] इतिस्मृतेः। [2]ज्ञानं सुखस्याप्युपलक्षणम्, लोभो दुःखस्याप्युपलक्षणम्। तथा च त्रिगुणात्मकप्रधानसालक्षण्यात् प्रधानप्रकृतिकमेव वियदादिकमिति पूर्वपक्षिणोऽभिप्रायः। ननु जगतश्चेतनत्वेऽपि पुरुषोपकारकताऽस्तु इत्याशङ्क्य, किं प्रकाशसम्पादनेनोपकारकता उत स्वामिभृत्यन्यायेन? नाद्य इत्याह—न हि साम्य इति। द्वितीयं शङ्कते—नन्विति। नेति। कार्यकरणादेः चेतनत्वे पुरुषवदेवोदासीनत्वापत्त्या उपकारकता न स्यादिति तात्पर्यम्।

---

1. मु. 'लोकसिद्धं' नास्ति
2. मु. 'ज्ञानं सुखस्याप्युपलक्षणं' नास्ति

योऽपि कश्चिदाचक्षीत–श्रुत्या, जगतश्चेतनप्रकृतिकतां तद्बलेनैव समस्तं जगत् चेतनमवगमयिष्यामि, प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् । अविभावनं तु चैतन्यस्य परिणामविशेषाद्भविष्यति । यथा स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्च्छाद्यवस्थासु चैतन्यं न विभाव्यते, एवं काष्ठलोष्टादीनामपि चैतन्यं न विभावयिष्यते । एतस्मादेव च विभाविताविभावितत्वकृताद्विशेषात् रूपादिभावाभावाभ्यां च कार्यकरणानामात्मनां च चेतनत्वाविशेषेऽपि गुणप्रधानभावो न विरोत्स्यते । यथा च पार्थिवत्वाविशेषेऽपि मांससूपौदनादीनां प्रत्यात्मवर्तिनो विशेषात् परस्परोपकारित्वं भवति एवमिहापि भविष्यति । प्रविभागप्रसिद्धिरपि अत एव न विरोत्स्यते–इति ।

तेनापि कथंचिच्चेतनाचेतनत्वलक्षणं विलक्षणत्वं परिह्रियेत, शुद्ध्यशुद्धिलक्षणं तु विलक्षणत्वं नैव परिह्रियते ।

न च इतरदपि विलक्षणत्वं परिहर्तुं शक्यत इत्याह—तथात्वं च शब्दादिति । अनवगम्यमानमेव हि इदं लोके समस्तस्य वस्तुनः चेतनत्वं

---

श्रुतचेतनोपादानत्वोपपत्तये [1]जगतोऽपि चेतनत्वं कल्प्यत इति, 'तथात्वं च शब्दात्' इति सौत्रांशमवतारयितुं शङ्कते—योऽपि कश्चिदिति । प्रविभागप्रसिद्धिरपीति । यथा घटादेरङ्कुरादेश्च कृतत्वाविशेषेऽपि कृतत्वाकृतत्वविभागः कृतत्वस्य विभावितत्वाविभावितत्वाभ्यां, एवं चेतनाचेतनविभागोऽपि भविष्यतीत्यर्थः । तथात्वं च शब्दादितीति । प्रत्यक्षश्रुत्या जगतोऽचेतनत्वे प्रतिपादिते

---

1. जगतोऽपि चेतनत्वमिति एकदेशिनोऽयं सर्वचेतनतापक्षः महाभाष्येऽपि उपवर्णितः 'कूलं पिपतिषति' इत्यादिप्रयोगसाधुत्वविमर्शनावसरे—'सर्वस्य वा चेतनावत्त्वात्'—अथ वा सर्वं चेतनावत्, एवं ह्याह—कंसकाः सर्पन्ति, शिरीषोऽधःस्वपिति, सुवर्चला आदित्यं अनुपर्येति, आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति, अयस्कान्तं अयः संक्रामति, ऋषिः पठति 'शृणोत ग्रावाणः' इति—इति । अत्र कैयटः- सर्वस्य वेति । आत्माद्वैतदर्शनेनेति भावः । ऋषिरिति । सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः । वैचित्र्येण च पदार्थानां उपलम्भात् सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीयः—इति ।

चेतनप्रकृतिकत्वश्रवणात् शब्दशरणतया केवलया उत्प्रेक्षेत, तच्च शब्देनैव विरुध्यते। यतः शब्दादपि तथात्वमवगम्यते। तथात्वमिति प्रकृतिविलक्षणत्वं कथयति। शब्द एव 'विज्ञानं चाविज्ञानं च' (तै. उ. २. ६) इति कस्यचिद्विभागस्याचेतनतां श्रावयन् चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगत् श्रावयति ॥ ४ ॥

ननु चेतनत्वमपि क्वचित् अचेतनत्वाभिमतानां भूतेन्द्रियाणां श्रूयते। यथा 'मृदब्रवीत्', 'आपोऽब्रुवन्' (श. प. ब्रा. ६।१।३ २।४) इति, 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' (छा. उ. ६।२।३,४) इति चैवमाद्या भूतविषया चेतनत्वश्रुतिः, इन्द्रियविषयापि 'ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः' (बृ. उ. ६।१।७) इति, 'ते ह वाचमूचुः त्वं न उद्गायेति' (बृ. उ. १।३।२) इत्येवमाद्या इन्द्रियविषया इति, अत उत्तरं पठति—

---

न श्रुतार्थापत्त्या चेतनत्वं कल्पयितुमुचितम्। श्रुतार्थापत्तिमपेक्ष्य श्रुतेः प्रबलत्वात्। एवमपि यदि प्रत्यक्षेण जगतश्चेतनत्वं गृह्येत तदा प्रत्यक्षोपोद्बलिता श्रुतार्थापत्तिरपि श्रुत्या बाधितुमशक्या स्यात्, न च तदस्ति—इत्यभिप्रायेणोक्तं अनवगम्यमानमेवेति ॥ ४ ॥

न वयं श्रुतार्थापत्त्यैव केवलं जगतश्चेतनतां कल्पयामः, अपि तु प्रत्यक्षा श्रुतिरपि जगतश्चेतनतायामस्ति—इति—उत्तरसूत्रमवतारयितुं शङ्कते—नन्विति। ननु 'मृदब्रवीत्' इत्यादावपि न साक्षाच्चेतनत्वं श्रुतम्, अपि तु वक्तृत्वादिकं तल्लिङ्गमेव—इत्याशङ्क्याह—ता आप ऐक्षन्तेति। न चात्र तेजआदिपदानि तत्तदभिमानिदेवतापराणीति वाच्यम्। महाभूतसृष्टिसमये देवतानां क्षेत्रज्ञरूपाणां शरीराभावेन ईक्षणानुपपत्तेः तत्तेजऐक्षतेत्यादौ महाभूतसृष्टिकथनपरे न देवताविवक्षेति भावः।

ते हेमे प्राणाः—इन्द्रियाणि अहंश्रेयसे—'अस्मासु कःश्रेष्ठः' इति स्वस्वश्रैष्ठ्याय विवदमानाः ब्रह्म—चतुर्मुखं निर्णयाय जग्मुः। ते-प्राणाः वाचं-वागिन्द्रियं असुरविजयायास्माकमुद्गात्रीभव इत्यूचुः।

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्द आशङ्कामपनुदति । न खलु 'मृदब्रवीत्' इत्येवञ्जातीयकया श्रुत्या भूतेन्द्रियाणां चेतनत्वमाशङ्कनीयम् । यतः अभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते, न भूतेन्द्रियमात्रम् । कस्मात् ? विशेषानुगतिभ्याम् । विशेषो हि भोक्तॄणां भूतेन्द्रियाणां च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः । सर्वचेतनतायां च असौ नोपपद्येत । अपि च कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तये अधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इति, 'ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' (२।१४) इति च । अनुगताश्च सर्वत्र अभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. आ. २।४ २।४) इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतां अनुगतां दर्शयति । प्राणसंवादवाक्यशेषे च 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः' (छा. उ. ५.२।७) इति श्रेष्ठत्वनिर्धारणाय प्रजापतिगमनं, तद्वच-

---

तुशब्द इति । [1]पूर्वपक्षिणं प्रति कृतामाशङ्कां अपवदन् पूर्वपक्षमेव द्रढयति, न तु उत्तरसूत्रगततुशब्दवत् पूर्वपक्षमपवदतीत्यर्थः । सौत्रं विशेषपदं विभागपरतया व्याख्याय, विशेषणपरतया पुनर्व्याचष्टे—अपि चेति । अनुगतिपदं व्याचष्टे—अनुगताश्चेति । वाग्भूत्वा-वागभिमानिनी भूत्वा । प्राणसंवादवाक्यशेषे चेति । श्रेष्ठ्यावधारणार्थं प्रजापतिसकाशं गतानां प्राणानां 'यस्मिन् उत्क्रान्ते शरीरं पतति स श्रेष्ठः' इति प्रजापतिनोक्तानां मध्ये चक्षुरादिनिर्गमनेऽपि अन्धत्वादिकमेव प्राप्तं न तु पातोऽभूच्छरीरस्य, मुख्यप्राणनिर्जिगमिषायां तु शरीरपातप्रसक्त्या तेषां निर्धारणमभूत् 'अयमस्मासु श्रेष्ठः' इति, ततस्तस्मै चक्षुरादिभिः

---

1. भाष्ये अस्मिन् सूत्रे 'तुशब्द आशङ्कामपनुदति' इति, समनन्तरसूत्रे 'तुशब्दः पक्षं व्यावर्तयति' इति च, वैलक्षण्येन तुशब्दो व्याख्यातः, तस्य भावमाह—**पूर्वपक्षिणं प्रतीत्यादिना** ।

नाच्च एकैकोत्क्रमणेन अन्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः, तस्मै बलिहरणम्, इति चैवंजातीयकः अस्मदादिष्विव व्यवहारोऽनुगम्यमानः अभिमानिव्यपदेशं द्रढयति। 'तत्तेज ऐक्षत' इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम्। तस्मात् विलक्षणमेवेदं ब्रह्मणो जगत्, विलक्षणत्वाच्च न ब्रह्मप्रकृतिकम्। ॥ ५ ॥

इत्याक्षिप्ते प्रतिविधत्ते—

## दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं-विलक्षणत्वात् नेदं जगत् ब्रह्मप्रकृतिकमिति । नायमेकान्तः । दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः, अचेतनत्वेन च प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् ।

ननु–अचेतनान्येव पुरुषादिशरीराणि अचेतनानां केशनखादीनां कारणानि, अचेतनान्येव च वृश्चिकादिशरीराणि अचेतनानां गोमयादीनां कार्याणीति । उच्यते—एवमपि किंचिद्चेतनं चेतनस्यायतनभावमुप-

---

स्वस्वासाधारणगुणाः बलित्वेन कल्पिताः—इत्युपाख्यायते प्राणसंवादे । परस्या एव देवताया इति । यदि ईक्षत्यधिकरणोक्तरीत्या शङ्कक ईक्षतिधातोर्गौणत्वं नानुमन्यते, तदा तेजआदिपदान्येव ब्रह्मलक्षकाणि भविष्यन्तीति तात्पर्यम् ।

ननु—चक्षुरादिपदेषु देवतालक्षणा तेजआदिपदेषु ब्रह्मलक्षणा च किमर्थमुपेयते, चक्षुरादीनामेव चेतनतामुपेत्य यथाश्रुतार्थ एव कुतो नोपेयते—इति चेत्,

उच्यते—चक्षुरादीनां चेतनत्वोपगमेऽपि प्रत्यक्षादिप्रमाणसिद्धाचेतनत्वोपपत्तये अनुद्भूतं तदुपेयम्, न चानुद्भूतचैतन्यानां वक्तृत्वादिव्यवहार ईक्षणादिकं चोपपद्यत इति अवश्यं लक्षणोपेयेति नैतानि वाक्यानि तेषां चेतनतायां प्रमाणभूतानि ॥ ५ ॥

विलक्षणत्वेऽप्युपादानोपादेयभावदर्शनेन विलक्षणत्वहेतोः सामान्यव्याप्तिपक्षे

गच्छति किंचिन्न इत्यस्त्येव वैलक्षण्यम् । महांश्चायं पारिणामिकः स्वभाव-विप्रकर्षः पुरुषादीनां केशनखादीनां च रूपादिभेदात् । तथा गोमयादीनां वृश्चिकादीनां च । अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत । अथोच्येत—अस्ति कश्चित् पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्व-नुवर्तमानो गोमयादीनां च वृश्चिकादिष्विति ; ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो दृश्यते ।

विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता, किमशे-षस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वमभिप्रेयते ? उत यस्य कस्य-चित् ? अथ चैतन्यस्य ? इति वक्तव्यम् । प्रथमे विकल्पे समस्तप्रकृति-विकारोच्छेदप्रसङ्गः । न ह्यसत्यतिशये प्रकृतिः विकारः इति भवति । द्वितीये च असिद्धत्वम् । दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्त-मानः इत्युक्तम् । तृतीये तु दृष्टान्ताभावः । किं हि, यच्चैतन्येनानन्वितं तद्ब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मवादिनं प्रत्युदाह्रियेत । समस्तस्य वस्तुजातस्य

---

व्यभिचारमाह—यदुक्तमित्यादिना । किञ्चिदचेतनं-वृश्चिकादिशरीरं, आयतनभावं-भोगायतनभावं, किञ्चिन्न गोमयादिकम् ।

पारिणामिक इति । गोमयपुरुषादीनां गन्धरूपादिकं अन्यदेव, केशनख-वृश्चिकादीनां चान्यत् । अतो न प्रकृतिविकारयोः सालक्षण्यम् । सत्तालक्षणः स्वभाव इति । ननु—द्रव्यविभाजकधर्मेण सालक्षण्यं विवक्षितम्, सत्तायाश्च न तथात्वं इति चेत्, न—पृथिवीजलादिषु 'द्रव्यं' 'द्रव्यं' इति प्रतीत्यभावेन पृथिवीत्वादीनां द्रव्यविभाजकताया एव असम्प्रतिपत्तेः । तथापरिभाषाभ्युपगमेऽपि द्रव्योपादेयतया गुणानामभ्युपगमात् नियमासिद्धेः । द्रव्यरूपकार्येष्वेव अयं नियम इत्यभ्युपगमेऽपि, जलोपादेये मुक्ताफले तृणाद्युपादेये वह्नौ च जलत्वपृथिवीत्वान-भ्युपगमेन उक्तनियमासिद्धेः । न च अप्रयोजकं नियमं उपेत्यापि लोकप्रतीतिविरुद्धं 'जलकाष्ठादिषु विद्यमानाः पृथिवीतेजोऽवयवा एव मुक्ताफलाग्न्योरुपादानभूताः' इति कल्पनमुचितम् ।

तृतीये तु दृष्टान्ताभाव इति । ननु 'वियदादिकार्यं न ब्रह्मप्रकृतिकं अचेतनत्वात्' इति पर्यवसिते तृतीयकल्पे अविद्यैव दृष्टान्तोऽस्तीति कथं दृष्टान्ता-

ब्रह्मप्रकृतिकत्वाभ्युपगमात् । आगमविरोधस्तु प्रसिद्ध एव। चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति आगमतात्पर्यस्य प्रसाधितत्वात् ।

यत्तूक्तं परिनिष्पन्नत्वात् ब्रह्मणि प्रमाणान्तराणि संभवेयुरिति, तदपि मनोरथमात्रम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः । लिङ्गाद्यभावाच्च नानुमानादीनाम् । आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत् । तथा च श्रुतिः—'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' (क. उ. १।२।९) इति, 'को अद्धा वेद क इह प्रवोचत्' 'इयं विसृष्टिर्यत आबभूव' (ऋ. सं. १।३०।६) इति चैते ऋचौ सिद्धानामपीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः। स्मृतिरपि भवति 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' । इति । 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।' (भ. गी. २।२५) इति च । 'न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥' (भ. गी. १०।२) इति चैवंजातीयका ।

यदपि–श्रवणव्यतिरेकेण मननं विदधत् शब्द एव तर्कमप्यादर्तव्यं दर्शयति–इत्युक्तम् । न अनेन मिषेण शुष्कतर्कस्यात्रात्मलाभः संभवति ।

---

भाव इति चेत्; अचेतनत्वमात्रे हेतौ घटेश्वरसंयोगे व्यभिचारः, द्रव्यत्वविशेषिते तु न अविद्या दृष्टान्तः, सिद्धान्ते ब्रह्मशक्तित्वेनाभिमताया अविद्याया अनादिधर्मतया आत्मत्वादिवदेव द्रव्यत्वानुपपत्तेः, पररीत्या तु नाविद्येति दृष्टान्तासिद्धिः । अनादित्वेन सोपाधिकश्च । मन्मते सादेः सर्वस्य ब्रह्मप्रकृतिकतया न साध्याव्याप्तिः ।

आगमविरोधस्त्विति । धर्मिग्राहकतया तद्विरोधिनोऽनुमानस्यानुत्थानात् । न च सत्यादिवाक्यस्य धर्मिग्राहकत्वेऽपि न तद्विरोध इति वाच्यम् । न हि सत्यादिवाक्यं सृष्टिवाक्यं विहाय स्वार्थसमर्पकम् । समभिव्याहृतपदानां [1]सम्भूयकारितया सृष्टिवाक्यप्रतिपन्नजगत्कारणानुवादेनैव सत्यादिस्वरूपबोधनात्। तथा च जगदुपादानतयैव ब्रह्मसिद्धेः उपजीव्यागमबाधितानुमानस्य नावतार इति भावः । नैषा तर्केणेति । ब्रह्मविषया मतिः तर्केण आपनेया-दूषणीया प्रापणीया वा न भवति । इयं विसृष्टिः– इदं सृज्यमानं जगत् यतः उत्पन्नं तं अद्धा-अत्यन्तं को वेद को वा प्रावोचत् ।

---

1. **सम्भूयकारितया**—विशिष्टैकार्थप्रतिपादकतया ।

श्रुत्यनुगृहीत एव ह्यत्र तर्कः अनुभवाङ्गत्वेनाश्रीयते–स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारात् आत्मनोऽनन्वागतत्वं, संप्रसादे च प्रपञ्चपरित्यागेन सदात्मना संपत्तेः निष्प्रपञ्चसदात्मत्वं, प्रपञ्चस्य ब्रह्मप्रभवत्वात् कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेकः–इत्येवंजातीयकः। 'तर्काप्रतिष्ठानात्' (ब्र. सू. २।१।११) इति च केवलस्य तर्कस्य विप्रलम्भकत्वं दर्शयिष्यति।

योऽपि चेतनकारणश्रवणबलेनैव समस्तस्य जगतः चेतनतामुत्प्रेक्षते, तस्यापि 'विज्ञानं चाविज्ञानं च [तै. उ. २.६] इति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुम्। परस्यैव तु इदमपि विभागश्रवणं न युज्यते। कथम्? परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते 'विज्ञानं चाविज्ञानं च अभवत्' इति। तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वात्, एवं अचेतनस्यापि

---

स्वप्नान्तबुद्धान्तयोः–स्वप्नजाग्रदवस्थयोः। सम्प्रसादे-स्वापे। केवलस्य-श्रुतिविरुद्धस्य।

विभावनाविभावनाभ्यामिति। ननु—येन श्रुतार्थापत्त्या घटपटादीनां चैतन्यं कल्प्यते, तेन 'घटः प्रकाशते' 'घटः स्फुरति' इत्यादिप्रतीत्यनुसारेण तत् आस्थेयम्। अन्यथा प्रत्यक्षश्रुत्या श्रुतार्थापत्तेर्बाधप्रसङ्गात्। न चेयं प्रतीतिः प्रकाशविषयत्वविषयेति वाच्यम्। प्रभाश्रये घटे जायमानायाः 'घटः स्फुरति' इत्यादिप्रतीतेः आश्रयत्वविषयतया क्लृप्ततया तत्समानाकाराया ज्ञानरूपप्रकाशावगाहिन्या अपि आश्रयत्वविषयताया एवोचितत्वात्। न च तथासति प्रभाश्रयत्वेनेव ज्ञानाश्रयत्वेनापि सर्वं [1]सर्वस्य चक्षुरुन्मीलने सति भायादिति वाच्यम्। प्रभायां चक्षुरुन्मीलनस्येव चैतन्यात्मकस्फुरणे अभिव्यक्त्यर्थं वृत्तिविशेषस्यापेक्षितत्वात् तद्वशेन प्रमातृविशेषे विषयविशेषावच्छिन्नस्फुरणावभासोपपत्तेः। तथा च घटादिषु चैतन्यस्य विभावितत्वेन कथमविभावनम्–इति चेत्—

---

1. आ. सर्वस्य भायादिति वाच्यम्। चैतन्यात्मकस्फुरणे

चेतनभावो नोपपद्यते। प्रत्युक्तत्वात्तु विलक्षणत्वस्य यथाश्रुत्येव चेतनं कारणं ग्रहीतव्यं भवति ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत, असत्तर्हि कार्यं प्रागुत्पत्तेः इति प्रसज्येत, अनिष्टं चैतत् सत्कार्यवादिनस्तव—इति चेत्, नैष दोषः—प्रतिषेधमात्रत्वात्। प्रतिषेधमात्रं हीदं, नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति। न ह्ययं प्रतिषेधः प्रागुत्पत्तेः सत्त्वं कार्यस्य प्रतिषेद्धुं शक्नोति। कथम्? यथैव हि इदानीमपि इदं कार्यं कारणात्मना सत् एवं प्रागुत्पत्तेरपीति गम्यते।

---

उच्यते—जीवेषु यादृशं चैतन्यं इच्छाप्रवृत्त्यादिप्रयोजकं नैवं घटादिषु—इतीदं वैषम्यं विभावनाविभावनशब्देन विवक्षितम्। न च—एवमपि उपादानस्य ब्रह्मणः स्पष्टचैतन्यतया ततोऽस्पष्टचैतन्यानां घटादीनां कथमुत्पत्तिः, उद्भूतगुणकवस्तूपादेयानामप्युद्भूतगुणकत्वनियमात्—इति वाच्यम्। उद्भूतरूपादप्यग्नेः अनुद्भूतरूपयोस्तुषतप्तवारिस्थतेजसोः उत्पत्तिदर्शनात्। अप्रयोजिकां परिभाषामाश्रित्य तेजोगतानामनुद्भूतरूपाणामेवावयवानां तत्रोपादानत्वकल्पनमिति तु न न्याय्यम् ॥ ॥ ६ ॥

कार्यकारणयोरैक्ये हि, उत्पत्तेः प्राक् कारणसत्त्वे तदभिन्नस्य कार्यस्यापि सत्त्वावश्यम्भावेन सदेव कार्यमुत्पद्यत इति [1]वक्तुं शक्यते। विलक्षणयोस्तूपादानोपादेयभावाभ्युपगमे वैलक्षण्यस्य अभेदविरोधितया ऐक्यायोगात् उत्पत्तेः प्राक् कारणसत्त्वेऽपि कार्यसत्त्वस्य समर्थयितुमशक्यतया कथं सत्कार्यवादः—इति शङ्का।

परिहारस्तु—न वयं उपादानोपादेययोर्ब्रह्मजडयोस्स्वरूपैक्यं वदामः, अपि तु उपादाने ब्रह्मणि कल्पितस्य प्रपञ्चस्य पारमार्थिकं स्वरूपं ब्रह्मैवेति ब्रह्मव्यतिरेकेणासत्त्वम्, तथा च उत्पत्तेः प्रागपि प्रपञ्चस्य पारमार्थिकस्वरूपभूतं ब्रह्म अस्तीति, एतावता सत्कार्यवाचोयुक्तिः, अतो न किञ्चिदनुपपन्नम्—इति ॥ ७ ॥

---

1. मु. 'वक्तुं' नास्ति

न हि इदानीमपि इदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति । 'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ. उ. २।४।६) इत्यादिश्रवणात् । कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम् । ननु शब्दादिहीनं ब्रह्म जगतः कारणम् । बाढम् । न तु शब्दादिमत्कार्यं कारणात्मना हीनं प्रागुत्पत्तेः इदानीं वा अस्ति । तेन न शक्यते वक्तुं प्रागुत्पत्तेः असत् कार्यमिति । विस्तरेण चैतत् कार्यकारणानन्यत्ववादे वक्ष्यामः ॥ ७ ॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अत्राह—यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं ब्रह्मकारणकमभ्युपगम्येत, तदा अपीतौ—प्रलये प्रतिसंसृज्यमानं कार्यं कारणाविभागमापद्यमानं कारणं आत्मीयेन धर्मेण दूषयेत्, इति, अपीतौ कारणस्यापि ब्रह्मणः कार्यस्येव अशुद्ध्यादिरूपप्रसङ्गात् 'सर्वज्ञं ब्रह्म जगतः कारणं' इति असमञ्जसमिदमौपनिषदं दर्शनम् ।

अपि च समस्तस्य विभागस्य अविभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावात् भोक्तृभोग्यादिविभागेनोत्पत्तिः न प्राप्नोतीत्यसमञ्जसम् ।

अपि च भोक्तॄणां परेण ब्रह्मणा अविभागं गतानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तौ अभ्युपगम्यमानायां मुक्तानामपि पुनरुत्पत्तिप्रसङ्गात् असमञ्जसम् ।

अथ इदं जगत् अपीतावपि विभक्तमेव परेण ब्रह्मणा अवतिष्ठेत, एवमपि अपीतिश्च न संभवति कारणाव्यतिरिक्तं च कार्यं न संभवतीत्यसमञ्जसमेवेति ॥ ८ ॥

---

ननु कार्यस्य प्रलये कारणेन संसृज्यमानत्वेऽपि यथा स्थितिदशायां संसृज्यमानमपि स्वधर्मैः कारणं न रूषयति एवं प्रलयेऽपि न रूषयेदिति शङ्कां निराकर्तुं, संसृज्यमानमितिपदस्य अर्थमाह—अविभागमापद्यमानमिति । लयो ह्येकतापत्तिः इति स्वाप्ययसूत्रे निरूपितम् । तथा च स्थितौ तादात्म्याख्यस्वरूपसंसर्गमात्रेण स्वधर्मैः कारणस्यारूषणेऽपि प्रलये ऐक्यापत्त्या तथा स्यादेवेति भावः । ननु प्रलये जगदेव नास्ति, कथं तद्धर्मैः ब्रह्म रूषितं भवेत्, इत्यत आह—अपि चेति ॥ ८ ॥

अत्रोच्यते—

## न तु दृष्टान्तभावात् ॥ ९ ॥

नैव अस्मदीये दर्शने किंचिदसामञ्जस्यमस्ति। यत्तावदभिहितं—कारणमपिगच्छत् कार्यं कारणं आत्मीयेन धर्मेण दूषयेदिति, तददूषणम्। कस्मात्? दृष्टान्तभावात्। सन्ति हि दृष्टान्ताः यथा कारणमपिगच्छत् कार्यं कारणं आत्मीयेन धर्मेण न दूषयति। तद्यथा—शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायां उच्चावचरूपप्रभेदाः सन्तः पुनः प्रकृतिमपिगच्छन्तो न तां आत्मीयेन धर्मेण संसृजन्ति, रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णं आत्मीयेन धर्मेण संसृजन्ति, पृथिवीविकारः चतुर्विधो भूतग्रामो न पृथिवीं अपीतौ आत्मीयेन धर्मेण संसृजति। त्वत्पक्षस्य तु न कश्चिद्दृष्टान्तोऽस्ति। अपीतिरेव हि न संभवेत् यदि कारणे कार्यं स्वधर्मेणैव अवतिष्ठेत। अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वं आरम्भणशब्दादिभ्यः—इति वक्ष्यामः।

---

नैवास्मदीय इति। अयं भावः—प्रलये [1]कार्यानुवृत्तः कारणांशो यो वर्तते तस्यैव अवस्थाविशेषोपाधिकभेदविलयनेन [2]कारणैक्यापत्तिः, [3]कारकव्यापाराधीनानां अवस्थानां तु सूक्ष्मतापत्तिरेव। तथा च, प्रलये वियदादीनां सूक्ष्मतापत्त्या तदनुस्यूतस्य सदाद्यंशस्य औपाधिकभेदप्रहाण्या ब्रह्मैकतापत्तावपि स्थूलावस्थानां वियदादीनां स्थितिसमये ब्रह्मतादात्म्यमिव प्रलये सूक्ष्मतापन्नानामपि तादात्म्यमेव, न तु ब्रह्मैक्यापत्तिः। अतो न कारणस्य कार्यधर्मैः प्रलये दूषणम्, नापि पुनः विभागेनोत्पत्तौ काचिदनुपपत्तिरिति। अनन्यत्वेऽपीति। भेदेन परमार्थतः कार्यस्वरूपाभावेऽपीत्यर्थः। [4]कार्यस्येति। कार्यस्य पारमार्थिक आत्मा—अधिष्ठानं कारणमेव, न तु कारणस्य [5]पारमार्थिक आत्मा—अधिष्ठानं कार्यं इत्यर्थः।

---

1. मु. कार्यानुवृत्तिः
2. मु. कारणैक्योपपत्तिः
3. मु. कारणव्यापारा॰
4. मु. 'कार्यस्येति' नास्ति।
5. मु. पारमार्थिकमधिष्ठानं

अत्यल्पं चेदमुच्यते ‘कार्यं अपीतौ आत्मीयेन धर्मेण कारणं संसृजेत्’ इति। स्थितावपि हि समानोऽयं प्रसङ्गः, कार्यकारणयोरनन्यत्वाभ्युपगमात्। ‘इदं सर्वं यदयमात्मा’ (बृ. उ. २।४।६) ‘आत्मैवेदं सर्वम्’ (छा. उ. ७।२५।२), ‘ब्रह्मैवेदममृतं पुरस्तात्’ (मु. उ. २।२।११), ‘सर्वं खल्विदं ब्रह्म’ (छा. उ. ३।१४।१) इत्येवमाद्याभिर्हि श्रुतिभिः अविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्राव्यते। तत्र यः परिहारः ‘कार्यस्य तद्धर्माणां च अविद्याध्यारोपितत्वात् न तैः कारणं संसृज्यते’ इति, अपीतावपि स समानः।

अस्ति चायं अपरो दृष्टान्तः—यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते, अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति। यथा च स्वप्नदृगेकः स्वप्नदर्शनमायया न संस्पृश्यते प्रबोधसंप्रसादयोः अनन्वागतत्वात्, एवं अवस्थात्रयसाक्षी एकोऽव्यभिचारी अवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते। मायामात्रं ह्येतत्—यत् परमात्मनोऽवस्थात्रयात्मनाऽवभासनं रज्ज्वा इव सर्पादिभावेन इति। अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः—

‘अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।

अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥’ (गौडपादकारिका १।१६) इति।

तत्र यदुक्तं-अपीतौ कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इति, एतदयुक्तम्।

यत्पुनरेतदुक्तं—समस्तस्य विभागस्य अविभागप्राप्तेः पुनर्विभागेनोत्पत्तौ नियमकारणं नोपपद्यत इति, अयमप्यदोषः, दृष्टान्तभावादेव। यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यां अविभागप्राप्तौ मिथ्या-

---

ननु प्रलये ऐक्याभावेऽपि सूक्ष्मावस्थायाः तादात्म्येन ब्रह्मधर्मत्वोपगमात् कथं निर्दुष्टत्वं—इति शङ्कां प्रतिबन्द्या समाधातुं आह—अत्यल्पश्चेदमिति। अनादिमाययेति। स्वाभाविकस्वरूपज्ञानराहित्यात् सुप्तः॥ ९॥

ज्ञानस्यानपोदितत्वात् पूर्ववत् पुनः प्रबोधे विभागो भवति, एवमिहापि भविष्यति। श्रुतिश्चात्र भवति—'इमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति, त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' (छा. उ. ६।९।२,३) इति। यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितौ दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते। एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः। सम्यग्ज्ञानेन मिथ्याज्ञानस्य अपोदितत्वात्।

यः पुनरयं अन्ते अपरो विकल्प उत्प्रेक्षितः—अथेदं जगत् अपीतावपि विभक्तमेव परेण ब्रह्मणा अवतिष्ठेतेति, सोऽप्यनभ्युपगमादेव प्रतिषिद्धः। तस्मात् समञ्जसं इदमौपनिषदं दर्शनम् ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः प्रादुःष्युः। कथमिति? उच्यते—यत्तावदभिहितं विलक्षणत्वात् नेदं जगद् ब्रह्मप्रकृतिकमिति, प्रधानप्रकृतिकतायामपि समानमेतत्, शब्दादिहीनात् प्रधानात् शब्दादिमतो जगत उत्पत्त्यभ्युपगमात्। अत एव च विलक्षणकार्योत्पत्त्यभ्युपगमात् समानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः। तथा अपीतौ कार्यस्य कारणाविभागाभ्युपगमात् तद्वत्प्रसङ्गोऽपि समानः। तथा मृदितसर्वविशेषेषु विकारेषु अपीतावविभागात्मतां गतेषु इदं अस्य पुरुषस्योपादानं इदमस्येति प्राक्प्रलयात् प्रतिपुरुषं ये नियता भेदाः न ते तथैव पुनरुत्पत्तौ नियन्तुं शक्यन्ते, कारणाभावात्। विनैव कारणेन नियमेऽभ्युपगम्यमाने कारणा-

---

नविलक्षणत्वादितिसूत्रमारभ्य ये दोषाः साङ्ख्येन वेदान्तिनं प्रति पूर्वपक्षे दर्शिताः ते सर्वे साङ्ख्यं प्रत्यपि समाना इति दर्शयति—स्वपक्षे चैत इति। इदमस्यपुरुषस्येति। देवदत्तस्य उपादानं-भोगसाधनं इदं—बुद्ध्यादिकं, यज्ञदत्तस्येदं—इति विभागः ॥ १० ॥

भावसाम्यात् मुक्तानामपि पुनर्बन्धप्रसङ्गः । अथ केचिद् भेदा अपीतौ अविभागमापद्यन्ते केचिन्न इति चेत्, ये नापद्यन्ते तेषां प्रधानकार्यत्वं न प्राप्नोति—इत्येवमेते दोषाः साधारणत्वात् न अन्यतरस्मिन् पक्षे चोदयितव्या भवन्तीति अदोषतामेवैषां द्रढयति, अवश्याश्रयितव्यत्वात् ॥ ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्ष-प्रसङ्गः ॥ ११ ॥

इतश्च न आगमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् । यस्मात् निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरङ्कुशत्वात् । तथा हि—कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते, तैरप्युत्प्रेक्षिताः सन्तः ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुं, पुरुषमतिवैरूप्यात् । अथ कस्यचित् प्रसिद्धमाहात्म्यस्य कपिलस्य अन्यस्य वा संमतस्तर्कः प्रतिष्ठित

---

पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का इति । 'यत् यस्माद्विलक्षणं तत् तदुपादानकं' इति सामान्यव्याप्तिमूलकोऽनुमानाख्यस्तर्कः अप्रतिष्ठितः । सामान्यव्याप्तेः यत्तत्पदार्थघटितत्वेन पक्षसपक्षसाधारण्येनानुगतीकर्तुमशक्यतया साध्यासाधकत्वात् । दृष्टान्ते हि सुवर्णविलक्षणत्वं घटे सुवर्णोपादानकत्वाभावे प्रयोजकं वक्तव्यम् । न तत् वियदादेर्ब्रह्मोपादानकत्वाभावे साध्ये हेतूकर्तुं शक्यते । अपि तु ब्रह्मविलक्षणत्वं हेतुतया वक्तव्यम् । तथा च कथं दृष्टान्तदार्ष्टान्तिकयोः हेतुतावच्छेदकैक्यलाभः । साध्यतावच्छेदकहेतुतावच्छेदकैक्यालाभे च पक्षवृत्तिहेतौ व्याप्तिग्रहासम्भवात् नानुमितिः स्यात् । न च सिद्धान्ते शास्त्रयोनित्वसूत्रप्रथमवर्णके 'यद्यद्विस्तरार्थं शास्त्रं' इत्येवंरूपेण परमात्मनः सर्वज्ञत्वसाधिका सामान्यव्याप्तिः उपन्यस्तेति वाच्यम् । श्रुतिसिद्धे सार्वज्ञ्ये [1]सम्भावनामात्रप्रयोजनाय तदुपन्यासेऽपि स्वातन्त्र्येण

---

1. मु. साध्यसम्भावना

इत्याश्रीयेत, एवमप्यप्रतिष्ठितत्वमेव। प्रसिद्धमाहात्म्याभिमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात्।

अथोच्येत—अन्यथा वयमनुमास्यामहे यथा न अप्रतिष्ठादोषो भविष्यति। न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम्। एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते। केषांचित् तर्काणां अप्रतिष्ठितत्वदर्शनेन अन्येषामपि तज्जातीयकानां तर्काणां अप्रतिष्ठितत्वकल्पनात्। सर्वतर्काप्रतिष्ठायां च लोकव्यवहारोच्छेदप्रसङ्गः। अतीतवर्तमानाध्वसाम्येन हि अनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते। श्रुत्यर्थविप्रतिपत्तौ च अर्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्य(प्र)वृत्तिनिरूपणरूपेण क्रियते। मनुरपि चैवं मन्यते—

'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥' इति

'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥' (१२।१०५,१०६)

---

किञ्चिदर्थसाधकतया तदुपन्यासाभावात्। [1]श्रुतिसिद्धे ह्यर्थे सम्भावनार्थं [2]सामान्यव्याप्तिरहितं यत्किञ्चित्सामान्यमात्रमपि हि उपन्यस्यमानं दृश्यते 'तस्य भूरिति शिरः एकं हि शिरः एकमेतदक्षरं' इत्यादौ।

ननु तर्हि अविद्यादृष्टान्तेन विशेषव्याप्तिरेव विवक्षिताऽस्तु, तत्र नोक्तदोषः—इत्यभिप्रायेण, अन्यथानुमेयमितिसूत्रांशं व्याचष्टे—अथोच्येतेति। अतीतवर्तमानाध्वसाम्येन हीति। अतीतवर्तमानपाकदृष्टान्तेन हि आगामिनि पाके पाकत्वहेतुना इष्टसाधनतामनुमाय पुरुषः पाके प्रवर्तते। एवं सर्वत्र। तथा च अनुमानाप्रामाण्ये प्रवृत्त्यादिव्यवहारोच्छेदः। अर्थाभासेति। तथा च तत्तत्पूर्वपक्षोपन्यस्ततर्काभासमूलकार्थनिरासाय पूर्वोत्तरमीमांसोपन्यस्तसिद्धान्ततर्काणां समीचीनत्वमास्थेयमिति।

---

1. मु. श्रुतिप्रसिद्धे
2. सामान्यव्याप्तिरहितमपि यत्किञ्चित्सामान्यमात्रं इति सम्बन्धः।

इति च ब्रुवन् । अयमेव तर्कस्यालंकारो यत् अप्रतिष्ठितत्वं नाम । एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति । न हि पूर्वजो मूढ आसीदिति आत्मनापि मूढेन भवितव्यमिति किंचिदस्ति प्रमाणम् । तस्मात् न तर्काप्रतिष्ठानं दोष इति चेत्,

एवमप्यविमोक्षप्रसङ्गः । यद्यपि क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते, तथापि प्रकृते तावत् विषये प्रसज्यत एव अप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य । न हि इदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनं आगममन्तरेणोत्प्रेक्षितुमपि शक्यम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः लिङ्गाद्यभावाच्च नानुमानादीनां इति चावोचाम ।

अपि च सम्यग्ज्ञानात् मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः । तच्च सम्यग्ज्ञानमेकरूपं, वस्तुतन्त्रत्वात् । एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः, लोके तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते, यथा अग्निरुष्ण इति । तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना । तर्कज्ञानानां तु अन्योन्यविरोधात् प्रसिद्धा विप्रतिपत्तिः । यद्धि केनचित् तार्किकेण इदमेव सम्यग्ज्ञानमिति प्रतिष्ठापितं तत् अपरेण व्युत्थाप्यते तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति प्रसिद्धं लोके । कथं एकरूपानवस्थितविषयं तर्कप्रभवं सम्यग्ज्ञानं भवेत् । न च प्रधानवादी तर्कविदामुत्तम इति सर्वैस्तार्किकैः परिगृहीतः, येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि । न च शक्यन्ते अतीतानागतवर्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्तुम्, येन तन्मतिः एकरूपैकार्थविषया सम्यङ्मतिरिति स्यात् । वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वो-

---

तथाऽपि प्रकृते तावदिति । न वयं सर्वेषां तर्काणां अप्रतिष्ठितत्वं ब्रूमः, अपि तु श्रुतितात्पर्यविषयीभूतार्थबाधनार्थमुपन्यस्तस्य । एवंविधस्य [1]तर्कस्य विशेष-

---

1. तर्कस्य—अनुमानस्य. हेतोरिति यावत् ।

पपत्तः तज्जनितस्य ज्ञानस्य सम्यक्त्वं अतीतानागतवर्तमानैः सर्वैरपि तार्किकैः अपह्नोतुमशक्यम् ।

अतः सिद्धं अस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वम् । अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्येत ।

अतः आगमवशेन आगमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम् ॥ ११ ॥

४ शिष्टापरिग्रहाधिकरणम्

## एतेन शिष्टपरिग्रहा अपि व्याख्याताः ॥ १२ ॥

वैदिकस्य दर्शनस्य प्रत्यासन्नत्वात् गुरुतरतर्कबलोपेतत्वात् वेदानुसारिभिश्च कैश्चित् शिष्टैः केनचिदंशेन परिगृहीतत्वात् प्रधानकारणवादं तावद्व्यपाश्रित्य यस्तर्कनिमित्त आक्षेपो वेदान्तवाक्येषूद्भावितः स परिहृतः। इदानीं अण्वादिवादव्यपाश्रयेणापि कैश्चिन्मन्दमतिभिः वेदान्तवाक्येषु

---

व्याप्तिपक्षेऽप्यप्रयोजकतापरिहारार्थं 'ब्रह्मविलक्षणत्वं ब्रह्मोपादानकत्वे न स्यात्' इतितर्कमूलभूता सामान्यव्याप्तिरेव आश्रयणीयेति पूर्वोक्तमेवाप्रतिष्ठितत्वं पुनरापद्यते ॥ ११ ॥

इति नविलक्षणत्वाधिकरणम्

परममहत्परिमाणं ब्रह्म अल्पपरिमाणस्य प्रपञ्चस्य उपादानं—इति वेदान्तार्थः 'यद्यत् कार्यद्रव्यं तत् स्वन्यूनपरिमाणद्रव्यारब्धं, यथा तन्त्वारब्धः पटः' इति न्यायेन बाध्यते न वेति संशये, "विलक्षणत्वहेतुकानुमान इव इह दोषाभावात् एतद्विरुद्धो वेदान्तार्थो बाध्य एव । न च ब्रह्मकारणकत्वानभ्युपगमे कपालादीनां सर्वेषां कार्यतया नित्यसिद्धकारणालाभेन प्रलये सर्वेषां कार्यद्रव्याणां नाशात् मूलकारणाभावेन पुनस्सृष्टिर्न स्यादिति वाच्यम् । परमाणूनां मूलकारणत्वसम्भवात् । न च तत्र प्रमाणाभावः । 'द्व्यणुकं स्वन्यूनपरिमाणद्रव्यारब्धम्, कार्यद्रव्यत्वात्

पुनस्तर्कनिमित्त आक्षेप आशङ्क्यत इत्यतः प्रधानमल्लनिबर्हणन्यायेन अतिदिशति। परिगृह्यन्त इति परिग्रहाः, न परिग्रहा अपरिग्रहाः, शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः । एतेन—प्रकृतेन प्रधानकारणवादनिराकरणकारणेन, शिष्टैः—मनुव्यासप्रभृतिभिः केनचिदप्यंशेन अपरिगृहीता येऽण्वादिकारणवादाः तेऽपि प्रतिषिद्धतया व्याख्याताः—निराकृता द्रष्टव्याः ।

---

घटवत्' इत्यनुमानेन सिद्धत्वात् । न च तेषामपि [1]पृथिवीत्वादिना सावयवत्वेन कार्यत्वानुमाने ततोऽपि न्यूनं किञ्चित् सिध्येत् एवं ततोऽपि किञ्चिदिति अविश्रान्तिः । परमाणोस्सावयवत्वकल्पने सावयवत्वाविश्रान्तौ मेरुसर्षपयोरनन्तावयवत्वाविशेषेण तुल्यपरिमाणतापत्त्या [2]दृष्टविरोधेन पृथिवीत्वादिना परमाणोस्सावयवत्वानुमानासम्भवात् । तथा च परमाणव एव मूलकारणं न ब्रह्म" इति शङ्का अतिदेशनिवर्त्या ।

निवृत्तिप्रकारस्तु—कार्यद्रव्यस्य स्वन्यूनपरिमाणद्रव्यारब्धत्वनियमो नास्ति । महता तूलपिण्डेन सूक्ष्माणां दीपवर्तीनां उत्पादनदर्शनात्, विवर्तवादिनं प्रति तथोद्भावनासम्भवाच्च । महतामपि गिरिशिखरवर्तिनां वृक्षाणां दूर्वाप्रवालारोपोपादानत्वस्य तेनोपगमात् । घटादिषु तथादर्शनमात्रेण श्रुतिविरुद्धार्थकल्पने, पृथिवीत्वादिना परमाणूनामपि सावयवत्वकल्पनं कथं वारयितुं शक्यम् । मेरुसर्षपयोस्तुल्यपरिमाणतापत्तिदोषोऽपि नास्ति । उभयोरनन्तावयवत्वाविशेषेऽपि आनन्त्य एव विशेषकल्पनोपपत्तेः । तथा च मेरुसर्षपयोरवयवानन्त्यस्य विलक्षणत्वात् न तुल्यपरिमाणता । अवश्यं ह्यानन्त्ये विशेष आश्रयणीयः, अन्यथा अतीतकल्पानानतीतक्षणानां च आनन्त्यात् तुल्यता स्यात् । अतः तत्र आनन्त्ये विशेषः कल्पनीयः । तथा च सावयवत्वाविश्रान्त्या मूलकारणमेव परमते दुर्लभं स्यात् । अतः आगमानुसारेण ब्रह्मैवाविद्यासचिवं मूलकारणमास्थेयम् ।

---

1. पृथिवीत्वादिनेति तृतीयार्थो व्याप्यत्वं सावयवत्वे अन्वेति, पृथिवीत्वाद्यनुमितसावयवत्वेनेत्यर्थः ।

2. दृष्टविरोधेनेति तथा च न इष्टापत्त्युक्तिसम्भव इति भावः ।

तुल्यत्वान्निराकरणकारणस्य न अत्र पुनराशङ्कितव्यं किंचिदस्ति। तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं, तर्कस्य चाप्रतिष्ठितत्वं, अन्यथाऽनुमानेऽप्यविमोक्षः, आगमविरोधश्च, इत्येवंजातीयकं निराकरणकारणम् ॥ १२ ॥

५ भोक्त्रापत्त्यधिकरणम्

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

अन्यथा पुनः ब्रह्मकारणवादस्तर्कबलेनैव आक्षिप्यते। यद्यपि श्रुतिः प्रमाणं स्वविषये भवति, तथाऽपि प्रमाणान्तरेण विषयापहारे अन्यपरा भवितुमर्हति। यथा मन्त्रार्थवादौ। तर्कोऽपि स्वविषयादन्यत्राप्रतिष्ठितः स्यात्, यथा धर्माधर्मयोः। किमतो यद्येवम्? अत इदमयुक्तं यत् प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः।

कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति?

अत्रोच्यते—प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके, भोक्ता चेतनः शारीरः भोग्याः शब्दादयो विषयाः इति—यथा—भोक्ता देवदत्तो भोज्य ओदन इति। तस्य च विभागस्य अभावः प्रसज्येत, यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावमापद्येत, तयोश्च इतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात् प्रसज्येत। न चास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम्। यथा तु अद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टः तथा अतीता-

---

सत्यामप्येतस्यां निवर्तनीयायां शङ्कायां अस्या अतिफल्गुत्वद्योतनाय 'नात्र पुनराशङ्कितव्यं किञ्चिदस्ति' इत्युक्तम् ॥ १२ ॥

इति शिष्टापरिग्रहाधिकरणम्

उक्तयुक्तीनामाभासत्वेन 'आत्मन आकाशस्सम्भूतः' इत्यादिवाक्यप्रतिपाद्यस्योपादानत्वस्य बाधासम्भवेऽपि 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' [छा. उ. ३-१४-१] इत्यादिवाक्यैः प्रतिपाद्यमानस्य जीवजगतोर्ब्रह्मणा अभेदस्य 'एकब्रह्माभिन्नयोर्जीवजगतोः परस्परमभेदः स्यात्' इत्यादितर्कविरुद्धत्वात् बाधोऽस्ति न वेति सन्देहे, 'स्यादेव बाधः—'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' इति वाक्यस्य स्वार-

नागतयोरपि कल्पयितव्यः । तस्मात् प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्य अभावप्रसङ्गात् अयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत् कश्चिच्चोदयेत्,

तं प्रति ब्रूयात्—स्याल्लोकवदिति। उपपद्यत एवायं अस्मत्पक्षेऽपि विभागः, एवं लोके दृष्टत्वात्। तथा हि—समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनां इतरेतरविभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते। न च समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विका-

---

सिकार्थाङ्गीकारे उक्तदूषणस्य परिहर्तुमशक्यतया वाक्यस्यार्थान्तरपरताया आवश्यकत्वात्–इत्ययुक्तमिदं ब्रह्मकारणतावधारणम्' [1]इति । ननु उक्तयुक्त्या [2]जीवजगतोः ब्रह्माभेदाभिधानस्यायुक्तत्वेऽपि ब्रह्मकारणतावधारणस्यायुक्तता कथमुच्यत इति चेन्न–जीवजगतोर्ब्रह्मोपादेयतया श्रुतत्वात् उपादानोपादेययोश्च समवायं निराकुर्वता सिद्धान्तिना अभेदस्यैव उपगमनीयत्वात् अभेदासम्भवे उपादानोपादेयभावोऽपि न सम्भवति–इत्यभिमानवतः पूर्वपक्षिणः तथोक्तिसम्भवात् ।

स्याल्लोकवदितिपरिहारस्यायमभिप्रायः—यथा हि तार्किकैः उपादानभूतात् कपालादिद्रव्यात् घटाद्युपादेयद्रव्यमन्यदेव, तयोश्च समवायः सम्बन्धः–इत्युच्यते ; नैवं सिद्धान्ते उपादानोपादेयभावस्थले द्रव्यद्वयमभ्युपगम्यते, अपि तु एकमेव द्रव्यं पिण्डावस्थारूपं धर्मं परित्यज्य कारकविशेषात् कम्बुग्रीवादिसंस्थानभाक् भवतीति । तथा च 'मृत्पिण्ड एव घटोऽभवत्' इति [3]सामानाधिकरण्यप्रतीतिः । तथा च 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्येषु 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। [4]आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्' इति श्लोकोक्तरीत्या जगद्रूपानुप्रविष्टब्रह्मरूपं धर्मिणमादाय अभेद उपपन्नः। नामरूपांशस्य तु ब्रह्मणा सह तादात्म्यमेव स्वरूपसम्बन्धविशेषाख्यं, न त्वैक्यम् । अतो न ब्रह्मजगतोः [5]साङ्कर्यम् ।

---

1. इतीति पूर्वपक्षिणः शङ्केति शेषः ।
2. मु. जीवजगतोरभेदाभिधानस्य
3. सामानाधिकरण्यप्रतीतिः-तादात्म्यप्रतीतिः ।
4. मु. आद्यं त्रयं
5. साङ्कर्यम्—ब्रह्मणो जडत्वं जगतः चित्त्वम् । अथवा ब्रह्मणो नामरूपवत्त्वं जगतः सच्चिदानन्दरूपत्वम् ।

राणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति । न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति । एवमिहापि न च भोक्तृभोग्ययोरितरेतरभावापत्तिः न च परस्माद्ब्रह्मणोऽन्यत्वं भविष्यति । यद्यपि भोक्ता न ब्रह्मणो विकारः, 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २।६) इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात्, तथाऽपि कार्यमनुप्रविष्टस्य अस्त्युपाधिनिमित्तो विभाग आकाशस्येव घटाद्युपाधिनिमित्त इत्यतः, परमकारणाद्ब्रह्मणोऽनन्यत्वेऽपि उपपद्यते भोक्तृभोग्यलक्षणो विभागः समुद्रतरङ्गादिन्यायेन—इत्युक्तम् ॥ १३ ॥

### ६ आरम्भणाधिकरणम्

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः; न त्वयं विभागः परमार्थतोऽस्ति, यस्मात् तयोः कार्यकारणयोः अनन्यत्वमवगम्यते । कार्यं आकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात्—कारणात् परमार्थतोऽनन्यत्वं—व्यतिरेकेणाभावः कार्यस्यावगम्यते । कुतः ? आरम्भणशब्दादिभ्यः ।

---

ननु:—नामरूपांशस्य स्वरूपैक्यानभ्युपगमेन साङ्कर्याभावेऽपि जीवब्रह्मणोस्स्वरूपैक्याभ्युपगमात् तयोः [1]साङ्कर्यं स्यात्—इत्याशङ्क्य परिहरति—यद्यपी त्यादिना । स्वरूपैक्ये सत्यपि औपाधिकभेदाभ्युपगमात् असाङ्कर्यमिति परिहाराभिप्रायः ॥ १३ ॥

इति भोक्त्रापत्त्यधिकरणम्

अभ्युपगम्य चेममिति । पूर्वसूत्रे लोकवदित्युक्तेः लोके च [2]विकारानृतत्वाप्रसिद्धेः विकारसत्यतामुपेत्यैव परिहारो दर्शित इति भ्रमस्स्यात्, औपाधिकोऽपि जीवब्रह्मणोर्भेदः उपाधिसत्यतया पारमार्थिक इति च भ्रमस्स्यात्, तदपाकरणाय इदं सूत्रम् ।

---

1. साङ्कर्यम्—ब्रह्मणः संसारित्वं जीवस्य सर्वज्ञत्वादि ।
2. आ. विकाराननृतत्वादिप्रसिद्धेः

आरम्भणशब्दस्तावत्—एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते 'यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' छा. उ. ६।१।४। इति।

---

न च प्रपञ्चसत्यतामुपेत्यैव 'इदं सर्वं यदयमात्मा' इत्यादिश्रुतिव्याख्यानोपपत्तौ[1] किमिति प्रपञ्चमिथ्यात्वसाधननिर्बन्ध इति वाच्यम्। तदभावे 'नेह नानाऽस्तिकिञ्चन' इत्यादिप्रपञ्चनिषेधश्रुतीनां प्रत्यक्षादिविरोधपरिहारासम्भवात्।

ननु—सूत्रे अनन्यत्वोक्त्या जगद्ब्रह्मणोरभेद इत्युक्तं भवति। तावता कथं मिथ्यात्वम्। न च—अनन्यत्वमित्यनेन अन्यत्वस्य—भेदस्य अभावमात्रं विवक्षितं, न तु स्वरूपैक्यं—इति वाच्यम्। तावताऽपि दूरस्थवनस्पत्योरभेदेनगृहीतयोः अभेदमात्रस्येव [2]जगद्ब्रह्मणोर्भेदस्यैव मिथ्यात्वमुक्तं भवेत्, न तु स्वरूपस्य। न चात्र अन्यत्वेन कार्यस्याभाव इत्युक्त्या भेदः कार्यं चेति द्वयोरपि मिथ्यात्वं विवक्षितम्। तथात्वे कार्यस्य स्वरूपेण मिथ्यात्वोक्त्या भेदमिथ्यात्वस्यार्थसिद्धेः पृथक्तत्कथनं व्यर्थम्। कथं च सौत्रस्यानन्यत्वपदस्य मिथ्यात्वपर्यवसाय्यर्थकथनम्?

उच्यते—'आरम्भणशब्दादिभ्यः' इति सूत्रांशेन वाचारम्भणमित्यादिश्रुतेर्हेतूकरणात् तस्याश्च प्रपञ्चमिथ्यात्वकथनस्वरसत्वात् अनन्यत्वपदेन साध्यतया मिथ्यात्वमेव विवक्षितमिति प्रतीयते। तत्र प्रपञ्चस्वरूपस्यैव मिथ्यात्वकथनौचित्येऽपि भेदविशिष्टतया तत्कथनं विवक्षाविशेषेण—प्रपञ्चान्तर्गतो हि जीवोऽपि भवति घटादिष्वनुगतः 'अस्ति भाति प्रियं' इत्यंशोऽपि। तत्र अन्यत्वेन [3]मिथ्यात्वे कथिते जीवे सत्ताद्यंशे च भेदमात्रमिथ्यात्वमादाय विशिष्टाभावः पर्यवस्यति। जडांशे तु स्वरूपभेदश्चेत्यंशद्वयस्यापि मिथ्यात्वमादाय—इति। न हि प्रपञ्चस्य जडव्यतिरिक्तांशेऽपि स्वरूपमिथ्यात्वं वक्तुं शक्यते। [4]न च नेह नानेति

---

1 श्रुतिव्याख्यानोपपत्तौ—कार्यकारणयोर्वास्तवतादात्म्यपरत्वेन श्रुतेः व्याख्यानसम्भवे।

2. मु. ब्रह्मप्रपञ्चयोः

3. मिथ्यात्वे—प्रपञ्चाभावे।

4. आ. न च तथाऽपि नेह

श्रुतिविरोधस्य प्रपञ्चमिथ्यात्वमात्रेणापि परिहारसम्भवात् [1]किमिति जीवादेर्भेदोऽपि मिथ्येति साध्यते । तावता निरङ्कुशनानात्वनिषेधासम्भवात्, जीवादिभेदस्य नाना-भूतस्य विद्यमानत्वात् । अतो न काचिदनुपपत्तिः ।

ननु 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतेः प्रपञ्चसत्यत्वमुपेत्यापि [2]अर्थो वर्णयितुं शक्यते । तथा हि–एकविज्ञानेन सर्वविज्ञानोक्त्या कार्यकारण-योरभेद उपक्षिप्ते 'पिण्डे दृष्टेऽपि घटादिगोचरस्सन्देहः पिण्डघटयोरर्थक्रिया-नामादिभेदश्च कथमुपपन्नः' इति शङ्कायां, वाचारम्भणमिति वाक्यशेषः । वाचा–घटेनजलमाहरेत्यादिवाक् तत्पूर्वको व्यवहारश्च [3]अजहल्लक्षणया वाक्पदार्थः, तदर्थम् । 'अध्ययनेन वसति' इत्यादाविव फलस्यापि[4] हेतुत्वविवक्षया [5]तृतीया । विकारः–घटादिः, [6]तन्नामधेयं च, मृत्तिकया [7]आरम्भणं-स्पृश्यं, सम्बन्धनीयमिति यावत् । 'आलम्भः स्पर्शहिंसयोः' इति वचनात् स्पर्शार्थकस्यालभतेः सम्बन्धे पर्यवसानम् । कर्मणि ल्युट्[8] । मृत्तिकेत्येवेत्यत्र विद्यमानस्य अनुषक्तस्य मृत्तिका-पदस्य तृतीयया विपरिणामः । तथा च 'घटमानयेत्याद्यभिवदनरूपव्यवहारार्थं तन्मूलानयनादिरूपव्यवहारार्थं च मृत्तिकया कम्बुग्रीवादिसंस्थानं 'घट' इत्यादि नामधेयं च सम्बध्यते' इति प्रतिपादिते पिण्डघटयोरेकद्रव्यत्वेऽपि अवस्थानां भेदात् सन्देहादिकं सर्वमुपपद्यत इत्युक्तं भवति । ननु–द्रव्यैक्यमुपेत्य अवस्था-भेदात् सन्देहादिकं किमित्युपपाद्यते, तार्किकादिवत् कार्यकारणयोर्द्रव्यभेद एव कुतो नोपेयते–इत्याशङ्क्य, उक्तं मृत्तिकेत्येवसत्यमिति घट इति पदं अध्याहृत्य ।

---

1. किमितीति तथा च अन्यत्वेनाभावोक्तिव्यर्थता तदवस्थेति भावः ।
2. अर्थ इति विशिष्टविष्णवद्वैतिभिर्वर्ण्यमानोऽयमर्थः ।
3. मु. 'अजहल्लक्षणया' नास्ति
4. मु. 'अपि' नास्ति
5. मु. 'तृतीया' नास्ति
6. मु. तन्नामधेयं घटः
7. आरम्भणमिति 'सरिरस्य मध्ये' इतिवत् रलयोरभेदात् रेफः । विकार-नामधेयोभयवर्तिन आरम्भणशब्दस्य 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रेण नपुंसकशेषता एकवचनञ्च ।
8. ल्युट् 'कृत्यल्युटो बहुलं' इति सूत्रेण ल्युट् ।

'घटो मृत्तिका' इत्येवार्थः सत्यं–प्रामाणिक इति यावत् । घटोमृत्तिकेति लोकसिद्धप्रत्यभिज्ञया अभेदोऽवगम्यते, अतो द्रव्यैक्यमादायैव व्यवहार उपपादनीयः—इति ।

एवमर्थे वर्ण्यमाने प्रपञ्चमिथ्यात्वं यद्यपि श्रुत्या न प्रतिपादितं भवति, तथाऽपि वाचेति तृतीयायाः चतुर्थ्यर्थत्वाङ्गीकारः, मृत्तिकेत्यनुषङ्गः तृतीयान्ततया तस्य विपरिणामः, मृत्तिकेत्येवेत्यत्र घटपदाध्याहारश्चेति क्लिष्टेयं योजनेति कृत्वा, प्रपञ्चसत्यत्वमनुसृत्यैव प्रकारान्तरेणैव [1]केचित् वाक्यं योजयन्ति—वाचाया आरम्भणं–वाचेतिपदं अजहल्लक्षणयैव अभिलापरूपमर्थक्रियारूपं च व्यवहारं प्रतिपादयति, तस्याः विषयतया [2]आरम्भकं, विकारः–घटाद्याकारः, घटादिनामधेयं च । यतः 'घटो मृत्तिका' इत्येव प्रामाणिकम्–इति ।

अत्रापि वाचेतिपदे अजहल्लक्षणा, मृत्तिकेत्यत्र घट इति पदाध्याहारश्चेति कृत्वा, प्रकारान्तरेण [3]व्याचक्षते—वाचारम्भणं विकारः–'घटशरावादिर्विकारो मृदो भिन्नः' इति वाङ्मात्रेण व्यवह्रियते, न तु भेद इति भावः । नामधेयमित्याद्यवशिष्टभागस्यायमर्थः—घटादिनामधेयं, घटादिद्रव्यं मृत्तिकेति कृत्वैव सत्यं-सति-प्रामाणिकेऽर्थे[4] साधु । 'तत्र साधुः' इति यत्प्रत्ययः । [5]घटपिण्डादीनां व्यवस्था अवस्थाभेदानुसारेणैव स्वीकर्तव्या, न तु तद्वशेन कार्यकारणद्रव्यभेद आस्थेयः–इति पर्यवसितोऽर्थः ।

अयमप्यर्थो वाचारम्भणमित्यत्र 'मृदो भिन्नः' इति पदाध्याहारात् नामधेयपदस्य [6]घटादिपरत्वाङ्गीकारेण सङ्कोचकल्पनात् मृत्तिकेत्यत्र घटादिपदाध्याहाराच्च क्लिष्टः ।

---

1. केचित्—विशिष्टशिवाद्वैतिनः ।

2. मु. आरम्भणं

3. व्याचक्षते विशिष्टशिवाद्वैतिन एव ।

4. प्रामाणिकेऽर्थे इति 'सत्ये साधौ च सच्छब्दः' इति स्मृतेः प्रामाणिकार्थवाचिसत्यशब्दपर्यायत्वात् सच्छब्दस्य उक्तार्थलाभः ।

5. घटपिण्डादीनां—'घटः' 'पिण्डः' इत्यादिनामधेयानाम् ।

6. घटादिपरत्वेति घटादिनामधेयपरत्वेत्यर्थः ।

एतदुक्तं भवति—एकेन मृत्पिण्डेन–परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं–घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषात् विज्ञातं भवेत्, यतः वाचारम्भणं विकारो नामधेयम्–वाचैव केवलं अस्तीत्यारभ्यते विकारः–घटः शराव उदञ्चनं चेति, न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति, नामधेयमात्रं ह्येतदनृतम्, मृत्तिकेत्येव सत्यम्—इति। एष ब्रह्मणो दृष्टान्त आम्नातः। तत्र श्रुतात् वाचारम्भणशब्दात् दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते। पुनश्च तेजोऽबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोऽबन्नकार्याणां तेजोऽबन्नव्यतिरेकेणाभावं ब्रवीति 'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' (छा. उ. ६।४।१) इत्यादिना।

---

तथा च एवंविधानेकार्थभानात् कथं वाचारम्भणवाक्यस्य मिथ्यात्वपर्यवसाय्येवार्थस्स्यात्, इत्यत आह—एतदुक्तमिति। नामधेयमात्रं ह्येतदनृतमिति। नन्वत्र कथं मात्रपदान्तर्भावेन अनृतत्वपर्यवसायि नामधेयपदं व्याख्यायत इति चेत्, उच्यते—वाचा व्यवह्रियमाणं विकारं वाचारम्भणमितिवाक्योदितं उद्दिश्य नामधेयत्वविधाने श्रुतार्थमादाय सामानाधिकरण्यस्यासम्भवात्, नामधेयपदस्य नामधेयवाच्यत्वलक्षणामुपेत्य सामानाधिकरण्ये पौनरुक्त्यात्, अर्थपरिसङ्ख्यार्थत्वमुपेत्य मात्रपदान्तर्भावेन [1]मिथ्यात्वपर्यवसाय्यर्थत्वं नानुपपन्नम्। यद्यपि 'यजन्ते नामयज्ञैस्ते' इत्यादौ क्वचित् अर्थाभासताद्योतकतया नामपदस्य दृष्टत्वेऽपि शब्दस्वरूप एव तस्य स्वारसिकत्वात् मिथ्यात्वपर्यसाय्यर्थवर्णनं लाक्षणिकमेव, तथाऽपि 'मृत्तिकेत्येव सत्यं' इत्यादिवाक्यशेषानुमतत्वात् न इयं लक्षणा दुष्टा। यदाहुः—'गौण्या लक्षणया वाऽपि वाक्यभेदेन वा पुनः। वेदो यमाश्रयेदर्थं को नु तं प्रतिकूलयेत् ॥' इति। विस्तरेण चैतत्[2]समन्वयसूत्र एव व्युत्पादितम्।

---

1. मिथ्यात्वपर्यवसाय्यर्थत्वं—मिथ्यात्वपर्यवसाय्यर्थत्वेन व्याख्यानम्।

2. एतत्—सोपबृंहणं वाचारम्भणवाक्यस्य विकारमिथ्यात्वपरत्वे स्वारसिकत्वम्।

आरम्भणशब्दादिभ्य इति आदिशब्दात् 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि' (छा. उ. ६।८।७), 'इदं सर्वं यदयमात्मा' (बृ. उ. २।४।६), 'ब्रह्मैवेदं सर्वम् (नृ. उ. ता. ७।३), 'आत्मैवेदं सर्वम्' (छा. उ. ७।२५।२), 'नेह नानास्ति किंचन' (बृ. उ. ४।४।१९) इत्येवमाद्यपि आत्मैकत्वप्रतिपादनपरं वचनजातं उदाहर्तव्यम् । न चान्यथा एकविज्ञानेन सर्वविज्ञानं संपद्यते । तस्मात्, यथा घटकरकाद्याकाशानां महाकाशादनन्यत्वं यथा च मृगतृष्णिकोदकादीनां ऊषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात् स्वरूपेण अनुपाख्यत्वात्, एवं अस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभावः इति द्रष्टव्यम् ।

---

[1]दृष्टनष्टस्वरूपत्वादिति । अनेन, श्रुतिसिद्धे प्रपञ्चमिथ्यात्वे अनुमानमपि दर्शितम् । विप्रतिपन्नं वियदादिकं मिथ्या, दृश्यत्वात्, [2]नाशप्रतियोगित्वात्, शुक्तिरजतादिवत्--इति अनुमानद्वयमत्र विवक्षितम् । न च--आद्यानुमाने ब्रह्मणि व्यभिचारः, 'आत्मा वाऽरे द्रष्टव्यः' इत्यादिवचनानुसारेण ब्रह्मणोऽपि दृश्यत्वावगमात्--इति वाच्यम् । आश्रयान्यूनसत्ताकत्वेन विशेषणात् । ब्रह्मणि विद्यमानं च दृश्यत्वं ब्रह्मन्यूनसत्ताकमिति, हेतोरभावात् न व्यभिचारः । न च--अनेनानुमानेन प्रपञ्चमिथ्यात्वे सिद्धे ब्रह्मणि विद्यमानस्य दृश्यत्वस्यापि [3]मिथ्यात्वसिद्धौ तस्य ब्रह्मसत्तान्यूनव्यावहारिकसत्ताकतया हेतोरभावात् न व्यभिचार इति वक्तव्यम्, तथासत्यन्योन्याश्रयः-अव्यभिचारे ज्ञाते मिथ्यात्वसिद्धिः मिथ्यात्वसिद्धौ चाव्यभिचारज्ञानमिति—इति वाच्यम् । श्रुतिसिद्धम्मिथ्यात्वमुपजीव्य अन्योन्याश्रयपरिहारात् । न च तथात्वे सिद्धसाधनम् । श्रुतिसिद्धस्यैवार्थस्य शुक्तिरजतादिदृष्टान्तोपहारमुखेन [4]सम्भावनाप्रयोजनकत्वात् ।

---

1. मु. दृष्टनष्टस्वभावत्वादिति
2. मु. विनाशप्रतियोगित्वाच्च
3. मु. मिथ्यात्वसिद्ध्या
4. **सम्भावनेति** अनुमानस्येत्यादिः । तर्काप्रतिष्ठानात् अनुमानं न निर्णायकं इत्यतो न सिद्धसाधनमिति भावः ।

**ननु–अनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाखः एवमनेकशक्तिप्रवृत्ति-युक्तं ब्रह्म । अत एकत्वं नानात्वं च उभयमपि सत्यमेव । यथा वृक्ष इत्येकत्वं शाखा इति नानात्वम् , यथा च समुद्रात्मना एकत्वं फेनतरङ्गाद्यात्मना नानात्वम् , यथा च मृदात्मना एकत्वं घटशरावाद्यात्मना नानात्वम् । तत्र एकत्वांशेन ज्ञानात् मोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति । एवं च मृदादिदृष्टान्ता अपि अनुरूपा भविष्यन्तीति ।**

---

भोक्त्रापत्तिसूत्रोक्तमेकदेशिमतं दूषयितुमनुवदति–नन्वनेकात्मकं ब्रह्मेति । अनेकशक्तिप्रवृत्तीति । शक्तयः सृष्ट्याद्यनुकूलाः, प्रवृत्तयः सृष्ट्यादिरूपाः । इदं वियदादेस्सृज्यस्याप्युपलक्षणम् । तैः परमार्थभूतैरेव युक्तमित्यर्थः । सत्यमेवेत्यन्तं संङ्ग्रहवाक्यं विवृणोति–यथा वृक्ष इत्येकत्वमिति । यथा एको वृक्षः तत्तादात्म्यापन्नाः शाखास्कन्धादयो नानाभूताः, एवं एकं ब्रह्म तत्तादात्म्यापन्ना वियदादयो नानाभूताः–इत्येको भेदाभेदपक्षः । अत्र पक्षे भेदाभेदौ न एकं धर्मिणं स्पृशतः, भेदाभेदाश्रययोर्धर्मधर्मिणोः तादात्म्यमात्राभ्युपगमात् । यथा च समुद्रात्मनैकत्वमिति । अत्र आत्मपदोपादानेन प्रकारान्तरेण भेदाभेदपक्षः सूचितः । फेनतरङ्गादिषु व्याप्तस्य अभिन्नस्यैव समुद्रस्य फेनावच्छिन्नात्स्वस्मादेव तरङ्गावच्छिन्ने स्वस्मिन् भेदः, एवं वियदादिषु व्याप्तस्य एकस्यैव ब्रह्मणः तत्तदुपाधिकृतः स्वस्मादेव स्वस्य भेदः ।

यद्यपि चेयं प्रक्रिया सिद्धान्तिनोऽपि समाना । तथाऽपि अवैदिकप्रमाणान्येव सम्मानयतः, नेहनानेत्यादिश्रुतिवचांसि तदुपबृंहकाणि च पुराणेतिहासादीनि अध्याहारलक्षणादिभिः कदर्थयतः, 'प्रपञ्चमिथ्यात्वे स्वोचितार्थक्रियाकारिता (च) वियदादेर्न स्यात्' इति मन्यमानस्यैकदेशिनो मते नानात्वं सत्यम् । श्रुतिस्मृतिपुराणेतिहासानुयायिनः, तत्स्वारस्यमनुसन्दधानस्य, स्वाप्निकपदार्थवत् मिथ्यात्वेऽपि अर्थक्रियाकारित्वोपपत्तेः नानात्वमनृतमिति सिद्धान्तिनो मतम् । अतोऽस्ति विशेषः ।

**एवं च मृदादिदृष्टान्ता अपीति ।** मृदादिदृष्टान्तेषु घटादिविकारस्य लोके अनृतत्वप्रसिद्धेरभावादिति भावः ।

नैवं स्यात्—'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्, वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्। दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिदं सर्वं तत् सत्यं' इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात्, 'स आत्मा तत्त्वमसि श्वेतकेतो' इति च शारीरस्य ब्रह्मभावोपदेशात्। स्वयं प्रसिद्धं ह्येतत् शारीरस्य ब्रह्मात्मत्वं उपदिश्यते न यत्नान्तरप्रसाध्यम्। अतश्च इदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम्। बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति, यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत। दर्शयति च 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४.५.१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्य अभावम्। न चायं व्यवहाराभावः अवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम्। 'तत्त्वमसि' इति ब्रह्मात्मभावस्य अनवस्थाविशेषनिबन्धनत्वात्। तस्करदृष्टान्तेन च अनृताभिसन्धस्य बन्धनं सत्याभिसन्धस्य च मोक्षं दर्शयन् एकत्वमेवैकं पारमार्थिकं दर्शयति, मिथ्याज्ञानविजृम्भितं च नानात्वम्। उभयसत्यतायां हि कथं व्यवहारगोचरोऽपि

---

लोकदृष्टिमपेक्ष्य मृदादिदृष्टान्तेषु विकारानृतत्वस्य श्रुत्यैवावधारणात् सिद्धान्तानुकूलमेव दृष्टान्तवाक्यं-इत्यभिप्रायेण एकदेशिमतं दूषयति—नैवं स्यादिति। जीवब्रह्मणोरैक्यं मुक्तिकाले भविष्यतीत्यौडुलोमिमतनिराकरणायाह—स्वयं प्रसिद्धं हीति। तत्त्वमसीति वर्तमाननिर्देशेन उपदेशकाल एव श्वेतकेतोः परब्रह्माभेदबोधनात् नित्यसिद्धमेव ब्रह्मत्वं जीवस्येत्यर्थः। ननु यत्रत्वस्येतिवाक्ये यत्रेत्यनेन मुक्तिदशाया अभिधानात् मुक्तिदशायामेवाद्वैतं न प्रपञ्चदशायां इति शङ्कते— न चेति। वाक्यान्तरपर्यालोचनया प्रपञ्चमिथ्यात्वेन नित्यसिद्धेऽप्यद्वैते मुक्तिदशायां मिथ्याभूतस्य दर्शनमपि नास्तीत्यभिप्रायं अस्यां श्रुतौ यत्रेतिग्रहणं--इत्यभिप्रायेण परिहरति--तत्त्वमसीति। अनवस्थाविशेषनिबन्धनत्वात्--अवस्थाविशेषनिबन्धनत्वा-

जन्तुः अनृताभिसन्ध इत्युच्येत । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. उ. ४.४।१९) इति च भेददृष्टिमपवदन् एतदेव दर्शयति। न चास्मिन् दर्शने ज्ञानान्मोक्ष इत्युपपद्यते, सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात् । उभयसत्यतायां हि कथं एकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्येत ।

ननु-एकत्वैकान्ताभ्युपगमे नानात्वाभावात् प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन् निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषादिज्ञानानि । तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात् तदभावे व्याहन्येत, मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात् तदभावे व्याघातः स्यात् । कथं च अनृतेन मोक्षशास्त्रेण प्रतिपादितस्य आत्मैकत्वस्य सत्यत्वमुपपद्येत—इति ।

अत्रोच्यते—नैष दोषः । सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः, स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः तावत् प्रमाणप्रमेयफललक्षणेषु विकारेषु अनृतत्वबुद्धिः न कस्यचिदुत्पद्यते। विकारानेव तु 'अहं' 'मम' इति अविद्ययाऽऽत्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा । तस्मात् प्राग्ब्रह्मात्मताप्रतिबोधात् उपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः ।

---

भावात् । मिथ्याऽज्ञानस्येति । मिथ्या च तत् अज्ञानं च मिथ्याज्ञानम्, अविद्या । अयं भावः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति' इत्यादिभिरैक्यप्रकरणगतैर्वाक्यैः ऐक्यज्ञानं नामरूपात्मकनानात्वस्य निवर्तकमवगम्यते, तच्च नामरूपयोराज्ञानिकत्वं विना नोपपद्यते । लोके शुक्त्यधिष्ठानकस्य रङ्गरजतादेराज्ञानिकस्यैव अधिष्ठानपरिशेषात्मकतारूपाया निवृत्तेः ज्ञानकृताया दर्शनात् । तथा च आत्माधिष्ठानकस्य नानात्वस्य आत्मैकत्वावगाहितत्त्वबोधप्रयुक्ताया अधिष्ठानपरिशेषतापत्तेरवगमात् तस्य आज्ञानिकत्वमिति । सिद्धे (च) आज्ञानिकत्वे ज्ञानस्याज्ञानविरोधित्वस्वाभाव्यात् ज्ञानेन प्रपञ्चमूलाज्ञाननिवृत्तौ सुलभो मोक्षः—इति तात्पर्येण सम्यग्ज्ञानापनोद्यत्वेन अज्ञानं विशेषितम्

यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायः तत्काले भवति, तद्वत् ।

कथं तु असत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिः उपपद्येत—न हि रज्जुसर्पेण दष्टो म्रियते, नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियते–इति । नैष दोषः—शङ्काविषादिनिमित्त-मरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादि-कार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेद् ब्रूयात्, तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतं, तथाऽपि तदवगतिः

---

'कथं चानृतेन [1]मोक्षशास्त्रेण' इत्यनेन, किं 'वेदान्तशास्त्रस्य अनृततया अर्थक्रियाकारिता न सम्भवति' इत्याक्षेपोऽभिमतः, उत 'तद्विषयस्य ज्ञानस्य भ्रम-रूपतया ततः कथं ब्रह्मविषयप्रमोत्पत्तिः'[2] इति विवक्षितम् । आद्यमनूद्य परिहरति–कथंत्वित्यादिना ।

शङ्काविषादिनिमित्तेति । नन्वत्र अनृतं शङ्कितं विषं न मरणहेतुः, अपि तु शङ्कैव, सा च सत्या । स्वाप्निकपदार्थावगमश्च साक्षिरूपः न कस्यचिदनृतस्य कार्यम् । अतो नेदं अनृतात् सत्योत्पत्तौ निदर्शनं—इति चेत्, उच्यते—विषशङ्का हि न विषं विहाय केवला मरणहेतुः, अपि तु विषविशिष्टैव । अन्यथा शङ्कासामान्यात् मरणप्रसङ्गात् । न च विषमुपलक्षणम्, [3]उपलक्ष्यतावच्छेद-काकारानुपलम्भात् । अपि च मन्दविषशङ्कायामीषद्भयं [4]तीव्रविषशङ्कायां अधिकं तीव्रतरविषशङ्कायां मरणमिति विषोत्कर्षापकर्षाभ्यां कार्ये उत्कर्षापकर्षयोर्दर्शनात् विषविशिष्टैव[5] शङ्का तत्र कारणम् ।

---

1. आ. वेदान्तशास्त्रेणेत्यनेन
2. मु. इति वा.
3. मु. उपलक्ष्यतावच्छेदकान्तरानुपलम्भात्
4. मु. तीव्रविषशङ्कायां तीव्रं
5. विशिष्टैवेति कारणवैलक्षण्यं विना कार्यवैलक्षण्यस्य अनुपपत्तेः इति भावः ।

स्वप्ने यद्यपि [1]साक्षिरूपावगतिर्नित्या, तथाऽपि [2]चाक्षुषस्पार्शनाद्यवगतिर्न नित्या। तत्र च अनृतान्येव स्वाप्नानि चक्षुरादीनि करणानि। ननु—तथासति नेदं सत्यस्यासत्यादुत्पत्तावुदाहरणं भवेत्, चाक्षुषादिप्रतीतेरपि असत्यत्वात्—इति चेत्, उच्यते—चाक्षुषत्वादिधर्मस्य तत्र बाध्यमानत्वेऽपि तदाश्रयभूतायाः साक्षिरूपायाः प्रतीतेः अबाधात् तदंशमादाय प्रतीतेः सत्यत्वं द्रष्टव्यम्।

अपि च चाक्षुषत्वादिविशिष्टतया स्वाप्नप्रतीतेरनृतत्वमुपगन्तव्यम्। तस्याश्च सत्यकार्यजनकत्वमुपलभ्यते। स्वप्ने जायमानयोः सुखदुःखयोः [3]अबाधादेव सत्यत्वमुपगतं लौकिकैः। तत्र च इष्टवस्तुदर्शने अन्यत् सुखं तत्स्पर्शने ततोऽपि विजातीयं स्वप्ने उपलभ्यते। एवमनिष्टवस्तुदर्शनस्पर्शनयोरपि दुःखे। तत्र च वैजात्योपपादकतया चाक्षुषत्वाद्याकारेणैव कारणता उपगन्तव्येति, भवति लौकिकसम्प्रतिपन्नं अनृतात् सत्यम्।

[4]अपि च सौरकिरणसन्तप्तचक्षुषः अपवरकं प्रविष्टस्य सन्तमसारोपः। तत्र तेन चानृतेन सन्तमसेन [5]भवति चाक्षुषज्ञानप्रतिबन्धः सत्यमेव कार्यं, दीपेन तदपसरणे च पुनश्चाक्षुषज्ञानोदयः।

---

1. **साक्षीति** केवलसाक्षीत्यर्थः।

2. **चाक्षुषस्पार्शनाद्यवगतिरिति** प्रातिभासिकचक्षुरादिजन्यमनोवृत्तिविशिष्टसाक्षीत्यर्थः। स्वाप्नपदार्थगोचरमनोवृत्तिसद्भावे 'तदेतत् सत्वं येन स्वप्नं पश्यति' इति श्रुतिः प्रमाणम्। तस्याश्च मनोवृत्तेः चक्षुरादिजन्यत्वे 'चक्षुषा गजादिकं पश्यामि' इत्यनुभवः प्रमाणम्। स्वप्ने व्यावहारिकेन्द्रियाणां व्यापारराहित्यरूपोपरतिश्रवणात् उक्तमनोवृत्त्युत्पादकानां चक्षुरादीनां प्रातिभासिकत्वं—इति भावः।

3. **अबाधादेवेति** स्वप्नकालीनमपि सुखभयादिकं व्यावहारिकसत्यमेव, न प्रातिभासिकम्। प्रबोधानन्तरं बाधाभावात्, तदनन्तरमप्यनुवर्तमानत्वाच्च। अत एव प्रबोधानन्तरमपि मनःप्रसादशरीरकम्पादीनां अनुभवोपपत्तिः। अत एव च पुनरपि सुखजनकगोचरस्वप्ने वाञ्छा अतादृशे च स्वप्ने द्वेषः। रागद्वेषयोर्हि सत्यसुखदुःखगोचरत्वं नियतं—इति भावः।

4. असत्यात् सत्योत्पत्तौ जागरे एव उदाहरणान्तरमाह—**अपिचेति**।

5. **मु. 'भवति' नास्ति**

**सत्यमेव फलं, प्रतिबुद्धस्याप्यबाध्यमानत्वात् । न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानः तदवगतिमपि मिथ्येति मन्यते कश्चित् ।**

**एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः । तथा च श्रुतिः 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।**

**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥' (छा. उ. ५।२।८) इति असत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति ।**

**तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु 'न चिरमिव जीविष्यतीति विद्यात्' इत्युक्त्वा 'अथ स्वप्नाः– पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' [ऐ. आ. ३. २. ४] इत्यादिना तेन तेन असत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यत इति दर्शयति । प्रसिद्धं चेदं लोके अन्वयव्यतिरेक-**

---

किं च शुक्तिरजतादेरनृतस्य स्वोचितार्थक्रियाजनकत्वादर्शनात् घटादिषु तद्वैलक्षण्यं उचितार्थक्रियाजनकतावच्छेदकतया कल्पनीयम् । तत्र [1]सत्यत्वमेव [2]श्रुतिविरुद्धं किमिति कल्प्यते । अपि तु शुक्तिरजतादीनां ज्ञातैकसत्ताकत्वं सत्यपि प्रमातरि बाध्यमानत्वं अविद्यातिरिक्तदोषजन्यत्वं इत्येवमादिरूपं प्रातिभासिकत्वम्, घटादीनां तु अज्ञातसत्ताकत्वं प्रमात्रा सहैव बाध्यमानत्वं अविद्यातिरिक्तदोषाजन्यत्वं इत्येवमादिरूपं मिथ्यात्वाविरुद्धमेव धर्मान्तरं कल्पनीयं श्रुत्यनुग्रहाय । श्रुतितात्पर्योपेतस्यार्थस्योपपादनं हि नीतिमन्तोऽनुमन्यन्ते ।

प्रसङ्गात् चार्वाकमतं निराकरोति–एतेनेति । स्वाप्नजाग्रद्देहयोर्भेदमनुभवन्नेव अबाध्यमुभयानुस्यूतमेकमात्मानमनुसन्धत्ते सर्वो लोकः । अतः सर्वप्रसिद्धं देहाभ्यां विविक्तं आत्मस्वरूपं इत्यर्थः ।

अप्रमातःकथंप्रमोत्पत्तिरितिद्वितीयाक्षेपनिराकरणं मनसि निधायाह— **तथा च श्रुतिः यदा कर्मसु काम्येष्विति ।** अप्रमारूपात् कामिनीदर्शनात् भाविनोऽभ्युदयस्यानुमितिः प्रमारूपा जायत इति भावः ।

---

1. सत्यत्वं—त्रिकालाबाध्यत्वम् ।
2. श्रुतिः—वाचारम्भणश्रुतिः नेह नानेत्यादिश्रुतिश्च ।

**कुशलानां 'ईदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते ईदृशेनासाध्वागमः' इति। तथा अकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः।**

**अपि च अन्त्यमिदं प्रमाणं आत्मैकत्वस्य प्रतिपादकं, नातः परं**

---

ननु शुभाशुभस्वप्नज्ञानमेव अभ्युदयानिष्टयोर्भाविनोरनुमापकं न तु शुभाशुभस्वप्न एव, ततश्च स्वप्नस्य भ्रमरूपत्वेऽपि तज्ज्ञानस्य प्रमात्वात् नेदमुदाहरणं भ्रमस्य प्रमोत्पादकत्वे—इति यदि [1]लिङ्गज्ञानमेवानुमितिकरणमिति मन्यमानश्शङ्केत, तत्राह—**तथा अकारादीति**।

ननु—रेखायामकाराद्यक्षरव्यञ्जकत्वज्ञानमेव, न तु रेखैवाक्षरमिति भ्रमः। यदि तु लोकानां 'इयं रेखैवाकारः' इति प्रतीत्यनुसारेण तथाभ्रम [2]एव आस्थीयते, न हि 'इयं रेखा अस्याक्षरस्य व्यञ्जिका, इयमस्य' इति लोकाः प्रतियन्ति, अपि तु 'अयमकारः' 'अयं गकारः' इत्येव; तदा रेखाक्षरातिरिक्तस्य सत्याक्षरस्य कस्य प्रतीतिः रेखाक्षरज्ञानजन्या–इति चेत्,

उच्यते—पुस्तकं पश्यतः पुंसः रेखाक्षरज्ञानानन्तरं रेखानवगाहिनी या पदवाक्यप्रतीतिः प्रमारूपा, सा [3]इह उदाहरणत्वेन विवक्षिता। अपि च धूलीपटले धूमभ्रमानन्तरं परामर्शे सति वह्निमति जायमाना वह्निमानित्यनुमितिः असल्लिङ्गपरामर्शजन्याऽपि प्रमा भवति, सति तु बाधे सल्लिङ्गपरामर्शजन्याऽपि काञ्चनमयोऽद्रिर्वह्निमानित्यनुमितिः अप्रमा भवति। अतः करणगतं प्रमात्वमप्रमात्वं वा न ज्ञानप्रामाण्याप्रामाण्ययोः प्रयोजकम्। अपि तु, बाधः अप्रामाण्ये अबाधः प्रामाण्ये इत्येवास्थेयम्। तथा च ब्रह्मणि बाधाभावात् तज्ज्ञानं प्रमाणमेव। [4]लौकिकप्रमाणानां तु नेहनानेति बाधे सत्यपि व्यावहारिकबाधाबाधाभ्यां भ्रमत्वप्रमात्वव्यवस्थेति न क्वचिदनुपपत्तिः।

यच्चोक्तं—तत्त्वमसीत्यादिवाक्यानां भेदाभेदपरत्वमास्थेयम्, एवंसति नानात्वांशेन कर्मकाण्डाश्रयो व्यवहार उपपद्यते—इति, तत्राह—**अपिचान्त्यमिदं**

---

1. लिङ्गेति 'यदा कर्मसु' इत्यादिश्रुत्युक्तस्वप्नरूपलिङ्गेत्यर्थः।
2. मु. 'एव' नास्ति
3. मु. 'इह' नास्ति
4. लौकिकप्रमाणानाम्—अनात्मविषयकज्ञानानाम्।

**किंचिदाकाङ्क्ष्यमस्ति। यथा हि लोके यजेतेत्युक्ते 'किं केन कथं' इत्याकाङ्क्ष्यते, नैवं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यदाकाङ्क्ष्यमस्ति, सर्वात्मैकत्वविषयत्वादवगतेः। सति हि अन्यस्मिन्नवशिष्यमाणेऽर्थे आकाङ्क्षा स्यात्। न त्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति, य आकाङ्क्ष्येत। न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम्। 'तद्धास्य विजज्ञौ' (छा. उ. ६।१६ ३) इत्यादिश्रुतिभ्यः। अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधानात्। न चेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुम्। अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च। प्राक्चात्मैकत्वावगतेः अव्याहतः सर्वः सत्यानृतव्यवहारो लौकिको वैदिकश्च—इत्यवोचाम। तस्मात् अन्त्येन प्रमाणेन प्रतिपादिते आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वात् न अनेकात्मकब्रह्मकल्पनावकाशोऽस्ति।**

---

**प्रमाणमिति।** ननु—'नाहं सर्वज्ञः' इति विरोधिभेदनिश्चये सति कथं अभेदगोचरःशाब्दबोधः—इत्याशङ्क्य, देहात्मज्ञानवदेव दोषमूलत्वशङ्काकलुषितस्य [1]तस्य न अभेदप्रतिपत्तिप्रतिबन्धकता इत्यभिप्रेत्याह—**न चेयमवगतिर्नोत्पद्यत इत्यादि।**

**बाधकज्ञानान्तराभावाच्चेति।** ननु - वेदान्तैः 'निष्प्रपञ्चं चैतन्यमात्रं परमार्थः' इति योऽर्थः प्रतिपाद्यते, सोऽपि सर्वशून्यताप्रतिपादकेन अवैदिकेनागमेन बाध्यत एव। न च तस्य पौरुषेयस्य [2]दोषमूलत्वसम्भवात् दुर्बलेन तेन निर्दोषापौरुषेयागमप्रतिपाद्यार्थः कथं बाध्यत इति वाच्यम्। 'सर्वोऽपि प्रपञ्चः अविद्यात्मकदोषमूलः' इति मते वेदस्यापि प्रपञ्चान्तर्गतस्य अविद्याख्यदोषमूलत्वेन साम्यात्।

[3]उच्यते—'चैतन्यमात्रं परमार्थः, जडवर्गस्तु तत्राध्यस्तोऽनृतः' इति यो वेदान्तानामर्थः तदुपपादकतया हि अविद्याख्यदोषमूलत्वं प्रपञ्चस्य कल्प्यते, लोके

---

1. मु. 'तस्य' नास्ति
2. दोषेति पुरुषभ्रमप्रमादादिदोषेत्यर्थः।
3. 'वेदान्तानां मिथ्यात्वादप्रामाण्यं' इति विशिष्टाद्वैत्युक्तदूषणमपि 'उच्यते' इत्यादिग्रन्थेन निरस्तप्रायं वेदितव्यम्।

ननु—मृदादिदृष्टान्तप्रणयनात् परिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते, परिणामिनो हि मृदादयोऽर्था लोके समधिगताः— इति,

नेत्युच्यते—'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४।२५) 'स एष नेति नेत्यात्मा' (बृ. उ. ३।९।२६) 'अस्थूलमनणु' (बृ. उ. ३।८।८) इत्याद्याभ्यः सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात्। न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम्। स्थितिगतिवत् स्यादिति चेत्, न—कूटस्थस्येति विशेषणात्। न हि कूटस्थस्य ब्रह्मणः स्थितिगतिवत् अनेकधर्माश्रयत्वं संभवति। कूटस्थं च नित्यं ब्रह्म सर्वविक्रियाप्रतिषेधात्—इत्यवोचाम। न च—यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनं एवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित् फलाय अभिप्रेयते, प्रमाणाभावात्। कूटस्थब्रह्मात्म-

---

अनृतस्य शुक्तिरजतादेः दोषमूलत्वदर्शनात्। न तु वेदान्तार्थज्ञानात् प्रागेव प्रपञ्चस्य दोषमूलत्वमवगतम्। तथा च, प्रामाण्योपपादनार्थं कल्प्यमानं दोषमूलत्वं यथा प्रामाण्यविघातकं न भवति तथैव कल्प्यते। यथा यागस्वर्गयोस्साध्यसाधनभावनिर्वाहाय कल्प्यमानमपूर्वं तदविघाताय व्यापारविधयैव कल्प्यते। तथा च, दोषाणां बहुविधत्वात् अविद्याख्यो दोषः असङ्गचैतन्ये प्रपञ्चारोपमात्रपर्यवसायी, न तु वेदान्तजन्यज्ञानस्य बाधितार्थत्वापादकोऽपि। तथैव कल्पनात्। यथा हि, असल्लिङ्गपरामर्शजननद्वारा अनुमित्युपयुक्तोऽपि दोषो वह्निमति पर्वते तस्या अप्रामाण्यापादको न भवति, एवं असङ्गसाक्षिणि वेदान्तजन्यज्ञानस्वरूपारोपहेतुरपि अविद्याख्यो दोषो न तस्य अप्रामाण्यापादको भवति। तथा च, अप्रमाणभूतेन शून्यवादेन न वेदान्तार्थबाध इति द्रष्टव्यम्।

परिणामधर्मत्वम्। परमार्थत इति शेषः। कूटस्थस्येतिविशेषणादितिसङ्ग्रहवाक्यं विवृणोति—न हीति। नित्यं विकाररहितत्वं कूटस्थत्वम्, तच्च 'सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' इत्यादिशास्त्रसिद्धम्। ननु सृष्टिवाक्यपर्यालोचनया सप्रपञ्चं ब्रह्म—इत्याशङ्क्य, निर्विशेषप्रकरणगतस्य तस्य फलवन्निषेधवाक्यशेषतया अध्यारोपपरत्वात् न सप्रपञ्चतापरत्वमित्याह—न च यथा ब्रह्मण आत्मैकत्वदर्शनमित्यादि ॥ १४ ॥

त्वविज्ञानादेव हि फलं दर्शयति शास्त्रं 'स एष नेति नेत्यात्मा' इत्युपक्रम्य 'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४।२।४) इत्येवञ्जातीयकम् ।

तत्रैतत् सिद्धं भवति—ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां, यत् तत्र अफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तत् ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, 'फलवत्संनिधावफलं तदङ्गं' इतिवत्, न तु स्वतन्त्रं फलाय कल्प्यते—इति । न हि परिणामवत्त्वविज्ञानात् परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तम्, कूटस्थनित्यत्वात् मोक्षस्य ।

कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्यात् ईशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेत्, न—अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् सर्वज्ञत्वस्य । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१) इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात् सर्वज्ञात् सर्वशक्तेरीश्वरात् जगज्जनिस्थितिप्रलयाः, न अचेतनात् प्रधानादन्यस्माद्वा—इत्येषोऽर्थः प्रतिज्ञातः 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२) इति, सा प्रतिज्ञा तदवस्थैव, न तद्विरुद्धोऽर्थः पुनरिहोच्यते ।

कथं नोच्यते अत्यन्तं आत्मन एकत्वमद्वितीयत्वं च ब्रुवता? शृणु, यथा नोच्यते—सर्वज्ञस्येश्वरस्यात्मभूते इव अविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते 'सर्वज्ञस्येश्वरस्य माया शक्तिः प्रकृतिः' इति च श्रुतिस्मृत्योरभिलप्येते । ताभ्यामन्यः सर्वज्ञ ईश्वरः, 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा. उ. ८।१४।१) इति श्रुतेः, 'नामरूपे व्याकरवाणि' (छा. उ. ६।३।२). 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' (तै. आ. ३।१२।७), 'एकं बीजं बहुधा यः करोति' (श्वे. उ. ६।१२) इत्यादिश्रुतिभ्यश्च । एवमविद्याकृतनामरूपोपाध्यनुरोधी ईश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयान् अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रति ईष्टे व्यवहारविषये ।

तदेवं अविद्यात्मकोपाधिपरिच्छेदापेक्षमेव ईश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च, न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूपे आत्मनि

ईशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते । तथा चोक्तम्—'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. उ. ७।२४।१) इति, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इत्यादिना च । एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे । तथा ईश्वरगीतास्वपि—

'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥' (भ. गी. ५।१४,१५)

इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते । व्यवहारावस्थायां तु उक्तः श्रुतावपि ईश्वरादिव्यवहारः 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृ. उ. ४।४।२२) इति । तथा ईश्वरगीतास्वपि—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ॥ (गी. १८।६१) इति ।

सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु, स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति, अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ॥१४॥

---

ननु—सिद्धान्ते समवायो नोपगम्यते, तथा च कथं मृद्घटादीनामुपादानोपादेयभावः । तद्दृष्टान्तेन च जगद्ब्रह्मणोरपि उपादानोपादेयभावो नोपपद्यते । न च संयोग एव उपादानोपादेयभावनिर्वाहक इति वाच्यम् । भूतलघटयोः सत्यपि संयोगे उपादानोपादेयभावादर्शनात्, उपादेये उपादानविश्लेषादर्शनेन संयोगसम्बन्धानुपपत्तेश्च । [1]जन्यनिरूपितसंयोगस्थले विश्लेषयोग्यत्वनियमात् । तथा च

---

1. विभुद्वयसंयोगव्यावृत्त्यर्थं जन्येति ।

## भावे चोपलब्धेः ॥ १५ ॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते नाभावे। तद्यथा—सत्यां मृदि घट उपलभ्यते, सत्सु च तन्तुषु पटः। न च नियमेन अन्यभावे अन्यस्योपलब्धिर्दृष्टा। न हि अश्वो गोरन्यः सन् गोर्भाव एव उपलभ्यते। न च कुलालभाव एव घट उपलभ्यते सत्यपि निमित्तनैमित्तिकभावे, अन्यत्वात्।

ननु अन्यस्य भावेऽपि अन्यस्योपलब्धिर्नियता दृश्यते, यथा अग्निभावे धूमस्येति। नेत्युच्यते—उद्वापितेऽप्यग्नौ गोपालघुटिकादिधारितस्य धूमस्य दृश्यमानत्वात्। अथ धूमं कयाचिदवस्थया विशिंष्यात् 'ईदृशो धूमो न असत्यग्नौ भवति' इति। नैवमपि कश्चिद्दोषः; तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः, न चासौ अग्निधूमयोर्विद्यते।

'भावाच्चोपलब्धेः' इति वा सूत्रम्। न केवलं शब्दादेव कार्यकारणयोरनन्यत्वम्, प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वम्—इत्यर्थः। भवति हि

---

नियामकसम्बन्धाभावे कथं जगद्ब्रह्मणोरुपादानोपादेयभावः। तदभावे च स्वतन्त्रस्य जगतो ब्रह्मणि निषेधेऽपि [1]न मिथ्यात्वमुपपद्यते—इत्याशङ्कानिराकरणार्थं सूत्रम्। अनेन च सूत्रेण उपादानोपादेयभावनियामकतया तादात्म्याख्यस्वरूपसम्बन्धविशेष उपपाद्यते। तथा च ब्रह्मोपादेयस्य प्रपञ्चस्य ब्रह्मणि निषेधे मिथ्यात्वं पर्यवस्यति। तदाह—इतश्च कारणादनन्यत्वमिति। तादात्म्यं इह विवक्षितमनन्यत्वम्। **न च नियमेनान्यभाव इति**। अन्यस्य-तादात्म्यरहितस्य भावे—इति।

**कयाचिदवस्थयेति**। यदवस्थाविशिष्टो धूमो विद्यमाने एव वह्नौ उपलभ्यते तया अवस्थया। **तद्भावानुरक्तां हि बुद्धिमिति**। अयं भावः—सूत्रे 'भावे' इति विषयसप्तमी। भावः-तादात्म्यम्। तथा च, उपादानोपादेययोस्तादात्म्यविषयकोपलब्धेः तयोस्तादात्म्यमुपेयम्। तथा च लोकप्रत्ययः—यः पूर्वाह्णे पिण्डो दृष्टः स

---

1. **नमिथ्यात्वमिति** जगतः ब्रह्मणोऽन्यत्र सत्तासम्भवात् इति भावः।

प्रत्यक्षोपलब्धिः कार्यकारणयोरनन्यत्वे । तद्यथा—तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नैवोपलभ्यते, केवलास्तु तन्तव आतानवितानवन्तः प्रत्यक्षमुपलभ्यन्ते, तथा तन्तुष्वंशवः अंशुषु तदवयवाः । अनया प्रत्यक्षोपलब्ध्या, लोहितशुक्लकृष्णानि त्रीणि रूपाणि, ततो वायुमात्रं आकाशमात्रं च इत्यनुमेयम् । ततः परं ब्रह्मैकमेवाद्वितीयम् , तत्र सर्वप्रमाणानां निष्ठामवोचाम ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्च कारणात् कार्यस्यानन्यत्वम्, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वं अवरकालीनस्य कार्यस्य श्रूयते । सदेव सोम्येदमग्र आसीत् (छा. उ. ६।२।१), 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. आ. २।४।१।१) इत्यादौ इदंशब्दगृहीतस्य कार्यस्य कारणेन

---

एवेदानीं घटशरावाद्यात्मना अवस्थितः इति । पाठान्तरेण सूत्रं व्याचष्टे—भावाच्चोपलब्धेरिति वेति । अर्थतस्तु न भेदः ॥ १५ ॥

उत्पत्तेः प्राक् कारणव्यतिरेकेण कार्यसत्त्वनिषेधकात् 'एकमेवाद्वितीयम्' इत्यादिवाक्यादपि कार्यस्यानृतता — इत्यभिप्रायेण सूत्रं व्याचष्टे—इतश्च कारणात् कार्यस्येति । अत्र, यद्यपि यथाश्रुतसूत्रभाष्यपर्यालोचनया 'उत्पत्तेः प्राक् कारणे कार्यस्य सत्त्वं' इत्यर्थः प्रतिभाति । तथाऽपि, उदाहृतानां वचनानां एवकारयुक्तानां, उत्पत्तेः प्राक् कार्यस्य कारणव्यतिरेकेण सत्त्वनिषेधप्रतिपादनस्वरसत्वात्, सूत्रभाष्ययोरपि तदनुसार्येवार्थो वर्णनीयः । अथ वा 'सदेव सोम्येदमग्र आसीत्' इत्यादौ एवकारेण 'सद्व्यतिरेकेण नासीत्' इति प्रतिपादिते, पुनः तं[1] विहाय 'इदं सदासीत्' इत्यंशेन आवृत्त्या अव्यतिरेकोऽपि प्रतिपाद्यते । लोके 'पार्थ एव धनुर्धरः' इत्यादौ एवकारघटितानां वाक्यानां 'पार्थान्यो धनुर्धरो न' 'पार्थो धनुर्धरः' इत्यर्थद्वयप्रतिपादकतायाः प्रतीतिसिद्धतया एवकारघटितवाक्ये आवृत्तेर्दोषत्वाभावात् । तथा च द्वितीयमर्थमादाय यथाश्रुतैव सूत्रभाष्ययोर्योजना द्रष्टव्या । अस्मिन् पक्षे साध्यभूतमनन्यत्वं तादात्म्यरूपं द्रष्टव्यम् ।

---

1. तं—एवशब्दम् ।

सामानाधिकरण्यात् । यच्च यदात्मना यत्र न वर्तते न तत् तत उत्पद्यते, यथा सिकताभ्यस्तैलम् । तस्मात्, प्रागुत्पत्तेरनन्यत्वात् उत्पन्नमप्यनन्यदेव कारणात् कार्यम्—इत्यवगम्यते ।

यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति । एकं च पुनः सत्त्वम् । अतोऽप्यनन्यत्वं कारणात् कार्यस्य ॥ १६ ॥

---

ननु—तादात्म्यं सम्बन्धिद्वयसमानकालविश्लेषसहचरितभेदशून्यत्वम् । तच्च उपादानोपादेययोः एवं पर्यवस्यति—उपादेयानुस्यूतोपादानांशे मृद्रूपे ऐक्येन भेदरूपविशेष्याभावादेव, संस्थानरूपावस्थांशे तु धर्मधर्मिभावप्रयोजकभेदे सत्यपि न तस्य सम्बन्धिद्वयकालीनविश्लेपसहचरितत्वमिति विशेषणाभावेन । ततश्च जगद्ब्रह्मणोरपि तादात्म्यं वदता जगति ब्रह्मणोऽनुस्यूतता वक्तव्या, सा तु नोपलभ्यते—इत्याशङ्कानिवर्तकतया प्रकारान्तरेण सूत्रं योजयति—यथा च कारणं ब्रह्मेति । तथा च 'सन् घटः' 'सन् पटः' इति प्रतीत्या अवरस्य-कार्यस्य सत्त्वाच्च—इति सूत्रयोजना । तथा च सद्रूपेण जगति ब्रह्मणोऽनुस्यूततया तादात्म्यमुपपन्नम् ।

ननु—'सन् घटः' 'सन् पटः' इत्यादिप्रकारेण उपलभ्यमानं न ब्रह्मरूपम्, तस्य प्रतिपदार्थं भिन्नभिन्नरूपेण प्रतीयमानस्य एकेन ब्रह्मणा अभेदायोगात् । अतः कालादिसम्बन्धित्वमेव घटादिषु सत्त्वं न तु ब्रह्म—इत्याशङ्क्याह—एकं च पुनस्सत्त्वमिति । अनुगताकारप्रतीतेः एकवस्तुविषयकतयैव उपपाद्यतया न भिन्नभिन्नदेशकालादिसम्बन्धविषयतेति भावः । ननु—अस्तु तथापि तार्किकपरिकल्पितसत्तारूपा जातिरेव तस्याः प्रतीतेः विषयः, तस्या एकत्वेन अनुगताकारप्रतीतिनिर्वाहात्—इत्याशङ्क्य, शास्त्रसिद्धोपादानरूपब्रह्मणैवानुगतप्रतीतिनिर्वाहे अतिरिक्तसत्ताजातिकल्पने प्रमाणाभावात्, तत्कल्पनेऽपि 'घटत्वं सत्' 'अभावः सन्' इत्यादिप्रतीतीनामनिर्वाहात्, तार्किकपरिभाषायां द्रव्यगुणकर्मभ्योऽन्यत्र जातेरनङ्गीकारात्, तेषु सामानाधिकरण्यसम्बन्धेन सदितिप्रतीतिनिर्वाहे द्रव्यादिषु समवायेन च तत्प्रतीतिनिर्वाहे वैरूप्यात्, सर्वत्र सद्रूपब्रह्मतादात्म्यादेव सदिति प्रतीतिः उपपादनीया—इत्यभिप्रायेणोपसंहरति—अतोऽप्यनन्यत्वमिति ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु—क्वचित् असत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः 'असदेवेदमग्र आसीत्' (छा. उ. ३।१९।१) इति, 'असद्वा इदमग्र आसीत्' (तै. उ. २।७।१) इति च। तस्मात् असद्व्यपदेशात् न प्रागुत्पत्तेः कार्यस्य सत्त्वम्—इति चेत्। नेति ब्रूमः—न ह्ययं अत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः, किं तर्हि? व्याकृतनामरूपत्वाद् धर्मात् अव्याकृतनामरूपत्वं धर्मान्तरं, तेन धर्मान्तरेण अयमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य। कथमेतदवगम्यते? वाक्यशेषात्। यत् उपक्रमे संदिग्धार्थं वाक्यं तत् शेषान्निश्चीयते। इह च तावत् 'असदेवेदमग्र आसीत्' इति असच्छब्देन उपक्रमे निर्दिष्टं यत् तदेव पुनः तच्छब्देन परामृश्य सदिति विशिनष्टि 'तत् सदासीत्' इति, असतश्च पूर्वापरकालासंबन्धात् आसीच्छब्दानुपपत्तेश्च। 'असद्वा इदमग्र आसीत्' इत्यत्रापि 'तदात्मानं स्वयमकुरुत' इति वाक्यशेषे विशेषणात् न अत्यन्तासत्त्वम्। तस्मात् धर्मान्तरेणैवायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य। नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम्, अतः प्राङ्नामरूपव्याकरणात् असदिवासीत् इत्युपचर्यते ॥ १७ ॥

---

पूर्वसूत्रे—सदेवसोम्येत्यादिवाक्यपर्यालोचनया उत्पत्तेः प्राक् कार्यस्य कारणतादात्म्यावगमात् उत्पन्नमपि तदात्मकमेव भवति—इत्युक्तं, तन्न सम्भवति। अन्यत्र उत्पत्तेः प्राक् कार्यस्य असत्त्वाम्नानेन तस्य उत्पत्तेः प्राक असत्त्वावगमात् तदानीं असता कार्येण कारणस्य तादात्म्यं कथमिति शङ्काभागतात्पर्यमाह—नन्विति। उत्पत्तेः प्राक् सूक्ष्मरूपेण सत एव कार्यस्य प्रत्यक्षाद्ययोग्यतया असद्व्यपदेशो गौणः—इत्यभिप्रायेण परिहारभागं व्याचष्टे—नेति ब्रूम इति। यद्यप्ययमर्थः 'समाकर्षात्' [ब्र. सू. १-४-१५] इति सूत्र एव व्युत्पादितः, तथापि कार्यकारणयोस्तादात्म्यव्युत्पादनाय पुनरिहानूदितः ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

**युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वं अनन्यत्वं च कारणात् अवगम्यते, शब्दान्तराच्च ।**

**युक्तिस्तावद्वर्ण्यते—दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीनि उपादीयमानानि लोके दृश्यन्ते । न हि दध्यर्थिभिर्मृत्तिकोपादीयते, न घटार्थिभिः क्षीरं, तत् असत्कार्यवादे नोपपद्येत । अविशिष्टे हि प्रागुत्पत्तेः सर्वस्य सर्वत्रासत्त्वे कस्मात् क्षीरादेव दध्युत्पद्यते न मृत्तिकायाः, मृत्तिकाया एव च घट उत्पद्यते न क्षीरात् । अथ—अविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयो न मृत्तिकायां मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीरे—इत्युच्येत, तर्ह्यतिशयवत्त्वात् प्रागवस्थाया असत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च । शक्तिश्च कारणस्य**

---

तार्किका हि—समवायिकारणात् अत्यन्तभिन्नमेव कार्यमुत्पद्यते, यथा-कपालद्वयं समवायिकारणं घटद्रव्यं कार्यं, तयोश्च द्रव्ययोः समवायः सम्बन्धः, घटरूपस्य कार्यस्य च उत्पत्तेः प्रागसत्त्वमेव, तथा च असता कथं तादात्म्यम्—इति वदन्ति । तन्मतं श्रुतियुक्तिविरोधादपाकुर्वन् उत्पत्तेः प्राक् कार्यस्य सत्त्वं तादात्म्यं च व्यवस्थापयति—युक्तेश्चेत्यादिना । [1]**तर्ह्यतिशयवत्त्वात् प्रागवस्थाया** इति । 'उत्पत्तेः प्राक् मृदि घटस्यातिशयो वर्तते' इति वदता तदानीं अतिशयेन घटस्य सम्बन्धो वर्णनीयः, न च असता घटेन तदानीं सम्बन्धो वक्तुं शक्य इति घटस्य तदानीं सत्त्वं प्राप्नोति । एवं 'उत्पत्तेः पूर्वं उपादाने घटस्य प्रागभावः' इति वदताऽपि प्रागभावप्रतियोगिताश्रयतया घटस्य सत्त्वमास्थेयम्, असत्त्वे प्रतियोगिनः निराश्रयायाः प्रतियोगिताया असम्भवादिति । नन्वतिशयापरपर्यायया शक्त्या सम्बन्धितया घटसत्त्वेऽपि कथं तस्य कारणतादात्म्यमित्याशङ्क्याह—**शक्तिश्च कारणस्येति** । अन्येत्यत्र कार्यकारणाभ्यामिति शेषः । यथा असती शक्तिः कार्यं न नियच्छेत् एवं कार्यकारणाभ्यामन्यापि न नियच्छेत् । अतः

---

1. 'अतोऽतिशयवत्त्वात्' इति आ. पाठः । स च आनन्दगिरीयानुसृतभाष्यपाठमाश्रित्य । सार्वविभक्तिकत्वात् तसिः सप्तम्यर्थे । तथा च, अतः- अस्मिन् पक्षे इत्यर्थः ।

कार्यनियमार्था कल्प्यमाना न अन्या असती वा कार्यं नियच्छेत्। असत्त्वाविशेषात् अन्यत्वाविशेषाच्च। तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यम्।

अपि च कार्यकारणयोर्द्रव्यगुणादीनां च अश्वमहिषवद्भेदबुद्धेरभावात् तादात्म्यमभ्युपगन्तव्यम्। समवायकल्पनायामपि, समवायस्य समवायिभिः संबन्धेऽभ्युपगम्यमाने तस्य तस्य अन्योऽन्यः संबन्धः कल्पयितव्य इति अनवस्थाप्रसङ्गः। अनभ्युपगम्यमाने च विच्छेदप्रसङ्गः। अथ समवायः स्वयं संबन्धरूपत्वात् अनपेक्ष्यैवापरं संबन्धं संबध्यते, संयोगोऽपि तर्हि स्वयं संबन्धरूपत्वात् अनपेक्ष्यैव समवायं संबध्येत। तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम्।

कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तते? किं समस्तेष्ववयवेषु वर्तते उत प्रत्यवयवम्? यदि तावत् समस्तेषु वर्तेत

---

कार्यकारणाभ्यामनन्यैव शक्तिरास्थेया। तथा च शक्तिद्वारकं कार्यकारणयोस्तादात्म्यमिति।

भेदबुद्धेरभावादिति। 'य एव पूर्वाह्णे मृत्पिण्डो दृष्टः स एवेदानीं घटशरावादिरूपोऽभवत्' इति तादात्म्यबुद्धेः सत्त्वाच्च इत्यपि द्रष्टव्यम्। अनभ्युपगम्यमान इति। यथा हि रज्जुस्तम्भपशवोऽसम्बद्धाः न संश्लिष्टा भवन्ति एवं कार्यकारणसमवाया अपि असम्बद्धाः नैव संश्लिष्टा भवेयुः। अनपेक्ष्यैवापरं सम्बन्धं सम्बध्यत इति। यदि तु समवायस्य समवायिभ्यां स्वरूपसम्बन्ध एव कल्प्यते, तर्हि कार्यकारणयोरपि स्वरूपसम्बन्ध एवास्तु, किं समवायकल्पनया। यद्यपि 'समवायाभ्युपगमाच्च' [ब्र. सू. २।२।१३] इति सूत्र एव समवायनिराकरणं भविष्यति, तथापि वक्ष्यमाण एवार्थ इह संक्षेपेण कार्यकारणयोस्तादात्म्यप्रसाधनाय स्मारितः।

किं समस्तेष्ववयवेष्विति। अत्रापि द्वेधा विकल्पः --- किं समस्तेषु द्वित्वादिवत्[1] व्यासज्यवृत्तित्वसम्बन्धेन वर्तते, उत समस्ते कोशे यथा असिः स्वावयवैः

---

1. व्यासज्यवृत्तित्वसम्बन्धेन—पर्याप्तिसम्बन्धेन।

ततोऽवयव्यनुपलब्धिः प्रसज्येत, समस्तावयवसन्निकर्षस्याशक्यत्वात् । न हि बहुत्वं समस्तेष्वाश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते । अथ अवयवशः समस्तेषु वर्तेत, तदाऽपि आरम्भकावयवव्यतिरेकेण अवयविनोऽवयवाः कल्प्येरन् यैः आरम्भकेष्ववयवेष्ववयवशोऽवयवी वर्तेत, कोशावयवव्यतिरिक्तैर्ह्यवयवैः असिः कोशं व्याप्नोति । अनवस्था चैवं प्रसज्येत, तेषुतेष्ववयवेषु वर्तयितुं अन्येषामन्येषामवयवानां कल्पनीयत्वात् । अथ प्रत्यवयवं वर्तेत, तदा एकत्र व्यापारे अन्यत्राव्यापारः स्यात् । न हि देवदत्तः स्रुघ्ने सन्निधीयमानः तदहरेव पाटलिपुत्रेऽपि सन्निधीयते । युगपदनेकत्र वृत्तौ अनेकत्वप्रसङ्गः स्यात् देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः । गोत्वादिवत् प्रत्येकं परिसमाप्तेः न दोष इति चेत्, न—तथा प्रतीत्यभावात् । यदि गोत्वादिवत् प्रत्येकं परिसमाप्तोऽवयवी स्यात्, यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यते एवं अवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत । न चैवं नियतं गृह्यते । प्रत्येकपरिसमाप्तौ च अवयविनः कार्येणाधिकारात् तस्य चैकत्वात् शृङ्गेणापि स्तनकार्यं कुर्यात् उरसा च पृष्ठकार्यम् । न चैवं दृश्यते ।

प्रागुत्पत्तेश्च कार्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिश्च नाम क्रिया, सा सकर्तृकैव भवितुमर्हति गत्यादिवत् । क्रिया च नाम स्यात् अकर्तृका चेति विप्रतिषिध्येत । घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका किं तर्हि अन्यकर्तृका इति कल्प्या स्यात् । तथा कपालादीनामप्युत्पत्तिरुच्यमाना अन्यकर्तृकैव कल्प्येत । तथा च सति 'घट उत्पद्यते'

---

तं तं कोशावयवं सम्बध्य वर्तते एवमवयवी तं तं अवयवं स्वावयवैः सम्बध्य-इति । आद्यं निराकरोति—यदि तावदित्यादि । अवयव्यनुपलब्धिः प्रसज्येतेति । यत्किञ्चिदवयवप्रत्यक्षेऽपि अवयविप्रत्यक्षं लोकसिद्धं, तत् अनुपपन्नम्, व्यासज्यवृत्तिधर्माणां द्वित्वादिवत् यावत्स्वाश्रयप्रत्यक्षाधीनप्रत्यक्षत्वनियमादिति । आद्यविकल्पान्तर्गतं द्वितीयं निराकरोति—अथावयवश इति । प्रत्यवयवं कार्त्स्न्येन अवयवी वर्तेत इतिद्वितीयं निराकरोति—अथेति । उत्पत्तेः प्राक् घटस्यासत्त्वेन तस्यां तस्य कर्तृत्वासम्भवेन तस्या निरात्मकता वक्तुं न शक्यते, प्राक्सतां कपालादीनामेव तस्यां कर्तृत्वसम्भवात्—इत्याशङ्क्याह—घटस्य चेति ।

इत्युक्ते 'कुलालादीनि कारणान्युत्पद्यन्ते' इत्युक्तं स्यात्। न च लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते, उत्पन्नताप्रतीतेश्च।

अथ स्वकारणसत्तासंबन्ध एव उत्पत्तिरात्मलाभश्च कार्यस्य इति चेत्, कथमलब्धात्मकं संबध्येतेति वक्तव्यम्। सतोर्हि द्वयोः संबन्धः संभवति न सदसतोः असतोर्वा।

अभावस्य च निरुपाख्यत्वात् प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम्। सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा न अभावस्य। न हि 'वन्ध्यापुत्रो राजा बभूव प्राक् पूर्णवर्मणोऽभिषेकात्' इत्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते। यदि च वन्ध्यापुत्रोऽपि कारकव्यापारादूर्ध्वमभविष्यत् तत इदमप्युपापत्स्यत-कार्याभावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति। वयं तु पश्यामः- वन्ध्यापुत्रस्य कार्याभावस्य च अभावत्वाविशेषात् यथा वन्ध्यापुत्रः कारकव्यापारादूर्ध्वं न भविष्यति एवं कार्याभावोऽपि कारकव्यापारादूर्ध्वं न भविष्यतीति।

---

उत्पत्तिर्न क्रिया, अपि तु कार्यस्य उपादानेन सत्ताजात्या वा सम्बन्ध एव, तथा च न अवश्यं कर्ता अपेक्षितः—इति शङ्कते—अथेति। '[1]अभावस्य च निरुपाख्यत्वात्' इत्यादि प्रागभावाभिप्रायम्। 'कार्याभावोऽपि कारकव्यापारादूर्ध्वम्' इति ध्वंसाभिप्रायम्। उभयोरपि अधिकरणातिरेकेणानुपलम्भात् तुच्छत्वम्, कारकव्यापारात् प्राक् कपाले 'घटो नास्ति' [2]दण्डादिव्यापातादूर्ध्वं तत्रैव 'घटो नास्ति' इति प्रतीतिश्च कपालस्वरूपविशेषविषयैव। स्वीकृतं च तार्किकैरपि 'घटभेदे घटो नास्ति' इत्यादिप्रतीतीनां स्वरूपविशेषविषयत्वम्।

---

1. 'अभावस्य च' इत्यादि 'कार्याभावोऽपि' इत्यादि च भाष्यखण्डद्वयं अभावपदस्य असदर्थकत्वमाश्रित्य व्याख्यातं सर्वैर्व्याख्यातृभिः। अत्र तु 'भविष्यति' 'बभूव' इति भाष्यपदस्वारस्यं कार्याभावपदस्य प्रसिद्धमर्थं च आश्रित्य आद्यं प्रागभावपरतया द्वितीयं ध्वंसपरतया च व्याख्यातम्।

2. मु. दण्डादिव्यापारादूर्ध्वं

ननु—एवं सति कारकव्यापारोऽनर्थकः प्रसज्येत। यथैव हि प्राक्सिद्धत्वात् कारणस्वरूपसिद्धये न कश्चिद्व्याप्रियते एवं प्राक्सिद्धत्वात् तदनन्यत्वाच्च कार्यस्य स्वरूपसिद्धयेऽपि न कश्चिद्व्याप्रियेत। व्याप्रियते च। अतः कारकव्यापारार्थवत्त्वाय मन्यामहे 'प्रागुत्पत्तेरभावः कार्यस्य' इति।

नैष दोषः। यतः कार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्य अर्थवत्त्वमुपपद्यते। कार्याकारोऽपि कारणस्यात्मभूत एव, अनात्मभूतस्यानारभ्यत्वात्—इत्यभाणि। न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति। न हि देवदत्तः संकोचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति। सएवेति प्रत्यभिज्ञानात्। तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति, 'मम पिता मम भ्राता मम पुत्रः' इति प्रत्यभिज्ञानात्। जन्मोच्छेदानन्तरितत्वात् तत्र युक्तं नान्यत्रेति चेत्, न—क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात्। अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानां अङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा, तेषामेवावयवानामपचयवशाददर्शनापत्तौ उच्छेदसंज्ञा। तत्र, ईदृग्जन्मोच्छेदान्तरितत्वाच्चेत् असतः सत्त्वापत्तिः सतश्च असत्त्वापत्तिः, तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः। तथा च बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः, पित्रादिव्यवहारलोपप्रसङ्गश्च।

---

ननु—तार्किकप्रक्रियासिद्धं प्रागुत्पत्तेःकार्यासत्त्वं यदि निराक्रियते, तर्हि किं कार्यस्य सत्त्वमेव कारकव्यापारात् प्रागविवक्षितम्? तथा सति कारकव्यापारोऽनर्थकः—इति शङ्कते—नन्वेवमिति।

नैष दोष इति। अयं भावः—तार्किकेण हि उपादानात् कपालद्वयात् अतिरिक्तमेव घटाख्यं द्रव्यं जायते, तस्य च कम्बुग्रीवादिमत्त्वं संस्थानं धर्मः इत्युच्यते। तत्तु सिद्धान्ते नोपेयते। तथा सति कपालपरिमाणं घटपरिमाणं चेति परिमाणद्वयं तथैव रूपद्वयं गुरुत्वद्वयं च उपलभ्येत। न चोपलभ्यते। अतो न द्रव्यद्वयं तत्र। अपि तु, एकस्यैव मृद्द्रव्यस्य पूर्वं पिण्डावस्था, तदनन्तरं

एतेन क्षणभङ्गवादः प्रतिवदितव्यः । यस्य पुनः प्रागुत्पत्तेरसत् कार्यं तस्य निर्विषयः कारकव्यापारः स्यात्, अभावस्य विषयत्वानुपपत्तेः आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् । समवायिकारणविषयः कारकव्यापारः स्यादिति चेत्, न—अन्यविषयेण कारकव्यापारेण अन्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्मातिशयः कार्यमिति चेत्, न—सत्कार्यतापत्तेः । तस्मात् क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारणादन्यत् कार्यं वर्षशतेनापि शक्यं निश्चेतुम् । तथा मूलकारणमेव आऽन्त्यात्कार्यात् तेन तेन कार्याकारेण नटवत् सर्वव्यवहारास्पदत्वं प्रतिपद्यते ।

एवं युक्तेः, कार्यस्य प्रागुत्पत्तेः सत्त्वं अनन्यत्वं च कारणात् अवगम्यते ।

शब्दान्तराच्चैतदवगम्यते । पूर्वसूत्रे असद्व्यपदेशिनः शब्दस्य उदाहृतत्वात् ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरं 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादि । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति च असत्पक्षमुपक्षिप्य 'कथमसतः सज्जायेत' इत्याक्षिप्य 'सदेव सोम्येदमग्र आसीत्' (छा. उ. ६।२।१) इत्यवधारयति । तत्र इदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात् सत्त्वानन्यत्वे प्रसिध्यतः । यदि तु प्रागुत्पत्तेरसत् कार्यं स्यात् पश्चाच्चोत्पद्यमानं कारणे समवेयात्, तदा अन्यत् कारणात् स्यात् । तत्र 'येनाश्रुतं श्रुतं भवति' (छा. उ. ६।१।३) इतीयं प्रतिज्ञा पीड्येत । सत्त्वानन्यत्वावगतेस्तु इयं प्रतिज्ञा समर्थ्यते ॥ १८ ॥

---

कपालाकारः, तदाच्छादनेन घटाकारः । तथाच आकारविशेषसिद्ध्यर्थं कारकव्यापार उपपद्यते । न च सत्कार्यवादे आकारविशेषस्यापि प्राक् सत्त्वात् न तदर्थमपि कारकव्यापार इति वाच्यम् । आकारविशेषाणां प्रागसत्त्वोपपत्तेः । न च तथासति सत्कार्यवादहानिः । कार्यानुस्यूतकारणस्य प्राक्सत्त्वेनैव सत्कार्य-

वादोपपत्तेः । यदि तु—प्रागसतः कम्बुग्रीवादिमत्त्वाकारस्य उत्पत्तिर्न सम्भवति, असत उत्पत्तेर्निराकृतत्वात्; तर्हि—सतोऽप्युत्पत्तिर्न सम्भवतीति, प्राक् सत्त्वासत्त्वाभ्यां निरूपयितुमशक्या आकारा अनिर्वचनीया एव भवन्तु, का नः क्षतिः—इति । अतो दुर्निरूपत्वादपि प्रपञ्चस्वरूपस्य स्वप्नादिवत् मिथ्यात्वमिति सिद्धम् ।

ननु अद्वैतं व्यवस्थापयितुं प्रपञ्चस्य मिथ्यात्वं स्वीक्रियते, तत्तु न सम्भवति । तथा हि—प्रपञ्चमिथ्यात्वं मिथ्या वा सत्यं वा । आद्ये, यथा रजते रजतत्वमिथ्यात्वस्य [1]मिथ्यात्वेन रजतत्वं सत्यं एवं प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चः सत्यस्स्यात् । अतो नाद्वैतम् । यदि तु मिथ्यात्वं सत्यं, तथासति, ब्रह्म मिथ्यात्वं च सत्यमिति सत्यपदार्थद्वैतापत्तिः ।

[2]उच्यते—मिथ्यात्वं हि [3]एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठाभावप्रतियोगित्वम् । समीचीनरजते 'नेदं रजतम्' इति ज्ञानापादितं यत् रजतत्वस्य मिथ्यात्वं प्रतियोगिताविशेषरूपं, तस्य मिथ्यात्वं रजतत्वनिष्ठात्यन्ताभावप्रतियोगितामादायैव पर्यवस्यतीति [4]रजताधिकरणावच्छेदेन रजतत्वे मिथ्यात्वस्याभावात् [5]तत्र सत्यमिति युक्तम् । प्रपञ्चस्य तु यत् मिथ्यात्वं प्रपञ्चसंसृज्यमानब्रह्मरूपाधिकरणनिष्ठाभावप्रतियोगित्वं नेहनानेत्यादिशास्त्रसिद्धं, न तस्याभावः प्रपञ्चे उपेयते । तथा

---

1. आ. मिथ्यात्वे रज.

2. प्रपञ्चमिथ्यात्वं मिथ्या—इति पक्षमवलम्ब्य समाधातुमुपक्रमते—**उच्यते** इत्यादिना । अयमर्थः—यत्र एकस्य साधकं अपरस्य बाधकं तत्र एकं सत्यम्, यथा—रजते रजतत्वमिथ्यात्वबाधकं 'इदं रजतं' इति ज्ञानं रजते रजतत्वसाधकम् । अतस्तत्र रजते रजतत्वं सत्यम् । यत्र उभयोरपि एकं बाधकं तत्र उभयोरपि मिथ्यात्वमेव । प्रपञ्चमिथ्यात्वबाधकं हि ब्रह्मज्ञानम्, न प्रपञ्चज्ञानम् । ब्रह्मज्ञानं च प्रपञ्चतन्मिथ्यात्वयोरुभयोरपि बाधकम । अतः प्रपञ्चमिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम्—इति ।

3. **एकावच्छेदेनेति** निष्ठेत्यत्रान्वेति । स्वसंसृज्यमानाधिकरणे स्वावच्छेदकावच्छिन्नवृत्तिकेति निष्ठान्तार्थः ।

4. **रजताधिकरणावच्छेदेनेति** मिथ्यात्वस्येत्यत्रान्वेति । रजतरूपाधिकरणघटितस्य मिथ्यात्वस्येत्यर्थः ।

5. **तत्रेति** रजते इत्यर्थः । रजतत्वमिति शेषः ।

## पटवच्च ॥ १९ ॥

यथा च संवेष्टितः पटो न व्यक्तं गृह्यते 'किमयं पटः किं वा अन्यद्द्रव्यम्' इति, स एव प्रसारितः 'यत् संवेष्टितं द्रव्यं तत् पट एव' इति प्रसारणेनाभिव्यक्तो गृह्यते, यथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते, स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते 'न संवेष्टितरूपादन्योऽयं भिन्नः पटः' इति, एवं तन्त्वादिकारणावस्थं पटादिकार्यं अस्पष्टं सत् तुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं गृह्यते। अतः, संवेष्टितप्रसारितपटन्यायेनैव अनन्यत् कारणात् कार्यम्-इत्यर्थः ॥ १९ ॥

## यथा च प्राणादि ॥ २० ॥

यथा च-लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्रेण रूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते न आकुञ्चनप्रसारणादिकं कार्यान्तरम्, तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमा-

---

च, यथा घटस्य घटत्वं प्रमाणसिद्धत्वात् स्वाभाविकं तथा प्रपञ्चस्य मिथ्यात्वमपि। मिथ्यात्वस्य मिथ्यात्वं तु सर्वस्यापि प्रपञ्चस्य ब्रह्मण्यभावबोधकेनागमेन सिद्धम्। मिथ्यात्वं हि प्रपञ्चान्तर्गतं घटत्वादिवत् ब्रह्माधिष्ठानकमित्युपेयम्। तथा च, यथा घटत्वादीनां ब्रह्मण्यभावबोधनात् मिथ्यात्वेऽपि न घटस्य अघटत्वम्, तत् कस्य हेतोः, घटे तदभावानङ्गीकारात्, एवं मिथ्यात्वस्यापि ब्रह्मण्यभावबोधनात् मिथ्यात्वेऽपि न प्रपञ्चस्य सत्यत्वम्, प्रपञ्चे तदभावानङ्गीकारात्। तथा च प्रपञ्चेन सहैव मिथ्यात्वस्य बाधात् 'तन्मिथ्यात्वे प्रपञ्चस्य सत्यत्वम्' इति व्यामोहमात्रम्। यथा च, घटध्वंसो घटप्रागभावध्वंसोऽपि भवतीति, प्रागभावध्वंसस्य घटस्य ध्वंसे न प्रागभावोन्मज्जनम्, एवं मिथ्यात्वबाधः प्रपञ्चबाधोऽपि भवतीति न मिथ्यात्वबाधे प्रपञ्चसत्यतापत्तिः ॥ १८ ॥ १९ ॥ २० ॥

इति आरम्भणाधिकरणम्

कुञ्चनप्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते, न च प्राणभेदानां प्रभेदवतः प्राणात् अन्यत्वं, समीरणस्वभावाविशेषात्; एवं कार्यस्य कारणादनन्यत्वम्। अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात् तदनन्यत्वाच्च सिद्धा एषा श्रौती प्रतिज्ञा 'येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातम्' (छा. उ. ६।१।३) इति ॥ २० ॥

७ इतरव्यपदेशाधिकरणम्

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते।

चेतनाद्धि जगत्प्रक्रियायामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते। कुतः? इतरव्यपदेशात्। इतरस्य-शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः, 'स आत्मा तत्त्वमसि श्वेतकेतो' (छा. उ. ६.८।७)

---

[1]तदनन्यत्वमित्यनेन जीवब्रह्मणोर्भेदस्य मिथ्यात्वसूचनेन स्वरूपैक्यं [2]विवक्षितम्, तदाक्षिप्यत इति सङ्गतिः।

जीवब्रह्मणोरैक्ये हि हिताहितादिकं जीवगतं ईश्वरस्यैवेति, सर्वज्ञः सर्वशक्तिरीश्वरो जीवाहितं न सृजेत्। न च प्रमादकृता स्वाहितसृष्टिः ईश्वरस्य सम्भवति, [3]सर्वज्ञत्वात्। सृष्टमप्यहितं सर्वशक्तित्वादेवोपसंहरेत्, हितमेव च सृजेत्। न चेष्टापत्तिः, प्रपञ्चवैचित्र्यानुपलम्भप्रसङ्गात्—[4]इत्येवमादिदोषाः जीवब्रह्मणोर्धर्माणां ऐक्यापादितं साङ्कर्यं उपजीव्य प्रवर्तन्ते। तथा च 'उक्तदोषापत्तिरूपतर्कबाध्यो भवति वा न वा वेदान्तानां प्रत्यग्ब्रह्मैक्यसमन्वयः' इति सन्देहे, उक्तदोषपरिहारासम्भवात् बाध्य एवेति पूर्वपक्षमाह—चेतनाद्धीति ॥ २१ ॥

---

1. आ. तदनन्यत्वमित्यत्र

2. विवक्षितमिति अत्र उपपत्तिः तदनन्यत्वसूत्रभाष्यव्याख्यानोपक्रमे अनन्यत्वपदार्थविमर्शनेन निरूपिता।

3. मु. स सर्वज्ञत्वात् सृष्ट

4. इत्येवमादीति आदिपदेन भाष्योक्तदोषान्तरसङ्ग्रहः।

इति प्रतिबोधनात् । यद्वा—इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति, 'तत्सृष्ट्वा । तदेवानुप्राविशत्' (तै. उ. २।६) इति स्रष्टुरेव अविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वप्रदर्शनात् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. उ. ६।३।२) इति च परा देवता जीवं आत्मशब्देन व्यपदिशन्ती न ब्रह्मणो भिन्नः शारीर इति दर्शयति । तस्मात् यत् ब्रह्मणः स्रष्टृत्वं तत् शारीरस्यैवेत्यतः स स्वतन्त्रः कर्ता सन् हितमेव आत्मनः सौमनस्यकरं कुर्यात् न अहितं जन्ममरणजरारोगाद्यनेकानर्थजालम् । न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वा अनुप्रविशति । न च स्वयमत्यन्तनिर्मलः सन् अत्यन्तमलिनं देहं आत्मत्वेनोपेयात् । कृतमपि कथंचित् यद्दुःखकरं तदिच्छया जह्यात् । सुखकरं च उपाददीत । स्मरेच्च 'मयेदं जगद्बिम्बं विचित्रं विरचितम्' इति । सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति । यथा च मायावी स्वयं प्रसारितां मायां इच्छया अनायासेनैवोपसंहरति, एवं शारीरोऽपि इमां सृष्टिं उपसंहरेत् । स्वमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम् । एवं हितक्रियाद्यदर्शनात् अन्याय्या चेतनाज्जगत्प्रक्रियेति गम्यते ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति । यत् सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्, तत् वयं जगतः स्रष्टृ ब्रूमः । न तस्मिन् हिताकरणादयो दोषाः प्रसज्यन्ते । न हि तस्य हितं किंचित्

---

भवेयुरेते दोषाः, यदि जीवब्रह्मणोरैक्येऽपि साङ्कर्यमपरिहार्यं भवेत्, न तु तदस्ति । यथा हि एकस्यैवाकाशस्य घटाद्युपाधिकल्पितभेदात् धर्माणामल्पत्वमहत्त्वादीनां व्यवस्था, यथा वा एकस्यैव मुखस्य दर्पणाद्युपाधिकृतबिम्बप्रतिबिम्बभावेन भेदात् मलिनत्वावदातत्वादिधर्मव्यवस्था, तथा एकस्यैव चैतन्यस्य आविद्यकजीवेश्वरभावेनभेदस्य अनादिसिद्धतया संसारित्वसर्वस्रष्टृत्वादिधर्मा व्यवस्थिता एव । तथा च हिताहितप्राप्त्यादिरूपः संसारो जीवस्यैव, सर्वज्ञत्वं सर्वस्रष्टृत्वं इत्येवमादयो धर्मा

कर्तव्यमस्ति अहितं वा परिहर्तव्यम्, नित्यमुक्तस्वभावत्वात्। न च तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति, सर्वज्ञत्वात् सर्वशक्तित्वाच्च। शारीरस्त्वनेवंविधः, तस्मिन् प्रसज्यन्ते हिताकरणादयो दोषाः। न तु तं वयं जगतः स्रष्टारं ब्रूमः। कुत एतत्? भेदनिर्देशात्। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. २।४।५), 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा. उ. ८।७।१), 'सता सोम्य तदा संपन्नो भवति' (छा. उ. ६।८।१), 'शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः' (बृ. उ. ४।३।३५) इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति।

ननु अभेदनिर्देशोऽपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः, कथं भेदाभेदौ विरुद्धौ संभवेयाताम्? नैष दोषः–[आकाश][महाकाश]घटाकाशन्यायेन उभयसंभवस्य तत्र तत्र प्रतिष्ठापितत्वात्।

अपि च यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेन अभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च

---

ईश्वरस्यैवेति, स्वाहितकारित्वादेः ईश्वरे अप्रसङ्गात् नोक्तदोषः। अमुमेव चाविद्यकभेदं[1]आश्रित्य 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ कर्तृकर्मभावादिनिर्देशः नाहं सर्वज्ञ इत्यादिलौकिकव्यवहारश्च।

ननु चायं जीवेश्वरविभागः पारमार्थिक एव किं न स्यात्? अत आह— अपि चेति। उपक्रमाद्यनेकतात्पर्यलिङ्गोपेतैस्तत्त्वमसीत्यादिवाक्यैः अभेदे अवधारिते क्वचित् अन्यपरेभ्यो वाक्येभ्यः प्रतीयमानो भेदो लौकिकप्रमाणावगत एव आविद्यको भविष्यति। दर्शयति च श्रुतिः मायामयत्वं भेदस्य 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' [नृ. उ. ता. उ. ९] अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' [श्वे. उ. ४. ९] इति ॥ २२ ॥

---

1. मु. 'अभिप्रेत्य'

स्रष्टृत्वम्, समस्तस्य मिथ्याऽज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात्। तत्र कुत एव सृष्टिः, कुतो वा हिताकरणादयो दोषाः। अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिः हिताकरणादिलक्षणः संसारो न तु परमार्थतोऽस्ति—इत्यसकृदवोचाम, जन्ममरणच्छेदनभेदनाद्यभिमानवत्। अबाधिते तु भेदव्यवहारे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्येवंजातीयकेन भेदनिर्देशेन अवगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचित् महार्हा मणयो वज्रवैदूर्यादयः, अन्ये मध्यमवीर्याः सूर्यकान्तादयः, अन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणाः—इत्यनेकविधं वैचित्र्यं दृश्यते, यथा च एकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनचम्पककिंपाकादिषूपलक्ष्यते, यथा च एकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति, एवमेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इत्यतः तदनुपपत्तिः—परपरिकल्पितदोषानुपपत्तिः इत्यर्थः। श्रुतेश्च प्रामाण्यात् विकारस्य च वाचारम्भणमात्रत्वात् स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः ॥ २३ ॥

---

सूत्रे आदिशब्दगृहीतान् दृष्टान्तानाह—यथा चैकपृथिवीति। मायामयेऽपि[1] जीवेश्वरविभागे मन्दमतिसमाधानाय उपपादनप्रक्रिया [2]आश्रिता, वस्तुतस्तु अनुपपत्तिः प्रपञ्चस्य स्वामिकपदार्थवत् मायामयत्वमुपोद्बलयति—[3]इत्यभिप्रेत्याह—श्रुतेश्च प्रामाण्यादिति। वैचित्र्यवच्चेति। अनुपपत्तिर्न दोषाय इति शेषः ॥ २३ ॥

इति इतरव्यपदेशाधिकरणम्

---

1. मु. 'अपि' नास्ति
2. आश्रितेति सूत्रकृता कण्ठोक्त्या इत्यादिः।
3. इत्यभिप्रेत्येति अभिप्रायश्चायं सूत्रकृताऽपि चशब्देन सूचित इति भावः।

८ उपसंहारदर्शनाधिकरणम्

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

**चेतनं ब्रह्म एकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते । कस्मात्? उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तः तत्तत् कार्यं कुर्वाणा दृश्यन्ते । ब्रह्म च असहायं तत्राभिप्रेतम्; तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत । तस्मात् न ब्रह्म जगत्कारणमिति चेत्;**

---

'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यैः अद्वितीयं ब्रह्म सृष्टेः प्रागवधार्य ततः सृष्टिराम्नायते, अयमर्थः 'यद्यत् उपादानं कर्तृकारकं च तत् इतरकारणकलापसहितमेव कार्योत्पादकम्' इति न्यायबाध्यो न वेति सन्देहः ।

पूर्वं औपाधिकं जीवब्रह्मणोर्भेदं आश्रित्य व्यवस्था [1]दर्शिता, सृष्टेस्तु[2] प्राक् उपाधितोऽपि द्वितीयं सहकारि नास्ति अद्वितीयत्वावधारणात्—इति सङ्गतिः[3] ।

ननु—सृष्टेः प्रागपि तत्तत्कार्यवासनाः सन्ति विचित्राः, सन्ति च धर्माधर्मरूपाण्यदृष्टानि । न च तथात्वे अद्वितीयत्वावधारणविरोधः । सूक्ष्मात्मना विद्यमानस्यापि नानात्वस्य अनृततया अद्वितीयत्वावधारणोपपत्तेः । मास्तु वा अन्यत् किञ्चित् सहकारि, उक्ततर्कस्याप्रयोजकतया असहायादेव सृष्टिसम्भवात्—इत्यभिप्रेत्य शङ्कते—**कस्मादिति** ।

परिहरति—**उपसंहारदर्शनादिति** । अयं भावः—असहायादेव ब्रह्मणो यदि सृष्टिः स्वीक्रियेत, तदा तस्य एकरूपत्वेन कारणवैचित्र्याभावात् कार्यवैचित्र्यं [4]आकस्मिकं स्यात् । अतो नाप्रयोजकता । न च अदृष्टवैचित्र्यादपि कार्यवैचित्र्यमुपपादयितुं युक्तम् । लोके अदृष्टातिरिक्तकारणैरेव कार्यवैचित्र्यदर्शनेन अदृष्टमात्रेण

---

1. मु. कृता
2. मु. 'तु' नास्ति
3. **सङ्गतिः**—प्रत्युदाहरणसङ्गतिः आक्षेपसङ्गतिर्वा ।
4. **आकस्मिकं स्यात्** असाधारणकारणशून्यं स्यात् । न चेष्टापत्तिः । प्रलयेऽपि कदाचित् कार्यवैचित्र्यप्रसङ्गात् ।

नैष दोषः—यतः क्षीरवत् द्रव्यस्वभावविशेषादुपपद्यते । यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमकरकादिभावेन परिणमते अनपेक्ष्य बाह्यं साधनं तथा इहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानं अपेक्षत एव बाह्यं साधनमौष्ण्यादिकं, कथमुच्यते क्षीरवद्धीति ? नैष दोषः—स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रां अनुभवति तावत्येव त्वार्यते त्वौष्ण्यादिना दधिभावाय । यदि च स्वयं दधिभावशीलता न स्यात् नैव औष्ण्यादिनापि बलात् दधिभावमापद्येत । न हि वायुराकाशो वा औष्ण्यादिना बलात् दधिभावमापद्यते । साधनसामग्र्या च तस्य पूर्णता संपाद्यते । परिपूर्णशक्तिकं तु ब्रह्म । न तस्य अन्येन केनचित् पूर्णता संपादयितव्या । श्रुतिश्च भवति—

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे.उ.६।८)

इति । तस्मात् एकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादिवद्विचित्रपरिणाम उपपद्यते ॥ २४ ॥

---

कार्यवैचित्र्यायोगात् । न च वासनावैचित्र्यात्तदुपपत्तिः । तावता विचित्रत्वोपपत्तावपि वासनानां [1]क्रमिकाणां युगपदेव विद्यमानतया वियदादिक्रमोऽनुपपन्न एव स्यात् । न च वासनापरिपाकक्रमात्तदुपपत्तिः । नियामकाभावेन परिपाकक्रमानुपपत्तेः । न च तत्र काल एव नियामको भविष्यति । तदानीं खण्डकालस्याभावात्, अखण्डस्य साधारणत्वेन क्रमनियामकत्वानुपपत्तेः । अतः असहायात् ब्रह्मणो विचित्रक्रमिकजगत्सृष्ट्यनुपपत्तिरिति ।

नैषदोष इति । अयं भावः—यथा दधिवासनोपेतं क्षीरं कालविशेषेण दधिवासनायां परिपक्वायां दध्याकारं भजते, एवं विचित्राणां वियदादिवासनानां कालविशेषेण क्रमिकपरिपाके सति विचित्रक्रमिकवियदाद्याकारतां ब्रह्मापि भजते । न च तदानीं पाकक्रमोपयुक्तक्रमिककालविशेषानुपपत्तिरिति वाच्यम् । प्रलयान्तकालो वियद्वासनायाः [2]परिपाचकः, वियदुत्पत्तिकालो वायुवासनायाः परिपाकहेतुः—इति क्रमिककालविशेषसम्भवादिति ॥ २४ ॥

---

1. **क्रमिकाणाम्**—क्रमेणोत्पन्नानामपि । 2. मु. परिपाकः

## देवादिवदपि लोके ॥ २५ ॥

स्यादेतत्—उपपद्यते क्षीरादीनामचेतनानां अनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः, दृष्टत्वात्। चेतनाः पुनः कुलालादयः साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना दृश्यन्ते। कथं ब्रह्म चेतनं सत् असहायं प्रवर्तेतेति।

देवादिवदिति ब्रूमः। यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाः चेतना अपि सन्तः अनपेक्ष्यैव किंचिद्बाह्यं साधनं ऐश्वर्यविशेषयोगात् अभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणा उपलभ्यन्ते, मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्, तन्तुनाभश्च स्वत एव तन्तून् सृजति, बलाका च अन्तरेणैव शुक्रं गर्भं धत्ते, पद्मिनी च अनपेक्ष्य किञ्चित् प्रस्थानसाधनं सरोन्तरात् सरोन्तरं प्रतिष्ठते, एवं चेतनमपि ब्रह्म अनपेक्ष्यैव बाह्यं साधनं स्वत एव जगत् स्रक्ष्यति।

स यदि ब्रूयात्—य एते देवादयो ब्रह्मणो दृष्टान्ता उपात्ताः ते दार्ष्टान्तिकेन ब्रह्मणा न समाना भवन्ति। शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादने उपादानं, न तु चेतन आत्मा। तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणात् लाला कठिनतामापद्यमाना तन्तुर्भवति। बलाका च स्तनयित्नुरवश्रवणात् गर्भं धत्ते। पद्मिनी च चेतनप्रयुक्ता सती अचेतनेनैव शरीरेण सरोन्तरात् सरोन्तरमुपसर्पति वल्लीव वृक्षं, न तु स्वयमेव अचेतना सरोन्तरोपसर्पणे व्याप्रियते। तस्मात् न एते ब्रह्मणो दृष्टान्ताः—इति,

तं प्रति ब्रूयात्—नायं दोषः, कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वात्- इति। यथा हि कुलालादीनां देवादीनां च समाने चेतनत्वे

---

पूर्वसूत्रं परमात्मन उपादानत्वोपपादकम्, इदं तु कर्तृत्वोपपादकम्। देवादीत्यादिशब्दार्थमाह—तन्तुनाभश्चेति। सौत्रलोकशब्दार्थमाह—एवं चेतनमिति। तथा च, लोक्यत इति व्युत्पत्त्या स्वप्रकाशं ब्रह्मैव लोकशब्दार्थः ॥ २५ ॥

इति उपसंहारदर्शनाधिकरणम्

कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयः, तथा ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यते—इत्येतावत् वयं देवाद्युदाहरणेन विवक्षामः। तस्मात् यथा एकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः ॥ २५ ॥

९ कृत्स्नप्रसक्त्यधिकरणम्

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्च अनपेक्ष्य बाह्यसाधनं स्वयं परिणममानं जगतः कारणमिति स्थितम्। शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति। कृत्स्नप्रसक्तिः-कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति, निरवयवत्वात्। यदि ब्रह्म पृथिव्यादिवत् सावयवमभविष्यत् ततोऽस्यैकदेशः पर्यणंस्यत् एकदेशश्च अवास्थास्यत। निरवयवं तु ब्रह्म श्रुतिभ्योऽवगम्यते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. ६।१९) 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मु. उ. २।१।२) 'इदं महद्भूतमनन्तमपारं विज्ञानघन एव' (बृ. उ. २।४।१२) 'स एष नेति नेत्यात्मा' (बृ. उ. ३।९।२६) 'अस्थूलमनणु' (बृ. उ. ३।८।८) इत्याद्याभ्यः सर्वविशेषप्रतिषेधिनीभ्यः। ततश्च एकदेशपरिणामासंभवात् कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत। द्रष्टव्यतोपदेशानर्थक्यं च आपद्येत [आपन्नम्], अयत्नदृष्टत्वात् कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽसंभवात्। अजत्वादिशब्दकोपश्च। अथ एतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्म अभ्युपगम्येत, तथाऽपि ये निरवयवत्वस्य प्रतिपादकाः शब्दा उदाहृताः ते प्रकुप्येयुः, सावयवत्वे च अनित्यत्वप्रसङ्गः—इति सर्वथा अयं पक्षो न घटयितुं शक्यत इत्याक्षिपति ॥ २६ ॥

---

'लोके सावयवानामुपादानत्वस्य दर्शनात् निरवयवं नोपादानम्' इति युक्तिबाध्यो वेदान्तसमन्वयो न वेति सन्देहे, पूर्वं विचित्रशक्तियोगात् सत्यसङ्कल्पत्वाच्च ब्रह्मण उपादानत्वं कर्तृत्वं च सम्भवतीत्युक्तम्। तत्र कृत्स्नप्रसक्त्यादिदोषेणोपादानत्वाक्षेपात् सङ्गतिः।

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्देन आक्षेपं परिहरति । न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति । न तावत् कृत्स्नप्रसक्तिरस्ति । कुतः ? श्रुतेः । यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते, प्रकृतिविकारयोर्भेदेन व्यपदेशात् 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा. उ. ६।३ २) इति, 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा. उ. ३।१२।६) इति चैवंजातीयकात् । तथा हृदयायतनत्ववचनात् सत्संपत्तिवचनाच्च । यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात् 'सता सोम्य तदा संपन्नो भवति' (छा. उ. ६।८।१) इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात् । विकृतेन ब्रह्मणा नित्यसंपन्नत्वात् अविकृतस्य च ब्रह्मणोऽभावात् । तथा इन्द्रियगोचरत्वप्रतिषेधाद्ब्रह्मणः, विकारस्य चेन्द्रियगोचरत्वोपपत्तेः । तस्मात् अस्त्यविकृतं ब्रह्म । न च निरवयवत्वशब्दकोपोऽस्ति, श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात् । शब्दमूलं च ब्रह्म शब्दप्रमाणकं न इन्द्रियादिप्रमाणकम् , तत् यथाशब्दमभ्युपगन्तव्यम् । शब्दश्च उभयमपि ब्रह्मणः प्रतिपादयति अकृत्स्नप्रसक्तिं निरवयवत्वं च । लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशात् शक्तयो विरुद्धानेककार्यविषया दृश्यन्ते । ता अपि तावत् न उपदेशमन्तरेण केवलेन तर्केण अवगन्तुं शक्यन्ते 'अस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय' इति । किमुत अचिन्त्यस्वभावस्य ब्रह्मणो रूपं विनाशब्देन न निरूप्येत ।
तथा चाहुः पौराणिकाः—

'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्,

प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥' इति । तस्मात् शब्दमूल एव अतीन्द्रियार्थयाथात्म्याधिगमः ।

ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुं 'निरवयवं च ब्रह्म परिणमते न च कृत्स्नं' इति । यदि निरवयवं ब्रह्म स्यात् नैव परिणमेत, कृत्स्नमेव वा परिणमेत । अथ केनचिद्रूपेण परिणमेत केनचिच्चावतिष्ठेत, रूपभेदकल्पनात् सावयवमेव प्रसज्येत । क्रियाविषये हि 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्येवंजातीय-

---

ननु—[1]'निरवयवं नोपादानम्' इति नास्ति नियमः । तार्किकमते निरवयवस्यैव परमाणोः उपादानत्वाभ्युपगमात्, साङ्ख्यमतेऽपि निरवयवानामेव सत्त्वरजस्तमसां उपादानत्वाभ्युपगमात् । एवं निरवयवस्य ब्रह्मण उपादानत्वं भविष्यति ! न चैवमपि निरवयवस्यैव ब्रह्मणो विकारापत्तौ उपगतायां ऐकदेशिकविकारापत्तेरसम्भवात् कृत्स्नस्य ब्रह्मणो विकारोपयुक्तत्वात् अधुना विशुद्धब्रह्मपरिशेषो न स्यादिति दोष इति वाच्यम् । भवेदयं दोषः परिणामवादे, न तु विवर्तवादे । अनृतविकारोपयुक्तस्यापि परमार्थतो विशुद्धस्य नित्यमवस्थानात् । अतः पूर्वपक्षाभावात् अयुक्तमिदमधिकरणम् । न च विवर्तवादोद्घाटनार्थमिदमधिकरणम्, [2]तदनन्यत्वमित्यत्रैव तस्योद्घाटितत्वात्—

उच्यते—मन्दमतीनां उपासनादिषूपयुक्तः आपाततः [3]प्रतीयमानः 'परमार्थतः सविशेषमेव ब्रह्म' इति वादोऽपि 'न बुद्धिभेदं जनयेत्' इत्यादिन्यायेन तत्त्वविद्भिर्व्यवह्रियते । तत्र च जगतो विवर्ततामनुद्घाट्यैव कृत्स्नप्रसक्त्यादिदोषनिवृत्तिः प्रतिपादनीया । अतो विवर्तवादोनास्तीति कृत्वाचिन्तया प्रथमं समाधानं श्रुतेस्तु शब्दमूलत्वादिति । कृत्वाचिन्तोद्घाटनं तु आत्मनि चैवं विचित्राश्च हीति ।

अपि च विवर्तवादेऽपि शङ्काविशेषोऽत्र निराकर्तव्योऽस्ति—आरोपिता हि शुक्तिरजतादयो भ्रान्तिसमानकाला एव भवन्ति । न त्वज्ञातसत्ताकाः[4] । तथा च

---

1. मु. सावयवमेव उपादानम्
2. तदनन्यत्वमित्यत्रैवेति विशिष्टाद्वैतिभिरप्युक्तमिदं दूषणम् ।
3. आ. प्रतिभासमानः
4. मु. सत्ताका एव

कायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति, पुरुषतन्त्रत्वादनुष्ठानस्य। इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः संभवति, अपुरुषतन्त्रत्वाद्वस्तुनः। तस्माद्दुर्घटमेतदिति।

नैष दोषः—अविद्याकल्पितरूपभेदाभ्युपगमात्। न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते। न हि तिमिरोपहतनयनेन अनेक इव चन्द्रमा दृश्यमानः अनेक एव भवति। अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते। वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्य न निरवयवत्वं ब्रह्मणः कुप्यति। न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात्। सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा, तत्प्रतिपत्तौ फलावगमात्। 'स एष नेति नेत्यात्मा' इत्युपक्रम्याह 'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४।२।४) इति। तस्मात् अस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति ॥ २७ ॥

---

वियदादिसृष्टितत्क्रमादेरप्यारोपितत्वे ज्ञातैकसत्ताकत्वं वक्तव्यम्। सृष्टिसमये च तज्ज्ञानं भ्रान्तिरूपं नेश्वरस्य वक्तुं शक्यम्, तस्य निर्दोषस्य भ्रान्त्यसम्भवात्। नापि जीवानां तदानीं भ्रान्तिस्सम्भवति, शरीराभावेन तदानीं सुप्तप्रायत्वात् तेषाम्। तथा च भ्रान्तिनियतस्यारोपितस्य भ्रान्त्यभावेऽसम्भवात् विवर्तवादे सृष्ट्यादिश्रुतिरसदर्थिकैव स्यात्—इति।

अस्यामाशङ्कायाः पूर्वोक्तस्य विवर्तवादस्य सारणेन इत्थं समाधानं विवक्षितं—श्रुत्या प्रपञ्चस्य मिथ्यात्वेऽवधृते अनृता अपि द्विप्रकारा भविष्यन्तीति कल्प्यते-शुक्तिरजतादयो ज्ञातैकसत्ताकाः, सृष्ट्यादयस्तु स्वसमानकालभ्रान्त्यभावेऽपि स्वरूपेणारोपिताः—इति। सर्गप्रतिपादकश्रुतिकृता तु परोक्षभ्रान्तिः सर्गानन्तरं जीवानां सम्भवत्येव—इति।

यथा च आत्मनि विचित्रा स्वाप्नरथादिसृष्टिः स्वरूपानुपमर्देनैव, यथा च मायाविनि स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयः, एवं ब्रह्मण्यपि स्वरूपानु-

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अपि च नैवात्र विवदितव्यं 'कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैव अनेकाकारा सृष्टिः स्यात्' इति । यतः आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैव अनेकाकारा सृष्टिः पठ्यते 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' (बृ. उ. ४।३।१०) इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथा एकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैव अनेकाकारा सृष्टिर्भविष्यतीति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

परेषामप्येष समानः स्वपक्षे दोषः । प्रधानवादिनोऽपि हि 'निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणम्' इति स्वपक्षः । तत्रापि कृत्स्नप्रसक्तिः निरवयवत्वात् प्रधानस्य प्राप्नोति निरवयवत्वाभ्युपगमकोपो वा । ननु–नैव तैर्निरवयवं प्रधानमभ्युपगम्यते, सत्त्वरजस्तमांसि त्रयो गुणा नित्याः तेषां साम्यावस्था प्रधानं, तैरेवावयवैः तत् सावयवमिति । न एवञ्जातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते । यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम्, एकैकमेव च इतरद्वयानुगृहीतं सजातीयस्य प्रपञ्चस्य उपादानमिति । समानत्वात् स्वपक्षदोषप्रसङ्गस्य तर्काप्रतिष्ठानात् । सावयवत्वमेवेति चेत्, एवमप्यनित्यत्वादिदोषप्रसङ्गः । अथ शक्तय एव कार्य-

---

पमर्देनैव विचित्रा वियदादिसृष्टिर्भविष्यतीति सूत्रं योजयति—अपि चेति ॥ २६-२७-२८ ॥

समानत्वात्स्वपक्षदोषप्रसङ्गस्य तर्काप्रतिष्ठानादिति । प्रतिष्ठितस्तर्कः स भवति यः परपक्ष एव दूषणमापादयेत्, यस्तु स्वपक्षे परपक्षे च दूषणमावहति, नासौ प्रतिष्ठितस्तर्क इति भावः । सत्त्वरजस्तमसामपि प्रत्येकं सावयवत्वमेवास्त्विति शङ्कते—सावयवत्वमेवेति । एवमप्यनित्यत्वादीति । आदिपदेन तेषामप्यवयवानामवयवान्तरं उत्तरोत्तरं प्रसज्यत इत्यनवस्था दर्शिता ।

वैचित्र्यसूचिता अवयवा इत्यभिप्रायः, तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः। तथा—अणुवादिनोऽपि अणुः अण्वन्तरेण संयुज्यमानो निरवयवत्वात् यदि कात्स्न्येंन संयुज्येत ततः प्रथिमानुपपत्तेः अणुमात्रत्वप्रसङ्गः, अथ एकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोपः, इति स्वपक्षेऽपि समान एष दोषः। समानत्वाच्च न अन्यतरस्मिन्नेव पक्षे उपक्षेप्तव्यो भवति। परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः ॥ २९ ॥

१० सर्वोपेताधिकरणम्

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगात् उपपद्यते विचित्रो विकार-प्रपञ्चः—इत्युक्तम्। तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति? तदुच्यते—सर्वोपेता च तद्दर्शनात्। सर्वशक्तियुक्ता च परा देवतेत्यभ्युप-गन्तव्यम्। कुतः? तद्दर्शनात्। तथा हि दर्शयति श्रुतिः सर्वशक्तियोगं

---

तथाऽणुवादिनोऽपीति। इयं हि तार्किकप्रक्रिया—परमाणुर्निरवयवः। द्वयोश्च परमाण्वोः संयोगे द्व्यणुकाख्यं कार्यं ततोऽधिकपरिमाणं जायते—इति। तत्र द्वयोः परमाण्वोस्संयोगः किं व्याप्यवृत्तिः अव्याप्यवृत्तिर्वा। आद्ये परमाणु-मपेक्ष्य द्व्यणुकस्य प्रथिमा नोपपद्यते। व्याप्यवृत्तिता हि संयोगस्य तदा स्यात्, यावति देशे एकः परमाणुः सम्मितः तावत्येव देशे यद्यपरोऽपि सम्मितो भवेत्। तथा च न प्रथिमा सम्भवति। सति प्रथिम्नि परमाणुदेशापेक्षया द्व्यणुकस्याधिक-देशव्याप्तेरावश्यकत्वात्। अथाव्याप्यवृत्तिरण्वोस्संयोगः, तथा सति द्वयोर्मृत्पिण्ड-योरेकैकपार्श्वसंयोगेन महतो मृत्पिण्डस्येव अण्वोरप्येकैकपार्श्वसंयोगेन द्व्यणुकारम्भे प्रथिमा सम्भवति। परं त्वव्याप्यवृत्तित्वे संयोगस्य तत्रैवाभावो वक्तव्यः। तयोश्चसंयोगतदभावयोर्विरोधपरिहाराय वृक्षादिषु शाखामूलादिरूपावयवा इव नेह अवयवभेदा अवच्छेदकास्सम्भवन्ति निरवयवत्वात्। न च दिग्भेदा एवावच्छेदका भविष्यन्ति। तेषामप्यसंयुक्तानां अवच्छेदकत्वासम्भवेन संयोगाङ्गीकारे पूर्वोक्त-विकल्पानतिवृत्तिः ॥ २९ ॥

इति कृत्स्नप्रसक्त्यधिकरणम्

परस्या देवतायाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः (छा. उ. ३।१४।४), 'सत्यकामः सत्यसंकल्पः' (छा. उ. ८।७।१), 'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. १।१।९), 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ. उ. ३।८।९) इत्येवंजातीयका ॥ ३० ॥

## विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

स्यादेतत्—विकरणां परां देवतां शास्ति शास्त्रं 'अचक्षुष्कमश्रोत्रमवागमनः' (बृ. उ. ३।८।८) इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत्? देवादयो हि चेतनाः सर्वशक्तियुक्ता अपि सन्तः आध्यात्मिककार्यकरणसंपन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते । कथं च 'नेति नेति' (बृ. उ. ३।९।२६) इति प्रतिषिद्धसर्वविशेषाया देवतायाः सर्वशक्तियोगः संभवेदिति चेत्;

---

निरवयस्यापि ब्रह्मणो विचित्रशक्तियोगात् न कृत्स्नप्रसक्त्यादिदोषः-इत्युपपादितम्, तन्न सम्भवति, शरीरेन्द्रियरहितस्य विचित्रशक्तियोग एव न सम्भवति—इत्याक्षिप्यते । अतस्सङ्गतिः ।

'यः शरीरी स एव शक्तियोगात् सृजति नाशरीरः' इतिन्यायापनोदनीयो वा न वा 'अशरीरस्यैव ब्रह्मणो जगत्स्रष्टृत्वं इत्येवंविषयको वेदान्तसमन्वयः' इति सन्देहे उक्तन्यायस्यानाभासत्वात् बाधनीय एवेति पूर्वः पक्षः । न च 'अन्तर्याम्यधिदैवादिषु' इत्यनेन पुनरुक्तता । तत्र हि अशरीरस्यापि परमात्मनः अविद्याशक्तियोगात् अन्तर्यामिता भविष्यतीत्युक्तम्, इह तु देहेन्द्रियरहितस्य अविद्याशक्तिरेव न सम्भवतीति शङ्कयते । सर्वकर्मेति । यद्यपि सर्वं कर्म-कार्यं यस्येति व्युत्पत्त्या सर्वकर्तृत्वादिकमेव उदाहृतश्रुत्या प्रतिपाद्यते, तथाऽपि कार्यैकोन्नेया शक्तिः सर्वकर्तृत्वाद्यन्यथानुपपत्त्या कल्प्यत इति तात्पर्यम् ॥ ३० ॥

पूर्वसूत्रसूचितं पूर्वपक्षमनूद्य तद्दूषणाय इदं सूत्रम् । करणानि इन्द्रियाणि । तानि शरीरस्याप्युपलक्षणानि । तथा च शरीरेन्द्रियरहितत्वादिति शङ्काभागगतहेतोरर्थः । तदुक्तमित्येतत् 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रोक्तत्वाभिप्रायेण

यदत्र वक्तव्यं तत् पुरस्तादेवोक्तम्—श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम्, न च यथैकस्य सामर्थ्यं दृष्टं तथा अन्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्ति—इति। प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः संभवतीत्येतदपि अविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव। तथाच शास्त्रम्–'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे. उ. ३।१९) इति अकरणस्यापि ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयति ॥३१॥

११ नप्रयोजनवत्त्वाधिकरणम्

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

अन्यथा पुनः चेतनकर्तृत्वं जगत आक्षिपति। न खलु चेतनः परमात्मा इदं जगद्बिम्बं विरचयितुमर्हति। कुतः? प्रयोजनवत्त्वात् प्रवृत्तीनाम्। चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत् प्रवृत्तिं आत्मप्रयोजनानुपयोगिनीं आरभमाणो दृष्टः। किमुत गुरुतरसंरम्भाम्। भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः—'न वा अरे

---

व्याचष्टे—श्रुत्यवगाह्यमिति। 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रोक्तत्वाभिप्रायेण व्याचष्टे—प्रतिषिद्धेति। यथा देवादीनां बाह्यसाधनानपेक्षाणामपि श्रुतिप्रामाण्यात् सङ्कल्पमात्रेण विचित्रसृष्टिकर्तृत्वं कुलालादिष्वदृष्टमपि उपेयते, यथा वा विद्यमानशरीराभिमानरहितस्यापि स्वप्नभुजो वासनामात्रेणैव विचित्रसृष्टिकर्तृत्वं प्रत्यक्षदृष्टत्वादेव उपेयते, तथा अशरीरस्यापि परमात्मनो विचित्रशक्तियोगोपपत्त्या स्रष्टृत्वं श्रुतिप्रामाण्यादेव उपेयमिति परिहाराभिप्रायः। न चैवं 'श्रुतेस्तु शब्दमूलत्वात्' इत्यनेनैव गतार्थता। निराकर्तव्यतर्कभेदात् ॥ ३१ ॥

इति सर्वोपेताधिकरणम्

'अवाप्तसकलकामत्वात् [1]प्रयोजनोद्देशरहितोऽपि परमात्मा प्रपञ्चस्रष्टा' इति प्रतिपादयद्वेदान्तवाक्यं 'या या प्रेक्षावतः प्रवृत्तिः सा प्रयोजनोद्देशपूर्विका' इति न्यायबाध्यं न वेति सन्देहे, सर्वशक्त्युपेतस्यापि परमात्मनः प्रयोजनोद्देशाभावात् न स्रष्टृत्वमिति पूर्वाधिकरणेनाक्षेपिकीं सङ्गतिं मनसि निधाय पूर्वपक्षमाह—न खल्विति ॥ ३२ ॥

---

1. प्रयोजनोद्देशः—प्रयोजनेच्छा।

सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' (बृ. उ. २।४।५) इति । गुरुतरसंरम्भा चेयं प्रवृत्तिः, यत् उच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् । यदि इयमपि प्रवृत्तिः चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत । प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात् । अथ—चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधात् अन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टः, तथा परमात्मापि प्रवर्तिष्यते—इत्युच्येत । तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत । तस्मात् अश्लिष्टा चेतनात् सृष्टिरिति ॥ ३२ ॥

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुशब्देन आक्षेपं परिहरति । यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किंचित् प्रयोजनं अनभिसंधाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति, यथा च उच्छ्वासप्रश्वासादयः अनभिसंधाय बाह्यं किंचित् प्रयोजनं स्वभावादेव संभवन्ति, एवमीश्वरस्यापि अनपेक्ष्य

---

कैवल्यमित्यत्र स्वार्थे ष्यञ्, वैशेष्यादितिवत् । लीलाशब्दो विलासवचनः क्रियावचनश्च । 'लीला क्रिया विलासश्च' इति वचनात् । विलासो द्विविधः— उद्यानविहारादिरूपः, सुखोद्रेके हासगानादिरूपश्च । तत्र उद्यानविहारादिरूपे किञ्चित्प्रयोजनोद्देशः सम्भाव्येतापि । सुखितस्य हासगानादिरूपे तु न किमपि सम्भाव्यते । दुःखोद्रेके रोदनाश्रुमोचनादिवत् । तथा च [1]सप्रयोजनविलासव्यावृत्त्यर्थं कैवल्यपदं इत्यभिप्रेत्य व्याचष्टे—**यथा लोक** इत्यादिना । लीलापदस्य क्रियार्थत्वमादाय दृष्टान्तमाह—**यथा चोच्छ्वासेति** । क्रियाऽपि द्विविधा— प्रयोजनोद्देशयुक्ता तद्रहिता च । गमनादिरूपा प्रयोजनोद्देशयुक्ता प्रसिद्धा । श्वासादिरूपा स्वाभाविकी प्रयोजनोद्देशरहिता, स्वापेऽपि दर्शनात् । सम्भाषणकाले अङ्गुल्यादिचालनरूपा यादृच्छिकी च प्रयोजनोद्देशरहिता । तथा च प्रयोजनोद्देशयुक्तक्रियाव्यावृत्तये कैवल्यपदम् । तथा च विलासस्वाभाविकयादृच्छिकप्रवृत्तिषु

---

1. आ. सप्रयोजनलीलाव्यावृत्त्यर्थं

**किंचित् प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । न हि ईश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा संभवति । न च स्वभावः पर्यनुयोक्तुं शक्यते । यद्यप्यस्माकं इयं जगद्विम्बविरचना गुरुतरसंरम्भेवाभाति, तथाऽपि परमेश्वरस्य लीलैव केवलेयम्, अपरिमित-शक्तित्वात् । यदि नाम लोके लीलास्वपि किंचित् सूक्ष्मं प्रयोजनमुत्प्रेक्षेत, तथाऽपि नैवात्र किंचित् प्रयोजनं उत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः । नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा, सृष्टिश्रुतेः सर्वज्ञश्रुतेश्च । न चेयं परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रति-पादनपरत्वाच्च—इत्येदपि नैव विस्मर्तव्यम् ॥ ३३ ॥**

---

प्रेक्षावत्प्रवृत्तित्वरूपहेतोः सत्त्वेऽपि प्रयोजनोद्देशपूर्वकत्वरूपसाध्याभावेन व्यभिचारात् न अनेन तर्केण श्रुतिबाधो न्याय्यः ।

ननु 'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' इति श्वेताश्वतरमन्त्रे स्वभाववादं प्रति-क्षिप्य महिमशब्देन क्रीडापक्षो व्यवस्थापितः । माण्डूक्यश्रुतौ तु 'क्रीडार्थं सृष्टि-रित्यन्ये भोगार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति क्रीडापक्षं प्रतिक्षिप्य स्वभावपक्षः व्यवस्थापितः । अतः श्रुतिद्वयविरोधात् सृष्टिः क्रीडेति वा स्वभाव इति वा आस्थातुं न शक्यत इति चेत्,

उच्यते—श्वेताश्वतरे प्रतिक्षेप्यः स्वभावपक्षः, यथा भोजनशयनादिरूपा स्वाभाविकी चेष्टा प्रयोजनोद्देशपूर्विका भवति नैवं परमात्मनः सृष्टिः—इत्यभिप्रायेण । माण्डूक्ये प्रतिक्षेप्यः क्रीडापक्षोऽपि, यथा वनविहारादिरूपा क्रीडा ईषत्प्रयोज-नोद्देशपूर्विका भवति नैवं परमात्मनः सृष्टिः—इत्यभिप्रायेण । प्रयोजनोद्देश-रहिततया स्वभावरूपा वा क्रीडारूपा वा परमात्मनस्सृष्टिः—इति श्रुतिद्वयपर्या-लोचनया पर्यवसितोऽर्थः ॥ ३२ ॥

**इति नप्रयोजनवत्त्वाधिकरणम्**

यः कस्यचित् दुःखं सम्पादयति कस्यचित् सुखं स पक्षपातित्वेन सावद्य इति, यश्च हिंसकः सोऽपि सावद्य इति प्रसिद्धम् । परमात्मा च सुखदुःखतत्सा-धनयुक्ततया विचित्रं जगत् सृजति, प्रलयसमये च युगपदेव सर्वान्नाशयति-

## १२ वैषम्यनैर्घृण्याधिकरणम्

# वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखननन्यायेन प्रतिज्ञातस्यार्थस्य दृढीकरणाय।

न ईश्वरो जगतः कारणमुपपद्यते। कुतः? वैषम्यनैर्घृण्यप्रसङ्गात्। कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः पश्वादीन्, कांश्चित् मध्यमभोगभाजो मनुष्यादीन्-इत्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत। तथा खलजनैरपि जुगुप्सितं निर्घृणत्व-

---

इत्यतः सावद्यः प्रसज्येत। तथा च 'निरवद्यस्सन् परमात्मा विचित्रं जगत् सृजति संहरति च' इति वदत् वेदान्तवाक्यं उक्ततर्कबाध्यं न वेति संशयः। अस्तु प्रयोजनोद्देशरहिता सृष्टिः, तथापि सावद्यतापादकतया [1]न [2]परमात्मनः [3]सा भवतीति पूर्वोक्तार्थाक्षेपात् सङ्गतिः।

ननु—'तर्काप्रतिष्ठानात्'[4]इति प्रबलप्रमाणविरोधे तर्काप्रतिष्ठानम्, 'श्रुतेस्तु शब्दमूलत्वात्' इत्यत्र 'श्रुत्यवगाह्यं परमात्मतत्त्वम्, न तत्र तर्कस्यावसरोऽस्ति साधकतया बाधकतया वा, यथा चक्षुषः शब्दे, [5]श्रुतिबाधितत्वादेव च तद्विरुद्धास्तर्का आभासतां प्रतिपद्यन्ते' इति निरूपितम्। अतः किमर्थं पुनःपुनः तर्कनिमित्त आक्षेपः क्रियते?—इत्याशङ्क्य, यद्यप्ययं पारमार्थिकः परिहारोऽस्ति, तथापि तर्कमेव बहुमन्यमानं प्रति तदुद्भावितानां तर्काणां प्रातिस्विकवेषेणाभासतास्फुटीकरणेन तर्काप्रतिष्ठानमेव प्रपञ्च्यते, अतो नानुपपत्तिः—इति परिहरति—स्थूणानिखननन्यायेनेति।

---

1. मु. 'न' नास्ति
2. परमात्मन इति कर्तरि षष्ठी।
3. आ. संभवतीति
4. इति—इत्यत्र।
5. आ. श्रुतिबोधित

मतिक्रूरत्वं दुःखयोगविधानात् सर्वप्रजोपसंहाराच्च प्रसज्येत । तस्मात् वैषम्यनैर्घृण्यप्रसङ्गात् न ईश्वरः कारणम्—

इत्येवं प्राप्ते ब्रूमः—वैषम्यनैर्घृण्ये न ईश्वरस्य प्रसज्येते । कस्मात्? सापेक्षत्वात् । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च । न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते । किमपेक्षत इति चेत्, धर्माधर्मावपेक्षत इति वदामः । अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः ।

ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ

---

क्वचिद्रागः क्वचिद्द्वेषः इत्येवंरूपं वैषम्यं, नैर्घृण्यं-निर्दयत्वं, इदमुभयमपि न प्रसज्यते परमात्मनि, धर्माधर्मसापेक्षत्वाद्विषमसृष्टौ[1]—इति सूत्रं योजयन् सिद्धान्तमाह—वैषम्यनैर्घृण्ये इति ।

ननु—धर्माधर्मसापेक्षतया विषमस्रष्टृत्वमस्तु । तावता पूर्वपक्षोद्भावितस्य तर्कस्य को दोष उद्भावितः । कथञ्च अदृष्टमात्रेण वैषम्यम्? वैषम्ये सर्वत्र दृष्टकारणापेक्षत्वात्;

उच्यते—लोके प्राणिषु सुखदुःखादिकं वैषम्येण सम्पादयतोऽपि धार्मिकस्य राज्ञो नास्ति सावद्यत्वप्रसिद्धिः । तत् कस्य हेतोः? अपराधाद्यपेक्षित्वात् । ये ह्यपराधिनः तान् दण्डयन् न्यायानुसारिणो जनान् अनुगृह्णंश्च राजा समीचीन एवेति लोके प्रसिद्धम् । तथा चोरान्निघ्नन्नपि । प्रत्युत [2]न्यायानुसारात् अपराधभाजो जनान् अविविच्य [3]साम्येन व्यवहरन्नेव राजा सावद्यो भवति । तथा च सुखदुःखादिसम्पादके राजनि हेतोस्सत्त्वेऽपि सावद्यत्वप्रसिद्धेरभावात् व्यभिचार [4]उक्तः तर्के । न च अदृष्टमात्रेणैव वैचित्र्यं प्रतिपादयामः, किं तु तत्तद्धर्माधर्मानुसारेण तां तां दृष्टसामग्रीं सम्पादयन्नेव ईश्वरः सुखदुःखकारणं भवतीति ।

---

1. मु. विषमसृष्टेः
2. न्यायानुसारात्—न्यायानुसारिजनात् ।
3 स्वाम्येनेति मुद्रितपाठे प्रभुताबलेनेत्यर्थः ।
4. आ. उक्ततर्के

**साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येव असाधारणानि सामर्थ्यानि कारणानि भवन्ति; एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति, देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येव असाधारणानि कर्माणि कारणानि भवन्ति। एवं ईश्वरः सापेक्षत्वात् न वैषम्यनैर्घृण्याभ्यां दुष्यति। कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति ?। तथा हि दर्शयति श्रुतिः 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' (कौ. ब्रा. उ. ३।८) इति। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ. उ. ३।२।१३) इति च। स्मृतिरपि प्राणिकर्म-**

---

न च—एवमपि प्रलयस्य न धर्माधर्मनिमित्तता सम्भवति। न हि तदानीं सुखं दुःखं वा विद्यते, [1]मौढ्यापत्तेः। यद्यपि च प्रलयारम्भे दुःखं सम्भाव्येत, तथापि न तस्य पापनिमित्तता वक्तुं शक्यते, न हि युगपदेव सर्वेषां पापान्युद्भूतानीति सम्भावयितुं शक्यम्—इति साम्प्रतम्। यथा हि वसन्तादिषु युगपदेव पुष्पोद्गमदर्शनात् तद्वासनानां युगपदेव उद्बोधः कल्प्यते, [2]यथा वा हेमन्तादिषु [3]तुषारादिसम्पर्कजनितस्य दुःखस्य युगपदेव दर्शनात् तत्प्रयोजकस्य पापादेः युगपदेवोद्बोधः कल्प्यते, एवं प्रलयारम्भे सर्वेषां [4]दुःखोपजनस्य युगपदेव दर्शनात् तत्प्रयोजकपापोद्बोधस्य यौगपद्ये नानुपपत्तिः। प्रलये तु यद्यपि न दुःखादिकं, तथापि धर्माधर्मयोः नायं फलप्रापणकाल इत्यनुसन्धाय ईश्वरः तदानीं भोगसाधनानि [5]न सृजति। अतः सृष्टिस्थितिप्रलयसम्पादकोऽपीश्वरो न सावद्य इति।

---

1. **मौढ्यापत्तेः**—विशेषविज्ञानशून्यतारूपमौढ्यप्राप्तेः।
2. आ. तथा
3. आ. तुषारजनितस्य
4. आ. दुःखोपजननस्य
5. **न सृजतीति** तथा च फलजननोन्मुख्यशून्यौ धर्माधर्मौ प्रलयनिमित्ततां भजत इति भावः।

विशेषापेक्षमेव ईश्वरस्य अनुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ. गी. ४।११) इत्येवंजातीयका ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६।२।१) इति प्राक्सृष्टेः अविभागावधारणात् नास्ति कर्म, यदपेक्ष्य विषमा सृष्टिः स्यात्। सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म कर्मापेक्षश्च शरीरादिविभाग इति इतरेतराश्रयत्वं प्रसज्येत। अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम। प्राग्विभागात् वैचित्र्यनिमित्तस्य कर्मणोऽभावात् तुल्यैव आद्या सृष्टिः प्राप्नोतीति चेत्;

नैष दोषः—अनादित्वात् संसारस्य। भवेदेष दोषः, यद्यादिमान् संसारः स्यात्। अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिः न विरुध्यते ॥ ३५ ॥

कथं पुनरवगम्यते 'अनादिरेष संसारः' इति? अत उत्तरं पठति—

---

न च—पुण्यपापाभ्यां सुखदुःखवैचित्र्योपपत्तेः न वैषम्यादिदोषः इति परिहारेऽपि, पुण्यवतः कांश्चित् पापवतः कांश्चित् सृजतीति वैषम्यं पुनरपि प्राप्तम्—इति वाच्यम्। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्यादिवचनानुसारेण, पुण्यपापसृष्टावपि पूर्वपूर्वपुण्यपापापेक्षत्वात् ॥ ३४ ॥

सृष्टेः प्राक् अविभागात्, सदेवेत्यादिवाक्यपर्यालोचनया एकत्वावगमात्, नास्ति कर्म, तथा च आद्या सृष्टिः कथं विषमा स्यात्—इति शङ्काभागं व्याचष्टे—सदेवेति। यद्यपि न अनया श्रुत्या सूक्ष्मावस्थं कर्मादि स्वरूपतो व्यावर्त्यते, तथापि आपाततःप्रतीतार्थमादाय शङ्का। पूर्वकल्पकृतानां कर्मणां प्रलये सूक्ष्मावस्थानां विद्यमानत्वात् तदनुसारेण सृष्ट्यारम्भेऽपि वैषम्यमुपपद्यत इति परिहाराभिप्रायः ॥ ३५ ॥

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

उपपद्यते च संसारस्यानादित्वम् । आदिमत्त्वे हि संसारस्य अकस्मादुद्भूतेः मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः, अकृताभ्यागमप्रसङ्गश्च । सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात् । न चेश्वरो वैषम्यहेतुः इत्युक्तम् । न चाविद्या केवला वैषम्यस्य कारणं, एकरूपत्वात् । रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात् । न च कर्म अन्तरेण शरीरं संभवति न च शरीरमन्तरेण कर्म संभवतीति, इतरेतराश्रयत्वप्रसङ्गः । अनादित्वे तु बीजाङ्कुरन्यायेनोपपत्तेः न कश्चिद्दोषो भवति ।

उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावत् 'अनेन जीवेनात्मना' (छा. उ. ६।३।२) इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेन अभिलपन् अनादिः संसार इति दर्शयति । आदिमत्त्वे तु प्रागधारितप्राणः सन् कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखे अभिलप्येत । न च धारयिष्यतीत्यतोऽभिलप्येत । अनागताद्धि संबन्धात्

---

**मुक्तानामपीति** । येन हि संसारस्यानादित्वं नोपेयते तन्मते आद्यसर्गो निर्निमित्त एवास्थेयः । तथा च अनन्तरसर्गस्यापि निर्निमित्तत्वसम्भवात् मुक्तानां अविद्यादिसंसारनिमित्ताभावेऽपि संसारप्रसङ्गः कथं वारयितुं शक्य इति भावः । अकृताभ्यागमः-अकृतयोरेव पुण्यपापयोः सतोः सुखदुःखाभ्यागमः । **निर्निमित्तत्वादिति** । सर्गारम्भे इति शेषः । **नचाविद्येति** । मूलाविद्येत्यर्थः । **रागादीति** । रागद्वेषमोहाः, पुरुषं क्लिश्नन्तीति क्लेशाः, तेषां या वासना-सूक्ष्मावस्था, तया आक्षिप्तं-सहकृतं कर्म, तदपेक्षेत्यर्थः । **न च कर्मान्तरेणेति** । कर्मपदं द्वितीयान्तम् । **न च धारयिष्यतीति** । यथा 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तुषोपवापकाले कपालानां पुरोडाशसम्बन्धस्य वर्तमानस्य अभावेऽपि भविष्यत्पुरोडाशश्रपणाधारत्वमादाय पुरोडाशकपालत्वव्यपदेशः, एवमिहापि भविष्यत्प्राणाधारत्वमादाय सृष्ट्यारम्भकाले जीवत्वव्यपदेशो भविष्यतीत्यर्थः ।

अतीतः संबन्धो बलवान् भवति, अभिनिष्पन्नत्वात् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋ. सं. १०।१९०।३) इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति। स्मृतावप्यनादित्वं संसारस्योपलभ्यते 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' (भ. गी. १५।३) इति। पुराणे च अतीतानागतानां च कल्पानां न परिमाणमस्तीति स्थापितम् ॥ ३६ ॥

१३ सर्वधर्मोपपत्त्यधिकरणम्

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति अस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान् विलक्षणत्वादीन् दोषान् पर्यहार्षीदाचार्यः । इदानीं परपक्षप्रति-

---

अनागताद्धि सम्बन्धादिति । यत्र हि भूतभविष्यतोः सम्बन्धयोः संभवः तत्र भूतसम्बन्धेनैव व्यपदेशः । लोके हि अतीतधनोऽपि धनीति व्यपदेशभाक् भवति, न तु भविष्यद्धनोऽपि । अत एव 'अग्निहोत्रहवण्या हवींषि निर्वपति' इत्यत्र यया हुतमग्निहोत्रं सैव [1]अग्निहोत्रहवणीति गृह्यते, न तु यया होष्यति । पवमानेष्टिषु तु हुताग्निहोत्राया अभावात् लोप एव अग्निहोत्रहवण्याः इति स्वीक्रियते । पुरोडाशकपालस्थले तु भूतस्यालाभात् अगत्या भविष्यता निर्देश आश्रितः । अभिनिष्पन्नत्वादिति । अतीतस्थले प्रवृत्तिनिमित्तशालितया निर्णीतत्वेन तत्संस्कारसम्भवात् लोके व्यवहारः शीघ्रं प्रवर्तत इति, अवर्तमानसम्बन्धस्थले भूतसम्बन्धस्यैव व्यवहारप्रयोजकत्वं स्वारसिकमिति भावः ॥ ३६ ॥

इति वैषम्यनैर्घृण्याधिकरणम्

स्वपक्षव्यवस्थापनोपसंहाररूपत्वात् पादान्ते सङ्गतिः । 'निर्गुणं ब्रह्म जगत उपादानं' इति वदत् वेदान्तवाक्यं 'यन्निर्गुणं तन्नोपादानं यथा रूपादि' इति तर्कबाध्यं न वेति सन्देहे, अस्य तर्कस्य आभासत्वाभावात् बाध्यमेव-इति शङ्का उपसंहारव्याजेन निराक्रियते । परमात्मनो निर्गुणत्वमसिद्धम्, कर्तृत्वोपयोगिसर्व-

---

1, अग्निहोत्रहवणीति — अग्निहोत्रहवणीशब्देन ।

षेधप्रधानं प्रकरणं प्रारिप्समाणः स्वपक्षपरिग्रहप्रधानं प्रकरणं उपसंहरति। यस्मात्, अस्मिन् ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञंसर्वशक्तिमहामायंचब्रह्मेति।

तस्मात् अनतिशङ्कनीयं इदमौपनिषदंदर्शनमिति ॥ ३७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः

---

ज्ञत्वादिधर्मवत्त्वात् उपादानत्वोपयोगिशक्तिरूपप्रपञ्चसूक्ष्मावस्थाश्रयत्वात्। परमार्थतो निर्गुणस्यापि मायोपाधिकाः सर्वेऽपि गुणाः सम्भाविता एव। तदिदमाह—सर्वज्ञं सर्वशक्ति महामायं चेति। अपि च 'यन्निर्गुणं तन्नोपादानं' इति तर्कोऽप्रयोजकः। प्रथमक्षणे निर्गुणस्यापि द्रव्यस्य स्वगुणान् प्रति उपादानत्वोपगमात्। न च द्रव्योपादानस्यैव सगुणत्वमिति नियमः। तार्किकद्रव्यपरिभाषाया एव निर्मूलत्वात्, निर्गुणेऽपि शब्दे ह्रस्वत्वाद्यारोपदर्शनेन विवर्तोपादानत्वे सगुणत्वस्य सर्वथा अनपेक्षत्वाच्च ॥ ३७ ॥

इति सर्वधर्मोपपत्त्यधिकरणम्

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां द्वितीयाध्यायस्य
प्रथमः पादः

—: * :—

## १. रचनानुपपत्त्यधिकरणम्

# रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

यद्यपि—इदं वेदान्तवाक्यानामैदंपर्यं निरूपयितुं शास्त्रं प्रवृत्तं, न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः कञ्चित् सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम्, तथापि, वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते। वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात् तन्निर्णयेन स्वपक्षस्थापनं प्रथमं कृतं, तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानात् इति।

---

ननु—अस्मिन् पादे, साङ्ख्यादिभिः प्रधानादिकारणतासाधका ये तर्का उपन्यस्ताः तेषां तर्कैरेव निरासः क्रियते। कथं अस्यार्थस्य ब्रह्मनिरूपणपरे शास्त्रे सङ्गतिर्भवेत्—इति शङ्कते—**यद्यपीति**।

इह हि ब्रह्मस्वरूपादिनिरूपणं, मुमुक्षूणां यथा ब्रह्मज्ञानं भविष्यति [1]इत्येतदर्थम्। न च ब्रह्मपक्षविरोधिनां पक्षाणां निरासं विना तदुपपद्यत इति, ब्रह्मविचारेण स्वप्रयोजनसिद्धये परपक्षनिराकरणमप्यपेक्षितमिति, तस्य शास्त्रसङ्गतिः—इति परिहरति—**तथापीति**।

पूर्वस्मिन् पादे साङ्ख्यादिभिः वेदान्तानां ब्रह्मणि समन्वयनिराकरणाय ये तर्का उपन्यस्ताः, तन्निराकरणेन ब्रह्मणि वेदान्तसमन्वयो व्यवस्थापितः। अत्र पादे परमतं निराक्रियते। तत्र पौर्वापर्ये किं नियामकम्-इत्याकाङ्क्षायामाह—**वेदान्तार्थनिर्णयस्य चेति**।

---

1. **इत्येतदर्थम्**—तथाभूतोपायसम्पादनार्थम्।

ननु—मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तं, किं परपक्षनिराकरणेन परद्वेषकारणेन ;

बाढमेवम् । तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत् केषांचित् मन्दमतीनां 'एतान्यपि सम्यग्दर्शनायोपादेयानि' इत्यपेक्षा, तथा युक्तिगाढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु—इत्यतः तदसारतोपपादनाय प्रयत्यते ।

ननु—'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) 'कामाच्च नानुमानापेक्षा' (ब्र. सू. १।१।१८) 'एतेन सर्वे व्याख्याता व्याख्याताः' (ब्र. सू. १।४।२८) इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः, किं पुनः कृतकरणेनेति ।

तदुच्यते—सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां यद् व्याख्यानं तत् व्याख्यानाभासं न सम्यग्व्याख्यानम्—इत्येतावत् पूर्वं कृतम्, इह तु वाक्यनिरपेक्षः स्वतन्त्रः तद्युक्तिप्रतिषेधः क्रियते—इत्येष विशेषः ।

तत्र साङ्ख्या मन्यन्ते—यथा घटशरावादयो भेदा मृदात्मना अन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका

---

ननु—साधनचतुष्टयशालिपुरुषाधिकारके शास्त्रे द्वेषप्रयुक्तपरमतनिराकरणं कथमुपपद्यताम्—इति शङ्कते-नन्विति । परमतनिराकरणं हि जयाय किञ्चित्, स्वपक्षरक्षणाय किञ्चित् । तत्र आद्यमेव द्वेषप्रयुक्तम् । द्वितीयं तु तत्त्वज्ञानफलकम् । तथा च स्वपक्षविश्वासाधिक्यद्वारा तत्त्वज्ञानोपयुक्तं साङ्ख्यादितर्काभासतोपपादनं मुमुक्ष्वधिकारे शास्त्रे नासङ्गतम्—इति परिहरति—बाढमेवमिति ।

साङ्ख्यानां प्रधानसाधकतर्कसङ्ग्राहकोऽयं श्लोकः—'भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्यविभागात् अविभागाद्वैश्वरूप्यस्य ॥' [सा. का. ९] इति । [1]'अस्ति अव्यक्तं कारणं' इति सर्वत्र साध्यम् ।

एतच्छ्लोकोक्तं 'समन्वयात्' इतिहेतुं विशदयति—**यथा घटशरावादयो-भेदा इत्यादिना** । भिद्यन्त इति भेदाः-कार्याणि बाह्याध्यात्मिकानि । तथा च

---

1. मु. 'अस्ति' नास्ति

भेदाः सुखदुःखमोहात्मतया अन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति । यत्तत् सुखदुःखमोहात्मकं सामान्यं तत् त्रिगुणं

---

'कार्यं सुखदुःख मोहात्मकवस्तुपूर्वकं भवति, तदन्वितत्वात्, यत् येनान्वितं तत् तदुपादानकं भवति' इति [1]सामान्यव्याप्तौ घटादिदृष्टान्तमभिप्रेत्य उक्तं 'यथा घटशरावादयो भेदाः [मृदात्मना अन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः'] इति । अत्र च विशेषव्याप्तिरपि वक्तुं शक्यते—घटो हि येन [2]आप्यते तं प्रति सुखरूपः, यस्य[3] अपह्रियते तं प्रति दुःखरूपः, येन न ज्ञायते तं प्रति मोहापरपर्यायाज्ञानरूपः—इति । तत्र विशेषव्याप्तौ साधनं तावत् घटे [4]प्रसिद्धम् । एवमेव हि बाह्यानामाध्यात्मिकानां च त्रिरूपता उपपादनीया । साध्यं तु 'सुखदुःखमोहात्मकाव्यक्तप्रकृतिकं भवति' इति । तदपि घटरूपे दृष्टान्ते प्रसिद्धमेव ।

इत्थं हि साङ्ख्यैः सत एव कार्यस्य उत्पत्तिः निरूप्यते—उत्पत्तेः प्रागपि मृदि घटो वर्तत एव । परं तु सोऽव्यक्तो भवति, पिण्डावस्थया अभिभूतत्वात् । दण्डचक्रादिसामग्र्या तु पिण्डावस्थायां तिरोभूतायां अभिव्यक्तो भवति ।

न च—यदि प्राक्तिरोभूत एव घटो दण्डादिभिरावरणाभिभवेनाभिव्यज्येत, तर्हि, 'घटवदेव मृदि कपालाद्यवस्था अपि विद्यन्त एव, ता अपि पिण्डेन तिरोभूताः' इति वक्तव्यम् । [5]न हि [6]तासामसतीनामेव दण्डप्रहारादिना घटाभिभवे

---

1. **सामान्यव्याप्ताविति** विशेषव्याप्त्यभिप्राये तु प्रकृतसाध्यहेतुघटितैव व्याप्तिः उदाहरणवाक्येन उपदर्शनीया । अत्र तु 'मृदात्मना अन्वीयमाना मृदात्मकसामान्यपूर्वका दृष्टाः' इति प्रकृतसाध्यतुल्यसाध्यप्रकृतहेतुतुल्यहेतुघटिता व्याप्तिः उपदर्शिता । अतः सामान्यव्याप्त्यभिप्रायेणोक्तं इत्युक्तम् । प्रकृतसाध्यतुल्यसाध्यप्रकृतहेतुतुल्यहेतूनां साधारणी प्रकृतसाध्यहेत्वोर्व्याप्तिः सामान्यव्याप्तिः ।

2. आ, प्राप्यते

3. **यस्येति** घटः इत्यनुषज्यते । एवं न ज्ञायते इत्यत्रापि ।

4. आ. सिद्धम्

5. **न हि वक्तुं शक्यते इति** तथोक्तौ असत्कार्यवादप्रसङ्गात् इति भावः ।

6. मु. तासामप्यसतीनामेव

[1]अभिव्यक्तिः इति वक्तुं शक्यते। तथा च पिण्डावस्थायामपनीतायां घटवदेव [2]कपालादिकमपि अभिव्यज्येत—इति वाच्यम्।

साधनविशेषाणां फलबलेन किञ्चिदवस्थां प्रत्येव अभिव्यञ्जकत्वमुपेयते। तथा च, दण्डादिना पिण्डावस्थातिरोभावेन [3]घटावस्थैव अभिव्यज्यते, [4]तया च कपालाद्यवस्थास्तिरोधीयन्त इति न तासामभिव्यक्तिः। आविर्भावतिरोभावौ च [5]प्रतियोगित्वानुयोगित्ववत् स्वरूपविशेषौ।

तथा च, उत्पत्तेः प्राक् सुखदुःखमोहात्मकस्य अव्यक्तस्य घटस्य सत्त्वात्, तत्पूर्वकत्वाच्च व्यक्तघटस्य, दृष्टान्ते साध्यसाधनयोः प्रसिद्धिः। दृष्टान्ते च तादृशी अव्यक्तावस्था मृदाश्रयैव। अनेन दृष्टान्तेन महत्तत्त्वं पक्षीकृत्य सुखदुःखमोहात्मकाव्यक्तावस्थापूर्वकत्वे साध्यमाने, तस्या अवस्थाया य आश्रयः तत् प्रधानमेव भवति।

भाष्ये सामान्यग्रहणं 'बाह्याध्यात्मिकानां पदार्थानां असाधारणोपादानान्यपि [6]सुखदुःखमोहात्मकान्येव भवन्तीति तैरर्थान्तरता स्यात्' इतिशङ्कानिराकरणार्थम्। तथा च घटशरावादिकार्यानुस्यूतस्वान्वितमृत्पूर्वकत्वं यथा घटस्य, एवं सर्वकार्यानुस्यूतस्वान्वितसुखदुःखमोहात्मकवस्तुपूर्वकत्वं साध्यमानं प्रधानमादायैव पर्यवस्यति। असाधारणकारणानां सर्वकार्यानुस्यूतत्वाभावेन सामान्यरूपत्वाभावात्।

न च—एवमपि, 'यद्यत् कार्यं येन येन सामान्येन अन्वितं तत् तत्पूर्वकं' इति व्याप्तिर्वक्तव्या, सा न सम्भवति, जातिरूपसामान्यान्वितत्वेऽपि तत्पूर्वकत्वाभावात्—इति वाच्यम्। द्रव्यरूपसामान्येनान्वितमिति विवक्षितत्वात्।

तथा—विमतं सोपादानकं, परिमाणात्—इत्यनेन चानुमानेन उपादानं सिध्यत् कार्यसदृशं सुखदुःखमोहात्मकमेव सिध्यतीति न ब्रह्मणा अर्थान्तरता। नापि परमाणुभिः। तथात्वे अनेककारणकल्पना भवेत्। प्रधानपक्षे तु तदेकमिति। परिमाणादित्यनेन परिमितत्वं अव्यापकत्वं विवक्षितम्।

---

1. अभिव्यक्तिः — उत्पत्तिः।
2. मु. कपालादिकमभिव्यज्येत
3. मु. घटावस्थाभिव्यज्यते
4. मु. तथा च
5. आ. प्रतियोगित्वानुयोगित्वादिवत्
6. आ. सुखदुःखमोहात्मकानि भवन्ति

**प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्य अर्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना (प्र)[वि]वर्तते—इति।**

**तथा परिमाणादिभिरपि लिङ्गैः तदेव प्रधानं अनुमिमते।**

**तत्र वदामः—यदि दृष्टान्तबलेनैव एतत् निरूप्येत, न अचेतनं लोके**

---

शक्तितःप्रवृत्तेरित्यनेन, 'विमतं शक्तिरूपसूक्ष्मावस्थापूर्वकं भवति, कार्यत्वात्, घटवत्' इति महदादेराद्यकार्यस्य शक्तिपूर्वकत्वं सिध्यत् तस्याश्शक्तेराश्रयभूतंप्रधानमादाय पर्यवस्यति, निराश्रयशक्त्ययोगात्।

कारणकार्यविभागादविभागाद्वैश्वरूप्यस्येत्यंशस्य अयमर्थः—विश्वरूपमेव वैश्वरूप्यं, स्वार्थे ष्यञ्। विश्वरूपस्य-कृत्स्नस्य कार्यस्य अविभागात्-कारणे तिरोभावात्। कारणकार्यविभागात्-कार्यस्य कारणादाविर्भावात्। यत् आविर्भवति तत् सूक्ष्मावस्थापूर्वकं भवति, यत् तिरोभवति तत् सूक्ष्मावस्थान्तं भवति, यथा कूर्माङ्गानि। तथा च, आदावन्ते च सूक्ष्मावस्थाश्रयतया यत् सिध्यति, तदेव प्रधानम्—इति। तदाह—**तथा परिमाणादिभिरिति।**

ननु—एतैस्तर्कैः साङ्ख्येन सत्त्वरजस्तमोगुणात्मकं कार्यसूक्ष्मावस्थाश्रयरूपमुपादानं सर्वस्य [1]प्रधानं साधनीयं, तत् सिद्धान्तेऽपि स्वीक्रियते अविद्यामायादिपदाभिलपनीयम्। तथा च सिद्धसाधनम्। न च-चेतनानधिष्ठितमेव प्रधानं उपादानतया साध्यते, तथा च नोक्तदोषः-इति वाच्यम्। एवंसति, विमतं चेतनाधिष्ठिताचेतनपूर्वकं कार्यत्वात्-इति [2]घटादिदृष्टान्तेनैव प्रतिरोधः।

उच्यते—चेतनाधिष्ठानानुमानस्य पूर्वेण समबलत्वे हि प्रतिरोधः स्यात्, न तु तदस्ति। चेतनाधिष्ठानानुमानपक्षे हि अधिष्ठाता ईश्वरोऽतिरिक्तः स्वीकर्तव्य इति गौरवं, न तु चेतनानधिष्ठानानुमाने—इति।

अनुमीयत इत्यनुमानं—प्रधानं, तत् 'चेतनानधिष्ठितमेव कार्योपादानम्' इति न। तथा सति रचनायाः-संस्थानस्य-कार्यस्य अनुपपत्तेः-इति सूत्रं योजयन्, चेतनाधिष्ठितमेवाचेतनमुपादानमितिसाध्ये व्याप्तिं दर्शयति—**यदि दृष्टान्तबलेनैवेत्यादिना।**

---

1. **प्रधानम्** — प्रधीयते अस्मिन्-इति प्रधानम्-लयाधारः।
2. **घटादिदृष्टान्तेनैव**—तत्रप्रसिद्धव्यासिककार्यत्वहेतुनैव।

चेतनानधिष्ठितं स्वतन्त्रं किंचित् विशिष्टपुरुषार्थनिर्वर्तनसमर्थान् विकारान् विरचयद्दृष्टम् । गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिः यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते । तथा इदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासं अनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभावितमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथं अचेतनं प्रधानं रचयेत् । लोष्टपाषाणादिषु अदृष्टत्वात् । मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते, तद्वत् प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः । न च 'मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न बाह्यकुम्भकारादिव्यपाश्रयेण' इति किंचिन्नियामकमस्ति । न चैवं सति किञ्चिद्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते चेतनकारणसमर्पणात् । अतो रचनानुपपत्तेश्च हेतोः न अचेतनं जगत्कारणमनुमातव्यं भवति ।

अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति । न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मतया अन्वय उपपद्यते, सुखादीनां

---

'महदादिकार्यं चेतनाधिष्ठिताचेतनोपादानकम्' इति प्रतिरोधानुमाने पराभिप्रेतं गौरवं आशङ्क्य निराकरोति—न च मृदादीति । 'चेतनानधिष्ठितस्यैव प्रधानस्य अनुमाने मृदादिस्वरूपमात्रं दृष्टान्ते अनुसर्तव्यं, न तु कुलालोऽपि स्वरूपबाह्यः, तथा च अतिरिक्तेश्वरकल्पनाप्रसङ्गाभावात् न गौरवम्' इत्यभिमाने न किञ्चिन्नियामकमस्ति । तथा सति अतिलाघवात् उपादानमपि न अनुमातव्यं भवेत्, अतिरिक्तप्रधानकल्पनागौरवात्, इति स्वभाववादप्रसङ्गः । यदि-यत् कार्यं तत् सोपादानकं लोके दृष्टमिति उपादानमनुमीयत इति, प्रामाणिकं गौरवं न दोषाय, तथा सति, यत् कार्यं तत् सकर्तृकमित्यपि लोके दृष्टमिति प्रामाणिकत्वात् इदमपि गौरवं सोढव्यमित्यर्थः ।

एवं चेतनानधिष्ठानानुमाने सत्प्रतिपक्षमुद्भाव्य चेतनाधिष्ठानानुमानस्य प्राबल्यं दर्शयति—न चैवंसतीति ।

**च आन्तरत्वप्रतीतेः, शब्दादीनां च अतद्रूपत्वप्रतीतेः, तन्निमित्तत्वप्रतीतेश्च। शब्दाद्यविशेषेऽपि च भावनाविशेषात् सुखादिविशेषोपलब्धेः ।**

**तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा**

---

रचनानुपपत्तेश्चेति चकारो न उक्तहेतुसमुच्चयार्थः, पूर्वं कस्यचिद्धेतोरनुक्तेः- इत्याशङ्क्य, अनुक्तसमुच्चयार्थ इत्याह—अन्वयाद्यनुपपत्तेश्चेति । तथा च 'महदादिकार्यं सुखदुःखमोहात्मकप्रधानोपादानकम्, सुखाद्यन्वितत्वात्' इति हेतौ स्वरूपासिद्धिसूचनार्थः चकारः इति द्रष्टव्यम् ।

ननु—विषयाणां [1]सुखदुःखाद्यात्मत्वं निरस्य तद्धेतुत्वाभ्युपगमे तत एव [2]सुखदुःखाद्यात्मत्वं भवेत्— इत्याशङ्क्याह—शब्दाद्यविशेषेऽपीति । शब्दादीनां सर्वदा सर्वं प्रति सुखहेतुत्वं तावत् नास्ति। एक एव हि शब्दः कदाचित् कञ्चित् प्रति सुखाय भवति, कञ्चित् प्रति कदाचित् दुःखाय भवति । [3]तत्र च वासना-विशेषः सहकारी । यस्य यस्मिन् वस्तुनि रमणीयत्ववासना यदा उद्बुद्धा भवति तदा तत् सुखाय भवति । यदा तु अरमणीयत्ववासनोद्बोधो भवति तदा दुःखाय भवति। अतो न एषां नियतं [4]सुखदुःखादिहेतुत्वम्। अनियत[5]सुखदुःखादिहेतुत्वं तु न सुखादिरूपत्वे प्रयोजकम् । यथा हि अनिच्छाद्वेषस्वरूपाणामपि घटादीनां इच्छादिजनकत्वम्, एवं असुखादिरूपाणामपि सुखादिजनकत्वोपपत्तेः । अपि च 'यत् यदन्वितं, तत् तदुपादानम्' इति नास्ति व्याप्तिः । जात्यन्वितानामपि तदुपादानत्वाभावात् । न च 'येन द्रव्येण अन्वितं यत् तत् तदुपादानम्' इति व्याप्तिः । द्रव्यपरिभाषाया अप्रयोजकत्वात्, तत्परिभाषालम्बनेऽपि सुखादीनाम-द्रव्यतया तदुपादानत्वासिद्धेश्च ।

एवं समन्वयादिति हेतुं निराकृत्य, परिमाणादिति हेतुं निराकरोति—**तथा परिमितानामिति** । साङ्ख्येन 'परिमितत्वात् सोपादानकम्' इति साधने,

---

1. मु. सुखदुःखाद्यात्मकत्वं
2. मु. सुखदुःखाद्यात्मकत्वं
3. आ. तत्र च भावनाविशेषः
4. आ. सुखादिहेतुत्वम्
5. आ. सुखादिहेतुत्वं

बाह्याध्यात्मिकानां भेदानां परिमितत्वात् संसर्गपूर्वकत्वमनुमिमानस्य सत्वरजस्तमसामपि संसर्गपूर्वकत्वप्रसङ्गः, परिमितत्वाविशेषात्। कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट इति, न कार्यकारणभावात् बाह्याध्यात्मिकानां भेदानां अचेतनपूर्वकत्वं शक्यं कल्पयितुम्॥ १॥

## प्रवृत्तेश्च ॥ २ ॥

आस्तां तावत् इयं रचना। तत्सिद्ध्यर्था या प्रवृत्तिः-साम्यावस्थानात् प्रच्युतिः-सत्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिः-विशिष्ट-

---

ब्रह्मणा उपादानेन अर्थान्तरतावारणाय, परस्परसंयुक्तानेकद्रव्योपादानकत्वं साधनीयम्। न च तथापि परमाणुभिरर्थान्तरता। तेषामनेकत्वेन गौरवापत्त्या एकस्यैव प्रधानस्य त्रिगुणस्य उपादानतया सिद्धिसम्भवात्—इति मनसि निधायोक्तं **संसर्गपूर्वकत्वमित्यादि**।

**परिमितत्वाविशेषादिति**। ननु—परिमितत्वं यदि सङ्ख्येयत्वमिति विवक्ष्येत, तदा गुणानामपि सङ्ख्येयत्वेन परिमितत्वात् भवेत् व्यभिचारः। न तु तथा विवक्ष्यते। अपि तु परिमितत्वं अव्यापकत्वम्। गुणास्तु व्यापका इत्येव तेषामुपगमः, अतो न व्यभिचारः। न च प्रलये गुणानां सङ्कोचात् तदानीं तेषु अव्यापकत्वमस्तीति वाच्यम्। न हि प्रलये अव्याप्तिरूपो गुणानां सङ्कोच उपेयते, अपि तु व्यापकानामेव सतां अभिभवः। यथा हेमन्तग्रीष्मयोरपि व्याप्यैव विद्यमानयोः घर्महिमयोः अभिभवः ग्रीष्महेमन्तयोस्तु उद्भवः, एवं गुणानामपि प्रलये अभिभवः सृष्टौ तु आविर्भावः—इति चेत्,

एवं तर्हि, तत्तद्गुणाविर्भावस्य अव्यापकतया तत्तद्गुणमात्रकार्यतया च संसृष्टानेकोपादानत्वाभावात् व्यभिचारः इति द्रष्टव्यम्।

कारणकार्यविभागादित्यादितर्कं दूषयति—**कार्यकारणभावस्त्विति**। कार्यस्य कारणात् भावः-अभिव्यक्तिरित्यर्थः॥ १॥

**साम्यावस्थानात् प्रच्युतिरिति**। इयं साङ्ख्यानां परिभाषा—प्रलये त्रयो गुणाः साम्येन तिष्ठन्ति, न कस्यापि उत्कर्षः, नापि कस्यचिदपकर्षः। सेयं

कार्याभिमुखप्रवृत्तिता, सापि न अचेतनस्य प्रधानस्य स्वतन्त्रस्य उपपद्यते, मृदादिष्वदर्शनात् रथादिषु च। न हि मृदादयो रथादयो वा स्वयमचेतनाः सन्तः चेतनैः कुलालादिभिरश्वादिभिर्वा अनधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते। दृष्टाच्च अदृष्टसिद्धिः। अतः प्रवृत्त्यनुपपत्तेरपि हेतोः न अचेतनं जगत्कारणं अनुमातव्यं भवति।

ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा।

सत्यमेतत्। तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा।

---

साम्यावस्थैव प्रधानमित्युच्यते। सर्गारम्भे तु, स्वत एत गुणा [1]उत्कर्षापकर्षरूपतां प्राप्नुवन्ति। तत्र उत्कृष्टं सत्वं रजस्तमसी अभिभूय ताभ्यां सहितं शान्तां स्वप्रवृत्तिं आरभते। तत्र सत्वमङ्गि, रजस्तमसी अङ्गभूते। रज उत्कृष्टं सत्वतमसी अभिभूय ताभ्यां सहितं घोरां स्वप्रवृत्तिं आरभते। तत्र रजः प्रधानं, सत्वतमसी अङ्गभूते। तम उत्कृष्टं मूढां स्वप्रवृत्तिं आरभते। तत्र रजस्सत्वयोरङ्गत्वं, तमसोऽङ्गित्वम्। एवं परस्परं अङ्गाङ्गिभावेन मेलने सति महदादिकार्यारम्भः। तत्र, या प्रथमा प्रवृत्तिः प्रधानस्य सापि चेतनाधिष्ठानं विना न सम्भवति, किमुत अनन्तरकार्यारम्भः इति। एवं च, यथा प्राथमिकी प्रवृत्तिः चेतनाधिष्ठानपूर्विका एवं उत्तरकार्यस्यापि या शक्तितः प्रवृत्तिः सापि चेतनाधिष्ठानपूर्विकैवेति, शक्तितःप्रवृत्तेरिति तर्कोऽप्ययुक्त एव।

एवं सिद्धान्तिना चेतनाधिष्ठितत्वे साधिते, 'स चेतनः व्यापारयुक्त एव अधिष्ठाता, उत तद्रहितः? नान्त्यः - निर्व्यापारस्य अधिष्ठातृत्वायोगात्, आद्यस्तु न सम्भवति' इत्याह—नन्विति। अत्र च, यद्यपि-चेतनस्यापि इच्छाप्रयत्नादिरूपा प्रवृत्तिः अधिष्ठातृत्वोपयोगिनी प्रत्यक्षेणैव दृष्टा। वक्ष्यति च सूत्रकारः—'कर्ता शास्त्रार्थवत्त्वात्' इति। तथा च, ईश्वरोऽपि 'सोऽकामयत' 'इदं सर्वमसृजत' इत्यादिश्रुतिपर्यालोचनया दृष्टानुसाराच्च अधिष्ठातृत्वोपयुक्तव्यापारयुक्त एव - इति वक्तुं शक्यम्। तथापि—जीवे व्यापारस्य दृष्टत्वाभावमुपेत्यैव परिहरति—सत्यमिति। तथा च, अचेतनप्रवृत्तौ चेतनस्यापेक्षितत्वात्, निर्व्यापारस्य च

---

1. उत्कर्षापकर्षरूपतां—उत्कर्षापकर्षधर्मकताम्।

**न त्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा ।**

**किं पुनरत्र युक्तम् ? यस्मिन् प्रवृत्तिर्दृष्टा तस्य सा उत यत्संयुक्तस्य दृष्टा तस्य सा–इति । ननु यस्मिन् दृश्यते प्रवृत्तिः तस्यैव सेति युक्तम्, उभयोः प्रत्यक्षत्वात् । न तु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत् प्रत्यक्षः । प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति । अत एव च प्रत्यक्षे देहे सति दर्शनात् असति चादर्शनात् देहस्यैव चैतन्यमपीति लौकायतिकाः प्रतिपन्नाः । तस्मात् अचेतनस्यैव प्रवृत्तिरिति ।**

---

तस्य अपेक्षितत्वानुपपत्तेः, तदुपपत्तये चेतनेऽपि व्यापारः कल्प्यते—इति [1]गूढोऽभिसन्धिः ।

तमभिसन्धिमजानन्निव, 'तावता किमुभयत्रापि प्रवृत्तिर्विवक्षिता ? न' इत्याह सांख्यः—**न त्वचेतनसंयुक्तस्येति** । ननु—चेतनाचेतनसंयोगे प्रवृत्तिर्दृष्टा । सा अचेतनस्यैव, न तु चेतनस्य नापि चेतनप्रयुक्तस्य-इति सांख्यस्य [1]गूढोऽभिसन्धिः । स कथम्—इत्याशङ्कायां, विमृशति साङ्ख्यः—**किं पुनरत्र युक्तमिति** । स एव निर्णयमाह—**नन्विति** । ननु—चेतनाचेतनसंयोगे अचेतनगता स्पन्दरूपा या प्रवृत्तिर्दृष्टा सा चेतनस्येति अस्माभिर्नोच्यते । अपितु, तादृशस्पन्दप्रयोजिका प्रयत्नादिरूपा प्रवृत्तिः चेतने अभ्युपेयेत्युच्यते, निर्व्यापारस्य चेतनस्य प्रवृत्त्युपयोगानुपपत्तेः । न चेष्टापत्तिः, तथा सति मृतशरीरेऽपि चेष्टाप्रसङ्गात् --इत्याशङ्क्य, आह साङ्ख्यः—**प्रवृत्त्याश्रयदेहादिसंयुक्तस्येति** । तथा च, 'मृतशरीरे चेतनासंयोगः जीवति शरीरे तु तत्संयोगः इति वैलक्षण्यम्' इत्येतावता, एकत्र निर्व्यापारता अन्यत्र सव्यापारता, न तु तावता व्यापारे चेतनस्याधिष्ठातृत्वम्, येन तत्रापि यत्नादिकं सिध्येत् । न हि, सर्वस्य आकाशसंयोग एव व्यापार इति आकाशोऽप्यधिष्ठाता उपेयते—इति भावः । 'यो व्यापारो यस्य दृष्टः तस्यैव सः, न तु तत्र प्रयोजकः तदतिरिक्तश्चेतनोऽपेक्षितः' इत्यत्र लोकायतभ्रमं संवादयति—**अत एवेति** ।

चेतनसम्बन्धे सत्येव जीवच्छरीरे प्रवृत्तिदर्शनात् मृतशरीरे च तदसम्बन्धे प्रवृत्त्यदर्शनात्, अन्वयव्यतिरेकाभ्यां अचेतनप्रवृत्तौ चेतनस्य अधिष्ठातृत्वमुपेयते ।

---

1. आ. गूढोऽत्राभिसन्धिः

तदभिधीयते—न ब्रूमः यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति। भवतु तस्यैव सा, सा तु चेतनाद्भवतीति ब्रूमः। तद्भावे भावात् तदभावे च अभावात्। यथा–काष्ठादिव्यपाश्रयापि दाहप्रकाशलक्षणा विक्रिया, अनुपलभ्यमानापि च केवले ज्वलने, ज्वलनादेव भवति, तत्संयोगे दर्शनात् तद्वियोगे चादर्शनात्, तद्वत्। लौकायतिकानामपि, चेतन एव देहः अचेतनानां रथादीनां प्रवर्तको दृष्ट इति, अविप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम्।

ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेः अनुपपन्नं प्रवर्तकत्वमिति चेत्,

न–अयस्कान्तवत् रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः। यथा अयस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽपि अयसः प्रवर्तको भवति, यथा वा रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति, एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेत् इत्युपपन्नम्।

---

आकाशे तु अन्वयमात्रे सत्यपि व्यतिरेको नास्ति, [1]अतोऽप्रयोजकत्वम्–इत्यभिप्रायेण परिहरति—[2]तदभिधीयत इत्यादिना। ननु–वेदान्तिनोऽपि चेतनयोर्जीवेश्वरयोरसङ्गचैतन्यमात्रस्वरूपयोः कथमधिष्ठातृत्वम्—इत्याशङ्क्य, सन्निधिमात्रेण तद्भविष्यतीति सदृष्टान्तमाह—ननु तव देहादिसंयुक्तस्येत्यादिना। यदि सन्निधिमात्रेणैव चेतनस्याधिष्ठातृत्वमुच्यते, तर्हि क्षेत्रज्ञसन्निधानादेव सर्गोपपत्तेः किमीश्वरेण–इत्याशङ्क्य उक्तं सर्वज्ञस्सर्वशक्तिश्चेति। लोके [3]उपादानगोचरापरोक्षज्ञानादिमत एव अधिष्ठातृत्वदर्शनात् तादृशः परमेश्वर एव आद्यसर्गाधिष्ठाता

---

1. आ. अतो न प्रवृत्तौ प्रयोजकत्वम्
2. मु. अत्राभिधीयते। तथैव भाष्यपाठोऽपि स्यात्।
3. मु. उपादानगोचरज्ञानादिमत

एकत्वात् प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत्,

न—अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेन असकृत् प्रत्युक्तत्वात्। तस्मात् संभवति प्रवृत्तिः सर्वज्ञकारणत्वे, न त्वचेतनकारणत्वे ॥२॥

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

स्यादेतत्—यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते, एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यते—इति।

नैतत् साधूच्यते। यतः तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिः इत्यनुमिमीमहे, उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्। शास्त्रञ्च 'योऽप्सु तिष्ठन्........योऽपोऽन्तरो यमयति' (बृ. उ. ३।७।४), 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' (बृ. उ. ३।८।९) इत्येवञ्जातीयकं समस्तस्य लोकपरिस्पन्दितस्य ईश्वराधिष्ठिततां श्रावयति। तस्मात् साध्यपक्षनिक्षिप्तत्वात् पयोम्बुवदिति अनुप-

---

सिध्यति, न तु क्षेत्रज्ञः। तस्य असर्वज्ञस्य असर्वशक्तेः तदसम्भवात्। अयस्कान्तवदिति तु [1]तात्कालिकं समाधानमिति भावः।

एकत्वात् प्रवर्त्याभाव इति। उपलक्षणमेतत्[2] 'निर्गुणस्य न सर्वज्ञत्वादिकं' इत्यस्यापि। परमार्थतोऽद्वितीयस्य निर्गुणस्यापि आविद्यकं सद्वितीयत्वं सर्वज्ञत्वादिगुणयुक्तत्वं च भवतीति परिहाराभिप्रायः॥ २ ॥

'यद्यत् कार्यं तत् चेतनाधिष्ठिताचेतनोपादानकं, न तु चेतनानधिष्ठिताचेतनोपादानकम्' इत्यस्य, वत्सविवृद्ध्यर्थं क्षीरप्रस्रवे जलस्यन्दने च व्यभिचारशङ्कानिवृत्त्यर्थमिदम्।

पयोऽम्बुनोरपि पक्षसमत्वात् न तत्र व्यभिचारशङ्का दोषावहा—इति परिहाराभिप्रायः। तयोस्सपक्षतामप्याह—शास्त्रञ्चेत्यादिना। साध्यपक्षनिक्षिप्तत्वात्-पक्षसमत्वात्। सपक्षत्वाच्चेत्यपि द्रष्टव्यम्।

---

1. तात्कालिकमिति मुख्यसमाधानं तु ईश्वरे प्रयत्नादिरूपप्रवृत्तिरस्तीति।
2. एतत्—अनुपपत्तिवचनम्।

न्यासः । चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः । वत्स-चोषणेन च पयस आकृष्यमाणत्वात् । न च अम्बुनोऽपि अत्यन्तमनपेक्षा, निम्नभूम्याद्यपेक्षत्वात् स्यन्दनस्य । चेतनापेक्षत्वं तु सर्वत्र उपदर्शितम् । 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र. सू. २।१।२४) इत्यत्र तु, बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतत् लोकदृष्ट्या निदर्शितम् । शास्त्रदृष्ट्या पुनः सर्वत्रैव ईश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्, न तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिद्बाह्यं अपेक्ष्यं अवस्थितमस्ति, पुरुषस्तूदासीनो न प्रवर्तको न निवर्तक इत्यतः अनपेक्षं प्रधानं, अनपेक्षत्वाच्च 'कदाचित् प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमते' इत्येतदयुक्तम् । ईश्वरस्य तु सर्वज्ञत्वात् सर्वशक्तित्वात् महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥ ४ ॥

---

ननु—'उपसंहारदर्शनान्नेति चेत् न क्षीरवद्धि' इत्यत्र 'क्षीरस्य दध्याकारपरिणामे बाह्यं साधनं नापेक्षितम्' इत्युक्तम्, इह तु, कार्यमात्रे उपादानस्वरूपाद्बहिर्भूतस्याधिष्ठातुः अपेक्षोच्यते, इति विरोधः-इत्याशङ्क्याह—**उपसंहारदर्शनादिति** ॥ ३ ॥

**न तद्व्यतिरेकेण बाह्यं किञ्चिदपेक्ष्यमस्तीति** । ननु—धर्माधर्मापेक्षा अस्ति । इयं हि तन्मतस्थितिः-धर्मकार्यं अधर्मेण प्रतिबद्ध्यते, धर्मेण तु प्रतिबन्धकस्याधर्मस्य निरासः क्रियते । एवं अधर्मकार्यं धर्मेण प्रतिबध्यते, अधर्मेण धर्मनिरासः क्रियते । तथा च, प्रतिबन्धकनिरासाय धर्माधर्मापेक्षा, न तु साक्षादेव कार्ये—इति चेत्, तथासति, प्रलये धर्माधर्मयोरपि सत्त्वात् प्रतिबन्धकनिरासे कार्यं स्यादेवेति, प्रलयानुपपत्तिरेव ।

ननु—तर्हि वेदान्तिनोऽपि प्रलयानुपपत्तिः, प्रलयेऽपि धर्माधर्मयोः सम्भवात् । न च तयोः परिपाकाभावात् न तदानीं सृष्टिरिति वाच्यम् । परिपाकाभावस्य साङ्ख्यमतेऽपि वक्तुं शक्यत्वात्—इत्यत आह—**ईश्वरस्य त्विति** ।

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

स्यादेतत्—यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराकारेण परिणमते, एवं प्रधानमपि महदाद्याकारेण परिणंस्यते—इति। कथं च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते। निमित्तान्तरानुपलम्भात्। यदि हि किंचिन्निमित्तान्तरमुपलभेमहि ततो यथाकामं तेन तृणाद्युपादाय क्षीरं संपादयेमहि, न तु संपादयामहे। तस्मात् स्वाभाविकः तृणादेः परिणामः, तथा प्रधानस्यापि स्यात्—इति।

अत्रोच्यते–भवेत् तृणादिवत् स्वाभाविकः प्रधानस्यापि परिणामः, यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत। न त्वभ्युपगम्यते, निमित्तान्तरोपलब्धेः। कथं निमित्तान्तरोपलब्धिः? अन्यत्राभावात्। धेन्वैव हि उपयुक्तं तृणादि क्षीरीभवति न प्रहीणं अनडुहाद्युपयुक्तं वा। यदि हि निर्निमित्तमेतत् स्यात्, धेनुशरीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत्। न च 'यथाकामं मानुषैर्न शक्यं संपादयितुं' इत्येतावता निर्निमित्तं भवति। भवति हि किंचित् कार्यं मानुषसंपाद्यं किंचित् दैवसंपाद्यम्। मनुष्या अपि शक्नुवन्त्येव उचितेनोपायेन तृणाद्युपादाय क्षीरं संपादयितुम्। प्रभूतं हि क्षीरं कामयमानाः प्रभूतं घासं धेनुं चारयन्ति, ततश्च प्रभूतं क्षीरं लभन्ते। तस्मात् न तृणादिवत् स्वाभाविकः प्रधानस्य परिणामः ॥ ५ ॥

---

लोके हि कार्योपयोगी परिपाकः चेतनाधीनो [1]दृष्टः। तथा च सिद्धान्ते ईश्वरसिसृक्षावशात् धर्माधर्मयोः पाकः सम्भवति, साङ्ख्यमते तदसम्भवात् न तयोः पाक उपपद्यते—इति भावः ॥ ४ ॥

स्वभावादेव क्षीराकारेण परिणमत इति। तथा च क्षीराकारपरिणतियोग्यपाकविशेषस्य तृणादिगतस्य चेतनाधिष्ठानं विनापि दर्शनात् न पाके सर्वत्र चेतनापेक्षेति शङ्काभिप्रायः।

धेन्वैव ह्युपयुक्तं तृणादीति। तथा च, तृणादेरपि क्षीरादिपरिणामयोग्यपाकार्थं धेनुचैतन्यस्यापेक्षितत्वात् न तत्र व्यभिचारः–इति परिहाराभिप्रायः ॥ ५ ॥

---

1. दृष्ट इति पाचकसङ्कल्पविशेषात् पाकविशेषो दृष्टः, व्यञ्जनादिषु पाकवैचित्र्यं च चेतनवैचित्र्याधीनं दृष्टं इति भावः।

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रधानप्रवृत्तिः न भवतीति स्थापितम् । अथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिं अभ्युपगच्छेम, तथापि दोषोऽनुषज्येतैव । कुतः ? अर्थाभावात् । यदि तावत् 'स्वाभाविकी प्रधानस्य प्रवृत्तिः न किंचिदन्यदिहापेक्षते' इत्युच्येत, ततः 'यथैव सहकारि किंचित् नापेक्षते एवं प्रयोजनमपि किंचित् नापेक्षिष्यते' इत्यतः 'प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तते' इतीयं प्रतिज्ञा हीयेत ।

स यदि ब्रूयात् 'सहकार्येव केवलं नापेक्षते न प्रयोजनमपि' इति । तथापि, प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यम्—भोगो वा स्यादपवर्गो वा उभयं वा? इति । भोगश्चेत्, कीदृशो वा अनाधेयातिशयस्य पुरुषस्य भोगो भवेत्, अनिर्मोक्षप्रसङ्गश्च । अपवर्गश्चेत्, प्रागपिप्रवृत्तेः अपवर्गस्य सिद्धत्वात् प्रवृत्तिरनर्थिका स्यात्, शब्दाद्यनुपलब्धिप्रसङ्गश्च । उभयार्थताभ्युपगमेऽपि, भोक्तव्यानां प्रधानमात्राणां आनन्त्यात् अनिर्मोक्षप्रसङ्ग एव । न च औत्सुक्यनिवृत्त्यर्था प्रवृत्तिः । न हि प्रधानस्याचेतनस्य औत्सुक्यं संभवति, न च पुरुषस्य निर्मलस्य निष्कलस्य औत्सुक्यम् ।

---

एवं साङ्ख्यमते जगद्रचना नोपपद्यते चेतनाधिष्ठानं विनेति 'पयोऽम्बुवच्चेत्तत्रापि' इत्यन्तैः त्रिभिः सूत्रैः प्रतिपादितम् । अनन्तरं द्वाभ्यां सूत्राभ्यां चेतनाधिष्ठानं विना सृष्टिप्रलयव्यवस्था नोपपद्यत इत्युक्तम् । अनेन तु सूत्रेण, यत् साङ्ख्यैरुच्यते 'चेतनानधिष्ठितमेव प्रधानं पुरुषप्रयोजनाय प्रवर्तते' इति तत् निराक्रियते, तन्मते पुरुषप्रयोजनस्यैव निरूपणासम्भवात् इति ।

**भोगो वा स्यादित्यादि** । भोग एव वा स्यात् अपवर्ग एव वा स्यात् उभयं वा इति विकल्पार्थः । **कीदृशो वा अनाधेयातिशयस्येति** । भोगो हि सुखदुःखसाक्षात्काररूपो धर्मः । सः असङ्गे पुरुषे न सम्भवति । **अनिर्मोक्षप्रसङ्गश्चेति** । भोगार्थमेव प्रवृत्तेरुपगमात् । **प्रागपिप्रवृत्तेरपवर्गस्येति** । अपवर्गो हि पुरुषस्य स्वरूपेणावस्थितिः, सा नित्यसिद्धेति भावः । **शब्दाद्यनुपलब्धिप्रसङ्गश्चेति** । मोक्षार्थमेव प्रवृत्तत्वात् ।

दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत् प्रवृत्तिः, तर्हि दृक्शक्त्यनुच्छेदवत् सर्गशक्त्यनुच्छेदात् संसारानुच्छेदात् अनिर्मोक्षप्रसङ्ग एव ।

तस्मात् 'प्रधानस्य पुरुषार्था प्रवृत्तिः' इत्येतत् अयुक्तम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

स्यादेतत्—यथा कश्चित् पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुः अपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्छक्तिविहीनमन्धं अधिष्ठाय प्रवर्तयति, यथा वा अयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽपि अयः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यति—इति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम् ।

अत्रोच्यते—तथापि नैव दोषान्निर्मोक्षोऽस्ति । अभ्युपेतहानं तावत् दोष आपतति । प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्, पुरुषस्य च प्रवर्तकत्वानभ्युपगमात् । कथं च उदासीनः पुरुषः प्रधानं प्रवर्तयेत् । पङ्गुरपि हि अन्धं वागादिभिः पुरुषं प्रवर्तयति । नैवं पुरुषस्य कश्चिदपि

---

ननु—पुरुषस्य दृक्शक्तिरस्ति, प्रधानस्य सर्गशक्तिरस्ति, तदुभयसार्थक्याय प्रधानं प्रवर्तते । अन्यथा हि सर्गाभावात् सर्गशक्तिवैयर्थ्यं स्यात्, सृष्ट्यभावे च विषयाभावेन तत्प्रकाशाभावात् दृक्शक्तिरपि व्यर्था भवेत् । अतः उभयसार्थक्याय सर्गः—इति शङ्कते—दृक्शक्तिसर्गशक्तीति ।

अनिर्मोक्षप्रसङ्ग एवेति । ननु—बुद्धौ चैतन्यप्रतिबिम्बात् पुरुषेण भेदाग्रहे सति बुद्धिः सुखदुःखाद्यात्मना परिणमते, तद्दर्शनं भोगः । श्रवणमनननिदिध्यासनैः विवेके उत्पन्ने अविवेकनिवृत्तौ तन्मूलसुखदुःखादिपरिणामाभावात् तद्दर्शनाभावेन स्वरूपावस्थानं मोक्ष उपपद्यते—इति चेत्, न-सुखदुःखादिदर्शनस्य भोगस्य, मोक्षोपायस्य बुद्धेर्विवेकस्य च, असङ्गे पुरुषे असम्भवात् । न च भोगविवेकौ बुद्धिगतावेव पुरुषेण स्वस्मिन्नारोप्येते इति वाच्यम् । आरोपस्यापि असङ्गे पुरुषे असम्भवात् । न च—सिद्धान्त इव द्वैतयाथार्थ्यवादिना अनृतस्यैव संसारस्य विवेकस्य तदारोपस्य वा असङ्गे पुरुषे उपपत्तिः-इति वक्तुं शक्यम् ॥ ६ ॥

यदि चेतनाधिष्ठितमेवाचेतनं कार्यं रचयतीत्युच्यते, तथापि न अलौकिक ईश्वरः कल्पनीयः । अपि तु, क्षेत्रज्ञाधिष्ठितस्यैव प्रधानस्य कार्योत्पादकता

प्रवर्तनव्यापारोऽस्ति. निष्क्रियत्वात् निर्गुणत्वाच्च । नापि अयस्कान्तवत् सन्निधिमात्रेण प्रवर्तयेत् । सन्निधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात् । अयस्कान्तस्य तु अनित्यसन्निधेः अस्ति स्वव्यापारः संनिधिः, परिमार्जनाद्यपेक्षा चास्यास्तीति, अनुपन्यासः पुरुषाश्मवदिति ।

तथा प्रधानस्य अचैतन्यात् पुरुषस्य च औदासीन्यात् तृतीयस्य च तयोः संबन्धयितुः अभावात् संबन्धानुपपत्तिः । योग्यतानिमित्ते च संबन्धे, योग्यतानुच्छेदात् अनिर्मोक्षप्रसङ्गः । पूर्ववच्च इहापि अर्थाभावो विकल्पयितव्यः ।

परमात्मनस्तु स्वरूपव्यपाश्रयं औदासीन्यं मायाव्यपाश्रयं च प्रवर्तकत्वमिति अस्त्यतिशयः ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते । यद्धि सत्त्वरजस्तमसां अन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधानावस्था, तस्यामवस्थायां अनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात् परस्परं प्रति अङ्गाङ्गिभावानुपपत्तेः, बाह्यस्य च कस्यचित् क्षोभयितुरभावात्, गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥ ८ ॥

---

भविष्यति—इति शङ्कितुस्तात्पर्यम् । निष्क्रियत्वात् निर्गुणत्वाच्चेति । लोके हि चिकीर्षादिगुणयुक्तो यत्नाख्यान्तरक्रियावशात् बाह्यमचेतनं व्यापारयति चेतनः-इति प्रसिद्धम्, तव तु तदनङ्गीकारात् कथं पुरुषस्य प्रवर्तकता—इति भावः ॥ ७ ॥

'व्यतिरेकानवस्थितेः' इति सूत्रे 'प्रधानस्य साम्येनावस्थानरूपः प्रलयो नोपपद्यते' इत्युक्तम् । तत्रेयं परस्याशङ्का—अनुमानात् सिध्यत् प्रधानं अव्यक्तात्मकं साम्येनावस्थितं प्रलयकालवर्त्येव सिध्यति, तथा च प्रमाणसिद्धस्य तस्य कथं निरासः—इति । तत्रोत्तरं सूत्रम् । अनपेक्षस्वरूपाणामिति । प्रलये गुणाः परस्परापेक्षा न भवन्ति, अङ्गाङ्गिभावेन सर्गारम्भे परस्परापेक्षा भवन्ति । तथा च, निरपेक्षस्वरूपाणां सतां सापेक्षत्वापत्तौ स्वरूपनाशो भवेत् । अतोऽङ्गाङ्गिभावानुपपत्तिः । बाह्यस्य च कस्यचित् क्षोभयितुरभावादिति । साम्यावस्थातः प्रच्युतिसम्पादकः क्षोभकः । तथा च निर्निमित्तवैषम्यं नोपपद्यत इति ॥ ८ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अथापि स्यात्—अन्यथा वयमनुमिमीमहे यथा न अयमनन्तरो दोषः प्रसज्येत । न हि अनपेक्षस्वभावाः कूटस्थाश्च अस्माभिः गुणा अभ्युपगम्यन्ते, प्रमाणाभावात् । कार्यवशेन तु गुणानां स्वभावः अभ्युपगम्यते । यथा यथा कार्योत्पाद उपपद्यते तथा तथा एषां स्वभावः अभ्युपगम्यते । 'चलं गुणवृत्तम्' इति च अस्त्यभ्युपगमः । तस्मात् साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्ते—इति ।

एवमपि प्रधानस्य ज्ञशक्तिवियोगात् रचनानुपपत्त्यादयः पूर्वोक्ता दोषाः तदवस्था एव । ज्ञशक्तिमपि तु अनुमिमानः प्रतिवादित्वात् निवर्तेत । चेतनमेकं अनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात् । वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावात् नैव वैषम्यं भजेरन्, भजमाना वा निमित्ताभावाविशेषात् सर्वदैव वैषम्यं भजेरन्निति प्रसज्यत एवायं अनन्तरोऽपि दोषः ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः— क्वचित् सप्तेन्द्रियाण्यनुक्रामन्ति क्वचित् एकादश, तथा क्वचित् महतः तन्मात्रसर्गं उपदिशन्ति क्वचित् अहंकारात्, तथा क्वचित् त्रीण्यन्तःकरणानि वर्णयन्ति क्वचित्

---

चलं गुणवृत्तमिति चेति । कदाचित् साम्यावस्था कदाचित् वैषम्यावस्थेति चलस्वभावा गुणा इत्यर्थः । ज्ञशक्ति—ज्ञानशक्तिम् ॥ ९ ॥

क्वचित् सप्तेन्द्रियाणीति । पञ्च कर्मेन्द्रियाणि, त्वगात्मकं ज्ञानेन्द्रियमेकमेव, मनश्च - इति सप्त । क्वचिदेकादशेति । पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्च-एकादश । क्वचिन्महत इति । महत्तत्त्वात् तन्मात्राणां शब्दस्पर्शरूपरसगन्धानां सर्गम् । क्वचित् त्रीणीति । मनः, बुद्धिः, अहंकारः-इति । क्वचिदेकमिति । मनोरूपम् ।

एकम्—इति। प्रसिद्ध एव तु श्रुत्या ईश्वरकारणवादिन्या विरोधः तदनुवर्तिन्या च स्मृत्या। तस्मादपि असमञ्जसं सांख्यानां दर्शनम्—इति।

(अत्राह—)ननु औपनिषदानामपि असमञ्जसमेव दर्शनम्, तप्यतापकयोः जात्यन्तरभावानभ्युपगमात्। एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणं अभ्युपगच्छतां, एकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतौ—इत्यभ्युपगन्तव्यं स्यात्। यदि च एतौ तप्यतापकौ एकस्यात्मनो विशेषौ स्यातां स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येतेति, तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रं अनर्थकं स्यात्। न हि औष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते। योऽपि जलवीचीतरङ्गफेनाद्युपन्यासः तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति, समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः।

प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके। तथाहि—अर्थी च अर्थश्च अन्योन्यभिन्नौ लक्ष्येते। यदि अर्थिनः स्वतोऽन्यः अर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं स्यात्, यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध

---

साङ्ख्यः अद्वैतिमते प्रत्यक्षादिविरोधादसामञ्जस्यं शङ्कते—नन्वौपनिषदानामिति। तप्यतापकयोरिति। तापो दुःखं, तदाश्रयः तप्यः, दुःखहेतुः तृष्णादिः तापकः, तयोः आत्मोपादानकत्वेन आत्मनस्सकाशात् पृथग्भावानभ्युपगमादित्यर्थः। सङ्ग्रहवाक्यं विवृणोति—एकं हीति। ततः किं, तत्राह—यदि चैताविति। योऽपि जलवीचाति। 'भोक्त्रापत्तेरविभागश्चेत्' इतिसूत्रे इत्यर्थः।

अपि च, तप्यतापकयोर्भेदो लोकप्रसिद्धः, सोऽपि नोपपद्यते, एकेन ब्रह्मणा अभिन्नयोस्तयोः परस्परमभेदस्यावश्यकत्वात्- इत्याह—प्रसिद्धश्चायं तप्यतापकयोरिति। जात्यन्तरभावः—भेदः। 'स नोपपद्यते' इति शेषः। तप्यतापकस्वरूपं तयोर्भेदं च विवृण्वन्, 'तयोरेकब्रह्माभिन्नत्वे न केवलं प्रत्यक्षादिविरोधः, अपि तु मोक्षोऽप्यनुपपन्नः' इत्याह—तथा हीत्यादिना। अर्थः—सुखसाधनं

एवेति न तस्य तद्विषयमर्थित्वं भवति, अप्राप्ते ह्यर्थे अर्थिनोऽर्थित्वं स्यादिति। तथा अर्थस्याप्यर्थत्वं न स्यात्। यदि स्यात् स्वार्थत्वमेव स्यात्। न चैतदस्ति। संबन्धिशब्दौ ह्येतौ अर्थी च अर्थश्चेति। द्वयोश्च सम्बन्धिनोः संबन्धः स्यात् न एकस्यैव। तस्मात् भिन्नावेतौ अर्थार्थिनौ। तथा अनर्थानर्थिनावपि। अर्थिनोऽनुकूलः अर्थः, प्रतिकूलः अनर्थः, ताभ्यां एकः पर्यायेण उभाभ्यां संबध्यते। तत्र अर्थस्याल्पीयस्त्वात् भूयस्त्वाच्चानर्थस्य उभावप्यर्थानर्थौ अनर्थ एवेति तापकः स उच्यते, तप्यस्तु पुरुषः य एकः पर्यायेण उभाभ्यां संबध्यते-इति। तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः। जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात् स्यादपि कदाचित् मोक्षोपपत्तिः-इति।

अत्रोच्यते-न-एकत्वादेव तप्यतापकभावानुपपत्तेः। भवेदेष दोषः, यदि एकात्मतायां तप्यतापकौ अन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्। न त्वेतदस्ति, एकत्वादेव। न हि अग्निरेकः सन् स्वमात्मानं दहति प्रकाशयति वा सत्यपि औष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च। किमु कूटस्थे ब्रह्मण्येकस्मिन् तप्यतापकभावः संभवेत्।

क्व पुनः अयं तप्यतापकभावः स्यादिति ?

उच्यते—किं न पश्यसि 'कर्मभूतो जीवद्देहः तप्यः तापकः सविता' इति।

---

सुखं च। अनर्थः—दुःखसाधनं दुखं च। वैषयिकं च सुखं दुःखपर्यवसायित्वात् दुःखतुल्यम्। सर्वमेतत् तापकम्। तत्सम्बन्धी पुरुषः तप्यः। तथा च तप्यतापकयोर्भेदः एकेनात्मनातयोरभिन्नत्वेन नोपपद्यते। आत्माभिन्नत्वे च तयोः आत्मस्वरूपान्तर्भावात् तस्य च ज्ञानेनोच्छेत्तुमशक्यत्वात् मोक्षानुपपत्तिरिति 'तथाहि' इत्यादेः 'अत्रोच्यते' इत्यतः प्राक्तनस्य ग्रन्थस्य अर्थः।

परमार्थगत्या तप्यतापकभाव एव नास्ति, कस्यानुपपत्तिः अद्वैतवादिनं प्रत्यापाद्यते-इत्यभिप्रेत्य परिहरति—अत्रोच्यते-न-एकत्वादिति। तर्हि तप्यतापकभावप्रसिद्धेः का गतिरिति पृच्छति—क्व पुनरिति। आविद्यकोऽयं तप्यतापकभाव इति वक्तुमुपक्रमते—किं न पश्यसीति। संहतत्वं-मिलितत्वम्। परमार्थत

ननु—तप्तिर्नाम दुःखं, सा चेतयितुः, न अचेतनस्य देहस्य। यदि हि देहस्यैव तप्तिः स्यात्, सा देहनाशे स्वयमेव नश्यतीति, तन्नाशाय साधनं न एषितव्यं स्यात्—इति।

उच्यते—देहाभावेऽपि केवलस्य चेतनस्य तप्तिः न दृष्टा। न च त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केवलस्य इष्यते। नापि देहचेतनयोः संहतत्वम्, अशुद्ध्यादिदोषप्रसङ्गात्। न च तप्तेरेव तप्तिमभ्युपगच्छसि। कथं तत्रापि तप्यतापकभावः।

सत्वं तप्यं तापकं रजः-इति चेत्, न—ताभ्यां चेतनस्य संहतत्वानुपपत्तेः।

सत्वानुरोधित्वात् चेतनोऽपि तप्यत इवेति चेत्, परमार्थतस्तर्हि नैव तप्यत इत्यापतति, इवशब्दप्रयोगात्। न चेत् तप्यते न इवशब्दो दोषाय। न हि डुण्डुभः 'सर्प इव' इत्येतावता सविषो भवति, सर्पो वा 'डुण्डुभ इव' इत्येतावता निर्विषो भवति।

अतश्च अविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिकः इत्यभ्युपगन्तव्यमिति, नैवं सति ममापि किंचिद्दुष्यति।

अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि, तवैव सुतरां अनिर्मोक्षः प्रसज्येत, नित्यत्वाभ्युपगमाच्च तापकस्य।

---

इति शेषः। सत्वं-बुद्धिगतः सत्वांशः, स हि सुखादिदर्शनात्मना परिणमते। तापकं रज इति। बुद्धिगतो रजोंऽशः, स हि रागाद्युत्पादनेन दुःखहेतुः। नित्यत्वाभ्युपगमादिति। रजोगुणो हि तापकः। स च नित्यः साङ्ख्यमते।

यद्यपि सत्वरजसोः तप्यतापकयोः शक्तिर्नित्या, तथापि न मोक्षानुपपत्तिः। यदा हि तमस उद्रेको भवति तदा बुद्धेः आत्मना सह विवेकग्रहो न भवति, तदा च सा रजोंऽशेन दुःखादिजनिका तापहेतुर्भवति, दुःखदर्शनात्मना परिणतं सत्वं तप्यं भवति। यदा तु सत्वोद्रेकेण आत्मना सह विवेको बुद्धौ भवति, तदा अविवेकनिवृत्तौ निमित्ताभावात् तप्यतापकभावः शक्तिमात्रावशेषो भवति, न तु दुःखादिकं तद्दर्शनं वा, स एव मोक्षः-इति शङ्कते—तप्यतापकशक्त्योर्नित्य-

तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्षत्वात् तप्तेः, संयोगनिमित्तादर्शननिवृत्तौ आत्यन्तिकः संयोगोपरमः, ततश्च आत्यन्तिको मोक्ष उपपन्नः–इति चेत्;

न–अदर्शनस्य तमसो नित्यत्वाभ्युपगमात् । गुणानां च उद्भवाभिभवयोः अनियतत्वात् अनियतः संयोगनिमित्तोपरम इति वियोगस्याप्यनियतत्वात्, सांख्यस्यैव अनिर्मोक्षोऽपरिहार्यः स्यात् ।

औपनिषदस्य तु आत्मैकत्वाभ्युपगमात्, एकस्य च विषयविषयिभावानुपपत्तेः, विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणात्, अनिर्मोक्षशङ्का स्वप्नेऽपि नोपजायते । व्यवहारे तु यत्र यथा दृष्टः तप्यतापकभावः तत्र तथैव स इति, न चोदयितव्यः परिहर्तव्यो वा भवति ॥ १० ॥

२ महद्दीर्घाधिकरणम्

प्रधानकारणवादो निराकृतः । परमाणुकारणवाद इदानीं निराकर्तव्यः । तत्र आदौ तावत् योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते ।

---

त्वेऽपीति । निमित्तं तमस उद्रेकः, तत्कृतस्संयोगः अविवेकः । तदपेक्षत्वात् फलजननाय ।

अदर्शनस्य तमसो नित्यत्वाभ्युपगमादिति । तथा च, तमोगुणस्य नित्यतया नित्यमेव अविवेकस्स्यादिति, अनिर्मोक्षः । उद्भूत एव तमोगुणः अविवेकहेतुः, उद्भवस्य च अनियतत्वात् नानिर्मोक्षः-इत्याशङ्क्य, [1]अभिभवस्यापि अनियतत्वात् अभिभूतस्यापि तमसः पुनरुद्भवात् मुक्तानामपि बन्धः स्यात्-इत्यभिप्रेत्याह––उद्भवाभिभवयोरनियतत्वादिति ॥ १० ॥

इति रचनानुपपत्त्यधिकरणम्

वृत्तानुवादपूर्वकं [2]वर्तिष्यमाणाधिकरणमवतारयति — प्रधानकारणवाद इति । अत्र तार्किकमतनिराकरणोपयोगि अधिकरणद्वयम् । तत्र आद्याधिकरणतात्पर्यमाह—तत्र आदौ तावदिति । स प्रतिसमाधीयत इति । यद्यपि-

---

1. मु. अभिभवस्यानियतत्वात्

2. आ. उत्तराधिकरण

तत्रायं वैशेषिकाणामभ्युपगमः—कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरं आरभन्ते, शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात्, तद्विपर्ययादर्शनाच्च। तस्मात् चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात्। तददर्शनात्तु न चेतनं ब्रह्म जगत्कारणं भवितुमर्हति—इति। इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति—

---

स्वपक्षोद्भावितदोषसमाधानं पूर्वपाद एव सङ्गतम्, तस्यैव स्वपक्षोद्भावितदोषनिरासार्थत्वात्, अत्र तु पादे परपक्षनिरासपराणामेवाधिकरणानां सङ्गतिः, तथाऽपि- 'जगति प्रधानधर्माणां सुखदुःखमोहानां अननुवृत्तेः न प्रधानोपादानकत्वं' इति पूर्वस्मिन्नधिकरणे उक्तम्, तथा सति 'ब्रह्मगुणस्य चैतन्यस्यापि अनुवृत्तिः जगति नोपलभ्यत इति, न जगतो ब्रह्मोपादानकत्वम्' इति प्रसक्तस्य चोद्यस्य निराकरणात् प्रासङ्गिकमत्र इदमधिकरणम्।

न चेतनं ब्रह्म जगत्कारणं भवितुमर्हति, अपि तु स्पर्शादियुक्तस्य कार्यस्य भूम्यादेः तादृशाः परमाणव एव मूलकारणम्। तत्र वायवीयपरमाणवो रूपादिषु मध्ये स्पर्शमात्रयुक्ताः। तेजःपरमाणवः स्पर्शरूपयुक्ताः। आप्यपरमाणवः स्पर्शरूपरसयुक्ताः। पृथिवीपरमाणवः स्पर्शरूपरसगन्धयुक्ताः। [1]भूतत्रयपरमाणुगताः स्पर्शादयो नित्याः। पृथिवीपरमाणुगतास्तु अनित्याः [2]पाकजाश्च। शब्दस्तु कार्यद्रव्यगतो न भवत्येव, तस्य आकाशमात्रगतत्वात्। आकाशस्य च नित्यत्वं निरवयवत्वं च—इति [3]तेषां परिभाषा।

तदीययैव प्रक्रियया व्यभिचारयतीति। यद्यपि—सिद्धान्ते नित्यं ज्ञानं ब्रह्मस्वरूपमेव, न गुणः। तत्तादात्म्यं च घटस्स्फुरतीति सिद्धमेव सर्वत्र जगति। वृत्तिरूपं तु ज्ञानं अन्तःकरणावस्थाविशेषो द्रव्यमेव, न आत्मगुणः।

---

1. **भूतत्रयेति** उक्तेषु आद्यभूतत्रयेत्यर्थः।

2. मु. पाकजाश्चेति

3. **तेषामिति** तच्छब्देन प्रकृताधिकरणनिराकार्यत्वेन बुद्धिस्थाः तार्किकाः परामृश्यन्ते।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

**एषा तेषां प्रक्रिया—परमाणवः किल कंचित्कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्च तिष्ठन्ति । ते च पश्चात् अदृष्टादिपुरस्सराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्यजातं आरभन्ते, कारणगुणाश्च कार्ये गुणान्तरम् । यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरान् आरभन्ते । परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरं आरभते, द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात् । अणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी परिमाणे वर्णयन्ति ।**

---

अतः 'ब्रह्मोपादानकत्वे प्रपञ्चस्य, ब्रह्मगुणस्य प्रपञ्चे अनुवृत्तिः स्यात्' इति दोषो निरवकाश एव भवतीति वक्तुं शक्यम् । तथापि, तार्किकप्रक्रियामभ्युपगम्य तद्रीत्यैव समाधानं वक्तुं अधिकरणम् - इति भावः ।

**एषा तेषां प्रक्रियेति** । कार्यद्रव्याणां समवायिकारणनाशात् असमवायिकारणनाशाद्वा नाशः । तथा च, तैस्तैः प्रलयनिमित्तैः अवयवानां तत्संयोगानां च नाशेन पृथिव्यादीनां परमाण्वन्तो नाशो भवति । परमाणूनां नित्यत्वात् ते यावत्प्रलयं कार्यद्रव्यरहिता एव भवन्ति । प्रलयान्ते च अदृष्टवशात् परमाणुषु क्रिया उत्पद्यते, तया परमाण्वोः संयोगो भवति, ततो द्व्यणुकमुत्पद्यते । तत्र परमाणुद्वयं समवायिकारणम्, तत्संयोगोऽसमवायिकारणम् । एवं उत्तरोत्तरकार्योत्पत्तिः । **परमाणुगुणविशेषस्तु पारिमाण्डल्यमिति** । परमाणुपरिमाणं पारिमाण्डल्यम् । तस्य न परिमाणान्तरारम्भकत्वम्, नित्यपरिमाणत्वात्, मनोगतपरिमाणवत् आत्माकाशादिगतमहत्त्ववच्च । पारिमाण्डल्यरूपत्वाद्वा, मनोगतपारिमाण्डल्यवत् । अन्यथा द्व्यणुकस्य ततोऽपि सूक्ष्मत्वं भवेत्, परिमाणस्य स्वोत्कृष्टपरिमाणजनकत्वस्वाभाव्यात्, यथा हि कपालादिगतं महत्त्वं घटे स्वोत्कृष्टमहत्त्वं जनयति, तथा पारिमाण्डल्यमपि अतिशयितं पारिमाण्डल्यं जनयेत्—इत्यर्थः[1] ।

---

1. **अर्थः** — '**परमाणुगुणविशेषस्तु**' इत्यादिभाष्यस्य तात्पर्यार्थः ।

**यदापि द्वे द्व्यणुके चतुरणुकमारभेते तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनां आरम्भकत्वम्, अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते, चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात् । यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभते तदापि समानैषा योजना ।**

---

यदाऽपि द्वे द्व्यणुके इत्यादि । ननु—तार्किकपरिभाषायां द्वयोर्द्व्यणुकयोर्नोपादानत्वम् । तत्कार्यस्य भोगानुपयुक्तत्वात्, तदपि हि [1]न महद्भवेत् । कारणबहुत्वमहत्त्वप्रचयैर्हि कार्ये महत्त्वं वक्तव्यम् । तत्तु प्रकृते न सम्भवति । द्वयोर्द्व्यणुकयोर्महत्त्वबहुत्वे न स्त एव । प्रचयस्तु तूलपिण्डे तदारम्भकावयवानामेकदेशमात्रसंयोगः शैथिल्यरूपः द्व्यणुके न सम्भवति । तदारम्भकपरमाण्वोः निष्प्रदेशत्वात् । तथा च द्व्यणुकद्वयकार्यस्य महत्त्वाभावेन द्व्यणुकद्वयमपेक्ष्य भोगविशेषाभावात् तदारम्भो व्यर्थ एव । 'चतुरणुकस्य महत्त्वदीर्घत्वाभ्युपमात्' इत्यपि नोपपद्यते । द्व्यणुकद्वयकार्ये चतुरणुके उक्तगत्या महत्त्वं नास्त्येव । दीर्घत्वं तु महत्त्वनियतं तदभावे नोपपद्यते । 'यदापि बहवः परमाणवः' इत्यादिना द्व्यणुकारम्भं विनैव बहूनां परमाणूनां महदारम्भकत्वोक्तिरपि न तत्परिभाषाप्रसिद्धा । बहूनां परमाणूनां हि संयोगो न सम्भवति । तदा हि परमाण्वन्तरसंयोगवत्येव परमाणौ पुनः परमाण्वन्तरसंयोगो वक्तव्यः । स च अव्याप्यवृत्तिरिति वक्तुं न शक्यते, परमाणूनां निष्प्रदेशत्वात् । व्याप्यवृत्तित्वे च, [2]पार्थिवाप्यपरमाण्वोः एकदेशावच्छेदेन समावेश आपतन् नोपपद्यते । न हि पार्थिवद्रवद्रव्यद्वयस्य [3]घटादौ एकत्रैव समावेशः, नापि द्वयोर्जलयोः । अपि च परमाणुद्वयसंयोगे सति द्व्यणु-

---

1. **न महद्भवेदिति** महत्त्वाभावादेव भोगानुपयुक्तत्वमिति भावः ।

2. **पार्थिवाप्येत्यादि** मूर्तयोः समानदेशताविरोधात् पार्थिवयोर्वा आप्ययोर्वा परमाण्वोः एकत्र समावेशो न भवति । यद्यपि अवयवावयविनौ तन्तुपटौ एकत्र संयोगिभूभागे भवतः, यत्र जलं तत्र स्वच्छजलान्तर्गतसिकतादिग्रहणार्थं आलोकोऽप्यस्ति; तथापि, अवयवावयविभावरहितानां जलालोकादिविरलद्रव्यव्यतिरिक्तानां च मूर्तानां समानदेशत्वं नास्ति – इति भावः ।

3. आ.घटादेः

कारम्भकत्वं तावत् कारणसमावेशात् सिद्धम् । द्व्यणुकत्रयसमावेशे च महाकार्यजनकत्वमपि सिद्धमेव । तथा च 'कारणकारणजातीयस्य कार्यकार्यजातीयाजनकत्वम्' इति व्याप्त्या न बहूनां महाकार्यारम्भकत्वम् । न हि अंशूनां पटकारणीभूततन्तुकारणांशुजातीयानां अंशुकार्यभूततन्तुकार्यपटजातीयारम्भकत्वं साक्षादेव दृष्टम्—इति चेत्,

उच्यते— इयं तार्किकपरिभाषा अप्रयोजिकेति तथा भाष्ये उक्तम् ।

तथा हि— द्वयोर्द्व्यणुकयोः भोगविशेषानुपयोगिकार्यजनकत्वं न सम्भवतीत्यसङ्गतम् । द्व्यणुकद्वयसंयोगे सति सामग्रीसद्भावेन प्राप्तस्य कार्यस्य प्रयोजनाभावमात्रेण निवारयितुमशक्यत्वात् । न हि द्वयोर्द्व्यणुकयोः संयोग एव [1]न सम्भवतीति निर्बन्धः सम्भवति ।

अपि च, प्रयोजनाभावमात्रेण कार्यस्य सामग्रीसम्भवप्राप्तस्य निवारणे द्व्यणुकोत्पत्तिरपि न स्यात्, तस्य भोगानुपयुक्तत्वात् । साक्षादनुपयोगेऽपि त्र्यणुकोत्पत्तिद्वारा भोगोपयोगोऽस्तीति चेत्, द्व्यणुकद्वयारब्धस्यापि कार्यस्य [2]स्थूलकार्यारम्भद्वारा भोगविशेषोपयोगः सम्भवत्येव ।

द्व्यणुकद्वयारब्धस्य कार्यस्य महत्त्वदीर्घत्वाभ्युपगमोक्तिस्तु, 'द्व्यणुकद्वयमपेक्ष्य तत् स्थूलमित्यभ्युपगन्तुं शक्यम्' इत्यभिप्राया । अतो नानुपपत्तिः ।

**एवं** बहूनां परमाणूनां संयोगे सति स्थूलकार्यारम्भोऽपि द्व्यणुकारम्भं विहायैव केन वारयितुं शक्यः । न च तेषां परमाणूनामेकदेशसमावेशो नोपपद्यत इति वाच्यम् । येनापि द्व्यणुकत्रयसमावेश उपेयते तेनापि द्व्यणुकारम्भकैकपरमाणुसंयोगवत्येव तद्द्व्यणुकान्तर्गतपरमाणौ द्व्यणुकान्तरसंयोग उपेयः, द्व्यणुकद्वयसंयोगस्य [3]संयोगजत्वात् । 'कारणाकारणसंयोगात् कार्याकार्यसंयोगः, हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगो यथा' इति हि तन्मर्यादा । तथा च, यथा एकस्मिन्नेव

---

1. आ. न भवतीति निर्मूलनिर्बन्धः
2. आ. स्थूलकार्यान्तरारम्भद्वारा
3. आ. संयोगजत्वाभ्युपगमात्

**तदेवं, यथा परमाणोः परिमण्डलात् सतः अणु ह्रस्वं च द्व्यणुकं जायते महद्दीर्घं च त्र्यणुकादि, न परिमण्डलम्; यथा वा द्व्यणुकात् अणोर्ह्रस्वाच्च सतः महद्दीर्घं च त्र्यणुकं जायते, नाणु नो ह्रस्वम्; एवं चेतनाद्ब्रह्मणः अचेतनं जगत् जनिष्यते—इत्यभ्युपगमे किं तव छिन्नम्।**

---

परमाणौ द्व्यणुकपरमाण्वोः समावेश उपेयते तथा एकस्मिन्नेव परमाणौ बहूनां परमाणूनां [1]संयोगः किमिति नाभ्युपगम्यते!

'कारणकारणजातीयस्य कार्यकार्यजातीयानारम्भकत्वम्' इति नियमश्च न साधुः। अप्रयोजकत्वात्, व्यभिचाराच्च। तन्तुद्वयसंयोगे हि द्वितन्तुकसूत्रमारभ्यते, द्वितन्तुकैस्त्रिभिस्सूत्रैः त्रिवृद्रज्जुः। कदाचित्तु तन्तुत्रयेणैव त्रिवृद्रज्जुरारभ्यते। तत्र कारणकारणजातीयानां [2]तन्तूनां कार्यकार्यजातीयत्रिवृद्रज्ज्वारम्भकता दृष्टा। न च—[3]द्वितन्तुकसूत्रैःकृतत्रिवृद्रज्जुमपेक्ष्य त्रितन्तुकत्रिवृद्रज्जुर्विजातीयैव, अतो न व्यभिचारः—इति वाच्यम्। तथा सति द्व्यणुकत्रयारब्धात् त्र्यणुकात् [4]परमाणुत्रयारब्धत्र्यणुकस्यापि विजातीयत्वोपपत्त्या उक्तनियमविरोधाभावात्।

तथा च, तार्किकपरिभाषाया अप्रयोजकत्वद्योतनाय द्वयोर्द्व्यणुकयोः बहूनां परमाणूनां परमाणुसहितानां वा द्व्यणुकानां स्थूलकार्यारम्भकत्वोक्तिः भाष्ये उपपन्ना।

सूत्रं योजयति—तदेवमिति। महद्दीर्घवदितिवतेः [5]अधस्तात् अणुह्रस्वेति पदाध्याहारो द्रष्टव्यः। अत्र च, यदि 'परमाणुभ्यां द्वाभ्यां अणु ह्रस्वं च द्व्यणुकं आरभ्यते, बहुभिर्द्व्यणुकैरेव त्र्यणुकमारभ्यते, तच्च महद्दीर्घम्' इति परिभाषानुसारेण सूत्रार्थो वर्णनीयः, तदा 'ह्रस्वाद्द्व्यणुकात् यथा महतो दीर्घस्य त्र्यणुकस्य उत्पत्तिः, यथा वा परिमण्डलात् परमाणोः अणोः ह्रस्वस्य द्व्यणुकस्य उत्पत्तिः, एवं चेतनात् ब्रह्मणः अचेतनस्य जगत उत्पत्तिः' इति सूत्रार्थो द्रष्टव्यः।

---

1. आ. 'संयोगः' नास्ति
2. मु. यानां तन्तुकार्यं
3. मु. द्वितन्तुकसूत्रीकृत. आ. द्वितन्तुकत्रिसूत्रीकृत
4. मु. परमाणवारब्ध
5. मु. अधस्तात् ह्रस्वेति

भाष्ये तु, 'परिमण्डलात् सतः अणु ह्रस्वं द्व्यणुकं जायते, महद्दीर्घं च त्र्यणुकादि' इति योजनाकथनं तार्किकपरिभाषामनादृत्य ।

ननु--सूत्रे महद्दीर्घवदिति निर्देशः किं कर्मधारयसमासं महद्दीर्घपदयोः उपेत्य, उत द्वन्द्वसमासम् । नाद्यः—कर्मधारये 'आन्महतस्समानाधिकरणजातीययोः' इति सूत्रेण, समानाधिकरणे पदे जातीयप्रत्यये च परस्मिन् महत आत्वविधानेन 'महादीर्घवत्' इति प्रसङ्गात् । नापि द्वितीयः—एकस्मिन्नेव महत्त्वदीर्घत्वयोस्सत्त्वेन धर्मिभेदाभावेन द्वन्द्वसमासाप्रवृत्तेः । पदार्थभेद एव हि द्वन्द्वः ।

ननु—चार्थे द्वन्द्वः । समानाधिकरणस्थले च [1]पदार्थतावच्छेदकभेदेन तयोरितरेतरयोगः चार्थो वर्तत एवेति किमिति पदार्थभेदनिर्बन्धो द्वन्द्वे । तथा च महद्दीर्घपदयोः समानाधिकरणत्वेऽपि पदार्थतावच्छेदकभेदात् द्वन्द्वोपपत्तेः न आत्वप्रसङ्गः — इति चेत्,

न—'शेषो बहुव्रीहिः' इति सूत्रात् शेषग्रहणानुवृत्त्या कर्मधारयविषये चार्थे [2]द्वन्द्वाप्रवृत्तेः महाभाष्ये व्यवस्थापितत्वात् ।

न च—महद्दीर्घपदयोर्धर्मलक्षणा, तथा च पदार्थभेदादेव द्वन्द्वोपपत्तिः—इति वाच्यम् । त्र्यणुकोपादानकयोस्तयोः ह्रस्वपरिमण्डलोपादानकत्वाभावेन पञ्चम्यर्थानन्वयप्रसङ्गात् ।

न च—ह्रस्वपरिमण्डलपदे अपि धर्मपरे, तथा च महत्त्वदीर्घत्वे प्रति ह्रस्वत्वपारिमाण्डल्ययोः असमवायिकारणत्वाभिप्राया पञ्चमी भविष्यति - इति वाच्यम् । महत्त्वदीर्घत्वयोः स्वाश्रयोपादनगतबहुत्वमहत्त्वप्रचयासमवायिकारणकत्वेन ह्रस्वत्वपारिमाण्डल्ययोः [3]तदनुपपत्त्या पञ्चम्यर्थानन्वयतादवस्थ्यात् ।

---

1. **पदार्थतावच्छेदकभेदेनेति** दृश्यते हि 'नीलघटयोरभेदः' इत्यादौ नीलत्वघटत्वरूपपदार्थतावच्छेकभेदादेव द्वन्द्वः इति भावः ।

2. **द्वन्द्वाप्रवृत्तेरिति** यदि पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदे इतरेतरयोगद्वन्द्वः स्यात्, तर्हि कर्मधारयविषयेऽपि चार्थे द्वन्द्वप्रवृत्तेः सम्भवात् तदप्रवृत्त्युक्तिः भाष्ये अनुपपन्ना स्यात्, अतः महाभाष्यविरोधात् न पदार्थतावच्छेदकभेदमात्रे द्वन्द्वः इति भावः ।

3. **तदनुपपत्त्या**—असमवायिकारणत्वानुपपत्त्या ।

अथ मन्यसे—'विरोधिना परिमाणान्तरेण आक्रान्तं कार्यद्रव्यं द्व्यणुकादि' इत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनि—इत्यभ्युपगच्छामि, न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति, येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत, न ह्यचेतना नाम चेतनाविरोधी कश्चिद्गुणोऽस्ति, चेतनाप्रतिषेधमात्रत्वात्, तस्मात् पारिमाण्डल्यादिवैषम्यात् प्राप्नोति चेतनाया आरम्भकत्वम्—इति ।

मैवं मंस्थाः । 'यथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनां अनारम्भकत्वं एवं चैतन्यस्यापि' इत्यस्यांशस्य समानत्वात् ।

न च परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणम्; प्राक्परिमाणान्तरारम्भात् पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः । आरब्धमपि कार्यद्रव्यं प्राग्गुणारम्भात् क्षणमात्रमगुणं तिष्ठति-इत्यभ्युपगमात् ।

न च 'परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनि' इत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते । परिमाणान्तरस्य अन्यहेतुत्वाभ्यु-

---

अतः [1]कथं सूत्रयोजना ।

उच्यते—महदितिपदेन अन्या त्र्यणुकव्यक्तिरुच्यते, दीर्घपदेन च अन्या । तथा च पदार्थभेदात् द्वन्द्व इति न आत्वस्य महच्छब्दे प्रसक्तिः । न च—महत्त्वदीर्घत्वयोः [2]नैयत्येन कथं तदाश्रयतया व्यक्तिद्वयं व्यवस्थितं शक्यं ग्रहीतुम्, न हि 'इदं प्रमेयं' 'अभिधेयमिदं' इति व्यवस्थितनिर्देश उपपद्यते—इति वाच्यम् । यद्यपि महत्त्वदीर्घत्वे समनियते, तथापि परितस्स्थैतरवयवैः यदारभ्यते, तत् वर्तुलं चतुरश्रं वा महदिति व्यवह्रियते । यत्तु दक्षिणोत्तरभागसंयुक्तैर्वा प्राक्पश्चाद्भागसंयुक्तैर्वा अवयवैरारभ्यते, तत् सूक्ष्मं दीर्घं चेति व्यवह्रियते सत्यपि [3]महत्त्वे । एतादृशलौकिकव्यवहारमाश्रित्य व्यवस्थितनिर्देशोपपत्तिः ।

---

1. आ. कथमत्र
2. **नैयत्येन**—दैशिकसमव्यापकत्वेन ।
3. मु. महत्त्वे न तादृश

पगमात् । 'कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत्' (वै. सू. ७.१.९) 'तद्विपरीतमणु' (७।१।१०) 'एतेन दीर्घत्वह्रस्वत्वे व्याख्याते' (७।१।१७) इति हि काणभुजानि सूत्राणि। न च संनिधानविशेषात् कुतश्चित् कारणबहुत्वादीन्येवारभन्ते न पारिमाण्डल्यादीनीत्युच्येत। द्रव्यान्तरे गुणान्तरे वा आरभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात् ।

तस्मात् स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं, तथा चेतनाया अपीति द्रष्टव्यम् ।

संयोगाच्च द्रव्यादीनां विलक्षणानां उत्पत्तिदर्शनात् समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेत्, न—दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात् । न च द्रव्यस्य द्रव्यमे-

---

कारणबहुत्वादिति । समपरिमाणैर्दृढसंयोगयुक्तैर्विषमसङ्ख्यैस्तन्तुभिरारब्धयोः पटयोः, एको महान् एकोऽल्प इति यद्वैषम्यं, तत् तन्तुसङ्ख्याधिक्यन्यूनताकृतमिति, तत्र बहुत्वस्य महत्त्वप्रयोजकता । समसङ्ख्यैर्दृढसंयोगयुक्तैर्विषमपरिमाणैरारब्धयोः पटयोः मध्ये एकस्य महत्त्वोद्रेकः तन्तुगतमहत्त्वोत्कर्षप्रयुक्त इति, महत्त्वं प्रति कारणगतमहत्त्वस्य प्रयोजकता । तुल्यपरिमाणैस्समसङ्ख्यैस्तन्तुभिश्शिथिलाशिथिलसंयोगयुक्तैरारब्धयोः पटयोः मध्ये एकस्य महत्त्वोत्कर्षः शिथिलसंयोगरूपप्रचयकृत इति प्रचयस्य महत्त्वोपयोगः ।

तद्विपरीतमिति । द्वाभ्यां परमाणुभ्यां आरब्धे द्व्यणुके अणुत्वम् । तत्र उपादानभूतयोः परमाण्वोः बहुत्वमहत्त्वे न स्तः । परमाण्वोर्निरवयवत्वात् [1]एकदेशमात्रावच्छेदेनसंयोगरूपप्रचयोऽपि न सम्भवति । अतः अणुत्वं महत्त्वकारणविपरीतकारणप्रयुक्तम् । एतेन दीर्घत्वह्रस्वत्वे इति । अणुत्वकारणमेव ह्रस्वत्वप्रयोजकं, महत्त्वकारणमेव दीर्घत्वकारणम्, अतः तत्कारणं पृथक् न व्याख्यातव्यमिति । संयोगाच्चेति : समवायिकारणसंयोगस्य तार्किकमते द्रव्यमात्रे कारणत्वाभ्युपगमादिति भावः ।

---

1. आ. एकैकमात्रावयवावच्छेदेनसंयोग

वोदाहर्तव्यं गुणस्य वा गुण एवेति कश्चित् नियमे हेतुः अस्ति। सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार-'प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात् संयोगस्य पञ्चात्मकं न विद्यते' (वै सू ४।२।२) इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन् संयोगः अप्रत्यक्षः एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयच्छरीरं अप्रत्यक्षं स्यात्, प्रत्यक्षं हि शरीरम्, तस्मात् न पाञ्चभौतिकम्-इति। एतदुक्तं भवति—गुणश्च संयोगः, द्रव्यं शरीरम्।

'दृश्यते तु' (ब्र. सू. २।१।६) इति च अत्रापि विलक्षणोत्पत्तिः प्रपञ्चिता। नन्वेवं सति तेनैवैतद्गतम्। नेति ब्रूमः। तत् सांख्यं प्रति उक्तम्, एतत्तु वैशेषिकं प्रति। नन्वतिदेशोऽपि समानन्यायतया कृतः 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' (ब्र. सू २।१।१२) इति। सत्यमेतत्। तस्यैव स्वयं वैशेषिकपरीक्षारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः॥ ११॥

---

तस्यैव स्वयं वैशेषिकपरीक्षारम्भ इति। शिष्टापरिग्रहाधिकरणे, 'कार्यद्रव्यं स्वन्यूनपरिमाणद्रव्यारब्धं' इति नियममास्थाय, 'परमाणव एव मूलकारणं न तु परममहद्ब्रह्म' इति तार्किकाभ्युपगमो निराकृतः। इह तु, 'कार्यगता विशेषगुणाः कारणगतविशेषगुणपूर्वका एवेति गन्धादिमदेव मूलकारणम्' इति यत् तार्किकेणाभ्युपगम्यते तस्य निराकरणं क्रियत इति।

ननु—यदि कार्यकारणयोः विशेषगुणमादाय सालक्षण्यं विवक्षितं कथं तर्हि कार्यकारणयोः परिमाणवैलक्षण्योक्त्या तस्य नियमस्य दूषणमुक्तं भवेत्। न च—तर्हि कार्यकारणयोः गुणत एव सालक्षण्यं निराकर्तव्यमिहास्तु, न तु [1]विशेषेत्यपि, तथा च परिमाणस्य विशेषगुणत्वाभावेऽपि न क्षतिः—इति वाच्यम्। तथासति, नविलक्षणत्वादिति साङ्ख्यं प्रति साधितेनैव कार्यकारणयोर्वैलक्षण्येन इदमपि गतं स्यात्। न हि न्यायभेदाभावे वादिभेदमात्रेण अपौनरुक्त्यमुपपद्यते—इति चेत्,

उच्यते— तार्किकैर्हि शब्दस्पर्शरूपरसगन्धसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः चतु-

---

1. आ. विशेषेत्यपि विवक्षणीयम्

विंशतिर्गुणाः । तेषु—शब्दादयः पञ्च, सांसिद्धिकद्रवत्वं, स्नेहः, बुद्ध्यादयोऽष्टौ, भावनाख्यः संस्कारश्चेति विशेषगुणाः । तेषां च विशेषगुणत्वे तत्तद्द्रव्यमात्रगतत्वं प्रयोजकम् । न चैवं—रूपरसस्पर्शानां विशेषगुणता न स्यात्, रसस्य पृथिवी-जलसाधारणत्वात्, रूपस्य पृथिवीजलतेजस्साधारणत्वात्, स्पर्शस्य वायुसहितत्रितय-साधारणत्वात्—इति वाच्यम् । रूपादीनां हि न रूपत्वेन विशेषगुणता, अपि तु रूपस्य नीलत्वादिना । [1]तत्र धवलरूपव्यतिरिक्तानि रूपाणि पृथिवीमात्रासाधा-रणानि । धवलरूपं तु पाकजमेव पृथिव्याम्, तेजसि तु भास्वरम्, अप्सु तु अपाकजमभास्वरं, इति तत्तद्रूपेणैव तस्य विशेषगुणता । मधुरव्यतिरिक्ताश्च रसाः पृथिवीमात्रवृत्तय एव । माधुर्यं तु पाकजं पृथिव्याम्, अपाकजं जले, इति तेन रूपेण तस्य विशेषगुणता । तेजसि उष्णस्पर्श एव, जले शीतस्पर्श एव, पृथिव्यां पाकजानुष्णाशीतस्पर्शः, वायौ तु अपाकजानुष्णाशीतस्पर्शः, इति तेनतेन रूपेण तस्य विशेषगुणतेति व्यवह्रियते । एतेषां चेत् केनचिदुपाधिना क्रोडीकृतानां तत्तद्द्रव्य-मात्रवृत्तितया विशेषगुणत्वमुच्यते, तर्हि परिमाणस्य अबाद्यवृत्तिपरिमाणत्वेन पृथिवी-विशेषगुणत्वं शक्यते वक्तुमिति तद्वैलक्षण्यं सूत्रकृता उदाहृतम् । [2]न च कयाचि-ज्जात्या क्रोडीकृतानां गुणानां तत्तद्द्रव्यमात्रवृत्तित्वं विशषगुणत्वमिति वाच्यम् । तथा सति अपाकजाभास्वरत्वादीनां जातित्वाभावेन तेन रूपेण क्रोडीकृतस्य धवल-त्वस्य पृथिवीविशेषगुणत्वाभावप्रसङ्गात् । अतो न परिमाणादिव्यावृत्तं रूपादिष्वनुवृत्तं विशेषगुणत्वं शक्यते परिभाषितुम् ।

अपि च, कारणगतैर्विशेषगुणैः कार्येऽपि भवितव्यमिति नास्ति नियमः । सुरभ्यसुरभ्यवयवारब्धस्य विलक्षणरसावयवारब्धस्य अवयविनो गन्धरसादिराहित्यं तार्किकैरुपेयते[3] । गन्धादीनां व्याप्यवृत्तित्वाभ्युपगमेन एकदेशावच्छेदेन अवय-विवृत्त्यनुपपत्तेः, चित्रगन्धाद्यनङ्गीकाराच्च ।

अतो न चेतनब्रह्मकार्ये जगति चैतन्यमापादयितुं शक्यम् ।

---

1. मु. तत्र च

2. उपाधिस्थाने जातिनिवेशेन उक्तदोषपरिहारं आशङ्क्य निराकरोति—**नचेति** ।

3. **उपेयत इति** तादृशावयविनि गन्धप्रतीतेः परम्परया अवयवगन्धविषयकत्वं इति भावः ।

३ परमाणुजगदकारणत्वाधिकरणम्

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

इदानीं परमाणुकारणवादं निराकरोति । स च वाद इत्थं समुत्तिष्ठते—पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संयोगसचिवैः तन्त्वादिभिर्द्रव्यैः आरभ्यमाणानि दृष्टानि । तत्सामान्येन यावत् किंचित् सावयवं तत् सर्वं स्वानुगतैरेव संयोगसचिवैः तैस्तैर्द्रव्यैः आरब्धमिति गम्यते । स चायं अवयवावयविविभागो यतो निवर्तते सोऽपकर्षपर्यन्तगतः परमाणुः । सर्वं चेदं जगत् गिरिसमुद्रादिकं सावयवं, सावयव-

---

नापि कार्यगतैर्विशेषगुणैः कारणे भवितव्यमिति नियमः, येन [1]गन्धादिमदुपादानमपि गन्धादिमदेव भविष्यतीत्यापादनं प्रसरेत् । हरिद्राचूर्णारब्धे अवयविनि रक्तिमदर्शनात्, नीलपीतद्रव्यारब्धे अवयविनि हरितवर्णदर्शनाच्च । अतो न विशेषगुणकृतमपि कार्यकारणयोः सालक्षण्यम् ॥ ११ ॥

इति महद्दीर्घाधिकरणम्

[2]अनन्तराधिकरणस्य प्रासङ्गिकत्वात् तेन सङ्गतिं विहायैव, 'यदि निरधिष्ठाना कार्यरचना साङ्ख्यमते प्रसज्यते अतः तस्य हेयत्वं तर्हि तार्किकैः ईश्वराधिष्ठितानामेव परमाणूनां समवायिकारणत्वोपगमात् न तस्य हेयत्वम्' इति प्रत्युदाहरणलक्षणा साङ्ख्याधिकरणेनास्य सङ्गतिर्द्रष्टव्या ।

स्वानुगतैः—समवायेन स्वाधारभूतैः ।

**सोऽपकर्षपर्यन्तगतः परमाणुरिति** । न च—जालकनिर्गतसौरकिरणेषु भासमानः शकलविशेष एव पर्यन्तगतोऽस्तु, किमिति तदनन्तरं द्व्यणुकं परमाणुश्च कल्प्यते—इति वाच्यम् । [3]तादृशशकलविशेषः समवायिकारणारब्धः, महत्त्वे

---

1. **गन्धादिमदुपादानं**— गन्धादिमतां उपादानम् ।
2. **अनन्तरेति** अनन्तरपूर्वेत्यर्थः ।
3. **तादृशेति** यतः इत्यादिः ।

सति[1]चाक्षुषत्वात्। न च तत्र महत्त्वासिद्धिः। तथात्वे चाक्षुषतैव न स्यात्। बाह्यद्रव्यप्रत्यक्षे महत्त्वसमानाधिकरणोद्भूतरूपस्य कारणत्वात्। न च महत्त्वे सति चाक्षुषत्वं समवायिकारणजन्यतायामप्रयोजकमिति वाच्यम्। तादृशशकले हि न[2] आकाशादिवत् परममहत्त्वं, अपि तु घटादिवत् अपकृष्टमहत्त्वमुपेयम्। तथा च तादृशमहत्त्वस्य समवायिकारणगतबहुत्वादिप्रयुक्ततया समवायिकारणाभावे कथं तत्र महत्त्वं स्यात्। न च—तन्महत्त्वं नित्यमेवास्तु, मध्यममहत्त्वमेव जन्यम्, तथा च मध्यममहत्त्व एव समवायिकारणगतसङ्ख्याद्यपेक्षा—इति वाच्यम्। महत्त्वस्य जन्यतायां हि उत्कर्षापकर्षरूपजातिद्वययुक्तत्वं[3] मध्यमत्वं न प्रयोजकम्, अपि तु अपकर्षरूपजातियुक्तत्वमेव। तथा च अपकृष्टमहत्त्वाश्रयस्य द्रव्यस्य समवायिकारणारब्धत्वमावश्यकम्। तच्च समवायिकारणं सिध्यत् रूपादिमत् न्यूनपरिमाणं च सिध्यति। कार्यगतरूपाणां [4]अपाकजानां समवायिकारणगतरूपपूर्वकत्वनियमात्। तथा च त्र्यणुककारणतया द्व्यणुकसिद्धिः। तदपि द्व्यणुकं समवायिकारणारब्धं, महदारम्भकत्वात्। न चाप्रयोजकत्वम्। [5]कारणबहुत्वाधीनं हि कार्ये महत्त्वम्, [6]न च निरवयवानां बहूनां संयोग उपपद्यते, इति [7]सावयवत्वसिद्धौ समवायिकारणपूर्वकत्वावश्यम्भावात्। तथा च द्व्यणुककारणीभूतः परमाणुरेव पर्यन्तगत इति तार्किकाणामभिमानः।

---

1. **चाक्षुषत्वादिति** आकाशे व्यभिचारवारणायेदम्।

2. **न परममहत्त्वमिति** तत्र प्रमाणाभावात्, तथा सति अचाक्षुषत्वप्रसङ्गाच्च।

3. **युक्तत्वं**—युक्तत्वरूपम्।

4. **अपाकजानामिति** नैयायिकमताभिप्रायेणेदं विशेषणं पाकजेषु व्यभिचारपरिहाराय। वैशेषिकमतानुसरणे विशेषणमिदं न देयम्।

5. **कारणबहुत्वेति** प्रकृताभिप्रायम्। परिमाणप्रचयाधीनयोरपि महत्त्वयोः अभ्युपगमात्।

6. **न च निरवयवानां बहूनामित्यादि** तथा सति एकैकस्मिन् परमाणौ एकस्मिन् परमाणौ वा परमाणुद्वयसंयोगस्य अङ्गीकर्तव्यत्वापत्तिः। न चेष्टापत्तिः, निरंशपरमाणुसंयोगानां व्याप्यवृत्तितया मूर्तानां समानदेशताविरोधेन तदङ्गीकारायोगात्—इति भावः। मु. निरवयवानां परमाणूनां संयोग

7. **सावयवत्वेति** त्र्यणुककारणस्येति आदिः।

त्वाच्च आद्यन्तवत्, न च अकारणेन कार्येण भवितव्यं, इत्यतः परमाणवो जगतःकारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते, तेषां च अपकर्षपर्यन्तगतत्वेन परतो विभागासंभवात् विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति, स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुषु अदृष्टापेक्षं कर्मोत्पद्यते, तत् कर्म स्वाश्रयमणुं अण्वन्तरेण संयुनक्ति, ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते, एवमग्निः एवमापः एवं पृथिवी एवमेव शरीरं सेन्द्रियं-इत्येवं सर्वमिदं जगत् अणुभ्यः संभवति। अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति तन्तुपटन्यायेन–इति काणादा मन्यन्ते।

तत्रेदमभिधीयते—विभागावस्थानां तावत् अणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्यत्वात् निमित्तं किमप्यभ्युपगन्तव्यम्। अनभ्युपगमे निमित्ताभावात् न अणुष्वाद्यं कर्म स्यात्। अभ्युपगमेऽपि, यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत, तस्यासंभवात् नैव अणुष्वाद्यं कर्म स्यात्। न हि तस्यामवस्थायां आत्मगुणः प्रयत्नः संभवति, शरीराभावात्। शरीरप्रतिष्ठे हि मनसि आत्मनः संयोगे सति आत्मगुणः प्रयत्नो जायते।

---

चत्वारिभूतानीति। [1]आकाशस्य निरवयवत्वादिति भावः।

संयोगः कर्मापेक्ष इति। संयोगो हि कर्मजः संयोगजश्चेति। संयोगजस्तु अवयवसंयोगपूर्वक एवेति निरवयवयोर्द्वयोः संयोगजसंयोगासम्भवात् कर्मज एव स उपेय इति भावः। परमाणुगतकर्मणो निमित्तं यदि नाभ्युपगम्यते यदि वा अभ्युपगम्यते, उभयथापि कर्माभावः–इति सूत्रांशं योजयन्नाह—कर्मणश्च कार्यत्वान्निमित्तमिति। [2]प्रयत्नोऽभिघातादिर्वेति। शरीरगतस्य कर्मणः प्रयत्नः कारणम्। क्वचित् अभिघातः- संयोगविशेषः, यथा दूरान्निक्षिप्तस्य पाषाणादेः कुड्यादिसंयोगः।

---

1. आ. आकाशस्य नित्यत्वात् निरवयवत्वाच्च इति भावः
2. आ. प्रयत्नोऽभिघातो वेति

एतेन अभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम् । सर्गोत्तरकालं हि तत् सर्वं, न आद्यस्य कर्मणो निमित्तं संभवति ।

अथ अदृष्टं आद्यस्य कर्मणो निमित्तमित्युच्येत, तत् पुनः आत्मसमवायि वा स्यात् अणुसमवायि वा । उभयथापि न अदृष्टनिमित्तं अणुषु कर्मावकल्पेत, अदृष्टस्याचेतनत्वात् । न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम् । आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात् । आत्मसमवायित्वाभ्युपगमाच्च न अदृष्टं अणुषु कर्मणो निमित्तं स्यात्, असंबन्धात् । अदृष्टवता पुरुषेण अस्त्यणूनां संबन्ध इति चेत्, संबन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गः, नियामकान्तराभावात् ।

तदेवं नियतस्य कस्यचित् कर्मनिमित्तस्य अभावात् न अणुष्वाद्यं कर्म स्यात् । कर्माभावात् तन्निबन्धनः संयोगो न स्यात् । संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात् ।

संयोगश्च अणोरण्वन्तरेण सर्वात्मना वा स्यात् एकदेशेन वा ?

---

एतेनाभिघाताद्यपीति । आदिपदेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते । तत्र अभिघात आद्यस्य कर्मणो निमित्तं न भवति, तस्य कर्मजन्यत्वात् । नोदनापि वाय्वादेर्वृक्षादिसयोगरूपा कर्मनिमित्तैव न आद्यस्य कर्मणो निमित्तम् । कर्महेतुः संस्कारो द्विविधः—वेगः स्थितस्थापकश्च । वेगः शरादिगतः उत्तरोत्तरगतिसन्तानहेतुः, स्थितस्थापकः संवेष्टितस्य कटादेः प्रसरणहेतुः । उभावपि कर्मजौ न आद्यस्य कर्मणो निमित्ततां गच्छतः । गुरुत्वद्रवत्वयोस्तु आद्यकर्महेतुत्वाभ्युपगमे तयोः परमाणुषु सदातनत्वेन कर्मसातत्यप्रसङ्गः ।

अदृष्टस्य परमाणुगताद्यकर्मनिमित्तत्वपक्षे उभयथापीतिसूत्रांशं योजयितुं विकल्पयति—तत्पुनरिति ।

अस्त्यणूनां सम्बन्ध इति । संयोगरूप इत्यर्थः । नियामकान्तराभावादिति । न च—अदृष्टपरिपाको यदा भवति तस्यामेव दशायां अदृष्टवदात्मसंयोगः परमाणुष्वाद्यकर्मनिमित्तं—इति वाच्यम् । यथा हि—रंहत्यधिकरणे वक्ष्यमाणस्य भूतसूक्ष्मरूपस्यादृष्टस्य द्रव्यतया फलादिवत् परिणतिविशेषरूपः पाकः,

सर्वात्मना चेत्, उपचयानुपपत्तेः अणुमात्रत्वप्रसङ्गः दृष्टविपर्ययप्रसङ्गश्च ।

---

फलमत उपपत्तेरितिसूत्रे वक्ष्यमाणस्य ईश्वरकोपप्रसादरूपस्यादृष्टस्य[1] उद्रेकरूपः पाकः लौकिकपुरुषगतकोपप्रसादयोरिव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'तदैक्षत बहुस्यां प्रजायेयेति' इति श्रुतिसिद्धकालविशेषभाविसिसृक्षानिमित्तः—इति वक्तुं शक्यं, नैवं तार्किकैः आत्मगुणभूतस्यादृष्टस्य पाको वक्तुं शक्यते । गुणे द्रव्यादितुल्यपाकासम्भवात्, कोपप्रसादयोरिव तार्किकाभिप्रेते अदृष्टे उद्रेकस्यापि अनुपलब्धचरत्वात् । अतः फलकालागम-प्रतिबन्धककर्मान्तराभाव-साहित्यमेव तन्मते पाकोऽदृष्टगत उपेयः । न च—कालभेदेन तेनतेन कर्त्रा अनुष्ठितानां कर्मणां नानाविधकालानुभाव्यफलानां विचित्रविरुद्धकर्मप्रतिबद्धानां सृष्ट्यारम्भकाले युगपदेव फलकालागमः प्रतिबन्धकाभावश्च प्राप्तः- इति वक्तुं शक्यम् । न च—सिद्धान्ते यथोक्तरूपाणां कर्मणां यथा युगपदेव कालविशेषभाविन्या ईश्वरसिसृक्षया पाकः सृष्ट्युपयोगी भवतीति कल्प्यते, तथा मयापि सृष्ट्यादिफलबलेन प्रलयकालावसानक्षणसम्बन्ध एव सृष्ट्युपयोगी कर्मपरिपाक इति वक्तुं शक्यम्, कल्पनायाः कार्यानुसारिपदार्थविषयत्वात्—इति वाच्यम् । एवं तर्हि श्रुतिस्मृतिसिद्धसृष्ट्याद्युपयोगिनी कल्पना तदविरोधेनैव सम्पादनीयेति, द्व्यणुकादिक्रमं विहाय वियदादिक्रमेणैव सृष्टिं स्वीकुरु । न हि सर्गप्रलयादिकं श्रुतिं विना प्रमाणान्तरेणावधारयितुं शक्यते, न च 'सृष्ट्यांशे तासां प्रामाण्यं न तु [2]स्रष्ट्यांशे' इत्यर्धजरतीयमुचितं—इति भावः ।

सर्वात्मना चेत् उपचयानुपपत्तेरिति । अयं भावः—लोके हि पिण्डद्वयसंयोगेन यदा स्थूलपिण्ड आरभ्यते, तदा द्वयोः पिण्डयोः एकैकेन पार्श्वेन संयोगे सति पार्श्वान्तराणां असंयुक्ततया अवस्थानात् असंयुक्तपार्श्वस्थौल्यतारतम्येन तदारब्धे पिण्डे स्थौल्यतारतम्यमुपलभ्यते । अतः परमाणुकार्ये द्व्यणुकादौ अधिकपरिमाणसिद्ध्यर्थं कस्मिंश्चित् पार्श्वे परमाणोः संयोगः केषुचित् न इति वक्तव्यम् । न चैतत् निरवयवे परमाणौ अवकल्पते । अतः [3]पार्श्वरूपावच्छेदकं विहाय व्याप्यवृत्तिः

---

1. मु. उद्रेकः पाकः

2. मु. स्रष्टव्यांशे

3. पार्श्वरूपावच्छेदकं विहाय—पार्श्वरूपावच्छेदकावच्छिन्नवृत्तिकत्वं अनङ्गीकृत्य । आ. पार्श्वरूपावच्छेदं विहाय

प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात् । एकदेशेन चेत् सावयवत्वप्रसङ्गः । परमाणूनां कल्पिताः प्रदेशाः स्युरिति चेत्; कल्पितानामवस्तुत्वात् अवस्त्वेव संयोग इति वस्तुनः कार्यस्य असमवायिकारणं न स्यात् । असति चासमवायिकारणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत ।

यथा च आदिसर्गे निमित्ताभावात् संयोगोत्पत्त्यर्थं कर्म न अणूनां संभवति, एवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैव अणूनां संभवेत् । न हि तत्रापि किंचित् नियतं तन्निमित्तं दृष्टमस्ति । अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थं इत्यतः निमित्ताभावात् न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म । अतश्च संयोगविभागाभावात् (तदायत्तयोः) [तयोः]सर्गप्रलययोः अभावः प्रसज्येत ।

तस्मात् अनुपपन्नोऽयं परमाणुकारणवादः ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

'समवायाभ्युपगमाच्च तदभावः' इति प्रकृतेनाणुवादनिराकरणेन

---

परमाण्वोः संयोग आस्थेयः, तथा च कथं प्रथिमा भवेदिति । दृष्टविपर्ययप्रसङ्गश्चेत्येतदेव व्यक्तीकरोति—प्रदेशवत इति ।

'परमाणुषु व्याप्यवृत्तिसंयोगजननार्थं अव्याप्यवृत्तिसंयोगजननार्थं वा उभयथापि कर्म न सम्भवति' इति तृतीयां सूत्रांशयोजनां प्रदर्श्य, 'प्रलयोपयोगिविभागसिद्ध्यर्थं दृष्टकारणकमदृष्टकारणकं वा उभयथापि कर्म न सम्भवति' इति चतुर्थीं सूत्रांशयोजनां आह—एवं महाप्रलयेऽपीत्यादिना । [1]नप्रलयप्रसिद्ध्यर्थमिति । ननु सर्वज्ञानोपरमरूपे प्रलये सुषुप्तिवत् भोगासम्भवेऽपि तदारम्भे मरणप्रयुक्ता वेदना अस्त्येवेति तत्र अदृष्टजन्यता उपपद्यत इति चेत्, सत्यं, तादृशमरणवेदनायाः शरीरमात्रनाशनेनैवोपपन्नत्वात् न तदर्थं भूभूधरादिनाशोऽप्यपेक्षितः ।

'अतस्तदभावः' इति सूत्रांशं योजयति—तयोस्सर्गप्रलययोरिति । तथा च, तदभाव इत्यत्र तयोरभाव इति विग्रहः ॥ १२ ॥

---

1. आ. न प्रलयसिद्ध्यर्थमिति

संबध्यते । द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पद्यमानं अत्यन्तभिन्नमणुभ्यां अण्वोःसमवैतीत्यभ्युपगम्यते भवता । न चैत्रमभ्युपगच्छता शक्यते अणुकारणता समर्थयितुम् । कुतः ? साम्यात् अनवस्थितेः । यथैव हि अणुभ्यामत्यन्तभिन्नं सत् द्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यते, एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् समवायलक्षणेन अन्येनैव संबन्धेन समवायिभिः संबध्येत, अत्यन्तभेदसाम्यात् । ततश्च तस्य तस्य अन्योऽन्यः संबन्धः कल्पयितव्य इति, अनवस्थैव प्रसज्येत ।

ननु–इहप्रत्ययग्राह्यः समवायो नित्यसंबद्ध एव समवायिभिः गृह्यते, न असंबद्धः संबन्धान्तरापेक्षो वा, ततश्च न तस्यान्यः संबन्धः कल्पयितव्यः, येन अनवस्था प्रसज्येतेति ।

नेत्युच्यते । संयोगोऽप्येवं सति संयोगिभिर्नित्यसंबद्ध एवेति समवायवत् न अन्यं संबन्धं अपेक्षेत । अथ अर्थान्तरत्वात् संयोगः संबन्धान्तरमपेक्षेत, समवायोऽपि तर्हि अर्थान्तरत्वात् संबन्धान्तरमपेक्षेत । न च गुणत्वात् संयोगः संबन्धान्तरमपेक्षते न समवायः अगुणत्वात् इति युज्यते वक्तुम् । अपेक्षाकारणस्य तुल्यत्वात् । गुणपरिभाषायाश्च अतन्त्रत्वात् ।

---

ननु समवायाभ्युपगमेन कथं परमाणुकारणतानिराकरणं, तत्राह—द्वाभ्यां चाणुभ्यामिति । द्व्यणुकसमवायिकारणतया हि परमाणुरुपेयते, समवायिकारणलक्षणं च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताशालित्वमिति च उच्यते, समवायाभ्युपगमस्य च निर्मूलत्वे तद्घटितसमवायिकारणलक्षणासम्भवात् तत्त्वेनाभ्युपगतः परमाणुरपि निराकृतो भवतीति भावः ।

समवायलक्षणेनान्येनैवसम्बन्धेनेति । यथा हि ‘तन्तुषु पटः’ इति प्रतीत्या आधाराधेयभावनियामकः तन्तुपटयोः समवाय उपेयते, तथा ‘तन्तवः पटसमवायिनः’ इति प्रतीतिसम्भवात् समवायाधेयतानियामकोऽपि समवाय उपेयः । न च तन्तुपटाभ्यामसम्बद्धस्य समवायस्य तयोः कार्यकारणभावे घटकता उपपद्यते । तथा च, तदर्थमपि कार्यकारणाभ्यां समवायस्य सम्बन्ध उपेय इति प्रसज्येतैवानवस्था–इति ।

ननु—यदि समवायस्यापि सम्बन्धिभ्यां समवायः स्वीक्रियेत, तदा अनवस्था भवेत्, न तु समवायस्य सम्बन्धिभ्यां समवाय उपेयते, अपि तु स्वरूपसम्बन्ध एव, अतो नानवस्था-इति चेत्;

न—तथासति अवयवावयव्यादेरपि स्वरूपसम्बन्ध एवास्तु, किं समवायकल्पनया।

न च स्वरूपसम्बन्धानां भिन्नभिन्नत्वेन गौरवात् एक एव समवायः कल्पनीय इति वाच्यम्। स्वरूपाणां क्लृप्तत्वेन अनेककल्पनस्यैवाभावात्। समवायस्तु अतिरिक्तः पदार्थः कल्पनीय इति गौरवम्।

न च—तथापि समवायस्वरूपं तस्य च सम्बन्धत्वमिति द्वयमेव कल्पनीयम्, स्वरूपाणां तु बहूनां प्रत्येकं सम्बन्धत्वं कल्पनीयमिति बहूनि सम्बन्धत्वानि कल्पनीयानि, तथा च गौरवम्—इति वाच्यम्। अवयवावयव्यादीनां [1]तत्तदभावं प्रति प्रतियोगित्वादिनासम्बन्धत्वस्यापि क्लृप्तत्वात्।

न च—तथापि [2]अभावादिकं प्रत्येव प्रतियोगित्वादिनासम्बन्धत्वं क्लृप्तं, न तु अवयवावयव्यादेः परस्परनिरूपितं सम्बन्धत्वं क्लृप्तम्, निरूपकभेदेन सम्बन्धत्वानां भिन्नभिन्नत्वात्। न हि, यदेव ज्ञाननिरूपितं विषयत्वसम्बन्धात्मकं घटस्वरूपं तदेव अभावप्रतियोगित्वरूपं भवति। तथा च अवयवनिरूपितं अवयविनि स्वरूपसम्बन्धत्वं कल्पनीयम्, अवयविनिरूपितमवयवे, इति सम्बन्धत्वानेकतापत्त्या गौरवम्—इति वाच्यम्। यदि हि निरूपकभेदेन सम्बन्धत्वानि भिद्येरन्, तथा सति समवायस्यैकत्वेऽपि घटकपालादिनिरूपकभेदात् सम्बन्धत्वानां तद्गतानामपि भेदापत्त्या समवायपक्ष एव पदार्थान्तरमधिकं कल्पनीयमिति गौरवं तदवस्थमेव।

---

1. **तत्तदभावं प्रति प्रतियोगित्वादिनेति** प्रतियोगित्वं प्रतियोगिस्वरूपम्। तृतीयार्थोऽभेदः सम्बन्धान्वयी-आदीत्यधिकम्।

2. **अभावादिकमिति** ज्ञानं आदिशब्दार्थः। प्रतियोगित्वादिनेत्यत्र आदिशब्दार्थः विषयस्वरूपं विषयत्वम्। अत्र—'अवयवावयव्यादीनां' इत्यादिग्रन्थे, न चेत्यादिग्रन्थे च प्रतियोगित्वादिनेतिपदाघटित एव परिमलशिवार्कमणिदीपिकानुसारी पाठः। एवं 'अभावादिकं' इत्यत्र आदिपदाघटितः पाठः। तावानेव प्रकृतोपयुक्तश्च। मु. अभावादिकं प्रत्येकं प्रतीतिसम्बन्धत्वं

**तस्मात् अर्थान्तरं समवायं अभ्युपगच्छतः प्रसज्येतैव अनवस्था। प्रसज्यमानायां चानवस्थायां एकासिद्धौ सर्वासिद्धेः द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत।**

**तस्मादपि अनुपपन्नः परमाणुकारणवादः ॥ १३ ॥**

---

अपि च—'तन्तुषु पटः' 'नीलो घटः' इत्यादिविशिष्टप्रतीतिनिर्वाहकतया समवाय एवास्थेय इति तार्किकाणामभ्युपगमः। न च समवायेऽभ्युपगतेऽपि 'पृथिव्यां रूपं' 'वायौ रूपं नास्ति' इति प्रतीतेः [1]व्यवस्था निर्वहति रूपसमवायस्य [2]वायावप्यविशिष्टत्वे। तेन तद्व्यवस्थापकतया सर्वानुगतादेकस्मात्समवायात् रूपसमवायादिः अन्य एव स्वरूपसम्बन्धविशेषात्मकः 'पृथिव्यां रूपम्' इत्यादिप्रतीतिप्रयोजकः, वायौ तस्याभावात् 'वायौ रूपं न' इति प्रतीतिश्च-इत्यभ्युपगन्तव्यम्। तथा च तादृशस्वरूपसम्बन्धेनैव व्यवस्थार्थमवश्यंस्वीकर्तव्येन सर्वत्रावयव्यादिषु विशिष्टप्रतीतिनिर्वाहे, किं [3]द्रव्यगुणकर्मसामान्येषु सर्वेषु एको नित्यस्समवायः इति कल्पनया।

अपि च—द्रव्यगुणयोः साधारणेऽपि समवाये, द्रव्यस्य स्वातन्त्र्यं गुणस्य पारतन्त्र्यं प्रतीतिसिद्धम्। तन्निर्वाहश्च न समवायमात्रेण सिध्यति। परस्परनिरूपितसमवायस्य परस्पराधिकरणकत्वाविशेषात्। अपि तु, द्रव्यनिरूपितमाधेयत्वं गुणे, गुणनिरूपितमाधारत्वं द्रव्ये, इति विशिष्य आधारत्वाधेयत्वाख्यस्वरूपविशेषसम्बन्धः स्वातन्त्र्यपारतन्त्र्यप्रतीतिव्यवस्थापकतया कल्पनीयः। तथा च, तेनैव विशिष्टप्रतीतिनिर्वाहे किमर्थं समवायः कल्प्यते।

न च—आत्मघटयोरुभयोरपि ज्ञानाधारत्वाविशेषेऽपि 'ज्ञानवानहं न घटः, अपि तु ज्ञानविषयो घटः' इति यत् प्रतीतिवैचित्र्यं तत् सम्बन्धविशेषाधीनमिति, घटवैलक्षण्येन ज्ञानाधारताया आत्मनि निर्वाहकः समवायः—इति वाच्यम्। यथा 'हृदये मम ज्ञानं न घटे' इति व्यवस्था हृदयादिगतज्ञानावच्छेद-

---

1. **व्यवस्था**-क्वचित् रूपवत्ताप्रतीतेः प्रमात्वं क्वचित् रूपाभावप्रतीतेः प्रमात्वम्-इति व्यवस्था।
2. मु. वायावप्यविशिष्टत्वेन तद्व्यवस्थापकतया
3. **द्रव्यगुणकर्मसामान्येष्विति** तार्किकाभिमतविशेषपदार्थे अनादरात् तदनुक्तिः।

## नित्यमेव च भावात् ॥ १४ ॥

अपि च–अणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वा उभयस्वभावा वा अनुभयस्वभावा वा अभ्युपगम्येरन्, गत्यन्तराभावात् । चतुर्धापि नोपपद्यते । प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसङ्गः । निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात् सर्गाभावप्रसङ्गः । उभयस्वभावत्वं च विरोधात् असमञ्जसम् । अनुभयस्वभावत्वे तु निमित्तवशात् प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोः अदृष्टादेर्निमित्तस्य नित्यसन्निधानात् नित्यप्रवृत्तिप्रसङ्गात् । अतन्त्रत्वेऽप्यदृष्टादेः नित्याप्रवृत्तिप्रसङ्गात् । तस्मादपि अनुपपन्नः परमाणुकारणवादः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

सावयवानां द्रव्याणां अवयवशो विभज्यमानानां यतः परो विभागो न संभवति ते चतुर्विधा रूपादिमन्तः परमाणवः चतुर्विधस्य रूपादिमतो भूतभौतिकस्य आरम्भका नित्याश्चेति यत् वैशेषिका अभ्युपगच्छन्ति, स तेषामभ्युपगमो निरालम्बन एव । यतः, रूपादिमत्त्वात् परमाणूनां अणुत्वनित्यत्वविपर्ययः प्रसज्येत । परमकारणापेक्षया स्थूलत्वमनित्यत्वं च तेषां अभिप्रेतविपरीतं आपद्येत इत्यर्थः । कुतः? एवं लोके दृष्टत्वात् । यद्धि लोके

---

कताख्यस्वरूपसम्बन्धविशेषकारिता, एवं इयमपि व्यवस्था ज्ञानगतात्मधर्मत्वाख्यस्वरूपसम्बन्धविशेषकारितेति न [1]समवायकल्पनावसरः । न च 'ज्ञानात्मनोरेव धर्मधर्मिभावः न ज्ञानघटयोः' इत्यत्र किं नियामकम् । 'ज्ञानात्मनोरेव समवेतसमवायिभावः न ज्ञानघटयोः' इत्यत्र वा किं नियामकम् । स्वभाव इति चेत्, धर्मधर्मिभावेऽपि तदेवोत्तरम् ॥ १३ ॥

प्रवृत्तिस्वभावाः—कार्यजननस्वभावाः । निवृत्तिस्वभावाः—पारिमाण्डल्यवत् अकारणत्वस्वभावाः ॥ १४ ॥

'यतः परो विभागो न सम्भवति' इत्यनेन अत्यल्पपरिमाणता परमाणूनां द्योतिता । रूपादीत्यादिपदेन रसादयो गृह्यन्ते ।

---

1, आ. समवायकल्पनाप्रसरः

**रूपादिमद्वस्तु तत् स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम् । तद्यथा—पटः तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति, तन्तवश्च अंशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति, तथाचामी परमाणवो रूपादिमन्तः तैरभ्युपगम्यन्ते, तस्मात् तेऽपि कारणवन्तः तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति ।**

---

ननु अत्र तार्किकाभिमतान् परमाणून् पक्षीकृत्य (तेषां) 'यत् रूपादिमत् अल्पपरिमाणं तत् मूलकारणमपेक्ष्य स्थूलमनित्यं च' इति व्याप्त्या परमाणूनामपि अल्पपरिमाणत्वात् रूपादिमत्वाच्च मूलकारणमपेक्ष्य स्थूलत्वमनित्यत्वं च आपाद्यते । तदसङ्गतम्, परमाणूनां धर्मिग्राहकप्रमाणेन मूलकारणतयैव सिद्धतया तेषां मूलकारणान्तराभावेन तदपेक्ष्य स्थूलत्वादेः आपादनासम्भवात् । अथ—अल्पपरिमाणवत्तया रूपादिमत्तया वा[1] कार्यत्वमापाद्य, तेन समवायिकारणजन्यतां चापाद्य, स्वसमवायिकारणमपेक्ष्य स्थौल्यमनित्यत्वं च परमाणावापाद्यते—तदपि न सम्भवति, 'यत् अल्पपरिमाणं रूपादिमच्च तत् कार्यम्' इति नियमे प्रयोजकाभावात्—इति चेत्,

उच्यते—तार्किकेण हि, त्र्यणुकादिपरिमाणस्य जन्यतायां महत्त्वापकर्षः प्रयोजक इत्युक्तं, तदपेक्षया लाघवात् द्व्यणुकपरिमाणानुगतत्वाच्च परिमाणापकर्ष एव प्रयोजक उपेयः । एवं रूपादीनां जन्यत्वेऽपि रूपत्वादिकमेव प्रयोजकमास्थेयम्, लाघवात् पृथिवीपरमाणुगतरूपाद्यनुगतत्वाच्च, न तु कार्यगतरूपत्वादिकम् । एवं च परमाणुगतपरिमाणस्यापि जन्यत्वे कारणगतसङ्ख्यापरिमाणादिकमपेक्षितम् । तथा, परमाणुगतानामपाकजरूपादीनामपि जन्यत्वे सिद्धे तेषामपि कारणगतरूपाद्यपेक्षत्वात्, परमाणुगतपरिमाणरूपाद्यसमवायिकारणसङ्ख्यापरिमाणाद्याश्रयतया परमाणुसमवायिकारणसिद्धौ, तदपेक्षया परमाणोरनित्यत्वं स्थौल्यञ्च प्राप्नुवत् केन वार्यते । न च—तथासति तस्यापि रूपादिमत्त्वादल्पपरिमाणत्वाच्च कारणान्तरापेक्षा एवं तस्यतस्येत्यनवस्थया मूलकारणमेव न सिध्येत्—इति वाच्यम् । अस्त्वेवं तार्किकमते । तथा च अनवस्थापरिहारेण [2]मूलकारणव्यवस्थायै परममहत् रूपादिरहितं च ब्रह्मैव मूलकारणमास्थेयम् । कार्यं स्वन्यूनपरिमाणद्रव्यारब्धं, कारणगुणपूर्वका एव च कार्ये गुणाः—इति तार्किकपरिभाषा च प्रागेव निरस्ता ।

---

1. मु. 'वा' नास्ति
2. मु. मूलव्यवस्थायै

यच्च नित्यत्वे कारणं तैरुक्तम्—'सदकारणवन्नित्यम्' (वै. सू. ४।१।१) इति। तदपि एवं सति अणुषु न संभवति। उक्तेन प्रकारेण अणूनामपि कारणवत्त्वोपपत्तेः।

यदपि नित्यत्वे द्वितीयं कारणमुक्तम्—'अनित्यमिति च विशेषतः प्रतिषेधाभावः' (वै. सू. ४।१।४) इति। तदपि न अवश्यं परमाणूनां नित्यत्वं साधयति। असति हि यस्मिन् कस्मिंश्चित् नित्ये वस्तुनि, नित्यशब्देन नञः समासो नोपपद्यते। न पुनः परमाणुनित्यत्वमेवापेक्ष्यते। तच्चास्त्येव नित्यं परमकारणं ब्रह्म। न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति, प्रमाणान्तरसिद्धयोः शब्दार्थयोः व्यवहारावतारात्।

यदपि नित्यत्वे तृतीयं कारणमुक्तम्—'अविद्या च' (वै. सू. ४।१।५) इति, तत् यद्येवं विव्रियेत-सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेण ग्रहणमविद्या—इति, ततो द्व्यणुकनित्यतापि आपद्येत। अथ अद्रव्यत्वे सतीति विशेष्येत, तथापि अकारणवत्त्वमेव नित्यतानिमित्तमा-

---

एवं परमाणूनां अनित्यत्वं स्थौल्यं च तदीयपरिभाषानुसारेणैव आपाद्य, तैः यत् परमाणूनां नित्यत्वे प्रयोजकं उपन्यस्तं तद्दूषयितुमुपक्रमते—यच्चेति। सत्-भावरूपम्। प्रागभावव्यावृत्त्यर्थं इदं विशेषणम्। अनित्यमिति चेति। नित्यरूपेण प्रतियोगिना [1]विशेषतो योऽयं प्रतिषेधव्यवहारः 'अनित्यम्' इति, तस्य नित्यरूपे प्रतियोगिनि असति अभावः प्रसज्येत। अतो व्यवहारोपपत्तये नित्ये वस्तुनि आस्थेये परमाणुरूपं तत् सिध्यतीत्यर्थः।

प्रत्यक्षेण ग्रहणमविद्येतीति। तथा च अप्रत्यक्षकारणकत्वं अविद्याचेत्यनेन विवक्षितम्। द्व्यणुकनित्यतेति। तत्कारणस्य परमाणोः अप्रत्यक्षत्वात्। अद्रव्यत्वे सतीति। अकारणकत्वे सतीत्यर्थः। तस्य च प्रागेवेति। 'सदकारणवन्नित्यं' इत्यत्रेत्यर्थः।

---

1. विशेषत इति सार्वविभक्तिकस्तसिः, विशेषेण। विशेषश्च नित्यरूपः प्रतियोगी। तृतीयार्थो वैशिष्ट्यं प्रतिषेधेऽन्वेति। तथा च नित्यरूपप्रतियोगिविशेषविशिष्टप्रतिषेधेत्यर्थः। वैशिष्ट्यं प्रतियोगितासम्बन्धेन।

पद्येत। तस्य च प्रागेवोक्तत्वात् 'अविद्या च' इति पुनरुक्तं स्यात्। अथापि-कारणविभागात् कारणविनाशाच्च अन्यस्य तृतीयस्य विनाशहेतोः असंभवः अविद्या, सा परमाणूनां नित्यत्वं ख्यापयति-इति व्याख्यायेत। न अवश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति। संयोगसचिवे हि अनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमाने एतदेवं स्यात्। यदा तु अपास्तविशेषं सामान्यात्मकं कारणं विशेषवद-वस्थान्तरमापद्यमानं आरम्भकमभ्युपगम्यते, तदा घृतकाठिन्यविलयनवत् मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते। तस्मात् रूपादिमत्त्वात् स्यादभिप्रेतविपर्ययः परमाणूनाम्। तस्मादपि अनुपपन्नः परमाणुकारणवादः ॥१५॥

---

कारणविभागादिति। कारणपदं समवायिकारणपरम्। समवायिकारण-नाशात् असमवायिकारणनाशाच्च कार्यद्रव्यनाशः। द्रव्ये च अवयवाः समवायि-कारणं, तत्संयोगोऽसमवायिकारणम्। निरवयवे च परमाणौ न उभयं सम्भवति। तथा च अगृह्यमाणविनाशकारणकत्वं अविद्येत्यनेन नित्यत्वे कारणं विवक्षितमिति शङ्कार्थः। न अवश्यं विनश्यद्वस्त्विति। अवयवसंयोगोऽसमवायिकारणमिति तार्किकपरिभाषा अप्रयोजिका। यद्यपि पटादिकार्यस्थले अनेकेषामवयवानां संयोग उपलभ्यते, तथापि न असौ पटकारणम्, तन्तुसंयोगस्य पटस्य च समानकालता-दर्शनेन पूर्वापरीभावकल्पनस्य निर्मूलत्वात्। नापि 'संयोगनाशात् पटनाशः' इति कल्पयितुं [शक्यते][युक्तम्]। तयोरपि समानकालत्वोपलम्भात्। घटादिकार्यस्थले तु न कपालद्वयसंयोगो घटोत्पत्तेः प्राक् अनुभूयते। न हि कुलालः कपालद्वय-मारचय्य संयोजयति, अपि तु पिण्डमेव प्रथनविशेषेण घटतां नयति। नापि तत्र कपालद्वयसंयोगनाशो घटनाशहेतुः। मुद्गरप्रहारेण घटनाशसंयोगनाशयोः युगपदेव जननात्। अतः आरम्भवादस्य प्रतीतिविरोधित्वम्। युक्तिविरोधश्च 'युक्तेश्शब्दा-न्तराच्च' इत्यत्र दर्शितः। तथा च-एकस्यैव द्रव्यस्य उत्तरावस्थाप्राप्तिः, तदवस्थ-स्योत्पत्तिः पूर्वावस्थस्य च नाशः-इत्युपेयम्। तथा च, परमाण्ववस्थां प्राप्तस्य मूलकार-णस्य स्थूलावस्थाप्राप्तौ नाश उपपद्यते सृष्टिसमय एव। परमाणुदशायां च मूर्तत्व-गन्धरूपाद्यवस्थां प्राप्तस्य मूलकारणस्य प्रलये कारणविशेषेण गन्धाद्यवस्थानाशेन सह मूर्तत्वावस्थाया अपि नाशसम्भवात् न परमाणुनित्यता सिध्यति ॥ १५ ॥

## उभयथा च दोषात् ॥ १६ ॥

गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुः—इत्येवं एतानि चत्वारि भूतानि उपचितापचितगुणानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते। तद्वत् परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन्, न वा? उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात्। कल्प्यमाने तावत् उपचितापचितगुणत्वे, उपचितगुणानां मूर्त्युपचयात् अपरमाणुत्वप्रसङ्गः। न च अन्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्येत। कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। अकल्प्यमाने तु उपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत् सर्वे एकैकगुणा एव कल्प्येरन्, ततः तेजसि स्पर्शस्योपलब्धिः न स्यात्, अप्सु रूपस्पर्शयोः, पृथिव्यां च रसरूपस्पर्शानाम्। कारणगुणपूर्वकत्वात् कार्यगुणानाम्। अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततः अप्स्वपि गन्धस्योपलब्धिः स्यात्, तेजसि गन्धरसयोः, वायौ गन्धरूपरसानाम्। न चैवं दृश्यते। तस्मादपि अनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

---

**कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनादिति।**

ननु—अत्र मूर्त्युपचयशब्देन किं विवक्षितम्? परिमाणाधिक्यं वा, गुणसमुदायोत्कर्षो वा। नाद्यः-न हि पृथिवीजलादीनां रूपादिगुणाधिक्यतारतम्यकृतं परिमाणाधिक्यं विद्यते। नापि तत्र रूपादिगुणाधिक्यतारतम्यं प्रयोजकम्, अपि तु अवयवसङ्ख्याधिक्यमेव। तथा च, पृथिव्यादिपरमाणूनां चतुर्णां निरवयवानां अवयवाधिक्याभावात् सत्यपि गुणसङ्ख्यावैषम्ये न अपरमाणुत्वप्रसङ्गः। अत एव न द्वितीयः-गुणसमुदायाधिक्यस्य समुदायिनांगुणानामुपचयाधीनत्वेऽपि कार्ये गुणोपचयेन परिमाणाधिक्यस्याप्रसक्ततया परमाणूनामपि गुणोपचये सत्यपि परिमाणवैषम्याप्रसङ्गात्—

उच्यते—तार्किकेण पृथिव्यादिद्रव्याणि धर्मिभूतानि, तेषां च रूपादयो गुणाः, तत्र च रूपत्वादीनि सामान्यानि - इति परिभाषा आश्रीयते। सा तु न प्रतीत्यनुसारिणी। न हि रूपादिसमुदायातिरेकेण तदाश्रयभूतं द्रव्यं नाम किञ्चित् उपलभ्यते। ननु 'घटस्य नीलं रूपं रक्तं रूपं, गुडस्य मधुरो रसः' इत्येवमादिना व्यतिरेक उपलभ्यत एवेति चेत्, न ह्ययं भेदप्रत्ययः, अपि तु सम्बन्धप्रत्ययः। तथाप्रत्ययश्च अभेदेऽपि दृश्यते [1]घटस्यस्वरूपमिति।

अपि च—'नीलो घटः' इति [2]अभेदोऽनुभूयत एव। न चायं नीलगुणवैशिष्ट्यप्रत्यय इति वाच्यम्। यथा हि 'अयं घटः' इति प्रत्ययेन इदन्तास्पदे घटत्ववैशिष्ट्यमवगाह्यते, एवं अनेनापि लौकिकानां प्रत्यक्षप्रत्ययेन पुरोवर्तिनि घटत्वास्पदे नीलत्ववैशिष्ट्यस्यैवावगाहनात्।

न च—अस्य प्रत्ययस्य नीलोघटइतिशब्दोल्लेखितया तत्समानविषयत्वं वक्तव्यम्। नीलशब्दश्च लुप्तमतुबन्तो गुणवचनेभ्यो मतुपो लुगनुशासनात् नीलगुणविशिष्टं प्रतिपादयति। तथा च प्रत्यक्षमपि तत्समानार्थकं न घटे नीलगुणाभेदावगाहि। अभेदावगाहित्वेन द्रव्यगुणयोरभेदाभ्युपगमे च लुगनुशासनं व्यर्थमेव स्यात्, मतुपोऽप्रसक्तत्वात् - इति वाच्यम्।

द्रव्यगुणाभेदपक्षे नीलादिपदानां तार्किकाभिमतनीलत्वादिसामान्यवाचकतोपगमेन नीलादिपदेभ्यो घटादिपदसामानाधिकरण्याय मतुपः प्रसक्तौ [3]तल्लोपानुशासनसार्थक्योपपत्तेः 'नीलो घटः' इत्यादिवाक्येन नीलत्ववैशिष्ट्यस्यैव घटे प्रदिपादनात् न अभेदावगाहिप्रत्यक्षप्रतिकूलता शब्दोल्लेखस्य। तथा च, गुणचतुष्टयसमुदाय एव पृथिवी, एवं गुणत्रयसमुदायो जलम्, इति पृथिव्यादीनामवयवाधिक्यात् स्वभावत एव परिमाणाधिक्यं जलादिभ्यः, तत्परमाणूनामपि रूपादिगुणात्मकावयवाधिक्यात् परिमाणाधिक्यं प्राप्नोति। तथा च [4]पुराणं—'आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्। द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत्। रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ। त्रिगुणस्तु ततो वह्निः सशब्दस्पर्शवान् भवेत्। शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत्। तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः।

---

1. मु. यथा घटस्य
2. आ. अभेदोऽप्यनु
3. मु. तल्लोपानुशासनेन सार्थ
4. पुराणमिति एतत्समानार्थकाः श्लोकाः विष्णुपुराणे दृश्यन्ते।

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

प्रधानकारणवादो वेदविद्भिरपि कैश्चित् मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेण उपनिबद्धः । अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इति, अत्यन्तमेव अनादरणीयो वेदवादिभिः ।

अपि च वैशेषिकाः तन्त्रार्थभूतान् षट्पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यान् अत्यन्तभिन्नान् भिन्नलक्षणान् अभ्युपगच्छन्ति । यथा-मनुष्यः, अश्वः, शशः—इति । तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति ।

---

शब्दः स्पर्शश्च रूपं च रसश्चेत् गन्धमाविशत् । संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् । तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते । [1]शान्ता घोराश्च मूढाश्च विशेषाः तेन ते स्मृताः । [2]परस्परानुप्रवेशात् धारयन्ति परस्परम् ॥ इति आकाशादीनां शब्दादिरूपतां तदाधिक्यात् पृथिव्यादीनां स्थूलत्वं च दर्शयति । अत्र च, 'द्विगुणस्तु ततो वायुः' इत्यादौ क्वचित् गुणगुणिनोर्भेदोऽपि प्रतीयते, तथापि अभेदप्रतिपादनस्वरसत्वात् अस्य वचनजातस्य [3]स निर्देश औपचारिको द्रष्टव्यः । एवं च द्रव्यरूपस्य धर्मिणोऽकल्पनात् लाघवमपि भवति ॥ १६ ॥

सूत्रे चकारः तार्किकप्रक्रियाया आभासताद्योतनार्थः—इत्याह—**अपि चेति** । तार्किकैः भावानां षोढा अवान्तरविभागः कल्पितः, स नोपपद्यत इत्याह—**तन्त्रार्थभूतान् षट्पदार्थानित्यादिना** । द्रव्याधीनत्वं द्रव्यधर्मत्वम् ।

---

1. **शान्ता इत्यादि** अयमर्थः — येन कारणेन मिलिता गुणाः, तेन कारणेन स्थूलाः सन्तः ते विशेषाः - व्यावृत्तव्यवहारवन्तः, ते च सात्त्विकत्वादिना शान्ततादियोगिनः — इति ।

2. **परस्परेत्यादि** अयमर्थः—परस्परे गन्धादीनामनुप्रवेशात् द्रव्यसंज्ञां लब्ध्वा, रसादयः पृथिवी भूत्वा गन्धं धारयन्ति, रूपादय आपो भूत्वा रसं धारयन्ति, स्पर्शादयः तेजो भूत्वा रूपं धारयन्ति, शब्दस्पर्शसमुदायश्च वायुर्भूत्वा स्पर्शं धारयति— इति ।

3 **स निर्देशः** — भेदनिर्देशः । तथैव आ पाठः

तन्नोपपद्यते । कथम् ? यथा हि लोके शशकुशपलाशप्रभृतीनां अत्यन्तभिन्नानां सतां न इतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वात् नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति । अथ भवति द्रव्याधीनत्वं गुणादीनां, ततो द्रव्यभावे भावात् द्रव्याभावे चाभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति । यथा देवदत्त एक एव सन् अवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति तद्वत् । तथा सति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्च आपद्येयाताम् ।

---

द्रव्यभावे भावात् द्रव्याभावे चाभावादिति । ननु—द्रव्यरूपे आश्रये स्थित एव यदि गुणस्य स्थितिः न त्वन्यथा, तर्हि समवायमनङ्गीकुर्वद्भिर्वेदान्तिभिः धर्मधर्मिभावनियामकं तादात्म्यं उपेत्य गुणगुणिनोर्भेद एव आश्रयणीयः, न तु द्रव्यपरिशेषेण गुणस्वरूपमेव अपलपनीयम् । न हि गुणस्वरूपापलापे 'द्रव्ये सत्येव गुणस्य भावः' इत्येवं अन्वयादिकमुपपद्यते । अथोच्येत—द्रव्याधीनत्वं गुणानां तार्किकाभिमतं अनूद्यते द्रव्यगुणयोरस्फुटविवेकप्रयोजकविश्लेषाभावप्रदर्शनाय । तथा च, स्फुटविवेकस्य [1]घटपटादाविव द्रव्यगुणयोरभावेन किमिति भेदं स्वीकृत्य अनेकपदार्थकल्पनम् । अपि तु द्रव्यमेकमेव [2]अस्तु, तत्रैव नीलत्वादिसामान्यानि कल्प्यन्ताम्, तावतैव नीलोघटइतिप्रतीत्युपपत्तेः । तदिदमुक्तं 'द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति' इति । द्रव्यं मृदादि, संस्थानं घटत्वादि । आदिपदेन नीलत्वादिकं गृह्यते । तथा च, मृदेव घटत्वाश्रया सती घट इति व्यवह्रियते, नीलत्वाश्रया सती नील इति व्यवह्रियते, न तु मृदतिरिक्तो घटो वा नीलगुणो वा अस्ति—इति, तदा पूर्वसूत्रोक्तार्थविरोधः । तत्र हि 'गुणातिरेकेण द्रव्यं न कल्पनीयम्, अपि तु रूपादिष्वेव समुदितेषु पृथिवीत्वादिकमस्तु' इत्युक्तम्, इह तु, 'द्रव्यातिरेकेण गुणा न कल्पनीयाः अपि तु द्रव्य एव नीलत्वादिकमस्तु' इत्युच्यते—इति चेत्,

---

1. मु. घटादाविव

2. मु. 'अस्तु' नास्ति

**ननु अग्नेरन्यस्यापि सतो धूमस्य अग्न्यधीनत्वं दृश्यते ।**

**सत्यं दृश्यते । भेदप्रतीतेस्तु तत्र अग्निधूमयोरन्यत्वं निश्चीयते । इह तु 'शुक्लः कम्बलः' 'रोहिणी धेनुः' 'नीलमुत्पलं' इति द्रव्यस्यैव तस्य तस्य तेन तेन विशे[षेण](षणेन)प्रतीयमानत्वात् नैव द्रव्यगुणयोः अग्निधूमयोरिव भेदप्रतीतिरस्ति । तस्मात् द्रव्यात्मकता गुणस्य ।**

**एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता ।**

---

उच्यते—अनिर्वचनीयत्ववादिनां हि गुणपरिशेषे वा द्रव्यपरिशेषे वा न तात्पर्यम्, अपि तु लौकिकव्यवहारो यथाकथञ्चिदुपपद्यते, न तु तदर्थं 'द्रव्यं, गुणः सामान्यम्' इत्येषैव परिभाषा राजाज्ञेव परिपालनीयेति[1] । ततश्च तार्किकपरिभाषाभासताप्रतिपादनपरत्वादस्याधिकरणस्य, तस्याश्च गुणपरिशेषे वा द्रव्यपरिशेषे वा उभयथापि सम्भवात् न पूर्वोत्तरविरोधः ।

उक्तमाशयमजानानः शङ्कते—नन्वग्नेरन्यस्यापीति । आशयमाविष्करोति—**सत्यं दृश्यत इति । भेदप्रतीतेरिति** । अग्निधूमयोः विश्लिष्टतया स्फुटभेदप्रतीतेः इत्यर्थः ।

**एतेनेति** । गुणे उक्तो न्यायः कर्मणि योजयितव्यः । न हि कर्मणोऽपि द्रव्यात् स्फुटविवेकोऽस्ति । तथा च 'चलति पक्षी' इत्यादिप्रत्ययः पक्षिण एव चलनत्वाद्याश्रयत्वविषयः । चलत्यादिधातवोऽपि तत्तत्सामान्यवाचका एव । [2]द्रव्यमात्रपरिशेषपक्षे च नीलत्वादिसामान्यानि उपगन्तव्यान्येव । न हि अन्यथा 'घटः' 'नीलः' इति प्रतीतिरुपपद्यते । [3]घटत्वनीलत्वसामान्यानङ्गीकारे हि 'घटः' 'नीलः' इति प्रतीतिः द्रव्यस्वरूपमात्रविषया उपगन्तव्या । तथा च कथं [4]घटत्वनीलत्वरूप-

---

1. **इतीति** तात्पर्यमित्यनुषज्यते ।

2. ननु—भाष्ये अतिरिक्तं सामान्यमपि एतेनेत्यादिग्रन्थे निराकृतम्, तत् कथं सामान्यवाचकत्वं चलत्यादीनामुच्यते-इत्याशङ्कां परिहरन् भाष्यतात्पर्यमाह—**द्रव्येत्यादिना** ।

3. मु. द्रव्यत्वनीलत्व

4. मु. द्रव्यत्वनीलत्व

गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वात्—इति यद्युच्येत, तत् पुनरयुतसिद्धत्वं अपृथग्देशत्वं वा स्यात् अपृथक्कालत्वं वा अपृथक्स्वभावत्वं वा। सर्वथापि नोपपद्यते। अपृथग्देशत्वे तावत् स्वाभ्युपगमो विरुध्येत। कथम्? तन्त्वारब्धो हि पटः तन्तुदेशोऽभ्युपगम्यते, न पटदेशः। पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः। तथा चाहुः—'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' (वै. सू. १।१।१०) इति। तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटं आरभन्ते, तन्तुगताश्च गुणाः शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्ते—इति हि तेऽभ्युपगच्छन्ति। सोऽभ्युपगमः द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। अथ अपृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोः अयुतसिद्धत्वं प्रसज्येत। तथा अपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः संभवति, तस्य तादात्म्येनैव

---

प्रकारविशेषोल्लेखः। [1]कथं वा द्वयोश्शब्दयोः अपर्यायता। तथा च वक्ष्यति 'स्वरूपबाह्यरूपापेक्षया अनेकशब्दप्रत्ययदर्शनात्' इति।

तथापि, द्रव्यमात्रपरिशेषेण अतिरिक्ततया निराकरणीयेषु कर्मादिषु परिगणनं सामान्यस्य, तार्किकाभिमतं यत् अनेकसमवेतं नित्यं सामान्यं तदभिप्रायेण। विशेषसमवायौ तु न लोकवेदप्रसिद्धाविति तदभ्युपगमे तार्किकाणां प्रमाणविधुरत्वं स्फुटमेव। अतो 'भावभूतः पदार्थः षड्विधः' इति परिगणनं असङ्गतम्। अभावस्तु न अधिकरणातिरेकेण विद्यते। घटं प्रति अनुयोगितया प्रतीयमानं भूतलमेव घटस्याभावः इत्येवोपपत्तेः।

इदानीं, द्रव्यगुणादिषु स्फुटविवेकराहित्यप्रयोजकतया स्वीकृतं अयुतसिद्धत्वं निर्वक्तुमशक्यमिति [2]प्रतिपादयितुं शङ्कते—[3]**गुणानां द्रव्याधीनत्वमिति।**

---

1. आ. कथं वा द्रव्यगुणशब्दयोः
2. मु. प्रदर्शयितुं शङ्कते
3. मु. गुणादीनां द्रव्याधीन-

प्रतीयमानत्वात्। युतसिद्धयोः संबन्धः संयोगः अयुतसिद्धयोस्तु समवायः– इत्ययमभ्युपगमो मृषैव तेषां, प्राक्सिद्धस्य कार्यात् कारणस्य अयुतसिद्धत्वानुपपत्तेः। अथ अन्यतरापेक्ष एवायमभ्युपगमः स्यात् 'अयुतसिद्धस्य कार्यस्य कारणेन संबन्धः समवायः' इति, एवमपि प्रागसिद्धस्य अलब्धात्मकस्य कार्यस्य कारणेन संबन्धो नोपपद्यते, द्व्यायत्तत्वात् संबन्धस्य। सिद्धं भूत्वा संबध्यत इति चेत्, प्राक्कारणसंबन्धात् कार्यस्य सिद्धौ अभ्युपगम्यमानायां अयुतसिद्ध्यभावात् 'कार्यकारणयोः संयोगविभागौ न विद्येते' इतीदं दुरुक्तं स्यात्। यथा च उत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः संबन्धः संयोग एवाभ्युपगम्यते न समवायः, एवं कारणद्रव्येणापि संबन्धः संयोग एव स्यात् न समवायः।

---

[1]द्रव्यगुणयोर्भेदः प्रतीतिविरुद्धश्चेत्याह—तस्येति। गुणस्य द्रव्याभेदेनैव प्रतीयमानत्वात् इत्यर्थः। ययोरसम्बन्धो नास्ति तयोः परस्परमयुतसिद्धत्वं इत्याशङ्क्याह—युतसिद्धयोरिति। कदाचिदसम्बन्धेनापि वर्तमानयोः। अयुतसिद्धयोः- [2]कदापि सम्बन्धराहित्येनावर्तमानयोः। प्राक्सिद्धस्येति। समवायिकारणत्वेनाभिमतं हि कार्योत्पत्तेः प्राक् तेन असम्बद्धमेव भवति। तथा च कथं तयोरयुतसिद्धिः। ननु--द्वयोस्सम्बन्धिनोर्मध्ये एकस्य सम्बन्धिन उत्पत्तिमारभ्य नाशपर्यन्तं अन्यतरसंबन्धित्वेनैवावस्थानं ययोर्भवति तयोरयुतसिद्धिः। तथाच कारणस्य प्राक् कार्यासम्बन्धित्वेनावस्थानेऽपि कार्यस्य कारणसम्बन्धितयैवावस्थानात् न तयोरयुतसिद्धत्वाभावः इति शङ्कते—अथान्यतरेति।

प्राक्कारणसम्बन्धात् कार्यस्यसिद्धावभ्युपगम्यमानायामिति। ननु– तार्किकमते 'कार्यं उत्पत्त्यनन्तरं उपादानेन सम्बध्यते' इति नोपेयते, अपि तु 'सम्बद्धमेवोत्पद्यते' इति। अतो न कार्यस्य उत्पत्तिसमये कारणेनासम्बन्धात् अयुतसिद्धत्वाभावः–इति चेत्,

---

1. आ. द्रव्यगुणयोरभेदः प्रतीतिसिद्धश्चेत्याह—**तस्येति**।

2. कदाचित्सम्बन्धराहित्येनावर्तमानयोः इति आ. पाठः। कदाचित्सम्बन्धराहित्येनवर्तमानभिन्नयोः इति तदर्थः। युतसिद्धविपरीतयोः इति यावत्।

नापि संयोगस्य समवायस्य वा संबन्धस्य संबन्धिव्यतिरेकेणास्तित्वे किंचित् प्रमाणमस्ति । संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्द-प्रत्ययदर्शनात् तयोरस्तित्वमिति चेत्, न—एकत्वेऽपि स्वरूपबाह्यरूपापेक्षया अनेकशब्दप्रत्ययदर्शनात् । यथा एकोऽपि सन् देवदत्तो लोके स्वरूपं संबन्धिरूपं चापेक्ष्य अनेकशब्दप्रत्ययभाग्भवति, 'मनुष्यः, ब्राह्मणः, श्रोत्रियः, वदान्यः, बालः, युवा, स्थविरः, पिता, पुत्रः, पौत्रः, भ्राता, जामाता' इति, यथा च एकापि सती रेखा स्थानान्यत्वेन निविशमाना एकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथा सम्बन्धिनोरेव संबन्धि-

---

उच्यते—कार्यस्य समवायिकारणे यः सम्बन्धः, स नित्यो वा जन्यो वा । नाद्यः, सम्बन्धिद्वयाश्रितस्य सम्बन्धस्य आश्रयाभावे अवस्थानायोगेन कार्यस्यापि सम्बन्धाश्रयतया नित्यमवस्थानप्रसङ्गात् । जन्यत्वे तु, सम्बन्धिद्वयाश्रितसङ्ख्यादिवत् आश्रयद्वयजन्यत्वस्यावश्यम्भावेन कार्योत्पत्तिसमये सम्बन्धाभावात् न कार्यकारणयो-रयुतसिद्धिः ।

एकत्वेऽपि स्वरूपबाह्यरूपेति । ननु—संयोगसमवायस्वरूपं बाह्यं सम्बन्ध्य-न्तरनिरूपितम् । घटस्वरूपं तु न बाह्यनिरूपितम् । अतः 'घटः' इति 'संयोगः' 'समवायः' इति च शब्दप्रत्ययभेदेऽपि, यथा 'देवदत्तस्य पिता यज्ञदत्तः' इति सामानाधिकरण्यप्रत्ययः, एवं 'भूतलसंयोगी घटः' 'रूपसमवायी घटः' इति प्रयोक्तव्ये 'समवायो घटः' 'संयोगो घटः' इति सामानाधिकरण्येन प्रयोगः स्यात्, अभेदाभ्युपगमात्—इति चेत्—न-संयोगादिपदानां [1]तार्किकमतसंयोगत्वादिसामान्य-परतोपपत्तेः । एवं च 'घटस्य नीलं रूपं' इत्यादिव्यवहारोऽपि सामान्येष्वेव सञ्चार-णीय इति न किञ्चित् सङ्कटम् ।

यथा चैकापि सती रेखेति । [2]वामगत्या लिख्यमानानां अङ्काभिधानानां रेखाणां मध्ये सदृशी विसदृशी वा प्रथमस्थानपतिता एकद्वित्र्यादिसंज्ञां लभते, द्वितीयस्थानपतिता दशविंशत्यादिसंज्ञां, तृतीयस्थानपतिता शतसंज्ञां, चतुर्थस्थानपतिता सहस्रसंज्ञां, पञ्चमादिस्थाने पतिता अयुतादिसंज्ञां—इति गणितमर्यादा ।

---

1. **तार्किकमतेति** तार्किकाभिमतेत्यर्थः ।
2. **वामगत्येति** 'अङ्कानां वामतो गतिः' इति न्यायात् इति भावः ।

शब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वम्, न व्यतिरिक्तवस्त्वस्तित्वेनेति, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः अभावो वस्त्वन्तरस्य। नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः संततभावप्रसङ्गः। स्वरूपबाह्यरूपापेक्षयेति उक्तोत्तरत्वात्।

तथा अण्वात्ममनसां अप्रदेशत्वात् न संयोगः संभवति, प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात्। कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेत्, न—अविद्यमानार्थकल्पनायां सर्वार्थसिद्धिप्रसङ्गात्। 'इयानेव अविद्यमानो विरुद्धोऽविरुद्धो वा अर्थः कल्पनीयो नातोऽधिकः' इति नियमहेत्वभावात्। कल्पनायाश्च स्वायत्तत्वात् प्रभूतत्वसंभवाच्च। न च 'वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्यः अन्येऽधिकाः शतं सहस्रं वा अर्था न कल्पयितव्याः' इति निवारको हेतुरस्ति। तस्मात् यस्मै यस्मै यद्यत् रोचते तत्तत् सिद्ध्येत्। कश्चित् कृपालुः 'प्राणिनां दुःखबहुलः संसार एव मा भूत्' इति कल्पयेत्। अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्। कः तयोर्निवारकः स्यात्।

---

अविद्यमानार्थकल्पनायां इति। ननु—निष्प्रदेशेषु परमाणुषु [1]प्रदेशानारोप्य अव्याप्यवृत्तिसंयोगसमर्थने हि असदर्थकल्पना स्यात्, न त्वेतदस्ति। अवच्छेदकभेदो हि संयोगेनाव्याप्यवृत्तावपेक्ष्यते, न तु प्रदेश एव। स तु सावयवेषु प्रदेशभेद एव भवति। निरवयवेषु तु दिग्भेद एव भविष्यति। तथा च किञ्चिद्दिगवच्छेदेन निरवयवानां संयोगः किञ्चिद्दिगवच्छेदेनाभाव इति का अनुपपत्तिः अव्याप्यवृत्तितायाम्। अवश्यं च वृक्षकपिसंयोगस्थलेऽपि इयं गतिः आश्रयणीया। सावयवानां संयोगस्य तत्तदवयवसंयोगपूर्वकत्वेन कपिवृक्षारम्भकपरम्परानिविष्टपरमाणूनामपि संयोगस्य अवश्यस्वीकर्तव्यत्वात्—इति चेत्,

उच्यते—दिशामपि किं सम्बद्धानां अवच्छेदकता, उत असम्बद्धानाम्। नान्त्यः, अतिप्रसङ्गात्। आद्ये तु, संयोगेनावच्छेदकतोपगमे तत्राप्यवच्छेदकान्तरापेक्षायां अनवस्था स्यात्। स्वरूपसम्बन्धेनावच्छेदकताभ्युपगमे तु अण्वात्ममनसामपि स एवास्तु। किं संयोगकल्पनया। तथाच अव्याप्यवृत्तिसंयोगकल्पना दुरुपपादा।

---

1. मु. प्रदेशभेदानारोप्य

किंचान्यत्—द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्य आकाशेनेव संश्लेषानुपपत्तिः। न हि आकाशस्य पृथिव्यादीनां च जतुकाष्ठवत् संश्लेषोऽस्ति। कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इति अवश्यं कल्प्यः समवाय इति चेत्, न—इतरेतराश्रयत्वात्। कार्यकारणयोर्हि भेदसिद्धौ आश्रिताश्रयभावसिद्धिः आश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डबदरवत् इति इतरेतराश्रयता स्यात्। न हि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते, 'कारणस्यैव संस्थानमात्रं कार्यं' इत्यभ्युपगमात्।

किंचान्यत्—परमाणूनां परिच्छिन्नत्वात् यावत्यो दिशः षट् अष्टौ दश वा तावद्भिरवयवैः सावयवास्ते स्युः सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत।

यांस्त्वं दिग्भेदभेदिनोऽवयवान् कल्पयसि त एव परमाणव इति चेत्, न—स्थूलसूक्ष्मतारतम्यक्रमेण आ परमकारणात् विनाशोपपत्तेः। यथा—पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूतापि विनश्यति, ततः सूक्ष्मं सूक्ष्मतरं च पृथिव्येकजातीयकं विनश्यति, ततो द्व्यणुकं, तथा—परमाणवोऽपि पृथिव्येकजातीयकत्वात् विनश्येयुः।

विनश्यन्तोऽपि अवयवविभागेनैव विनश्यन्तीति चेत्, नायं दोषः—यतो घृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम। यथा हि

---

संश्लेषानुपपत्तिरिति। एकसम्बन्ध्याकर्षणे यत्र सम्बन्ध्यन्तराकर्षणं तत्र संश्लेषः। स तु सावयवानां जतुकाष्ठादीनां दृष्टः, न तु निरवयवैः सावयवानाम्। अतो द्व्यणुकस्य सावयवस्य निरवयवेन परमाणुना स नोपपद्यते। न हि कार्यकारणयोरिति। ननु—कार्यकारणयोः धर्म्यंशे भेदस्य आश्रयाश्रयिभावस्य वा अनभ्युपगमेपि अवस्थांशे स वेदान्तवादिभिरपि अनिर्वचनीय उपेयत एव। तथा च तन्निर्वाहार्थं समवायोऽभ्युपगन्तव्यः—इति चेन्न। तावता सम्बन्ध उपगन्तव्यः, स तु स्वरूपसम्बन्ध एव भविष्यति, न तु समवाय इति भावः।

यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामिति। यद्यपि घृतादाववयविनि अवयवविभागपूर्विकैव द्रवत्वापत्तिरिति वक्तुं शक्यं, तथाऽपि अवयविनि

घृतसुवर्णादीनामविभज्यमानावयवानामप्यग्निसंयोगाद्द्रवभावापत्त्या काठिन्यविनाशो भवति, एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो भविष्यति ।

तथा कार्यारम्भोऽपि न अवयवसंयोगेनैव केवलेन भवति, क्षीरजलादीनां अन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात् ।

तदेवं असारतरतर्कसंदृब्धत्वात् ईश्वरकारणश्रुतिविरुद्धत्वात् श्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिः अपरिगृहीतत्वात् अत्यन्तमेवानपेक्षा अस्मिन् परमाणुकारणवादे कार्या श्रेयोऽर्थिभिः इति वाक्यशेषः ॥ १७ ॥

---

यथा नैमित्तिकद्रवत्वं एवं परमाणावपि तदुपेयम्, द्रवत्वाभावदशायां च परमाणौ [1]घनीभावोऽप्युपेयः । स च [2]द्रवत्वाभावातिरिक्तं गुणान्तरं इत्यन्यदेतत् । तथा च परमाणुगतघनीभावविनाशः विभागं विनैव भवतीति तात्पर्यम् । क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरमिति । यद्यपि—तार्किकैः क्षीरावयव्यारम्भकसंयोगनाशेन क्षीरे नष्टे क्षीरावयवैः संयोगान्तरं प्राप्तैः दध्यारभ्यते इत्युपेयते, ‘यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत् तदुपादानोपादेयम्' इत्युपगमात् । एवं जलस्य हिमभावेऽपि शक्यं वक्तुम्; तथापि—नेयं तार्किकप्रक्रिया प्रतीत्यनुसारिणी । पूर्वसंयोगनाशतन्निमित्तादेः तत्र अनुपलम्भात् । परं तु, यथा विद्यमान एव घटे पाकेन रूपरसान्तरोत्पत्तिः एवं विद्यमान एव क्षीरे [3]कठिनक्षीरन्यायेन कालादिना रूपान्तरस्य रसान्तरस्य चोत्पत्तौ तदेव क्षीरं दध्यवस्थां प्राप्नोति इत्येव कल्पयितुं युक्तम् । तथा च ‘क्षीरमेव दध्यभवत्' इति प्रत्यभिज्ञानमपि उपपद्यते । परं तु कठिनक्षीरस्थले क्षीरत्वमभिव्यक्तम्, दधिस्थले तु घट्टितपटे तन्तुत्वस्येव क्षीरत्वस्यानभिव्यक्तिः इति ॥ १७ ॥

**इति परमाणुजगदकारणत्वाधिकरणम्**

---

1. मु. घनीभावोऽभ्युपेयः
2. मु. द्रवत्वाभावोऽतिरिक्तं. आ. द्रवत्वाभावो वा । अति
3. मु. **कठिनक्षीरन्यायेन**—काठिन्यावस्थाप्राप्तक्षीरदृष्टान्तेन ।

## ४ समुदायाधिकरणम्

# समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वैशेषिकराद्धान्तो दुर्युक्तियोगात् वेदविरोधात् शिष्टापरिग्रहाच्च नापेक्षितव्यः—इत्युक्तम्। सोऽर्धवैनाशिक इति वैनाशिकत्वसाम्यात् सर्ववैना-

---

वृत्तानुवादपूर्वकं उत्तराधिकरणेन अतीतस्याधिकरणस्य सङ्गतिमाह— **वैशेषिकराद्धान्त इति। सोऽर्धवैनाशिक इति।** तार्किका हि शरीरादीनां सावयवानां अनुक्षणं नाशमुपयन्तीत्यर्धवैनाशिकाः। तथा हि—तन्मते परिमाणभेदात् द्रव्यभेदः। शरीरस्य च अशितपीतयोः पाकेन प्रतिक्षणं केचिदवयवा उपचिता एव भवन्ति। उपचितैरवयवैः पूर्वावयवसहितैः अन्य एवावयवी आरभ्यते। आरभ्यमाणस्य च अवयविनः मलादिनिर्गमे घर्षणादौ च धातुवैषम्ये च केचिदवयवा विशीर्णा भवन्ति। यद्यपि च एवमुपचयापचयौ प्रतिक्षणं न स्फुटावुपलक्ष्येते, तथापि पक्षमासादिकालपर्यये[1] स्फुटं शरीरे स्थौल्यकार्श्यादिदर्शनेन [2]सूर्यचन्द्रगतिन्यायेन प्रतिक्षणमपि किञ्चिदुपचयादिकं उपेयम्। [3]एवं भूभूधरवारिधराणामपि खननपूरणसेचनादिना[4] अवयवविश्लेषः अवयवान्तरसंयोगश्च उपगन्तव्यः। एवं सर्वेषु सावयवेषु क्रियाविशेषैः अवयवापचयोपचयौ ऊहनीयौ। अपचये च असमवायिकारणसंयोगनाशात् पूर्वावयविनाशः, उपचये च पूर्वावयविनि अवयवान्तरनिवेशायोगात् अपूर्वावयव्युत्पत्तिः इति, सावयवानां प्रतिक्षणमुत्पादविनाशौ तार्किकसम्मतावेव। न च—एतावतापि कथं क्षणिकत्वस्य प्राप्तिः, क्षणचतुष्टयं क्षणपञ्चकं यावत् नाशादिनिमित्तं प्राप्तं भवति तावत्पर्यन्तं अवस्थानं तार्किकमते सम्भावितम्, बौद्धमते तु निर्निमित्ततया प्रतियोगिमात्राधीननाशाभ्युपगमात् क्षणिकत्वमावश्यकम्। अतः कथं सावयवानां पदार्थानां उपचयापचयाभ्यां भेदमुपयन् तार्किकः अर्धवैनाशिकः स्यात्—इति वाच्यम्। उक्तगत्या सावयवेषु पदार्थेषु वाय्वभिघातादिरूपस्य

---

1. **पर्यये**—अतिपाते—व्यवधाने। आ-पर्याये

2. **सूर्यचन्द्रगतिन्यायेन**—सूर्यादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात् प्रतिक्षणं स्वल्पदेशान्तरप्राप्तिज्ञानवत्।

3. आ. भूभूधरवारिधीनामपि

4. **सेचनादिनेति** सेचनं—वर्षणम्। टङ्कनं आदिशब्दार्थः।

**शिकराद्धान्तो नतरामपेक्षितव्य इतीदं इदानीमुपपादयामः ।**

**स च बहुप्रकारः–प्रतिपत्तिभेदात्, विनेयभेदाद्वा । तत्रैते त्रयो**

---

यस्यकस्याप्यवयवविश्लेषनिमित्तस्य सम्भवेन क्षणिकत्वावर्जनेन सावयवनिरवयवरूपस्य प्रपञ्चस्य सावयवरूपे अर्धे भागे क्षणादूर्ध्वं नाशोपपत्तेः तार्किकः अर्धवैनाशिकः ।

अपि च–सावयवानां परिमाणभेदात् भेदमिच्छता, ‘यदेव पूर्वेद्युर्मम शरीरं तदेवाद्य वर्तते’ ‘सैवेयं भूः’ ‘त एवैते भूधराः’ इत्यादिप्रत्यभिज्ञानां सादृश्यादिदोषात् भ्रान्तित्वमुपेयम् । तथा च, ‘यत् सत् तत् क्षणिकं, यथा उत्पन्नविनष्ट वस्तु’ इति बौद्धानुमानस्य किं बाधकं तार्किकेण वक्तुं शक्यम् । प्रत्यभिज्ञैव हि स्थायित्वे मूलभूतं प्रमाणम् । सा तु भ्रान्तिकृता । अतः न तार्किकेण सावयवानामक्षणिकत्वं उपपादयितुं शक्यम् ।

**सर्ववैनाशिकराद्धान्त इति ।** बौद्धानां मते भावभूतं सर्वं क्षणिकमिति, ते सर्ववैनाशिकाः ।

**स च बहुप्रकार इति ।** सर्वशून्यत्वविज्ञानमात्रास्तित्वपरोक्षबाह्यसहितान्तरास्तित्वापरोक्षबाह्यसहितान्तरास्तित्वरूपाः चत्वारः सिद्धान्ता बौद्धस्य । अतो बहुप्रकारत्वम् । ननु–एकेन बुद्धेन कथं विरुद्धाः चत्वारः सिद्धान्ता उपदर्शिताः, इत्यत आह—**प्रतिपत्तिभेदादिति** । यस्मिन्यस्मिन् काले यथायथा बुद्धस्य प्रतिभारूपा प्रतिपत्तिरभवत् तदातदा तथातथा सूत्राणि रचितवानित्यर्थः ।

ननु–सर्वज्ञस्य बुद्धस्य न कालभेदेन विरुद्धा प्रतिभा सम्भवति, अतो निमित्तान्तरमेव वक्तव्यं विरुद्धार्थसूत्रप्रणयने । तथैव बौद्धैः तदाशयो वर्णितः—

बुद्धस्य हि माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञकाः चत्वारः शिष्याः । तत्र, बौद्धेन प्रथमं यान् प्रति ‘सर्वं शून्यं’ इत्युपदिष्टं ते माध्यमिकाः । ते हि, गुरुणा यथोक्तं तथैव श्रद्धया गृहीतवन्त इति नापकृष्टाः, पुनश्च तदुक्तस्यार्थस्य बुद्ध्यनुसारेणाक्षेपस्य अकृतत्वात् नोत्कृष्टबुद्धयः, इति माध्यमिकाः[1] । अन्यैस्तु शिष्यैः, गुरुणा सर्वशून्यत्वे उपदिष्टे ‘ज्ञानातिरिक्तस्य सर्वस्य शून्यत्वमस्तु’ इति, अस्तु नामेति गुरूक्तिर्योग इति बौद्धैः परिभाषिता उपेता । तदुपरि च ‘ज्ञानस्य तु शून्यत्वं न सम्भवति, तथात्वे जगदान्ध्यप्रसङ्गात् शून्यत्वसिद्धेर-

---

1. **माध्यमिकाः** — मध्यमां स्थितिं आस्थिताः ।

वादिनो भवन्ति—केचित् सर्वास्तित्ववादिनः, केचित् विज्ञानास्तित्व-मात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिनः-इति।

**तत्र ये सर्वास्तित्ववादिनो बाह्यमान्तरं च वस्तु अभ्युपगच्छन्ति-भूतं भौतिकं च चित्तं चैत्तं च, तांस्तावत् प्रतिब्रूमः। तत्र भूतं पृथिवीधात्वादयः। भौतिकं रूपादयः चक्षुरादयश्च। चतुष्टये च पृथिव्यादिपरमाणवः खरस्ने-**

---

सम्भवाच्च' इति, बुद्धमते आचारत्वेन परिभाषित आक्षेपोऽपि कृत इति, ते योगाचाराः विज्ञानमात्रास्तित्ववादिनः। तदनन्तरं, अन्यैश्शिष्यैः 'प्रतीतिसिद्धस्य कथं शून्यत्वं वक्तुं शक्यम्, अतो ज्ञानवत् बाह्यार्थोऽपि सत्यः' इत्युक्ते, 'तर्हि तथैवास्तु, परं तु सोऽनुमेयः, न तु प्रत्यक्षः' इत्युक्ते, तथाङ्गीकृत्य 'एवं शिष्यमतिमनुसृत्य कियत्पर्यन्तं सूत्रं भविष्यति' इति तैः पृष्टम्। अतः ते [1]सौत्रान्तिकाः। अन्ये पुनः, 'यदि अयंघटइतिप्रतीतिबलात् बाह्योऽर्थ उपेयते, तर्हि तस्या एव प्रतीतेः अपरोक्षत्वात् स कथं परोक्षः, अतो बाह्योऽर्थोनप्रत्यक्षइति-भाषा विरुद्धा' इति आक्षिपन्। अतः ते वैभाषिकाः।

अतः शिष्यबुद्धिमनुसृत्यैव बुद्धेन तथातथा अर्था व्युत्पादिताः—इत्या-शङ्कायां, तर्हितथैवास्त्वित्याह—**विनेयभेदाद्वेति**।

**त्रयो वादिन इति**। सौत्रान्तिकवैभाषिकयोः परोक्षत्वापरोक्षत्वाभ्यां बाह्यार्थ-वैलक्षण्ये सत्यपि बाह्यार्थाभ्युपगन्तृत्वेनैकीकृत्य त्रय इत्युक्तिः। भूतं महाभूतानि पृथिव्यादीनि, भौतिकं गिरिनद्यादि, चित्तं ज्ञानं, चैत्तं सुखादि, भूतभौतिकं बाह्यं, चित्तचैत्तं आन्तरं, धातुपदं पदार्थपर्यायः।

**भौतिकं रूपादय इति**। रूपादीनां पृथिव्यादिकार्यत्वं सर्वसम्प्रतिपन्नम्। **चतुष्टये च पृथिव्यादिपरमाणव इति**। बौद्धमते, आकाशो न भावमध्यपतितः, अपि त्वावरणाभाव इति, भूतानि चत्वारि। खरः—कठिनः, ईरणं-चलनम्। **ते पृथिव्यादिभावेन संहन्यन्त इति**। यथा तार्किकमते परमाण्वादिभिः द्व्यणु-कादिक्रमेण कार्यमारभ्यते नैवं बौद्धमते, अपि तु, परमाणुसमुदाय एव गिरिनद्या-दिकं सर्वम्—इति भावः।

---

1. **सौत्रान्तिकाः** — सूत्रस्यान्तं पृष्टवन्त इति सौत्रान्तिकाः।

द्वयणुकादिक्रमेण, ते पृथिव्यादिभावेन संहन्यन्ते—इति मन्यन्ते। (तथा) रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः, तेऽपि अध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्ते—इति मन्यन्ते।

---

एवं बाह्यं भूतभौतिकरूपं परमाणुसमुदायं निरूप्य आन्तरं पञ्चस्कन्धसमुदायं निरूपयति—रूपेति। चित्तचैत्तमिति पूर्वं सङ्ग्रहेणोक्तस्य विस्तरेण कथनमेतत्। रूपं—नीलपीतादिरूपम्। यद्यपि तत् बाह्यं, तथापि ज्ञानविषयतया तस्याप्यान्तरत्वविवक्षा। अथवा, स्थूलशरीरनिविष्टानि भूतान्येव नीलादिगुणकानि रूपम्, अत आन्तरत्वम्। विज्ञानपदेन, अहमाकारं आलयविज्ञानशब्दितं रूपादिविज्ञानं सविकल्पकं निर्विकल्पकं च प्रवृत्तिविज्ञानसंज्ञितं तत् सर्वं विवक्षितम्। वेदना-सुखदुःखे, संज्ञा-यज्ञदत्तादिपदं[1] तदुल्लेखिसविकल्पप्रत्ययो वा। द्वितीयपक्षे विज्ञानपदेन सविकल्पकप्रत्ययो न ग्राह्यः। संस्कारः रागद्वेषमदमानधर्माधर्मादयोऽर्थाः। इदं च सर्वं बाह्यमाभ्यन्तरं क्षणिकम्। न च तस्य क्षणिकत्वे प्रमाणाभावः। 'अयं घटः' इति प्रत्यक्षं हि घटे वर्तमानत्वं विशेषणं अवगाहते। वर्तमानत्वं च अवर्तमानत्वस्य भूतभविष्यत्कालसम्बन्धस्य व्यावृत्तिरेव। यथा घटत्वादिकं अघटव्यावृत्तिः। अन्यापोहरूपत्वात् सामान्यस्य तन्मते। तथा च प्रत्यक्षेणैव कालान्तरास्थायिताया विषयीकरणात् तात्कालिकत्वं क्षणिकत्वं सिध्यति। तथा [2]अनुमानमपि—यत् सत् तत् क्षणिकं, यथा उत्पन्नविनष्टम्। न चाप्रयोजकता। स्थायित्वे सत्त्वस्यैवानुपपत्तेः। अर्थक्रियाकारित्वं सत्त्वं, न तु जात्यादिरूपम्। स्थायित्वे च न अर्थक्रियाकारिता सम्भवति। विकल्पासहत्वात्। स्थायित्वपक्षे हि दण्डादयः किं एकैककार्यजनने समर्थाः, उत अनेककार्यजनने। नाद्यः—तथासति एकस्माद्दण्डात् एक एव घटःस्यात्, न तु घटान्तरम्। न द्वितीयः—तथासति सर्वेऽपि दण्डजन्यत्वेन सम्मता घटा युगपदेव स्युः, समर्थस्य विलम्बे नियामकाभावात्। अत एकैक-

---

1. मु, 'पदं' नास्ति

2. अनुमानमित्यादि अनुमित्युद्देश्यकं न्यायवाक्यं अत्र अनुमानशब्दार्थः। न्यायवाक्यं च उदाहरणोपनयात्मकद्व्यवयवात्मकं बौद्धानाम्। तत्र - 'यत् सत्' इत्यादि उदाहरणवाक्यम्। उपलक्षणमिदं उपनयवाक्यस्यापि।

अत्रेदमभिधीयते—योऽयं उभयहेतुकः—उभयप्रकारः समुदायः परेषामभिप्रेतः अणुहेतुकश्च भूतभौतिकसंहतिरूपः स्कन्धहेतुकश्च पञ्चस्कन्धीरूपः, तस्मिन् उभयहेतुकेऽपि समुदाये अभिप्रेयमाणे, तदप्राप्तिः स्यात्-समुदायाप्राप्तिः, समुदायभावानुपपत्तिरित्यर्थः। कुतः? समुदायिनामचेतनत्वात्।

---

क्षणवृत्तिदण्डादिः एकैककार्यजननसमर्थः प्रतिक्षणमुत्पत्तिविनाशशीलः—इत्युपेयमिति तदभिमानः। न तु तन्मते स्थायी जीवो वा ईश्वरो वा अस्ति, ययोः परमार्थत ऐक्यं भवेत्[1]।

एवं तन्मतं निरूप्य, तद्दूषणपरं सूत्रं योजयन्नेव सिद्धान्तमाह—अत्रेदमभिधीयत इत्यादिना। समुदायिनामचेतनत्वादिति। अयमर्थः—समुदायो हि अनेकेषां पदार्थानां सन्निकर्षेण मेलनरूपः अयंघटइत्यादिप्रतीत्युपपादक आस्थेयः। स तु परमाणूनां व्यापाराधीन उपगन्तव्यः। अचेतनव्यापारश्च चेतनाधीन एव दृश्यते। अतः अचेतनानां समुदायिनां परमाणूनां स्वत एव तावत् न सम्भवति व्यापाराधीनं मेलनम्।

ननु-स्वतोऽसम्भवेऽपि चेतनाधीनमेव मेलनमस्तु, अस्ति च बौद्धानां चेतनो जीवः, अतः का अनुपपत्तिः समुदायापत्तौ—इति चेत्

न—तन्मते हि न स्थिरो जीवो विद्यते, यद्व्यापाराधीनो भविष्यति समुदायः। अपि तु क्षणिकं अहमितिविज्ञानमेव जीव इत्युच्यते, तस्य तु वृत्तिलाभः शरीराकारभूतसमुदायाधीन एव। तथा च, क्षणिकजीवसिद्धौ शरीराकारसमुदायः सति च शरीरे क्षणिकालयविज्ञानं—इत्यन्योन्याश्रयः।

न च स्थिरस्य चेतनस्य अभावेन तदधीनव्यापारासम्भवेन समुदायापत्त्यभावेऽपि स्वत एव परमाणुव्यापारेण मेलने सति समुदायापत्तिर्भविष्यतीति वाच्यम्। तथासति, नित्यमेव परमाणुव्यापारप्रसङ्गेन सदैव समुदायापत्त्या प्रलयो न स्यात्।

न च—क्षणिकविज्ञानानां [2]आशयसंज्ञकः सन्तानः स्थिरोऽस्ति, तद्व्यापारेण

---

1. ऐक्यं भवेदिति एतेन बौद्धमतनिराकरणस्य अविरोधाध्यायसङ्गतिदर्शिता भवति।

2. आशयेति आशेरते अस्मिन् कर्मानुभववासनाः-इति आशयः।

चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात् । अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुः अनभ्युपगमात्, निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात् । आशयस्यापि अन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् । क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात् प्रवृत्त्यनुपपत्तेः । तस्मात् समुदायानुपपत्तिः । समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते, तथापि अविद्यादीनामितरेतरकारणत्वात् उपपद्यते लोकयात्रा ।

---

परमाणूनां समुदायापत्तिर्भविष्यति—इति वाच्यम् । आशयस्य सन्तानस्य सन्तानिभ्योऽन्यत्वे स एव स्थिरश्चेतनो जीव इति अस्मत्पक्षसिद्धिः । अनन्यत्वे तु पूर्वोक्तोऽन्योन्याश्रयः ।

अपि च, परमाणूनामपि क्षणिकत्वाभ्युपगमात् मेलनं न सम्भवति । परमाणूनां मेलनं परमाणुक्रियाधीनम् । तथा च स्वक्रियां प्रति परमाणूनां कारणत्वात् क्रियापूर्वक्षणे परमाणुभिर्भाव्यम् । क्रियाश्रयतया क्रियाक्षणेऽपि तेषामवस्थानमपेक्षितम् । एवं मेलनक्षणेऽपि । न हि मेलनाश्रयस्याभावे मेलनरूपा प्रवृत्तिः उपपद्यते । तथा च, स्थिरपरमाणुसाध्या मेलनरूपा प्रवृत्तिः कथं तेषां क्षणिकत्वे भवेत् ॥ १८ ॥

भूभूधराङ्कुरादिसमुदायापत्तौ चेतनः [1]प्रयोजको नोपलभ्यते, अतो न समुदायापत्तिश्चेतनाधीना, तथा च द्विविधोऽपि समुदायः चेतनं विनैव भविष्यति—इत्यभिप्रायं शङ्काभागस्य दर्शयति—यद्यपीति । इतरेतरकारणत्वादिति कारणपदेन सौत्रः प्रत्ययशब्दो व्याख्यातः । कार्यं प्रत्येति-[2]जनकतया सम्बध्यते-इति व्युत्पत्त्या प्रत्ययपदं कारणे परिभाष्यते ।

---

1. आ. अप्रयोजको नोप
2. आ. जनकतायाम्

तस्यां च उपपद्यमानायां न किंचिदपरमपेक्षितव्यमस्ति । ते चाविद्यादयः— अविद्या, संस्कारः, विज्ञानं, नामरूपं, षडायतनं, स्पर्शः, वेदना, तृष्णा, उपादानं, भवः, जातिः, जरा, मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ता— इत्येवंजातीयका इतरेतरहेतुकाः सौगते समये क्वचित् संक्षिप्ता निर्दिष्टाः क्वचित् प्रपञ्चिताः । सर्वेषामपि अयमविद्यादिकलापः अप्रत्याख्येयः । तदेवं अविद्यादिकलापे परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमाने अर्थाक्षिप्त उपपन्नः संघातः- इति चेत्—

---

द्विविधो हि समुदायः प्राक् दर्शितः—बाह्यः आभ्यन्तरश्च । तत्र आन्तर-समुदायस्य, चेतनस्य स्थिरस्याभावेऽपि सिद्धिं, दर्शयति—ते चाविद्यादय इति । अनित्याशुचिषु क्षणिकेषु शरीराकारपरिणतेष्वनात्मसु भूतेषु नित्यशुचिस्थाय्यात्म-बुद्धिः अविद्या । ततो रागः शरीरादौ तद्विपरीते द्वेषः तदर्थं ऐहिकामुष्मिको व्यापारः सर्वमेतत् संस्कारः । आभ्यां च जन्मान्तरीयाभ्यां अविद्यासंस्काराभ्यां गर्भगते शुक्लशोणितसमुदाये अहमित्यालयविज्ञानस्य वृत्तिलाभः विज्ञानम् । आलयविज्ञान-सम्बन्धात् गर्भगतस्य शुक्लशोणितस्य कललबुद्बुदावस्था नामरूपम् । तदनन्तरं षण्णामिन्द्रियाणामायतनरूपशरीराकारेण गर्भगतस्यैव परिणामः षडायतनम् । गर्भगतस्यैव शरीरिणः शीतोष्णाद्यनुभवः स्पर्शः । तत्रैव सुखदुःखाद्यनुभवो वेदना । तद्गतस्यैव सुखप्रेप्सा दुःखजिहासा च तृष्णा । तदनुकूलो व्यापारः उपादानम् । गर्भात् निर्गमनं भवः । तथोत्पन्नस्य जनकगतजात्यनुसारेण मनुष्यत्वादिकं जातिः । ततो जरा । मरणम्—मुमूर्षोरिच्छोपहतिः शोकः । प्रतिहतेच्छस्य प्रलापः परिदेवनम् । बाह्येन्द्रियकृतविषयानुभवजनितं दुःखं दुःखम् । मानसविषयानुभव-जनितं दुःखं दुर्मनस्ता । ततो मरणम् । एवंजातीयका इत्यनेन लोकान्तरप्राप्तिः पुनरागमनमिति विवक्षितम् । एवं च पूर्वपूर्वकारणानुसारेण उत्तरोत्तरकार्योत्पत्तेः चेतनव्यापारं विनैव सम्भवात् किं चेतनेन स्थिरेण प्रयोजनम् । नन्वालयविज्ञानस्य वृत्तिलाभार्थं शुक्लशोणिताख्यः समुदायोऽपेक्षितः, कथं तस्य चेतनव्यापारं विना सिद्धिः, अत आह—अर्थाक्षिप्त इति ।

न— कस्मात् ? उत्पत्तिमात्रनिमित्तत्वात् । भवेदुपपन्नः संघातः, यदि संघातस्य किंचिन्निमित्तमवगम्येत । न त्ववगम्यते । यतः, इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वं उत्तरोत्तरस्य उत्पत्तिमात्रनिमित्तं भवत् भवेत्; न तु संघातोत्पत्तेः किंचित् निमित्तं संभवति ।

ननु अविद्यादिभिः अर्थादाक्षिप्यते संघातः इत्युक्तम् ।

अत्रोच्यते—यदि तावदयमभिप्रायः—अविद्यादयः संघातमन्तरेणात्मानमलभमानाः अपेक्षन्ते संघातमिति, ततः तस्य संघातस्य निमित्तं वक्तव्यम् । तच्च नित्येष्वप्यणुष्वभ्युपगम्यमानेषु आश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न संभवति इत्युक्तं वैशेषिकपरीक्षायाम् । किमङ्ग पुनः क्षणिकेष्वणुषु भोक्तृरहितेष्वाश्रयाश्रयिशून्येषु वा अभ्युपगम्यमानेषु संभवेत् ।

---

सूत्रे उत्पत्तिमात्रनिमित्तत्वादित्यनेन, अविद्यादीनामुत्तरोत्तरोत्पत्तौ निमित्तत्वमस्तु नाम इत्युपगम्य मात्रपदेन तदाश्रयभूतस्य सङ्घातस्य सिद्धिः वार्यते, तथा च अविद्यादीनां इतरेतरोत्पत्तिव्यतिरेकेण स्वाश्रयं सङ्घातं प्रति अनिमित्तत्वात् न तत्सिद्धिः इति परिहारांशाभिप्रायमाह—नेत्यादिना ।

शङ्काग्रन्थोक्तमाक्षेपमनूद्य, किं पीनत्वान्यथानुपपत्त्या रात्रिभोजनवत् अविद्याद्यनुपपत्त्या सङ्घाताक्षेपः उत अविद्यादिभिरेव सङ्घातस्योत्पत्तिः इति विकल्पं मनसि निधाय, आद्यं समुदायासिद्ध्या दूषयति—यदि तावदिति । तच्चेति । नित्येषु आश्रयाश्रयिभूतेषु अणुषु अभ्युपगम्यमानेषु भोक्तृषु च सत्सु इत्यन्वयः । आश्रयाश्रयिभूतेष्वित्यस्य उपकार्योपकारकभावं प्राप्तेषु इत्यर्थः । आश्रयाश्रयिशून्येषु-आश्रयाश्रयित्वशून्येषु ।

अयं भावः—स्थिरेषु परमाणुषु, 'यदन्वये परमाणूनां सङ्घातापत्तिः यद्व्यतिरेके च न, तत् उपकारकम्, उपकार्याः परमाणवः, येन तत्कृतो भोगः प्रार्थ्यते स तत्र कर्ता' इति ग्रहीतुं शक्यते । क्षणिकेषु तु परमाणुषु अन्वयव्यतिरेकग्रहस्यानेकक्षणसाध्यस्यासम्भवात् न उपकार्योपकारकभावो निर्धारयितुं शक्यः । नापि भोगकालानवस्थायिनः क्षणिकस्यालयविज्ञानस्य कर्तृत्वं सम्भवति । अतो न सङ्घातापत्तेः किञ्चिन्निमित्तं सम्भावयितुं वैनाशिकैः शक्यम्—इति ।

अथायमभिप्रायः–अविद्यादय एव संघातस्य निमित्तमिति, कथं तमेवाश्रित्य आत्मानं लभमानाः तस्यैव निमित्तं स्युः। अथ मन्यसे–संघाता एव अनादौ संसारे संतत्यानुवर्तन्ते तदाश्रयाश्चाविद्यादयः–इति, तदापि संघातात् संघातान्तरमुत्पद्यमानं नियमेन वा सदृशमेवोत्पद्येत, अनियमेन वा सदृशं विसदृशं वा उत्पद्येत। नियमाभ्युपगमे, मनुष्यपुद्गलस्य देवतिर्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात्। अनियमाभ्युपगमेऽपि, मनुष्यपुद्गलः कदाचित् क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदिति प्राप्नुयात्। उभयमपि अभ्युपगमविरुद्धम्।

अपिच, यद्भोगार्थः संघातः स्यात् स नास्ति स्थिरो भोक्तेति तवाभ्युपगमः। ततश्च भोगो भोगार्थ एव, स नान्येन प्रार्थनीयः। तथा,

---

द्वितीयं अन्योन्याश्रयेण दूषयति—अथायमभिप्राय इति।

ननु - पित्रोरुपसर्पणात् शुक्लशोणितसङ्घातः, तत्र च आलयविज्ञानस्य अविद्यासंस्काराभ्यां वृत्तिलाभः-इति, आध्यात्मिकसङ्घाते न काचिदनुपपत्तिः। न च-पित्रोरपि क्षणिकतया, याभ्यामन्नपानादिकमुपयुक्तं तयोर्नष्टतया, कथं शुक्लशोणितसङ्घातापत्तिहेतुत्वं-इति वाच्यम्। क्षणिकत्वेऽपि सन्तततयोत्पद्यमानत्वात् इत्यभिप्रेत्य शङ्कते—अथ मन्यसे सङ्घाता एवेति। अनादित्वोक्त्या, पूर्वपूर्वपितृसङ्घातात् उत्तरोत्तरस्य शुक्लशोणितसङ्घातापत्तिद्वारा पुत्रसङ्घातस्य उत्पत्तिः इति विवक्षितम्। मनुष्यपुद्गलस्य-मनुष्यशरीरस्य। यथा हि पितृसदृश एव पुत्र उत्पद्यते एवं पितृसङ्घाते मृते परलोकगामिसङ्घातः एतस्यैव सङ्घातस्य कार्यमिति वक्तव्यम्। तथा च, सोऽपि पूर्वसङ्घातसदृश एवेति नियमे सति, अत्र लोके मनुष्यः परलोकेऽपि मनुष्य एव भवेदिति, न देवनारकादियोनिप्राप्तिः। अनियमाभ्युपगमे तु, मनुष्यशरीरस्य क्षणिकस्य इहैव लोके हस्त्यादिभावापत्तिः-इति दूषणमाह—अनियमाभ्युपगमेऽपीति।

ननु-उत्पद्यमानाः प्रजाः पितृतुल्या एव उत्पद्यन्ते, मरणानन्तरं तु जायमानाः सङ्घाता धर्माधर्मवशेन सदृशा विसदृशा वेति अनियमः, ततः पूर्वं तु, प्रतिक्षणं जायमानाः सङ्घाता एकस्मिन् सन्ताने सदृशा एवोत्पद्यन्त इत्यभ्युपगम्यते, अतो न काचिदनुपपत्तिरिति, अत आह—अपि चेति। भवेदेष परिहारः, यदि

मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम्। अन्येन चेत् प्रार्थ्येतोभयं भोगमोक्षकालावस्थायिना तेन भवितव्यम्। अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः। तस्मात्, इतरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेत् भवतु नाम, न तु संघातः सिद्ध्येत्, भोक्त्रभावात्-इत्यभिप्रायः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उक्तमेतत् अविद्यादीनां उत्पत्तिमात्रनिमित्तत्वात् न संघातसिद्धिरस्तीति। तदपि तु उत्पत्तिमात्रनिमित्तत्वं न संभवति इतीदं इदानीमुपपाद्यते—

क्षणभङ्गवादिनोऽयमभ्युपगमः—उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वः क्षणो निरुध्यत इति। न च एवमभ्युपगच्छता पूर्वोत्तरयोः क्षणयोः हेतु-

---

परमते धर्माद्यर्था प्रवृत्तिरुपपद्येत। न तु सोपपद्यते, येन तत्तच्छास्त्रोक्तं कर्म क्रियते भोगापवर्गोपयोगि स तदानीमेव नष्ट इति न तस्य भोगस्सम्भवति। अन्यकृतेन कर्मणा अन्यस्य भोगाभ्युपगमे तु अतिप्रसङ्गः। न च—कार्यकारणभावः अतिप्रसङ्गपरिहाराय कल्प्यते, यत्सन्तानान्तःपतितेन क्षणेन कर्म कृतं तदन्तःपतितस्योत्तरक्षणस्य फलं—इति; एवं मोक्षसाधनेष्वपि द्रष्टव्यम्—इति वाच्यम्। तथासति पितृकृताभ्यां स्वर्गापवर्गसाधनाभ्यां पुत्रस्यापि स्वर्गापवर्गौ स्याताम्, तत्सन्तानान्तःपातित्वाविशेषात्। एवं आध्यात्मिकसङ्घातः स्थिरं चेतनं विना नोपपद्यते।

नापि बाह्यो घटादिसङ्घातः स्थिरं चेतनं विना उपपद्यते। घटकृतभोगकालानवस्थायिनो घटार्थं प्रवृत्त्यनुपपत्तेः। न च चेतनप्रवृत्तिं विनैव घटादिसिद्धिः प्रमाणानुरोधिनी। अङ्कुरादिषु घटादिदृष्टान्तानुरोधादेव[हि] अस्ति कर्तेति कल्पनीयम् ॥ १९ ॥

अविद्यादीनां पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वमुपेत्य, सङ्घातापत्तिर्नसम्भवतीत्युक्तम्। इदानीं तु, क्षणिकानां कारणत्वमेव न सम्भवतीति प्रतिपाद्यते—उत्तरस्मिन् क्षण उत्पद्यमान इति। बौद्धानां मते क्षणपदेन घटादिरेव पदार्थो

फलभावः शक्यते संपादयितुम् । निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्य अभावग्रस्तत्वात् उत्तरक्षणहेतुत्वानुपपत्तेः । अथ भावभूतः परिनिष्पन्नावस्थः पूर्वक्षणः उत्तरक्षणस्य हेतुः-इत्यभिप्रायः, तथापि नोपपद्यते । भावभूतस्य पुनर्व्यापारकल्पनायां क्षणान्तरसंबन्धप्रसङ्गात् । अथ भाव एवास्य व्यापार इत्यभिप्रायः, तथापि नैवोपपद्यते । हेतुस्वभावानुपरक्तस्य फलस्य उत्पत्त्यसंभवात् । स्वभावोपरागाभ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभङ्गाभ्युपगमत्यागप्रसङ्गः । विनैव वा स्वभावोपरागेण हेतुफलभावमभ्युपगच्छतः सर्वत्रैव तत्प्राप्तेः अतिप्रसङ्गः ।

---

व्यवह्रियते, न तु तदतिरिक्तः कश्चित् क्षणो नाम कालोऽस्ति । उत्पत्त्यव्यवधानेन च पदार्थानां नाशः । 'क्षणिकः पदार्थः' इति व्यवहारस्तु भेदकल्पनया । निरुध्यते-नश्यति । निरुध्यमानस्य निरुद्धस्य वेति । उत्तरक्षणोत्पत्तिकाल एव यस्य अव्यवहितपूर्वक्षणस्य नाशः स निरुध्यमानः, पूर्वमेव नष्टो निरुद्धः । यथा च [1]पूर्वमेव नष्टस्य उत्तरपदार्थे न कारणत्वम्, एवं तत्कालं नश्यतोऽपि न कारणत्वमित्यर्थः ।

ननु—पदार्थानां क्षणिकत्वेऽपि उत्तरं प्रति पूर्वस्य कारणत्वे [2]नानुपपत्तिः । कार्याव्यवहितपूर्ववृत्तित्वं हि कारणत्वम्, तच्च कार्यकाले नश्यतोऽप्युपपद्यते—इति शङ्कते—अथेति । कार्यानुकूलव्यापाराविष्टानामेव कारणानां कार्यजनकत्वम्, तथा च [3]व्यापारोत्पत्तेः प्राक्, व्यापाराश्रयतया व्यापारोत्पत्त्यनन्तरमपि, कारणस्यावस्थानमपेक्षितम्, तत् क्षणिकत्वेऽनुपपन्नम्—इति परिहरति—तथापीति । ननु—उत्पत्तिव्यतिरेकेण कारणानां न व्यापारान्तरापेक्षेति न क्षणिकानां कारणत्वानुपपत्तिः—इत्याशङ्क्य, मृदादीनामुपादानकारणानां कार्यकालेऽप्यनुगमदर्शनेन, तेषां यावत्कार्यमवस्थानस्य कार्यस्थित्यर्थमपेक्षणाच्च, क्षणिकवादे उपादानोपादेयभावोऽनुपपन्न एव—इति परिहरति—अथ भाव एवेत्यादिना । सर्वत्रैव

---

1. आ. चिरं पूर्वमेव

2. आ. न काचिदनुपपत्तिः

3. व्यापारोत्पत्तेः प्रागिति सिद्धस्वरूपस्यैव हि व्यापारो लोके दृष्ट, इति भावः । मु. कार्योत्पत्तेः प्राक्

अपि च, उत्पादनिरोधौ नाम वस्तुनः स्वरूपमेव वा स्यातां अवस्थान्तरं वा वस्त्वन्तरमेव वा ? सर्वथापि नोपपद्यते—यदि तावत् वस्तुनः स्वरूपमेव उत्पादनिरोधौ स्यातां, ततः वस्तुशब्दः उत्पादनिरोधशब्दौ च पर्यायाः प्राप्नुयुः। अथ अस्ति कश्चिद्विशेष इति मन्येत-उत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्यन्ताख्ये अवस्थे अभिलप्येते–इति, एवमपि आद्यन्तमध्यक्षणत्रयसंबन्धित्वाद्वस्तुनः क्षणिकत्वाभ्युपगमहानिः। अथ अत्यन्तव्यतिरिक्तावेव उत्पादनिरोधौ वस्तुनः स्यातां अश्वमहिषवत्, ततः, वस्तु उत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः। यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्याताम्, एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वप्रसङ्ग एव। तस्मादपि असङ्गतं सौगतं मतम् ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

क्षणभङ्गवादे पूर्वक्षणो निरोधग्रस्तत्वात् न उत्तरस्य क्षणस्य हेतुर्भवति इत्युक्तम्। अथ असत्येव हेतौ फलोत्पत्तिं ब्रूयात्, ततः प्रतिज्ञोपरोधः स्यात्–'चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्ते' इतीयं प्रतिज्ञा हीयेत। निर्हेतुकायां चोत्पत्तौ अप्रतिबन्धात् सर्वं सर्वत्र उत्पद्येत। अथ उत्तरक्षणोत्पत्तिर्यावत् तावदवतिष्ठते पूर्वक्षणः इति ब्रूयात्, ततो यौगपद्यं हेतुफलयोः स्यात्। तथापि प्रतिज्ञोपरोध एव स्यात्–'क्षणिकाः सर्वे संस्काराः' इतीयं प्रतिज्ञा उपरुध्येत ॥ २१ ॥

---

तत्प्राप्तेरिति। तथा च, दण्डादिकं निमित्तकारणं मृदादिकमुपादानकारणमिति व्यवस्थासिद्धये मृदादीनां कार्यानुरागोऽपेक्षणीय इति भावः। वस्त्वन्तरमेवेति। वस्तुनाऽसम्बद्धमिति यावत्। अवस्थान्तरमेवेति द्वितीयं कल्पं अनुवदति—**अथास्ति कश्चिदिति। एवमप्याद्यन्तेति।** आद्यन्तक्षणवर्तिन्योरवस्थयोः आश्रयं विना अवस्थानायोगादिति भावः ॥ २० ॥

पूर्वसूत्रे, क्षणिकस्य पूर्ववर्तितामात्रेण हेतुत्वोपपत्तावपि उपादानता नोपपद्यत इत्युक्तम्। इदानीं, हेतोः कार्यकालानवस्थायित्वे तदीयप्रतिज्ञाविरोधमापादयति—**क्षणभङ्गवाद इति। असत्येव हेतौ।** कार्यकाले इति शेषः। चतु-

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

अपि च, वैनाशिकाः कल्पयन्ति बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकं च—इति । तदपि च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधौ आकाशं

---

विधानिति । [1]अधिपतिसहकारिसमनन्तरप्रत्ययालम्बनान् । चित्तं ज्ञानं, चैत्ताः सुखादयः । अधिपतिः इन्द्रियं, तद्धि चक्षुरादिरूपं उत्पन्नस्य ज्ञानस्य रूपादिविषयतां नियच्छति, नियामकश्च लोके अधिपतिरित्युच्यते । सहकारी आलोकः । समनन्तरप्रत्ययः पूर्वज्ञानम् । बौद्धमते हि क्षणिकज्ञानसन्ततौ पूर्वज्ञानं उत्तरज्ञानस्य कारणं, तदेव च मन इत्युच्यते । आलम्बनं घटादिः । एतान् हेतून् प्रतीत्य-प्राप्य । चक्षुरादिजन्यं इष्टवस्तुगोचरं ज्ञानमेव सुखं अनिष्टगोचरं दुःखमिति तन्मतम् । अतः सुखादीनां चैत्तानामपि चतुर्विधहेतुजन्यत्वम् ।

एतस्याः प्रतिज्ञायाः, हेतोः कार्यकालानुवृत्त्यभावे को विरोधः-इति चेत्,

उच्यते—आलम्बनस्य हेतोः ज्ञानकालेऽपि वर्तनमपेक्षितम् । घटो हि गृह्यमाणः ज्ञानेन वर्तमानतया गृह्यत इति ज्ञानसमानकालत्वं तस्यायाति, हेतुतया च ज्ञानपूर्ववर्तित्वम् । न चैतत् क्षणभङ्गवादे उपपद्यते ।

यौगपद्यमन्यथेत्यंशं व्याचष्टे—**निर्हेतुकायांचोत्पत्तावित्यादिना** । **सर्वत्रेति** । सर्वदेत्यपि द्रष्टव्यम् । **ततो यौगपद्यमिति** । तथा च न क्षणिकत्वम् । इष्टापत्तौ प्रतिज्ञाविरोधमेव प्रकारान्तरेणाह—**तथापीति** । **संस्कारा इति** । तन्मते पूर्वक्षण एव हेतुभूतः, संस्कारः वासना—इति च व्यवह्रियते, कार्यं तु तद्विषयतया कर्मव्युत्पत्त्या संस्कारः । तथा च कार्यकारणात्मकं सर्वं भावरूपं क्षणिकमिति प्रतिज्ञार्थः ॥ २१ ॥

त्रयादन्यदित्यत्र निर्दिष्टं त्रयं किं इत्यपेक्षायामाह—**तदपि चेति** । **बुद्धि-**

---

1. मु. अधिपतिसहकारिसमनन्तरालम्बनप्रत्ययान्—इति पाठः । अत्र पाठे प्रत्ययशब्दः अधिपत्यादिषु प्रत्येकं सम्बद्ध्यते । तथैव बौद्धानां परिभाषा । परन्तु अस्मिन् ग्रन्थे समनन्तरेत्यत्रैव प्रत्ययशब्दसम्बन्ध उत्तरत्र अनुपदं दृश्यते । अत्र प्रत्ययशब्दार्थः ज्ञानम् । अधिपत्यादिषु सम्बन्धे प्रत्ययशब्दार्थः कारणम् । अधिपतिरूपं कारणं—इत्यादिरर्थः ।

च—इत्याचक्षते । त्रयमपि चैतत् अवस्तु अभावमात्रं निरुपाख्यमिति मन्यन्ते । बुद्धिपूर्वकः किल विनाशो भावानां प्रतिसंख्यानिरोधो नाम भाष्यते, तद्विपरीतः अप्रतिसंख्यानिरोधः, आवरणाभावमात्रमाकाशम्-इति ।

तेषां आकाशं परस्तात् प्रत्याख्यास्यति । निरोधद्वयं इदानीं प्रत्याचष्टे । प्रतिसंख्याऽप्रतिसंख्यानिरोधयोः अप्राप्तिः-असंभव इत्यर्थः । कस्मात् ? अविच्छेदात् । एतौ हि प्रतिसंख्याऽप्रतिसंख्यानिरोधौ संतान-गोचरौ वा स्यातां भावगोचरौ वा । न तावत् संतानगोचरौ संभवतः । सर्वेष्वपि संतानेषु संतानिनां अविच्छिन्नेन हेतुफलभावेन संतानविच्छेद-स्यासंभवात् । नापि भावगोचरौ संभवतः । न हि भावानां निरन्वयो

---

पूर्वकः किलेति । घटं नाशयामीति बुद्ध्या दण्डाद्युद्यम्य क्रियमाणो घटनाशः प्रतिसङ्ख्यानिरोधः । सङ्ख्या बुद्धिः, प्रतिकूला सा प्रतिसङ्ख्या, तत्पूर्वको निरोधः-इति व्युत्पत्तेः । अयं सर्वलोकप्रसिद्धः स्थूलो विनाशः इति तेषां परिभाषा । विपरीत इति । प्रतिक्षणं घटादीनां युक्त्या साध्यमानः अकुशलैरवगन्तुमशक्यः सूक्ष्मो विनाशः अप्रतिसङ्ख्यानिरोधः । आवरणाभावेति । आवरणं कुड्यादि । परस्तात्—'आकाशे चाविशेषात्' इति सूत्रे ।

निरोधद्वयमिदानीं प्रत्याचष्ट इति । यद्यपि प्रतिसङ्ख्यानिरोधः सिद्धान्तेऽप्युपगत एव, तथाप्यस्ति विशेषः—अवस्थानां विनाशेऽपि अवस्था-वन्मृदादिकमनुस्यूतमिति न निरन्वयो विनाशः सिद्धान्ते, बौद्धस्य तु न किञ्चिदप्यनुवर्तते, अपि तु निरन्वय एव घटादेर्नाशः - इति । अविच्छिन्नेन हेतुफलभावेनेति । ननु दण्डादिप्रहारे सति चरमसन्तानिनाशात् पुनर्घटाजननेन सन्तानविच्छेदः सम्भवत्येवेति चेत्, न-तावतापि अवस्थान्तरविशिष्टतया मृदोऽनु-वर्तनात् निरन्वयनाशायोगात् ।

नापि भावगोचरौ सम्भवत इति । अप्रतिसङ्ख्यानिरोधो घटादीनां वक्तुं न शक्यते । क्षणिकत्वकल्पनायाः प्रमाणविरुद्धत्वात्, पक्षमासाद्यनन्तरमपि

निरुपाख्यो विनाशः संभवति, सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेन

---

'स एवायं घटः' इतिप्रत्यभिज्ञाबलेन घटस्य स्थायित्वावगमात् । न च परिमाण-भेदेन द्रव्यभेदात् इयं प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । न हि वैशेषिकादिवत् परिमाणभेदेन द्रव्यभेदः सिद्धान्ते उपेयते । अपितु, अग्निसंयोगेन स्थित एव धर्मिणि यथा पूर्वरूपनाशोत्तररूपोत्पत्ती तथा अवयवोपचयापचयाभ्यां शरीरादौ धर्मिणि स्थित एव स्थौल्यकार्श्यावस्थयोरुत्पत्तिः-इति । तथा च अबाधितप्रत्यभि-ज्ञाविरोधात् पदार्थानां क्षणिकत्वं नोपगन्तुं युक्तम् ।

न च 'अयं घटः' इत्यनेन भूतभविष्यत्कालव्यावृत्तेरपि ग्रहणात् क्षणिक-त्वमपि प्रमाणायातमिति वाच्यम् । 'अयं घटः' इति हि वर्तमानत्वं प्रतीतिक्षण-वृत्तित्वरूपं गृह्यते, न तु कालान्तरावृत्तित्वम् । न च - भूतभविष्यद्व्यावृत्तत्वमेव वर्तमानत्वम्, अन्यापोहरूपत्वात् सामान्यस्य - इति वाच्यम् । भावभूततया प्रतीय-मानानां अभावभूतान्यापोहात्मत्वानुपपत्तेः । अपि च, एवंवदता भूतत्वादिकमपि वर्तमानत्वादिव्यावृत्तिरूपमेव वक्तव्यम्, तथा च अन्योन्याश्रयः । ननु—एवमपि-भावरूपवर्तमानत्वग्रहेऽपि तस्य विशेषणतया स्वविरुद्धधर्मव्यावर्तकत्वस्वभावत्वेन भूतभविष्यत्कालसम्बन्धव्यावर्तकता भविष्यति - इति चेत् - न - यथा हि 'घटवत् भूतलम्' इत्यत्र घटवत्ता स्वावच्छेदेनैव घटाभाववत्तां व्यावर्तयति, चित्रघटे च नीलोऽयमितिप्रतीतिरपि स्वावच्छेदेनैव रूपान्तरसम्बन्धव्यावर्तिका, एवं वर्तमानत्व-प्रतीतेरपि स्वविषयावच्छेदेनैव कालान्तरसम्बन्धव्यावर्तकतया स्वावच्छेदं विहाय घटे भूतत्वाद्यव्यावर्तकत्वात् । तथा च प्रत्यभिज्ञानुरोधेन स्थिरे एव क्रमेण भूत-वर्तमानभविष्यत्कालसम्बन्धे न काचिदनुपपत्तिरिति ।

प्रतिसङ्ख्यानिरोधस्तु घटादिष्वनित्येषु उपेयत एव । तथापि न असौ निरन्वयः । [1]अवस्थानन्वयेऽपि अवस्थावतोऽनुवृत्तिदर्शनात् । निरुपाख्यत्वं—निस्स्वरूपत्वम् । तार्किकमते अभावः अभावत्वेनैव सस्वरूपः पदार्थविशेषः । सिद्धान्ते तु घटस्य नाशः क्षणिकःक्रियाविशेषो जन्मादिषड्भावविकारान्तर्गतः, कपालाद्यवस्थैव वा । बौद्धमते तु शशशृङ्गवत् निस्स्वरूपः, स तु न सम्भवति ।

---

1. आ. अवस्थानां प्रलयेऽपि

अन्वय्यविच्छेददर्शनात् । अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेन अन्यत्रापि तदनुमानात् । तस्मात् परपरिकल्पितस्य निरोधद्वयस्य अनुपपत्तिः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

योऽयमविद्या(दि)निरोधः प्रतिसंख्यानिरोधान्तःपाती परपरिकल्पितः, स सम्यग्ज्ञानाद्वा सपरिकरात् स्यात् स्वयमेव वा ? पूर्वस्मिन् (वि)कल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः । उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः । एवं उभयथापि दोषप्रसङ्गात् असमञ्जसमिदं दर्शनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तेषामेवाभिप्रेतं-निरोधद्वयमाकाशं च निरुपाख्यमिति, तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतम् । आकाशस्य इदानीं

---

घटो नश्यतीत्यादिप्रतीतौ कालादिसम्बन्धित्वेनोल्लिख्यमानस्य निस्स्वरूपत्वानुपपत्तेः । अस्पष्टप्रत्यभिज्ञानास्वपीति । यत्र अपामग्निसूर्याभ्यां शोषणं तत्र किमपि नावशिष्यत इति भावः । तदनुमानादिति । अग्निशुष्कं तोयं धूमभावेन सूर्यशुष्कं तोयं तत्किरणेषु च विद्यमानं मेघभावेन पुनः परिणमत इति कल्प्यत इति भावः ॥ २२ ॥

अविद्यानिरोध इति । घटमहंजानामीत्येवमाकारं सविकल्पकं ज्ञानमेव तन्मते अविद्या । तन्निवृत्तौ निर्विकल्पकालयविज्ञानसन्ततिपरिशेष एव मोक्षः । 'स्वभावतो निर्विकल्पकमेव आलयविज्ञानं, सविकल्पकता तु वासनाद्युपाधिसम्पन्ना'इत्येवमाकारं विचारपूर्वकमनुसन्धानं परिकरः । तत्परिपाके प्राथमिकविशुद्धालयविज्ञानोत्पत्तिः सम्यग्ज्ञानम् । पूर्वस्मिन् कल्प इति । यद्यपि अप्रतिसङ्ख्यानिरोध एव निर्हेतुकः परेणोपेयते, प्रतिसङ्ख्यानिरोधस्तु तत्तत्कारणविशेषायत्त एव, तथापि-मुमुक्षोस्साधकस्य क्षणिकतया मोक्षकाले अवस्थानासम्भवेन साधने प्रवृत्त्ययोगात् परेण अविद्यायाः प्रतिसङ्ख्यानिरोधोऽपि निर्हेतुक एवोपेयः इत्यापाद्य इदं दूषणं द्रष्टव्यम् ॥ २३ ॥

आकाशस्येदानीमिति । निरुपाख्यत्वमित्यनुषङ्गः ।

निराक्रियते । आकाशे च अयुक्तो निरुपाख्यत्वाभ्युपगमः । प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात् । आगमप्रामाण्यात् तावत् 'आत्मन आकाशः संभूतः' (तै.उ.२.१) इत्यादिश्रुतिभ्य आकाशस्य वस्तुत्वप्रसिद्धिः । विप्रतिपन्नान् प्रति तु शब्दगुणानुमेयत्वं वक्तव्यं, गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात् ।

अपि च—आवरणाभावमात्रमाकाशमिच्छतां, एकस्मिन् सुपर्णे पतति आवरणस्य विद्यमानत्वात् सुपर्णान्तरस्योत्पित्सतः अनवकाशत्वप्रसङ्गः । यत्र आवरणाभावः तत्र पतिष्यतीति चेत्, येन आवरणाभावो विशेष्यते तत् तर्हि वस्तुभूतमेव आकाशं स्यात्, न आवरणाभावमात्रम् ।

---

विप्रतिपन्नान्प्रतीति । गुणत्वजात्याश्रयतया शब्दो गुणः-इति तार्किकपरिभाषा । गुणश्च साश्रयः । न च तस्य पृथिव्यादिराश्रयः । गन्धादिसामानाधिकरण्याप्रतीतेः । नाप्यात्मा । ज्ञानादिवत् मनोग्राह्यत्वापत्तेः । दिक्कालमनसां तु न विशेषगुणाश्रयत्वम् । अतः तदाश्रयतया अतिरिक्तमेव किञ्चिद्द्रव्यं सिध्यतीति भावः ।

[1]तार्किकपरिभाषामनङ्गीकुर्वाणं प्रत्याह—अपि चेति । येनावरणाभावो विशेष्यत इति । 'इहावरणम्' 'इह न' इति आवरणतदभावाभ्यामतिरिक्त एव देशविशेषः प्रतीयते, तस्य कथमावरणाभावरूपता भवेत् ।

ननु—अयं आवरणाभावाधिकरणतया प्रतीयमानो देशविशेषः चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतिकतया प्रत्यक्षः । आकाशश्चाप्रत्यक्षः । अतः कथं अयं देशविशेष आकाशः स्यात् । अपि तु आलोक एवायं देशविशेषः । तस्य प्रत्यक्षत्वोपपत्तेः । न च 'अत्र आलोकः' इति तदतिरिक्ततयैव प्रतीयमानस्य कथं तद्रूपता । [2]'अत्र आकाशः' इति ततोऽपि व्यतिरिक्ततया प्रतीयमानस्य कथमाकाशरूपता । यदि तु '[3]अत्राकाशः' इति प्रतीतिः आकाशरूपदेशविशेषस्य आकाशाधिकरणत्वावगाहिनी भेदकल्पनया, तर्हि अत्रालोक इति प्रतीतिरपि

---

1. आ. तार्किकमर्यादामप्यन
2. मु. 'अत्राकाशः' 'अत्रावकाशः'
3. मु. अत्रावकाशः

अपि च–आवरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत। सौगते हि समये 'पृथिवी भगवः किंसन्निश्रया' इत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते 'वायुः किंसन्निश्रयः' इत्यस्य प्रश्नस्य प्रतिवचनं भवति 'वायुराकाशसन्निश्रयः' इति। तत् आकाशस्यावस्तुत्वे न समञ्जसं स्यात्। तस्मादपि अयुक्तमाकाशस्यावस्तुत्वम्।

अपि च-निरोधद्वयमाकाशं च त्रयमप्येतत् निरुपाख्यमवस्तु नित्यं चेति विप्रतिषिद्धम्। न हि अवस्तुनो नित्यत्वमनित्यत्वं वा संभवति,

---

आलोकरूपदेशविशेषविषया भेदकल्पनया भविष्यति। तथा च 'इहावरणाभावः' इति प्रतीतौ अधिकरणतया भासमानो देशविशेष आलोकरूप एवेति कथं अनया प्रतीत्या अतिरिक्ताकाशसिद्धिः—इति चेत्,

उच्यते—यथा हि कालः स्वातन्त्र्येणाप्रत्यक्षोऽपि 'इदानीं घटः' इत्यादिषु सर्वासु प्रतीतिषु तत्तत्पदार्थसम्बन्धितया विषयः, एवं आकाशरूपदेशोऽपि सर्वासु प्रतीतिषु 'इह पक्षी चलति' इत्येवं तत्तत्पदार्थपृष्ठलग्नतया विषयः इत्युपगमात् न तत्प्रत्यक्षानुपपत्तिः। 'इह पृथिवी, इह वायुः, इहालोकः' इति प्रतीत्या आलोकाद्यतिरेकोऽपि तस्य एषितव्यः। तथाप्रतीतेः [1]भेदकल्पनयोपपादनस्य क्लिष्टत्वात्। इहावकाश इति अवकाशपदार्थस्तु आवरणाभाव एव। अत एव, यत्र धान्यादिराशिरस्ति तत्र नावकाशप्रत्ययः। आकाशरूपदेशविशेषप्रत्ययस्तु तत्रापि 'इह धान्यादिराशिरस्ति' इति भवत्येव। इहाकाश इति प्रतीतिस्तु नीलकटाहाकारे लोकानामाकाशत्वनिरूढेः तद्विषया उपपद्यते। अतः 'इह देशे पक्षी, इहालोकः, इहान्धकारः' इति प्रतीतिसिद्धो देशविशेष एव आकाशः। तस्यैव सूर्योदयाद्युपाधिभिः प्राक्त्वादिकल्पनमिति न तदतिरिक्ता दिक् अङ्गीकर्तव्या। अतः आकाशस्य बौद्धाभिमतासत्त्वं प्रतीतिसिद्धदेशविशेषात्मकभावरूपताविरुद्धम्।

**आकाशसन्निश्रय इति।** आकाशः सन्निश्रयः-आधारः यस्य स तथाभूतः। **अवस्तुत्वे न समञ्जसमिति।** अवस्तुनः आधारत्वानुपपत्तेरिति भावः॥ २४॥

---

1. मु. भेदकल्पनयोपपादितस्य

वस्त्वाश्रयत्वात् धर्मधर्मिव्यवहारस्य। धर्मधर्मिभावे हि घटादिवत् वस्तुत्वमेव स्यात्, न निरुपाख्यत्वम् ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

अपि च-वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन् उपलब्धुरपि क्षणिकतामभ्युपेयात्। न च सा संभवति। अनुस्मृतेः। अनुभवं उपलब्धिं अनु उत्पद्यमानं स्मरणमेव अनुस्मृतिः। सा च उपलब्ध्येककर्तृका सती संभवति। पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात्। कथं हि 'अहमदोऽद्राक्षं इदं पश्यामि' इति च पूर्वोत्तरदर्शिन्येकस्मिन् असति प्रत्ययः स्यात्।

अपि च-दर्शनस्मरणयोः कर्तरि एकस्मिन् प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धः 'अहमदोऽद्राक्षं इदं पश्यामि' इति। यदि हि तयोः भिन्नः कर्ता स्यात्, ततः ('अहं स्मरामि अद्राक्षीदन्यः') ['अहमदः' 'अद्राक्षीत्'] इति प्रतीयात्। न त्वेवं प्रत्येति कश्चित्। यत्र एवं प्रत्ययः तत्र दर्शनस्मरणयोः भिन्नमेव कर्तारं सर्वलोकोऽवगच्छति—स्मराम्यहं असावदोऽद्राक्षीत्—इति। इह तु 'अहमदोऽद्राक्षं' इति दर्शनस्मरणयोः

---

स्मृत्यनुभवयोः सामानाधिकरण्यमुपेयम्। वैयधिकरण्ये अतिप्रसङ्गात्। न च-[1]पूर्वानुभवजन्यसन्तानिप्रवाहान्तर्गते एव स्मृतिक्षणः, नान्यसन्ततौ, इति नातिप्रसङ्गः-इति वाच्यम्। तथासति पुत्रगतविज्ञानप्रवाहस्यापि पितृगतालयविज्ञानजन्यसन्तानिप्रवाहपतितत्वात् पित्रानुभूतं पुत्रोऽपि स्मरेत्। अतः स्मृत्यनुभवयोः सामानाधिकरण्योपपत्तये अनुभवितुः स्थिरत्वमास्थेयम्-इत्यभिप्रायेण सूत्रं योजयति अनुभवं उपलब्धिं अन्विति। कथं ह्यहमिति। अनेन-पूर्वदर्शनस्य वर्तमानदर्शनस्य च कर्तुः एकत्वेनप्रत्यभिज्ञानं अनुस्मृतिः-इति व्याख्यातम्। तथा च प्रत्यभिज्ञासिद्धं आत्मनः स्थैर्यमिति भावः।

पूर्वोत्तरदर्शनयोः कर्तुः ऐक्यप्रत्यभिज्ञानात् स्थैर्यमुक्त्वा, पूर्वदर्शनस्येदानीन्तनस्मरणस्यच कर्तुः ऐक्यं प्रत्यभिज्ञायत इत्याह—अपि चेति। अदः-मया स्मर्यमाणम्। ततः अहमदः अद्राक्षीदिति।

---

1. आ. पूर्वानुभवजन्यसन्तानिप्रवाहे एव

वैनाशिकोऽपि आत्मानमेवैकं कर्तारमवगच्छति । न नाहमिति आत्मनो दर्शनं निर्वृत्तं निह्नुते, यथा अग्निरनुष्णः अप्रकाशः इति वा । तत्रैवं सति एकस्य दर्शनस्मरणक्षणद्वयसंबन्धे क्षणिकत्वाभ्युपगमहानिरपरिहार्या वैनाशिकस्य स्यात् । तथा अनन्तरामनन्तरां आत्मन एव प्रतिपत्तिं प्रत्यभिजानन् एककर्तृकां ओत्तमोच्छ्वासात्, अतीताश्च प्रतिपत्तीराजन्मन आत्मैककर्तृकाः प्रतिसंदधानः, कथं क्षणभङ्गवादी वैनाशिको नापत्रपेत ।

स यदि ब्रूयात्—सादृश्यादेतत् संपत्स्यते—इति । तं प्रति ब्रूयात् । तेनेदंसदृशमिति द्वयायत्तत्वात् सादृश्यस्य, क्षणभङ्गवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्याभावात्, सादृश्यनिमित्तंप्रतिसंधानमिति मिथ्याप्रलाप एव स्यात् । स्याच्चेत् पूर्वोत्तरयोः क्षणयोः सादृश्यस्य ग्रहीता एकः, तथासति एकस्य क्षणद्वयावस्थानात् क्षणिकत्वप्रतिज्ञा पीड्येत । तेनेदंसदृशमिति

---

[1] 'अहं स्मरामि' 'सोऽद्राक्षीत् इति अध्याहारेण योजनीयम् । आ उत्तमोच्छ्वासात्-चरमोच्छ्वासमभिव्याप्य ।

तं प्रति ब्रूयादिति । किं सादृश्यं वस्तुतो विद्यमानं दोषं आसाद्य सएवायमिति प्रत्यभिज्ञा भ्रमरूपा, उत सादृश्यविषयैवेयं प्रत्यभिज्ञा । नाद्यः—बाधकाभावेन भ्रमत्वकल्पनानुपपत्तेः । द्वितीये तु, सएवायमित्युल्लेखोऽनुपपन्नः-इति दूषणे वक्ष्यमाणे सत्येव दूषणान्तरमाह—तेनेदं सदृशमिति द्वयायत्तत्वादिति । सादृश्यविषयत्वेऽपि, किं [2]धर्मिप्रतियोगिरूपितं तत् भासते, उत केवलमेव । नाद्यः । तथासति प्राक् प्रतियोगिज्ञानं यस्य वृत्तं तस्यैव द्वितीयक्षणे तद्रूषितसादृश्यप्रत्यय इति क्षणिकात्मत्वभङ्गः-इत्युक्त्वा द्वितीयं शङ्कते—तेनेदं

---

1. अहं स्मरामि अद्राक्षीदन्यः—इति पाठो भाष्ये बहुत्रदृश्यते । तत्र पाठे विवक्षितार्थः स्पष्टः । 'अहमदः' 'अद्राक्षीत्' इत्येतत्पाठं आश्रित्य इयं व्याख्या प्रवर्तते । अदःपदसमभिव्याहारात् स्मरामीत्यध्याहारः, अद्राक्षीदिति प्रथमपुरुषान्तपदसमभिव्याहारात् सइत्यध्याहारश्च सूचितः-इत्याशयेन व्याचष्टे—**अहंस्मरामीत्यादिना**

2. मु. धर्मिप्रतियोगिनिरूपितं

प्रत्ययान्तरमेवेदं न पूर्वोत्तरक्षणद्वयग्रहणनिमित्तं इति चेत्, न–'तेन' 'इदं' इति भिन्नपदार्थोपादानात्। प्रत्ययान्तरमेव चेत् सादृश्यविषयं स्यात्, तेनेदंसदृशमिति वाक्यप्रयोगः अनर्थकः स्यात्। सादृश्यमित्येव प्रयोगः प्राप्नुयात्।

यदा हि लोकसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते, तदा स्वपक्ष-सिद्धिः परपक्षदोषो वा उभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथार्थत्वेन न बुद्धिसंतानमारोहति। 'एवमेव एषोऽर्थः' इति निश्चितं यत् तदेव वक्तव्यम्। ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत्। न चायं सादृश्यात् संव्यवहारो युक्तः। तद्भावावगमात्, तत्सदृश-

---

सदृशमिति। प्रत्ययान्तरं-प्रतियोग्याद्यनुल्लेखि सादृश्यमात्रविषयम्। अयं पक्षो धर्मिप्रतियोग्युल्लेखविरोधी इति दूषयति—[1]तेनेदमितीति।

पदार्थत्रयाकारं एकमेवेदं ज्ञानम्, आकारभूतं च पदार्थत्रयं आन्तरमेव, न बाह्यमस्ति। त्रितयाकारं च तत् [2]विलक्षणकार्यैकोन्नेयशक्तिकात् पूर्वज्ञानादेव भवति, न तदर्थं प्रतियोगिज्ञानवान् एकः स्थिरो द्रष्टा अपेक्षितः—इति विज्ञानवादिनश्शङ्कां मनसि निधाय परिहरति—यदा हीति। लोकसिद्धः पदार्थः-बाह्यः। स्वपक्ष-सिद्ध्यादिकं[3] हि – स्वयं, अन्यःप्रतिपक्षी, हेतुः, पक्षः – इत्यनेकबाह्यपदार्थ-साध्यम्। तत् बाह्यपदार्थमनभ्युपगम्य विज्ञानमात्राभ्युपगमे नोपपद्यत इत्यर्थः। ननु-बाह्यपदार्थमुपेत्य प्रतियोग्यादिविशिष्टसादृश्यप्रत्ययः असत्यपि स्थिरात्मनि उप-पादयितुं शक्य एव। एकसन्ततिपतितप्रतियोगिज्ञानात् सप्रतियोगिकपदार्थविषया उत्तरोत्तरप्रतीतिः इत्युपगमात्-इत्याशङ्क्याह—एवमेवैषोऽर्थ इति। सिद्धे हि प्रमाणेन क्षणिकविज्ञानमेवात्मेतिपक्षे सर्वेयं क्लिष्टगतिः सम्पादनीया, [4]न च क्षणिक-स्वपक्षे किञ्चित्प्रमाणमस्तीति भावः। प्रत्यभिज्ञायाः सादृश्यविषयत्वमुपेत्य इदमुक्तम्। सा तु पूर्वोत्तरकालावच्छेदेनैकत्वावगाहिनी इत्याह—न चेति। सादृश्यादिति।

---

1. मु. तेनेदंसदृशमितीति
2. विलक्षणेति विलक्षणकार्यं उक्तज्ञानमेव।
3. परपक्षदूषणं आदिशब्दार्थः।
4. आ. न तु

भावानवगमाच्च । भवेदपि कदाचित् बाह्यवस्तुनि विप्रलम्भसंभवात् 'तदेवेदं स्यात् तत्सदृशं वा' इति सन्देहः । उपलब्धरि तु सन्देहोऽपि न कदाचित् भवति 'स एवाहं स्यां तत्सदृशो वा' इति । 'य एवाहं पूर्वेद्युरद्राक्षं स एवाहं अद्य स्मरामि' इति निश्चिततद्भावोपलम्भात् । तस्मादपि अनुपपन्नो वैनाशिकसमयः ॥ २५ ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

इतश्च अनुपपन्नो वैनाशिकसमयः, यतः स्थिरमनुयायिकारणं अनभ्युपगच्छतां 'अभावाद्भावोत्पत्तिः' इत्येतदापद्यते । दर्शयन्ति च अभावाद्भावोत्पत्तिम्—'नानुपमृद्य प्रादुर्भावात्' इति । विनष्टाद्धि किल बीजात् अङ्कुर उत्पद्यते, तथा विनष्टात् क्षीरात् दधि, मृत्पिण्डाच्च घटः । कूटस्थाच्चेत् कारणात् कार्यमुत्पद्येत, अविशेषात् सर्वं सर्वत उत्पद्येत । तस्मात् अभावग्रस्तेभ्यो बीजादिभ्यः अङ्कुरादीनामुत्पद्यमानत्वात् अभावाद्भावोत्पत्तिरिति मन्यन्ते ।

---

विषयतया निमित्तत्वं पञ्चम्यर्थः । ननु—'स एवायं केशः' इत्यादिप्रत्यभिज्ञावत्[1] भ्रमरूपेयं प्रत्यभिज्ञा-इत्याशङ्क्य, "तत्र बाधात् भ्रमत्वमुपेयते, एवमस्या अपि भ्रमत्वे 'नाहं सः' इति निश्चयरूपेण बाधेन भवितव्यम्, न च सोऽस्ति, यत्र हि 'स एवाहं न वा' इति संशयोऽपि नास्ति, तत्र किमु वक्तव्यं निश्चयरूपो बाधो नास्तीति" इति मनसि निधायाह—भवेदपि कदाचिदिति ॥ २५ ॥

क्षणिकानां कार्यकालवृत्तित्वाभावेन उपादानत्वे निरस्ते, अभाव एव उपादानमस्त्विति शङ्कायां, इदं सूत्रम् । नानुपमृद्येति । नञ्द्वयेन उपमृद्यप्रादुर्भावादित्यर्थलाभं अभिप्रेत्य उदाहरति—विनष्टाद्धीति । अविशेषादिति । एकस्य मृत्पिण्डस्य [2]कालक्रमेण जननीया यावन्तो घटाः ते [3]सर्वेऽपि युगपदेव भवेयुः ।

---

1. प्रत्यभिज्ञावदिति प्रत्यभिज्ञा चेयं मुण्डनात्पूर्वोत्तरकालीनैक्यविषयिणी ।
2. आ. कालत्रयेण
3. मु. 'अपि' नास्ति

**तत्रेदमुच्यते–नासतोऽदृष्टत्वात् इति। न अभावात् भाव उत्पद्यते। यदि अभावात् भाव उत्पद्येत अभावत्वाविशेषात् कारणविशेषाभ्युपगमोऽनर्थकः स्यात्। न हि बीजादीनामुपमृदितानां योऽभावः तस्याभावस्य शशविषाणादीनां च निःस्वभावत्वाविशेषात् अभावत्वे कश्चिद्विशेषोऽस्ति, येन 'बीजादेवाङ्कुरो जायते क्षीरादेव दधि' इत्येवंजातीयकः कारणविशेषाभ्युपगमः अर्थवान् स्यात्। निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्। न चैवं दृश्यते। यदि पुनः अभावस्यापि विशेषोऽभ्युपगम्येत उत्पलादीनामिव नीलत्वादिः, ततो विशेषवत्त्वादेवाभावस्य भावत्वं उत्पलादिवत् प्रसज्येत। नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वादेव, शशविषाणादिवत्। अभावाच्च भावोत्पत्तौ अभावान्वितमेव सर्वं कार्यं स्यात्। न चैवं दृश्यते। सर्वस्य च वस्तुनः स्वेन स्वेन रूपेण भावात्मनैव उपलभ्यमानत्वात्। नच मृदन्विताः शरावादयो भावाः तन्त्वादिविकाराः केनचिदभ्युपगम्यन्ते। मृद्विकारानेव तु मृदन्वितान् भावान् लोकः प्रत्येति।**

---

एवं कारणान्तरेष्वपि द्रष्टव्यम्। एतादृशतर्कोपस्कृतात् 'यत् सत् तत् क्षणिकं' इति अनुमानात् पदार्थानां क्षणिकत्वसिद्धौ अभावस्यैवोपादानता न्याय्येति भावः।

**कारणविशेषाभ्युपगम इति।** अनभ्युपगम्यमाने तु, घटार्थिनां मृत्पिण्डादिषु प्रवृत्तिर्व्याहन्येत-इति भावः। न च स्थिरत्वपक्षे युगपदेवसर्वकार्योत्पत्तिरित्यापादनं सम्भवति। कार्यविशेषस्य सहकारिविशेषायत्तत्वेन तेषां क्रमिकत्वात् कार्यक्रमोपपत्तेः। 'यत् सत् तत् क्षणिकम्' इत्यनुमानं तु, 'स एवायं मृत्पिण्डः' इत्यादिप्रत्यभिज्ञाबाधितमिति द्रष्टव्यम्। **स्वेन स्वेन रूपेणेति।** घटो हि मृद्रूपेण [1]पारमार्थिकस्वरूपेण [2]पटश्च तन्तुस्वरूपेण अन्वित उपलभ्यत इत्यर्थः। अन्यान्वितस्यान्योपादानकत्वे अतिप्रसङ्गमभिप्रेत्याह—**न चेति।**

---

1. मृत् कथं घटस्य स्वरूपमिति, अत आह—**पारमार्थिकेति।**
2. आ. पटस्तु

यत्तूक्तं — स्वरूपोपमर्दमन्तरेण कस्यचित् कूटस्थस्य वस्तुनः कारणत्वानुपपत्तेः अभावाद्भावोत्पत्तिर्भवितुमर्हतीति । तत् दुरुक्तम्— स्थिरस्वभावानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां रुचकादिकारणभावदर्शनात् । येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते तेष्वपि न असावुपमृद्यमाना पूर्वावस्था उत्तरावस्थायाः कारणमभ्युपगम्यते, अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवानां अङ्कुरादिकारणभावाभ्युपगमात् । तस्मात् असद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात् सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनात् अनुपपन्नोऽयं अभावाद्भावोत्पत्त्यभ्युपगमः ।

अपि च 'चतुर्भिश्चित्तचैत्ता उत्पद्यन्ते, परमाणुभ्यश्च भूतभौतिकलक्षणः समुदाय उत्पद्यते' इत्यभ्युपगम्य पुनः अभावाद्भावोत्पत्तिं कल्पयद्भिः अभ्युपगममपह्नुवानैर्वैनाशिकैः सर्वो लोक आकुलीक्रियते ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि च अभावाद्भावोत्पत्तिरभ्युपगम्येत, एवं सति उदासीनानां अनीहमानानामपि जनानां अभिमतसिद्धिः स्यात् । अभावस्य सुलभत्वात् । कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात् ।

---

एतेन सौत्रान्तिकपक्षोऽपि निराकृतः । ते हीत्थं कल्पयन्ति—'अयं घटः' इति चाक्षुषज्ञाने न वर्तमानो घटो विषयः, तस्य पूर्वक्षणे अभावेन ज्ञानजनकसन्निकर्षानाश्रयत्वात् । नापि सन्निकर्षाश्रयः पूर्वक्षणो विषयः, वर्तमानोल्लेखिज्ञानस्य पूर्वघटक्षणाविषयत्वात् । अपि तु सन्निकर्षाश्रयः [1]स्वहेतुः पूर्वक्षणः स्वप्रतिबिम्बं ज्ञानाकारमर्पयति । स एव अयंघटइतिज्ञानविषयः । बाह्यस्तु प्रतिबिम्बस्य बिम्बपूर्वकत्वनियमात् अनुमेयः—इति । तन्निराकरणं तु—यथा असतो नोपादानत्वम्, एवं असतः पूर्वक्षणस्य न प्रतिबिम्बार्पकता । लोके प्रतिबिम्बसमानकालानामेव मुखादीनां बिम्बत्वदर्शनात्-इति ॥ २६ ॥

स्पष्टमस्य भाष्यम् ॥ २७ ॥

इति समुदायाधिकरणम्

---

1. स्वशब्दार्थः ज्ञानम् ।

कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्यापि अमत्रोत्पत्तिः। तन्तुवायस्यापि तन्तूनतन्वानस्यापि तन्त्रानस्येव वस्त्रलाभः। स्वर्गापवर्गयोश्च न कश्चित् कथञ्चित्समीहेत। न चैतद्युज्यतेऽभ्युपगम्यते वा केनचित्। तस्मादप्यनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः ॥ २७ ॥

### ५. नाभावाधिकरणम्

## नाभाव उपलब्धेः ॥ २८ ॥

एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषु उद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते। केषांचित् किल विनेयानां बाह्ये वस्तुनि अभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता। नासौ सुगताभिप्रायः। तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः। तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेण अन्तस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते। सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्।

---

सिद्धान्त्युद्भावितक्षणिकबाह्यार्थनिराकरणयुक्तीरुपजीव्य प्रवृत्तत्वात् एतदधिकरणपूर्वपक्षस्य पूर्वेण सङ्गतिरिति दर्शयति—एवं बाह्यार्थेत्यादिना। विज्ञानैकस्कन्धेति। क्षणिकं साकारं विज्ञानमेव परमार्थः, तदतिरिक्तं तुच्छम्। स्कन्धपदं पदार्थपरम्। ननु ज्ञानातिरिक्तपदार्थानङ्गीकारे प्रमातृप्रमाप्रमाणप्रमेयरूपानेकपदार्थालम्बनो लोकव्यवहारः कथं सिध्येत्-इत्याशङ्क्याह—तस्मिंश्च विज्ञानवाद इति। ज्ञानाकारो घटपटादिः प्रमेयम्, तदेव ज्ञानं प्रमा। पूर्वज्ञानं तज्जनकतया प्रमाणम्। आन्तरस्यैव ज्ञानाकारस्य घटादेः बाह्यत्वं तु कल्पितम्। एवं तस्यैव ज्ञानभेदोऽपि कल्पितः। एवं तस्यैव ज्ञानस्य भेदेन आश्रयाश्रयिभावकल्पनात् प्रमातृता। तथा च एकस्यैव चन्द्रस्य द्वित्वादिवत् प्रमातृप्रमेयभावेन भेदव्यवहारोपपत्तौ न तस्य तात्त्विकत्वमास्थेयम्—इति तदभिमानः। ननु—घटपटादिरूपं प्रमेयं बाह्यमवगम्यते, कथं तत् आन्तरमित्युच्यते, अत आह—सत्यपीति। बाह्यार्थसत्त्ववादेऽपि विषयासम्बद्धस्य ज्ञानस्य विषयव्यवहाराजनकतया सम्बन्धे

कथं पुनरवगम्यते 'अन्तस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्ति' इति ।

तदसंभवादित्याह । स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युः तत्समूहा वा स्तम्भादयः स्युः । तत्र न तावत् परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति, परमाण्वाभासज्ञानानुपपत्तेः । नापि तत्समूहाः स्तम्भादयः, तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात् ।

एवं जात्यादीनपि प्रत्याचक्षीत ।

---

वक्तव्ये संयोगसमवाययोरनभ्युपगमात् अभेद एव बलादङ्गीकर्तव्यः । तथा च आन्तरज्ञानाभिन्नस्य तस्य आन्तरत्वमायाति । यथा च आन्तराणामपि स्वाप्निकपदार्थानां बाह्यत्वं प्रतीयते दोषवशात्, एवं जाग्रत्पदार्थानामपि भविष्यति ।

ननु—यथा आत्मधर्मस्य ज्ञानस्य विषयेण समवायो नोपपद्यते, यथा च गुणत्वादेव संयोगो नोपपद्यते, एवं बाह्यान्तरत्वरूपविरुद्धधर्मसमवायात् अभेदोऽपि नोपपद्यते । तथा च अबाधितप्रतीतिसिद्धस्य बाह्यस्य सत्तामुपेत्य ज्ञानेन तस्य विषयविषयिभाव[1] एव सम्बन्ध उपेयः - इत्यभिप्रेत्य शङ्कते—कथं पुनरवगम्यत इति ।

युक्तिबाधितस्य विषयस्य अबाधितत्वं तावत् वक्तुं न शक्यत इत्याह—तदसम्भवादित्याहेति । स्तम्भादिप्रत्ययेति । स्तम्भाद्याकारस्य प्रत्ययस्य स्तम्भादिरूपः स्थूल एवार्थः परिच्छेद्यः, न तु अतिसूक्ष्मः परमाणुः, स तु परमाण्वाकारज्ञानपरिच्छेद्य एव, न च 'अयं परमाणुः' इत्येवं लौकिकानां ज्ञानमस्ति-इति भावः ।

एव जात्यादीनपीति । जातिः किं कात्स्न्र्येन व्यक्तिषु वर्तते, उत एकदेशेन । नाद्यः—घटान्तरे जात्यनुपलम्भप्रसङ्गात् । न द्वितीयः - जातेर्निरवयवत्वात् । आदिपदेन, 'स्तम्भादिः न परमाणुसमूहः अपि तु तदारब्धोऽवयवी' [2]इत्येवंविधाः कल्पनाः समवायादयश्च विवक्षिताः । तेषां निराकरणं तार्किकाधिकरणे सिद्धान्तिनैव दर्शितम् ।

---

1. विषयविषयिभावः—विषयविषयिणोः स्वरूपम् ।
2. आ. इत्येवं विकल्पनाः

अपि च अनुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः 'स्तम्भज्ञानं कुडयज्ञानं घटज्ञानं पटज्ञानम्' इति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इति अवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यम् । अङ्गीकृते च तस्मिन् विषयाकारस्य ज्ञानेनैवावरुद्धत्वात् अपार्थिका अर्थसद्भावकल्पना ।

अपि च-सहोपलम्भनियमात् अभेदो विषयविज्ञानयोरापतति । न हि अनयोरेकस्यानुपलम्भे अन्यस्योपलम्भोऽस्ति । न चैतत् स्वभावविवेके युक्तम् । प्रतिबन्धकारणाभावात् । तस्मादप्यर्थाभावः ।

स्वप्नादिवच्चेदं द्रष्टव्यम् । यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितगो-

---

यच्चोक्तं ज्ञानविषययोः स्वरूपमेव सम्बन्धो भविष्यतीति, तत्राह—अपि चेति । विषयविषयिभाव एव नियामकं विना नोपपद्यते । तथा च 'अस्य ज्ञानस्य अयमेव विषयः' इति नियमाय ज्ञानाकारता अर्थस्योपेयेति भावः । [1]ज्ञानगतविशेषमन्तरेणेति । ज्ञानगतं विषयसारूप्यरूपं विशेषं अन्तरेण [2]इत्यर्थः । ननु—तर्हि ज्ञानाकारोऽपि विषयोऽस्तु बाह्यश्च, तथैवाङ्गीकृतः सौत्रान्तिकवैभाषिकाभ्यां-इत्यत आह—अङ्गीकृते चेति । अर्थसद्भावेति । बाह्यार्थसद्भावेत्यर्थः ।

अपि च सहोपलम्भेति । ननु साहित्यस्य भेदापेक्षत्वात् ज्ञानेन सहोपलभ्यमानो विषयो ज्ञानभिन्न एवेति चेत्, न—एकोपलम्भनियमादित्यस्य विवक्षितत्वात् । एकोपलम्भविषयत्वादित्युक्ते, समूहालम्बनरूपैकोपलम्भविषयत्वमस्ति घटपटयोः, न च तयोरभेदः, इति [3]व्यभिचारवारणाय नियमपदम् । तथा च, यत्र एकोपलम्भनियमः तत्राभेदः, यथा द्वयोश्चन्द्रयोः कल्पितभेदयोः-इति व्याप्तिसिद्धिः । यो यः प्रत्ययः स बाह्यविषयरहितः यथा स्वप्नादिप्रत्ययः—इति व्याप्त्यन्तरमाह—स्वप्नादिवच्चेति ।

---

1. मु. इदं प्रतीकं नास्ति ।
2. मु. इत्यन्वयः
3. व्यभिचारवारणायेति व्यभिचारः स्यात् तद्वारणायेत्यर्थः ।

चरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते। प्रत्ययत्वाविशेषात्।

कथं पुनः असति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यते ?

वासनावैचित्र्यादित्याह। अनादौ हि संसारे बीजाङ्कुरवत् विज्ञानानां वासनानां च अन्योन्यनिमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते।

---

ननु—बाह्यार्थानुपगमे एकस्मिन्नेव देवदत्तसन्ताने कदाचित् नीलाकारं कदाचित् पीताकारमिति प्रत्ययवैचित्र्यं कथमुपपद्यते। बाह्यार्थाभ्युपगमे हि ज्ञान-कारणीभूतविषयवैचित्र्यात् प्रत्यक्षज्ञानवैचित्र्यमुपपद्यते, अनुमितौ तु परामर्शवै-चित्र्यात्, शाब्दे त्वाकाङ्क्षावैचित्र्यात्। सर्वथापि साक्षात् परम्परया वा ज्ञान-वैचित्र्यं बाह्यार्थवैचित्र्यकृतमेव-इत्यभिप्रेत्य शङ्कते—कथं पुनरिति।

वासनावैचित्र्यादित्याहेति। अयं भावः—पूर्वज्ञानं वासना, उत्तरज्ञानं वास्यम्। तत्र पूर्वज्ञानं यदाकारं भवति तदाकारमेव उत्तरज्ञानमिति नोपेयते, तथासति प्रत्ययवैचित्र्यानुपपत्तेः। किं तु, नीलाकारादपि पूर्वज्ञानात् पीताकारज्ञानं इत्यनियम एव। परं तु पीताकारमुत्तरज्ञानमुपलभ्य पूर्वज्ञानस्य तथाविधसामर्थ्य-मुन्नीयते। न च तावता सर्वं नीलाकारं पीताकारज्ञानजनकं स्यादित्यापादयितुं शक्यम्। व्यक्तिभेदेन सामर्थ्यवैचित्र्यस्य फलबलेन कल्पनात्, सर्वत्रापि कार्यकार-णभावस्य फलबलकल्प्यत्वात्-इति।

न च प्रवाहरूपेण सन्तन्यमानानां तत्तदव्यवहितपूर्वज्ञानानां वासनारूपाणां नीलपीताद्याकाराणां विचित्रतया नीलाकारादौ ज्ञाने अनुगतरूपं किञ्चित्कारणं न सम्पन्नमेवेति वाच्यम्। तत्सन्तानान्तर्गतंयदा कदाचित् पूर्वोत्पन्नं नीलाकारज्ञानं उत्तरनीलाकारज्ञाने हेतुरित्यप्युपगम्यते, तदेव च वासनापरिपाकहेतुरुच्यते। तथा च वासनाया एव समानाकारत्वानियमः। परिपाकहेतोस्तु समानाकारत्वं नियतमेव।

न च परिपाकहेतोः यदाकदाचित्पूर्वोत्पन्नस्य अव्यवधानेनपूर्ववर्तित्वासम्भ-वात् कथं कारणतेति वाच्यम्। मध्यवर्तिनां ज्ञानानां तज्जन्यसन्तानान्तर्गततया व्यापारतोपपत्तेः व्यवधायकत्वासम्भवात्।

अपि च-अन्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते । स्वप्नादिषु अन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्य उभाभ्यामप्यावाभ्यामभ्युपगम्यमानत्वात् । अन्तरेण तु वासनां अर्थनिमित्तस्य ज्ञानवैचित्र्यस्य मया अनभ्युपगम्यमानत्वात् । तस्मादप्यभावो बाह्यार्थस्य—इति ।

एवं प्राप्ते ब्रूमः—'नाभाव उपलब्धेः' इति । न खल्वभावो बाह्यस्यार्थस्य अध्यवसातुं शक्यते । कस्मात् ? उपलब्धेः । उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः 'स्तम्भः कुड्यं घटः पटः' इति । न च उपलभ्यमानस्यैव अभावो भवितुमर्हति । यथा हि कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायां एवं ब्रूयात् 'नाहं भुञ्जे न वा तृप्यामि' इति, तद्वत् इन्द्रियसंनिकर्षेण स्वयमुपलभमान एव बाह्यमर्थं 'नाहमुपलभे न च सोऽस्ति' इति ब्रुवन् कथमुपादेयवचनः स्यात् ।

ननु नाहमेवं ब्रवीमि 'न कंचिदर्थमुपलभे' इति ; किन्तु 'उपलब्धिव्यतिरिक्तं नोपलभे' इति ब्रवीमि ।

बाढमेवं ब्रवीषि, निरङ्कुशत्वात् ते तुण्डस्य । न तु युक्त्युपेतं ब्रवीषि । यतः उपलब्धिव्यतिरेकोऽपि बलात् अर्थस्याभ्युपगन्तव्यः, उपलब्धेरेव । न हि कश्चित् उपलब्धिमेव 'स्तम्भः कुड्यं च' इत्युपलभते । उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते ।

अतश्च एवमेव सर्वे लौकिका उपलभन्ते, यत् प्रत्याचक्षाणा अपि बाह्यार्थं एवमाचक्षते–'यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासते' इति । तेऽपि हि

---

ज्ञानवैचित्र्यं वासनावैचित्र्यादर्थवैचित्र्याद्वा इति सन्देहे वासनावैचित्र्यादेवेति भवतोच्यते, तत्र किं विनिगमकं इत्याशङ्कायां, उभयसम्मत्या क्वचित्क्लृप्तत्वमित्याह-अपि चान्वयेति ।

तेऽपि हि सर्वलोकप्रसिद्धामिति । प्रमातृप्रमाणप्रमेयफलानां[1] भेदेनावभासमुपेत्यैव तदवभासस्य भ्रमत्वं हि वत्करणेन विवक्षितम् । असति प्रत्यये कस्य

---

1. फलं—प्रमितिः

सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति । इतरथा हि कस्मात् बहिर्वदिति ब्रूयुः । न हि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्मात् यथानुभवं तत्त्वमभ्युपगच्छद्भिः बहिरेवावभासत इति युक्तमभ्युपगन्तुं, न तु बहिर्वदवभासत इति ।

ननु बाह्यस्यार्थस्यासंभवात् बहिर्वदवभासत इत्यध्यवसितम् ।

नायं साधुरध्यवसायः, यतः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवाव-वधार्येते, न पुनः संभवासंभवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती । यद्धि प्रत्यक्षादी-नामन्यतमेनापि प्रमाणेन उपलभ्यते तत् संभवति । यत्तु न केनचिदपि प्रमाणेन उपलभ्यते तन्न संभवति । इह तु यथास्वं सर्वैरेव प्रमाणैः बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैः न संभवतीत्यु-च्येत, उपलब्धेरेव ।

---

भ्रमत्वं प्रसाध्येत । अतो बाह्याभ्यन्तरप्रत्ययः सर्वसम्प्रतिपन्नः । तस्य भ्रमत्वं परं बलवद्बाधकादवसेयम् । न च तदस्ति । अतः प्रमाणभूतात् प्रत्ययात् यत् यथावगम्यते तत् तथैवेत्यवधर्तव्यमिति न बाह्यस्यार्थस्य तुच्छतोपेया-इति भावः ।

ननु—अभिहितं बाह्यार्थप्रत्यये 'किं बाह्योऽर्थः परमाणुः उत तत्समूहः' इत्यादिविकल्पासहत्वं बाधकं-इति शङ्कते—नन्विति । एतादृशबाधकोपन्यासो ज्ञानाकारत्वपक्षेऽपि वक्तुं शक्यत एव । ज्ञानाकारोऽप्यर्थः 'किं परमाणुरूपः उत तत्समूहः' इति विकल्पासहत्वात् । तथा च यत्किञ्चित्कुतर्कमात्रेण सर्वस्याप्यप-लपितुं शक्यतया ज्ञानाकारतापि न सिध्येत् । अतः तत्तद्वादिकल्पितपरिभाषाणां तर्कपराहततया इदमित्थमितिनिर्वचनासामर्थ्येऽपि शुक्तिरजतमिथ्यात्वापादकनेदं-रजतमितिप्रत्ययवत् बाह्यार्थसत्त्वापादकबलवद्बाधकप्रत्ययाभावे कथं तस्य लोक-प्रसिद्धस्य असत्त्वमुपेत्य ज्ञानाकारता अप्रसिद्धा कल्पयितुं शक्या—इति परिहरति—नायं साधुरध्यवसाय इति । कथं व्यतिरेकाव्यतिरेकेति ।

**न च ज्ञानस्य विषयसारूप्याद्विषयविनाशो भवति, असति विषये विषयसारूप्यानुपपत्तेः, बहिरुपलब्धेश्च विषयस्य। अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोः उपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्युपगन्तव्यम्।**

---

[1]समूहपक्षेऽपि 'स समूहः परमाणुव्यतिरिक्तः उताव्यतिरिक्तः' इति विकल्पैरित्यर्थः।

ननु—विषयविषयिभावव्यवस्थासिद्धये ज्ञानाकारता विषयस्योपेया, न च घटद्वयमुपलभ्यते, विषयविशिष्टोपलम्भश्च स्वाकारमादायोपपन्नः, अतो न बाह्यार्थकल्पने प्रमाणं किञ्चिदस्ति—इति पूर्वपक्ष्युक्तं अनूद्य दूषयति—**न चेति।** **विनाशः**-असत्त्वम्। **असति विषय इति।** न च 'वासनावैचित्र्यादेव तत्तद्विषयाकारतोपपन्ना' इत्युक्तमिति वाच्यम्। स्वप्रवृत्तिव्याघातात्। नीलाकारज्ञानस्यानुकूलतामवगम्य [2]बाह्यस्य नीलपदार्थस्य सम्पादने हि पुरुषः प्रवर्तते, तत् नीलाकारतायां बाह्यार्थानुपयोगे व्याहन्यते इति भावः। ज्ञानस्य साकारत्वमुपेत्य इदमुदितं, तदेव नास्तीत्याह—**बहिरुपलब्धेश्चेति।** तथा च घटादिविषयित्वैव ज्ञानस्य घटाकारता न तु घटाद्यभेदः इति भावः। न च [3]विषयविषयिभाव एव किं नियामकमिति शङ्कनीयम्। [4]प्रत्यक्षे ज्ञानजनकेन्द्रियसन्निकृष्टत्वं, अनुमितौ परामर्शविषयलिङ्गव्यापकत्वं, शाब्दे शक्तिलक्षणान्यतरसम्बन्धेन प्रत्यासन्नत्वं-इत्येवरूपेण व्यवहाराविसंवादिनो नियामकस्य सम्भवात्। **उपायोपेयभावहेतुक इति।** विषयविषयिभावहेतुक इत्यर्थः।

---

1. **समूहपक्षेऽपीति** अपिना अनुपदं शङ्काग्रन्थोक्तः परमाणुरूपत्वपक्षो ग्राह्य इति सूचितम्। तथा च, परमाणुपक्षः समूहपक्षे द्वौ विकल्पौ च इति विकल्पैरिति बहुवचनार्थं उपपादितः।

2. मु. बाह्यनील

3. **विषयविषयिभावे**—अस्य ज्ञानस्य अयमेव विषयः इत्यत्र।

4. **प्रत्यक्षे**—प्रत्यक्षज्ञानविषयत्वे। एवमग्रेऽपि।

अपि च—घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो न विशेष्यस्य ज्ञानस्य । यथा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य । द्वाभ्यां च भेद एकस्य सिद्धो भवति, एकस्माच्च द्वयोः । तस्मात् अर्थज्ञानयोर्भेदः ।

तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यम् । अत्रापि हि विशेष्ययोरेव दर्शनस्मरणयोर्भेदो न विशेषणस्य घटस्य । यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वत् ।

अपि च द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोः इतरेतरग्राह्यग्राहकत्वानुपपत्तिः । ततश्च, विज्ञानभेदप्रतिज्ञा क्षणिकत्वादि-धर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाविद्योपप्लवसदसद्धर्मबन्ध-मोक्षादिप्रतिज्ञाश्च स्वशास्त्रगताः, ता हीयेरन् ।

---

अपि चेति । समूहालम्बनस्थले विषया बहवः ज्ञानमेकम् । तथा च, बहुभिरेकस्याभेदो नोपपद्यत इत्युक्तं भवति । तथा घटदर्शनमिति । दर्शनत्व-स्मरणत्वरूपविरुद्धधर्माक्रान्ततया ज्ञानयोर्भेदः, घटश्च विषय एकः, इति नाभेदो विषयज्ञानयोः ।

अपि च द्वयोर्विज्ञानयोरिति । विज्ञानवादिनो हि न स्थिरोऽनेक-ज्ञानावगाह्येक आत्मा अस्ति । क्षणिकानां च विज्ञानानां न परस्परविषयत्वम् । तथा च अनेकज्ञानग्रहणजन्यज्ञानप्रमाणकानां विषयाणां असिद्धिः । तानेव विषयानाह— ततश्च विज्ञानभेदप्रतिज्ञेत्यादि । विज्ञानभेदज्ञानं धर्मिप्रतियोगिभूतानेकविज्ञान-ग्रहणसाध्यम् । विज्ञानभेदग्रहाधीना च तत्प्रतिज्ञा । सर्वेषां ज्ञानानां क्षणिकत्वं सर्वाणि ज्ञानानि अगृहीत्वा न ज्ञातुं शक्यम् । आदिपदेन सर्वेषां ज्ञानानां साकारत्वं गृह्यते । स्वलक्षणं असाधारणो धर्मः, यथा नीलज्ञानस्य नीलाकारत्वम्, असाधारणत्वं च तस्य ज्ञानान्तराद्व्यावृत्तत्वे सति तज्ज्ञानवृत्तित्वं, तदपि न अनेकज्ञानग्रहणं विना ज्ञातुं शक्यम् । सामान्यलक्षणं सर्वज्ञानानुगतो ज्ञानत्वधर्मः, तज्ज्ञानमपि अनेक-ज्ञानग्रहणसाध्यम् । [1]पूर्वज्ञानं वासना, उत्तरं वास्यम् । अविद्यारूप उपप्लवः अविद्यो-

---

1. आ. पूर्वज्ञानं वासकम्

किंचान्यत्, विज्ञानं विज्ञानं इत्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यं इत्येवंजातीयकः कस्मान्नाभ्युपगम्यत इति वक्तव्यम्। विज्ञानमनुभूयते इति चेत्। बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुम्। अथ विज्ञानं प्रकाशात्मकत्वात् प्रदीपवत् स्वयमेवानुभूयते, न तथा बाह्योऽप्यर्थः- इति चेत्, अत्यन्तविरुद्धां स्वात्मनि क्रियां अभ्युपगच्छसि अग्निरात्मानं दहतीतिवत्, अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छसि, अहो पाण्डित्यं महद्दर्शितम्। न च अर्थव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते, स्वात्मनि क्रियाविरोधादेव।

---

पल्लवः—सविकल्पकज्ञानम्। सद्धर्मः ज्ञानत्वम्, असद्धर्मः नरविषाणत्वादि। साकारज्ञानसन्ततिः बन्धः, निराकारज्ञानसन्ततिः मोक्षः। एतेषां च प्रतिज्ञाः परं प्रतिकर्तव्याः। ताश्च पक्षसाध्यहेत्वादिज्ञानवता पुरुषेण कर्तुं शक्याः। न च तव मते तादृशः स्थिरः पुरुषोऽस्तीति, असङ्गता एताः प्रतिज्ञाः।

स्वयमेवानुभूयत इति। स्वस्य स्वयमेव विषयो भवतीत्यर्थः। अत्यन्तविरुद्धां स्वात्मनि क्रियामिति। विषयविषयिभावो हि लोके [1]भेदघटित एव दृष्टः। अतः स्वं प्रत्येव स्वस्य विषयत्वं विरुद्धम्। न च 'सर्वं ज्ञानं प्रमेयम्' इति ज्ञाने स्वस्यापि विषयत्वमस्तीति वाच्यम्। तत्रापि तज्ज्ञानव्यक्तित्वाकारेण विषयित्वं प्रमेयत्वादिना विषयत्वमिति अस्ति रूपभेदोऽवच्छेदकः। इह तु सैव व्यक्तिः [2]विषयीं विषयश्चेति विरोधः। एतेन बाह्यार्थाभ्युपगमेऽपि ज्ञानस्य स्वविषयत्वलक्षणं स्वप्रकाशत्वं निरस्तमित्याह—न च अर्थव्यतिरिक्तमिति।

ननु—विज्ञानस्य स्वविषयत्वं नाभ्युपगम्यते चेत्, ज्ञानान्तरवेद्यत्वमुपेयम्। तथा सति अनवस्था भवेत्। न च—इयमनवस्था तदा दोषाय भवेत् यद्यनवरतं विज्ञानधारैव प्रसक्ता भवेत्, न तु तदस्ति। यदा ज्ञानविषयकं ज्ञानं उत्पन्नं तदा तत् प्रकाशते अन्यदा तु अप्रकाशमानमेव तन्नश्यतीत्युपगमोपपत्तेः-इति

---

1. भेदघटितइति भेदव्याप्य इत्यर्थः।

2. मु. विषयिणी

ननु–विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे, तदप्यन्येन ग्राह्यं तदप्यन्येनेति अनवस्था प्राप्नोति। अपि च, प्रदीपवदवभासात्मकत्वात् ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यम् - इति ;

तदुभयमप्यसत् ।

---

वाच्यम् । आन्तराणां हि ज्ञानसुखादीनां ज्ञानसुखत्वाकारेण निर्णीततैव सदा वक्तव्या। कदाचिज्ज्ञातताभ्युपगमे हि घटादिवत् ज्ञानत्वादिना कदाचित् संशयोऽपि स्यात् । सुखस्याज्ञातस्यैव नाशसम्भावनया भोगापर्यवसानात् सुखसाधने निश्शङ्कं प्रवृत्तिश्च न स्यात् । तथा च उत्पन्नस्य ज्ञानादेः अवश्यज्ञेयतया अनवस्थापरिहाराय ज्ञानसुखादीनां स्वप्रकाशत्वमास्थेयम् । एवं सत्येव 'एतावन्तं कालं ध्यायन्नेवासम्' इत्यनुसन्धानं च सङ्गच्छते-इत्यभिप्रेत्य शङ्कते-ननुविज्ञानस्येति ।

परिहरति––तदुभयमिति । भवेदेष दोषः येषामनुव्यवसायगम्यं विज्ञानं, न तु स्वप्रकाशनित्यसाक्षिचैतन्याभ्युपगन्तॄणाम् । उत्पन्नानां ज्ञानादीनां अनावृतसाक्षितादात्म्येनैवोत्पन्नतया सन्तताववभासोपपत्तेः ।

ननु––यदि साक्षिरूपं ज्ञानं नित्यसिद्धमुपेयते, तर्हि तेनैव आन्तराणां सुखादीनामिव बाह्यानां घटादीनामपि अवभाससम्भवेन अन्तःकरणवृत्तिरूपं जन्यज्ञानं किमर्थमुपेयते-इति चेत्,

उच्यते-सत्यपि साक्षिरूपज्ञाने बाह्यपदार्थव्यवहारस्यादर्शनेन तस्याप्यपेक्षितत्वात् ।

अथापि, 'येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते' 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतिपर्यालोचनया नित्यचैतन्यावभास्ये विषये वृत्तेः क उपयोग इति वक्तव्यम्–

स उच्यते––यद्यपि नित्यचैतन्यावभास्यं विषयजातं तत्राध्यस्तं, तथापि जीवेश्वररूपेण तस्य विभागः कल्पितः। तत्र जीवत्वावच्छेदेनैवावरणं नेश्वरस्वरूपेणेति ईश्वरः स्वरूपज्ञानेनैव नित्यसिद्धेन सर्वान् विषयान् अवगाहते । जीवस्य तु, यत्रान्तः-

विज्ञानग्रहणमात्रे एव विज्ञानसाक्षिणो ग्रहणाकाङ्क्षानुत्पादात् अन-

---

करणं संसृज्यते स एव विषयः तस्यानावृतो भवति। तथा च घटादिष्वन्तः-करणसंसर्गार्थं चक्षुरादिद्वारा निर्गतस्यान्तःकरणस्य दीर्घीभावोऽपेक्ष्यते। चक्षुरादि-द्वारको योऽन्तःकरणस्य दीर्घतारूपो विकारः सैव वृत्तिरित्युच्यते। तथा च चाक्षु-षादिवृत्त्युद्भवात् प्रागपि, अज्ञानोपहितस्य[1] जीवस्य घटादिविषयसम्बन्धे सत्यपि न घटावभासकता। [2]स्वं प्रति घटस्यावृतत्वात्। वृत्त्या त्वावरणनाशे भवति घटाव-भासकता। घटादिभिश्च वृत्तेः सम्बन्धः, संयोगः संयुक्ततादात्म्यं इत्येवंरूपो यथा-सम्भवमूहनीयः। न हि तार्किकमते ज्ञानस्य गुणत्वमिव सिद्धान्ते ज्ञानस्य वृत्ति-रूपस्य गुणत्वमुपेयते, येन संयोगो न भवेत्। अपि तु कुल्यातो निर्गतं दीर्घतापन्नं जलं यथा जलद्रव्यमेव भवति, एवं चक्षुरादिरश्मिद्वारेण निर्गतं [3]अन्तःकरणद्रव्य-मेव ज्ञानम्। तस्य यथा संयोगाद्युपपत्तिः एवम्[4]। आवरणं च [5]अज्ञानकार्यं घटादि-विषयं प्रमातृनिष्ठज्ञानोत्पत्तौ नश्यति, ज्ञाननाशे पुनरुत्पद्यते। परोक्षस्थले तु वृत्ति-ज्ञानस्य विषयेण संसर्गाभावात् [6]नावरणनिवृत्तिः। अत एव [7]रसालमाधुर्यं शब्द-तोऽवगतेऽपि न तत्र प्राकट्यं जिह्वयास्वादने तु प्राकट्यम्—इति।

तथा च बाह्येष्वर्थेषु आवरणतिरस्काराय वृत्तिनिर्गमोऽपेक्षितः। आन्तरेषु तु सुखादिषु अन्तःकरणविकारेषु अन्तःकरणोपहितसाक्षिसंसर्गस्य स्वतःसिद्धतया न तदवभासाय वृत्तिरपेक्षिता। अतः आभ्यन्तराणामर्थानां साक्षिणैव केवलेनाव-भासः। तदाह—विज्ञानग्रहणेति। घटादिगोचरे विज्ञानरूपे ग्रहणे उत्पन्ने सति,

---

1. मु. तस्य विज्ञानस्य घटादि
2. स्वं प्रति घटस्य आवृतत्वादिति जडविषयमपि आवरणं अङ्गीक्रियते इति भावः।
3. मु. अन्तःकरणमेव द्रव्यं ज्ञानम्
4. एवमिति वृत्तेरपीति शेषः।
5. अज्ञानेति प्रमातृगताज्ञानेत्यर्थः।
6. नावरणनिवृत्तिरिति न चैवं घटे परोक्षज्ञातेऽपि घटंनजानामीति अनुभवा-पत्तिः, परोक्षवृत्तेः तथानुभवप्रतिबन्धकत्वाभ्युपगमात्-इति भावः।
7. मु. रसादिमाधुर्ये

वस्थाशङ्कानुपपत्तेः । साक्षिप्रत्यययोश्च स्वभाववैषम्यात् उपलब्धृपलभ्यभावोपपत्तेः । स्वयंसिद्धस्य च साक्षिणः अप्रत्याख्येयत्वात् ।

किंचान्यत्, प्रदीपवत् विज्ञानं अवभासकान्तरनिरपेक्षं स्वयमेव प्रथते इति ब्रुवता, अप्रमाणगम्यं विज्ञानं अनवगन्तृकं इत्युक्तं स्यात्, शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत् ।

बाढमेवम्, अनुभवरूपत्वात्तु विज्ञानस्य इष्टो नः पक्षः त्वयाऽनुज्ञायते-इति चेत्, न-अन्यस्यावगन्तुः चक्षुःसाधनस्य प्रदीपादिप्रथनदर्शनात् । अतो विज्ञानस्याप्यवभास्यत्वाविशेषात् सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवत् इत्यवगम्यते । साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता 'स्वयं प्रथते विज्ञानं' इत्येष एव मम पक्षः त्वया वाचोयुक्त्यन्तरेणाश्रित इति चेत्, न-विज्ञानस्य उत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात् ।

---

बाह्यविज्ञानस्य यः साक्षी वर्तते तदाश्रितं बाह्यविज्ञानगोचरं यत् ग्रहणं तन्नापेक्षितम्, सुखादिवत् वृत्तिरूपस्य ग्रहणस्यापि साक्षिणैव भानोपपत्तेः-इत्यर्थः ।

स्वभाववैषम्यादिति । धर्मिग्राहकमानेन आन्तरज्ञानादितदभावावभासकतयैव साक्षिसिद्धेः, तस्य उपलब्धृत्वं - अवभासकत्वं - तद्विषयव्यवहारादिजनकत्वं स्वाभाविकम्—इति भावः । ननु-यदि जन्यं ज्ञानमुपेयते तर्हि तदेव स्वप्रकाशमस्तु, किमतिरिक्तस्साक्षी कल्प्यते-इत्यत आह—स्वयंसिद्धस्य चेति । प्रत्यभिज्ञादिप्रामाण्यात् नित्य आत्मा अवश्यमुपेयः । ततश्च तस्यैवैकस्य ज्ञानादिव्यवहारप्रयोजकता आस्थेया, न तु प्रत्येकं ज्ञानादीनां स्वप्रकाशत्वमास्थेयं, गौरवात् । स च घटपटादिगोचरज्ञानाद्यभावदशायामपि अवभासमानतया स्वप्रकाशः इत्यप्युपेयम् । विस्तरेण चैतत् 'अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः' इति भाष्यव्याख्यानावसर एव प्रपञ्चितम् ।

अपि च—लोके जन्यं ज्ञानं स्वार्थतया पुरुषेण सम्पाद्यमानमुपलभ्यते, तदुद्देशेनेन्द्रियादिप्रेरणदर्शनात् । अतो यथा बाह्यो दीपादिः पुरुषशेषभूतः, एवं ज्ञानादिकमपि पुरुषशेषभूतमेव । तच्च विज्ञानवादिमते नोपपद्यते - इत्याह—किञ्चान्यदिति ॥ २८ ॥

अतः प्रदीपवत् विज्ञानस्यापि व्यतिरिक्तावगम्यत्वं अस्माभिः प्रसाधितम् ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं बाह्यार्थापलापिना 'स्वप्नादिप्रत्ययवत् जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषात्' इति। तत् प्रतिवक्तव्यम्।

अत्रोच्यते—न स्वप्नादिप्रत्ययवत् जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनः वैधर्म्यम्? बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य 'मिथ्या मयोपलब्धो महाजनसमागमः' इति, 'न ह्यस्ति मम महाजनसमागमः, निद्राग्लानं तु मे मनो बभूव, तेनैषा भ्रान्तिरुद्बभूव' इति। एवं मायादिष्वपि भवति यथायथं बाधः। नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते।

अपि च स्मृतिरेषा यत् स्वप्नदर्शनम्। उपलब्धिस्तु जागरित-

---

नैवं जागरितोपलब्धमिति। यद्यपि 'अथात आदेशो नेति नेति' इत्यागमेन विद्वदनुभवेन च जाग्रदवस्थमपि बाध्यत एव, तथापि, यथा स्वप्नस्य निस्स्वरूपतापत्तिरूपो बाधो विद्यमान एव प्रमातरि भवति नैवं जाग्रत्प्रपञ्चस्य निस्स्वरूपतापत्तिरूपो बाधो विद्यमान एव प्रमातरि भवति, अपि तु प्रमात्रा सहैव भवति-इति विशेषः।

अपि च स्मृतिरेषेति। यद्यपि सिद्धान्ते शुक्तिरजतादितुल्यतात्कालिकस्वाप्नपदार्थगोचरं ज्ञानं साक्षिरूपं अनुभवः, न तु तत्कालासतः स्वाप्नस्य पदार्थस्य ज्ञानं स्मृतिः। तथापि, यथा प्रत्यक्षादिप्रमाणाजन्यत्वे सति संस्कारजन्यत्वं स्मृतेर्वर्तते एवं स्वाप्नज्ञानस्यापीति स्मृतिपदं [1]तत्र गौणं द्रष्टव्यम्। उपलब्धिपदं तु षट्प्रमाणजनितज्ञानपरम्। स्वप्ने अर्थविसंवादस्तु व्यावहारिकार्थाभावात् द्रष्टव्यः।

---

1. मु. तत्रैव

दर्शनम् । स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयते अर्थविप्रयोगसम्प्रयोगात्मकं 'इष्टं पुत्रं स्मरामि, नोपलभे, उपलब्धुमिच्छामि' इति । तत्रैवं सति न शक्यते वक्तुं 'मिथ्या जागरितोपलब्धिः उपलब्धित्वात् स्वप्नोपलब्धिवत्' इति उभयोरन्तरं स्वयमनुभवता । न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुम् ।

अपि च–अनुभवविरोधप्रसङ्गात् जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते । न च–यो यस्य स्वतो धर्मो न संभवति सोऽन्यस्यसाधर्म्यात् तस्य संभविष्यति । न हि अग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति । दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः ॥ २९ ॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युक्तं–विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्पते–इति । तत् प्रतिवक्तव्यम् ।

अत्रोच्यते–न भावो वासनानामुपपद्यते त्वत्पक्षे अनुपलब्धेर्बाह्यानामर्थानाम् । अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति । अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः । अनादित्वेऽपि अन्धपरम्परान्यायेन अप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यात्, न अभिप्रायसिद्धिः ।

---

अपिचानुभवविरोधप्रसङ्गादिति । तथा च स्वप्नदृष्टान्तेन जाग्रत्प्रत्ययस्य निरालम्बनत्वसाधनं प्रत्यक्षादिप्रतीतिबाधितमिति भावः ॥ २९ ॥

अनादित्वेऽप्यन्धपरम्परेति । यत्र हि द्वयोर्व्यक्त्योः कार्यकारणभावो गृहीतः [1]परस्परं यथा बीजाङ्कुरयोः, तत्र अन्योन्याश्रयपरिहाराय प्रवाहानादिताकल्पनं प्रमाणमूलम् । इह तु वास्यवासकयोः पूर्वोत्तरज्ञानयोः न लोकसिद्धः कार्यकारणभाव इति प्रवाहानादितया पूर्वपूर्वज्ञानवैचित्र्याधीनमुत्तरोत्तरज्ञानवैचित्र्यं, 'यथा एकेन नीलंपयइत्युपदिष्टे, कथं त्वया पयोनैल्यमवगतमिति पृष्टे, मम अन्धान्तरेणो-

---

1. मु. 'परस्परं' नास्ति

यावप्यन्वयव्यतिरेकौ अर्थापलापिना उपन्यस्तौ - वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति, तावपि एवंसति प्रत्युक्तौ द्रष्टव्यौ। विनाऽर्थोपलब्ध्या वासनानुपपत्तेः।

अपि च - विनापि वासनाभिः अर्थोपलब्ध्युपगमात् विनात्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमात् अर्थसद्भावमेव अन्वयव्यतिरेकावपि प्रतिष्ठापयतः।

अपि च - वासना नाम संस्कारविशेषाः। संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते, एवं लोके दृष्टत्वात्। न च तव वासनाश्रयः कश्चिदस्ति, प्रमाणतोऽनुपलब्धेः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

यदपि आलयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं, तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत् प्रवृत्तिविज्ञानवत् न वासनाना-

---

पदिष्टं [1]इति, तं प्रति पृष्टे तेनाप्यन्धान्तरेणैवोपदिष्टमिति अन्धपरम्परायामुपदिश्यमानायां नैल्यं नावस्थितं भवति पयसः ' एवं भवेत् - इत्यर्थः।

यत् स्वप्नज्ञानवैचित्र्यं वासनानिमित्तमेवेति प्रतिपादितं तदनूद्य दूषयति— यावपीत्यादिना। [2]विनार्थोपलब्ध्येति। जाग्रत्प्रत्ययनिमित्ता हि स्वप्नवासना, जाग्रत्प्रत्ययाश्च बाह्यार्थवैचित्र्यादेव विचित्रा इति वासनावैचित्र्येऽपि बाह्यार्थ एव प्रयोजक इति भावः। अपि च विनापि वासनाभिरिति। अपूर्वार्थोपलम्भे हि न परिपाकहेतुसहिता वासना सम्भवतीति भावः। अपि च वासना नाम संस्कारविशेषा इति। स्वमतमर्यादयेदं द्रष्टव्यम्। परमते पूर्वविज्ञानस्यैव वासनात्वोपगमात् ॥ ३० ॥

आलयविज्ञानमिति। अहमित्येवमाकारं ज्ञानं आलयविज्ञानम्। अहं जानामीति प्रतीतिबलेन ज्ञानस्यैवाश्रयता व्युत्पादनीया। प्रवृत्तिविज्ञानवदिति।

---

1. मु. ' इति ' नास्ति
2. आ. विनाप्यर्थोपलब्ध्येति

मधिकरणं भवितुमर्हति । न हि कालत्रयसंबन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधानस्मृतिप्रतिसन्धानादिव्यवहारः संभवति । स्थिरस्वरूपत्वे त्वालयविज्ञानस्य सिद्धान्तहानिः ।

अपि च - विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वात्, यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि 'उत्तरोत्पादे च पूर्वनिरोधात्' इत्येवमादीनि तानि इहाप्यनुसन्धातव्यानि ।

एवं एतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च ।

शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय न आदरः क्रियते । न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्, अपवादाभावे उत्सर्गप्रसिद्धेः ॥ ३१ ॥

---

नीलपीताद्याकारं ज्ञानं प्रवृत्तिजनकत्वात् प्रवृत्तिविज्ञानम् ।

शून्यवादिपक्षस्त्विति । ते हि इत्थं वर्णयन्ति—बाह्यार्थः, परमाणुर्वा तत्समूहो वेत्येवमादिभिः विज्ञानवाद्युद्भावितैरेव दूषणैः न सम्भवति । एवं विज्ञानवाद्यभिमतं क्षणिकविज्ञानमपि न सम्भवति । तेनापि, ये बाह्याः पदार्थाः परेषामभिमताः ते आन्तरा इत्युच्यन्ते । तथा अत्रापि, ते आन्तराः किं परमाणुरूपाः उत तत्समूहरूपा इत्यादिविकल्पासहत्वं स्थितमेव । आन्तरं बाह्यं वा सर्वं वस्तु युक्त्यसहत्वात् न सत् । नाप्यसत्, अपरोक्षतया प्रतीतेः । नापि सदसत्, विरोधात् । नापि सदसद्विलक्षणं, सद्विलक्षणत्वे असत्त्वावश्यम्भावात् असद्विलक्षणत्वे सत्त्वावश्यम्भावात् उभयविलक्षणं नैकं वस्तु सम्भवति । अतः चतुष्कोटिविनिर्मुक्तमेव बाह्यमाभ्यन्तरं न परमार्थः । परमार्थतत्त्वं तु सर्वशून्यतैव । सैव सुगतस्य मुख्यसिद्धान्तः । अन्ये तु त्रयोऽपि वादाः मन्दबुद्धिसमाधानाय निरूपिताः—इति । अयं च वादः सद्रूपं परिशिष्यमाणं ब्रह्मैव तत्त्वमिति वैदिकमर्यादाविरुद्धो भवति ।

सर्वप्रमाणविप्रतिषिद्ध इति । शून्यपदेन सर्वप्रपञ्चातीतं भावरूपं किञ्चित् तत्त्वं विवक्षितं उत अभावरूपम् । नाद्यः, तथासति वाचोयुक्त्यन्तरेण ब्रह्मवाद

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

**किं बहुना, सर्वप्रकारेण—यथायथा अयं वैनाशिकसमयः उपपत्तिमत्त्वाय परीक्ष्यते तथातथा सिकताकूपवद्विदीर्यत एव। न कांचिदपि अत्रोपपत्तिं पश्यामः। अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः।**

---

एवाश्रितः। यदि द्वितीयः पक्षः, तदा सर्वप्रमाणविरोधः। सर्वप्रमाणैः प्रपञ्चे उपलभ्यमाने तदभाव एव तत्त्वमिति निरूपयितुमशक्यम्-इतिदूषणस्य स्फुटतया तन्निराकरणाय न सूत्रकृता सूत्राण्यारचितानि।

ननु प्रत्यक्षादिप्रतीतिर्भ्रमरूपा भविष्यति युक्तिबाधितत्वादिति चेत्, न— प्रत्यक्षादिप्रमाणविरोधे युक्तीनामेव आभासत्वोपपत्तेः। अपि च - यत् युक्तिबाधितं, तदनृतमिति क्व दृष्टम्। शुक्तिरजतादौ दृष्टमिति चेत्, तर्हि, यत् अनृतं शुक्तिरजतादिकं दृष्टं तत् साधिष्ठानमेव दृष्टं यश्चाभावो दृष्टः स सङ्ख्यां प्रतियोग्यधिकरणाभ्यां निरूप्यमाण एव दृष्ट इति, प्रपञ्चस्यानृतत्वे तदधिष्ठानं परमार्थभूतं किञ्चिदुपेयम्। तदिदमाह—न ह्ययं सर्वप्रमाणसिद्ध इत्यादि। अन्यत्तत्त्वं-परमार्थभूताधिष्ठानम्। न च अभाव एवाधिष्ठानम्। तस्यापि धर्मिप्रतियोगिसापेक्षत्वेन तन्मात्रपरिशेषानुपपत्तेः।

अपि च अपवादबलेन प्रतीतेर्भ्रमत्वं वक्तव्यम्। अपवादश्च इदमिहनेति इदमिदंनेति वा अधिष्ठानपरिशेषेणैव। न च शून्यवादिनः तत् सम्भवति, अभावाधिकरणानुपगमात्। अतः उत्सर्गप्राप्तं प्रत्यक्षादिप्रतीतिप्रामाण्यं कथं अपबाधितुं शक्यम्। तदाह—अपवादाभाव इति। तथा च प्रत्यक्षादिप्रमाणोपजीविनीनामेव युक्तीनां अर्थसाधकत्वात् तद्विरोधिनीनामाभासत्वात् प्रबलस्य च प्रत्यक्षादिप्रमाणबाधकस्य शून्यवादानुसारिणः असम्भवात् न शून्यमेव तत्त्वमिति।

यदि तु अयमपि सूत्रकृतैव निराकर्तव्यः, तर्हि तन्निराकरणपरतया सर्वथानुपपत्तेश्चेति सूत्रं आवृत्त्या योजनीयम् ॥ ३१ ॥

कृत्स्नसौगतपक्षनिराकरणपरतया सूत्रं योजयति—किं बहुनेति।

अपि च—बाह्यार्थविज्ञानशून्यवादत्रयं इतरेतरविरुद्धं उपदिशता सुगतेन स्पष्टीकृतं आत्मनोऽसंबद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु ‘विरुद्धार्थप्रतिपत्त्या विमुह्येयुः इमाः प्रजाः’ इति ।

सर्वथापि अनादरणीयोऽयं सुगतसमयः श्रेयस्कामैः इत्यभिप्रायः ॥ ३२ ॥

### ६ एकस्मिन्नसंभवाधिकरणम्

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

निरस्तः सुगतसमयः । विवसनसमय इदानीं निरस्यते । सप्त चैषां पदार्थाः संमताः जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम । संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ, यथायोगं तयोरेव इतरान्तर्भावात्—इति मन्यन्ते । तयोः इममपरं प्रपञ्चं आचक्षते पञ्चास्तिकाया नाम—जीवास्तिकायः पुद्गलास्तिकायः धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायश्चेति । सर्वेषामप्येषामवान्तरप्रभेदान् बहुविधान् स्वसमयपरिकल्पितान् वर्णयन्ति ।

---

ननु सर्वज्ञस्य सुगतस्य न असम्बद्धप्रलापित्वं सम्भवति, तत्राह—प्रद्वेषो वेति ॥ ३२ ॥

इति नाभावाधिकरणम्

सङ्गतिं दर्शयन् वृत्तानुवादपूर्वकं उत्तराधिकरणमवतारयति—निरस्त इति । सुगता विमुक्तकच्छाः । तेषु निरस्तेषु मुक्तवसना बुद्धिसन्निहिता भवन्तीति प्रासङ्गिकी सङ्गतिः अनेन सूचिता भवति । प्रतीतिसिद्धत्वात् यथा बाह्यार्थं उपेयते तथा प्रतीतिसिद्धत्वादेव सदसदादिभङ्गैः अनेकात्मकमपि वस्तु उपेयमिति दृष्टान्तसङ्गतिरपि द्रष्टव्या ।

पञ्चास्तिकाया इति । अस्तिकायपदं पदार्थापरनामेति तदीयपरिभाषा ।

सर्वेषामप्येषामवान्तरप्रभेदानिति । जीवस्त्रिविधः—नित्यसिद्धो यथा [1]आर्हतः तन्मतप्रवर्तकः । योगसिद्धः-योगात् सिद्धः प्राक् बद्धश्च । बद्धो यथा अन्ये जीवाः । अजीवो जीवभिन्नः । [2]आस्रवादिवत् धर्मादिश्च अजीवस्यैव प्रपञ्चः । आस्रवसंवरनिर्जराः साधनभूताः । बन्धमोक्षौ साध्यभूतौ ।

---

1. आर्हतः—अर्हन् ।
2. आ. आस्रवादि धर्मादिश्च

आस्रवः इन्द्रियाणां विषयेषु सञ्चारः, साध्वसाधुकर्मकृतः शरीरसम्बन्धो वा। संवरो बाह्याभ्यन्तरेन्द्रियनिग्रहः। निर्जरः [1]तप्तशिलारोहणं केशोल्लुञ्छनं इत्येवमादिः। आस्रवो बन्धहेतुः। बन्धः कर्माष्टकसम्बन्धः। साधुकर्माणि चत्वारि। असाधुकर्माणि चत्वारि - ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयं, आन्तरायिकं चेति। ज्ञानं मोक्षसाधनं नेति भावना ज्ञानावरणीयम्, आर्हततन्त्राभ्यासो मुमुक्षूणामनुपयुक्त इति भावना दर्शनावरणीयं, बहुषु तन्त्रेषु किंमोक्षसाधनमित्यनिर्धारणं मोहनीयं, मोक्षोपायविघातकमान्तरायिकम्। एतान्यसाधूनि। एतान्येव घातिकर्माणीत्युच्यन्ते। अथ अघातिकर्मत्वेन परिभाषितानि साधुकर्माणि चतुर्विधानि—आयुष्कं,[2] गोत्रिकं, नामिकं, वेदनीयं चेति। स्त्रीपुंसयोस्सम्बन्धे मिलितं शुक्लशोणितमायुष्कं, तस्य कललबुद्बुदाद्यवस्थात्मना परिणामशक्तिः गोत्रिकम्, तथाशक्तिमतस्तस्य तदवस्थाप्राप्तिः नामिकं, कललबुद्बुदाद्यात्मना परिणतस्य जाठराग्निसम्पर्केण पुण्यशरीरपरिणतियोग्या काठिन्यावस्था वेदनीयम्। चत्वार्यप्येतानि पुण्यवच्छरीरसम्बन्धितया साधुकर्माणीत्युच्यन्ते।

अन्ये तु—ज्ञानदर्शनसुखवीर्यगुणानां मोक्षे आविर्भविष्यतां जीवगतानां बन्धदशायां तिरोभावापादकानि चत्वारि घातिकर्माणीत्युच्यन्ते। शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखादिनिमित्तानि चत्वारि अघातीनीत्युच्यन्ते।

यदा तु साध्वसाधुकर्मकृतशरीरसम्बन्ध एव आस्रवः, तदा तत्कृता शरीरसम्बन्धपरम्परैव बन्धः।

आविर्भूतज्ञानादिगुणकस्य जीवस्य स्वरूपेणावस्थानं मोक्ष इति केचित्।

अन्ये तु—जीवस्योर्ध्वगमनं निरन्तरं मोक्षः।

तत्राप्यवान्तरभेदः—केचित् किल स्वाभाविकं जीवस्योर्ध्वगमनं शरीरसम्बन्धात् प्रतिबद्धं तद्वियोगे आविर्भवतीति वदन्ति। अन्ये तु-चिरकालं शरीरनिमग्नस्य ततो निस्सरणप्रयुक्तं[3] पञ्जरमुक्तस्य पक्षिण इव, पङ्कलिप्तस्यालाबूफलस्य जलनिमग्नस्य पङ्कनिर्मोक इव, सवितृकिरणसन्तप्तपक्वैरण्डबीजस्येव च भवति। जीवस्य च शरीरे अनेककालनिबद्धत्वात् तद्विनिर्मोककृतमूर्ध्वगमनं पुनरावृत्तिरहितमेव भवतीति।

---

1. आ. तप्तशिलातलारोहणं
2. आयुष्कादिषु तदनुगुणं कर्म ग्राह्यम्।
3. प्रयुक्तमिति—ऊर्ध्वगमनं इत्यनुषज्ज्यते।

**सर्वत्र चेमं सप्तभङ्गिनयं नाम न्यायं अवतारयन्ति- स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति-चावक्तव्यश्च, स्यादस्ति च नास्तिचावक्तव्यश्च—इति। एवमेव एकत्व-नित्यत्वादिष्वपि इमं सप्तभङ्गिनयं योजयन्ति।**

---

पुद्गलास्तिकायः षोढा—-चत्वारि भूतानि स्थावरं जङ्गमं च। जीवस्यो-र्ध्वगमनकार्यानुमेयो द्रव्यविशेषो धर्मः, शरीरस्थितिकार्यानुमेयो द्रव्यविशेषोऽधर्मः। आकाशो द्विविधः-लोकाकाशः अलोकाकाशश्चेति। बद्धजीवाधारभूतो लोकाकाशः। मुक्तानामाधारभूतोऽलोकाकाशः।

एतेषां सर्वेषां पदार्थानां एकरूपत्वनियमाभावबोधकयुक्तिसङ्ग्राहकं तदीयं वाक्यं [1]उदाहरति—**सर्वत्र चेति**। **सप्तभङ्गीति**। [2]सप्तानां नियमानां भङ्गः सप्तभङ्गः, सोऽस्मिन् प्रतिपाद्यतया विद्यत इति सप्तभङ्गी, तमित्यर्थः। **स्यादस्तीति**। स्यादिति तिङन्तप्रतिरूपकमव्ययं कथञ्चिदित्यर्थे। घटपटादिकं वस्तु किं सत्? इति पृष्टे, स्यादस्तीत्युत्तरं, कथञ्चित्सदित्यर्थः। एवमुत्तरत्रापि असत्त्वाद्यनियमप्रति-पादकाः स्यान्नास्तीत्यादयो भङ्गाः। कथञ्चिदसत्, कथञ्चित्सदसत्, कथञ्चिद-वक्तव्यः—अनिर्वचनीय इत्यर्थः, कथञ्चित्सत्त्वेनानिर्वक्तव्यः, कथञ्चिदसत्त्वेना-निर्वक्तव्यः, कथञ्चित्सदसत्त्वेनानिर्वक्तव्यः-इति क्रमेणार्थो द्रष्टव्यः। **एकत्वनित्य-त्वादिष्वपीति**। कथञ्चिदेकः, स एव कथञ्चिदनेकः, कथञ्चिदेकानेकः, कथञ्चि-दनिर्वचनीयः [3]इतिप्रकारः एकत्वादिधर्मेषु तुल्यः। ततश्च सर्वस्यापि वस्तुनः ऐकरूप्यनियमो नास्तीति तदभिमानः।

**युक्तिं चेमां वर्णयन्ति-यदि हि घटः सद्रूप एव स्यात्, तदा [4]तदुत्पत्त्यर्थ-व्यापारोऽनर्थक एव स्यात्, असदेव चेत् स्यात् कारणव्यापारेणापि सत् न भवेत्, अतः कारणव्यापारसार्थक्याय, एक एव घटः कथञ्चित् सत् कथञ्चिदसत्**

---

1. **उदाहरति**-उदाहर्तुं अवतारयति।
2. सप्तभङ्गिनयमितिभाष्यपाठमाश्रित्य व्याचष्टे—**सप्तानामित्यादिना**
3. **इति—इत्यादिः**
4. **मु तदुत्पत्त्याद्यर्थ**

इत्युररीकरणीयम् । एवं च सत्त्वरूपे धर्मे अनैकान्त्यदर्शनात् तेन दृष्टान्तेन धर्ममात्रे अनैकान्त्यमास्थीयते ।

[1]ननु–सत्त्वासत्त्वयोर्भावाभावरूपयोः कथमेकत्र समावेशः ?

कथं वा संयोगतदभावयोरेकत्र समावेशः ।

प्रमाणसिद्धत्वादिति चेत् ,

सत्त्वासत्त्वयोरपि उक्तयुक्तिसिद्धतया निवेशोऽङ्गीकर्तव्यः ।

ननु—संयोगतदभावयोर्विरुद्धयोः अविरोधेननिवेशसिध्यर्थं अवच्छेदकभेद उपेयते मूलाग्ररूपः, एवं सत्त्वासत्त्वयोरपि देशकालरूपावच्छेदकभेदेन निवेशोपगमे तु नास्ति विवादः-इति चेत् ,

न–यदि संयोगतदभावयोर्मूलाग्रावच्छेदकभेदेन विरोधपरिहार आस्थेयः, तर्हि तस्मिन्नेव वृक्षे मूलं किमवच्छेदेन वर्तते तदभावो वा किमवच्छेदेन? यदि तु अग्रावच्छेदेन मूलाभावः तदभावावच्छेदेन मूलं, तर्हि अग्रतदभावौ तस्मिन्नेव वृक्षे किमवच्छेदेन वर्तेते ? । मूलतदभावावच्छेदेन वर्तने अन्योन्याश्रयः । विरोध-परिहारं विना एकस्यापि विरुद्धयुगलस्य अवस्थानासम्भवात् । अवच्छेदकान्तरा-श्रयणे च तस्यापि अभावेनसहवर्तनार्थम् अवच्छेदकान्तरापेक्षत्वे अनवस्था । एवं सत्त्वासत्त्वयोरपि विरोधपरिहारः न देशकालभेदेनास्थातुं शक्यः । देशकालयोरपि सत्त्वासत्त्वनिवेशस्यावश्यकत्वात् । न हि घटासत्त्वकालः सर्वदा सन्नेव । नापि घटासत्त्वदेशः सर्वत्र सन्नेव । तथासति घटसत्त्वस्यैवासम्भवात् । तथा च देश-कालयोरपि सत्त्वासत्त्वनिवेशसिद्धये देशकालान्तरोपगमेऽनवस्था । अतः अकामे-नापि अवच्छेदकभेदं विहाय क्वचित् क्वचित् विरुद्धधर्मसमावेश उपेयः, स सर्वत्रास्तु, किमवच्छेदकभेदकल्पनया । तथा च सर्वस्याप्यनेकान्तता समाश्रयणीया ।

तथा च, साङ्ख्येन यत् सत्त्वैकान्त्यमुपगतं, तन्निवृत्तये आद्यो भङ्गः । शून्य-वाद्युपगतासत्त्वैकान्त्यनिवृत्तये द्वितीयो भङ्गः । कालभेदेन सत्त्वासत्त्वे तार्किकोपगते, तदनैकान्त्याय तृतीयो भङ्गः । वेदान्तिना अनिर्वचनीयत्वमुपगम्यते, तदनैकान्त्याय

---

1. शिवार्कमणिदीपिकोक्तरीत्या अनेकान्तवादं शङ्कासमाधानाभ्यां उपपादयति—**ननु सत्त्वेत्यादिना**

**अत्राचक्ष्महे—नायमभ्युपगमो युक्तः-इति। कुतः? एकस्मिन्नसंभवात्। न ह्येकस्मिन् धर्मिणि युगपत् सदसत्त्वादिविरुद्धधर्मसमावेशः**

---

चतुर्थो भङ्गः। सत्त्ववादिनं प्रति सत्त्वेनानिर्वचनीयत्वं पूर्वपक्षिणोद्भावितम्, असत्त्ववादिनं प्रति असत्त्वेनानिर्वचनीयत्वं पूर्वपक्षवादिनोद्भावितम्, सदसत्त्ववादिनं प्रति ताभ्यामनिर्वचनीयत्वं पूर्वपक्षवादिनोद्भावितम्, तदनैकान्त्यद्योतनाय अवशिष्टाः त्रयो भङ्गाः।

**युगपत् सदसत्त्वादिविरुद्धधर्मसमावेश इति**। तथा च, कालभेदेन सत्त्वासत्त्वयोर्निवेशः एकस्मिन् धर्मिणि प्रतीतिसिद्धत्वादुपेयत एवेति सूचितं भवति। [1]न चैतावता अनेकान्तवादसिद्धिः। अवच्छेदकभेदं विहायैव भावाभावनिवेशस्य तेनोपगमात्। न च देशकालादेरवच्छेदकस्य सत्त्वासत्त्वनिवेशे अवच्छेदकान्तरं न सम्भवतीत्युक्तं युक्तम्। तत्रापि, 'अधुना घटकालः अत्र घटदेशः, नान्यदा घटकालो नान्यत्र घटदेशः' इति देशकालभेदेनैव सत्त्वासत्त्वावगमात्। न च [2]अधुनेत्यादिः कालाधिकरणीभूतः कालः, अत्र घटदेश इति [3]देशाधिकरणतयोल्लिख्यमानो देशश्च किं घटकालदेशाभ्यां अन्यौ, अनन्यौ वा। उभयथाप्यस्तु। न च आद्ये तस्यतस्यापि कालदेशभेदानुसरणे अनवस्थेति वाच्यम्। प्रामाणिक्या अनवस्थाया अदोषत्वात्। न च द्वितीयेऽप्यात्माश्रयः। प्रतीतिसिद्धतया अभेदेऽपि [4]आधारताख्यस्वरूपविशेषोपगमे बाधकाभावात्। तथा च स्वावच्छेदेन घटदेशकालौ स्तः अन्यावच्छेदेन न स्त इति न सत्त्वासत्त्वयोः [5]क्वाप्येकस्मिन् धर्मिणि विनावच्छेदकभेदं निवेशोऽस्ति। एवं मूलाग्रयोरप्यभावो वृक्षे अवच्छेदकभेदेनैव द्रष्टव्यः। तत्रापि ऊर्ध्वाधोदेशादेरवच्छेदकस्य सुलभत्वात्।

---

1. शिवार्कमणिदीपिकोक्तयुक्तिभिः अनेकान्तवादं दूषयति—**न चेत्यादिना**।
2. **अधुनेत्यादिः**—'अधुना घटकालः' इत्यत्र अधुनेत्युल्लिख्यमानः।
3. मु. घटदेशाधिकरण
4. **आधारताख्यस्वरूपेति** आधारताख्यस्वरूपसम्बन्धेत्यर्थः।
5. मु. कदाप्येकस्मिन्

संभवति, शीतोष्णवत् । य एते सप्त पदार्था निर्धारिताः एतावन्त एवंरूपाश्चेति, ते तथैव वा स्युः नैव वा तथा स्युः । इतरथा हि, तथा वा स्युः अतथा वेति अनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात् ।

ननु–अनेकात्मकंवस्त्विति निर्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवत् न अप्रमाणं भवितुमर्हति ।

नेति ब्रूमः—निरङ्कुशं ह्यनेकान्तत्वं सर्ववस्तुषु प्रतिजानानस्य निर्धारणस्यापि वस्तुत्वाविशेषात् स्यादस्तिस्यान्नास्तीत्यादिविकल्पोपनिपातात् अनिर्धारणात्मकतैव स्यात्, एवं निर्धारयितुः निर्धारणफलस्य च स्यात् पक्षेऽस्तितता स्याच्च पक्षे नास्तितेति । एवं सति कथं प्रमाणभूतः सन् तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्धारितासु उपदेष्टुं शक्नुयात् । कथं वा तदभिप्रायानुसारिणः तदुपदिष्टेऽर्थे अनिर्धारितरूपे प्रवर्तेरन् । ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते नान्यथा । अतश्च अनिर्धारितार्थं शास्त्रं प्रणयन् मत्तोन्मत्तवदनुपादेयवचनः स्यात् ।

तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्या अस्ति वा नास्ति वेति विकल्प्यमाना, स्यात्तावदेकस्मिन् पक्षे पक्षान्तरे तु न स्यात्, इत्यतो न्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात् ।

---

एवं यत्र विरुद्धधर्मसमावेश उपलभ्यते तत्र [1]अवच्छेदकभेदेन विरोधपरिहारे सति, निरङ्कुशंसर्वत्रानैकान्त्यमिति दूरनिरस्तं भवति । न हि नित्यमेव वस्तु अनित्यमित्युपलब्धम् । नापि एक एव घटः अनेक इति वक्तुं प्रामाणिकैश्शक्यम् ।

सर्वत्रानैकान्त्यमभ्युपगच्छतश्च स्वपक्षसंरक्षणमपि न स्यादित्याह - य एते सप्त पदार्था इति ।

मत्तोन्मत्तवदिति । मत्तो मदिरादिकृतमदवान्, उन्मत्तः उन्मादात्मकरोगविशेषशाली ।

---

1. मु. अवच्छेदकभेदेनैव

न चैषां पदार्थानां अवक्तव्यत्वं संभवति । अवक्तव्याश्चेत् नोच्येरन् । उच्यन्ते च अवक्तव्याश्चेति विप्रतिषिद्धम् । उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च ।

तथा, तदवधारणफलं सम्यग्दर्शनं अस्ति वा नास्ति वा एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन् मत्तोन्मत्तपक्षस्यैव स्यात्, न प्रत्ययितव्यपक्षस्य ।

स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावः तथा पक्षे नित्यता पक्षे चानित्यतेति अनवधारणायां प्रवृत्त्यनुपपत्तिः । अनादिसिद्धजीवप्रभृतीनां च स्वशास्त्रावधृतस्वभावानां अयथावधृतस्वभावत्वप्रसङ्गः ।

एवं जीवादिषु पदार्थेषु एकस्मिन् धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयो-र्धर्मयोरसंभवात् सत्त्वे चैकस्मिन् धर्मे असत्त्वस्य धर्मान्तरस्यासंभवात् असत्वे चैवं सत्त्वस्यासंभवात् असंगतमिदमार्हतं मतम् ।

एतेन — एकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युप-गमा निराकृता मन्तव्याः ।

यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः संघाताः संभवन्तीति कल्पयन्ति, तत् पूर्वेणैव अणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक् तन्निराकर-णाय प्रयत्यते ॥ ३३ ॥

## एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥

यथा एकस्मिन् धर्मिणि विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्तः, एवं आत्मनोऽपि जीवस्य अकार्त्स्न्यं अपरो दोषः प्रसज्येत । कथम् ?

---

स्यादवक्तव्य इति भङ्गस्य यथाश्रुतार्थं आदाय दूषयति—न चैषां पदार्था-नामिति । लब्धरूपत्वे सति बाध्यत्वरूपं[1] अनिर्वचनीयत्वं प्रमाणबलायातं ऐकान्ति-कमेवेति न तदनैकान्तिकता । सङ्घाताः शरीरादिरूपाः ।

अणुवादनिराकरणेनेति । परमाणुवादिनः वैशेषिका बौद्धाश्च । ते तु प्रागेव निराकृता इत्यर्थः ॥ ३३ ॥

---

1. मु. बाध्यत्वमनि

शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यां अकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत ।

शरीराणां च अनवस्थितपरिमाणत्वात् मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन् न कृत्स्नं हस्तिशरीरं व्याप्नुयात्। पुत्तिकाजन्म च प्राप्नुवन् न कृत्स्नः पुत्तिकाशरीरे संमीयेत। समान एषः एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः ।

स्यादेतत्—अनन्तावयवो जीवः, तस्य त एवावयवा अल्पे शरीरे संकुचेयुः, महति च विकसेयुः—इति ।

तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्यते वा न वेति वक्तव्यम्। प्रतिघाते तावत् न अनन्तावयवाः परिच्छिन्ने देशे संमीयेरन्। अप्रतिघातेऽपि एकावयवदेशत्वोपपत्तेस्सर्वेषामवयवानां प्रथि-

---

पूर्वसूत्रेण सर्वेषां पदार्थानां यदनैकान्त्यं दिगम्बरैरुक्तं तन्निरस्तम्। इतः प्रभृति त्रिभिस्सूत्रैः तदभ्युपगतं जीवस्य शरीरपरिमाणत्वं निरस्यते।

सौत्रं अकात्स्न्र्यपदं परिच्छिन्नत्वाभिप्रायं व्याख्याय, तावता को दोष इत्यपेक्षायामाह—घटादिवदनित्यत्वमिति। परिच्छिन्नस्य, सावयवत्वावश्यम्भावेन अवयवजन्यत्वापत्त्या जन्यभावस्य, अनित्यत्वं प्राप्नोति-इति भावः ।

प्रकारान्तरेण अकार्त्स्न्यं व्याचष्टे—शरीराणां चेत्यादिना। यदा हि पूर्वमल्पशरीरो जीवः अनन्तरं स्थूलशरीरं प्राप्नोति, तदा कृत्स्नस्थूलशरीराव्याप्तिरूपं जीवस्याकार्त्स्न्यम्। यदा तु पूर्वं स्थूलशरीरः अनन्तरमल्पशरीरं प्राप्नोति, तदा कृत्स्नस्य जीवस्य अल्पशरीरासम्मितत्वरूपमकार्त्स्न्यम्।

तेषां पुनरनन्तानां जीवावयवानामिति। ननु – प्रतिघातो नाम एकदेशावच्छेदेनावर्तनं ; यथा स्तम्भघटादीनां तदभ्युपगम्यते एवं जीवावयवानाम्। न च महति शरीरे विद्यमानस्य अल्पशरीरे समावेशो न स्यादिति वाच्यम्। यथा प्रदीपप्रभाया विरलावयवसंयोगेन महागृहोदरव्यापिन्या निबिडावयवसंयोगेनाल्पगृहव्याप्तिरुपलभ्यते, एवं स्थूलशरीरं प्रविष्टस्य जीवस्य अल्पशरीरप्राप्तौ निबिडावयवसंयोगेन कृत्स्नशरीरव्याप्तिरुपपद्यत एवेति कथमाद्यविकल्पदूषणमुपपद्यते,

मानुपपत्तेः जीवस्य अणुमात्रत्वप्रसङ्गः स्यात् । अपि च–शरीरमात्रपरिच्छिन्नानां जीवावयवानां आनन्त्यं न उत्प्रेक्षितुमपि शक्यम् ॥ ३४ ॥

अथ–पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्ति-इत्युच्येत, तत्राप्युच्यते—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

न च पर्यायेणापि अवयवोपगमापगमाभ्यां एतत् देहपरिमाणत्वं जीवस्य अविरोधेनोपपादयितुं शक्यते । कुतः ? विकारादिदोषप्रसङ्गात् । अवयवोपगमापगमाभ्यां हि अनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य

---

प्रतिहन्यमानस्वभावानामपि स्तम्भकाष्ठादीनां वैरल्येन महत्यां शालायां निरुध्यमानानां नैबिड्येन अल्पशालायामपि कात्स्न्र्येन वृत्तिदर्शनात्—इति चेत्,

उच्यते—प्रभान्यायेन स्थूलसूक्ष्मशरीरव्यापिता जीवस्य वक्तुं न शक्यते । तथात्वे विरलसंयोगेन महागृहोदरव्यापिन्या यथा मन्दप्रकाशता, एवं जीवस्यापि स्थूलशरीरे विरलतया विद्यमानस्य अल्पं चैतन्यं भवेत् । यथा च अल्पगृहोदरे निबिडतया विद्यमानाया अधिकप्रकाशता, एवं जीवस्यापि अल्पशरीरे विद्यमानस्य अधिकं चैतन्यं भवेत् । तथा च प्रतीतिविरोधः । न हि शरीरमहत्त्वे ज्ञानाल्पत्वं शरीराल्पत्वे(वा) ज्ञानाधिक्यमिति दृष्टम् । प्रत्युत वैपरीत्यमेव दृष्टम्-बाल्ये ज्ञानाल्पता अनन्तरमधिकज्ञानता चेति । तथा च सर्वेष्वपि शरीरेषु निबिडावयवसंयोगेनैव जीवस्य वृत्तिराश्रयणीया । तथा च, प्रतिहन्यमानस्वभावत्वे महति शरीरे निबिडावयवसंयोगेनैव[1] विद्यमानस्य अल्पशरीरेऽपि कृत्स्नस्य कथं वर्तनं भवेत्-इति तात्पर्यम् ।

[2]शरीरपरिमाणस्य अनन्तावयवत्वमुपेत्य दूषणमुक्तं, तदेव न सम्भवतीत्याह-**अपि चेति ॥ ३४ ॥**

उत्तरसूत्रमवतारयति—**अथ पर्यायेणेति** । पर्यायः क्रमः ।

---

1. आ० गेन विद्यमानस्यैव

2. शरीरपरिमाणस्येति बहुव्रीहिः ।

विक्रियावत्त्वं तावत् अपरिहार्यम्, विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत । ततश्च बन्धमोक्षाभ्युपगमो बाध्येत 'कर्माष्टकपरिवेष्टितस्य जीवस्य अलाबुवत् संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवति' इति ।

किंचान्यत्—आगच्छतामपगच्छतां चावयवानां आगमापायधर्मवत्त्वादेव अनात्मत्वं शरीरादिवत् । ततश्च अवस्थितः कश्चिदवयव आत्मेति स्यात् । न च स निरूपयितुं शक्यते अयमसाविति ।

किंचान्यत्—आगच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति अपगच्छन्तश्च क्व वा लीयन्ते इति वक्तव्यम् । न हि भूतेभ्यः प्रादुर्भवेयुः भूतेषु च निलीयेरन्; अभौतिकत्वाज्जीवस्य । नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते; प्रमाणाभावात् ।

किंचान्यत्—अनवधृतस्वरूपश्च एवंसति आत्मा स्यात्, आगच्छतामपगच्छतां चावयवानां अनियतपरिमाणत्वात् । अतः एवमादिदोषप्रसङ्गात् न पर्यायेणाप्यवयवोपगमापगमौ आत्मन आश्रयितुं शक्येते ।

---

विक्रियावत्त्वे च चर्मादिवदनित्यत्वमिति । अवयवोपचयापचयाभ्युपगमे हि वृद्ध्यपक्षयरूपौ तावत् विकारौ उपगतावेव । तथा च नाशाख्योऽपि भावविकारोऽवश्यम्भावी, वृद्ध्यपक्षयशालिनो नश्वरत्वनियमात्-इति भावः । विकारादिभ्य इत्यत्र आदिपदगृहीतान् दोषानाह—ततश्चेति । मुमुक्षोर्नाशे हि मोक्षरूपं फलं कस्य स्यादिति भावः ।

न च स निरूपयितुं शक्यत इति । आत्मनिरूपणस्य च मोक्षहेतुत्वात् तदभावे मोक्षानुपपत्तिरिति भावः । साधारणः सर्वेषां जीवानाम् । असाधारणः तस्यतस्य जीवस्य । 'न च स निरूपयितुं शक्यते' इति प्राक् सङ्ग्रहोक्तं अर्थं विवृणोति—किं चान्यत् अनवधृतस्वरूप इति । यदि हि '[1]प्रादेशादिपरिमितो जीवः स्थिरः ततोऽन्ये अवयवा जीवस्यागन्तुकाः' इति किञ्चिन्निर्धारणकारणं भवेत्, तदा अवस्थितो निर्धारयितुं [2]शक्येत, न च तदस्ति-इत्याह—आगच्छतामपगच्छतां चेति । उपसंहरति—अत इति ।

---

1. मु. प्रदेशादि
2. मु. शक्यते

अथवा-पूर्वेण सूत्रेण, शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तौ अकात्स्न्र्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां, पुनः 'पर्यायेण-परिमाणानवस्थानेऽपि स्रोतस्संताननित्यतान्यायेन आत्मनो नित्यता स्यात्, यथा रक्तपटानां विज्ञानानवस्थानेऽपि तत्संताननित्यता तद्वत् विसिचामपि' इत्याशङ्क्य, अनेनसूत्रेणोत्तरमुच्यते—संतानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः, वस्तुत्वेऽपि आत्मनो विकारादिदोषप्रसङ्गात् अस्य पक्षस्य अनुपपत्तिः-इति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अपि च, अन्त्यस्य - मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः। तद्वत् पूर्वयोरपि आद्यमध्यमयोर्जीवपरिमाणयोः नित्यत्व-

---

एवंचात्माकात्स्न्र्यमितिसूत्रोक्ताकात्स्न्र्यदोषपरिहाराय 'न च पर्यायादप्यविरोधः' इति शङ्किते, अनित्यत्वादिदोषाः विकारादिभ्यइत्यंशेन प्रदर्श्यन्ते इति व्याख्यातम्। इदानीं तु-इमे शङ्कासमाधाने पूर्वसूत्र एव प्रदर्शनीये, अनेन तु सूत्रेण, स्वरूपत आत्मनोऽनित्यत्वेऽपि प्रवाहनित्यता भविष्यतीति 'न च पर्यायात्-प्रवाहात् अनित्यत्वेऽपि न विरोधः' इति योजनया शङ्कां प्रदर्श्य 'विकारादिभ्यः' इत्यंशेन परिहारः प्रतिपाद्यते-इत्याह—अथवेति। विकारादिदोषप्रसङ्गादिति। न च सन्ताननित्यतां वदतः स्वरूपेण विकारादिप्रसञ्जनं न दोषायेति वाच्यम्। शरीरसम्बन्धाधीनविकारस्यात्मनो मोक्षदशायां शरीरविगमे पुनर्विकारान्तराभावात् पूर्वविकारस्य च शरीरेण सहैव नष्टतया सन्तानस्यापि विच्छेदप्रसङ्गात् ॥ ३५ ॥

ननु—पूर्वशरीरनाशेन तत्कृतस्य विकारस्य नाशेऽपि न आत्मस्वरूपं नष्टम्, शरीरान्तराभावेन च पुनर्विकारान्तराभावेऽपि अविकृतमेवात्मस्वरूपं मोक्षेऽनुवृत्तं भविष्यति—इतिशङ्कानिवृत्त्यर्थं सूत्रम्।

यदि हि अन्त्यायां मोक्षदशायां अविकृतमात्मस्वरूपमनुवर्तते, तर्हि तस्य किञ्चित् परिमाणमप्यस्ति, तदपि च नित्यमेव भविष्यति, शरीरान्तराभावेन पुनः परिमाणान्तराप्रसङ्गात्। तथा च तेन दृष्टान्तेन मध्यमपूर्वावस्थागतमपि परिमाणं नित्यमेव भविष्यति, आत्मपरिमाणत्वाविशेषात्। न च—तथासति सर्वेषां परिमा-

प्रसङ्गात् अविशेषप्रसङ्गः स्यात् - एकशरीरपरिमाणतैव स्यात्, न उपचितापचितशरीरान्तरप्राप्तिः। अथवा - अन्त्यस्य जीवपरिमाणस्य अवस्थितत्वात् पूर्वयोरप्यवस्थयोः अवस्थितपरिमाण एव जीवः स्यात्, ततश्च अविशेषेण सर्वदैव अणुर्महान् वा जीवोऽभ्युपगन्तव्यः, न शरीरपरिमाणः। अतश्च सौगतवत् आर्हतमपि मतं असंगतमित्युपेक्षितव्यम् ॥ ३६ ॥

७ पाशुपताधिकरणम्

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते।

---

णानां आत्मगतानां नित्यत्वमापादितं [1]भवति, एवं च उत्तरोत्तरपरिमाणकाले पूर्वपूर्वपरिमाणस्याप्यनुवृत्त्या भाव्यम्, तथा च कथं एकस्मिन्नात्मनि विषमाणां बहूनां परिमाणानां समावेशः स्यात्-इति वाच्यम्। [2]एवं तर्हि आत्मपरिमाणानि सर्वाणि समान्येव भवन्तु, काऽस्माकं क्षतिः।

तदिदमाह—एकशरीरपरिमाणतैव स्यादिति। एकस्य शरीरस्य यादृशं परिमाणं तादृशान्येव सर्वाणि परिमाणानि आत्मनि स्युः इत्यर्थः।

एवं 'आत्मनि अनेकानि नित्यानि परिमाणानि स्युः' इत्यापादनपरतया सूत्रं योजयित्वा 'एकमेव परिमाणं आत्मनि नित्यं स्यात्' इत्यापादनपरतया सूत्रस्य [3]योजनान्तरमाह—अथवेति। अन्त्यस्य हि परिमाणस्य परेणैव नित्यत्वमुपेतम्। तस्य च नित्यत्वं तदैव भवेत्, यदि तत् प्रागभावाप्रतियोगि। प्रागभावप्रतियोगिनो भावस्य नित्यतानुपपत्तेः। तथाच अन्त्यस्यैव परिमाणस्य पूर्वमप्यनुवृत्त्या भाव्यम्। न च एकपरिमाणाक्रान्ते अन्यपरिमाणनिवेशः सम्भावितः। अतः सर्वदा एकपरिमाण एव जीव इति कथं महदल्पशरीरेषु तस्य कार्त्स्न्यम्—इति भावः ॥ ३६ ॥

इति एकस्मिन्नसम्भवाधिकरणम्

---

1. मु. भविष्यति
2. मु. एवं तस्यात्म
3. **योजनान्तरमिति** योजनाद्वयेऽपि सूत्राक्षरानुगुण्यं कल्पतरुपरिमलयोर्दृश्यम्।

तत् कथमवगम्यते ? । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशाच्च' (ब्र. १।४।२३,२४) इत्यत्र, प्रकृतिभावेन अधिष्ठातृभावेन च उभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात् । यदि पुनः अविशेषेण ईश्वरकारणवादमात्रं इह प्रतिषिध्येत, 'पूर्वोत्तरविरोधात् व्याहताभिव्याहारः सूत्रकारः' इत्येतदापद्येत । तस्मात् 'अप्रकृतिरधिष्ठाता केवलंनिमित्तकारणं ईश्वरः' इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वात् यत्नेन अत्र प्रतिषिध्यते ।

---

यथा पदार्थानां विरुद्धानेकरूपता न सम्भवति तथा एकस्यैवोपादानत्वं निमित्तत्वं च विरोधादेव न सम्भवति—इत्याक्षिप्यते । अतः पूर्वेण अस्याधिकरणस्य दृष्टान्तसङ्गतिः ।

ननु—सूत्रे पत्युरीश्वरस्यैवासामञ्जस्योद्भावनात् ईश्वरप्रतिषेध एव भाति, तत्र 'निमित्तमात्रत्वेनाभ्युपगतो यैरीश्वरः तत्पक्षनिराकरणमत्र क्रियते' इति कथमवगम्यते— इत्यभिप्रायेण शङ्कते—तत् कथमिति । पूर्वसूत्रसन्दर्भपर्यालोचनया तथावगम्यत इति परिहरति—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इत्यादिना ।

तस्मादप्रकृतिरधिष्ठातेति । ननु—अत्र पूर्वपक्षे 'ईक्षत्यादिकं सकर्तृकं कार्यत्वात्' इत्यनुमानेन ईश्वरः सिध्यन् कर्तृत्वेनैव सिध्यति, कर्तुश्च लोके न द्रव्यं प्रत्युपादानत्वं दृष्टमिति, अनुमानेन भूभूधरादिकर्तृत्वेनसिद्धस्य ईश्वरस्य न भूभूधराद्युपादानत्वं वक्तुं शक्यम् - इति न्यायो वक्तव्यः । एतन्निराकरणं शास्त्रयोनित्वसूत्रेण प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधादितिसूत्रेण च सिद्धम् । शास्त्रयोनित्वसूत्रेण हि 'परमात्मा नानुमानादिप्रमाणगम्यः, अपि तु शास्त्रैकसमधिगम्यः' इति व्यवस्थापितम् । प्रकृतिश्चेत्यधिकरणे च 'कर्तुरपि परमात्मन उपादानत्वं शास्त्रबलात् सिध्यतीति, यश्चेतनः स न द्रव्योपादानमिति व्याप्तिः नादरणीया' इति दर्शितम् । अतः कथं पुनः 'अनुमानगम्यतया निमित्तकारणमेवेश्वरस्सिध्येत्' इति शङ्क्यते—

उच्यते—शास्त्रयोनित्वादित्यत्र त्वंपदार्थाभेदरूपस्य परमात्मनः शास्त्रैकसमधिगम्यत्वे व्यवस्थापितेऽपि, तत्पदार्थस्य केवलानुमानगम्यत्वमस्त्विति पुनश्शङ्कायां,

**सा चेयं वेदबाह्या ईश्वरकल्पना अनेकप्रकारा—**

**केचित्तावत् सांख्ययोगव्यपाश्रयाः कल्पयन्ति-प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः, इतरेतरविलक्षणाः प्रधानपुरुषेश्वराः-इति ।**

**माहेश्वरास्तु मन्यन्ते—कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः, पशुपतिरीश्वरो निमित्त-कारणम्-इति ।**

---

तदनुमानस्याभासत्वं इहैव व्यवस्थापनीयम् । प्रकृत्यधिकरणे तु, प्रतिज्ञादृष्टान्तादीनां केवलनिमित्तत्वपक्षेऽपि नानुपपत्तिरिति न तेषामुपादानत्वसाधकतेत्याशङ्क्य, तेषां उपादानत्वसाधकता व्यवस्थापिता । चेतनस्यनोपादानत्वमिति शङ्का तु अत्र निराकर्तव्यैव तत्रापक्वधा । अतः केवलनिमित्तकारणेश्वरानुमाननिरासाय इदमधि-करणमारम्भणीयम् ।

केचित्तावत् साङ्ख्ययोगव्यपाश्रया इति [1]सेश्वरसाङ्ख्ययोगौ । पुरुषो जीवः । इतरेतरविलक्षणाः—सिद्धान्ते प्रधानं अविद्या, सा च ईश्वराध्यस्ता । तन्मते तु स्वतन्त्रा, पुरुषस्तु परमात्मस्वरूपः सिद्धान्ते, तन्मते तु अत्यन्तभिन्नः । माहेश्वराः—शिवप्रोक्तागमानुयायिनः [नकुलीश] (लगुडीश) पाशुपताः ।

कार्य[का][क]रणेति । पृथिव्यादीनि पञ्च तत्त्वानि रूपादयः पञ्च गुणाश्चेति दशविधानि कार्याणि ।

[का][क]रणानि त्रयोदश—पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनो बुद्धिः अहङ्कार इति त्रीण्यन्तःकरणानि ।

योगो ध्यानादिरूपः ।

धर्मोपयुक्तव्यापारः विधेयत्वात् विधिः । सः व्रतद्वाररूपेण द्विविधः । व्रतं भस्मस्नानभस्मशयनोपहारादि । भस्मस्नानं द्विविधं—नित्यं त्रिषवणकर्तव्यं जलस्नान-प्रतिनिधिरूपमेकं, मलमूत्रोत्सर्जनादिषु निमित्तेषु कर्तव्यं जलशुद्धिप्रतिनिधिरूपमनु-स्नानमपरम् । भस्मशयनं च गृहस्थगृहेभ्यो भिक्षित्वा अन्नवदानीतेन भस्मना कार्यम् । उपहारः षड्विधः [2]हसितगीतनृत्तहुडु[का](ङ्का)रनमस्कारजपभेदेन ।

---

1. सेश्वरसाङ्ख्यः—हिरण्यगर्भः, योगः—पतञ्जलिः ।
2 हुडुङ्कारेत्यस्य स्थाने "डुंडुंकार" इति पाशुपतसूत्रपाठ इति वदन्ति ।

हसितं [1]हासः । [2]गीतं नृत्तं च गान्धर्वशास्त्रोक्तप्रकारेण । हुडुक्कारो नाम जिह्वाग्रतालुसंयोगान्निष्पाद्यमानो वृषभनादसदृशो ध्वनिः । विजनप्रदेशे चत्वार्येतानि कर्तव्यानि । जपनमस्कारौ [3]प्रसिद्धौ । द्वाराणि [4]कायनस्पन्दनमन्दयानशृङ्गारणापितत्करणापितद्भाषणभेदेन षड्विधानि । असुप्तस्यैव सुप्तलिङ्गप्रदर्शनं कायनम् । वातव्याध्यभिभूतस्येव गात्रकम्पनं स्पन्दनम् । उपहतपादस्येव गमनं मन्दयानम् । रूपयौवनसम्पन्नां कामिनीं दृष्ट्वा अकामुकस्यैव कामुकवद्विलासप्रदर्शनं शृङ्गारणम् । अनुन्मत्तस्यैव उन्मत्तवदाचरणं अपितत्करणम् । अभिज्ञस्यैव सतः अनभिज्ञवत् [5]निरर्थकादिशब्दोच्चारणं अपितद्भाषणम् । कायनादीनि च गूढचर्योपयुक्तानि ।

दुःखान्तो द्विविधः - अनात्मकः, सात्मकश्च । सर्वदुःखानामत्यन्तोच्छेदरूपः आद्यः । द्वितीयस्तु दृक्क्रियाशक्तिबललक्षणमैश्वर्यम् । दृक्छक्तिरेकापि पञ्चधा विषयभेदादुपचर्यते-दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पार्शनादिविषयं[6] ज्ञानं दर्शनम् । अशेषशब्दविषयं ज्ञानं श्रवणम् । शास्त्रमनपेक्ष्यैव शास्त्रार्थगोचरं ज्ञानं मननम् । ग्रन्थतोऽर्थतश्चासन्दिग्धं ज्ञानं विज्ञानम् । सर्वज्ञत्वं प्रसिद्धम् । क्रियाशक्तिरेकापि त्रिविधोपचर्यते - मनोजवत्वं कामरूपित्वं विकरणधर्मित्वं चेति । निरतिशयशीघ्रगामित्वं मनोजवत्वम् । कर्मानपेक्ष्यैव स्वेच्छया अनन्तशरीरेन्द्रियाधिष्ठातृत्वं कामरूपित्वम् । उपसंहृतशरीरेन्द्रियस्यापि निरतिशयितैश्वर्यशालित्वं विकरणधर्मित्वम् ।

पशुःजीवः । पाशः मायादिरूपः । पशुपतिरीश्वरस्तु सृष्ट्यादिनिमित्तकारणं, स च निरतिशयस्वातन्त्र्यशालितया धर्माधर्मावनपेक्ष्य फलं प्रयच्छति । न च तथासति ईश्वरेच्छानुसारेणैव सुखदुःखादिप्राप्तिसम्भवात् धर्माधर्मयोः प्रवृत्तिनिवृत्ती न स्यातामिति

---

1. हसितं अट्टहासः–इति परिमले ।
2. **गीतमित्यादि** परिमलानुसारेणेदम् । 'गीतं नृत्तं च यथारुचि गान्धर्वशास्त्रानादरेण' इति तु नयमयूखमालिकायां श्रीमदप्पयदीक्षितेन्द्राः ।
3. **प्रसिद्धाविति** परिमलानुसारीदम् । जपः पञ्चब्रह्ममन्त्राणाम्, नमस्कारः प्रसिद्धः–इति नयमयूखमालिकायाम् ।
4. कायनेत्यत्र क्राथनेति, मन्दयानेत्यत्र मन्दनेति च पाठान्तरं वदन्ति ।
5. मु. निरर्थकशब्दो
6. **स्पार्शनादिविषयम्**—स्पार्शनादिविषयविषयम् ।

तथा वैशेषिकादयोऽपि केचित्, कथंचित् स्वप्रक्रियानुसारेण 'निमित्तकारणमीश्वरः' इति वर्णयन्ति।

अत उत्तरमुच्यते—'पत्युरसामञ्जस्यात्' इति। पत्युः-ईश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते। कस्मात्? असामञ्जस्यात्।

किं पुनरसामञ्जस्यम्? हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेः अस्मदादिवदनीश्वरत्वं प्रसज्येत।

प्राणिकर्मापेक्षत्वाददोष इति चेत्, न—

---

वाच्यम्। धर्माधर्माभ्यां ईश्वरानुग्रहकोपयोः सम्भावनया तत्र प्रवृत्तिनिवृत्त्योरुपपत्तेः। धर्माधर्मयोस्तु फलजननसामर्थ्यं ईश्वरापेक्षमेव, कृषिकर्मण इव पर्जन्यापेक्षम्—इति माहेश्वराणां मतम्।

तथा वैशेषिकादयोऽपीति। परमाण्वादय एव समवायिकारणम्, ईश्वरस्तु सर्वविषयनित्यज्ञानेच्छाकृतिमान् निमित्तमेव-इति प्रतिपादयन्ति तार्किकाः।

हीनमध्यमोत्तमभावेनेति। माहेश्वरा हि जीवगतपुण्यपापाद्यनपेक्ष्यैव निरतिशयस्वातन्त्र्यशालितया फलं प्रयच्छतीति वदन्ति। [1]जगति च सुखदुःखवैचित्र्यदर्शनात् ईश्वरस्य सुखमात्रप्रदत्वमिति वक्तुमयुक्तम्। अतः, पुण्यपापफलत्वेन सम्मते सुखदुःखे पुण्यपापे अनादृत्य प्रयच्छति चेत्, 'यस्मिन्ननुरागः तस्मै सुखं प्रयच्छति, यस्मिन् द्वेषः तस्मै दुःखं प्रयच्छति' इत्येव वक्तव्यम्। करुणया फलप्रदत्वे तु दुखं न प्रयच्छेत्। तथा च प्रपञ्चवैचित्र्यानुपपत्तिः। अतः ईश्वरस्य वैषम्यादिदोषयुक्ततया अस्मदादिवदनीश्वरत्वं प्रसज्येतेति भावः।

ननु—यथा सिद्धान्तिना पुण्यपापापेक्षत्वात् वैषम्यादिदोषो नास्तीत्युच्यते, एवमस्माभिरप्युच्यते-इति शङ्कते प्राणिकर्मापेक्षत्वादिति। तदापि, किं कर्म ईश्वरानधिष्ठितमेव फलजनकम्, उत ईश्वराधिष्ठितम्। आद्ये स्वाभ्युपगमविरोधः, कृषिकर्मणि पर्जन्यस्येव पुण्यपापयोरीश्वरापेक्षिताभ्युपगमात्, ईश्वरकल्पनानर्थक्यप्रसङ्गाच्च। द्वितीये तु ईश्वरस्य पुण्यपापाधिष्ठातृत्वं पुण्यपापापेक्षम्, उत अनपेक्षम्।

---

1. मु. तथा च जगति

**कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात् ।**

**न - अनादित्वात्—इति चेत्, न—वर्तमानकालवत् अतीतेष्वपि कालेषु इतरेतराश्रयदोषाविशेषात् अन्धपरम्परान्यायापत्तेः ।**

---

नान्त्यः, नियामकं विनैव कस्यचित् पुण्यं कस्यचित् पापं अधितिष्ठति चेत् कथं न वैषम्यादिप्रसङ्गः । आद्ये तु इतरेतराश्रय इत्याह—**कर्मेश्वरयोरिति** । पुण्यपापयोरपि फलविशेषतया [1]पश्वादिवत् पुण्यपापमपेक्ष्यैव ते ईश्वरः प्रयच्छतीति वक्तव्यम्, तथा च अन्योन्याश्रय इति भावः ।

ननु—पूर्वपुण्यपापे अपेक्ष्य उत्तरे पुण्यपापे प्रयच्छतीश्वरः, अतो व्यक्तिभेदेन नान्योन्याश्रयः—इति शङ्कते - **न - अनादित्वादिति** । प्रवाहानादित्वादित्यर्थः । सिद्धान्ते हि, पूर्वपूर्वपुण्यपापादिकमपेक्ष्य उत्तरोत्तरपुण्यपापे ताभ्यां च सुखदुःखे ईश्वरमपेक्ष्यैव भवत इति शक्यं वक्तुं श्रुतिस्मृत्यनुसारेण, त्वया तु ते अनादृत्यैव वक्तव्यम् । तथा च आधुनिकयोरेव पुण्यपापयोः केन प्रमाणेन पुण्यपापनिमित्तत्वमुच्यते । न हि तत्र अलौकिके प्रत्यक्षादिप्रसरः । तथा च प्रमाणविधुरतया प्रवाहानादित्वकल्पना अन्धपरम्परान्यायमेव [2]प्राप्नोति । तदाह—**वर्तमानकालवदिति** । श्रुतिस्मृत्यनुसरणे तु तद्बलादेव ईश्वरस्योपादानत्वमपि सिध्यति । यथा हि 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं [3]यमधो निनीषते' 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इत्यादिश्रुतिस्मृतिवचनैः ईश्वरस्य पुण्यपापादिकमपेक्ष्यैव [4]पुण्यपापसुखदुःखादिरूपफलप्रदत्वं, तथा तदात्मानं स्वयमकुरुत' इत्यादिवचनजातेन तस्योपादानत्वमपि सिद्धम् ।

---

1. **पश्वादिवत्**—पश्वादिरूपफलवत् ।
2. आ. प्राप्तेति
3. आ. यमेभ्यो लोकेभ्योऽधो
4. आ. पुण्यपापसुखादि

अपि च–'प्रवर्तनालक्षणा दोषाः' (न्यायसू० १।१।१८) इति न्यायवित्समयः। न हि कश्चित् अदोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते, स्वार्थप्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तते–इत्येवमप्यसामञ्जस्यम्, स्वार्थवत्त्वादीश्वरस्य अनीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमात् असामञ्जस्यम् ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

पुनरप्यसामञ्जस्यमेव। नहि प्रधानपुरुषव्यतिरिक्त ईश्वरः अन्तरेण सम्बन्धं प्रधानपुरुषयोरीशिता। न तावत् संयोगलक्षणः संबन्धः संभवति, प्रधानपुरुषेश्वराणां सर्वगतत्वात् निरवयवत्वाच्च। नापि समवायलक्षणः संबन्धः, आश्रयाश्रयिभावानिरूपणात्। नाप्यन्यः कश्चित् कार्यगम्यः संबन्धः शक्यते कल्पयितुं, कार्यकारणभावस्यैव अद्याप्यसिद्धत्वात्।

ब्रह्मवादिनः कथमिति चेत्, न–तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः।

---

असामञ्जस्यान्तरमाह—अपि च प्रवर्तनेति। प्रवर्तना यत्नः, स लक्षणंकार्यतया ज्ञापकः येषां ते दोषा रागादयः। स्वार्थवत्त्वात् - स्वोद्देशविषयीभूतस्वप्रयोजनवत्त्वात् नित्यतृप्तत्वं न स्यादित्यर्थः। अपि च - योगैः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर उपगम्यते। क्लेशाः रागद्वेषादयः। पुण्यपापात्मकं कर्म। [1]सुखदुःखादिरूपं फलं विपाकः। रागादिवासना आशयः। एतैरसम्बद्धः अत एव जीवविलक्षणः पुरुषविशेषः-चेतनविशेषः-इति। चेतनश्च उदासीनः प्रवृत्तिरहितः। तथा च कथमीश्वरस्य प्रधानाधिष्ठातृत्वं तन्मते। तदधिष्ठातृत्वं हि [2]तद्विषयकयत्नादिकमेव, न च तत् उदासीनस्य सम्भवतीत्याह—पुरुषविशेषत्वाभ्युपगमाच्चेति ॥ ३७ ॥

सर्वगतत्वादिति। सर्वगते स्पन्दलक्षणं कर्म न सम्भवति। अतो न [3]कर्मजः संयोगः। निरवयवत्वात् न संयोगजः। आश्रयाश्रयिभावानिरूपणादिति।

---

1. आ. सुखादि
2. आ. तद्विषयकयत्नादिमत्त्वमेव
3. मु. कर्मजन्यः

अपि च—आगमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति न अवश्यं तस्य 'यथादृष्टमेव सर्वमभ्युपगन्तव्यं' इति नियमोऽस्ति। परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतः यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति अयमस्त्यतिशयः।

परस्यापि सर्वज्ञप्रणीतागमसद्भावात् समानमागमबलमिति चेत्, न—इतरेतराश्रयत्वप्रसङ्गात्-आगमप्रत्ययात् सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिः-इति। तस्मात् अनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना। एवं अन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासंभवं असामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिः तार्किकपरिकल्पितस्येश्वरस्य। स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत्। न चैवमुपपद्यते। न हि अप्रत्यक्षं रूपादिहीनं च प्रधानं ईश्वरस्याधिष्ठेयं सम्भवति, मृदादिवैलक्षण्यात् ॥ ३९ ॥

---

धर्मधर्मिभावे एव समवायः, [1]अकार्यकारणद्रव्याणां च न धर्मधर्मिभावः-इत्यर्थः।

आगमप्रत्ययात् [2]सर्वज्ञत्वसिद्धिरिति। उत्तराधिकरणे प्रतिपाद्योऽयमर्थः इहाकृष्टः तत्रैव स्पष्टो भविष्यति ॥ ३८ ॥

अप्रत्यक्षत्वे हेतुः रूपादिहीनमिति। बाह्यपृथिव्यादिपरिणामितया प्रधानं बाह्यम्। परमाणूनां च बाह्यत्वं स्पष्टमेव। बाह्यद्रव्यप्रत्यक्षे च महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं तादृशस्पर्शवत्त्वं च हेतुः। अतो न प्रत्यक्षम्। कर्तुः अपरोक्ष एव च यत्नविषयो भवति। अतो न प्रधानादेर्यत्नविषयत्वरूपमधिष्ठेयत्वं सम्भवतीति तात्पर्यम् ॥ ३९ ॥

---

1. मु. अकार्यद्रव्याणां
2. आ. सर्वज्ञप्रसिद्धिः

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

स्यादेतत्—यथा करणग्रामं चक्षुरादिकं अप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठति एवं प्रधानमीश्वरोऽधिष्ठास्यतीति ।

तथापि नोपपद्यते । भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते । न चात्र भोगादयो दृश्यन्ते । करणग्रामसाम्ये च अभ्युपगम्यमाने संसारिणामिव ईश्वरस्यापि भोगादयः प्रसज्येरन् ।

अन्यथा वा सूत्रद्वयं व्याख्यायते—

अधिष्ठानानुपपत्तेश्च ।

इतश्चानुपपत्तिः तार्किकपरिकल्पितस्येश्वरस्य । साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते, न निरधिष्ठानः । अतश्च तद्दृष्टान्तवशेन अदृष्टमीश्वरं कल्पयितुमिच्छतः ईश्वरस्यापि किंचिच्छरीरं करणायतनं वर्णयितव्यं स्यात् । न च तत् वर्णयितुं शक्यते । सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः । निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः । एवं लोके दृष्टत्वात् ।

करणवच्चेन्न भोगादिभ्यः ।

अथ लोकदर्शनानुसारेण ईश्वरस्यापि किंचित् करणानामायतनं शरीरं कामेन कल्प्येत, एवमपि नोपपद्यते । सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गात् ईश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

---

यथा करणग्राममिति । यद्यपि तार्किकप्रक्रियाश्रयणे करणग्रामाधिष्ठातृत्वं जीवस्य नास्त्येव, इन्द्रियगोचरयत्नाभावात्, इन्द्रियाणां विषयैस्सन्निकर्षापादनं तु तत्तद्गोलकानां प्रत्यक्षाणां यत्नविषयतया तेषु क्रियासम्पादनेन भवति ; तथापि, तेषु जीवाधिष्ठेयत्वं शङ्कोक्तं उपेत्यैव दूषणं वक्तुं शक्यत इति तात्पर्यम् । अभ्युपगमवादत्वं च 'तथापि नोपपद्यते' इत्यनेन सूच्यते ।

दूषणान्तरं वक्तुं प्रकारान्तरेण सूत्रद्वयं व्याचष्टे—अन्यथा वा सूत्रद्वयमिति । साधिष्ठान इत्यस्य व्याख्या सशरीर इति ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

इतश्चानुपपत्तिः तार्किकपरिकल्पितस्येश्वरस्य। स हि सर्वज्ञः तैरभ्युपगम्यते अनन्तश्च। अनन्तं च प्रधानं अनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते। तत्र, सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणां आत्मनश्च इयत्ता परिच्छिद्येत वा न वा परिच्छिद्येत ?। उभयथापि दोषोऽनुषक्त एव। कथम् ? पूर्वस्मिंस्तावद्विकल्पे इयत्तापरिच्छिन्नत्वात् प्रधानपुरुषेश्वराणां अन्तवत्त्वमवश्यंभावि, एवं लोके दृष्टत्वात्। यद्धि लोके इयत्तापरिच्छिन्नं वस्तु घटादि तत् अन्तवद्दृष्टं, तथा प्रधानपुरुषेश्वरत्रयमपि इयत्तापरिच्छिन्नत्वात् अन्तवत् स्यात्। संख्यापरिमाणं तावत् प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम्। स्वरूपपरिमाणमपि तद्गतं ईश्वरेण परिच्छिद्येत, पुरुषगता च महासंख्या। ततश्च इयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारात् मुच्यन्ते तेषां संसारोऽन्तवान् संसारित्वं च तेषामन्तवत्। एवं इतरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां च अन्तवत्त्वं स्यात्। प्रधानं च सविकारं पुरुषार्थं ईश्वरस्याधिष्ठेयं संसारत्वेनाभिमतम्, तच्छून्यतायां ईश्वरः किमधितिष्ठेत्, किंविषये वा सर्वज्ञतेश्वरते स्याताम्। प्रधानपुरुषेश्वराणां च एवमन्तवत्त्वे सति आदिमत्त्वप्रसङ्गः। आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः।

---

इयत्तापरिच्छिन्नं—सङ्ख्याविशेषयुक्तम्। ननु - प्रधानपुरुषेश्वराणां त्रयाणां अन्तवत्त्वमस्तु, न च तावता त्रितयशून्यमेव जगत् स्यादिति शङ्कनीयम्, प्रवाहनित्यतोपपत्तेः—इति पलायमानस्य शङ्कायां आह—स्वरूपपरिमाणमपीति। अल्पत्वमध्यमत्वादिकम्। ये हि सङ्ख्यावन्तो घटपटादयः ते अल्पत्वादियुक्ता भवन्ति, तथा च व्यापकत्वाभ्युपगमविरोधः। पुरुषगता च महासङ्ख्येति। जीवगता परार्धादिसङ्ख्येत्यर्थः। एवमितरेष्वपि क्रमेण मुच्यमानेष्विति। तथा च, प्रवाहाभ्युपगमेऽपि परार्धादिसङ्ख्याका एव जीवव्यक्तयः [1]पर्यवस्यन्तीति, तासां सर्वासां मोक्षे [2]प्रवाहिनीनामभावे केषां प्रवाहः स्यादिति भावः।

---

1. आ. पर्यवस्यन्ति तासां
2. आ. प्रवाहिणामभावे

अथ-मा भूदेष दोष इति उत्तरो विकल्पोऽभ्युपगम्येत, न प्रधानस्य पुरुषाणामात्मनश्च इयत्ता ईश्वरेण परिच्छिद्यते-इति ; तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिः अपरो दोषः प्रसज्येत । तस्मादप्यसंगतः तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥

---

ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरिति । न च—विद्यमानपदार्थग्रहण एव असर्वज्ञत्वम्, जीवादीनां च परार्धादिसङ्ख्या वा परिच्छिन्नपरिमाणता वा नास्ति-इति—वाच्यम् । 'ये हि त्रित्वादिसङ्ख्यायुक्ताः ते परार्धान्तसङ्ख्यान्तर्गता एव भवन्ति परिच्छिन्नपरिमाणाश्च भवन्ति यथा घटादयः' इति व्याप्तिदर्शनेन जीवादीनामपि तथात्वस्यावश्यकतया तदज्ञाने कथं सर्वज्ञता भवेदिति भावः ।

ननु, यदि ईश्वरः कर्ता स्यात्, तर्हि स्वेष्टसाधने रागवान् भवेत् तत्प्रतिकूले [1]द्वेषवान् भवेत्, स च स्वाधिष्ठेयैस्संयोगादियुक्त एव स्यात्, अधिष्ठेयं तस्यापरोक्षमेव भवेत्, परोक्षस्याप्यधिष्ठेयत्वे तु तत्कृतभोगवत्ता तस्य भवेत्, स च कर्तृतया भोगायतनशरीरवान् भवेत्, शरीरित्वादिना च अन्तवान् भवेत्, असर्वज्ञश्च-इति दूषणान्यापादितानि पत्युरसामञ्जस्यादित्यादिभिः अन्तवत्त्वमसर्वज्ञता-वेत्यन्तैः सूत्रैः । तानि न समीचीनानि । तथा हि-परमाण्वादिभिः ईश्वरस्य संयोग उपेयते, एवं तद्गोचरमपरोक्षज्ञानमपि । उद्भूतरूपवत्त्वादिकं तु जन्यप्रत्यक्ष एव कारणम् । ईश्वरस्तु धर्मिग्राहकप्रमाणेन नित्यापरोक्षज्ञानवानेव सिध्यति । धर्मिग्राहकप्रमाणबलादेव निरवयवोऽपि संयुक्त एव सिध्यति । अन्यानि च दूषणानि 'यदि पर्वतोऽग्निमान् भवेत् महानसतुल्यतया, तर्हि व्यञ्जनादियुक्तोऽपि भवेत्' इति [2]दूषणतुल्यानि । अतो न ईश्वरानुमानसावद्यता एतैः सिध्यतीति चेत् ;

---

1. आ. द्वेषवांश्च

2. दूषणेति एतादृशदूषणानां उत्कर्षसमाख्यजात्युत्तरत्वं न्यायसूत्रादिषूक्तम् । जात्युत्तरं च असदुत्तरं, न स्वाभिमतार्थसाधकं नवा पराभिमतार्थबाधकं-इति च तत्रैवोक्तम् ।

उच्यते—किं तावत् परेण धर्मिग्राहकमनुमानं विवक्षितम् । क्षितिः सकर्तृका कार्यत्वात्-इत्यनुमानमिति चेन्न । सकर्तृकत्वे घटत्वादिकमेव प्रयोजकं, न तु प्रागभावप्रतियोगित्वं कार्यत्वम्, येन अङ्कुरादिसाधारण्येन कश्चन कर्ता सिध्येत् । न च-घटत्वादीनामननुगततया सकर्तृकतायामनेकेषां गौरवात् प्रयोजकता न कल्प्यते, अपि तु लाघवात् कार्यत्वमेव । तर्हि कृत्यादीनामपि जन्यतायां कृतित्वादिकमेव लाघवात् प्रयोजकं, न तु जीवकृतित्वादिकम् । एवं शरीरजन्यतायामपि कृतित्वादिकमेव प्रयोजकं, न तु जीवकृतित्वादिकम् । अतश्च ईश्वरेऽपि कर्तृत्वेनानुमिते [1]जन्यमेव कृत्यादिकं सिध्यतीति कथं तस्य अशरीरत्वम् । कृतिश्च रागादिनैव जायत इति रागादिकमपि तस्य प्रसज्यत एव । सर्वं च शरीरं पुण्यपापाधीनं भोगार्थमेव दृष्टमिति तस्य भोगोऽपि प्रसज्यत एव । संयोगश्च सर्वोऽप्यव्याप्यवृत्तिरिति निरवयवे परमाण्वादिसंयोगो न सम्भवति । परमाण्वादिगोचरं जन्यप्रत्यक्षमपि तस्य न सम्भवत्येव ।

अपि च, नित्यकृत्यभ्युपगमे कथमीश्वरे चिकीर्षाऽपरोक्षज्ञानयोः सम्भवः । कृतिजननद्वारा हि कार्ये तयोरुपयोगो वक्तव्यः । अतो न तार्किकाभिमतस्येश्वरस्य सिद्धिः । यश्च शरीरी सोऽसर्वज्ञः जननमरणवांश्चेति, असर्वज्ञोऽन्तवांश्च भवेदेव परपरिकल्पित ईश्वरः । यथा च, 'कार्यं यत् तत् सकर्तृकं' 'यश्च कर्ता न स द्रव्योपादानम्' इति सामान्यतोदर्शनमात्रेणोच्यते, तथा 'ये इयत्तापरिच्छिन्नाः तेऽन्तवन्तः' इति आपादयितुं शक्यमेव ।

न च-रचनानुपपत्तेश्चेत्यनेन अनुमानादेव अधिष्ठाता दर्शितः, कथमिहानुमानं निराक्रियते-इति वाच्यम् । तत्र हि, लोकानुसारेण 'अचेतनप्रवृत्तिश्चेतनाधीना' इत्येतावन्मात्रं दर्शितं, न तु 'स चेतनः अशरीरी सर्वज्ञत्वादिगुणयुक्तः परमेश्वरः इत्यप्यनुमानादेव सिध्यति' इत्युक्तम् । तावन्मात्रेणैव साङ्ख्यपक्षनिराकरणसिद्धेः । श्रुतिवशाच्च, यथा तस्य सर्वज्ञत्वादिगुणजातं सिध्यति तथा सर्वविवर्ताधिष्ठानस्वरूपमुपादानत्वमपि सिध्यति । अतो न युक्तिमात्रेण केवलाधिष्ठात्रीश्वरप्रत्याशा कार्या ॥ ४१ ॥

इति पाशुपताधिकरणम्

---

1. मु. जन्यकृत्यादिकं

## ८ पाञ्चरात्राधिकरणम्

## उत्पत्त्यसम्भवात् ॥ ४२ ॥

येषां अप्रकृतिः अधिष्ठाता केवलनिमित्तकारणं ईश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यातः। येषां पुनः प्रकृतिश्चाधिष्ठाता च उभयात्मकं कारणं ईश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यायते।

ननु-श्रुतिसमाश्रयणेनापि एवंरूप एवेश्वरः प्राङ्निर्धारितः-प्रकृतिश्चाधिष्ठाता चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः। तत् कस्य हेतोः एष पक्षः प्रत्याचिख्यासितः-इति।

उच्यते—यद्यपि एवंजातीयकोंऽशः समानत्वात् न विसंवादगोचरो भवति, अस्ति त्वंशान्तरं विसंवादस्थानं-इत्यतः तत्प्रत्याख्यानायारम्भः।

तत्र भागवता मन्यन्ते-भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम्, स चतुर्धा आत्मानं प्रविभज्य प्रतिष्ठितः—वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेण अनिरुद्धव्यूहरूपेण च। वासुदेवो नाम

---

वृत्तानुवादपूर्वकं पाशुपताधिकरणेन पाञ्चरात्राधिकरणस्य सङ्गतिमाह— येषामिति। तथा च 'निमित्तकारणमेवेश्वरः' इति मतस्य श्रुतिविरोधेन परित्याज्यत्वेऽपि श्रुत्यविरुद्धं पाञ्चरात्रमतं न परित्याज्यमिति आक्षेपिकी सङ्गतिः दर्शिता।

अस्तित्वंशान्तरं विसंवादस्थानमिति यदुक्तं तत्स्पष्टीकरणाय तन्मतमाह— तत्र भागवता इति। भागवतपदं विष्णुभागवतपरम्।

भगवान् षाड्गुण्ययुक्तः। ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः। तत्र चेतनाचेतनात्मकसकलप्रपञ्चाहंभावोल्लेखितया सामान्यतो विशेषतश्च सर्ववस्तुगोचरः प्रत्ययः ज्ञानम्। जगत्प्रकृतिभावः शक्तिः। जगत्सृजतोऽस्य श्रमाभावः तिलकालकवत् अप्रयत्नेन स्वसृष्टसकलजगद्धरणं च बलम्। अप्रतिहतेच्छत्वं ऐश्वर्यम्। जगत्प्रकृतित्वेऽपि पयसो दधिभावेनेव विकाराभावः वीर्यम्। जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यं च तेजः।

**परमात्मा उच्यते, संकर्षणो नाम जीवः, प्रद्युम्नो नाम मनः, अनिरुद्धो नाम अहंकारः । तेषां वासुदेवः परा प्रकृतिः, इतरे संकर्षणादयः कार्यम् । तं इत्थंभूतं परमेश्वरं भगवन्तं अभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशत- मिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते-इति ।**

---

ततो ज्ञानबलोन्मेषेण सङ्कर्षणः ततो वीर्यैश्वर्योन्मेषेण प्रद्युम्नः ततः शक्ति- तेजस्समुन्मेषेण अनिरुद्धो जायते । व्यूहः संस्थानम् ।

**सङ्कर्षणो नाम जीव इति ।** सङ्कर्षणप्रद्युम्नानिरुद्धा इति जीवमनोऽहं- काराणां संज्ञा - इति [1]यथाश्रुतपाञ्चरात्रानुसारेण प्रतीयते ।

**अभिगमनोपादानेज्यास्वाध्याययोगैरिति ।** प्रातः भगवन्मन्त्रजप- स्तुतिनमस्कारादिकं अभिगमनं, तदनन्तरं पूजार्थं पुष्पादिसम्पादनं उपादानं, ततः पूजनं इज्या, ततो भगवच्छास्त्रतदनुगुणपुराणागमश्रवणचिन्तनादिकं स्वाध्यायः, ततः सायंसन्ध्यावन्दनानन्तरं भगवति चित्तसमाधानं योगः ।

ननु—यदि श्रुत्यविरोधेन पाञ्चरात्रस्य प्रामाण्यमिष्टं व्यवस्थापयितुं, तर्हि कथं सङ्कर्षणस्य जीवस्य वासुदेवात् भगवत उत्पत्तिः तत्र प्रतिपाद्यते । 'न जायते म्रियते वा' इत्यादिश्रुतिभिर्हि तस्योत्पत्तिरेव निराक्रियते । कथं च जीवात् सङ्कर्षणात् प्रद्युम्नसंज्ञकस्य मनस उत्पत्तिः । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति श्रुत्या मनसो ब्रह्मकारणकत्वावगमात्—इति चेत्,

तर्हि 'मास्तु श्रुतिमूलतया प्रामाण्यं, स्वातन्त्र्येणैव तस्य प्रामाण्यं भविष्यति' इति शङ्का अस्तु । न च वासुदेवप्रणीतस्य पाञ्चरात्रागमस्य पौरुषेयतया कथं स्वातन्त्र्येण प्रामाण्यमिति शङ्कनीयत् । जीवकृते हि पौरुषेये भ्रमप्रमादादिमूलत्वं सम्भवतीति न तस्य प्रामाण्यं स्वातन्त्र्येण [2]आख्यातुं शक्यते । वासुदेवस्तु परमात्मा सर्वज्ञ इति न तत्प्रणीते तस्मिन् भ्रमप्रमादादिमूलताशङ्का सम्भवति । एवं च सर्वज्ञेन बुद्धिपूर्वं प्रणीतस्य पाञ्चरात्रस्यैव वेदमपेक्ष्यापि अधिकं प्रामाण्यं सिध्यति । वेदो हि तेनैव अबुद्धिपूर्वमारचितो निश्वसितवत् । तथा च तत्र प्रामाण्यं घुणाक्षरन्यायेन

---

1. आ॰ यथाश्रुतपाञ्चरात्रार्थानुसारेण
2. आ॰ स्थातुं शक्यते

**तत्र, यत्तावदुच्यते—योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मना आत्मानं अनेकधा व्यूह्य अवस्थितः-इति, तन्न निराक्रियते—'स एकधा भवति त्रिधा भवति' (छा० ७-२६-२) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्य अधिगतत्वात्। यदपि तस्य भग-**

---

दैववशसम्पन्नम्। पाञ्चरात्रे तु सर्वज्ञेन तेन अर्थालोचनपूर्वकं कृते न कोऽप्यंशः अप्रमाणमिति वक्तुं शक्यते। तथा च पाञ्चरात्रविरोधे वेदस्यैव अर्थान्तरं कल्पनीयम्-इति।

न च तथासति पाशुपतागमस्यापि शिवरूपेण भगवता उक्तत्वात् तेषामपि प्रामाण्ये परस्परप्रतिहतत्वात् कस्याप्यागमस्य प्रामाण्यं न स्यादिति वाच्यम्। [1]शिवो न परमेश्वरः-इत्यपि अस्य पूर्वपक्षिणो भ्रमः।

ननु—अस्मिन् पादे, युक्तिमात्रमाश्रित्य वादिभिः यत् वेदान्तार्थविरोधिप्रमेयजातं व्यवस्थापितं तन्निराकरणं प्रस्तुतम्, न त्वागमानुसारेण यत् वेदार्थस्यान्यथाकरणं तस्य निराकरणम्। तत्तु स्मृतिपाद एव सङ्गतम्। अतः कथं अस्य आगमानुयायिनो मतस्य अत्र निराकरणे सङ्गतिः-इति चेत्;

यदि निमित्तमात्रतया ईश्वरो न सम्मतः, तर्हि निमित्तोपादानभूत एवेश्वरः पाञ्चरात्रैरुपगत इति तन्मतं प्रामाणिकमस्तु-इति पूर्वपक्षस्य उपस्थितत्वात् प्रासङ्गिकी अत्र पादे सङ्गतिः।

सिद्धान्तमारभते—**तत्र यत्तावदिति**। अयमत्र सिद्धान्ताभिप्रायः—अस्तु तावत् वेदमपेक्ष्याप्यधिकं प्रामाण्यं पाञ्चरात्रस्य, तथापि, तन्न्यायेनैव शिवप्रोक्तानामप्यागमानां प्रामाण्यं प्राप्नोत्येव। श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् एकस्यैव परमात्मनो लीलया शिवविष्ण्वादिविग्रहयुक्तता अवगम्यते। तथा च 'शिवो न परमेश्वरः' इति भ्रमो गौतमादिशापदोषसमुद्भवः अवैदिकानामेव। तथा च 'प्रबलयोः परस्परं कलहेन असमुन्मेषे दुर्बलस्यैव[2] समुन्मेषः' इति बालावयधि-

---

1. मु. शिवोऽपि न
2. आ. 'एव' नास्ति

वतः अभिगमनादिलक्षणमाराधनं अजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न प्रतिषिध्यते। श्रुतिस्मृत्योः ईश्वरप्रणिधानस्य प्रसिद्धत्वात्।

यत् पुनरिदमुच्यते–वासुदेवात् संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्धः-इति, अत्र ब्रूमः–न वासुदेवसंज्ञकात् परमात्मनः संकर्षणसंज्ञकस्य जीवस्य उत्पत्तिः सम्भवति। अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्य अनित्यत्वादयो दोषाः प्रसज्येरन्, ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्। कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्—'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र॰ सू॰ २-३-१७) इति। तस्मादसंगता एषा कल्पना॥ ४२॥

## न च कर्तुः करणम्॥ ४३॥

इतश्चासंगता एषा कल्पना। यस्मात्, न हि लोके कर्तुर्देवदत्तादेः करणं परश्वादि उत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः–कर्तुर्जीवात् संकर्षणसंज्ञकात् करणं मनः प्रद्युम्नसंज्ञकं उत्पद्यते, कर्तृजाच्च तस्मात्

---

करणन्यायेन, शैववैष्णवानां कलहेन प्रतिघातवशादसमुन्मेषे सति दुर्बलापि श्रुतिरेव समुन्मिषति।

वस्तुतस्तु, 'पाञ्चरात्रागमापेक्षया श्रुतिर्दुर्बला' इत्येतदसङ्गतम्। श्रुतौ हि अपौरुषेयतया वञ्चनादिकर्तृदोषमूलत्वशङ्का नैव सम्भवति। पाञ्चरात्रे तु प्रसक्ता सा शङ्का तत्कर्तुः परमाप्तत्वसर्वज्ञत्वाद्यनुसन्धानेन निरसनीया। वासुदेवस्य च सर्वज्ञत्वादिकं किं आगमवशादेव निर्धार्यते उत श्रुतिवशात्। आद्ये परस्पराश्रयः - पाञ्चरात्रप्रामाण्यनिर्धारणे सति वासुदेवः सर्वज्ञ इति निर्धारणं तदीयसार्वज्ञ्यनिर्धारणे च उक्तशङ्कां विधूय प्रामाण्यनिर्धारणम्-इति। द्वितीये तु, तत्प्रामाण्यनिर्धारणे श्रुतिरुपजीव्येति श्रुतेः प्रामाण्यमधिकं, तद्विरोधे पाञ्चरात्रस्य अप्रामाण्यमेव प्राप्नोति। तथा च श्रुतिविरुद्धजीवोत्पत्त्याद्यंशे तत् नादरणीयम्॥ ४२॥

**न हि लोके कर्तुर्देवदत्तादेः करणं परश्वादि उत्पद्यमानमिति।** यद्यपि अनेकशिल्पपर्यवदातः कर्ता परश्वादिकमुत्पादयति, तथापि मनोरूपस्य आन्तरस्य

अनिरुद्धसंज्ञकोऽहंकार उत्पद्यते-इति । नचैतत् दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः । न च एवंभूतां श्रुतिं उपलभामहे ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथापि स्यात्—न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते, किं तर्हि, ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता अभ्युपगम्यन्ते—वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्च-इति । तस्मात् नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोति-इति ।

अत्रोच्यते—एवमपि तदप्रतिषेधः-उत्पत्त्यसंभवस्याप्रतिषेधः । प्राप्नोत्येवायं उत्पत्त्यसंभवो दोषः प्रकारान्तरेण-इत्यभिप्रायः । कथम् ? । यदि तावत् अयमभिप्रायः-परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वराः तुल्यधर्माणः, नैषामेकात्मकत्वमस्तीति, ततः अनेकेश्वरकल्पनानर्थक्यम्, एकेनैवेश्वरेण ईश्वरकार्यसिद्धेः । सिद्धान्तहानिश्च, भगवानेवैको वासुदेवः परमार्थतत्त्वं इत्यभ्युपगमात् ।

अथायमभिप्रायः—एकस्यैव भगवत एते चत्वारो व्यूहाः तुल्यधर्माण इति, तथापि तदवस्थ एव उत्पत्त्यसंभवः । न हि वासुदेवात् संकर्षणस्योत्पत्तिः संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन, यथा मृद्घटयोः । न हि

---

करणस्य जीवादुत्पत्तिः न सम्भवति । अमनस्कस्य अचेतनतया यत्नाद्यसम्भवेन कर्तृत्वायोगात्-इति तात्पर्यम् । न चैवंभूतामिति । प्रत्युत तद्विरुद्धामेव श्रुतिं उपलभामहे इति द्रष्टव्यम् ॥ ४३ ॥

अत्रोच्यते-एवमपीति । यद्यपि अस्यां कल्पनायां सङ्कर्षणप्रद्युम्नानिरुद्धेषु जीवमनोऽहंकारपदसामानाधिकरण्यं [1]पाञ्चरात्रगतं अनुपपन्नमेव, तथापि तं दोषं आच्छाद्यैव दोषान्तरकथनमिति द्रष्टव्यम् ॥ ४४ ॥

---

1. पाञ्चरात्रगतमिति "परमकारणात् परब्रह्मभूतात् वासुदेवात् सङ्कर्षणो नाम जीवो जायते, सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते, तस्मात् अनिरुद्धसंज्ञोऽहङ्कारो जायते" इति पाञ्चरात्रग्रन्थः—इति श्रुतप्रकाशिका ।

असत्यतिशये 'कार्यं' 'कारणं' इत्यवकल्पते। न च पाञ्चरात्रसिद्धान्तिभिः वासुदेवादिषु एकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते। वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाः चतुस्संख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥ ४४ ॥

---

ननु—[1]पूर्वोक्तदोषपरिहारार्थमेवं [2]कल्प्यते-चत्वारोऽप्येते यद्यपि परमात्मान एव, तथापि, न तेषु जीवादिपदसामानाधिकरण्यविरोधः। सङ्कर्षणादिरूपेण जीवाद्यधिष्ठातृत्वस्य परमात्मनि कल्पनात्, वाय्वाद्यधिष्ठात्रीषु देवतासु वाय्वादिपदप्रयोगवत् जीवाद्यधिष्ठातृषु सङ्कर्षणादिषु जीवादिपदसामानाधिकरण्योपपत्तेः। [3]अत एव न उत्पत्त्यसम्भवोऽपि, रामकृष्णादिरूपेणाविर्भाववत् सङ्कर्षणादिरूपेणापि परमात्मन आविर्भावसम्भवात्। 'सङ्कर्षणरूपेणाविर्भूतस्यैव परमात्मनः प्रद्युम्नरूपेणाविर्भावः, प्रद्युम्नरूपेणाविर्भूतादेव अनिरुद्धरूपेणाविर्भावः' इति[4] 'सङ्कर्षणात् प्रद्युम्नो जायते' इत्युक्तेरपि न विरोधः। अत एव न अनेकेश्वरकल्पनापि। व्यूहानां चतुष्ट्वपरिगणनं तु उपासनाविशेषाभिप्रायं भविष्यति। अतो न पाञ्चरात्रस्य वेदविरोधेनाप्रामाण्यमापादयितुं शक्यम्-इतिशङ्कानिराकरणार्थं सूत्रम्।

जीवोत्पत्त्यादिगोचरस्य विरोधस्य यथाकथञ्चित् परिहारसम्भवेऽपि भूयान् अन्यो न्यायवेदार्थविरोधोऽस्ति, न स परिहर्तुं शक्यते - इत्यभिप्रायेण सूत्रं व्याचष्टे-

---

1. **पूर्वोक्तदोषेति** सङ्कर्षणादिपदेषुजीवादिपदसामानाधिकरण्यानुपपत्तिरूपदोषेत्यर्थः।

2. **कल्प्यत इति** कल्पनमिदं विशिष्टाद्वैतभाष्यादिषु दृश्यते। रामकृष्णादिः विभव इतिं, सङ्कर्षणादिः व्यूह इति, वासुदेवः सूक्ष्मं—परं—इति वदन्ति, व्यूहो नाम विभागः-विधा इति च।

3. **अतएव**—वक्ष्यमाणहेतोरेव।

4. **इतीति** इत्यभिप्रेतत्वात् इत्यर्थः।

## विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्च अस्मिञ्छास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः । ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवाः-इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति । 'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रम[धी](धिग)तवान्' इत्यादि-वेदनिन्दादर्शनात् ।

---

विप्रतिषेध इति । न्यायविप्रतिषेधमाह—गुणगुणित्वेति । एकस्यैव गुणत्वं गुणित्वं च विप्रतिषिद्धम् । आदिपदेन, परिणाम्युपादानत्वेऽपि निर्विकारत्वं इत्यादिकं गृह्यते । इदं शास्त्रमधीतवानित्यादीति । आदिपदेन वेदोक्तगर्भाधानादिचत्वारिंशत्संस्कारवैपरीत्येनैव ब्राह्मणादीनां संस्कारप्रतिपादनं वेदनिन्दकपरिग्रहवैदिकसंस्कारपरिवर्जनादिप्रतिपादनं[1] च गृह्यते । तथा च अत्यन्तवैदिकमार्गविरोधशालिनस्तस्य कथं प्रामाण्यम् । सर्वज्ञस्य वासुदेवस्य भ्रमासम्भवेऽपि व्यामोहार्थं बुद्धशास्त्रप्रणयनवत् पाञ्चरात्रस्यापि व्यामोहार्थं प्रणयनसम्भवात् ।

यत्तु तस्य एकायनशाखामूलत्वं कैश्चिदुक्तं, तत् तस्याश्शाखायाः पाञ्चरात्रसमानार्थायाः कुत्रापि वैदिकसमाजेषु प्रसिद्ध्यभावात् अनादरणीयम् ।

अवैदिकत्वं च तस्य भारत एव दर्शितं—'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ॥' इति प्रश्ने 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥' इति ।

एवं च यत् [2]क्वचित् भारते पाञ्चरात्रप्रशंसावचनं, तत्, पाञ्चरात्रोक्तानां संस्काराणां वैदिकाधिकारित्वाभ्युपगमे अनेकश्रुतिस्मृतिविरोधप्रसङ्गात्, भारत एव च वैदिकप्रस्थानात् प्रस्थानान्तरत्वप्रतिपादनाच्च, वैदिकमार्गात् परिभ्रष्टा ये पुरुषाः तेषां पाञ्चरात्रोक्तेऽर्थे प्रवृत्तौ उपयुक्तं भविष्यति । एवं[3] च 'भविष्यति प्रमाणं वै एतदेवानुशासनम्' इति पाञ्चरात्रं प्रस्तुत्य यत् भावितया प्रामाण्यकीर्तनं ; तत्,

---

1. परिवर्जनादिप्रतिपादनमिति आदिपदेन बहुलक्षुद्रविद्यापरिग्रहः ।
2. आ. यत्किञ्चित्
3. मु. 'च' नास्ति

तस्मात् असंगतैषा कल्पनेति सिद्धम् ॥ ४५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतःकृतौ श्रीमच्छारीरकमीमांसाभाष्ये
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

कलौ वैदिकमार्गप्रच्युतेः प्राचुर्यात् प्राचुर्येण पाञ्चरात्रमार्गः [1]प्रवृत्तो भविष्यतीत्येवमभिप्रायं व्याख्येयम् ।

अतो न स्पष्टवेदविरोधशालिनः पाञ्चरात्रस्य वैदिकपरिग्राह्यत्वमुपपद्यते । वेदविरोधरहितानां तु शैववैष्णवागमानां वैदिकपरिग्राह्यत्वे न काचिदनुपपत्तिः । पुराणादिवत् तेषामपि वेदमूलत्वेनैव प्रामाण्यसम्भवात् ॥ ४५ ॥

इति पाञ्चरात्राधिकरणम्

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां द्वितीय-
स्याध्यायस्य द्वितीयः
पादः

---

1. मु. प्रवीतः

द्वितीयाध्यायस्य तृतीयः पादः ।

१ वियदधिकरणम्

**वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचित् आकाशस्योत्पत्तिमामनन्ति, केचिन्न । तथा केचित् वायोरुत्पत्तिमामनन्ति, केचिन्न । एवं जीवस्य प्राणानां च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः**

---

ननु—तृतीयतुरीयपादयोः [1]भूतादीनामुत्पत्त्यादिकं चिन्त्यते । नास्य अध्यायसङ्गतिः । वेदान्तसमन्वयविरोधिनो ये स्मृतितर्काः तन्निराकरणमेव हि अध्यायार्थः । न च—अविरोधाध्यायोऽयम्, अस्मिन्नध्याये श्रुतीनामपि विरोधः परस्परं परिहरणीय एव, स पादद्वयेन परिह्रियते - इति वाच्यम् । तथापि, ब्रह्म-विषयकवेदान्तसमन्वयपरिपन्थी यः श्रुतिविरोधः स एव परिहर्तव्यः, न तु विरोध-मात्रम् । शास्त्रासङ्गतत्वप्रसङ्गात् । न च वियदाद्युत्पत्तिगोचरः श्रुतिविरोधः [2]समन्वयपरिपन्थी । अतः स किमर्थं परिहरणीयोऽस्मिंश्छास्त्रे । परिपन्थित्वे वा द्वितीयपादानन्तरं तद्विचारस्य का सङ्गतिः-इति शङ्कां निराकुर्वन् तृतीयतुरीयपादार्थ-माह—वेदान्तेष्वित्यादिना ।

यदि हि वियदाद्युत्पत्तिगोचरः श्रुतिसन्दर्भः वेदान्तगतो विरोधादप्रमाणं भवेत्, तदा तदेकवाक्यतापन्नानि ब्रह्मविषयवाक्यान्यपि अप्रमाणमिति शङ्का स्यात् । अतः स परिहरणीय एव ।

अन्येषां च वादिनां मतं परस्परविरोधात् श्रुतिविरोधाच्च निराकृतं, तर्हि वेदान्तानामपि परस्परविरोधादनादरणीयत्वमिति शङ्कायां प्रसक्तायां तन्निराकरणं द्वितीयपादानन्तरं सङ्गतमेव ।

---

1. **भूतादीत्यादिशब्दार्थः** परमेश्वरजीवप्राणाः । **उत्पत्त्यादीत्यादिशब्दार्थः** प्रलयसङ्ख्यापरिमाणानि ।

2. **समन्वयः** — ब्रह्मविषयकवेदान्तसमन्वयः । तदपरिपन्थित्वं 'कारणत्वेन-चाकाशादिषु' इत्यधिकरणे व्युत्पादितम् ।

श्रुत्यन्तरेषूपलक्ष्यते। विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं, तद्वत् स्वपक्षस्यापि विप्रतिषेधादेव अनपेक्षितत्वमाशङ्क्येत-इत्यतः सर्ववेदान्तगत-सृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते। तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव।

तत्र प्रथमं तावत् आकाशमाश्रित्य चिन्त्यते-किं अस्य (आकाशस्य) उत्पत्तिरस्ति उत नास्तीति।

## न वियदश्रुतेः ॥ १ ॥

तत्र तावत् प्रतिपद्यते 'न वियदश्रुतेः' इति। न खलु आकाशमुत्पद्यते। कस्मात्? अश्रुतेः। न ह्यस्य उत्पत्तिप्रकरणे श्रवणमस्ति। छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, (छा. उ. ६।२।१) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत' 'तत्तेजोऽसृजत' इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानां उत्पत्तिः श्राव्यते। श्रुतिश्च नः प्रमाणं अतीन्द्रियार्थविज्ञानोत्पत्तौ। न चात्र श्रुतिरस्ति आकाशस्योत्पत्तिप्रतिपादिनी। तस्मात् नास्त्याकाशस्योत्पत्तिः—इति ॥ १ ॥

---

अत्र तृतीयपादे भूतविषयश्रुतिविरोधः परिह्रियते, तत्प्रसङ्गात् परमेश्वरस्य जीवस्य च उत्पत्त्यादिप्रतिपादकानां वाक्यानां विरोधः परिह्रियते। तुरीयपादे तु प्राणगोचरश्रुतिविरोधपरिहारः, तत्प्रसङ्गागतं चान्यदपि किञ्चित् विचारयिष्यते।

**श्रुत्यर्थनिर्मलत्वायेति**। निर्मलत्वं चात्र 'अस्य वाक्यस्य अयमेवार्थः' इति निर्धारणविषयत्वम्।

अत्र पादद्वयेऽपि - प्रथमं श्रुत्योः विरोधेन अप्रामाण्यमिति पूर्वः पक्षः, तदनन्तरं एकदेशिमतेन विरोधपरिहारः, ततः परं सिद्धान्तप्रतिपादनं-इति क्रमः।

**प्रथमंतावदाकाशमाश्रित्येति**। सृज्येषु मध्ये तस्य प्राथमिकत्वात् तद्विचार एव प्रथममिति भावः। **किमस्योत्पत्तिरस्तीति**। आकाशस्य छान्दोग्ये उत्पत्तिः न श्रूयते। [1]न च तत्र तैत्तिरीयकोक्ता तदुत्पत्तिः उपसंहर्तुं शक्यते।

---

1. नचेत्यादि उपसंहाराशक्यता च अस्तित्विति सूत्रभाष्ये स्पष्टीभविष्यति।

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे। मा नाम आकाशस्य छान्दोग्ये भूत् उत्पत्तिः, श्रुत्यन्तरे त्वस्ति। तैत्तिरीयका हि समामनन्ति—'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१) इति।

ततश्च श्रुत्योर्विप्रतिषेधः—क्वचित् तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखा—इति।

ननु एकवाक्यता अनयोः श्रुत्योः युक्ता।

सत्यं सा युक्ता, न तु सा अवगन्तुं शक्यते। कुतः? 'तत्तेजोऽ-

---

क्वचिच्च नित्यत्वमपि श्रूयते। तैत्तिरीयके तु आकाशस्योत्पत्तिरपि श्रूयते। एतेषां छान्दोग्यादिवाक्यानां प्रामाण्यं सम्भवति वा न वा। तदर्थं च विचार्यते। किं अर्थविरोधोऽस्ति नेति प्रथमं संशयः। यदा तु अर्थविरोधाभावं प्रतिपाद्य प्रामाण्यमुपपादयितुं शक्यते तदा भाष्योक्तः संशयः - उत्पद्यते नेतीति ॥ १ ॥

ततश्च श्रुत्योर्विप्रतिषेध इति। एवं च आदौ सूत्रद्वयं विरुद्धार्थकश्रुतिद्वयोपन्यासमुखेन [1]अप्रामाण्यपूर्वपक्षोत्थापकमिति [2]द्रष्टव्यमिति ध्वनितम्। एवं च, 'गौण्यसम्भवात्' इत्यारभ्य त्रिसूत्री अविरोधव्युत्पादनेन सिद्धान्त्येकदेशिमतप्रतिपादनार्था, प्रतिज्ञाऽहानिरित्यादिसूत्रद्वयं तु परमसिद्धान्तेनाविरोधसमर्थनार्थम् - इति द्रष्टव्यम्। [3]ननु—वियत उत्पत्तेरश्रवणं सार्वत्रिकं वक्तुं न शक्यते। तैत्तिरीयके उत्पत्तिश्रवणात्। क्वचिदश्रवणं तु न आकाशस्योत्पत्तिं वारयितुं समर्थम्, उत्पत्त्युपसंहारसम्भवात्। अतः कथं विरोधः-इत्यभिप्रायेण शङ्कते—नन्वेकवाक्यतेति।

---

1. **अप्रामाण्येत्यादि** यत्तु-प्रथमे काण्डे प्रामाण्यस्य समर्थितत्वात् नेदं युक्तम्-इति श्रुतप्रकाशिकायामुक्तम्, तदयुक्तम्-अस्य पृथक्शास्त्रत्वात्। परेषामपि सिद्धे-वेदान्तप्रामाण्यसमर्थनपरजिज्ञासाधिकरणासाङ्गत्यापत्तेः।

2. मु. 'द्रष्टव्यमिति' नास्ति

3. नन्वित्यादिशङ्कानिराकरणेन श्रुतप्रकाशिकोक्तं भाष्यदूषणं निरस्तं वेदितव्यम्।

सृजत' इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धानुपपत्तेः 'तत्तेजोऽसृजत' 'तदाकाशमसृजत' इति।

ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते, यथा-स सूपं पक्त्वा ओदनं पचतीति। एवं 'तत् आकाशं सृष्ट्वा तेजोऽसृजत' इति योजयिष्यामि।

नैवं युज्यते। प्रथमजत्वं हि छान्दोग्ये तेजसः अवगम्यते, तैत्तिरीयके च आकाशस्य। न चोभयोः प्रथमजत्वं संभवति।

एतेन इतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१) इत्यत्रापि 'तस्मात् आकाशः संभूतः

---

सकृच्छ्रुतस्येति। आकाशोत्पत्त्युपसंहारे हि आकाशमसृजतेतिवाक्यं 'तदैक्षत बहु स्यां प्रजायेयेति [1]तत्तेजोऽसृजत' इति वाक्ये तेजश्शब्दात् प्राक् अध्याहर्तव्यम्, तथा च कर्तृप्रतिपादकस्य तदितिप्रथमान्तस्य आख्यातद्वयेनाकाङ्क्षायां आवृत्तिः स्यात् इति भावः।

ननु यथा आवृत्तिर्न भविष्यति तथैव वाक्यमध्याहरिष्याम इति शङ्कते—**ननु सकृच्छ्रुतस्यापीति**। अस्मिन् पक्षे आवृत्त्यभावेऽपि तेजःप्राथम्यबाधो भवतीति परिहरति—**नैवमिति**।

ननु—छान्दोग्ये वियत उपसंहारपक्षेऽपि वियत्तेजसोः युगपदेव प्रथमं सृष्टिं स्वीकरिष्यामः, तथा च तैत्तिरीयकेऽपि प्रथमस्थाने तेज उपसंहरिष्यामः - इत्याशङ्क्याह—**एतेनेति**। सङ्ग्रहवाक्यमेतत्। तद्विवृणोति—**तस्माद्वा इति**। तथा च, तैत्तिरीयकात् वियद्वाय्वोरुपसंहारे सति तैत्तिरीयकश्रुत्यनुसारेण तृतीयस्थानत्वं तेजसः कल्पनीयम्, तथात्वे अवगतप्रथमस्थानत्वभङ्गः। अतो नोपसंहारः सम्भवति। तथा च - वियन्नोत्पद्यते, छान्दोग्ये तैत्तिरीयकवाक्यैकवाक्यताविरोधिनि तदुत्पत्तेरश्रवणात्, उपलक्षणमेतत् - 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इत्यादौ तदुत्पत्तिनिवारणाच्च - इति प्रथमसूत्रेण विवक्षितम्। 'अस्ति तु' इत्यनेन सूत्रेण तैत्तिरीयके वियत उत्पत्तिश्रवणं विवक्षितम्। ततश्च विरोधादप्रामाण्यम्—इति पूर्वपक्षः ॥ २ ॥

---

1. मु. 'तत्तेजोऽसृजत' नास्ति

तस्मात् तेजः संभूतम्' इति, सकृच्छ्रुतस्य अपादानस्य संभवनस्य च वियत्ते-जोभ्यां युगपत्संबन्धानुपपत्तेः। 'वायोरग्निः' (तै. उ. २।१) इति च पृथगाम्नानात् ॥ २ ॥

अस्मिन् विप्रतिषेधे कश्चिदाह—

## गौण्यसंभवात् ॥ ३ ॥

नास्ति वियत उत्पत्तिः, अश्रुतेरेव। या तु इतरा वियदुत्पत्तिवादिनी श्रुतिः उदाहृता, सा गौणी भवितुमर्हति। कस्मात्। असंभवात्। न हि आकाशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु। ते हि कारणसामग्र्यसम्भवात् आकाशस्योत्पत्तिं वारयन्ति। समवाय्यसम-वायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते। द्रव्यस्य च एकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति। न च आकाशस्य एकजातीयकमनेकं च द्रव्यं आरम्भकमस्ति, यस्मिन् समवायिकारणे सति असमवायिकारणे च तत्संयोगे आकाश उत्पद्येत। तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेव आकाशस्य भवति।

उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोः विशेषः संभाव्यते-प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति। आकाशस्य पुनः न पूर्वोत्तरकालयोः विशेषः संभावयितुं शक्यते। किं हि, प्रागुत्पत्तेः अनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्।

पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणात् आकाशस्याजत्वसिद्धिः। तस्मात् यथा लोके 'आकाशं कुरु' 'आकाशो जातः' इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च 'घटाकाशः, करकाकाशः, गृहाकाशः' इति

---

भवेदेवमप्रामाण्यं, यदि एकां श्रुतिमनुसृत्य श्रुत्यन्तरस्य नयनं न भवेत्, भवति तु तत्, अतो न विरोधः - इत्यभिप्रेत्य सिद्धान्तयति—अस्मिन्-विप्रतिषेध इति ॥ तत्र, छान्दोग्यश्रुतिमनुसृत्यैव तैत्तिरीयकश्रुतिर्व्याख्येया इत्येक-देशिमतं प्रथमतो दर्शयति —गौण्यसम्भवात् इति ॥ ३ ॥

एकस्याप्याकाशस्य एवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति, एवं उत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥३॥

## शब्दाच्च ॥ ४ ॥

शब्दः खलु आकाशस्य अजत्वं ख्यापयति। यत आह 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ. उ. २।३।३) इति। न ह्यमृतस्योत्पत्तिरुपपद्यते। 'आकाशवत् सर्वगतश्च नित्यः' इति च आकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यां उपमिमानः आकाशस्यापि तौ धर्मौ सूचयति। न च तादृशस्य उत्पत्तिरुपपद्यते। 'स यथा अनन्तोऽयमाकाशः एवमनन्त आत्मा वेदितव्यः' इति च उदाहरणम्। 'आकाशशरीरं ब्रह्म' (तै. उ. १।६।२) 'आकाश आत्मा' (तै. उ. १।७।१) इति च। न हि आकाशस्योत्पत्तिमत्त्वे ब्रह्मणः तेन विशेषणं संभवति नीलेनेवोत्पलस्य। तस्मात् नित्यमेव आकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

## स्याच्चैकस्यापि ब्रह्मशब्दवत् ॥ ५ ॥

इदं पदोत्तरं सूत्रम्।

---

ननु—उत्पत्तिप्रतिपादिका हि श्रुतिः। सा, कथं 'वियन्नोत्पद्यते कारणसामग्र्यसम्भवात्, सृष्टेः प्राक् आकाशराहित्यासम्भवात्, तस्य जन्यत्वे विभुत्वासम्भवाच्च' इति युक्तिभिः गौणीत्युच्यते? श्रुतेः प्राबल्येन युक्तीनामाभासत्वोपपत्तेः-इत्याशङ्क्य, 'न वयं युक्तिमात्रेण आकाशस्संभूतइतिश्रुतिं गौणीं वर्णयामः, अपि तु एतादृशोपपत्तिरूपतात्पर्यलिङ्गसचिवात् शब्दात्' इत्याह—शब्दाच्चेति।

**नह्यमृतस्योत्पत्तिरिति**। जन्यभावस्य नित्यत्वानुपपत्तेः इति भावः। **आकाशशरीरमिति**। शरीरपदं, पूर्वपक्षशरीरं सिद्धान्तशरीरं इत्यादाविव स्वरूपपरम्। आकाशआत्मेत्यात्मपदमपि स्वरूपपरमेव। ब्रह्मणः आकाशस्वरूपत्वोपचारे आलम्बनं श्रुत्यन्तरप्रसिद्धं विभुत्वं नित्यत्वं च पर्यवस्यतीति भावः ॥ ४ ॥

**पदोत्तरमिति**। शङ्कापदानामुत्तरभूतमित्यर्थः।

स्यादेतत्—कथं पुनः एकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवति आकाशे च गौणत्वमिति ।

अत उत्तरमुच्यते—स्याच्च एकस्यापि संभूतशब्दस्य विषयविशेषवशात् गौणो मुख्यश्च प्रयोगः ब्रह्मशब्दवत् । यथा एकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' (तै. उ. ३।२) इत्यस्मिन्नधिकारे अन्नादिषु गौणः प्रयोगः आनन्दे च मुख्यः, यथा च, तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यते अञ्जसा तु विज्ञेये ब्रह्मणि, तद्वत् ।

कथं पुनः अनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' (छा. उ. ६।२।१) इतीयं प्रतिज्ञा समर्थ्यते, ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति । कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति ।

तदुच्यते—एकमेवेति तावत् स्वकार्यापेक्षया उपपद्यते । यथा लोके, कश्चित् कुम्भकारकुले पूर्वेद्युः मृद्दण्डचक्रादीनि चोपलभ्य अपरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात् 'मृदेवैकाकिनी पूर्वेद्युरासीत्' इति, स च तयाऽवधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात् न दण्डचक्रादि, तद्वत् । अद्वितीयश्रुतिः अधिष्ठात्रन्तरं वारयति—यथा मृदः अमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते नैवं ब्रह्मणो जगत्प्रकृतेः अन्योऽधिष्ठाताऽस्तीति । न च नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वम् । न च प्रागुत्पत्तेः ब्रह्मनभसोः लक्षणान्यत्वमस्ति क्षीरोदकयोरिव संसृष्टयोः, व्यापित्वामूर्तत्वादिधर्मसामान्यात् । सर्गकाले तु, ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति, तेन अन्यत्वमवसीयते । तथा च 'आकाशशरीरं ब्रह्म' इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः । अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः ।

---

शङ्कापदान्येवाह - स्यादेतदिति । आनन्दे च मुख्य इति । 'आनन्दो ब्रह्मेति व्यजानात्' इति वाक्ये । अत एव च ब्रह्मविज्ञानेनेति । यथा-एकमेवे-

अपि च—सर्वं कार्यं उत्पद्यमानं आकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा च अव्यतिरिक्तदेशकालमेवाकाशं भवति, इत्यतः ब्रह्मणा तत्कार्येण च विज्ञातेन सहविज्ञातमेव आकाशं भवति। यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति, न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्च अव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नभो भवति।

तस्मात् भाक्तं नभसः संभवश्रवणम्—इति ॥ ५ ॥

एवं प्राप्ते इदमाह—

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातम्' (छा. उ. ६।१।१) इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' (बृ. उ. ४।५।६) इति, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु. उ. १।१ ३) इति, 'न काचन मद्बहिर्धा विद्यास्ति' इतिचैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञायाः एवं अहानिः-अनुपरोधः स्यात्, यदि अव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सति 'एकविज्ञानेन सर्वं विज्ञायते' इतीयं प्रतिज्ञा हीयेत। स च अव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं वस्तुजातं एकस्माद्ब्रह्मण

---

त्यवधारणं स्वकार्यापेक्षम्, अद्वितीयमिति तु द्वितीयोऽधिष्ठाता नास्तीत्येतत्परं(वा) ब्रह्मविलक्षणं द्वितीयं नास्तीत्येतत्परं वा, तथा—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि ब्रह्मणि ज्ञाते तत्कार्यं कृत्स्नं ज्ञातं भवतीत्येतत्परं(वा) अकार्यमपि ब्रह्मसदृशत्वात् ब्रह्मणि विदिते विदितप्रायमित्यभिप्रायं वा भविष्यतीति।

वियतो ब्रह्मकार्यत्वाभावेऽपि ब्रह्मज्ञाननान्तरीयकज्ञानत्वात् सर्वविज्ञानप्रतिज्ञासङ्गतिरिति प्रकारान्तरमाह—अपि चेति ॥ ५ ॥

**न काचन मदिति।** मामविषयीकुर्वाणा कापि विद्या-किमपि ज्ञानं नास्तीत्यर्थः।

उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिः अवगम्यते । तथाहि—'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । तत्साधनायैव च उत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६।२।१), 'तदैक्षत' 'तत्तेजोऽसृजत' (छा. उ. ६।२।३) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्य अव्यतिरेकं प्रदर्शयन्ति 'ऐतदात्म्यमिदं सर्वम्' (छा. उ. ६।८।७) इत्यारभ्य आ प्रपाठकपरिसमाप्तेः । तत् यदि आकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात् । न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम् । तथा हि प्रतिवेदान्तं ते ते शब्दाः तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां [ख्या][स्था]पयन्ति 'इदं सर्वं यदयमात्मा' (बृ. उ. २।४।६) 'ब्रह्मैवेदममृतं पुरस्तात्' (मु. उ. २।२।११) इत्येवमादयः । तस्मात् ज्वलनादिवदेव गगनमप्युत्पद्यते ।

---

[1]अत्र—एकदेशिना उत्पत्त्यसम्भवरूपलौकिकोपपत्तिसहकृतात् 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिशब्दात् आकाशोत्पत्तिवचनं एकविज्ञानेनसर्वविज्ञानप्रतिज्ञानं च गौणं व्याख्येयं इत्युक्तं, तदसङ्गतम्—आकाशोत्पत्तिवचनं हि उपक्रान्तानन्त्योपपादनार्थं प्रवृत्तम्, न तत् अन्यथानेतुं शक्यम् । एवं एकविज्ञानेनसर्वविज्ञानप्रतिज्ञानमपि गतिसामान्यादिरूपानेकतात्पर्यलिङ्गोपेतं न अन्यथा व्याख्यातुं शक्यम् । तानि च तात्पर्यलिङ्गानि भाष्ये प्रदर्शितान्येव । न च-आकाशस्य अकार्यत्वेऽपि अविद्यादिवत् ब्रह्मण्यध्यस्ततया एकविज्ञानेनसर्वविज्ञानप्रतिज्ञासङ्गतिः- इति वाच्यम् । श्रुतिविरोधात् । श्रुत्या हि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः' इति आकाशस्य कार्यत्वप्रतिपादनेनैव [2]सा प्रतिज्ञा समर्थ्यते । अतो न स्वकपोलकल्पनया प्रतिज्ञाव्याख्यानमुचितम् ।

---

1. अत्रेति 'अयं भावः' इति शेषः ।
2. मु. 'सा' नास्ति

यदुक्तं अश्रुतेर्नवियदुत्पद्यते इति, तदयुक्तं-वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति।

सत्यं दर्शितम्। विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण।

न—एकवाक्यत्वात् सर्वश्रुतीनाम्।

भवत्वेकवाक्यत्वमविरुद्धानाम्। इह तु विरोध उक्तः-सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवात् द्वयोश्च प्रथमजत्वासंभवात् विकल्पासंभवाच्चेति।

नैष दोषः—तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः' (तै. उ. २।१) इति। अशक्या हि इयं श्रुतिः अन्यथा परिणेतुम्। शक्या तु परिणेतुं छान्दोग्यश्रुतिः 'तत् आकाशं वायुं च सृष्ट्वा तेजोऽसृजत' इति। न हि इयं श्रुतिः तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति। एकस्य वाक्यस्य व्यापारद्वयासंभवात्। स्रष्टा तु एकोऽपि क्रमेण अनेकं स्रष्टव्यं सृजेत् इति एकवाक्यत्वकल्पनायां संभवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या। न चास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्।

---

नन्वेकदेशिनापि तात्पर्यग्राहिकोपपत्तिरुपन्यस्ता। सत्यमुपन्यस्ता। परं तु, लौकिकोपपत्तिरूपात्तात्पर्यग्राहकात् वैदिकं आनन्त्यवाक्यैकवाक्यतादिरूपं तात्पर्यग्राहकं प्रबलम्-इति।

एवं एकदेशिनोक्ते वियदुत्पत्तिश्रुतेर्गौणत्वे निरस्ते विरुद्धत्वात्तद्यप्रामाण्यमेवास्त्विति पूर्वपक्षिणः प्रसक्तं चोद्यं अनुवदति—यदुक्तमित्यादिना।

परिहरति—न-एकवाक्यत्वादिति। अयं भावः—विरोधे हि प्रसक्ते अपौरुषेयस्य वेदस्य तावत् अप्रामाण्यमङ्गीकर्तुमयुक्तम्। अतः प्रबलवचनानुसारेण दुर्बलस्यान्यथानयनं आवश्यकम्। तत्र, छान्दोग्यावगततेजस्सर्गप्राथम्यानुसारेण यदि वियत्पवनयोः सृष्टिरेव नास्तीत्युच्येत, तदा तेजसस्तृतीयस्थानत्वमवगतं

यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा. उ. ३।१४।१) इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति।

ननु—शमविधानार्थमेतद्वाक्यम्, 'तज्जलानिति शान्त उपासीत' इति श्रुतेः, नैतत् सृष्टिवाक्यं, तस्मादेतत् न प्रदेशान्तरप्रसिद्धं क्रमं उपरोद्धुमर्हति। 'तत्तेजोऽसृजत' इत्येतत् सृष्टिवाक्यम्। तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्यः — इति।

नेत्युच्यते। न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात् क्रमस्य। अपि च–'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति। अर्थात्तु क्रमोऽवगम्यते। स च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते। विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयौ असंभवानभ्युपगमाभ्यां निवारितौ।

तस्मात् नास्ति श्रुत्योर्विप्रतिषेधः।

अपि च छान्दोग्ये 'येनाश्रुतं श्रुतं भवति' इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुं असमाम्नातमपि वियत् उत्पत्तावुपसंख्यातव्यं, किमङ्ग पुनः तैत्तिरीयके समाम्नातं नभो न संगृह्यते।

---

बाध्येत, वियत्पवनयोः सृष्टिश्रुतिश्च। न च [1]एकमनुसृत्य अनेकबाधो न्याय्यः। तेजसश्च छान्दोग्ये सृष्टिप्राथम्यं न श्रुतम्। अपि तु प्रथमपाठेन अर्थादवगम्यते। न च आर्थिकार्थमनुसृत्य शाब्दार्थबाधो न्याय्यः। अपि च प्राथम्यं सर्गधर्मः। सर्गस्तु पदार्थः। न च धर्मभूतेन प्राथम्यात्मना क्रमेण पदार्थस्य सर्गस्य बाधो न्याय्यः। अतः प्रबलया तैत्तिरीयश्रुत्या छान्दोग्यश्रुतिरेव अन्यथा नेया-इति।

न केवलं तैत्तिरीयकश्रुतिपर्यालोचनयैव अत्र वियत उपसंहारः, अपि तु छान्दोग्यगतैकविज्ञानेनसर्वविज्ञानप्रतिज्ञयाप्यपेक्षितः - इत्याह - अपि च छान्दोग्य इति।

---

1. मु. एकमनुरुध्य

यच्चोक्तं—आकाशस्य सर्वेणानन्यदेशकालत्वात् ब्रह्मणा तत्कार्यैश्च सहविदितमेव तद्भवति, अतो न प्रतिज्ञा हीयते। न च 'एकमेवाद्वितीयम्' इति श्रुतिकोपो भवति, क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेः — इति।

अत्रोच्यते। न क्षीरोदकन्यायेन इदं एकविज्ञानेनसर्वविज्ञानं नेतव्यम्। मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैव इदं सर्वविज्ञानं नेतव्यमिति गम्यते। क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्। न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति। न च वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणं उपपद्यते। सावधारणा चेयम् 'एकमेवाद्वितीयम्' इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीडयेत। न च स्वकार्यापेक्षया इदं वस्त्वेकदेशविषयं सर्वविज्ञानं एकाद्वितीयतावधारणं चेति न्याय्यम्। मृदादिष्वपि हि तत्संभवात् न तत् अपूर्ववदुपन्यसितव्यं भवति 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' (छा. उ. ६।१।२) इत्यादिना।

तस्मात् अशेषवस्तुविषयमेव इदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षया उपन्यस्यत इति द्रष्टव्यम् ॥ ६ ॥

---

एकदेशिना एकविज्ञानेनसर्वविज्ञानप्रतिज्ञादेर्यदन्यथानयनं कृतं, तदनूद्य दूषयति—यच्चोक्तमित्यादिना। न सम्यग्विज्ञानं स्यादिति। क्षीरोदकयोः संसृष्टयोः यत् क्षीरमिति क्षीरत्वप्रकारकं ज्ञानं तत् उदकांशे भ्रम एव। उदकस्य क्षीरोपादेयत्वाभावेन परमार्थगत्या क्षीरस्वरूपत्वाभावात्। एवं वियद्ब्रह्मणोरुपादानोपादेयत्वमनङ्गीकृत्यैव यदि संसृष्टत्वमात्रमङ्गीक्रियेत, तदा ब्रह्मात्मना वियद्ग्रहणमपि असम्यग्दर्शनं स्यादित्यर्थः। ऐन्द्रजालिककृत्यं मायेत्युच्यते। कविकृतमसद्वर्णनं अलीकमित्युच्यते। चोरादिकृत्यं वञ्चनमित्युच्यते। न तत् अपूर्ववदिति। एकविज्ञानेन यत्किञ्चिद्विज्ञानस्य लोकसिद्धत्वेन उपदेशानपेक्षणात्। अपि चैवं येनाश्रुतमित्यत्र अश्रुतादिशब्दाः कस्मिन्नुभगवोविज्ञातेसर्वमित्यादौ सर्वपदं च सङ्कुचितं स्यात्-इति उपसंहारव्याजेनाह—तस्मादिति ॥ ६ ॥

यत्पुनरेतदुक्तं—असंभवात् गौणी गगनस्योत्पत्तिश्रुतिः—इति । अत्र ब्रूमः—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तुशब्दः असंभवाशङ्काव्यावृत्त्यर्थः । न खलु आकाशोत्पत्तौ असंभवाशङ्का कर्तव्या । यतः यावत्किंचिद्विकारजातं दृश्यते घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव विभागो लोके लक्ष्यते । न तु अविकृतं किंचित् कुतश्चिद्विभक्तमुपलभ्यते । विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते । तस्मात् सोऽपि विकारो भवितुमर्हति । एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् ।

ननु—आत्मापि आकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत् प्राप्नोति ।

न—'आत्मन आकाशः संभूतः' इति श्रुतेः । यदि हि आत्मापि

---

यत्तावदुक्तमेकदेशिना-वियन्नोत्पद्यते असम्भावितकारणकत्वात्—इति, तत्प्रतिपक्षः अनेन सूत्रेण प्रतिपाद्यते । तत्र यावत्पदं व्याप्त्यर्थकम् । तथा च -[1]विकारव्याप्यो विभागः सर्वः, यथा घटादिगतो विभागः —इति सूत्रार्थमभिप्रेत्याह— यावदिति ।

ननु—यदि आकाशस्य विभक्तत्वेन हेतुना विकारत्वं साध्यते, तर्हि ब्रह्मणोऽपि [2]प्रपञ्चभेदाश्रयत्वेन विकारत्वं प्रसज्येत-इति शङ्कते—नन्वात्मापीति ।

'न—आत्मन आकाशः' इत्यादिपरिहारस्यायमभिप्रायः—'यो विभक्तः स विकारः' इत्युत्सर्गः सति बाधके त्यज्यते । आकाशे तु बाधकाभावात् किमर्थं परित्यक्तव्यः । [3]तावतापि हि, 'असम्भावितत्वात् आकाशे समवाय्यसमवायि-

---

1. विकारव्याप्य इति विकारस्य व्यापकता तादात्म्येन । अथवा भावप्रधानो निर्देशः । विकारत्वव्याप्य इत्यर्थः ।

2. मु. प्रपञ्चभेदप्रतियोगित्वेन । विभागो भेदः पृथक्त्वं इत्यनर्थान्तरम्—इति वदन्ति ।

3. तावताऽपि—औत्सर्गिक्यापि उक्तव्याप्त्या ।

विकारः स्यात् तस्मात् परं अन्यन्न श्रुतमिति आकाशादि सर्वं कार्यं निरात्मकं आत्मनः कार्यत्वे स्यात् । तथा च शून्यवादः प्रसज्येत ।

आत्मत्वादेव आत्मनो निराकरणशङ्कानुपपत्तिः । न हि आत्मा आगन्तुकः कस्यचित्, स्वयं सिद्धत्वात् । न ह्यात्मा आत्मनः प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्रमाणानि असिद्धप्रमेयसिद्धये उपादीयन्ते । न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः केनचिदभ्युपगम्यन्ते । आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यव-

---

निमित्तकारणानां तन्नोत्पद्यते' इति [1]तार्किकयुक्तिः प्रतिपक्षिता भवत्येव । न ह्ययं नियमः तार्किकेणाप्यास्थातुं शक्यते । ध्वंसस्य कारणत्रयाभावेऽपि जन्यत्वाभ्युपगमात् । न च [2]भावकार्यविषयोऽयं नियम इति वाच्यम् । शुक्तिरजतादेर्भावस्यापि द्रव्यद्रव्यसंयोगरूपासमवायिकारणं विनैव उत्पत्तिदर्शनात् । निराकृता चेयं तार्किकाभिमता आरम्भप्रक्रिया वैशेषिकाधिकरणे । ततश्च ब्रह्माविद्यादीनामकार्यत्वस्य श्रुतिस्मृतिन्यायसिद्धतया, 'यद्विभक्तं तत् कार्यम्' इत्युत्सर्गबाधे न काचिदनुपपत्तिः । **निरात्मकम्**—आगमापायरहितोपादानरहितं स्यात् । तथा [3]च, ब्रह्मणोऽपि कार्यत्वे नाशसम्भवात् शून्यपरिशेष एवेति न्यायः [4]उत्सर्गबाधकः ।

शून्यवादमुपेत्यैव आत्मनो जन्यत्वमङ्गीकुर्वाणं प्रति 'आत्मा नोत्पद्यते आत्मत्वात् स्वप्रकाशत्वाच्च, व्यतिरेकेण घटवत्' इत्यनुमानमाह—**आत्मत्वादेवेत्यादिना** । 'तस्य हि प्रत्यक्षादीनि' इत्यादिवाक्येन अनात्मसु स्वप्रकाशत्वहेतुव्यावृत्तिर्दर्शिता । असिद्धिनिरासाय 'न ह्यात्मा आत्मनः' इति वाक्येन सङ्ग्रहोक्तं

---

1. **तार्किकयुक्तिः** — श्रुत्यादिसहायरहिता केवला युक्तिः ।
2. मु. भावविषयोऽयं
3. आ. 'च' नास्ति
4. **उत्सर्गबाधक इति** तथा च उत्पत्तिमत्त्वबाधकाभावविशिष्टत्वेन व्याप्यस्य विशेषणात् न नियमस्य व्यभिचारो ब्रह्मणि अविद्यादौ च । आकाशे च तादृशबाधकाभावात् विकारत्वसिद्धिः — इति भावः । एतेन श्रुतप्रकाशिकोक्तं भाष्यदूषणं निरस्तं वेदितव्यम् ।

हारात् सिध्यति । न च ईदृशस्य निराकरणं संभवति । आगन्तुकं हि वस्तु निराक्रियते, न स्वरूपम् । य एव (हि) निराकर्ता तदेव तस्य स्वरूपम् । न हि अग्नेरौष्ण्यं अग्निना निराक्रियते ।

तथा 'अहमेव इदानीं जानामि वर्तमानं वस्तु' 'अहमेव अतीतमतीतरं चाज्ञासिषम्' 'अहमेव अनागतमनागततरं च ज्ञास्यामि' इति अतीतानागतवर्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात् ।

तथा भस्मीभवत्यपि देहे न आत्मन उच्छेदः, वर्तमानस्वभावादन्यथास्वभावत्वं वा न संभावयितुं शक्यम् । एवं अप्रत्याख्येयस्वभावत्वात् अकार्यत्वमात्मनः ।

कार्यत्वं च आकाशस्य ।

यत्तूक्तं–समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति,

तत् प्रत्युच्यते—न तावत्, समानजातीयमेवारभते न भिन्नजातीय-

---

आत्मनस्स्वप्रकाशत्वं विवृणोति—आत्मात्विति । प्रमाणादीनां व्यवहारः अवभासः, तं प्रति तादात्म्येनाश्रयत्वात्, चक्षुरादिजन्यज्ञानात् प्रागेव आत्मा स्वप्रकाशतया सिध्यतीत्यर्थः । अपि च-शून्यतोपगमे तस्य साक्षात्कारः कस्यचिदपेक्षितः, तथा च–य एव शून्यद्रष्टा परिशिष्यते स एव आत्मेति सिध्यतीत्याह–य एव निराकर्तेति । न च–निराकरणद्रष्टुरभावेपि अधुना एतदनुमीयते -अतः परं सर्वनिराकरणं भविष्यतीति–इति वाच्यम्, तथाविधलिङ्गाभावेनानुमानासम्भवात् इति भावः ।

ननु क्षणिकत्वादात्मनः प्रतिक्षणं तस्य निराकरणं—इत्याशङ्क्य, प्रत्यभिज्ञया स्थायितासिद्धेः न क्षणिकत्वं इत्यभिप्रेत्याह—तथा अहमेवेति ।

फलं तु–परमसिद्धान्ते आकाशस्य अविद्याशबलितब्रह्मकार्यतया आकाशादिक्रमेण प्रपञ्चसृष्टिं ध्यात्वा आकाशस्य अविद्यायां लयो ध्यातव्य इति प्रणवालम्बनेषु निष्प्रपञ्चयोगेषु सिध्यति, एकदेशिमते तु नैतत् सिध्यति—इति द्रष्टव्यम् ॥७॥

इति वियदधिकरणम्

मिति नियमोऽस्ति । न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति, द्रव्यगुणत्वाभ्युपगमात् । न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति ।

स्यादेतत्—समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तरविषय इति ।

तदप्यनैकान्तिकम् । सूत्रगोवालैर्ह्यनेकजातीयैः एका रज्जुः सृज्यमाना दृश्यते । तथा सूत्रैरूर्णादिभिश्च विचित्रान् कम्बलान् वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यं, सर्वस्य सर्वेण समानजातीयत्वात् ।

नापि 'अनेकमेवारभते नैकं' इति नियमोऽस्ति । अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुः मनश्च आद्यं कर्म आरभते न द्रव्यान्तरैः संहत्य—इत्यभ्युपगम्यते ।

द्रव्यारम्भे एव अनेकारम्भकत्वनियम इति चेत्,

न—परिणामाभ्युपगमात् । भवेदेष नियमः, यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकं अभ्युपगम्येत । तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नाम अभ्युपगम्यते । तच्च क्वचिदनेकं परिणमते मृद्बीजादि अङ्कुरादिभावेन । क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन । नेश्वरशासनमस्ति 'अनेकमेव कारणं कार्यं जनयति' इति ।

अतः श्रुतिप्रामाण्यात् एकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते । तथा चोक्तं 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' ब्र. सू. २।१।२४) इति ।

यच्चोक्तं—आकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति,

तदयुक्तम्—येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवत् इदानीमध्यवसीयते, स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते ।

यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्, 'अस्थूलमनणु' (बृ.उ. ३।८।८) इत्यादिश्रुतिभ्यः, एवं आकाशस्वभावेनापि न स्वभाववत् 'अनाकाशं' इतिश्रुतेरवगम्यते। तस्मात् प्रागुत्पत्तेरनाकाशमिति स्थितम्।

यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति,

तदप्यसत्—श्रुतिविरोधे सति उत्पत्त्यसंभवानुमानस्याभासत्वोपपत्तेः। उत्पत्त्यनुमानस्य च दर्शितत्वात्। अनित्यमाकाशम्, अनित्यगुणाश्रयत्वात्, घटादिवत्—इत्यादिप्रयोगसंभवाच्च। आत्मन्यनैकान्तिकमिति चेत्, न—तस्य औपनिषदं प्रति अनित्यगुणाश्रयत्वासिद्धेः। विभुत्वादीनां च आकाशस्योत्पत्तिवादिनं प्रति असिद्धत्वात्।

यच्चोक्तमेतत्-शब्दाच्चेति, तत्र, अमृतत्वश्रुतिस्तावद्वियति 'अमृता दिवौकसः' इतिवद्द्रष्टव्या। उत्पत्तिप्रलययोरुपपादितत्वात्। 'आकाशवत् सर्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय, न आकाशसमत्वाय। यथा इषुरिवसविताधावतीति क्षिप्रगतित्वायोच्यते न इषुतुल्यगतित्वाय, तद्वत्। एतेन अनन्तत्वोपमानश्रुतिर्व्याख्याता। 'ज्यायानाकाशात्' इत्यादिश्रुतिभ्यश्च ब्रह्मण आकाशस्य ऊनपरिमाणत्वसिद्धिः। 'न तस्य प्रतिमास्ति' (श्वे. उ. ४।१९) इति च ब्रह्मणोऽनुपमानत्वं दर्शयति। 'अतोऽन्यदार्तम्' (बृ. उ. ३।४।२) इति च ब्रह्मणोऽन्येषामाकाशादीनां आर्तत्वं दर्शयति। 'तपसि ब्रह्मशब्दवत् आकाशस्य जन्मश्रुतेर्गौणत्वम्' इत्येतत् आकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम्। तस्मात् ब्रह्मकार्यं वियदिति सिद्धम् ॥ ७ ॥

## २ मातरिश्वाधिकरणम्

# एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अतिदेशोऽयम्। एतेन-वियद्व्याख्यानेन मातरिश्वापि-वियदाश्रयो वायुः व्याख्यातः। तत्रापि एते यथायोगं पक्षा रचयितव्याः—

न वायुरुत्पद्यते, छन्दोगानां उत्पत्तिप्रकरणेऽनाम्नानात्—इत्येकः पक्षः। अस्ति तु तैत्तिरीयाणां उत्पत्तिप्रकरणे आम्नानम् 'आकाशाद्वायुः' इति-इति पक्षान्तरम्। ततश्च श्रुत्योर्विप्रतिषेधे सति, गौणी वायोरुत्पत्तिश्रुतिः, असंभवात्—इत्यपरोऽभिप्रायः। असंभवश्च दर्शितः 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ. उ. १।५।२२) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणाच्च। प्रतिज्ञानुपरोधात् यावद्विकारं च विभागाभ्युपगमात् उत्पद्यते वायुः – इति सिद्धान्तः। अस्तमयप्रतिषेधः अपरविद्याविषयः आपेक्षिकः। अग्न्यादीनामिव वायोरस्तमयाभावात्। कृतप्रतिविधानं च अमृतत्वादिश्रवणम्।

ननु वायोराकाशस्य च तुल्ययोः उत्पत्तिप्रकरणे श्रवणाश्रवणयोः एकमेवाधिकरणमुभयविषयमस्तु, किमतिदेशेन असति विशेषे—इति।

उच्यते—सत्यमेवमेतत्। तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयं अतिदेशः क्रियते, संवर्गविद्यादिषु हि उपास्यतया वायोर्महा-

---

अतिदेशनिवर्त्यां विशेषाशङ्कां दर्शयितुं शङ्कते—ननु वायोराकाशस्य चेति।

[1]सत्यमेवमेतदिति। अयमभिप्रायः—'वायुश्चान्तरिक्षं चैतदमृतम्' इति श्रुतिः 'अमृता देवाः' इति वचनवत् उपचारतः इति यत् पूर्वाधिकरणे उक्तं, तत् आकाशांश एव युक्तं, [2]न तु वाय्वंशेऽपि शक्यं वक्तुम्। बृहदारण्यके हि 'म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः' इति विशिष्य वायोः अभ्यासेन अस्तमयप्रतिषेधः प्रतिपाद्यते। न च अभ्यासेन प्रतिपाद्यमानोऽर्थः औपचारिक इति कल्पयितुं युक्तम्। न च-अत्र वाक्ये देवतायाश्चेतनायाः अस्तमयप्रतिषेधः प्रतिपाद्यते, न तु भूतस्येति—वाच्यम्। 'ज्वलिष्याम्येवाहमित्यग्निर्दध्रे'

---

1. आ. सत्यमेवतदिति

2. न तु वाय्वंशेऽपीत्यादि एतेन-अधिकाशङ्काया अभावात् नेदमतिदेशाधिकरणं युक्तमिति श्रुतप्रकाशिकोक्तं भाष्यदूषणं—निरस्तं भवति।

भागत्वश्रवणात् अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

३ असंभवाधिकरणम्

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

वियत्पवनयोः असंभाव्यमानजन्मनोरपि उत्पत्तिमुपश्रुत्य, 'ब्रह्मणोऽपि भवेत् कुतश्चिदुत्पत्तिः' इति स्यात् कस्यचित् मतिः। तथा विकारेभ्य एव आकाशादिभ्य उत्तरेषां विकाराणां उत्पत्तिमुपश्रुत्य, आकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चित् मन्येत । तामाशङ्कामपनेतुं इदं सूत्रं 'असंभवस्तु' इति ।

---

इत्यादिपूर्ववाक्ये [1]ज्वलनादिलिङ्गेन अग्न्यादिभूतं प्रस्तुत्य 'म्लोचन्ति ह्यन्या देवताः' इति हि देवतापदं तत्र प्रयुक्तम्, एवमिदमपि पदं वायुपदसामानाधिकरण्यात् भूतपरं भविष्यति । चेतनपरत्वनिर्बन्धे वा, भूतविशिष्टचेतनपरमित्येव वक्तव्यं, न तु निष्कृष्टवाय्वभिमानिदेवतापरम् । अतो विशेषणे भूतांशेऽपि अस्तमयप्रतिषेधो लभ्यत इति विशेषाशङ्का - इति ।

अयमत्र परिहाराभिप्रायः—इदमपि वाक्यं, 'अनेन ह्येतत् सर्वं वेद' [बृ. उ, १।४।७] इति एकविज्ञानेन सर्वविज्ञानं प्रस्तुत्य तदुपपादनाय सृष्टिं प्रक्रम्य. तत्प्रसङ्गागतस्य (तस्य) वायोः उपासनां प्रदर्शयितुं [2]स्तुतिः । ततश्च यथा, 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा' इति फलसंशयप्रतिपादकं वाक्यं स्वर्गकामोयजेतेतिप्रधानवाक्यानुरोधेन अतीकाशवाक्यैकवाक्यतापन्नं तद्विधिस्तुत्यर्थं सत् औपचारिकम्, एवमिदमपि प्रधानसर्वविज्ञानप्रतिज्ञानुरोधात् औपचारिकं द्रष्टव्यम् ॥ ८ ॥

इति मातरिश्वाधिकरणम्

सङ्गतिं दर्शयति—वियत्पवनयोरिति । 'सर्व एत आत्मानो व्युच्चरन्ति' [बृ. उ. मा. २।१।२३] इति श्रूयते आत्मन उत्पत्तिः, 'न चास्य कश्चिज्जनिता न

---

1. ज्वलनादिलिङ्गेनेति तृतीयार्थो ज्ञाप्यत्वं अग्न्यादिभूतप्रस्तावे अन्वेति ।

2. मु. इयं स्तुतिः

न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभवः-उत्पत्तिः

---

चाधिपः' इति उत्पत्तिप्रतिषेधश्च। अतः श्रुत्योर्विरोधः। न च–'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यत्र आत्मोत्पत्तिः परिहरिष्यते, ततः तेन पौनरुक्त्यमस्येति–वाच्यम्। सर्वएतआत्मानोऽव्युच्चरन्तीतिश्रुतेर्जीवपरत्वं स्वीकृत्य तत्र विरोधः परिहरिष्यते। इह तु परमात्मपरत्वमुपेत्य विरोधपरिहारः क्रियते।

तत्र–परमात्मा जन्यो भवति, कारणत्वात् [1]आकाशवत्-इत्युपपत्तिसहकृता सर्वएतआत्मानइतिश्रुतिः प्रबला, तदनुसारेण नचास्यकश्चिदित्याद्युत्पत्तिप्रतिषेधाः वायुश्चान्तरिक्षंचैतदमृतमितिवत् गौणा व्याख्येयाः। न च ब्रह्मणः कारणासम्भवः। [2]ब्रह्मान्तरस्य कारणत्वसम्भवात्। तस्याप्यन्यत् तस्याप्यन्यदिति पूर्वपूर्वकारणानवस्था तु प्रमाणसिद्धत्वात् न दोषः। ब्रह्मण [3]एकत्वादिप्रतिपादनं तु जात्याद्यभिप्रायं यथाकथञ्चिन्नेयम्-इत्येकदेशिमतम्।

[4]परमसिद्धान्तमाह—**न खलु ब्रह्मण इति**। ब्रह्मणो हि उत्पत्त्यादिसर्वविकारप्रतिषेधपरा बह्व्यः श्रुतयः अनेकतात्पर्यलिङ्गोपेताः न एकया श्रुत्या अन्यथयितुं शक्याः। अतः क्वचित्कोत्पत्तिप्रतिपादनमेव औपाधिकोत्पत्त्यभिप्रायं

---

1. मु. आकाशादिवत्

2. **ब्रह्मान्तरस्यकारणत्वेति** अग्निविस्फुलिङ्गदृष्टान्तः श्रुतः। तत्र यथा अग्नेः अग्निरेव विस्फुलिङ्गः उत्पद्यते एवं ब्रह्मान्तरात् ब्रह्म इति भावः।

3. एकत्वादीत्यादिपदेन अद्वितीयत्वपरिग्रहः, जात्यादीत्यादिपदेन असहायत्वपरिग्रहः।

4. **परमसिद्धान्तमाहेत्यादि** अत्र ब्रह्मणः कार्यत्वशङ्कानिरासः श्रुत्या युक्त्या च। नातः श्रुतप्रकाशिकोक्तविकल्पावकाशः। यत्तु-श्रुत्या चेत् समन्वयाध्यायकृतकरत्वप्रसङ्गः-इति। तन्न-समन्वयाक्षेपतत्समाधानपरत्वादस्याध्यायस्य। परेषां तु सूत्रार्थवर्णनं 'सत एव' इति एवकाराध्याहारदोषदुष्टम्। तुशब्दस्य एवार्थत्ववर्णनं सूत्रकारशैलीविरुद्धम्। 'भावं तु' 'दृश्यते तु' 'न तु दृष्टान्तभावात्' 'तदभिध्यानादेव तु' इत्यादौ पक्षान्तरनिराकरणार्थतया एव दृष्टत्वात्। अत एव 'यावद्विकारं तु' इत्यत्र तुशब्दस्य चार्थवर्णनमप्ययुक्तम्।

आशङ्कितव्या। कस्मात्? । अनुपपत्तेः। सन्मात्रं हि ब्रह्म। न तस्य सन्मात्रादेव उत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषात्, दृष्टविपर्ययात्। सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयः, न तु विशेषेभ्यः सामान्यम्। नाप्यसतः, निरात्मकत्वात्। 'कथमसतः सज्जायेत' (छा. उ. ६।२।२) इति च आक्षेपश्रवणात्। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे. उ. ६।९) इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनः उत्पत्तिः प्रदर्शिता, न तु ब्रह्मणः साऽस्ति—इति वैषम्यम्।

न च—विकारेभ्यो विकारान्तरोत्पत्तिदर्शनात् ब्रह्मणोऽपि विकारत्वं भवितुमर्हति-इति। मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्म इत्यविरोधः॥ ९॥

---

व्याख्येयम्। या च तदुपबृंहणाय उपपत्तिरुक्ता—कारणत्वात् ब्रह्मापि जन्यमिति, तस्या उपपत्त्यन्तरेण प्रतिघातमाह—सन्मात्रं हि ब्रह्मेत्यादिना। असत्यतिशय इति। मृद्घटयोरुपादानोपादेययोर्वैलक्षण्यं दृष्टम्, अतः अत्यन्तसालक्षण्ये कार्यकारणभावो नोपपद्यत इति भावः।

मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसङ्गादिति। प्रमाणसिद्धे हि कार्यकारणभावे अनवस्था न दोषाय। इह तु नास्ति प्रमाणम्। उक्तानुमानस्याप्रयोजकत्वात्, श्रुतिबाधितत्वात्, सन्मात्रंहीत्यादिभाष्योक्तविकल्पासहत्वाच्च।

एकदेशिमते ब्रह्मावाप्तिर्मोक्षोऽपि न निरतिशयपुरुषार्थः, जन्यस्य ब्रह्मणो नाशसम्भवात्। सिद्धान्ते तु तत्सिद्धिः॥ ९॥

इति असम्भवाधिकरणम्

भूतोत्पत्तिविचारे ब्रह्मण उत्पत्तिः सङ्गतिविशेषेण प्रसक्तत्वात् निरूपिता, पुनः [1]सैव निरूप्यते। वियद्वायुतेजसां क्रमेण सृष्टेः प्रतिपादनात् वायुविचारानन्तरं तेजोनिरूपणम्।

---

1. सैव—भूतोत्पत्तिरेव।

### ४. तेजोऽधिकरणम्

## तेजोतस्तथाह्याह ॥ १० ॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वम्। तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां, प्राप्तं तावत् 'ब्रह्मयोनिकं तेजः' इति। कुतः? । 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात्, सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात्, 'तज्जलान्' (छा. उ. ३।१४।१) इति च अविशेषश्रुतेः, 'एतस्माज्जायते प्राणः' (मु. उ. २।१।३) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्य अविशेषेण ब्रह्मजत्वोपदेशात्, तैत्तिरीयके च 'स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किंच' (तै. उ. २।६।१) इति अविशेषश्रवणात्। तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः—वायोरनन्तरं अग्निः संभूतः-इति।

---

श्रुतिविप्रतिपत्तौ सत्यामिति। तथा च अप्रामाण्यमिति पूर्वः पक्षः।

एकदेशिमतमाह—प्राप्तं तावदिति। वायोरनन्तरमग्निस्सम्भूत इतीति। ननु—'वायोरग्निः अग्नेरापः' इत्याद्या पञ्चमी कारकविभक्तिरेवोपेया। 'तस्माद्वा एतस्मादात्मनः' इत्यादिकारकविभक्तिसमभिव्याहारात्। क्रमार्थत्वे तु उपपदविभक्तिः स्यात्। सा तु दुर्बला। श्रुतक्रियापदव्यतिरेकेण पदान्तराध्याहारसापेक्षत्वात्। दर्शितश्चात्र पदान्तराध्याहारः—वायोरनन्तरं अग्निः सम्भूतः-इति। ततश्च वाय्वादिषु उत्तरेषु कार्येषु पूर्वपूर्वसृष्टवियदादिविशिष्टब्रह्मण एव उपादानत्वम्-इति चेत्—

उच्यते—तथासति हि तज्जलानित्यादिषु वचनेषु बहुषु यत् ब्रह्मणो नैरपेक्ष्यमवगतं [1]तत् बाधितं भवेत्। स्पष्टं च ब्रह्मव्यतिरिक्तस्योपादानस्य व्यावर्तनं दृश्यते 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' [छा.उ. १. ९. १]-इति। अत्र हि आकाशशब्दो ब्रह्मपर इति व्यवस्थापितं 'आकाशस्तल्लिङ्गात्' [ब्र. सू. १. १. २२] इत्यत्र। अतः अनेकश्रुत्यनुग्रहाय आकाशाद्वायुरित्याद्याः पञ्चम्यः आनन्तर्यप्रतिपादिकाः-इति तात्पर्यम्।

---

1. मु. तत् बाध्येत

**एवं प्राप्ते उच्यते—तेजः अतः – मातरिश्वनः जायते इति। कस्मात्? । तथा ह्याह 'वायोरग्निः' इति। अव्यवहिते हि तेजसो ब्रह्मजत्वे सति असति वायुजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता स्यात्।**

**ननु क्रमार्थैषा भविष्यतीत्युक्तम्**

**नेति ब्रूमः—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति पुरस्तात् संभवत्यपादानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेः इहाधिकारात्, परस्तादपि च तदधिकारे 'पृथिव्या ओषधयः' (तै उ. २।१।१) इत्यपादानपञ्चमीदर्शनात् वायोरग्निरिति अपादानपञ्चम्येवैषेति गम्यते।**

---

'उच्यते तेजोऽतः' इत्यनेन वायुरप्याकाशाज्जायत इति सूचितः[1]। न्यायसाम्यात्।

तदधिकारे पृथिव्या इति। पृथिव्या हि ओषधीः प्रति उपादानत्वं प्रत्यक्षसिद्धं न प्रत्याख्यातुं शक्यं इति भावः। अपादानपञ्चम्येवैषेतीति। न च उदाहृतश्रुतिविरोधात् पञ्चमीस्वारस्यं परित्याज्यमित्युक्तमिति वाच्यम्। 'एतस्माज्जायते प्राणः' इत्यादौ हि ब्रह्मणो नैरपेक्ष्यं न श्रौतम्। एवकाराश्रवणात्। न च 'व्रीहिभिर्यजेतेत्यादौ एवकाराश्रवणेऽपि नैरपेक्ष्यमुपेतमिति वाच्यम्। वाक्यगतिपर्यालोचनया तस्योपेतत्वात्। तद्धि वाक्यं व्रीहिनियमपरं सत् यागे [2]व्रीह्यवियोगं प्रतिपादयति। व्रीहिस्वरूपस्य वचनं विनैव प्राप्तत्वात्। द्रव्यान्तरसमुच्चये च तदंशे व्रीहिवियोगो भवेत्। अतः अर्थात् तत्र इतरनिवृत्तिरवगम्यते। प्रकृते तु अपञ्चीकृतवाय्वाद्युपादानं शास्त्रैकसमधिगम्यमिति शास्त्रबलेन यावन्ति तत्र उपादानान्यवगम्यन्ते तावतां [3]समुच्चय एव न्याय्यः। आकाशादेवेत्येवकारस्तु न निरङ्कुशं इतरकारणानि व्यावर्तयितुं समर्थः। घटादिषु मृदादिकारणानां प्रत्यक्ष-

---

1. **सूचित इति** एतेन—ब्रह्मयोनित्वाकाशयोनित्वचिन्ता कस्मात् वायौ न कृता-इति शङ्काया नावकाशः।

2. मु. व्रीह्याद्यवियोगं

3. **समुच्चय एव न्याय्य इति** एतेन 'सिद्धान्ते किं निरसनीयम्' इत्यादिना श्रुतप्रकाशिकोक्तदूषणानां नावकाशः।

अपि च—वायोरूर्ध्वमग्निस्संभूत इति कल्प्यः उपपदार्थयोगः, क्लृप्त-स्तु कारकार्थयोगः वायोरग्निस्संभूत इति । तस्मात् एषा श्रुतिः वायुयोनित्वं तेजसोऽवगमयति ।

ननु इतरापि श्रुतिः ब्रह्मयोनित्वं तेजसोऽवगमयति 'तत्तेजोऽसृजत' इति ।

न—तस्याः पारम्पर्यजत्वेऽप्यविरोधात् । यदापि हि आकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं तेजसो न विरुध्यते । यथा 'तस्याः शृतं तस्या दधि तस्या आमिक्षा' इत्यादि । दर्शयति च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' (तै. उ. २।७।१) इति । तथा च ईश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः'

---

सिद्धत्वात्, वियदादिष्वपि 'मायां तु प्रकृतिं विद्यात्' [श्वे. उ. ४. १०] इति श्रुतिसिद्धमायायाः सत्त्वाच्च । अतः [1]स्वसदृशमूलकारणान्तरव्यवच्छेदार्थ एव स इति न वाय्वादिषु श्रुतिस्वारस्यप्राप्ताकाशादिसमुच्चयो निराकरणीयः ।

पारम्पर्यजत्वेऽप्यविरोधादिति । यद्यपि ब्रह्मणो वाय्वादिपूत्तरकार्येषु न परम्परयैव कारणत्वम्, यथा घटे कुलालस्य पितुः ; अपि तु, यथा मृदाहरणादीनि घटकारणानि सम्पाद्य तत्सचिवः कुलालो घटं करोतीति घटकारणकारणस्यापि तस्य घटं प्रत्यपि साक्षादेव जनकत्वं, तदुपादानगोचरकृतिशालित्वात्, तथा ब्रह्मणोऽपि वाय्वादिकारणवियदादिजनकस्यापि वाय्वादौ साक्षादेवोपादानत्वं कर्तृत्वं च । 'वायुस्सन्' इत्यादितादात्म्योपलम्भात्, इदंसर्वमसृजतेति श्रुत्या सर्वकर्तृत्वस्य ऐत-दात्म्यमिदंसर्वमिति सर्वोपादानत्वस्य च अविशेषेण प्रतिपादनाच्च । तथापि कारण-कारणत्वमस्तीत्येतावता पारम्पर्यजत्वोक्तिः । तावतैव दृष्टान्तमाह—तस्याश्शृत-मिति । तस्याः-गोः, शृतं-दुग्धम् । तस्यादधीत्यादौ षष्ठी पारम्पर्यसम्बन्धे ।

---

1. **स्वसदृशेत्यादि** एतेन—वाय्वादौ आकाशादेः परिणाम्युपादानत्वम्, तथा च 'वायुराकाशः' 'वायुस्तेजः' इत्यादिसामानाधिकरण्यप्रत्ययाभावेऽपि न उपादान-त्वानुपपत्तिः । वृश्चिकादौ गोमयसामानाधिकरण्याप्रतीतावपि परिणामत्वसम्प्रतिपत्तेः- इत्यादि सूचितम् । तेन न श्रुतप्रकाशिकोक्तदूषणानां अवकाशः ।

इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (भ. गी. १०।५) इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते, तथापि, सर्वस्य भावजातस्य साक्षात् प्रणाड्या वा ईश्वरवंश्यत्वात्। एतेन अक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः। तासां सर्वथोपपत्तेः। क्रमवत्सृष्टिवादिनीनां तु अन्यथानुपपत्तेः।

प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहितजन्यत्वं इत्यविरोधः ॥१०॥

५ अबधिकरणम्

## आपः ॥ ११ ॥

'अतस्तथाह्याह' इत्यनुवर्तते। आपः अतः-तेजसः जायन्ते। कस्मात्? तथा ह्याह 'तदपोऽसृजत' इति, 'अग्नेरापः' इति च। सति वचने नास्ति संशयः। तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन् अपो नान्तरयामीति आपइति सूत्रयांबभूव ॥ ११ ॥

---

अत्र, एकदेशिमते ब्रह्मण एव सकाशात् वाय्वादेः सृष्टिश्चिन्तनीया, तत्रैव च लयश्चिन्तनीयः। सिद्धान्ते तु, वियदादिक्रमेणापि सृष्टिश्चिन्तयितुं शक्यते, तथा वाय्वादेः वियदादिषु (लयः क्रमेण ब्रह्मणीत्यपि) [लयक्रमेणापि लयो ब्रह्मणि] चिन्तयितुं शक्यते।

सद्वंश्यत्वमात्रमपेक्षत इति अभ्युच्चयोक्तिः। सर्वस्य भावजातस्य साक्षात् प्रणाड्या च ईश्वरवंश्यत्वात्-इति ह्युक्तम् ॥ १० ॥

इति तेजोऽधिकरणम्

पूर्वसूत्रगतपदानुवृत्त्या सूत्रं व्याचष्टे—अतस्तथेत्यादिना। अपो [1]नान्तरयामीति। तासां परित्यागे हि, "इदंसर्वमसृजतेतिअग्नेरापइतिचश्रुत्योर्विरोधादप्रामाण्येन पूर्वपक्षे, अपामग्निविरोधित्वेन तत्प्रकृतित्वासम्भवात् अग्नेराप इति आनन्तर्यार्थिकैव पञ्चमी अगत्या स्वीकार्या" इतिविशेषाशङ्कानिवारणं न सूचितं भवेत्, अतः तच्छङ्कायाः 'त्रिवृत्कृताग्नेः अपां च विरोधे सत्यपि अत्रिवृत्कृत-

---

1. नान्तरयामि—न परित्यजामि। आ. नापोऽन्तरियामिति

६ पृथिव्यधिकरणम्

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' (छा. उ. ६।२।४) इति श्रूयते। तत्र संशयः—किं अनेनान्नशब्देन व्रीहियवादि, अभ्यवहार्यं वा ओदनादि, उच्यते? किं वा पृथिवीति।

तत्र प्राप्तं तावत् व्रीहियवादि ओदनादि वा परिग्रहीतव्यमिति। तत्र हि अन्नशब्दः प्रसिद्धो लोके। वाक्यशेषोऽप्येतमर्थमुपोद्बलयति 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति' (छा. उ. ६।२।४) इति। व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवी-इति।

---

योरप्तेजसोः विरोधो नास्ति' इतिपरिहारसूचनाय क्रमप्राप्ता आपोऽपि सूत्रिताः इति भावः ॥ ११ ॥

इति अबधिकरणम्

'अभ्द्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्' [तै. उ. २. १.] इति क्वचित्, अन्यत्र च 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' इत्याम्नायते। अतः श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे—

एकदेशिमतमाह—तत्र प्राप्तं तावदिति। अन्नशब्दो यद्यपि 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इति कोशानुसारेण ओदने रूढः, तथापि 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति' इति वाक्यशेषाम्नातं वर्षणाधीनभूयिष्ठत्वं व्रीहियवाद्योषधीष्वेव स्वरसमिति ओषधीपर एव अन्नशब्दः ताअन्नमसृजन्तेत्यत्र प्रतीयते। एवमेव च 'अभ्द्य एव तदध्यन्नाद्यं जायते' इति [1][छा. उ. ६.२] आद्यमिति पदं च सङ्गच्छते। न हि तत् अन्नशब्दस्य विशेषणम्। ओदनादेरदनीयत्वाव्यभिचारात्, अनदनीयस्याप्यन्नस्य अब्जन्यत्वेन व्यावर्तयितुमशक्यत्वाच्च। तस्मात् 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' [तै. उ. २. २] इति वाक्यमिव आद्यशब्दोऽपि अन्नशब्दस्य योगप्रदर्शनपर एव। अतः इह ओदनानोदनसाधारण्येन अदनयोग्यं सर्वं अन्नशब्देन ग्राह्यं इत्यभिप्रेत्य व्रीहियवादि इत्युक्तम्।

---

1. आ. इत्यत्र आद्य

एवं प्राप्ते ब्रूमः—पृथिव्येवेयं अन्नशब्देन अद्भ्यो जायमाना विवक्ष्यते-इति । कस्मात् ? अधिकारात् रूपात् शब्दान्तराच्च ।

अधिकारस्तावत् 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति महाभूतविषयो वर्तते । तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य न अकस्मात् व्रीह्यादिपरिग्रहो न्याय्यः ।

तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते 'यत्कृष्णं तदन्नस्य' इति । न हि ओदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति, नापि व्रीह्यादीनाम् । ननु—पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, पयःपाण्डुरस्य अङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् । नायं दोषः—बाहुल्यापेक्षत्वात् ।

---

न चैवंसति 'अभ्द्यः पृथिवी । पृथिव्या ओषधयः' इति वाक्यं विरुध्येत । उपसंहारसम्भवात् ।

ननु—तर्हि सिद्धान्त्येकदेशिमतयोः को विशेषः । येनापि हि सिद्धान्तिना अन्नशब्दः ताअन्नमसृजन्तेति पृथिवीलक्षक इत्युच्यते तन्मतेऽपि 'आपः, पृथिवी, ओषधयः' इत्येव सृष्टिक्रमः, येनाप्येकदेशिना उपसंहारः स्वीक्रियते, तन्मतेऽपि अयमेव क्रमः-इति चेत्

उच्यते—एकदेशिमते, पृथिव्या उपसंहारेऽपि, यथा तेजसि वियत्पवनयोरुपसंहारेऽपि न साक्षात् ब्रह्मजन्यत्वं विरुध्यते एवं ओषध्यादावन्ने ताअन्नमसृजन्तेतिश्रुतिप्रामाण्यात् अपञ्चीकृतानामपामपि [1]कारणत्वं साक्षादेव उपपद्यते । सिद्धान्ते तु, अन्नशब्दस्य पृथिवीलक्षकतया अपञ्चीकृतानामपां अन्नाद्ये कारणत्वग्राहकप्रमाणाभावात् पृथिव्यादिद्वारैवोपयोगः-इति विशेषः ।

पृथिव्येवेयमन्नशब्देनेति । अन्नशब्दरूढिर्हि एकदेशिनापि वाक्यशेषानुसारिणा परित्यक्तव्यैव । तथा च अमुख्यार्थग्रहणे प्रसक्ते, [2]अधिकाराद्यनेकप्रमाणानुसारेण एकं वाक्यशेषं अवधूय, अन्नशब्दः पृथिवीलक्षक एव ग्राह्यः । अधिकारादयश्च भाष्ये प्रपञ्चिताः—अधिकारस्तावदित्यादिना ।

---

1. मु. साक्षादेव कारणत्वं
2. आ. अधिकाराद्यनेकप्रामाण्यानुसारेण

भूयिष्ठं हि पृथिव्याः कृष्णं रूपं, न तथा श्वेतरोहिते। पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति, सा च कृष्णाभासा-इत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते।

श्रुत्यन्तरमपि समानाधिकारं 'अद्भ्यः पृथिवी' इति भवति। 'तद्यद् अपां शर आसीत् तत् समहन्यत सा पृथिव्यभवत्' (बृ. उ. १।२।२) इति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति 'पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्' इति च। एवं अधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः।

प्रसिद्धिरपि अधिकारादिभिरेव बाध्यते। वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एव अद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम्। तस्मात् पृथिवी इयमन्नशब्देति॥

---

तद्यदपां शर इति। तत्-तत्र अप्सु सृष्टासु सतीषु, तासां यः शरः-क्षीरस्य मण्ड इव य ईषद्घनीभूतो विकारः आसीत्, स समहन्यत-इतस्ततो विप्रकीर्ण एकीभावं प्राप्य कठिनोऽभवत्। विकार एव पृथिवीसंज्ञां प्राप्तवानित्यर्थः। यद्यपि-इदं वाक्यं हिरण्यगर्भसृष्टिप्रतिपादकत्वात् स्थूलानामेव अपां स्थूलां पृथिवीं प्रति कारणत्वं प्रतिपादयति, ताअन्नमसृजन्तेतिवाक्यं तु सूक्ष्मभूतसृष्टिप्रतिपादकम्, तदनन्तरं त्रिवृत्करणप्रतिपादनात्, तथापि—यदा स्थूलानामपां स्थूलां पृथिवीं प्रत्येव साक्षात्कारणत्वं न तु व्रीहियवादावन्ने, तदा अपञ्चीकृतानामपां साक्षादेव व्रीहियवादावन्ने कारणत्वं दूरनिरस्तमेव भवतीति तदुदाहरणं प्रकृतोपयुक्तं भवत्येव।

एकदेश्युदाहृतवाक्यशेषगतिमाह—वाक्यशेषोऽपीति। यथा पार्थिवं व्रीहियवादि वृष्टिरूपाब्जन्यं एवं तज्जातीया पृथिव्यपि सूक्ष्माभ्योऽद्भ्यो जायत इति सम्भावनार्थोऽयं वाक्यशेष इति भावः।

एकदेशिमते, व्रीहियवादिलयानुसन्धानं पृथिव्यादिलयक्रमेणापि कर्तुं शक्यं साक्षादपि अपञ्चीकृतास्वप्सु कर्तुं शक्यम्, सिद्धान्ते तु, पृथिव्यादिलयक्रमेणैव-इति फलविशेषः॥ १२॥

इति पृथिव्यधिकरणम्

### ७ तदभिध्यानाधिकरणम्

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

किं इमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्ति, आहोस्वित् परमेश्वर एव तेनतेनात्मना अवतिष्ठमानः अभिध्यायन् तं तं विकारं सृजति—इति संदेहे सति,

---

ननु—अत्र भूतानां वियदादीनां उत्तरोत्तरभूतेषु यथाश्रुति उपादानत्वे व्यवस्थापिते, वियदादीनां तर्हि ब्रह्मवदेव [1]अन्यानधिष्ठितानामुपादानत्वमस्त्विति शङ्कायां प्राप्तायां, तन्निराकरणार्थमिदमधिकरणमिति भाष्यपर्यालोचनया प्रतीयते । 'अचेतनानां प्रवृत्तिः निरधिष्ठातृका नोपपद्यते' इति शङ्कायां च 'ता आप ऐक्षन्त'-इत्यादिश्रुतिपर्यालोचनया भूतानां चेतनत्वावगमात्, यथा चेतनस्य ब्रह्मणो जगद्रचनायां न चेतनान्तरापेक्षा एवं भूतानामपि जगद्रचनायां न चेतनान्तरापेक्षा-इति प्रतीयते । नैतदुपपद्यते—भूतानां चेतनकार्यप्रवृत्त्यादिराहित्येन अचेतनत्वात् । 'तत्तेज ऐक्षत' इत्यादिश्रुतिस्तु गौणीति ईक्षत्यधिकरण एव दर्शितम् ।

उच्यते—'ता आप ऐक्षन्त' इत्यादिश्रुतिर्मुख्यैवास्तु, न गौणी । शास्त्रप्रामाण्यात् । अस्मदादिभिर्दुर्विभाव्यं भूतानामपि चैतन्यमस्तु—इति शङ्को मन्यते ।

तथा च अयमधिकरणार्थः—

'आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत' इति श्रुतिः, 'सोऽकामयत, बहु स्यां प्रजायेयेति, स तपोऽतप्यत, स तपस्तप्त्वा, इदं सर्वमसृजत' इति श्रुतिश्च, विरुद्धे । [2]एका भूतानां उत्तरोत्तरभूते कर्तृत्वं प्रतिपादयति, द्वितीया तु सर्वत्र ईश्वरस्य कर्तृत्वं प्रतिपादयति । न च-ईश्वरः सर्वत्र साधारणकारणं तत्तद्भूतं तु विशेषकारणमिति कर्तृद्वयसमावेशोऽस्तु—इति वाच्यम् । कर्त्राकाङ्क्षाया विशेषावगतेनैव कर्त्रा उपशमे सति समुच्चयकल्पनाया अयोगात्-इति मन्यते । तथा च अप्रामाण्यम्—इति पूर्वपक्षे,

---

1. आ. अन्यानधिष्ठितानामेव उपा
2. मु. एका किल

प्राप्तं तावत् स्वयमेव सृजन्तीति । कुतः ? 'आकाशाद्वायुः, वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । ननु अचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा । नैष दोषः–'तत्तेज ऐक्षत, ता आप ऐक्षन्त' (छा. उ. ६।२।३।४) इति च भूतानामपि चेतनत्वश्रवणात्-इति ।

एवं प्राप्तेऽभिधीयते—

स एव परमेश्वरः तेनतेनात्मना अवतिष्ठमानः अभिध्यायन् तं तं विकारं सृजतीति । कुतः ? तल्लिङ्गात् । तथा हि शास्त्रं 'यः पृथिव्यां

---

एकदेशिमतम्—ईश्वरकर्तृत्वप्रतिपादिकायाः श्रुतेः पारम्पर्येऽप्युपपत्तेः न विरोध इति । न च-एवंसति प्रत्यक्षदृष्टकुलालादिभिरेव घटादौ कर्त्राकाङ्क्षानिवृत्तेः न तत्र ईश्वरस्य कर्तृत्वं भवेत्, प्रत्यक्षदृष्टेन च राज्ञैव परिपालनोपपत्तेः न परमेश्वरस्य सर्वपरिपालकतापि स्यात् इति-वाच्यम् । इष्टापत्तेः । सर्वकर्तृत्वप्रतिपादिकायाः श्रुतेः पारम्पर्येणैवोपपत्तेरुक्तत्वात् । एवं [1]सर्वनियन्तृत्वश्रुतिरपि पारम्पर्येणैवोपपद्यते । न च एवंसति नान्योऽतोस्तीति श्रुतिः ईश्वरातिरिक्तस्य द्रष्टृत्वं वारयन्ती भूतानां द्रष्टृत्वाभ्युपगमे बाध्येत इति वाच्यम् । तस्या जीवब्रह्माभेदप्रतिपादनपरत्वेन भूतानां द्रष्टृत्वव्यावर्तने तात्पर्याभावात् । एवं च एकदेशिमते सगुणेषूपासनेषु ध्येयं सर्वकर्मत्वादिकं पारम्पर्येणैवेति फलं द्रष्टव्यम् ।

आकाशाद्वायुरिति । ननु–अत्र कर्तृत्वं भूतानां नावगम्यते, आकाशादित्यादिपञ्चम्या उपादानत्वार्थकत्वात् - इति चेत् - न - 'ता आप ऐक्षन्त' इतिश्रुत्यर्थोपसंहारे सति कर्तृत्वस्याप्यवगन्तुं शक्यत्वात्—इति भावः ।

अयमत्र सिद्धान्ताभिप्रायः — कार्यमात्रे ईश्वरस्य कर्तृत्वं श्रुतिस्वारस्यात् साक्षादेव अवगम्यते, एवं नियन्तृत्वमपि । न चैतत् परित्यक्तुं शक्यम् । न च एकेनोपपत्तौ नान्यनिवेशः सम्भवतीति वाच्यम् । न हि वयं ईश्वरस्य कर्तृत्वं युक्त्या कल्पयामः, येन इत्थं शङ्का भवेत् । अपि तु शास्त्रवशेनोपगच्छामः । अतो यथाशास्त्रमुपगमो न्याय्यः । शास्त्रमाह तथाहि शास्त्रमिति । एवं च, यद्यपि भूतानां चैतन्यं भवेत् तथापि ईश्वरस्य सर्वकर्तृत्वं न व्यावर्तयितुं

---

1. मु. सर्वविषयनियन्तृत्व

तिष्ठन् यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवी-मन्तरो यमयति' (बृ. उ. ३।७।३) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामयत बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत् । तदात्मानं स्वयमकुरुत' इति च तस्यैव च सर्वात्मभावं दर्शयति । यत्तु ईक्षणश्रवणमप्तेजसोः तत् परमेश्वरावेशवशादेव द्रष्टव्यम् । 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) इति ईक्षित्रन्तरप्रतिषेधात्, प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत बहु स्यां प्रजायेय' इत्यत्र ॥ १३ ॥

---

शक्यम् । परमार्थतस्तु तदेव नास्ति, 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतिसहकृतेन प्रवृत्त्यादिराहित्यलिङ्गेन तदचेतनत्वावधारणात् । न च नान्योऽतोऽस्तीति जीव-ब्रह्मैक्यं आहत्य प्रतिपादयति, अपि तु द्रष्ट्रन्तरनिषेधमुखेन तत्र पर्यवस्यति । तथा च, यदि भूतानामपीक्षितृत्वमुपगतं भवेत्, तदा उत्पत्त्यादिविकारशालिनां तेषां ब्रह्मान्यत्वावश्यम्भावात् वाक्यं विरुध्येत । अचेतनत्वे तु भूतानां, द्रष्टुर्जीवस्य स्वरूपैक्यसम्भवात् नानुपपत्तिरिति । न च भूतानां चेतनत्वेऽपि स्वरूपतोऽपि मिथ्यात्वसम्भवेन निषेधो नानुपपन्न इति वाच्यम् । तथासति नान्योऽतोऽस्तीत्येवो-पपत्तौ द्रष्टृग्रहणवैयर्थ्यात् । अतः सत्येव द्रष्टरि तस्यान्यत्वनिषेधपरं एतद्वाक्यं, तत् भूतानां द्रष्टृत्वे अनुपपन्नं भवेत्, तेषु विद्यमानस्य ब्रह्मान्यत्वस्य धर्मिसमान-सत्ताकत्वेन सत्स्वेव तेषु निषेधायोगात् । अपञ्चीकृतभूतानां [1]चेतनत्वे, संहन्यमाना-नामपि तेषां चेतनत्वावश्यम्भावेन चेतनाचेतनव्यवस्था उच्छिन्नैव स्यात् ।

अतः, ताआपऐक्षन्तेत्यादिवाक्यं गौणं वा तत्तदवच्छिन्नस्य ब्रह्मणः ईक्षि-तृत्वप्रतिपादकं वा भविष्यतीत्येव श्लिष्यते । यतः, तदभिध्यानात् कामनादिरूपात् सर्वं जगत् भवति, अतः स ईश्वर एव सर्वत्र साक्षादेव कर्ता, न तु वियदादि-भूतानि कर्तॄणि । परमेश्वरः कर्तेत्यत्र प्रमाणमाह तल्लिङ्गादिति—इति सूत्रार्थः ।

**प्रकृतत्वाच्च सत इति ।** तथा च, तत्तेजऐक्षतेत्यादौ तत्पदानां प्रकृत-ब्रह्मपरामर्शकत्वात् तत्सामानाधिकरण्येनापि तेजआदिशब्दाः तत्तदवच्छिन्नब्रह्मपरा इति अभ्युच्चयः ।

---

1. मु. चेतनत्वेन

८ विपर्ययाधिकरणम्

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

**भूतानामुत्पत्तिक्रमश्चिन्तितः । अथेदानीं अप्ययक्रमश्चिन्त्यते—किं अनियतेन क्रमेण अप्ययः, उत उत्पत्तिक्रमेण, अथवा तद्विपरीतेन-इति । त्रयोऽपि च उत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते, 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति' (तै. उ. ३।१।१) इति ।**

**तत्र, अनियमः अविशेषात्-इति प्राप्तम् । अथवा, उत्पत्तेः क्रमस्य श्रुतत्वात् प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यात्-इत्येवं प्राप्तम् ।**

---

फलं-परमसिद्धान्ते सर्वकर्मत्वादिकं साक्षादेव परमेश्वरस्येति तथैव सगुणेषूपासनेषु ध्येयम् ॥ १३ ॥

इति तदभिध्यानाधिकरणम्

नात्र श्रुतिविरोधशङ्का, किं तु उत्पत्तिक्रमे निरूपिते तत्प्रसङ्गात् प्रलयक्रमोऽपि निरूप्यते—इति सङ्गतिमाह—भूतानामुत्पत्तिक्रम इति ।

तत्रानियमोऽविशेषादिति । लोके हि पटदाहादिस्थले युगपदेव कार्यकारणयोर्लयो दृश्यते घटादिलयस्तु कारणपरिशेषेण [1]इति, न लोकानुसारेण नियम आस्थातुं शक्यते - कारणपरिशेषेणैव कार्यलय इति वा प्रथमं कारणमेव नश्यतीति वा - इति भावः ।

यदि तु उत्पत्तौ क्रमनियमदर्शनात् लयेऽपि नियतक्रमेण भाव्यमिति निर्बन्धः, तदा लयक्रमाकाङ्क्षोत्थापिकाया उत्पत्तिप्रतिपादकश्रुतेः सन्निहितत्वात् वेदत्वेन प्रत्यासन्नत्वाच्च लयप्रतिपादकश्रुतेः, क्रमाकाङ्क्षा उत्पत्तिक्रमेणैव पूरणीया—इति मनसि निधाय आह—अथवेति ।

यद्यपि लोके पटदाहादिस्थले कार्यकारणलये यौगपद्यं दृष्टं, तथापि न उत्पत्तिक्रमवत् लये दृष्टः क्रमः । न हि समवायिकारणनाशानन्तरं कार्यं नश्यतीति

---

1. इतिः हेतौ ।

ततो ब्रूमः—विपर्ययेण तु प्रलयक्रमः अतः—उत्पत्तिक्रमात् भवितुमर्हति। तथा हि लोके दृश्यते—येन क्रमेण सोपानमारूढः ततो विपरीतेन क्रमेण अवरोहति—इति। अपि च दृश्यते-मृदो जातं घटशरावादि अप्ययकाले मृद्भावं अप्येति, अद्भ्यश्च जातं हिमकरकादि अब्भावमप्येति-इति। अतश्च उपपद्यत एतत्—यत् पृथिवी अद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तौ अपोऽपीयात्, आपश्च तेजसो जाताः सत्यः तेजोऽपीयुः। एवं-क्रमेण सूक्ष्मं सूक्ष्मतरं च अनन्तरमनन्तरंकारणं अपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्म अप्येतीति वेदितव्यम्। न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः। स्मृतावपि उत्पत्तिक्रमविपर्ययेणैव अप्ययक्रमः तत्र तत्र दर्शितः 'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते [महा. शा.

---

दृष्टम्। लोके कारणपरिशेषेण उपादेयं नश्यतीति तु दृष्टम्। श्रुतावपि 'सदेव सोम्येदमग्र आसीत्' 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति उपादानभूतब्रह्मपरिशेषेणैव सर्वकार्यलयो दृष्टः। अतः [1]तदानुगुण्याय 'प्रथमं पृथिवी नश्यति, अनन्तरमापः' इत्यादिरूपेण लये क्रम आश्रयणीयः। कार्यकारणयोर्युगपन्नाशाभ्युपगमे वा, कारणस्य पूर्वं पश्चात्कार्यस्येति क्रमाभ्युपगमे वा, ब्रह्मणोऽपि नाशोऽभ्युपगन्तव्यः स्यात्। अतः उत्पत्तिवैपरीत्येनैव लये क्रम आस्थातव्यः-इत्यभिप्रेत्य सिद्धान्तयति—**विपर्ययेण त्विति**। उक्तमर्थं [2]पुराणवचनेनोपबृंहयति—**जगत्प्रतिष्ठेति**। स्थावरजङ्गमात्मकस्य जगतः प्रतिष्ठा—उपादानम् 'वायुराकाशमप्येति तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन् निष्कले सम्प्रलीयते॥' इत्यपि द्रष्टव्यम्॥ १४॥

इति विपर्ययाधिकरणम्

---

1. मु. तदाश्रयानुगुण्याय

2. पुराणेति विष्णुपुराणवचनमिति वेदान्तपरिभाषाकृतः। मुद्रिते तु विष्णुपुराणे न दृश्यते। मोक्षधर्मे तु नारायणीये दृश्यते। अत एव स्मृतित्वेन भाष्योक्तिरपि सङ्गच्छते—इति भाति।

३३९-२९] इत्येवमादौ। उत्पत्तिक्रमस्तु उत्पत्तावेव श्रुतत्वात् न अप्यये भवितुमर्हति। न चासौ अयोग्यत्वात् अप्ययेनाकाङ्क्ष्यते। न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः। कारणाप्यये कार्यस्यावस्थानानुपपत्तेः। कार्याप्यये तु कारणस्यावस्थानं युक्तं, मृदादिषु एवं दृष्टत्वात् ॥ १४ ॥

९ अन्तराविज्ञानाधिकरणम्

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

भूतानामुत्पत्तिप्रलयौ अनुलोमप्रतिलोमक्रमाभ्यां भवतः इत्युक्तम्। आत्मादिरुत्पत्तिः प्रलयश्चात्मान्तः इत्यप्युक्तम्। सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः। 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुः' (क. उ. ३।३) इत्यादिलिङ्गेभ्यः। तयोरपि कस्मिंश्चिदन्तराले क्रमेण उत्पत्तिप्रलयौ उपसंग्राह्यौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात्। अपि च—आथर्वणे उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते—

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥'

(मु. उ. २।१।३) इति।

---

सूत्रे विज्ञानपदं अन्तःकरणे शक्तमपि अजहल्लक्षणया [1]बाह्यान्तःकरणपरम्। तथा च, आत्मानमाकाशं चान्तरा समनस्कानीन्द्रियाणि क्रमेण उत्पद्यन्ते, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति पाठक्रमाल्लिङ्गात्—इति शङ्काभागं योजयन्, अस्याधिकरणस्य पूर्वप्रघट्टकेन आक्षेपिकीं सङ्गतिं वक्तुं वृत्तं कीर्तयति—**भूतानामुत्पत्तिप्रलयाविति**। सृष्टौ प्रथम आकाशः-इति यत् पूर्वग्रन्थे स्थितं तदिहाक्षिप्यते।

---

1. बाह्यान्तःकरणपरम्—ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि बुद्धिः इत्येतत्त्रितयपरम्। लक्ष्यतावच्छेदकं च करणत्वम्। वृत्तिविशेषविशिष्टस्यान्तःकरणस्यैव बुद्धित्वात् तस्याः सङ्ग्रहः। मनसः पृथङ्निर्देशे प्रयोजनं वक्ष्यते।

**तस्मात् पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानाम् - इति चेत् - न-अविशेषात् ।**

**यदि तावत् भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेव एषामुत्पत्तिप्रलयौ भवत इति, न एतयोः क्रमान्तरं मृग्यम् । भवति च भौतिकत्वे लिङ्गं करणानां 'अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' (छा. उ. ६।५।४) इत्येवंजातीयकम् ।**

---

'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति श्रुतेः 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति श्रुतेश्च विरोधादप्रामाण्यम्—इति पूर्वपक्षे, यथा छान्दोग्ये तेजःप्राथम्यं आकाशवायूपसंहारेण बाधितं एवं तैत्तिरीयकगताकाश-प्राथम्यमपि इन्द्रियमनउपसंहारेण बाधनीयम्—इत्येकदेशिमतम् । सूत्रे विज्ञानपदेन मनोग्रहणसम्भवेऽपि पुनर्मनोग्रहणं आथर्वणश्रुत्युपसंहारार्थम् ।

**यदि तावत् भौतिकानीति।** तथा च, भौतिकानामिन्द्रियाणां भूतोत्पत्त्य-नन्तरमेवोत्पत्तेरङ्गीकरणीयत्वेन अर्थक्रमानुसारात् आथर्वणगतः पाठक्रमो बाध्यत इति भावः ।

**अन्नमयं हि सोम्य मन इति ।** ननु—'अन्नमशितं त्रेधा विधीयते' इत्युपक्रम्य 'योऽणिष्ठस्तन्मनः' इति 'आपः पीतास्त्रेधा विधीयन्ते' इति चोपक्रम्य 'योऽणिष्ठः स प्राणः' इति 'तेजोऽशितं त्रेधा विधीयते' इति चोपक्रम्य 'योऽणिष्ठः सा वाक्' इति चोक्त्वा उपसंहृतम्—'अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' इति । ततश्च अशितानामन्नाप्तेजश्शब्दितघृता-दीनां सूक्ष्माः परिणामा मनआदयः इत्यर्थः प्रतीयते । एवं च अशनात् प्रागेव मनआदीनां सद्भावो वर्णनीयः, मनआदिवियुक्तस्य अशनासम्भवात् । प्राक्सिद्धानां च न मुख्यपरिणामत्वं सम्भवतीति अन्नाद्युपचितत्वमात्रेण तत्परिणामत्वोक्तिरियम् । तथा च, कथं अनेन भौतिकत्वं सिध्येत् । न च—'यः प्राणः स वायुः' इति श्रुतिगतसामानाधिकरण्येन वायुतादात्म्योपलम्भाच्च, [1]कार्यस्य सतः प्राणस्य वायु-विकारत्वं तावत् आस्थेयम् । तथा च, तस्य अम्मयत्वं तदाप्यायितत्वरूपमेव उपगम्यते । मनसश्च अन्नोपचितत्वस्य वाचश्च तेजउपचितत्वस्य श्रुत्या प्रतिपादनात् उपचितत्वरूपेण वाङ्मनसयोरन्नतेजोविकारत्वे सिद्धे, उपादानापेक्षायां सर्गकालेऽपि

---

1. मु. वायुकार्यस्य

व्यपदेशभेदोऽपि क्वचित् भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः ।

अथ तु अभौतिकानि करणानि, तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते 'प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि प्रथमं वा भूतान्युत्पद्यन्ते चरमं करणानि' इति ।

---

तयोरन्नतेजोजन्यत्वमेव कल्प्यते—इति वाच्यम् । तावतापि सर्वेषामिन्द्रियाणां भौतिकत्वासिद्धेः — इति चेत्,

उच्यते—मनःप्राणवाचां भौतिकत्वसिद्धौ 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः'....इत्यादिपाठक्रमः मनआद्यंशे तावत् बाधनीयः । तथा च तस्मिन्नंशे अध्ययनोपयुक्त एव अयं क्रम इति वक्तव्यं, न तु तदनुसारेण उत्पत्तिक्रमव्यवस्थापि । तथा च अवैरूप्याय सर्वांशेऽप्ययं उत्पत्तिक्रमनियामको न भविष्यतीत्येव उपेयम् । खादीनां तु न एतत्पाठानुसारेण क्रमोत्पत्तिरभ्युपगम्यते, अपि तु तैत्तिरीयादिषु पूर्वपूर्वभूतस्योत्तरोत्तरकारणत्वप्रतिपादनानुसारेण । किं च—बाह्यान्तःकरणानां [1]कार्यतायां स्थितायां कारणापेक्षायां मनआदिषु भौतिकत्वाम्नानं स्थालीपुलाकन्यायेन सर्वेषां भौतिकत्वे लिङ्गं भविष्यति ।

ननु—इन्द्रियाणां भौतिकत्वे भूतोत्पत्त्यैव तत्सृष्टेः सिद्धत्वात् पृथक्सृष्टिकथनं व्यर्थम्—इत्याशङ्क्याह—व्यपदेशभेदोपीति ।

पक्षान्तरमाह—अथ त्विति । अस्मिन्नपि पक्षे, यः प्राणः स वायुरिति स्पष्टसामानाधिकरण्येन वायुविकारत्वं प्राणस्योपेयमेव । इन्द्रियाणां त्वभौतिकत्वेऽपि, प्रथममिन्द्रियाणि अनन्तरं भूतानीति पाठक्रमानुसारेण न स्वीक्रियते । पाठक्रमस्य उत्पत्तावविवक्षितत्वात् । न च खंवायुर्ज्योतिरापःपृथिवीत्यंशे क्रमोत्पत्तिकानामेव पाठात् इन्द्रियानन्तरं भूताम्नानमपि उत्पत्तिक्रमनियामकं स्यादिति वाच्यम् । प्रश्नोपनिषदि 'खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः' इति भूतानन्तरमिन्द्रियसृष्ट्याम्नानेन पाठस्याव्यवस्थितत्वात्—इति भावः ॥ १५ ॥

इति अन्तराविज्ञानाधिकरणम्

---

1. आ. कार्यतायां सिद्धायां

आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्र उत्पत्तिक्रम उच्यते ।

तथा अन्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते 'प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत् तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना ।

तस्मात् नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥ १५ ॥

१० चराचरव्यपाश्रयाधिकरणम्

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भाव-भावित्वात् ॥ १६ ॥

स्तो जीवस्यापि उत्पत्तिप्रलयौ, 'जातो देवदत्तः' 'मृतो देवदत्तः' इत्येवंजातीयकाल्लौकिकव्यपदेशात् जातकर्मादिसंस्कारविधानाच्च-इति स्यात् कस्यचिद्भ्रान्तिः, तामपनुदामः—

न जीवस्य उत्पत्तिप्रलयौ स्तः, शास्त्रफलसंबन्धोपपत्तेः । शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधौ

---

जीवोपकरणेष्विन्द्रियेषु निरूपितेषु जीवो त्वदयमागत इति प्रासङ्गिकी पादसङ्गतिः ।

जीवनिरूपणस्य [1]श्रुतिविरोधपरिहारार्थत्वादध्यायसङ्गतिः स्पष्टैव ।

त्वंपदार्थशोधनस्य ब्रह्मैक्यप्रतिपत्त्युपायतया शास्त्रसङ्गतिः । ब्रह्म हि नित्यं ज्ञानस्वरूपं विभु असङ्गं च, अतः तदैक्याय जीवस्यापि नित्यत्वादिकं वक्तव्यम् ।

तत्र प्रथमतोऽधिकरणद्वयेन नित्यत्वम्, अनन्तरं ज्ञानरूपत्वं एकेनाधिकरणेन, ततो विभुत्वं एकेन, ततः त्रिभिरधिकरणैः 'यज्जीवस्य कर्तृत्वं परमेश्वराधीनमुपलभ्यते तदाविद्यकमिति परमार्थतो जीवोऽसङ्गः' इति प्रतिपाद्यते । तदनन्तरं भेदाभेदप्रतिपादकश्रुतिविरोधपरिहारमुखेन जीवब्रह्मणोरभेदः स्फुटीकरिष्यते—इति आपादं अधिकरणानां सङ्गतिर्द्रष्टव्या ।

---

1. आ. श्रुतिविरोधपरिहारादध्याय

अनर्थकौ स्याताम्। श्रूयते च 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' (छा. उ. ६।११।३) इति।

ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः। सत्यं दर्शितः। भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः।

किमाश्रयः पुनः अयं मुख्यः, यदपेक्षया भाक्त इति।

उच्यते—चराचरव्यपाश्रयः। स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ। स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च। अतः तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मनि उपचर्येते, तद्भावभावित्वात्। शरीरप्रादुर्भावतिरोभावयोर्हि सतोः जन्ममरणशब्दौ भवतः, नासतोः। न हि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते। 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः....स

---

अत्र जीवोत्पत्तिं निमित्तीकृत्य जातकर्मादिविधायकस्य शास्त्रस्य 'न जायते म्रियते वा' इत्यादिजीवोत्पत्तिनिषेधकस्य च विरोधेन अप्रामाण्यमिति पूर्वपक्षे, जातोदेवदत्तइतिप्रत्यक्षोपोद्बलितजातकर्मादिश्रुत्यनुसारेण [1]जीवोत्पत्तिरेवाङ्गीकर्तव्या, तदनुत्पत्तिप्रतिपादकवचनानि तु अविवक्षिता[र्था]नि—इत्येकदेशिनि प्राप्ते, जीवस्योत्पत्तावङ्गीक्रियमाणायां अन्त्येष्ट्यादिविधायकवाक्यपर्यालोचनया मृतोदेवदत्तइतिप्रत्यक्षोपोद्बलितकृतकत्वलिङ्गकानित्यत्वानुसन्धानसनाथया[2] जीवनाशोऽप्यङ्गीकर्तव्यः स्यात्, ततश्च कृत्स्नविधिनिषेधशास्त्रव्याकोप इति शरीरोत्पत्तिनाशोपाधिकावेव जीवोत्पत्तिनाशव्यपदेशाविति, 'न जीव उत्पद्यते नापि विनश्यति अपि तु नित्य एव' इति सिद्धान्तः।

जीवापेतं–जीववियुक्तं इदं-शरीरम्।

स वा अयं पुरुष इति। योऽयंविज्ञानमयःप्राणेष्वित्यादिना निरूपितो जीवः स इति परामृश्यते, अयं–अहमितिप्रत्यक्षसिद्धः। तत्र लोकसिद्धस्य जायमानत्वव्यपदेशस्य अर्थं श्रुतिराह–जायमानःशरीरमभिसम्पद्यमानः। शरीरेण संयुज्य-

---

1. मु. जीवोत्पत्तिरङ्गीकर्तव्या
2. अनुसन्धानसनाथयेति अनुसन्धानमत्र अनुमितिः।

उत्क्रामन् म्रियमाणः' (बृ. उ. ४।३।८) इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्। अभावाज्जीवप्रादुर्भावस्य।

जीवस्य परस्मादात्मन उत्पत्तिः वियदादीनामिव अस्ति नास्ति वा—इत्येतत् उत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावत् जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्तः-इत्येतत् अनेन सूत्रेण अवोचत् ॥ १६ ॥

११ नात्माधिकरणम्

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी। स किं व्योमादिवदुत्पद्यते ब्रह्मणः आहोस्वित् ब्रह्मवदेव नोत्पद्यत इति, श्रुतिविप्रतिपत्तेर्विशयः; कासुचिच्छ्रुतिषु अग्निविस्फुलिङ्गादिनिदर्शनैः जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते, कासुचित्तु अविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते न चोत्पत्तिराम्नायते-इति।

---

मानत्वमेव जायमानत्वं इति तदर्थः। 'स उत्क्रामन् म्रियमाणः' इत्यनेन मृतोऽयमिति लौकिकव्यवहारः शरीरोत्क्रान्तिविषयत्वेन व्याख्यातः।

अस्मिन्नधिकरणे, श्रुतिपर्यालोचनया जीवस्य नित्यत्वं व्यवस्थापितम्। श्रुतिप्रामाण्यमनभ्युपगच्छतः चार्वाकस्य निराकरणेन तन्नित्यत्वं 'एक आत्मनः' [ब्र, सू. ३।३।५३] इत्यधिकरणे भविष्यति।

ननु—उत्तराधिकरणेऽपि जीवोत्पत्तिर्निराकरिष्यते, अतो व्यर्थमेतदधिकरणम्—इत्याशङ्क्य अधिकरणद्वयप्रतिपाद्यं विभागेन दर्शयति—परस्मादिति ॥१६॥

इति चराचरव्यपाश्रयाधिकरणम्

अग्निविष्फुलिङ्गादिनिदर्शनैरिति। तां श्रुतिं उत्तरत्रोदाहरिष्यति 'अपि च यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति' इत्यादिना। अविकृतस्यैव परस्य ब्रह्मण इति। 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादौ। तथा च विरोधे न श्रुतीनां प्रामाण्यं—इति पूर्वपक्षे—

तत्र प्राप्तं तावत् उत्पद्यते जीव इति। कुतः? प्रतिज्ञानुपरोधादेव। 'एकस्मिन् विदिते सर्वमिदं विदितं' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत। तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न च अविकृतः परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात्। अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः। विभागाच्च अस्य विकारत्वसिद्धिः। यावान् हि आकाशादिः प्रविभक्तः स सर्वो विकारः। तस्य चाकाशादेः उत्पत्तिः समधिगता। जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखयुक् प्रतिशरीरं प्रविभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति।

अपि च—'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः' (बृ. उ. २।१।२३) इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा 'सर्व एत आत्मानो व्युच्चरन्ति' [बृ. उ. मा. २।१।२३] इति भोक्तृणामात्मनां पृथक् सृष्टिं शास्ति।

---

एकदेशिमतमाह—प्राप्तंतावदुत्पद्यत इति। तथा च, शरीरवत् जीवस्योत्पत्तिविनाशाभावेऽपि कल्पादौ वियदादिवत् जीव उत्पद्यते प्रलये च नश्यतीत्यभ्युपेयम्। [1]एकविज्ञानेनसर्वविज्ञानप्रतिज्ञोपोद्बलितस्य जीवोत्पत्तिवाक्यस्य प्रबलत्वेन, नजायतइत्यादिवाक्यानां 'शरीरवत् कल्पमध्ये पुनःपुनर्न जायते' इत्येवंपरत्वोपपत्तेः। 'अविनाशी वा अरेऽयमात्मा' इत्यादिवाक्यमपि तथैव व्याख्येयम्। न चास्मिन् पक्षे पारलौकिकशास्त्रफलानुपपत्तिः। यावत्प्रलयं शास्त्रीयफलस्य परलोकगमनेन भोगसम्भवात्। नन्वेवं तत्त्वमसीत्यभेदप्रतिपादनमसङ्गतं स्यात्—इत्याशङ्क्य, एकदेशिमते तद्वाक्यं गौणमेव व्याख्येयम्[2]-इत्यभिप्रेत्याह—न चाविकृतः परमात्मैवेति। 'यावद्विकारं तु विभागो लोकवत्' इति न्यायेनापि जीवस्य कार्यत्वमित्याह—विभागाच्चेति।

---

1. मु. एकविज्ञानेन सर्वविज्ञानोपोद्बलितस्य

2. मु. इत्याह

'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।

तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु. उ. २।१।१) इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते, सरूपवचनात्। जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्।

न च क्वचिदश्रवणं अन्यत्र श्रुतं वारयितुमर्हति। श्रुत्यन्तरगतस्यापि अविरुद्धस्याधिकस्यार्थस्य सर्वत्र उपसंहर्तव्यत्वात्।

प्रवेशश्रुतिरपि एवं सति विकारभावापत्त्यैव व्याख्यातव्या, 'तदात्मानं स्वयमकुरुत' इत्यादिवत्। तस्मात् उत्पद्यते जीव इति।

एवं प्राप्ते ब्रूमः—न आत्मा-जीवः उत्पद्यते-इति। कस्मात्? अश्रुतेः। न ह्यस्य उत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु।

---

'सर्व एते आत्मानो व्युचरन्ति' इति बृहदारण्यके माध्यन्दिनानामयं पाठः। काण्वानां 'सर्व एते आत्मानः' इति वाक्यं न पठ्यते। कौषीतकिशाखायामपि अग्निविष्फुलिङ्गदृष्टान्तेन सृष्टिक्रमे नेदं वाक्यं पठ्यते।

[1]तस्मात् पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गः-[2]इति।

यथासुदीप्तादितिमन्त्रो हि मुण्डके 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी' इतिमन्त्रात् प्रागेव पठ्यत इति, पाठानुसारेण वियदुत्पत्तेः प्रागेव जीवस्योत्पत्तिर्वक्तव्या। ततश्च इन्द्रियादिभिर्यथोक्तक्रमभङ्गाभावेऽपि जीवेन यथोक्तवियत्सृष्टिक्रमभङ्गः स्यादिति जीवोत्पत्तिविषयकाधिकरणद्वयस्य 'अन्तरा विज्ञानमनसी' इत्यधिकरणेन सङ्गतिर्द्रष्टव्या।

जीवस्योत्पत्तौ उपगतायां नाशोऽप्युपगन्तव्य इति, कृतहानाकृताभ्यागमदोषप्रसङ्गात् निर्विकारत्वादिप्रतिपादकानेकवचनविरोधाच्च, नास्योत्पत्तिः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तु स्वरूपैक्येनैवोपपन्ना। विभक्तत्वहेतुस्तु असति बाधके एव विकारत्वसाधकः न जीवस्योत्पत्तिं साधयति। उत्पत्तिप्रतिपादकं क्वचित्कवचनं तु विज्ञानाद्युपाधितादात्म्याध्यासेन तन्मयस्य जीवस्य तदुत्पत्त्योत्पत्तिप्रतिपादनपरम्—इत्यभिप्रेत्य सिद्धान्तयति—नात्माजीव इत्यादिना।

---

1. तस्मात्—जीवस्योत्पत्तिमत्त्वात्।
2. मु. इत्येकदेशिमतम्

ननु क्वचिदश्रवणं अन्यत्र श्रुतं न वारयतीत्युक्तम् ।

सत्यमुक्तम् । उत्पत्तिरेव त्वस्य न संभवतीति वदामः । कस्मात् ? नित्यत्वाच्च ताभ्यः । चशब्दात् अजत्वादिभ्यश्च । नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथा अजत्वं अविकारित्वं अविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति । न च एवंरूपस्य उत्पत्तिरुपपद्यते ।

ताः काः श्रुतयः ? । 'न जीवो म्रियते' (छा. उ. ६।११।३), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४।२५), 'न जायते म्रियते वा विपश्चित्' (क. उ. २।१८) 'अजो नित्यः शाश्वतोऽयं पुराणः' (क. उ. २।१८), 'तत् सृष्ट्वा तदेवानुप्राविशत् । (तै. उ. २।६।१), 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. उ. ६।३।२), 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' (बृ. उ. १।४।७), 'तत्त्वमसि' (छा. उ. ६।८।७), 'अहं ब्रह्मास्मि' (बृ. उ. १।४।१०), 'अयमात्मा ब्रह्म सर्वानुभूः. (बृ. उ.' २।५।१९) इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति ।

ननु—प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते—इत्युक्तम् ।

अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे उ. ६।११) इति श्रुतेः । बुद्ध्याद्युपाधिनिमित्तं तु अस्य प्रविभागप्रतिभानं आकाशस्येव घटादिसंबन्धनिमित्तम्। तथा च शास्त्रं 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' (बृ. उ. ४.४।५) इत्येवमादि ब्रह्मण एवाविकृतस्य सतः अस्यैकस्य अनेकबुद्ध्यादिमयत्वं दर्शयति । तन्मयत्वं चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं 'स्त्रीमयो जाल्मः' इत्यादिवद् द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं, तदपि अत एव उपाधिसम्बन्धान्नेतव्यम्—उपाध्युत्पत्त्या अस्योत्पत्तिः तत्प्रलयेन च प्रलयः-इति।

तथा च दर्शयति 'प्रज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' (बृ. उ. मा. ४।३।१३) इति। तथा उपाधि-प्रलय एवायं नात्मविलय इत्येतदपि "अत्रैव मा भगवान् मोहान्तमापीपदत् न वा अहमिदं विजानामि न प्रेत्य संज्ञास्तीति' इति प्रश्नपूर्वकं प्रतिपादयति 'न वा अरेऽहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति' (बृ. उ. मा. ४।३।१४) इति। प्रतिज्ञानुपरोधोऽपि अविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्। लक्षणभेदोऽप्यनयोः उपाधिनिमित्त एव। 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' (बृ. उ. मा. ४।१।१६) इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात्। तस्मात् नैव आत्मा उत्पद्यते प्रविलीयते चेति ॥ १७ ॥

### १२. ज्ञाधिकरणम्

## ज्ञोऽत एव ॥ १८ ॥

स किं काणभुजानामिव आगन्तुकचैतन्यः स्वतोऽचेतनः, आहोस्वित् सांख्यानामिव नित्यचैतन्यस्वरूप एव? इति, वादिविप्रतिपत्तेः संशयः।

---

प्रज्ञानघनएवैतेभ्य इति। इदं [1]वाक्यं मैत्रेयीब्राह्मणगतं वाक्यान्वयादित्यधिकरण एव व्याख्यातम्। 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति मोक्षरूपं फलं उपक्षिप्य, असङ्गत्वादिवचनेन सर्वविशेषप्रत्याख्यानपूर्वकं, योऽयंविज्ञानमयइति प्रस्तुतस्यैव जीवस्य एषसर्वेश्वर इत्यादिना ब्रह्मभावः प्रतिपाद्यते-इत्याह—अत ऊर्ध्वमिति ॥ १७ ॥

**इति नात्माधिकरणम्**

वादिविप्रतिपत्तेरिति श्रुतिविप्रतिपत्तेरप्युपलक्षणम्। 'विज्ञानात्मा पुरुषः' [प्र. उ. ४।९] इति 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति

---

1. एकदेशिना माध्यन्दिनशाखाश्रयणेन पूर्वपक्षः कृतः। अतः तन्निराकरणाय माध्यन्दिनशाखास्थं वाक्यजातमुदाहृतं भाष्ये—इति ज्ञेयम्।

किं तावत् प्राप्तम् ?

आगन्तुकं आत्मनश्चैतन्यं आत्ममनःसंयोगजं अग्निघटसंयोगजरोहितादिगुणवत्–इति प्राप्तम् । नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यात् । ते पृष्टाः सन्तः 'न किंचित् वयमचेतयामहि' इति जल्पन्ति । स्वस्थाश्च चेतयमाना दृश्यन्ते । अतः कादाचित्कचैतन्यत्वात् आगन्तुकचैतन्य आत्मेति ।

---

यत्र' [प्र. उ. ४।११] इति च साक्षादेव ज्ञानरूपता आम्नायते । ज्ञानस्वरूपब्रह्माभेदश्रुतेश्च ज्ञानरूपता अवगम्यते । 'एष हि द्रष्टा श्रोता [प्र. उ. ४।९] इत्यादिवचनैः ज्ञानाश्रयताप्यवगम्यते । ज्ञानस्वरूपत्वे च जीवस्य गुणत्वापत्त्या ज्ञानाश्रयता नोपपद्यते । अतः श्रुतीनां विरोधेन अप्रामाण्येन पूर्वपक्षे—

एकदेशिमतमाह—आगन्तुकमात्मन इति । ज्ञानरूपताप्रतिपादिकास्तु श्रुतयः अर्शआद्यचमुपेत्य ज्ञानवत्ताप्रतिपादिका इति व्याख्येयम्, सुषुप्त्यादिषु [1]चैतन्यानुपलम्भरूपोपपत्तिसहकृताया एषहिद्रष्टेत्यादिश्रुतेः प्रबलत्वात् ।

ब्रह्मणोऽपि न ज्ञानरूपता, यस्सर्वज्ञइतिवचनानुसारेण ज्ञानवत्तावगमात् । सत्यंज्ञानमनन्तमितिवाक्ये ज्ञानपदं तु [2]अर्शआद्यजन्तमेव । तथा हि–इदं ज्ञानपदं अन्तोदात्तं पठ्यते । न तत् अजन्ततां विना उपपद्यते । केवलल्युडन्ततायां हि ज्ञाधात्वाकारस्य 'लिति' इति सूत्रेणोदात्तत्वे सति ल्युडादेशस्य अनेत्यस्य अकारयोः शेषनिघातेनानुदात्तत्वे च सति अनादेशाद्याकारस्य ज्ञाधात्वाकारस्य च एकादेशो भवन् 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण उदात्तो भवति । तदनन्तरं अमः 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे सति, तस्य अनोऽन्त्यस्याकारस्यचानुदात्तस्य 'अमि पूर्वः' इत्येकादेशः स्थानेऽन्तरतमपरिभाषया अनुदात्त एव भवेदिति तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वं प्राप्नोति । तथा च, यथा काठके 'संज्ञानं विज्ञानं' इति स्वरितान्तं पठ्यते, एवमिदमपि स्वरितान्तमेव पठ्येत ।

---

1. मु. चैतन्यानुपलम्भोपपत्ति

2. अर्शआद्यजन्तमिति अर्शआदेः आकृतिगणत्वात् इति भावः ।

एवं प्राप्तेऽभिधीयते—ज्ञः—नित्यचैतन्यः अयमात्मा, अत एव—यस्मादेव नोत्पद्यते, परमेव ब्रह्म अविकृतं उपाधिसंपर्कात् जीवभावेनावतिष्ठते। परस्य (हि) ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातम् 'विज्ञानमानन्दं ब्रह्म' (बृ. उ. ३।९।२८) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१।१) 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. उ. ४।५।१३) इत्याद्यासु श्रुतिषु। तदेव चेत् परं ब्रह्म जीवः, तस्मात् जीवस्यापि नित्यचैतन्यस्वरूपत्वं अग्न्यौष्ण्यप्रकाशवत् इति गम्यते।

---

तथा च अन्तोदात्ततासिद्धये अजन्तता आश्रयणीया। तस्मिन् हि सति 'यस्येति च' इति सूत्रेण 'भस्य इवर्णावर्णयोर्लोपस्स्यात् ईकारे तद्धिते च परे' इत्यर्थकेन ज्ञानपदे अन्त्याकारलोपे सति, अजन्ततायामपि ज्ञानेत्येव स्थिते, 'चितः' इति सूत्रेण अचोऽकारस्य उदात्तत्वे सति शेषनिघातेन च अनुदात्तत्वे सति ज्ञानेतिप्रातिपदिकं अजन्तं मध्यानुदात्तमन्तोदात्तं पर्यवस्यति। ततः अमिपूर्वइत्येकादेशोऽपि 'एकादेश उदात्तेनोदात्तः' इति उदात्त एव भवति। अतः सत्यंज्ञानमिति वाक्यं ब्रह्मणो ज्ञानवत्तां प्रतिपादयति। तदनुसारेण विज्ञानमानन्दंब्रह्मेत्यादिवचनान्यपि ज्ञानवत्तापराण्येव, न तु ज्ञानरूपतापराणि। तथा च ब्रह्माभेदबोधकेभ्योऽपि वाक्येभ्यो न जीवस्य ज्ञानरूपतासिद्धौ प्रत्याशा कार्या।

परस्यब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातमिति। सत्यंज्ञानमित्यादौ हि ज्ञानपदं न अजन्ततया ज्ञानवत्ताप्रतिपादकम्। ज्ञानपदस्य भावार्थकतयाप्रसिद्धस्य अजन्ततामुपेत्य ज्ञानवत्ताप्रतिपादकतायाः क्लिष्टत्वात्। प्रत्ययद्वयाभ्युपगमे च प्रक्रियागौरवमपि प्रसज्यते। शक्यते च एकमेवप्रत्ययमुपेत्य प्रसिद्ध्यनतिक्रमेण अन्तोदात्ततासमर्थनम्। ज्ञाधातोः औणादिको [1]बाहुलकेन नप्रत्ययः। तस्य [2]भावार्थत्वमपि बाहुलकादेव। अजन्ततावादिनापि हि ज्ञानपदस्य अर्शआदिगणे

---

1. बाहुलकेन—'उणादयो बहुलं' इति बहुलग्रहणेन। बहुलग्रहणेन हि "ये यतो विहिताः ते ततोऽन्यत्रापि भवन्ति" इति सिध्यतीति भावः।

2. भावार्थत्वमिति होमशब्दे 'अर्तिस्तुसुहु……' इत्याद्यौणादिकसूत्रविहितस्य मन्प्रत्ययस्य तथात्वदर्शनात् इति भावः।

विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति 'असुप्तः सुप्तानभिचाकशीति' (बृ. उ. ४।३।११) 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' (बृ. उ. ४।३।९) इति, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ. उ. ४।३।३०)

---

आहत्यपाठाभावेन आकृतिगणत्वस्याश्रयणीयत्वात् । नप्रत्ययस्य च अकारे 'आद्युदात्तश्च' इति सूत्रेणोदात्ते, धात्वाकारस्य शेषनिघातेनानुदात्तत्वे सति, 'अमि पूर्वः' इत्येकादेशोऽपि उदात्त एव अवतिष्ठते । अतः सत्यंज्ञानमित्यादिवाक्यपर्यालोचनया ब्रह्मणो ज्ञानरूपत्वं [1]निष्प्रत्यूहमेव ।

असुप्तः—अपरिलुप्तज्ञानस्वभावः, सुप्तान्—वागादीन् मनोमात्रतया स्थितान्, अभिचाकशीति—स्वाभाविकेन प्रकाशेन व्यवहारयोग्यतां नयति । अत्र-स्वप्ने स्वाप्नरथादिव्यवहारोपयुक्तं ज्योतिः स्वयमेव भवतीति ।

न हि विज्ञातुरिति । [2]ननु—नेयं श्रुतिः आत्मनो नित्यज्ञानस्वरूपतां साधयति, अपि तु तद्धर्मभूतानां दृष्ट्यादीनामेव नित्यत्वं प्रतिपादयति । तथा च 'योवेदेदं जिघ्राणि' इत्यादिवाक्यं गन्धादिगोचरज्ञानाश्रयतयैव आत्मानमुपलक्षयति न तु ज्ञानस्वरूपतयेति, कथमिदं ज्ञानस्वरूपतायां प्रमाणमुपन्यस्यते-इति चेत्,

उच्यते—नहिद्रष्टुरित्यादिवाक्यं दृष्ट्यादीनां नित्यत्वं प्रतिपादयत् यथाश्रुतार्थं ग्रहीतुमशक्यम् । दृष्ट्यादीनां, लोके दर्शनायचक्षुरित्यादिश्रुतिषु च जन्यतया प्रसिद्धेः । न च - दृष्ट्यादीनां जन्यत्वेऽपि, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति वाक्यप्रतिपाद्यं विज्ञानं नित्यमस्त्विति—वाच्यम् । विज्ञानशब्दस्यापि 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इत्यादौ वृत्तिविशेषे प्रयोगेण इहापि दृष्ट्यादिवृत्तिप्रायपाठेन विज्ञानवृत्तिपरत्वावश्यम्भावात् ।

---

1. निष्प्रत्यूहमिति अध्यासभाष्यभामत्यां आत्मस्वप्रकाशत्वनिरूपणावसरे "श्रूयते हि सत्यंज्ञानमनन्तं ब्रह्मेति, उपपद्यते च" इत्युक्तं स्वप्रकाशज्ञप्त्यात्मकब्रह्माभेदात् आत्मनः स्वप्रकाशत्वम् । तत्र, 'उक्तप्रत्यूहप्रशामनार्थं उपपद्यतेचेत्युक्तिः' इत्युक्तं परिमले, उक्तप्रत्यूहतत्प्रशामने च निरूपिते। भाष्यं साक्षात् व्याचक्षाणैः प्रकृतव्याख्यातृभिस्तु अत्र तन्निवेशौचित्यं मन्यमानैः अत्र सोऽर्थः संयोजितः ॥

2. नन्वित्यादिशङ्कासमाधानाभ्यां नहिविज्ञातुर्विज्ञातेरित्यादिश्रुतीनां विशिष्टाद्वैतानुकूल्यभ्रान्तिः निवर्तिता भवति ।

इत्येवंरूपाः । 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छा. उ. ८।१२।४) इति च सर्वैः करणद्वारैः इदंवेद इदंवेदेति विज्ञानेनानुसंधानात् तद्रूपत्व-सिद्धिः ।

---

अपि च–इह द्रष्टुरिति षष्ठी न धर्मधर्मिभावसम्बन्धपरा । तथा सति द्रष्टुरित्यादिनिर्देशवैयर्थ्यापत्तेः, दृष्ट्यादयो हि द्रष्टुरेव धर्मा अव्यभिचरिता इति व्यावर्त्याभावात् । न हि अद्रष्ट्रादिधर्मभूताः केचन दृष्ट्यादयो वर्तन्ते, यद्व्यावर्तनार्थं द्रष्टुरित्यादिविशेषणं सार्थकं भवेत् ।

एवं 'अथ यो वेदेदं जिघ्राणि' इत्याद्या अपि, यथा 'यतो वा इमानि भूतानि जायन्ते' इत्यादि ब्रह्मणस्तटस्थलक्षणं तद्वत् जीवस्य तटस्थलक्षणमिति वक्तव्यम् । तत्र यदि ज्ञानाश्रयमात्रतया बाह्येभ्यो व्यावृत्ततया आत्मा लिलक्षयिषितः स्यात्, तदा 'यो वेद स आत्मा' इत्येतावदेव पर्याप्तम्, इदंजिघ्राणीत्यादिविशेषणं अनर्थकमेव स्यात् ।

तस्मात्, नहिद्रष्टुरित्यादेः एवं अर्थो वक्तव्यः । द्रष्टुरित्यादौ तादात्म्य-सम्बन्धे षष्ठी, घटस्यस्वरूपमित्यादिवत् । तथा च, द्रष्टुः स्वरूपभूता या दृष्टिः-इत्याद्यर्थो लभ्यते । एवं हि सति द्रष्टुरित्यादिविशेषणं सार्थकं भवति, चक्षुरादि-जन्यान्तःकरणपरिणामभूतदृष्टिव्यावर्तकत्वात् । दृष्ट्यादिशब्दाश्च आत्मस्वरूपभूतेऽपि ज्ञाने तत्तद्वृत्त्युपधानेन प्रयोक्तुं शक्यन्त एव । तथा च श्रुतिः–'संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिः मतिः मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' 'प्रज्ञानं ब्रह्म' [ऐ. उ. ३।२-३] इति । अतो दृष्ट्यादिवृत्त्युपलक्षितस्य आत्मस्वरूपभूतज्ञानस्यैव नित्यता-प्रतिपादकं नहिद्रष्टुरित्यादिवाक्यजातम् । एवंसत्येव पूर्वसन्दर्भापेक्षितार्थसमर्पक-तापि सिध्यति । 'हृद्यन्तर्ज्योतिः पुरुषः' 'अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति' इति आत्मनो बाह्याभ्यन्तरवस्तुव्यवहारोपयुक्तज्योतिस्स्वरूपत्वेनाव्यभिचरितप्रकाशत्वे उपक्षिप्ते असङ्गस्वभावतया प्रतिपादिते च, [1]धर्मभूतज्ञानमादायाव्यभिचरितप्रकाश-त्वायोगात् अव्यभिचरितप्रकाशस्वरूपत्वे सिद्धे, 'न बाह्यं किञ्चन वेद नान्तरम्' इति

---

1. धर्मभूतज्ञानमादायेत्यादि असङ्गस्वभावत्वप्रतिपादनविरोधापत्त्या इत्यादिः ।

नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेत्, न—गन्धादिविषयविशेषपरिच्छेदार्थत्वात्। तथा हि दर्शयति 'गन्धाय घ्राणम्' इत्यादि।

---

सुषुप्तौ बाह्याभ्यन्तरवेदनप्रतिषेधात् [1]तद्रूपस्यात्मनो नाशाशङ्कायां यद्वैतन्नपश्यतीति वाक्यम्। तस्य च, 'सुषुप्तौ यत् बाह्याभ्यन्तरवेदनराहित्यं प्रतिपादितं तत् न आत्मस्वरूपभूतज्ञाननिषेधाभिप्रायेण, अपि तु जाग्रत्स्वप्नयोर्बाह्याभ्यन्तरद्वैतसम्भवात् तत्सम्पर्केण आत्मनः तद्वेदनरूपता भवति सुषुप्तौ तु द्वैताभावात् तत्सम्पर्काभावेन तद्वेदनरूपता नास्तीत्यभिप्रायेण' इत्येवमर्थत्वं स्फुटमेव। तत्र च उपपत्तिरूपतया इदं वाक्यं प्रवर्तते—'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादि। तत्र धर्मज्ञाननित्यताप्रतिपादनं न प्रकृतोपयुक्तम्। अतो नहिद्रष्टुरित्यादिषष्ठ्याः तादात्म्याभिप्रायत्वात् प्रकृते तदुदाहरणं युक्तमेव।

अथयोवेदेत्यादिवाक्येष्वपि अथयोवेदेदंजिघ्राणीत्यादिविशेषणस्य अयमभिप्रायः—पूर्वसन्दर्भे 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादिपर्यायेषु जाग्रदाद्यवस्थोपलक्षितस्यात्मनः 'एष आत्मेति होवाच' इत्यात्मत्वमुक्त्वा 'एतदमृतमभयमेतद्ब्रह्म' इति ब्रह्मत्वमुक्तम्। तत्रेयमाकाङ्क्षा—कोऽसावात्मा, यस्य ज्ञानस्वरूपब्रह्माभेदः प्रतिपाद्यते-इति। तत्र नित्यज्ञानस्वरूपतया आत्मानं लक्षयितुं अथयोवेदेदंजिघ्राणीति इति वाक्यं प्रवर्तते। तत्र यदि 'इदं यो वेद' इत्येवोच्येत, तदा तार्किकाभिमतः अनित्यज्ञानाश्रय एवात्मा सिध्येत्, तन्माभूदिति, गन्धादिगोचरज्ञानावभासकतया आत्मा लक्ष्यते। गन्धादिगोचरज्ञानानां हि उत्पत्तिमारभ्य ज्ञाततानैयत्यात् जन्यज्ञानेन [2]तदनु[पप](त्प)त्तेः तदवभासकं नित्यं ज्ञानं सिध्यतीति स एवात्मा। न च—यो वेदेति [3]गन्धादिगोचरज्ञानवेदनाश्रयतायाः प्रतिपादनात् नित्यज्ञानाश्रयतैवात्मनस्सिध्येत्-इति वाच्यम्। तावता प्रकृताकाङ्क्षानिवर्तनासम्भवात् ज्ञानरूपब्रह्माभेदस्य नित्यज्ञानरूपतयैवोपपादनीयत्वात्। अतः वेदेतिनिर्देशः सत्तासतीतिवत् तादात्म्येन वा, नित्यज्ञानरूपस्यैवात्मनो वृत्त्युपाधिकभेदकल्पनया वा द्रष्टव्य इति न काचिदनुपपत्तिः।

---

1. मु. तद्रूपस्याप्यात्मनो
2. तदनुत्पत्तेरितिपाठे तच्छब्दार्थो ज्ञातता।
3. मु. गन्धादिगोचरज्ञानाश्रयतायाः

यत्तु सुप्तादयो न चेतयन्त इति, तस्य श्रुत्यैव परिहारोऽभिहितः । सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' (बृ. उ. ४।३।२३) इत्यादिना । एतदुक्तं भवति—विषयाभावात् इयमचेतयमानता न चैतन्याभावात्–इति । यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिःन स्वरूपाभावात् तद्वत् ।

वैशेषिकादितर्कश्च श्रुतिविरोधे आभासीभवति ।

तस्मात् नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः ॥ १८ ॥

## १३. उत्क्रान्तिगत्यधिकरणम्

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

इदानीं तु, किंपरिमाणो जीव इति चिन्त्यते । किं अणुपरिमाणः उत मध्यमपरिमाणः आहोस्वित् महापरिमाण इति ।

ननु च—नात्मोत्पद्यते नित्यचैतन्यश्चायं इत्युक्तम् । अतश्च पर एवात्मा जीव इत्यापतति । परस्य चात्मनः अनन्तत्वमाम्नातम् । तत्र कुतो जीवस्य परिमाणचिन्तावतारः–इति ।

उच्यते—सत्यमेतत् । उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति । स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते । तस्य सर्वस्य अनाकुलत्वोपपादनाय अयमारम्भः ।

---

गन्धादिविषयविशेषपरिच्छेदार्थत्वादिति । परिच्छेदो वृत्तिरूपो जन्यः, तत्र चक्षुरादीनामुपयोग इत्यर्थः । गन्धाय–गन्धगोचरवृत्त्यर्थम्, दर्शनाय चक्षुः श्रवणाय श्रोत्रं इत्यादिसमभिव्याहारात् । आभासीभवतीति । 'ज्ञानस्य गुणतया ज्ञानाश्रयता न स्यात्' इत्येवंरूपस्तर्कः श्रुतिविरोधात् आभास इत्यर्थः । तथा च, ज्ञानरूपस्याप्यात्मनः चक्षुरादिजन्यवृत्त्याश्रयतया अहंपश्यामीत्यादिव्यवहारः 'एष हि द्रष्टा' इत्यादिश्रुतयश्च उपपन्ना इति भावः ।

सूत्रे 'ज्ञोऽतः' इति तु 'घञर्थे कविधानम्' इति भावार्थककप्रत्ययान्तः, ज्ञानस्वरूप इत्यर्थः ॥ १८ ॥

इति-ज्ञाधिकरणम्

तत्र प्राप्तं तावत् - उत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणो जीवः-इति। उत्क्रान्तिस्तावत् 'स यदा अस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैः उत्क्रामति (कौ. उ. ३।३) इति। गतिरपि 'ये वै के च अस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ. उ. १।२) इति। आगतिरपि 'तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे' (बृ. उ. ४।४।६) इति। आसामुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नस्तावज्जीवः इति प्राप्नोति। न हि विभोश्चलनमवकल्पते - इति। सति च परिच्छेदे शरीरपरिमाणत्वस्य आर्हतपरीक्षायां निरस्तत्वात् अणुरात्मेति गम्यते ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचित् अचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत। उत्तरे तु गत्यागती न अचलतः संभवतः।

---

अत्र सूत्रे श्रवणादितिपदं अणुरितिपदं च अध्याह्रियते। अयञ्चाध्याहारः 'नाणुरतच्छ्रुतेः' इत्युत्तरसूत्रपर्यालोचनया लभ्यते। तत्र हि महत्त्वश्रुतेः अणुत्वं निषिध्यते। तच्च तदैव [1]सङ्गतं भवति, यदि कयाचिच्छ्रुत्या अणुत्वं प्रागुक्तं भवेत्।

ततश्च, 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति 'अङ्गुष्ठमात्रो रवितुल्यरूपः' इति 'स वा एष महानज आत्मा' इति च [2]विरुद्धपरिमाणप्रतिपादकानां श्रुतीनां उपलम्भात् अप्रामाण्येन पूर्वपक्षे, मध्यमपरिमाणत्वोपगमे अनित्यत्वप्रसङ्गात् व्यापित्वोपगमे च उत्क्रान्त्याद्यनुपपत्तेः, उत्क्रान्त्यादिश्रवणात् अणुर्जीवोऽङ्गीकर्तव्यः—इत्येकदेशिमतप्रतिपादकमिदं सूत्रम्, इत्यभिप्रेत्याह—उत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणोजीव इतीति। सः-जीवः, सहैवैतैः - इन्द्रियैस्सह। अत्र तदेत्यध्याहारः ॥ १९ ॥

अचलतोऽपीति। यद्यपि उत्क्रान्तिः ऊर्ध्वगमनरूपा क्रिया न अचलतः सम्भवति, तथापि, ग्रामादयमुत्क्रान्तः इति ग्रामस्थे एव स्वाम्यनिवृत्तिमात्रेण प्रयोग-

---

1. मु. सम्भवति
2. आ. विरूपपरिमाण

स्वात्मना हि तयोः संबन्धो भवति, गमेः कर्तृस्थक्रियत्वात्। अमध्यमपरिमाणस्य च गत्यागती अणुत्वे एव संभवतः। स्वत्योश्च गत्यागत्योः उत्क्रान्तिरपि अपसृप्तिरेव देहात् इति प्रतीयते। न हि अनपसृप्तस्य देहात् गत्यागती स्याताम्। देहप्रदेशानां च उत्क्रान्तावपादानत्ववचनात् 'चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' (बृ. उ. ४।४।२) इति। 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' (बृ. उ. ४।४।१) 'शुक्रमादाय पुनरैति स्थानम्' (बृ. ४।३।११) इति च आन्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः। तस्मादपि अस्य अणुत्वसिद्धिः ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यात् नाणुरयमात्मा। कस्मात्? अतच्छ्रुतेः। अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः। 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ. उ. ४।४।२२) 'आकाशवत् सर्वगतश्च नित्यः'

---

दर्शनात् स्वाम्यनिवृत्तिरेव उत्क्रान्तिशब्दार्थ इति कश्चिद्वदेत्, तदभ्युपेत्यैव अणुत्वसाधनाय इदं सूत्रम्।

वस्तुतस्तु उत्क्रान्तिः ऊर्ध्वगमनक्रियैव, ग्रामादुत्क्रान्त इति प्रयोगस्तु गौण इति द्रष्टव्यम्।

गमेः कर्तृस्थक्रियत्वादिति। कर्तृगतोत्तरदेशसंयोगाधायिका क्रिया केवलस्य गमेरर्थः। आङ्पूर्वकस्य तु पूर्वदेशसंयोगाधायिका क्रिया अर्थः। तथा च कर्तृगतसंयोगाधायिका क्रिया प्रतिपाद्या यस्य तत्त्वादित्यर्थः। गत्यागत्युपपादकतया आम्नाता मरणकालोत्क्रान्तिरपि क्रियारूपेत्याह—स्वत्योश्चेति। उत्क्रान्तेः क्रियारूपत्वे हेत्वन्तरमाह—देहप्रदेशानां चेति। 'एष आत्मा निष्क्रामति' इत्युपक्रम्य चक्षुष्टोवेत्यादिवाक्यमाम्नातम्। उत्क्रान्तेः स्वाम्यनिवृत्तिरूपत्वे हि चक्षुरादीनामवधित्वं न स्यात्। स एता इति। 'मरणकाले तेजोमात्राः-इन्द्रियाणि गृहीत्वा हृदयदेशं प्राप्नोति जीवः' इति शरीरमध्ये हृदयदेशे गतिः श्रूयते। शुक्रमादायेति। स्वप्नकाले इन्द्रियगणमादाय नाडीः प्रविष्टस्य जीवस्य पुनर्जाग्रदारम्भे 'शुक्रं-भास्वरमिन्द्रियगणं आदाय पुनः स्थानं-चक्षुरादिगोलकरूपं एति' इति आगतिः शरीरमध्ये प्रतिपाद्यते। एते अपि गत्यागती अणुत्वसाधिके ॥ २० ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवंजातीयका हि श्रुतिः आत्मनोऽणुत्वे विप्रतिषिध्येत—इति चेत्

नैष दोषः। कस्मात्? इतराधिकारात्। परस्य ह्यात्मनः प्रक्रियायां एषा परिमाणान्तरश्रुतिः। परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्। 'विरजः पर आकाशात्' (बृ. उ ४।४।२०) इत्येवंविधाच्च परस्यैवात्मनः तत्र तत्र विशेषाधिकारात्। ननु 'योऽयं विज्ञानमयः प्राणेषु' इति शारीर एव महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते। शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद् द्रष्टव्यः। तस्मात् प्राज्ञविषयत्वात् परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते ॥ २१ ॥

---

ननु—'आकाशवत्' इति 'सत्यं ज्ञानमनन्तम्' इति च वाक्यद्वयं परविषयमस्तु, 'स वा एष महानज आत्मा' इति तु कथं परविषयम्, अवस्थाद्युपन्यासलिङ्गेन जीवस्यैव तत्र प्रस्तुतत्वात्-इत्याशङ्क्य, परमेश्वरोऽपि तत्र प्रस्तुतो वर्तत इत्यभिप्रेत्याह—विरजः पर इति। ननु—विरजःपरआकाशादित्यत्र परमात्मनः प्रस्तुतत्वेऽपि सवाएषमहानजआत्मेत्यत्र तद्ग्रहणं नोचितम्, 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति जीवस्यैव तत्राम्नानात्-इति शङ्कते—ननु योऽयं विज्ञानमय इति। परिहरति—शास्त्रदृष्ट्येति।

ननु—सिद्धान्ते जीवब्रह्मणोरभेदोपगमात् परमार्थगत्या ब्रह्मात्मस्वरूपतया जीवो व्यापक इति, इदं वाक्यं शास्त्रदृष्ट्या योजयितुं शक्यम्। अणुत्ववादिना तु अभेदो जीवपरयोर्नाङ्गीक्रियते। कथं तन्मते शास्त्रदृष्ट्यापि जीवे महत्त्वं वक्तुं शक्यम्-इति चेत्,

उच्यते—[1]केचित् किल एकदेशिनः, मुक्तौ जीवब्रह्मणोरभेद इति मन्यमानाः, जीववाचकैश्शब्दैः ब्रह्म लक्षयितुं शक्यमिति मन्यन्ते। तन्मतानुसरणे-मुक्तौ ब्रह्माभेदो भविष्यतीति शास्त्रदृष्टिमनुसृत्य वामदेवपदेन तदभेदं प्राप्स्यमानं ब्रह्म लक्षयित्वा यथा सर्वात्मकं निर्दिश्यते, एवमिहापि विज्ञानमयादिपदैः ब्रह्म लक्षयित्वा महत्त्वनिर्देशः-इत्यर्थो ग्राह्यः।

---

1. औडुलोमीयाः कादाचित्कभेदाभेदवादिनः।

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्च अणुरात्मा, यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते— 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' (मु. उ. ३।१।९)। इति प्राणसंबन्धाच्च जीव एव अयमणुरभिहित इति गम्यते। तथा उन्मानमपि जीवस्य अणिमानं गमयति 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः' (श्वे. उ. ५।९) इति। 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. उ. ५।८) इति च उन्मानान्तरम् ॥२२॥

ननु—अणुत्वे सति एकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते। दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिः निदाघसमये च सकलशरीरपरितापोपलब्धिः – इति। अत उत्तरं पठति—

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथा हि हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति। त्वक्संबन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते।

---

[1]अन्ये तु-शरीरवाचकानां शरीरिपर्यन्तताव्युत्पत्तेः जीवस्यापि ब्रह्मशरीरतया, तद्वाचकैः विज्ञानमयादिपदैः वामदेवपदेनेव ब्रह्म लक्ष्यत इति, ब्रह्मण एवायं महत्त्वोपदेशः। जीवादिपदानां ब्रह्मपर्यन्तताज्ञानमेव शास्त्रदृष्टिः-इति मन्यन्ते ॥ २१ ॥

पूर्वं उत्क्रान्त्याद्यनुपपत्त्या जीवस्य अणुत्वमुक्तम्। अनेन सूत्रेण, साक्षादेवाणुत्वप्रतिपादिका श्रुतिः उपन्यस्यते।

महतोऽवयविनः सकाशात् अल्पमवयवमुद्धृत्य मानं उन्मानम्। तदाह—वालाग्रेति। वालः-केशः। आराग्रेति। आरा सूचीविशेषः, तदग्रं प्रमाणमस्य स आराग्रमात्रः ॥ २२ ॥

उत्तरसूत्रमवतारयति—नन्वणुत्वेसत्येकदेशस्थस्येति।

सौत्रं दृष्टान्तं व्याख्याय स्वयं प्रकारान्तरेण सर्वाङ्गीणशैत्याद्युपलब्धिं अणुत्वपक्षे उपपादयति—त्वक्सम्बन्धाच्चेति। त्वगात्मसंयोगो हि सुखादौ कारणं,

---

1. विशिष्टाद्वैतिनः

त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते त्वक्च कृत्स्नशरीरव्यापिनीति ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह—यदुक्तं अविरोधश्चन्दनवदिति, तदयुक्तम्, दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्। सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति। प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यं - एकदेशस्थत्वं सकलदेहाह्लादनं च। आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं न एकदेशवर्तित्वम्। अनुमेयं तु तदिति यदप्युच्येत; न चात्र अनुमानं संभवति। किं आत्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः किं वा विभोर्नभस इव, आहोस्वित् चन्दनबिन्दोरिवाणोरेकदेशस्थस्येति संशया[नि](नति)वृत्तेः – इति।

अत्रोच्यते—नायं दोषः। कस्मात्? अभ्युपगमात्। अभ्युपगम्यते हि आत्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वं अवस्थितिवैशेष्यम्। कथमित्युच्यते–हृदि ह्येष आत्मा पठ्यते वेदान्तेषु, 'हृदि ह्येष आत्मा' (प्र. उ. ३।६) 'स वा एष आत्मा हृदि' (छा. उ. ८।३।३) कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ. उ. ४।३।७) इत्याद्युपदेशेभ्यः। तस्मात् दृष्टान्तदार्ष्टान्तिकयोरवैषम्यात् युक्तमेवैतत् अविरोधश्चन्दनवदिति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वा, अणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते। यथा लोके मणिप्रदीपप्रभृतीनां अपवरकैकदेशवर्तिनामपि

---

तस्य त्वग्द्वारा कृत्स्नशरीरगतत्वात् कारणानुसारेण सर्वाङ्गीणवेदनादिकमुपपद्यते इत्यर्थः ॥ २३ ॥

सूत्रव्यावर्त्यां शङ्कां आह—अत्राहेति ॥ २४ ॥

प्रभा अपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति तद्वत्। स्यात् कदाचित् चन्दनस्य सावयवत्वात् सूक्ष्मावयवविसर्पणेनापि सकलदेहे आह्लादयितृत्वं, न त्वणोर्जीवस्य अवयवाः सन्ति, यैरयं सकलदेहं विप्रसर्पेत्- इत्याशङ्क्य, गुणाद्वालोकवत् - इत्युक्तम् ॥ २५ ॥

कथं पुनः गुणो गुणिव्यतिरेकेण अन्यत्र वर्तेत। न हि पटस्य शुक्लो गुणः पटव्यतिरेकेण अन्यत्र वर्तमानो दृश्यते। प्रदीपप्रभावद्भवेदिति चेत्, न—तस्या अपि द्रव्यत्वाभ्युपगमात्। निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तु तेजोद्रव्यमेव प्रभा - इत्यत उत्तरं पठति—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति, अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमगन्धोपलब्धेः, एवं अणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति। अतश्च अनैकान्तिकमेतत् 'गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिः' इति। गुणस्यैव सतो गन्धस्य आश्रयविश्लेषदर्शनात्। गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत्, न—

---

प्रकारान्तरानुसरणं किमर्थं इत्याकाङ्क्षायां चन्दनदृष्टान्ते अस्वरसं दर्शयति— स्यात् कदाचिदिति।

ननु—ज्ञानगुणस्य सर्वशरीरव्याप्त्या सर्वाङ्गीणोपलब्ध्युपपत्तावपि, सुखादीनां कथं सर्वाङ्गीणत्वाभ्युपपत्तिः-इति चेत्,

एवं मन्यते—यथा सिद्धान्ते अन्तःकरणं सङ्कोचविकासशीलं सुखादि-परिणामि उपेयते, एवं आत्मनि ज्ञानाख्यो गुणः सङ्कोचविकासशीलः सुखादि-परिणामी उपेयत इति, तस्य सुखाद्यात्मना सर्वाङ्गीणविकासादिकमुपपद्यते ॥ २५ ॥

तेजोद्रव्यमेव प्रभेत्यत उत्तरं पठतीति। यद्यपि-एकदेशिना ज्ञानस्य सङ्कोचादिपरिणामाभ्युपगमात् तदपि प्रभावत् द्रव्यमेवेत्यपि वक्तुं शक्यम्, गुणत्व-व्यवहारस्तु तस्य आत्मपरतन्त्रतामात्रेण, तथापि - गुणस्य द्रव्यविश्लेषो नास्तीति तार्किकपरिभाषा अप्रयोजिकैवेति प्रदर्शयितुं गुणत्वमुपेत्यैव परिहरति 'व्यतिरेको गन्धवत्' इति ॥ २६ ॥

यस्मान्मूलद्रव्याद्विश्लेषः तस्य क्षयप्रसङ्गात् । अक्षीयमाणमपि तत् पूर्वावस्थातो गम्यते । अन्यथा तत् पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत ।

स्यादेतत्—गन्धाश्रयाणां विश्लिष्टानामवयवानां अल्पत्वात् सन्नपि विशेषो नोपलक्ष्यते । सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृ(ता)[प्ता]गन्ध बुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्तः—इति चेत्,

न—अतीन्द्रियत्वात् परमाणूनां स्फुटगन्धोपलब्धेश्च नागकेसरादिषु । न च लोके प्रतीतिः 'गन्धवद्द्रव्यमाघ्रातम्' इति । 'गन्ध एवाघ्रातः' इति तु लौकिकाः प्रतियन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेः गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्, न—प्रत्यक्षत्वात् अनुमानाप्रवृत्तेः ।

तस्मात् यत् यथा लोके दृष्टं तत् तथैवानुमन्तव्यं निरूपकैः नान्यथा । न हि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं च आत्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' (कौ. उ. ४।२०) इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' (कौ. उ. ३।६) इति च आत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् चैतन्यगुणेनैव अस्य शरीरव्यापिता गम्यते । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. उ. २।१।१७) इति च कर्तुः

---

चैतन्येन गुणेनेति । अणोर्हृदयायतनस्य स्वत एव लोमनखाग्रव्याप्तेरसम्भवात्-इति भावः ॥ २७ ॥

ननु—आत्मप्रज्ञयोः पृथगुपदेशमात्रेण कथं गुणेनैव व्यापित्वं सिध्यति—इत्याशङ्क्य, नात्र पृथगुपदेशमात्रं हेतुः, अपि तु, प्रज्ञायाः शरीरसमारोहणरूपायां

शरीरात् पृथक् विज्ञानस्योपदेशः एतमेवाभिप्रायमुपोद्बलयति। तस्मादणुरात्मेति ॥ २८ ॥

एवं प्राप्ते ब्रूमः—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति अणुरात्मेति । उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीवः—इत्युक्तम् । परमेव चेत् ब्रह्म जीवः, तस्मात् यावत् परं ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्वमाम्नातम् । तस्मात् विभुर्जीवः । तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ. उ. ४।४।२२) इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति ।

---

व्याप्तौ करणत्वेन पृथगुपदेशो हेतुर्विवक्षितः-इत्याह—प्रज्ञया शरीरमिति । तदेषांप्राणानामिति । स्वापकाले प्राप्ते, स्वप्नदशायां, विज्ञानेन स्वधर्मेण प्राणानां-इन्द्रियाणां विज्ञानशक्तिं गृहीत्वा-विज्ञानपरिशेषेणैवेन्द्रियकवृत्तिलयमापाद्य-इति यावत्। 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति वाक्यशेषः। ननु अत्र वाक्ये ज्ञानगुणेन आत्मनो व्याप्तिरिति न प्रतिपादितम्, अत आह—एतमेवाभिप्रायमिति। अनेन वाक्येन आत्मनो ज्ञानाख्यः कश्चित् गुणः करणीभूतोऽस्तीति सिध्यति, तथा च, तेनैव सर्वशरीरव्याप्त्यादिकमपि सिध्यतीत्यर्थाल्लभ्यते-इत्यर्थः ॥ २८ ॥

तथा च स वा एष महानज आत्मेति । यथा च "यावन्मुक्ति जीवब्रह्मणोर्भेदः मुक्तौ त्वभेदः इत्येकदेशिप्रक्रिया शरीरवाचकानां शरीरिपर्यन्तत्वव्युत्पत्तिश्च निर्मूला" तथा प्रथमाध्याय एव विवेचितम् । अपि चेह 'प्राणेषु' 'हृदये[1]' इत्यादिजीवलिङ्गानुसारेण 'योऽयं विज्ञानमयः' इत्युपक्रमगतजीवपरवाक्यसाम्येन च [2]अस्य वाक्यस्य जीवपरत्वमेव[3] वक्तव्यम् । तत्र सर्ववशित्वादि-

---

1. मु॰ हृदि
2. आ॰ अस्य जीव
3. जीवपरत्वमेवेति एतेन — विशिष्टाद्वैत्युक्तं परमात्मपरत्वं निरस्तं वेदितव्यम् ।

न च अणोर्जीवस्य सकलशरीरगता वेदना उपपद्यते। त्वक्संबन्धात् स्यादिति चेत्, न - कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत। त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते त्वक्च कृत्स्नशरीरव्यापिनीति। पादतल एव तु कण्टकनुन्नो वेदनां प्रतिलभते।

न च अणोर्गुणव्याप्तिरुपपद्यते, गुणस्य गुणिदेशत्वात्। गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत। प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम्। गन्धोऽपि गुणत्वाभ्युपगमात् साश्रय एव संचरितुमर्हति। अन्यथा गुणत्वहानिप्रसङ्गात्। तथा चोक्तं द्वैपायनेन—

'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः।
पृथिव्यामेव तं विद्यात् अपो वायुं च संश्रितम्'

[महा. शा. २३२।९]

इति। यदि च चैतन्यं जीवस्य समस्तं शरीरं व्याप्नुयात् नाणुर्जीवः स्यात्, चैतन्यमेव ह्यस्य स्वरूपं अग्नेरिव औष्ण्यप्रकाशौ, नात्र गुणगुणिविभागो विद्यते इति। शरीरपरिमाणत्वं च प्रत्याख्यातम्। परिशेषात् विभुर्जीवः।

कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह—तद्गुणसारत्वात्तु तद्व्यपदेशः इति। तस्याः-बुद्धेः गुणाः तद्गुणाः-इच्छा द्वेषः सुखं दुःखमित्येवमादयः। तद्गुणाः सारः-प्रधानं यस्यात्मनः संसारित्वे संभवति स तद्गुणसारः,

---

प्रतिपादनं तु ब्रह्माभेदविवक्षयेति सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र प्रतिपादितम्। अतः 'स वा एष महानजः' इति न परमेश्वरस्य महत्त्वं प्रतिपादयति।

कण्टकतोदनेऽपीति। यदि हि त्वगात्मसंयोगस्य सुखादिकारणस्य त्वग्द्वारा कृत्स्नशरीरव्यापितया जाह्नवीह्रदनिमज्जनादिस्थले सर्वाङ्गीणसुखादिकं समर्थ्येत, तथासति कण्टकत्वक्संयोगस्यापि दुःखनिमित्तस्य त्वग्द्वारा कृत्स्नशरीरव्यापितया सर्वाङ्गीणवेदना स्यात्। अतः यदवच्छेदेन आत्मन इष्टानिष्टवस्तुसंयोगः तदवच्छेदेनैव शरीरे सुखदुःखाद्युत्पत्तिः समर्थनीया। तथाभ्युपगमे तु न अणुवादिनो जाह्नवीह्रदनिमज्जनस्थले सर्वाङ्गीणसुखोत्पत्तिः समर्थयितुं शक्यते, अणोरात्मनः सर्वाङ्गावच्छेदेन जाह्नवीजलसंयोगासम्भवात्-इति भावः।

तस्य भावः तद्गुणसारत्वम् । न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति । बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वं अकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः । तस्मात् तद्गुणसारत्वात् बुद्धिपरिमाणेन अस्य परिमाणव्यपदेशः तदुत्क्रान्त्यादिभिश्च अस्योत्क्रान्त्यादिव्यपदेशः, न स्वतः । तथा च 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' (श्वे. उ. ५।९) इति अणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह । तच्च एवमेव समञ्जसं स्यात् यदि औपचारिकमणुत्वं जीवस्य भवेत् पारमार्थिकं च आनन्त्यम् । न ह्युभयं मुख्यमवकल्पेत । न च 'आनन्त्यमौपचारिकम्' इति शक्यं विज्ञातुं, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् । तथा इतरस्मिन्नप्युन्माने 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. उ. ५।८) इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना । 'एषोऽणुरात्मा चेतसा वेदितव्यः' (मु. उ. ३।१।९) इत्यत्रापि न जीवस्य अणुपरिमाणत्वं शिष्यते, परस्यैवात्मनः चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः । तस्मात् दुर्ज्ञानत्वाभिप्रायं इदमणुत्ववचनं

---

बुद्धेर्गुणेनेति । आराग्रमात्रत्वस्य अवरत्वस्य च जीवगतस्य बुद्धिगुणाराग्रमात्रत्वावरत्वोपाधिकतया बुद्धेर्गुणेनेति व्यपदेशः । आत्मसत्ताधीनत्वाच्च आत्मगुणेनेति [1]व्यपदेशः । चक्षुराद्यनवग्राह्यत्वेनेति । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । एषोऽणुरात्मा चेतसा वेदितव्यः' इति पाठक्रमः । ततश्च 'यस्मिन् प्राणः पञ्चधा संविवेश' इति जीवलिङ्गं [2]अभेदाभिप्रायम् । [3]अतः अणुत्व-

---

1. मु. व्यवहारः
2. मु. भेदाभिप्रायम्
3. अतः—जीवाभेदाभिप्रायकत्वात् परमात्माभिप्रायकत्वाच्च ।

उपाध्यभिप्रायं वा द्रष्टव्यम् । तथा 'प्रज्ञया शरीरं समारुह्य' (कौ. उ. ३।६) इत्येवंजातीयकेष्वपि भेदोपदेशेषु–बुद्ध्यैव उपाधिभूतया जीवः शरीरं समारुह्य-इत्येवं योजयितव्यम्, व्यपदेशमात्रं वा शिलापुत्रकस्य शरीरमित्यादिवत् । न ह्यत्र गुणगुणिविभागोऽपि विद्यते इत्युक्तम् । हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात् । तथा उत्क्रान्त्यादीनामपि उपाध्यायत्ततां दर्शयति 'कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत' (प्र. उ. ६।३-४) इति । उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते । न ह्यनपसृप्तस्य देहात् गत्यागती स्याताम् ।

एवं उपाधिगुणसारत्वात् जीवस्याणुत्वादिव्यपदेशः, प्राज्ञवत् । यथा प्राज्ञस्य-परमात्मनः सगुणेषूपासनेषु उपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः 'अणीयान् व्रीहेर्वा यवाद्वा' (छा. उ. ३।१४।३) 'मनोमयः प्राणशरीरः....सर्वगन्धः सर्वरसः' (छा. उ. ३।१४।२) 'सत्यकामः सत्यसंकल्पः' (छा. उ. ८. १. ५) इत्येवंप्रकारः तद्वत् ॥ २९ ॥

---

व्यपदेशोऽत्र अन्तःकरणोपाधिक[1] एव । अत एव [2]च एषोऽणुरात्मा चेतसा वेदितव्यः इति मन्त्रे [3]उत्तरार्धे 'प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा' इति विशुद्धेऽन्तःकरणे आत्मनो व्यापकत्वं दर्शयति । विपूर्वस्य भवतेः व्याप्त्यर्थत्वात् ।

यथा प्राज्ञस्य परमात्मन इति । यथा हि परमात्मनोऽणीयस्त्वम् 'अणीयान् व्रीहेर्वा' इत्यादौ श्रूयते, एवमुत्क्रान्तिरपि श्रूयते 'तद्यथानस्सुसमाहितमुत्सर्जद्यायात् एवमेवायमात्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' इति हि जीवेन सह प्राज्ञशब्दोदितपरमात्मन उत्क्रान्तिराम्नाता । तथा गुहांप्रविष्टावित्यादौ परमात्मनो गुहाप्रवेशोऽप्याम्नातः । न ह्येतत् सर्वं मुख्यं आत्मनि सम्भवति । यदि तु

---

1. अन्तःकरणोपाधिक एवेति एतेन - श्रुतप्रकाशिकोक्तं स्वाभाविकत्वं निरस्तम् ।
2. मु. 'च' नास्ति
3. मु. उत्तरार्धे

परमात्मनोऽणुत्वाभ्युपगमे तस्य सर्वोपादानत्वं न सम्भवतीति तत् औपाधिकमुपेयते, तर्हि जीवस्यापि सर्वाङ्गीणसुखादिकं अणुत्वे न सम्भवतीति तत् औपाधिकमस्तु ।

ननु—सिद्धान्ते सुखादिकं न जीवस्य धर्मः, अपि तु अन्तःकरणस्य, एकदेशिमतेऽपि आत्मधर्मभूतनित्यज्ञानधर्मः, तयोश्च सङ्कोचविकासशीलतया सर्वाङ्गीणविकासे तादृक्सुखादिकं अणोरपि जीवस्य उपपद्यते-इति चेत्,

अहंसुखीत्यात्मधर्मतया प्रतीयमानं सुखादिकं अन्तःकरणादेर्धर्म इति आत्मनो निर्विकारत्वसमर्थनाय वक्तव्यम्, तथासति ब्रह्मैक्याय जीवस्यानन्त्यमुपेयमिति, अणुत्वादिवादा अपि औपाधिका एव उपगन्तव्याः ।

अपि च - अणोरीश्वरस्य सर्वोपादानत्वमुपपद्यत एव । न हि निर्विकारस्य परमात्मनः साक्षात् परिणामित्वं एकदेशिना वक्तुं शक्यम्, अपि तु तच्छक्तिभूतमायाया विकारित्वं परमात्मनस्तु विकारिमायाधारतयोपादानत्वं उपेयम् । ततश्च अणुत्वेऽपि परमात्मनः, जीवस्येव सङ्कोचविकासशीलस्वधर्मभूतज्ञानं प्रति दीपप्रभान्यायेन, परिणामिमायां प्रति आधारतोपपत्तेः सर्वोपादानत्वसिध्यर्थं महत्त्वस्याप्यनपेक्षणात् ।

यदि तु—सिद्धान्तानुसारेण सर्वाधिष्ठानत्वं सर्वोपादानत्वं विकाराव्यापिन आत्मनो न सम्भवतीत्युच्यते, तथासति अहंसुखीतिप्रतीत्या आत्मन्यपि सुखाद्यधिष्ठानत्वस्यावश्यकतया अव्यापिनस्तदसम्भवात् तस्यापि विभुत्वमुपेयमेव ।

अतो जीवविभुत्वप्रतिपादकानां वचनानां जीवब्रह्मैक्योपपादनायाम्नातानां अन्यथानेतुमशक्यतया अणुत्वादिवादा औपाधिका एव व्याख्येयाः ।

न च—तेषाम् औपाधिकत्वाभ्युपगमे 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति प्राणोत्क्रान्तिव्यतिरेकेण पृथगुत्क्रान्त्याम्नानं अनुपपन्नं स्यात्, न हि विभोर्जीवस्य स्वातन्त्र्येणोत्क्रान्तिस्सम्भवति-इति वाच्यम् ।

न ह्यत्र विशुद्धस्यैव जीवस्य तमुत्क्रामन्तमिति उत्क्रान्तिराम्नायते, अपि तु बुद्धिविशिष्टस्यैव । प्राणोऽनूत्क्रामतीति उत्तरवाक्ये प्राणवायोर्बाह्येन्द्रियाणामेव[1] च ग्रहणोपपत्तेः ॥ २९ ॥

---

1. एवेन बुद्धिव्यवच्छेदः ।

स्यादेतत्-यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सति आत्मनो विभक्तस्य अनालक्ष्यत्वात् असत्त्वमसंसारित्वं वा प्रसज्येत-इति।

अत उत्तरं पठति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया। कस्मात्? यावदात्मभावित्वाद्बुद्धिसंयोगस्य। यावत् अयमात्मा संसारी भवति, यावत् अस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावत् अस्य बुद्ध्या संयोगो न शाम्यति। यावदेव च अयं बुद्ध्युपाधिसंबन्धः तावदेव जीवस्य जीवत्वं संसारित्वं च। परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसम्बन्धपरिकल्पितस्वरूपव्यतिरेकेणास्ति। न हि नित्यमुक्तस्वरूपात् सर्वज्ञादीश्वरात् अन्यश्चेतनो धातुः द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते। 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' (बृ. उ. ३।७।२३), 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' (बृ. उ. ३।८।११) 'तत्त्वमसि' (छा. उ. ६।८।७), 'अहं ब्रह्मास्मि' (बृ. उ. १।४।१०) इत्यादिश्रुतिशतेभ्यः।

कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह। तथा हि शास्त्रं दर्शयति 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव' (बृ. उ. ४।३।७) इत्यादि। तत्र, विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति। प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' (बृ. उ. ४।४।५) इति विज्ञानमयस्य मनआदिभिः सह पाठात्। बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते, यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते तद्वत्। 'स समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति। केन समानः?

तथैव बुद्ध्येति गम्यते, सन्निधानात् । तच्च दर्शयति—'ध्यायतीव लेलायतीव' इति। एतदुक्तं भवति—नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां बुद्धौ चलतीवेति । अपिच मिथ्याज्ञानपुरःसरोऽयं आत्मनो बुद्ध्युपाधिसंबन्धः, न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्ति, इत्यतो यावत् ब्रह्मात्मतानवबोधः तावत् अयं बुद्ध्युपाधिसंबन्धो न शाम्यति । दर्शयति च—

'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'
(श्वे. उ. ३।८) इति ॥ ३० ॥

ननु सुषुप्तप्रलययोः न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्, 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा.उ. ६।८।१) इति वचनात्, कृत्स्नविकारप्रलयाभ्युपगमाच्च । तत् कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति ;

अत्रोच्यते—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

---

सन्निधानादिति । योऽयंविज्ञानमय इति पूर्ववाक्ये विज्ञानपदेन बुद्धेरुपादानात् । माध्यन्दिनशाखायां च 'सधीः स्वप्नो भूत्वा इमं लोकमतिक्रामति' इति उत्तरवाक्येऽपि बुद्धिराम्नायते । अतः सैव ससमानइत्यत्र आकाङ्क्षानिवृत्तये सम्बध्यते । लेलायति-चेष्टते ।

ननु-ध्यायतीवेतिवाक्ये आत्मनो ध्यानादिकर्तृसादृश्यं प्रतिपाद्यते, तावता कथं एतस्य वाक्यस्य 'यावदात्मभावि मनः' इत्येतदुपपादकता भवेत्-इत्याशङ्क्य, आह-एतदुक्तं भवतीति । ध्यातर्येव जीवे ध्यातृसादृश्योपपादानं तस्य ध्यातृत्वाभावविवक्षयैव । यथा स्वप्नवृत्तान्तकथनपरे अद्राक्षमिवगिरिश्रृङ्गमित्यादौ । तथा च ध्यातृत्वाभावतात्पर्येण अनेन वाक्येन ध्यातृत्वस्य मिथ्यात्वसूचनात् अस्वाभाविके तस्मिन् उपाध्यपेक्षायां अन्तःकरणमेव ससमानइतिवाक्येन उपाधिः समर्प्यते । ध्यातृत्वादेश्च यावन्मोक्षमनुवर्तनात् तदुपाधेरपि भवति यावन्मोक्षमनुवर्तनम्-इति ॥ ३० ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानानि अविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति न अविद्यमानान्युत्पद्यन्ते, षण्डादीनामपि तदुत्पत्तिप्रसङ्गात्, एवं अयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति । एवं हि एतद्युज्यते । न ह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानं अविद्यात्मकबीजसद्भावकारितं ‘ सति संपद्य न विदुः सति संपद्यामह इति, त इह व्याघ्रो वा सिंहो वा ’ (छा. उ. ६।९।२-३) इत्यादिना । तस्मात् सिद्धमेतत् यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

तच्च आत्मन उपाधिभूतमन्तःकरणं मनः बुद्धिः विज्ञानं चित्तमिति च अनेकधा तत्र तत्र अभिलप्यते । क्वचिच्च वृत्तिविभागेन, संशयादिवृत्तिकं मन इत्युच्यते निश्चयवृत्तिर्बुद्धिरिति ।

---

अविद्यात्मकबीजेति । ‘ सति सम्पद्य न विदुः ’ इत्यत्र जाग्रद्देशोत्पत्स्यमानज्ञानप्रागवस्थारूपस्य [1]अवेदनस्य [2]तत्र दर्शिततया [3]तदात्मना सर्वेषां करणानां [4]तत्रावस्थानं उपपद्यते इति भावः ॥ ३१ ॥

अनेकधा तत्रतत्रेति । ‘ बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । ’ विज्ञानसारथिर्यस्तु ’ ‘ चित्तं वाव सङ्कल्पाद्भूयः ’ इत्यादौ । संशयादिवृत्तिकं मन इति । ‘ कामस्सङ्कल्पः ’ इत्युपक्रम्य ‘ एतत्सर्वं मन एव ’ इत्यत्र । एवं निश्चयवृत्तिर्बुद्धिरित्यत्रापि यथासम्भवं [5]वचनं [6]उदाहार्यम् ।

---

1. **अवेदनस्य**—अज्ञानस्य ।
2. **तत्र**—सुषुप्तौ । एवमग्रेऽपि ।
3. **तदात्मना**—अवेदनात्मना ।
4. मु. ‘ तत्र ’ नास्ति
5. **वचनम्**—“ बुद्धिश्च बोद्धव्यं च ” इति प्रश्नोपनिषद्वचनम् ।
6. आ. उदाहर्तव्यम्

तच्चैवंभूतमन्तःकरणं अवश्यं अस्तीत्यभ्युपगन्तव्यम्। अन्यथा हि अनभ्युपगम्यमाने तस्मिन् नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात्। आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां सन्निधाने सति नित्यमेव उपलब्धिः प्रसज्येत। अथ सत्यपि हेतुसमवधाने फलाभावः, ततो नित्यमेव अनुपलब्धिः प्रसज्येत। न चैवं दृश्यते। अथवा अन्यतरस्य-आत्मनः इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः। न चात्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात्। नापीन्द्रियस्य। न हि तस्य पूर्वोत्तरयोःक्षणयोरप्रतिबद्धशक्तिकस्य सतः अकस्मात् शक्तिः प्रतिबध्येत। तस्मात् यस्य अवधानानवधानाभ्यां उपलब्ध्यनुपलब्धी भवतः तत् मनः। तथा च श्रुतिः 'अन्यत्रमना अभूवं नादर्शं अन्यत्रमना अभूवं नाश्रौषम्' इति, 'मनसा ह्येव पश्यति मनसा शृणोति' (बृ. उ. १।५।३) इति। कामादयश्च अस्य वृत्तय इति दर्शयति 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. उ. १।५।३) इति। तस्मात् युक्तमेतत् 'तद्गुणसारत्वात् तद्व्यपदेशः' इति ॥ ३२ ॥

## १४. कर्त्रधिकरणम्

# कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

तद्गुणसारत्वाधिकारेणैव अपरोऽपि जीवधर्मः प्रपञ्चयते।

---

ननु–'विषयेन्द्रियसन्निकर्षे सत्यपि ज्ञानकादाचित्कत्वदर्शनात् यत्समवधानाभावात् ज्ञानकादाचित्कत्वं तन्मनः' इत्यभ्युपगन्त्रापि इन्द्रियमनस्संयोगस्य कादाचित्कत्वं अदृष्टविशेषायत्तं इत्येव वक्तव्यम्, तथा च ज्ञानकादाचित्कत्वस्यापि तेनैवोपपत्तेः किमिति अलौकिकं किञ्चित् अन्तःकरणं कल्पनीयम्–इत्यत आह—तथा च श्रुतिरिति। तथा च ज्ञानकादाचित्कत्वस्य अन्तःकरणसमवधानासमवधानाभ्यां श्रुत्यैव प्रतिपादनात् नात्र किञ्चिदाशङ्कनीयं भवतीति तात्पर्यम् ॥ ३२ ॥

इति उत्क्रान्तिगत्यधिकरणम्

पूर्वाधिकरणेन सङ्गतिमाह—तद्गुणसारत्वाधिकारेणैवेति।

कर्ता चायं जीवः स्यात्, कस्मात्, शास्त्रार्थवत्त्वात्। एवं च 'यजेत' 'जुहुयात्' 'दद्यात्' इत्येवंविधं विधिशास्त्रं अर्थवद्भवति। अन्यथा तत् अनर्थकं स्यात्। तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति। न च असति कर्तृत्वे तत् उपपद्येत। तथा इदमपि शास्त्रं अर्थवद्भवति 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्र. उ. ४।९) इति ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

इतश्च जीवस्य कर्तृत्वं, यत् जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति 'स ईयतेऽमृतो यत्रकामम्' (बृ. उ. ४।३।१२) इति, 'स्वे शरीरे यथाकामं परिवर्तते' (बृ. उ. २।१।१८) इति च ॥ ३४ ॥

## उपादानात् ॥ ३५ ॥

इतश्च अस्य कर्तृत्वं, यत् जीवप्रक्रियायामेव करणानामुपादानं

---

अत्र 'यजेत' 'दद्यात्' 'बोद्धा कर्ता' 'असङ्गोऽह्ययं पुरुषः' 'असङ्गो न हि सज्जते' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादिवाक्यानां कर्तृत्वादिसंसारतदभावप्रतिपादकानां परस्परविरोधादप्रामाण्यमिति पूर्वपक्षे, साङ्ख्यः एकदेशी मन्यते—आत्मनः कर्तृत्वं नास्त्येव शशशृङ्गवत्, कर्तृत्वादिप्रतिपादकवचनानि तु बुद्धिविषयाण्येव सन्ति आत्मनि सिंहोमाणवकइतिवत् उपचारात् कर्तृताप्रतिपादकानि, अकर्तृत्वादिप्रतिपादकवचनानि तु मुख्यया वृत्त्या आत्मपराणि-इति व्यवस्था आश्रयणीया, अतो न विरोधः—इति।

तत्र सिद्धान्तमाह—कर्ता चायमिति। अहंकरोमीति कर्तृत्वं चेतनस्योपलभ्यते। श्रुतावपि आत्मादिपदसमभिव्याहारेणाम्नातं कर्तृत्वं न जघन्यवृत्त्या व्युत्पादयितुं युक्तम्। न च तथासति असङ्गत्वादिवचनविरोधः। साङ्ख्यस्याप्यसङ्गात्मनि कथं बुद्धिसम्बन्धः। यदि तु स काल्पनिकः, तथासति कर्तृत्वादिकमपि काल्पनिकमस्तु। अतो न संसारतदभावप्रतिपादकानां वचनानां विरोधः-इति भावः ॥ ३३ ॥

विहारः—सञ्चारः। सः—जीवः स्वप्नावस्थायां अमृत एव सन् यत्रकामं—यथाकामं ईयते-सञ्चरति ॥ ३४ ॥

उपादानं—ग्रहणम् ॥ ३५ ॥

संकीर्तयति 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. उ. २।१।१७) इति, 'प्राणान् गृहीत्वा' (बृ. उ. २।१।१८) इति च ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

इतश्च जीवस्य कर्तृत्वं, यत् अस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रं 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' (तै. उ. २।५।१) इति ।

ननु—विज्ञानशब्दो बुद्धौ समधिगतः, कथं अनेन जीवस्य कर्तृत्वं सूच्यते-इति ।

नेत्युच्यते—जीवस्यैव एष निर्देशः, न बुद्धेः । न चेत् जीवस्य स्यात्, निर्देशविपर्ययः स्यात्—विज्ञानेन इत्येवं निरदेक्ष्यत् । तथा हि अन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति । इह तु 'विज्ञानं यज्ञं तनुते' इति कर्तृसामानाधिकरण्यनिर्देशात् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यते इत्यदोषः ॥ ३६ ॥

अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात् स स्वतन्त्रः सन् प्रियं हितं चैव आत्मनो नियमेन संपादयेत् न विपरीतम् । विपरीतमपि तु संपादयन् उपलभ्यते । न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिः अनियमेनोपपद्यते-इति ।

अत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथा अयमात्मा उपलब्धिं प्रति स्वतन्त्रोऽपि अनियमेन इष्टमनिष्टं चोपलभते एवं अनियमेनैव इष्टमनिष्टं च संपादयिष्यति । उपलब्धा-

---

सौत्रं 'न चेन्निर्देशविपर्ययः' इत्यंशं व्याख्यातुं शङ्कते—नन्विति ॥ ३६ ॥

स्वतन्त्रस्यापि इष्टानिष्टकरणं प्रतिबन्द्या समर्थयते—यथा अयमात्मेति । साङ्ख्येनापि हि उपलब्धृत्वं आत्मन एवेति स्वीकृतं इति भावः । स्वीकारं परित्यजति साङ्ख्यः—उपलब्धावपीति । हेतूपादानादिति । [उपलब्धेरिति] (बुद्ध्येति)

वप्यस्वातन्त्र्यं (उपलब्धि) हेतूपादा[नात्] (नोपलम्भात्) इति चेत्, न–विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम् । उपलब्धौ तु अनन्यापेक्षत्वमात्मनः चैतन्ययोगात् ।

अपि च अर्थक्रियायामपि न अत्यन्तं आत्मनः स्वातन्त्र्यमस्ति, देशकालनिमित्तविशेषापेक्षत्वात् । न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते । भवति हि एधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् । सहकारिवैचित्र्याच्च इष्टानिष्टार्थक्रियायां अनियमेन प्रवृत्तिः आत्मनो न विरुध्यते ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति । यदि पुनः विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्, ततः शक्तिविपर्ययः स्यात् । करणशक्तिः बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत । सत्यां च बुद्धेः कर्तृशक्तौ तस्या एव अहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् । अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात् 'अहं गच्छामि' 'अहमागच्छामि' 'अहं भुञ्जे' 'अहं पिबामि' इति च । तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारिण्याः सर्वार्थ-

---

शेषः । किं आत्मनो नित्यायां स्वरूपभूतायां हेत्वपेक्षा उच्यते जन्यायां वा ? नाद्यः–नित्याया हेत्वनपेक्षत्वात्-इत्याह–विषयप्रकल्पनेति । आत्मस्वरूपभूतस्य ज्ञानस्य अनावृततया, विषयैस्सह यः संसर्गः तदर्थं अपरोक्षस्थले हेतूपादानं न स्वरूपलाभार्थम्–इत्यर्थः ।

ननु–तथापि जन्यज्ञाने हेत्वपेक्षा अस्त्येव, अतो न आत्मनः स्वातन्त्र्यमुपलब्धौ, एवं क्रियायामपि भविष्यति–इत्याशङ्क्याह—अपि चेति । अत्यन्तं–सहायानपेक्षम् । ननु–यदि सहायापेक्षा तदा कथं स्वातन्त्र्यलक्षणं कर्तृत्वं अत आह—न च सहायापेक्षस्येति । कारकान्तराप्रयोज्यत्वे सति इतरकारकप्रयोक्तृत्वेन (क्रियाशून्यत्वमेव) हि स्वातन्त्र्यापरपर्यायं कर्तृत्वम् । तच्च सहायापेक्षस्य न विरुध्यते । तथा च, प्रवृत्ताविष्टसाधनताज्ञानादेस्सहकारिणोऽपेक्षिततया, यत्र अनिष्टसाधनेऽपि इष्टसाधनताभ्रान्तिः तत्र इच्छापूर्वकमेव अनिष्टफला प्रवृत्तिः उपपद्यत इति न काचिदनुपपत्तिः । बुद्धिकर्तृत्ववादिनापि हि अनिष्टफला प्रवृत्तिः एवमेव उपपादनीया ॥ ३७ ॥

कारि करणं अन्यत् कल्पयितव्यम्, शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यते। ततश्च संज्ञामात्रे विवादः स्यात् न वस्तुभेदः कश्चित्। करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥ ३८ ॥

---

ततश्च संज्ञामात्रे विवादस्स्यादिति। अन्तःकरणातिरिक्तस्य कर्तुरुक्तगत्या भवतापि स्वीकारात्, सिद्धान्तिनापि तस्यैवार्थस्य साधनीयत्वात्-इति भावः।

ननु—सिद्धान्तिनापि कामादिवृत्त्युपादानत्वं अन्तःकरणस्यैव उपेयते। तथा च, तस्यैव कामादिकं प्रति आश्रयतया कर्तृत्वं प्राप्नोति। जीवस्यापि हि कामादिवृत्त्याश्रयतामात्रेणैव कर्तृत्वं प्रसाधनीयं, [1]न तु तदनुकूलकृत्याश्रयतया, कृतीच्छाविषयककृत्यन्तरस्य जीवे अभावात्। अतश्च बाह्यव्यापारानुकूलकामादिवृत्त्याश्रयतयाभ्युपगतस्य बुध्यादिपदप्रतिपाद्यस्यान्तःकरणस्य कथं कर्तृत्वं निरस्यते-इति चेत्,

उच्यते—सिद्धान्ते कामादीन् प्रति बुद्धेरेव केवलाया नोपादानत्वम्, अपि तु—यथा वियदादिकं प्रति माया परिणामिनी ब्रह्म विवर्तोपादानम्, एवं—कामादीन् प्रति बुद्धिः परिणामिनी जीवचैतन्यं विवर्तोपादानमिति बुद्धिशबलितस्य जीवस्यैव आश्रयता। अहन्त्वमपि शबलस्यैव धर्म इति अहंकरोमीत्यादयः प्रत्ययाः शबलितविषया एव। मनसः करणत्वं तु, जीवचैतन्यस्य कामाधिष्ठानता [2]मनउपाधि(ने,[त्वेने]त्यवगन्तव्यम्। एवंसत्येव हि, 'एष हि द्रष्टा श्रोता' इत्यादीनि जीवकर्तृत्वप्रतिपादकानि 'एतत्सर्वं मन एव' इत्यादीनि मनस उपादानत्वप्रतिपादकानि 'मनसा ह्येव पश्यति मनसा शृणोति' इत्यादीनि मनसः करणत्वप्रतिपादकानि 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादीनि जीवस्य कामाद्यसंस्पृष्टतावचनानि च उपपन्नानि भवन्ति ॥ ३८ ॥

---

1. **न तु तदनुकूलेत्यादि** वस्तुस्थितिकथनमात्रमेतत् प्रतिभाति। कर्तृत्वस्य कृत्याश्रयत्वरूपत्वेऽपि अन्तःकरणस्य कर्तृत्वाक्षतेः। कृतेरपि सिद्धान्ते अन्तःकरणाश्रितत्वस्यैवाभ्युपगन्तव्यत्वात्।

2. **मनउपाधित्वेनेति** बहुव्रीहिः। निरुपाधिकस्य जीवत्वाभावात्। अविद्यामात्रोपाधिकत्वे सुषुप्तौ कामादिप्रतिभासापत्तेः। तथा च, जीवचैतन्यस्य कामाद्यधिष्ठानतायां मनस उपाधित्वात् मनसः जीवकरणत्वं इत्यवगन्तव्यम्-इति समुदायार्थः।

## समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययं औपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिः उपदिष्टो वेदान्तेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ. उ. २.४.५), सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा. उ. ८।७।१) 'ओमित्येवं ध्यायथ आत्मानम्' (मु. उ. २।२।६) इत्येवंलक्षणः, सोऽपि असति आत्मनः कर्तृत्वे नोपपद्येत। तस्मादपि अस्य कर्तृत्वसिद्धिः ॥ ३९ ॥

१५ तक्षाधिकरणम्

## यथा च तक्षोभयथा ॥ ४० ॥

एवं तावत् शास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं, तत् पुनः स्वाभाविकं वा स्यात् उपाधिनिमित्तं वेति चिन्त्यते।

तत्र - एतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वं अपवादहेत्वभावात्—इत्येवं प्राप्ते,

---

ननु—अत्र भाष्ये समाधिपदार्थत्वेन श्रवणादीनि उदाहृतानि। नेदमुपपद्यते। पतञ्जलिना हि, देशबन्धश्चित्तस्य धारणा—नाभिचक्रहृदयपुण्डरीकादिदेशेषु अन्यस्मिन् वा चित्तैकाग्र्योपयुक्ते विषये चित्तस्य स्थापनं धारणा, तत्र प्रत्ययैकतानता ध्यानं—धारणाविषये विजातीयप्रत्ययानन्तरितप्रत्ययधारासम्पादनं ध्यानम्-इति ध्यानं लक्षयित्वा, 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति 'ध्यानमेव ध्यानध्यात्रादिनिर्भासांशे अस्फुटं ध्येयवस्तुन्येव स्फुटतया निर्भासमानं यदा भवति तदा समाधिरित्युच्यते' इति प्रतिपादितम्। अतः कथं श्रवणादिकं समाधिः स्यात्-इति चेत्,

उच्यते—पातञ्जलोक्तमर्थं विहायैव, 'चित्तस्य आत्मनि सम्यगाधानं समाधिः' इति यौगिकमर्थं स्वीकृत्य श्रवणादिकमपि समाधिशब्दार्थतया उदाहृतम् ॥ ३९ ॥

इति कर्त्रधिकरणम्

आत्मनः आध्यासिकं कर्तृत्वं उपेत्य कर्तृत्वतदभावप्रतिपादकानां वचनानां विरोधे परिहृते, पुनः एकदेशिनः कस्यचित् इत्थं चोद्यम्—न आध्यासिकं आत्मनः

ब्रूमः–न स्वाभाविकं कर्तृत्वं आत्मनः संभवति, अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे हि आत्मनो न कर्तृत्वान्निर्मोक्षः संभवति, अग्नेरिव औष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्य अस्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात्।

ननु–स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात् पुरुषार्थः सेत्स्यति। तत्परिहारश्च निमित्तपरिहारात्। यथा अग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावः तद्वत्।

न–निमित्तानामपि शक्तिलक्षणेन संबन्धेन संबद्धानां अत्यन्तपरिहारासंभवात्।

ननु मोक्षसाधनविधानात् मोक्षः सेत्स्यति।

न-साधनायत्तस्य अनित्यत्वात्। अपि च–नित्यशुद्ध(बुद्धमुक्त)ात्म-

---

कर्तृत्वम्, अपि तु पारमार्थिकमेव। अकर्तृत्वप्रतिपादकानि तु वचनानि, मोक्षदशायां कर्तृत्वस्य शक्तिमात्रावशिष्टतया फलमुखत्वाभावात् तदभिप्रायाण्येव भवन्तीति, विषयविभागेन कर्तृत्वतदभावप्रतिपादकवचनजातविरोधपरिहारे सम्भवति, प्रत्यक्षादिप्रतिपन्नस्य तस्य आध्यासिकत्वकल्पनानुपपत्तेः-इति।

तन्निराकरणेन कर्तृत्वस्य आध्यासिकत्वं व्यवस्थापयितुं इदमधिकरणम्। **निमित्तानामपि शक्तिलक्षणेनेति।** 'निमित्ताभावात् मोक्षे फलमुखं कर्तृत्वं नास्ति' इति वक्तुमशक्यम्। न हि सतां निमित्तानां निरन्वयनाशः सम्भवति, अपि तु सूक्ष्मावस्थारूपशक्त्यवशेष एव तेषां नाशो वक्तव्यः, तथा च, निमित्तानामपि शक्त्यात्मना विद्यमानानां उद्भवसम्भवात् कर्तृत्वमप्युद्भूतं भवेत्, अतो मोक्षानुपपत्तिः - इत्यर्थः।

**अपि च नित्यशुद्धात्मेति।** न चेदं आत्मप्रतिपादनं अवस्थाविशेषनिबन्धनमिति [1]योजयितुं युक्तम्। वर्तमाननिर्देशेन बन्धदशायामेव विशुद्धत्वपर्यवसानात्। न च तत्र लक्षणाश्रयणमुचितम्। उपनिषत्सु जीवप्रतिपादनप्रदेशे सर्वत्र तत्तत्सांसारिकधर्मप्रतिषेधप्रतिपादनस्य गतिसामान्यन्यायेनैव तात्पर्यवत्तयावगतस्य अन्यथानेतुमशक्यत्वात्। श्रुतयश्च तथाविधाः समन्वयाध्याय एव विवेचिताः।

---

1. मु. योजयितुं शक्यम्

प्रतिपादनात् मोक्षसिद्धिरभि[हि](म)ता। तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वे अवकल्पेत। तस्मात् उपाधिधर्माध्यासेनैव आत्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः 'ध्यायतीव लेलायतीव' (बृ. उ. ४।३।७) इति। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (क. उ. ३।४) इति च उपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते। 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) इत्यादिश्रवणात्।

पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेच्चितिमाञ्जीवः कर्ता बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्।

न—अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ. उ. ४।५।१५) इति अविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा, विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इति। तथा, स्वप्नजागरितयोः आत्मन उपाधिसंपर्क-

---

स्वप्नजागरितयोरिति। 'स वा एष एतस्मिन् [1]स्वप्नान्ते रत्वा चरित्वा' स्वप्नान्तः-स्वप्नावस्था 'स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा' बुद्धान्तः-जाग्रदवस्था-इति स्वप्नजागरितयोः सञ्चारं निरूप्य, इदमाम्नातं बृहदारण्यके ज्योतिर्ब्राह्मणे—'तद्यथाऽस्मिन् आकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ [2]संलयायैव—समीचीननीडायैव ध्रियते, एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति' इति, 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति च। तत्—यत् सुप्तौ प्राप्यं प्राज्ञात्मकं तत् अस्य—जीवस्य स्वरूपम्। कीदृक् तत्

---

1. स्वप्नान्ते इति माध्यन्दिनपाठोऽयम्। 'स्वप्ने' इति काण्वोपनिषत्पाठः मुद्रितेषु दृश्यते। विशिष्टाद्वैतग्रन्थेषु 'स्वप्नान्ते' इत्येव काण्वपाठो दृश्यते।

2. संलयायेत्यस्य स्वीयं विवरणं समीचीननीडायेति। न तु श्रौतं पदम्।

कृतं श्रमं श्येनस्येव आकाशे विपरिपततः श्रावयित्वा, तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति 'तद्वा अस्यैतत् आप्तकाममात्मकाम-मकामं रूपं शोकान्तरम्' (बृ. उ. ४।३।२१) इत्यारभ्य 'एषाऽस्य परमा गतिः एषाऽस्य परमा संपत् एषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' (बृ. उ. ४।३।३२) इत्युपसंहारात्।

तदेतदाह आचार्यः—यथा च तक्षोभयथा-इति। त्वर्थे च अयं चः पठितः। नैवं मन्तव्यं 'स्वाभाविकमेव आत्मनः कर्तृत्वं अग्नेरिवौष्ण्यम्' इति। यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवति, एवं अविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्य-करणसंघातः अकर्ता सुखी भवति संप्रसादावस्थायाम्। तथा मुक्त्यवस्था-यामपि, अविद्याध्वान्तं विद्याप्रदीपेन विधूय आत्मैव केवलो निर्वृतः सुखी भवति। तक्षदृष्टान्तश्च एतावता अंशेन द्रष्टव्यः—तक्षा हि विशिष्टेषु तक्षणा-दिव्यापारेषु अपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति,

---

इत्यतो विशिनष्टि अकाममिति। तत्र हेतुः आत्मकाममिति। आत्मा-स्वरूपमेव तस्य काम्यम्। अनेन सुखरूपतां तस्य उपक्षिपति। स च नित्याप्त इत्याह आप्तकाममिति। शोकान्तरं—शोकवर्जितम्। एषा-सुप्तौ प्राप्यं यत् स्वरूपं सा, परमा-अर्चिरादिमार्गात्मिका गतिः। सम्पत्—ब्राह्मलौकिकादिविभूतिः। लोकः—ब्राह्मादिः। सुप्तप्राप्यरूपस्य गतित्वादिप्रशंसायां आलम्बनमाह एषोऽस्य परम आनन्द इति। परमानन्दप्राप्त्यर्थत्वात् गत्यादीनां, तस्मिन् प्राप्ते सर्वे प्राप्ता एव भवन्ति गत्यादयः—इति प्रशंसातात्पर्यम्।

तथा च, ज्योतिर्ब्राह्मणगतवाक्योपन्यासः 'स्वप्नजागरितयोः बुद्धिसंयुक्त-त्वात् आत्मनः संसारः, सुप्तौ तदभावात्तु स्वभावभूतपरमानन्दात्मनैवावस्थितिः, अतो न सङ्गः स्वाभाविक आत्मनः, अपि तु बुद्ध्युपाधिक एव' इत्यस्मिन्नर्थे पर्यव-सितः इति।

स्वशरीरेण तु अकर्तैव, एवं अयमात्मा सर्वव्यापारेषु अपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना तु अकर्तैव - इति। न तु आत्मनः तक्ष्ण इव अवयवाः सन्ति, यैः, हस्तादिभिरिव वास्यादीनि तक्षा, मनआदीनि करणानि आत्मा उपाददीत न्यस्येद्वा।

यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं आत्मनः कर्तृत्वम्-इति,

तन्न - विधिशास्त्रं तावत् यथाप्राप्तं कर्तृत्वं उपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्वं आत्मनः प्रतिपादयति। न च स्वाभाविकं अस्य कर्तृत्वं अस्ति, ब्रह्मात्मत्वोपदेशात्—इत्यवोचाम। तस्मात् अविद्याकृतं कर्तृत्वं उपादाय विधिशास्त्रं प्रवर्तिष्यते। 'कर्ता विज्ञानात्मा पुरुषः' इत्येवजातीयकमपि शास्त्रं अनुवादरूपत्वात् यथाप्राप्तमेव अविद्याकृतं कर्तृत्वं अनुवदिष्यति।

एतेन विहारोपादाने परिहृते। तयोरपि अनुवादरूपत्वात्।

ननु-संध्ये स्थाने प्रसुप्तेषु करणेषु 'स्वे शरीरे यथाकामं परिवर्तते' इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति। तथा उपादानेऽपि 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयतः—इति। अत्रोच्यते—न तावत् संध्ये स्थाने अत्यन्तं आत्मनः करणविरमणमस्ति। 'सधीः स्वप्नो भूत्वा इमं लोकमतिक्रामति' (बृ. उ. मा. ४।१।७) इति तत्रापि धीसंबन्धश्रवणात्। तथाच स्मरन्ति—

'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि।
सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम्' (म.भा.शा. २७५-२४)

इति। 'कामादयश्च मनसो वृत्तयः' इति श्रुतिः। ताश्च स्वप्ने दृश्यन्ते। तस्मात् समना एव स्वप्ने विहरति। विहारोऽपि च तत्रत्यो वासनामय एव, न तु पारमार्थिकोऽस्ति। तथा च श्रुतिः इवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' (बृ. ४।३।१३) इति। लौकिका अपि तथैव स्वप्नं कथयन्ति—'आरुक्षमिव गिरिशृङ्गं' 'अद्राक्षमिव वनराजिम्' इति।

तथा उपादानेऽपि, यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशः, तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्। केवले कर्तृत्वासंभवस्य दर्शितत्वात्। भवति च लोके अनेकप्रकारा विवक्षा 'योधा युध्यन्ते' 'योधै राजा युध्यते' इति।

अपि च—अस्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते, न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्।

यस्त्वयं व्यपदेशो दर्शितः 'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रापयति। विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोऽनन्तरं पाठाच्च। 'तस्य श्रद्धैव शिरः' (तै. उ. २।४) इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्। श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः। 'विज्ञानं देवाः सर्वे, ब्रह्म ज्येष्ठमुपासते' (तै.उ.२।५) इति च वाक्यशेषात्। ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात्। 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' (ऐ. आ. ३।३।४) इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्।

न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति। सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्य अवश्यं भावित्वात्। उपलब्ध्यपेक्षं तु एषां करणानां करणत्वं, सा च आत्मनः। न च तस्यामपि अस्य कर्तृत्वमस्ति। नित्योपलब्धिस्वरूपत्वात्। अहंकारपूर्वकमपि कर्तृत्वं न उपलब्धुर्भवितुमर्हति। अहंकारस्यापि उपलभ्यमानत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः। बुद्धेः करणत्वाभ्युपगमात्।

---

वाचः चित्तस्य च उत्तरोत्तरः—सन्तन्यमानतया अग्रे जायमानः क्रमः-कार्यम्। तथा च 'विज्ञानं यज्ञं तनुते' इति वाक्यं एतच्छ्रुत्यैकार्थ्याय बुद्धिविषयमेव-इति भावः। ननु—अहङ्करोमीत्यादिप्रत्यक्षेण अहन्ताश्रयस्य कर्तृत्वमुपलभ्यते, अहन्ताश्रयश्च जीव एव, अतः कथं तस्य कर्तृत्वं नास्तीत्युच्यते—इत्यत आह—अहङ्कारपूर्वकमपीति। उपलब्धुः—शुद्धस्य साक्षिणः। उपलभ्यमानत्वादिति। तथा च

समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः । यथाप्राप्तमेव कर्तृत्वं उपादाय समाधिविधानात् । तस्मात् कर्तृत्वमप्यात्मनः उपाधिनिमित्तमेवेति स्थितम् ॥ ४० ॥

## १६ परायत्ताधिकरणम्

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

यदिदं अविद्यावस्थायां उपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं, तत् किं अनपेक्ष्येश्वरं भवति आहोस्वित् ईश्वरापेक्षम् - इति भवति विचारणा।

तत्र प्राप्तं तावत् न ईश्वरमपेक्षते जीवः कर्तृत्वे - इति । कस्मात्? अपेक्षाप्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति । तस्य किं ईश्वरः करिष्यति । न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियासु अनडुहादिवत् ईश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्तृत्वेन जन्तून्

---

दृश्यतया जडेन अहङ्कारेण शबलितस्यैव अहमित्युल्लेखात् न विशुद्धस्य कर्तृत्वसाधकं अहंकरोमीतिप्रत्यक्षं इति भावः ॥ ४० ॥

इति तक्षाधिकरणम्

पूर्वाधिकरणेन सङ्गतिं दर्शयितुं वृत्तं कीर्तयति--- यदिदमविद्यावस्थायामिति ।

ननु ब्रह्माभेदोपयोगिजीवशोधनपेटिकायां[1] जीवस्य ब्रह्माधीनकर्तृत्वनिरूपणं न सङ्गतमिति चेत्,

सत्यम् । तथापि कर्तृत्वस्य आध्यासिकत्वे निरूपिते तत्प्रसङ्गात्, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिस्वातन्त्र्यप्रतिपादकानां 'य आत्मानमन्तरो यमयति' इति परमात्मायत्तत्वप्रतिपादकानां च वचनानां विरोधेन अप्रामाण्यशङ्कायाः प्राप्तायाः परिहार इहैव क्रियते-इति प्रासङ्गिकी पेटिकासङ्गतिः ।

---

1. **जीवशोधनपेटिकायाम्** — स्वरूपेतरविविक्तजीवस्वरूपनिर्धारणोपयोगिन्यायमात्रनिरूपणपरसन्दर्भे ।

संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम् ।

ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र. सू. २।१।३४) इत्युक्तम् ।

सत्यमुक्तं सति तु ईश्वरस्य सापेक्षत्वसंभवे । सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः, तयोश्च सद्भावः सति जीवस्य कर्तृत्वे, तदेव चेत् कर्तृत्वं ईश्वरापेक्षं स्यात् किंविषयं ईश्वरस्य सापेक्षत्वं उच्येत । अकृताभ्यागमश्च एवं जीवस्य प्रसज्येत ।

तस्मात् स्वत एव अस्य कर्तृत्वम्-इति ।

---

तत्र एकदेशी मन्यते—[1]ज्योतिष्टोमादिक्रियाकर्तृत्वं हि [2]जीवस्य ज्योतिष्टोमाद्यनुकूलज्ञानचिकीर्षादिशालित्वादि । तथासत्येव इष्टसाधनताबोधकविधिसार्थक्यम्[3] । न चैतत् ईश्वरस्य प्रेरकत्वे उपपद्यते । न हि वाय्वादिः प्रेरयन् पुरुषेच्छादिकमपेक्षते । तथा च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिबहुशास्त्रानुसारेण अन्तर्यामित्वप्रतिपादकानां क्वाचित्कानां [4]वचनानां प्रशंसापरत्वमेव युक्तम् । तदिदमुक्तं—तदेव चेत् कर्तृत्वं ईश्वरापेक्षं स्यात् किंविषयं ईश्वरस्य सापेक्षत्वमुच्येतेति । सापेक्षत्वे जीवकर्तृत्वस्यैव लोपेन धर्माधर्मानिष्पत्तेरिति भावः । अकृताभ्यागमश्चैवमिति । धर्माधर्मयोरनिष्पत्तावित्यर्थः ।

लोके हि द्विविधः प्रेरको दृष्टः । वाय्वादिकं इच्छामनुपहृत्यैव प्रेरयति । आचार्यादिस्तु इष्टसाधनतां बोधयन् इच्छामुपहृत्यैव प्रेरयति । ततश्च, प्रत्यक्षेण

---

1. मु. ज्योतिष्टोमादिकर्तृत्वं

2. जीवस्येति ईश्वरस्य तु तदनुकूलज्ञानमात्रं तत्कर्तृत्वं-इति मुख्यसिद्धान्तः । स्पष्टं चेदं अद्वैतसिद्ध्यादिषु ।
मु. 'जीवस्य' नास्ति मु. ज्योतिष्टोमाद्यनुकूलकृतिचिकीर्षा

3. सार्थक्यमिति इष्टसाधनताबोधस्य इच्छोपहारः फलम्, यदि कर्तृत्वं न इच्छाघटितं तर्हि इष्टसाधनताबोधस्य प्रवर्तकत्वाभावात् तद्बोधकविधिवैयर्थ्यम् । प्रवर्तको हि विधिः ।

4. मु. पदानां प्रशंसा

एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते 'परात्' इति। अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्य अविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात् सर्वभूताधिवासात् साक्षिणः चेतयितुरीश्वरात् तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिः भवितुमर्हति। कुतः? तच्छ्रुतेः। यद्यपि रागादिदोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु न ईश्वरकारणत्वं प्रसिद्धं, तथाऽपि सर्वास्वेव प्रवृत्तिषु ईश्वरो हेतुकर्तेति श्रुतेरवसीयते। तथा हि श्रुतिर्भवति 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौ. उ. ३।८) इति, 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति' इति चैवंजातीयका ॥ ४१ ॥

ननु-एवं ईश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातां अकृताभ्यागमश्च जीवस्य-इति। नेत्युच्यते—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दः चोदितदोषव्यावर्तनार्थः। कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एव एनं ईश्वरः कारयति। ततश्च एते चोदिता दोषा न प्रसज्यन्ते। जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजते पर्जन्यवत् ईश्वरो निमित्तत्वमात्रेण। यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां च असाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः। न ह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरः तेषां शुभाशुभं विदध्यादिति श्लिष्यते।

---

जीवे इच्छादिपूर्विकायाः प्रवृत्तेरुपलब्धेः ज्योतिष्टोमादिशास्त्राच्च ईश्वरस्य प्रेरकता इच्छोपहारेणैव कल्प्यत इति, शास्त्रद्वयमुख्यतोपपत्तौ न अन्तर्यामिशास्त्रं प्रशंसामात्रार्थं कल्पनीयम्-इत्यभिप्रेत्य सिद्धान्तयति-एतां प्राप्तिं तुशब्देनेति ॥ ४१ ॥

ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते। नैष दोषः-परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः। कुर्वन्तं हि तं ईश्वरः कारयति।

अपि च पूर्वप्रयत्नमपेक्ष्य इदानीं कारयति पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदिति अनादित्वात् संसारस्येति अनवद्यम्।

कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति।

विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह। एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य च अवैयर्थ्यं भवति। अन्यथा तत् अनर्थकं स्यात्। ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत, अत्यन्तपरतन्त्रत्वाज्जीवस्य। तथा विहितकारिणमपि अनर्थेन संसृजेत् प्रतिषिद्धकारिणमप्यर्थेन। ततश्च प्रामाण्यं वेदस्य अस्तमियात्। ईश्वरस्य च अत्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं, तथा देशकालनिमित्तानां, पूर्वोक्तदोषप्रसङ्गश्च-इत्येवंजातीयकं दोषजातं आदिग्रहणेन दर्शयति ॥ ४२ ॥

१७ अंशाधिकरणम्

## अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवेश्वरयोः उपकार्योपकारकभाव उक्तः, स च संबद्धयोरेव लोके दृष्टः, यथा स्वामिभृत्ययोः यथा वा अग्निविस्फुलिङ्गयोः। ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत् संबन्धः आहोस्वित् अग्निविस्फुलिङ्गवत्-इत्यस्यां विचिकित्सायां, अनियमो वा प्राप्नोति,

---

ननु-यदि ईश्वरस्य जीवगतधर्माधर्मापेक्षत्वात् न वैषम्यनैर्घृण्यादिप्रसक्तिः, तथासति सर्गादौ धर्माधर्मयोरसम्भवात् कथं ईश्वरस्य प्रेरकता, अत आह—अपि चेति ॥ ४२ ॥

इति परायत्ताधिकरणम्

पूर्वाधिकरणेन सङ्गतिमाह—जीवेश्वरयोरुपकार्योपकारकभाव उक्त इति।

अथवा स्वामिभृत्यप्रकारेष्वेव ईशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध एव संबन्ध इति प्राप्नोति ।

अतो ब्रवीति-अंश इति । जीवः ईश्वरस्यांशो भवितुमर्हति, यथा अग्नेर्विस्फुलिङ्गः । अंश इवांशः, न हि निरवयवस्य मुख्योंऽशः संभवति । कस्मात्पुनः निरवयवत्वात् स एव न भवति ?। नानाव्यपदेशात् । 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो न असति भेदे युज्यते ।

ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यते, इत्यत आह–अन्यथा चापीति । न च नानाव्यपदेशादेव केवलात् अंशत्वप्रतिपत्तिः । किं तर्हि, अन्यथा चापि व्यपदेशो भवति अनानात्वस्य प्रतिपादकः । तथाहि एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना । दाशाः य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मानमुपक्षिपन्ति, ये चान्ये कितवा द्यूतकृतः, ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह ।

तथा अन्यत्रापि ब्रह्मप्रक्रियायामेव अयमर्थः प्रपञ्चयते–

---

'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादीनां जीवब्रह्मैक्यप्रतिपादकानां 'य आत्मनि तिष्ठन् आत्मनोऽन्तरः' इत्यादीनां नियन्तृनियन्तव्यभावेन जीवब्रह्मणोर्भेदसूचकानां च वचनानां विरोधात् अप्रामाण्येन पूर्वपक्षे, 'अभेदप्रतिपादकानां वचनानां मुख्यार्थत्वे उपगते भेदप्रतिपादकानि वचनानि क्लेशेन नेयानि, 'नाहं सर्वज्ञः' इति प्रत्यक्षबाधश्च आश्रयणीयः । अतः उभयानुग्रहाय अभेदप्रतिपादकवचनान्येव भाक्तानि व्याख्येयानि' इत्येकदेशिमते प्राप्ते-

सिद्धान्तः–प्रत्यक्षं तावत् दुर्बलं न अभेदश्रुत्यन्यथानयने समर्थम् । नियन्तृनियन्तव्यभावादिना भेदप्रतिपादिकाश्च श्रुतयः अद्वैतविषयोपक्रमोपसंहारैकरूप्याद्य-

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' (श्वे. उ. ४।३)

इति । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति च । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिभ्यश्च अस्यार्थस्य सिद्धिः । चैतन्यं च अविशिष्टं जीवेश्वरयोः यथा अग्निविस्फुलिङ्गयोरौष्ण्यम् । अतो भेदाभेदावगमाभ्यां अंशत्वावगमः ॥ ४३ ॥

कुतश्च अंशत्वावगमः—

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्च एतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा. उ. ३।१२।६) इति ।

अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति । 'अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः' इति प्रयोगात् । अंशः पादः भागः इत्यनर्थान्तरम् । तस्मादपि अंशत्वावगमः ॥ ४४ ॥

कुतश्च अंशत्वावगमः—

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि च ईश्वरांशत्वं जीवस्य स्मर्यते 'ममैवांशो जीवलोके जीवभूतः सनातनः' (१५।७) इति । तस्मादपि अंशत्वावगमः ।

---

नेकतात्पर्यलिङ्गावधृतनिर्विशेषप्रत्यगभिन्नब्रह्मप्रकरणान्तर्गताः [1]व्यावहारिकभेदावलम्बिन्यः अद्वैतानुसारेण व्याख्येयाः-इति । अग्निविस्फुलिङ्गवदिति प्रदर्शनार्थं बिम्बप्रतिबिम्बमहाकाशघटाकाशादिदृष्टान्तानाम् ॥ ४३ ॥

ननु पादोऽस्यविश्वाभूतानीत्यत्र भूतशब्दवाच्यानामाकाशादीनां ब्रह्मांशत्वावगमात् कथं जीवस्य अनेन ब्रह्मांशत्वं अवगन्तुं शक्यम्, अत आह—अत्र भूतशब्देनेति ॥ ४४ ॥

---

1. व्यावहारिकेत्यादि अद्वैतानुसारेण व्यावहारिकभेदावलम्बिन्यो व्याख्येयाः-इति सम्बन्धः ।

यत्तूक्तं स्वामिभृत्यादिष्वेव ईशित्रीशितव्यभावो लोके प्रसिद्ध इति। यद्यपि एषा लोके प्रसिद्धिः, तथापि, शास्त्रात्त्वत्र अंशांशित्वं ईशित्रीशितव्यभावश्च निश्चीयते। निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नान् जीवान् प्रशास्तीति न किंचित् विप्रषिध्यते ॥ ४५ ॥

अत्राह—ननु जीवस्य ईश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेन अंशिन ईश्वरस्यापि दुःखित्वं स्यात्, यथा लोके हस्तपादाद्यन्यतमाङ्गगतेन दुःखेन अङ्गिनो देवदत्तस्य दुःखित्वं तद्वत्। ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्। अतो वरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यात्—इति। अत्रोच्यते—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः संसारदुःखमनुभवति नैवं परः-ईश्वरः अनुभवतीति प्रतिजानीमहे। जीवो हि अविद्यावेशवशात् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमिति अविद्याकृतं दुःखोपभोगं अभिमन्यते। नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वा अस्ति।

जीवस्यापि अविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानः, न तु पारमार्थिकोऽस्ति। यथा च स्वदेहगत-

---

ननु जीवेश्वरयोरैक्याभ्युपगमे कथं ईशित्रीशितव्यभावः, इत्यत आह—निरतिशयेति। सर्वज्ञत्वादय उत्कृष्टोपाधयः परमात्मनः सन्ति, किञ्चिज्ज्ञत्वादयो हीनोपाधयो जीवस्येति, उपपद्यते ईशित्रीशितव्यभावः—इति ॥ ४५ ॥

ननु अभेदवादिनः इयं धर्मव्यवस्था कथं—इति शङ्कया उत्तरसूत्रमवतारयति अत्राहेति।

'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा, अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति, मायिकस्य भेदस्य जीवेश्वरात्मना एकस्मिन्नेव चैतन्ये श्रुत्या प्रदर्शिततया, धर्मव्यवस्थोपपद्यते—इति परिहाराभिप्रायः ॥ ४६ ॥

दाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यैव अनुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैव अनुभवति 'अहमेव पुत्रः' 'अहमेव मित्रम्' इत्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः। ततश्च निश्चितमेतदवगम्यते-मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति।

व्यतिरेकदर्शनाच्च एवमवगम्यते। तथाहि—पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिषु, इतरेषु च, 'पुत्रो मृतः' मित्रं मृतम्' इत्येवमाद्युद्घोषिते, येषामेव पुत्रमित्रादिमत्त्वाभिमानः तेषामेव तन्निमित्तं दुखमुत्पद्यते न अभिमानहीनानां परिव्राजकादीनाम्।

अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति। तस्मात् नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः।

प्रकाशादिवदिति निदर्शनोपन्यासः। यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्य अवतिष्ठमानः अङ्गुल्याद्युपाधिसंबन्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतः तद्भावं प्रतिपद्यते, यथा च आकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा च उदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते, एवं अविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैव इत्युक्तम्।

तथाच अविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' इत्येवमादयः।

तस्मात् नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः ॥४६॥

## स्मरन्ति च ॥ ४७ ॥

स्मरन्ति च व्यासादयः-यथा जैवेन दुःखेन न परमात्मा दुःखायते—इति।

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनः' [म.भा.शा. ३५१.१४-१६]

इति । चशब्दात्, समामनन्ति चेति वाक्यशेषः । 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' (श्वे. उ. ४।६) इति । 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' (क. उ. ५।११) इति च ॥ ४७ ॥

अत्राह—यदि तर्हि एक एव सर्वेषां भूतानां अन्तरात्मा स्यात् कथं अनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ च-इति ।

ननु च 'अंशो जीव ईश्वरस्य' इत्युक्तम्, तद्भेदाच्च अनुज्ञापरिहारौ तदाश्रयौ अव्यतिकीर्णावुपपद्येते, किमत्र चोद्यते-इति ।

उच्यते—नैतदेवम् । अनंशत्वमपि हि जीवस्य अभेदवादिन्यः श्रुतयः प्रतिपादयन्ति 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २।६।१) 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. उ. ४।४।१९), 'तत्त्वमसि' (छा. उ. ६।८।७) 'अहं ब्रह्मास्मि' (बृ. उ. १।४।१०) इत्येवंजातीयकाः ।

ननु भेदाभेदावगमाभ्यां अंशत्वं सिद्ध्यतीत्युक्तम् ।

स्यादेतदेवम्, यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्, अभेद एव तु अत्र प्रतिपिपादयिषितः, ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः । स्वभावप्राप्तस्तु भेदः अनूद्यते । न च निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवति—इत्युक्तम् ।

तस्मात् पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थितः इत्यतो वक्तव्या अनुज्ञापरिहारोपपत्तिः ।

---

स सप्तदशकेनापीति । ज्ञानकर्मेन्द्रियाणि दश पञ्च प्राणाः मनोबुद्धिरिति लिङ्गशरीरात्मकः सप्तदशको राशिः । बाह्यः — दुःखाद्यसंसर्गस्वभावः न जैवैर्दुःखैर्लिप्यते ॥ ४७ ॥

तां ब्रूमः—

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा। 'गुर्वङ्गनां नोपगच्छेत्' इतिपरिहारः। तथा 'अग्नीषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा। 'न हिंस्यात् सर्वा भूतानि' इति परिहारः। एवं लोकेऽपि 'मित्रमुपसेवितव्यम्' इत्यनुज्ञा। 'शत्रुः परिहर्तव्यः' इति परिहारः। एवंप्रकारौ अनुज्ञापरिहारौ एकत्वेऽप्यात्मनो देहसंबन्धात् स्याताम्। देहैः संबन्धो देहसंबन्धः। कः पुनः देहसंबन्धः। 'देहादिरयं संघातोऽहमेव' इति आत्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनां 'अहं गच्छामि, अहमागच्छामि अहमन्धः अहमनन्धः अहं मूढः अहममूढः' इत्येवमात्मिका। न ह्यस्याः सम्यग्दर्शनादन्यत् निवारकमस्ति। प्राक्तु सम्यग्दर्शनात् प्रतता एषा भ्रान्तिः सर्वजन्तुषु। तदेवं अविद्यानिमित्तदेहाद्युपाधिसंबन्धकृताद्विशेषात् ऐकात्म्याभ्युपगमेऽपि अनुज्ञापरिहारौ अवकल्पेते।

सम्यग्दर्शिनस्तर्हि अनुज्ञापरिहारानर्थक्यं प्राप्तम्।

न—तस्य कृतार्थत्वात् नियोज्यत्वानुपपत्तेः। हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्। आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्तु अपश्यन् कथं नियुज्येत। न च आत्मा आत्मन्येव नियोज्यः स्यात्।

शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्, न—तत्संहतत्वा-

---

पूर्वसूत्रेण लौकिकानां सुखदुःखादीनां व्यवस्था उपपादिता। अनेन तु वैदिकानां धर्माणां व्यवस्था प्रतिपाद्यते।

अनुज्ञा—विधिः। परिहारः - निषेधः।

ननु—सम्यग्दर्शनं देहातिरिक्तात्मदर्शनं, तद्वतश्चेन्नाधिकारः, तथासति देहात्मैक्यज्ञानवतोऽप्यनधिकारात् शास्त्रं बाधितमेव स्यात्—इति शङ्कते—शरीरव्यतिरेकदर्शिन एवेति। सम्यग्दर्शिनो द्विविधाः—देहातिरिक्तात्मदर्शिनः केचित्, तेषां कर्मस्वधिकारो न वार्यते। अन्ये तु असङ्गब्रह्मात्मतादर्शिनः, ते तु सम्यग्दर्शिनो

भिमानात् । सत्यं व्यतिरेकदर्शिनो नियोज्यत्वं, तथापि व्योमादिवद्देहाद्य-संहतत्वं अपश्यत एवात्मनो नियोज्यत्वाभिमानः । न हि देहाद्यसंहतत्व-दर्शिनः कस्यचिदपि नियोगो दृष्टः । किमुत ऐकात्म्यदर्शिनः ।

न च नियोगाभावात् सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः । सर्वत्र अभिमानस्यैव प्रवर्तकत्वात्, अभिमानाभावाच्च सम्यग्दर्शिनः ।

तस्मात् देहसंबन्धादेव अनुज्ञापरिहारौ । ज्योतिरादिवत् । यथा ज्योतिष एकत्वेऽपि अग्निः क्रव्यात् परिह्रियते नेतरः । यथा च प्रकाश एकस्यापि सवितुः अमेध्यदेशसंबद्धः परिह्रियते नेतरः शुचिभूमिष्ठः, यथा भौमाः प्रदेशा वज्रवैडूर्यादय उपादीयन्ते भौमा अपि सन्तो नरकले-बरादयः परिह्रियन्ते, यथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते तदेव जात्यन्तरे परिवर्ज्यते, तद्वत् ॥ ४८ ॥

## असंततेश्चाव्यतिकरः ॥ ४९ ॥

स्यातां नाम अनुज्ञापरिहारौ एकस्याप्यात्मनो देहविशेषयोगात् । यस्त्वयं कर्मफलसंबन्धः स च ऐकात्म्याभ्युपगमे व्यतिकीर्येत, स्वाम्येक-त्वात्-इति चेत्,

नैतदेवम्, असंततेः । न हि कर्तुर्भोक्तुश्चात्मनः संततिः-सर्वैः शरीरैः संबन्धः अस्ति । उपाधितन्त्रो हि जीवः इत्युक्तम् । उपाध्यसंतानाच्च नास्ति जीवसंतानः । ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति ॥४९॥

---

नाधिक्रियन्ते - इत्याह-न-तत्संहतत्वाभिमानादिति । सङ्ग्रहवाक्यं विवृणोति—सत्यमिति ॥ ४८ ॥

जीवेश्वरयोः धर्मव्यवस्थासिद्धावपि जीवभेदासम्भवात् जीवानां परस्परं धर्मा न व्यवस्थिताः स्युः-इतिशङ्कानिराकरणार्थं इदं सूत्रम् । जीवोपाधीनां [1]अज्ञाना-न्तःकरणादीनां भिन्नभिन्नतया जीवनानात्वमपि औपाधिकं कल्पितमस्तीति जीव-धर्माणामपि न परस्परं साङ्कर्यम्—इति परिहाराभिप्रायः ॥ ४९ ॥

---

1. अज्ञानेति अज्ञानोपाधिकथनं अज्ञाननानात्वमतेन ।

## आभास एव च ॥ ५० ॥

आभास एव च एष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः । न स एव साक्षात् , नापि वस्त्वन्तरम् । अतश्च, यथा न एकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं न एकस्मिन् जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्धः । एवं अव्यतिकर एव कर्मफलयोः ।

---

अंशोनानाव्यपदेशादितिसूत्रोक्तं जीवस्य परमेश्वरांशत्वं प्रकाशादिवदिति सूत्रेण औपाधिकावच्छेदनिबन्धनमिति प्रतिपादितम् । अनेन तु सूत्रेण बिम्बप्रतिबिम्बभावनिबन्धनमिति [1]प्रतिपाद्यते ।

ननु—चाक्षुषोपाधावेव चाक्षुषस्य प्रतिबिम्बो दृष्टः । अत्र तु अन्तःकरणं वा अज्ञानं वा उपाधिः अचाक्षुष एव । तत्र कथं अचाक्षुषस्य ब्रह्मणो जीवरूपेण प्रतिबिंबः स्यात्-इति चेत्-न-अप्रयोजकं नियमं उपेत्य यथाह्ययंज्योतिरात्माविवस्वानितिश्रुतिस्वारस्यप्राप्तस्य प्रतिबिम्बभावस्य निराकरणानुपपत्तेः ।

[2]अपि च—चाक्षुषस्यैव प्रतिबिम्ब इति नोपपद्यते । अचाक्षुषस्यापि शब्दस्य प्रतिबिम्बदर्शनात् । न च—तादृशस्थले शब्दान्तरोत्पत्तिरेव, न तु शब्दप्रतिबिम्बः-इति वाच्यम् । गोपुरादिशब्दप्रतिफलनप्रदेशे वर्णपदादियुक्तशब्दजनकस्य कण्ठादिप्रदेशस्य अभावेन वर्णात्मकशब्दजननासम्भवात् । न च-कण्ठादिप्रदेशे उत्पन्नस्य ध्वनेः वीचीतरङ्गन्यायेन प्रतिफलनप्रदेशं प्राप्तस्य तत्र वर्णाभिव्यञ्जकता भविष्यतीति-वाच्यम् । तथासति आद्यध्वनिप्रदेशावच्छेदेनैव वर्णप्रतिध्वनिसाक्षात्कारापत्तेः । वीचीतरङ्गन्यायेन हि जनिताः [3]शब्दाः [4]आद्य-

---

1. प्रतिपाद्यत इति एतेन अंशोनानेतिसूत्रं अवच्छेदप्रतिबिम्बोभयसाधारणांशत्वपरम्-इति प्रतिपादितम् । अत एव 'ममैवांशो जीवलोके' इति गीताभाष्येऽपि अंशत्वं उक्तोभयरूपं व्याख्यातम् ।

2. सिद्धान्तलेशसङ्ग्रहे अवच्छेदवादनिरूपणावसरे प्रतिबिम्बवादानुपपत्तौ निरूपितानां युक्तीनां प्रशिथिलीकरणेन प्रतिबिम्बवादस्य साधुतां व्यवस्थापयति—अपि चेत्यादिना ।

3. शब्दाः—ध्वन्यात्मका वर्णात्मकाश्च शब्दाः ।

4. आद्यप्रदेशेति—आद्यशब्दप्रदेशेत्यर्थः ।

प्रदेशावच्छेदेनैव प्रतीयन्ते । [1]अतश्च गोपुराद्यवच्छेदेन प्रतीयमानस्य [2]मूलशब्दत्वासम्भवात् तदवच्छेदेन प्रतीतिसिद्धये प्रतिबिम्बतैवाश्रयणीया ।

न च—तथासति समुद्रादिगतशब्दानां जलादिशब्दत्वेन आकाशशब्दत्वासम्भवात्, प्रतिध्वनेरपि प्रतिबिम्बतया आरोपितत्वाङ्गीकारे, आकाशासाधारणः शब्दः सिद्धान्ते [3]दुर्लभ एव स्यात्—इति वाच्यम् । वीचतरङ्गन्यायेन मध्योत्पन्नानामेव शब्दानां आकाशशब्दत्वसम्भवात् ।

[4]अधिष्ठानातिरेकेण उपाध्यन्तर्गततया प्रतीयमान [5]आरोप्यविशेष एव प्रतिबिम्ब इत्युच्यते । भवति च प्रतिशब्दस्तादृशः—वर्णात्मकस्य शब्दस्य अवच्छेदकतया कण्ठताल्वादिकमेवाश्रय इति, गोपुरादिषु अवच्छेदकतासम्बन्धेन तस्य आरोप एव उपेयः, आद्यशब्दादधिष्ठानात् भेदेन च स प्रतीयते इति, भवति प्रतिबिम्बः ।

ततः चाक्षुषस्यैव प्रतिबिम्ब इत्यपि[6] न नियमः । ततश्च अचाक्षुषस्यात्मनः प्रतिबिम्बत्वे नानुपपत्तिः ।

---

1. **अतः** — वीचीतरङ्गन्यायेनेत्यादिना अनुपदोक्तहेतोः ।

2. **मूलशब्दत्वासम्भवादिति** आद्यशब्दाद्वीचीतरङ्गन्यायेनोत्पन्नशब्दत्वासम्भवादित्यर्थः। तथा सति गोपुराद्यवच्छेदेन प्रतीतेः अप्रमात्वापत्तेः इति भावः ।

3. **दुर्लभ इति** प्रातिभासिकस्य प्रतिध्वनेः आकाशव्यावहारिकगुणत्वासम्भवात् इति भावः ।

4. प्रतिशब्दस्य प्रतिबिम्बत्वं उपपादयितुं प्रतिबिम्बव्यवहारप्रयोजकमाह—**अधिष्ठानेत्यादिना** ।

5. **आरोप्यविशेष इति** प्रतिबिम्बविभ्रमस्थले ग्रीवास्थमुखादौ आदर्शाद्युपाधिस्थत्वादिकं आरोप्यं इति पञ्चपादिकाकृतां मतम्, तत् उपाधिस्थत्वादिविशिष्टरूपेण मुखं आरोप्यं इत्येतत्पर्यन्तं-इत्यभिप्रायेणेदम् । एतदेवोक्तं विशेषपदेन । एवञ्च अधिष्ठानातिरेकेणेत्यत्र अधिष्ठानपदेन ग्रीवादिरूप आश्रयो विवक्षितः । ग्रीवादिदेशभिन्नदेशस्थत्वेन प्रतीयमान इति समुदायार्थः ।

6. **इत्यपीति** अपिना 'चाक्षुषे एव प्रतिबिम्बः' इत्यस्य ग्रहणम् । स्वच्छत्वादेरेव प्रतिबिम्बोपाधित्वप्रयोजकत्वात्, देहादेश्चाक्षुषत्वेऽपि प्रतिबिम्बोपाधित्वाभावात् इति भावः ।

आभासस्य च अविद्याकृतत्वात् तदाश्रयस्य संसारस्य अविद्याकृतत्वोपपत्तिरिति, तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्य उपदेशोपपत्तिः ।

येषां तु बहव आत्मानः ते च सर्वे सर्वगताः, तेषामेव एष व्यतिकरः प्राप्नोति ।

कथम् ? ।

बहवो विभवश्च आत्मानः चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च, तदर्थं साधारणं प्रधानं, तन्निमित्ता एषां भोगापवर्गसिद्धिः—इति सांख्याः ।

सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानः, तदुपकरणानि च अणूनि मनांसि अचेतनानि । तत्र आत्मद्रव्याणां मनोद्रव्याणां च संयोगात् नव इच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते । ते च अव्यतिकरेण प्रत्येकं आत्मसु समवयन्ति, स संसारः । तेषां नवानामात्मगुणानां अत्यन्तानुत्पादो मोक्षः—इति काणादाः ।

तत्र सांख्यानां तावत् चैतन्यस्वरूपत्वात् सर्वात्मनां संनिधानाद्यविशेषाच्च एकस्य सुखदुःखसंबन्धे सर्वेषां सुखदुःखसंबन्धः प्राप्नोति ।

---

ननु—चैतन्यं स्वरूपत एकमेव, जीवेश्वरात्मना औपाधिको भेद इति तदवलम्बना धर्मव्यवस्था-इति क्लेशः किमर्थमाश्रीयते । वस्तुगत्यैव जीवनानात्वमीश्वरभेदश्चास्तु—इति ये मन्यन्ते तेषामपि क्लेश एवेति दर्शयति—येषांत्विति ।

जीवाणुत्वमुपेत्य भेदवादिनां सर्वाङ्गीणसुखाद्यनुपपत्तिरुक्तैव । साङ्ख्याः काणादाश्च जीवविभुत्वमुपेत्यैव जीवभेदः परमार्थ इति वर्णयन्ति । तेषां मते दोष इदानीमुच्यते—

तत्र साङ्ख्यं प्रति, 'सुखदुःखात्मकप्रधानपरिणामस्य सर्वजीवसाधारण्यं स्यात्, विभूनां जीवानां सुखदुःखपरिणामप्रदेशे सन्निधानाविशेषात्' इत्यापादिते, "प्रधानस्य प्रवृत्तिः पुरुषार्थार्था, स च पुरुषार्थो भोगमोक्षरूपः, ततश्च यं प्रति असमाप्तो भोगः तं प्रति सुखाद्यात्मना परिणमते, यस्य तु समाप्तो भोगः तं प्रति न तथा परिणमत इति, [1]सर्वजीवसन्निध्यविशेषेऽपि प्रवृत्तिवैचित्र्यात् व्यवस्था

---

1. आ. सर्वजीवसान्निध्येऽपि

स्यादेतत्-प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वात् व्यवस्था भविष्यति। अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्, तथा च अनिर्मोक्षः प्रसज्येत - इति।

नैतत् सारम्। न हि अभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम्। उपपत्त्या तु कयाचित् व्यवस्था उच्येत। असत्यां पुनरुपपत्तौ कामं मा भूत् अभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावात् व्यतिकरः।

काणादानामपि यदा एकेनात्मना मनः संयुज्यते तदा आत्मान्तरैरपि नान्तरीयकः संयोगः स्यात्, सन्निधानाद्यविशेषात्। ततश्च हेत्वविशेषात् फलाविशेष इति, एकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुःखित्वं प्रसज्येत ॥ ५० ॥

स्यादेतत्—अदृष्टनिमित्तो नियमो भविष्यतीति। नेत्याह—

## अदृष्टानियमात् ॥ ५१ ॥

---

भविष्यति"—इति स एव शङ्कते—स्यादेतदिति। पुरुषकैवल्यार्थत्वादिति भोगार्थत्वादित्यस्याप्युपलक्षणम्।

नैतत्सारमिति। अयं भावः—प्रधानादिप्रवृत्तिवैचित्र्यं हि सुखदुःखादिरूपमेव, नान्यत् किञ्चिदुपपद्यते। तच्च सर्वेषामात्मनां सन्निहितमिति, स्वप्रकाशेष्वात्मसु कस्यचिद्भासते कस्यचिन्नेति कथं निर्मूला व्यवस्था आश्रयितुं शक्या-इति।

काणादानां मते, आत्ममनस्संयोगः सुखादौ असमवायिकारणम्, प्रत्येकं च मनसां सर्वैरात्मभिः संयोगो विभुत्वादवर्जनीय एवेति, तज्जनितं सुखादिकं सर्वात्मसमवेतमेव भवेदिति, न व्यवस्था स्यात्—इत्याह—काणादानामपीति ॥ ५० ॥

ननु मनस्संयोगस्य सर्वसाधारणत्वेऽपि यददृष्टारब्धो मनस्संयोगः तस्यैव सुखजनको भविष्यति नान्यस्य—इति शङ्कापरिहारार्थतया उत्तरसूत्रमवतारयति—स्यादेतत्—अदृष्टनिमित्त इति ॥

बहुष्वात्मसु आकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण सन्निहितेषु मनोवाक्कायैः धर्माधर्मलक्षणमदृष्टं उपार्ज्यते ।

सांख्यानां तावत् तत् अनात्मसमवायि प्रधानवर्ति प्रधानसाधारण्यात् न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते ।

काणादानामपि पूर्ववत् साधारणेनात्ममनःसंयोगेन निर्वर्तितस्य अदृष्टस्यापि 'अस्यैवात्मन इदमदृष्टम्' इति नियमे हेत्वभावात् एष एव दोषः ॥ ५१ ॥

स्यादेतत्—'अहमिदं फलं प्राप्नवानि, इदं परिहराणि, इत्थं प्रयतै, इत्थं करवाणि' इत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमानाः अदृष्टस्य आत्मनां च स्वस्वामिभावं नियंस्यन्तीति । नेत्याह—

## अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसन्निधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेः उक्तदोषानुषङ्ग एव ॥ ५२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

अथोच्येत–विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्ने एवात्मप्रदेशे भविष्यति, अतः प्रदेशकृता व्यवस्था अभिसन्ध्यादीनां अदृष्टस्य सुखदुःखयोश्च भविष्यति—इति ।

तदपि नोपपद्यते । कस्मात् । अन्तर्भावात् । विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति । तत्र न वैशेषिकैः शरीरावच्छिन्नोऽपि

---

अदृष्टं हि कृत्यादिजन्यम्, तज्जनकस्य आत्ममनस्संयोगस्य सर्वसाधारणतया एकेन पुण्ये पापे वा क्रियमाणे सर्वैरपि कृतमेव भवतीति न अदृष्टमपि व्यवस्थापयितुं शक्यम्–इत्याह—काणादानामपीति ॥ ५१ ॥

अदृष्टन्यायस्य अभिसन्ध्यादिषु-कर्मोपयोगिज्ञानचिकीर्षादिषु अतिदेशार्थं इदं सूत्रम् ॥ ५२ ॥

शरीरप्रतिष्ठेन मनसेति । मनसोऽणुत्वेन शरीरात् बहिः मनोयोगो नास्तीति भावः । शरीरावच्छिन्नोऽपीति । 'एतस्यैवात्मनः प्रदेश एतस्मिञ्छरीरे प्रविष्टः नान्यस्य' इति व्यवस्था तार्किकैरुपगन्तुमशक्या इत्यर्थः ।

आत्मनः प्रदेशः कल्पयितुं शक्यः। कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति।

शरीरमपि सर्वात्मसन्निधावुत्पद्यमानं 'अस्यैवात्मनो नेतरेषाम्' इति न नियन्तुं शक्यम्।

प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचित् एकेनैव तावच्छरीरेण उपभोगसिद्धिः स्यात्। समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्। तथाहि-देवदत्तो यस्मिन् प्रदेशे सुखदुःखमन्वभूत् तस्मात् प्रदेशात् अपक्रान्ते तच्छरीरे, यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते, तस्यापि इतरेण समानः सुखदुःखानुभवो दृश्यते। स न स्यात्, यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात्।

स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्। ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य।

सर्वगतत्वानुपपत्तिश्च बहूनामात्मनां, दृष्टान्ताभावात्। वद तावत् त्वं, के बहवः समानप्रदेशाश्चेति। रूपादय इति चेत्, न-तेषामपि धर्म्यंशेनाभेदात्। लक्षणाभेदाच्च-न तु बहूनामात्मनां लक्षणभेदोऽस्ति। अन्त्य-

---

ननु—एकस्मिन् शरीरे सर्वेषामात्मनां प्रविष्टत्वेऽपि शरीरावच्छेदेन जायमाना आत्मधर्माः शरीरस्वामिन एव भवन्ति नान्यस्य—इत्याशङ्क्याह—शरीरमपीति।

ननु—एकस्मिन् शरीरे बहूनामात्मनां प्रविष्टत्वेऽपि तच्छरीरस्वामित्वेन प्रसिद्धस्यात्मनः प्रदेश एव तत्रत्यसुखादिसमवायितायोग्यः नान्यात्मप्रदेशः—इति शङ्कायां, देवदत्तशरीरस्थितिप्रदेशे यज्ञदत्तशरीरप्राप्तौ तस्यापि तत्र सुखादिदर्शनात् तत्रत्यो यज्ञदत्तात्मप्रदेशो न सुखाद्ययोग्य इत्याह—प्रदेशविशेषाभ्युपगमेऽपीति। ननु तत्प्रदेशावच्छेदेन तस्यादृष्टं नास्तीत्याशङ्क्य आह—समानप्रदेशस्यापीति। उक्तमर्थं विवृणोति—तथा हीति। यदि च, यत्प्रदेशावच्छेदेन अदृष्टं तदवच्छेदेनैव सुखादिकं-इत्यभ्युपगम्यते, तदा दोषमाह—स्वर्गादीति।

विशेषवशात् भेदोपपत्तिरिति चेत्, न-भेदकल्पनाया अन्त्यविशेषकल्पनायाश्च इतरेतराश्रयत्वात् । आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धम्, कार्यत्वाभ्युपगमात् ।

तस्मात् आत्मैकत्वपक्षे एव सर्वदोषाभावः इति सिद्धम् ॥ ५३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

ननु—सुखादीनां व्यवस्थितत्वं लोकसिद्धम् । तत्र व्यवस्थाप्रयोजकं किंचित् सर्वैर्वादिभिर्वक्तव्यम् । तत्र, साङ्ख्येन एवं वक्तुं शक्यम्—बुद्धिपरिणामः सुखम् । सुखव्यक्तिविशेषे च बुद्धिविशेषस्यैव उपादानत्वम् । ततश्च यस्यां बुद्धौ यस्य जीवस्य प्रतिबिम्बः तद्बुद्धिपरिणामभूतं सुखादि तस्यैव भोग्यम् । नच-सर्वात्मसन्निधौ विद्यमानायां एकस्यैवात्मनः प्रतिबिम्ब इति नियन्तुमशक्यम्-इति वाच्यम् । एकस्या बुद्धेः एकात्मप्रतिबिम्बग्राहित्वं इति नियमकल्पनोपपत्तेः । अतो न साङ्ख्यमते अव्यवस्था । नैयायिकमते, तत्तत्सुखव्यक्तिविशेषे आत्मविशेषस्यैव उपादानत्वं इत्युपगमात् न सर्वेषां सुखानां सर्वात्मसमवायिता प्रसज्यते । तत्तत्समवेतं च सुखं तस्य तस्य भोग्यम् । अतो न भोगसाङ्कर्यम् । सिद्धान्तेऽपि हि एवमेव वक्तव्यम् । 'अन्तःकरणोपहितो जीवः' इति पक्षे तस्य परिच्छिन्नत्वसम्भवेऽपि 'अज्ञानोपाधिको जीवः' इति पक्षे अज्ञानानां व्यापकतया तदुपाधिकानां जीवानां व्यापकत्वावश्यम्भावात्—इत्याशङ्क्य आह—तस्मादात्मैकत्वपक्ष इति । अयं भावः—यदि लोकसिद्धव्यवस्थोपपादनाय इत्थं व्यवस्था आश्रीयते, तथा सति, श्रुतिसिद्धाद्वैतसमर्थनाय चैतन्यभेदः अपारमार्थिको मायोपाधिक इत्युपेत्य असदुक्तैव व्यवस्था आश्रयणीया । अन्यथा श्रुतिविरोधरूपस्य दोषस्य प्रसङ्गात्—इति ॥ ५३ ॥

इति अंशाधिकरणम्

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
द्वितीयस्याध्यायस्य तृतीयः पादः

## द्वितीयाध्यायस्य चतुर्थः पादः

### १. प्राणोत्पत्त्यधिकरणम्

# तथा प्राणाः ॥ १ ॥

वियदादिविषयश्रुतिविप्रतिषेधः तृतीयेन पादेन परिहृतः। चतुर्थेन इदानीं प्राणविषयः परिह्रियते। तत्र तावत् 'तत्तेजोऽसृजत' (छा. उ. ६।२।३) इति 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१।१) इति चैवमादिषु उत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिः नाम्नायते, क्वचिच्च अनुत्पत्तिरेवैषां आम्नायते; असद्वा इदमग्र आसीत्, तदाहुः किं तदसदासीदिति ऋषयो वाव तेऽग्रेऽसदासीत्, तदाहुः के ते ऋषय इति प्राणा वाव ऋषयः' (शत. ब्रा. ६।१।१।१) इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—'यथाऽग्नेर्ज्वलतः

---

पूर्वोत्तरपादयोः पौर्वापर्यनियामकं सम्बन्धं वक्तुं द्वयोः पादयोः अर्थं संगृह्णाति—वियदादिविषयेत्यादि। भूतोत्पत्त्यादिविषयश्रुतिविरोधे परिहृते भूत-कार्याणामिन्द्रियादीनामुत्पत्त्यादिगोचरश्रुतिविरोधः परिह्रियत इति, अर्थयोः कार्य-कारणभावः पौर्वापर्ये नियामक इति भावः।

प्रलयेऽपि प्राणस्थितिप्रतिपादकानां, प्राणोत्पत्तिप्रतिपादकानां च वचनानां विरोधात् अप्रामाण्यम्-इति पूर्वपक्षे, 'ऋषयो वाव तेऽग्रेऽसदासीत्' इति प्रलयेऽपि प्राणस्थितिप्रतिपादिकायाः श्रुतेः अन्यथानेतुमशक्यत्वात् प्राणानामुत्पत्तिप्रतिपादिका श्रुतिः जीवोत्पत्त्यादिप्रतिपादकश्रुतिवत् गौणी व्याख्येया। [1]न च-ऋषिशब्दानु-सारेण प्राणशब्दः 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यत्रेव ब्रह्मप्रतिपादकः, ऋषिशब्दस्य प्रकृष्टज्ञानशालिचेतनवाचकत्वात् - इति वाच्यम्।

---

1. **नचेत्यादि** शङ्कासमाधानाभ्यां विशिष्टाद्वैतिनामुक्तश्रुतिव्याख्याने न्याय-विरोधः सूचितः।

क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेव एतस्मादात्मनः सर्वे प्राणाः' (बृ. उ. २।१।२०) इति 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु. उ. २।१।३) इति 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु. उ. २।१।८) इति 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्' (प्र. उ. ६।४) इति चैवमादिप्रदेशेषु। (तत्र) तत्र श्रुतिविप्रतिषेधात् अन्यतरनिर्धारणकारणानिरूपणाच्च अप्रतिपत्तिः प्राप्नोति। अथवा प्रागुत्पत्तेः सद्भावश्रवणात् गौणी प्राणानामुत्पत्तिश्रुतिः इति प्राप्नोति।

अत उत्तरमिदं पठति 'तथा प्राणाः' इति।

कथं पुनरत्र तथेत्यक्षरानुलोम्यं, प्रकृतोपमानाभावात्। सर्वगतात्मबहुत्ववादिदूषणं अतीतानन्तरपादान्ते प्रकृतं, तत्तावत् न उपमानं संभवति, सादृश्याभावात्। सादृश्ये हि सति उपमानं स्यात्। यथा सिंहः तथा बलवर्मेति। अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत-यथा अदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्य अनियतत्वं एवं प्राणानामपि सर्वात्मनः प्रति अनियतत्वमिति। तदपि देहानियमेनैवोक्तत्वात् पुनरुक्तं भवेत्। न च जीवेन प्राणा उपमीयेरन्, सिद्धान्तविरोधात्। जीवस्य हि अनुत्पत्तिराख्याता।

---

ब्रह्मण एकत्वेन बहुवचनान्तयोः ऋषिप्राणपदयोः ब्रह्मपरत्वासम्भवात्, एकं ऋषिपदं अनुसृत्य द्वयोर्बहुवचनश्रुत्योः प्राणपदस्य च जघन्यवृत्त्याश्रयणानौचित्यात्। अतः 'तस्यासत ऋषयः सप्त तीरे' [बृ. उ. २।२।३] इत्यत्रैव ऋषिपदमेव प्राणेषु मुख्यं भविष्यति-इत्येकदेशिमतमाह—अथवेति।

पुनरुक्तं भवेदिति। अपि च—एवं सति इदं सूत्रं पूर्वशेष एव स्यादिति नास्य पादान्तरान्तर्गतिस्स्यादिति द्रष्टव्यम्। जीवस्य ह्यनुत्पत्तिराख्यातेति। जीवस्य उपमानतया तथाशब्देन परामर्शे हि, यथा जीवो नोत्पद्यते एवं प्राणा अपि नोत्पद्यन्ते-इत्यर्थो वर्णनीयः। [1]तथासति, नेदं पूर्वपक्षसूत्रमिति वक्तुं शक्यम्,

---

1. तथासतीत्यादि एतेन विशिष्टाद्वैतिनां सूत्रव्याख्यानस्य अन्याय्यता सूचिता। सौत्रः पूर्वपक्षः, उत्सूत्रः सिद्धान्तः—इत्यस्य सूत्रकारशैलीविरोधात्। गौण्यसम्भवात् तत्प्राक्श्रुतेश्चेति चकारस्य त्वर्थतायाः क्लिष्टत्वाच्च। तथासतीत्यादेरयमर्थः - तथा सति इदं पूर्वपक्षसूत्रमिति वक्तव्यम्, तथा वक्तुं तु न शक्यम्-इति।

प्राणानां तु उत्पत्तिर्व्याचिख्यासिता। तस्मात् तथेति असंबद्धमिव प्रतिभाति।

न - उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः। अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्—'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृ. उ. २।१।२०) इत्येवंजातीयकम्। तत्र, यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते तथा प्राणा अपीत्यर्थः। तथा, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु. उ. २।१।३) इत्येवमादिष्वपि खादिवत् प्राणानामुत्पत्तिः इति द्रष्टव्यम्।

अथ वा 'पानव्यापच्च तद्वत्' (जै. सू. ३।४।१५) इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात्, यथा अतीतानन्तरपादादावुक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगताः तथा प्राणा अपि परस्य ब्रह्मणो विकाराः इति योजयितव्यम्।

---

उत्तरसूत्रे तुशब्दाद्यदर्शनात्। सिद्धान्तसूत्रत्वे तु अर्थविरोधः। श्रुतिस्वारस्येन प्राणानामुत्पत्तेरेव सिद्धान्ताभिमतत्वात्। तदिदमुक्तं प्राणानां तूत्पत्तिरिति।

यथा वियदादय उत्पद्यन्ते एवं प्राणा अपि-इति सूत्रयोजनां अभिप्रेत्य, 'व्यवहितानां वियदादीनां कथं सौत्रेण तथाशब्दान्तर्गततच्छब्देन परामर्शः' इत्यपेक्षायां जैमिनिसूत्रदृष्टान्तमुखेन तमर्थमुपपादयन् पक्षान्तरमाह—अथवेति। 'पानव्यापच्च तद्वत्' इति सूत्रगतेन तत्पदेन परामृश्यमानोऽर्थः उपमानभूतो व्यवहितः।

तथा हि—शेषलक्षणे[स्थितम्] 'दोषात्त्विष्टिर्लौकिके स्यात् शास्त्राद्धि वैदिके न दोषः स्यात्' [जै. सू. ३।४।३४] तैत्तिरीयास्समामनन्ति—'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत्, ततो वै स वरुणपाशादमुच्यत, वरुणो वा एतं गृह्णाति योऽश्वं

प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्, वरुणमेव स्वेन भागधेयेनोपधावति, स एवैनं वरुणपाशान्मुञ्चति - इति । प्रजापतिः वरुणाय अश्वं दत्वा [1]सम्प्रदानभूततयास्वदेवतारूपं वरुणं प्राप्तवान्—वरुणपाशशब्दोदितं जलोदररोगं प्राप्तवान् । ततः स वारुणचतुष्कपालेष्टिं कृत्वा तस्माद्रोगात् मुक्तवान् । अतः अन्योऽपि यः कश्चित् अश्वं प्रतिगृह्णाति-ददाति तं वरुणो गृह्णाति-जलोदर-रोगयुक्तं करोति । तत्परिहारार्थं अवश्यं देयाश्वसमसङ्ख्यान् वारुणान् चतुष्क-पालान् निर्वपेत्—इत्येवमर्थता अस्य वाक्यस्य उपक्रमस्वारस्यानुसारेण [2]स्थास्यति ।

तथा च अश्वदानं निमित्तभूतं अस्मिन्नधिकरणे विचार्यते—

वारुणचतुष्कपालेष्टौ किं लौकिकं प्रीत्यादिना सुहृदादिभ्यः कृतं अश्वदानं निमित्तम्, उत पौण्डरीकादिषु कृतं [3]वैदिकं दक्षिणारूपमश्वदानं निमित्तम् ? इति संशयः ।

तत्र पूर्वः पक्षः—वरुणो वा एतं गृह्णातीति अश्वदाने दोषः [4]श्रूयते । स च दोषः 'न केसरिणो ददाति' [5]इति निषेधविषये लौकिके एव युक्तः । शास्त्रीय-स्यानिषिद्धतया तत्र दोषसंसर्गायोगात् । अतो लौकिकमेवाश्वदानं निमित्तम्-इति ।

सिद्धान्तस्तु – न [6]अनेनैव वाक्येन 'अश्वदाने कृते दोषो भवति, तत्र चेयं वारुणेष्टिः' इत्यर्थद्वयं बोधयितुं शक्यम्, वाक्यभेदात् । अतः दोषसङ्कीर्तनं अर्थवादः वारुणेष्टेरवश्यकर्तव्यताद्योतनार्थः ।

ननु—स्तुत्यर्थमपि, प्राप्तो दोषः अनुवदितव्यः, तत्र केन प्रमाणेन प्राप्तिः- इति चेत्,

उच्यते—'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत्' इत्युपक्रमवशात्

---

1. आ. सम्प्रदानतया
2. **स्थास्यति** शेषलक्षणे समनन्तराधिकरणे निर्णीतो भविष्यति ।
3. **वैदिकम्** 'पौण्डरीके अश्वसहस्रं दक्षिणा' इत्यादिवेदविहितम् ।
4. मु. 'श्रूयते' नास्ति
5. **इति निषेधेति** सुहृदादिभ्यो रागप्राप्तस्याश्वदानस्य निषेधोऽयम् ।
6. **अनेनैवेति** लौकिके अश्वदाने सति उक्तदोषस्य प्रत्यक्षादिभिः अप्रमीयमाण-त्वात् इति भावः ।

'अन्यस्यापि अश्वदाने कृते वरुणग्रहः प्राप्तो भवति' इत्यर्थोऽवगम्यते। स च सन् वा असन् वा भवतु, तावन्मात्रमालम्बनं कृत्वा स्तुतिप्रवृत्तौ न काचिदनुपपत्तिः।

अथ वा—'अग्निमिव खलु वा एष प्रविशति योऽवान्तरदीक्षामुपैति' इत्यत्र लोकप्राप्त एव अग्निप्रवेशः उपमानत्वेनोपादीयते, एवमत्रापि वरुणोवाएतंगृह्णाति योऽश्वंप्रतिगृह्णातीति लोकप्राप्त एव वरुणग्रहः उपमानत्वेन कीर्त्यते। उपमानत्वं [1]पारमार्थिकम्, इवशब्दादेरश्रवणात्। तथा च वरुणग्रहतुल्यमश्वदानं इत्यर्थे सति, वरुणग्रहे सति चिकित्सेव अश्वदाने सति वारुणेष्टिः कर्तव्या-इत्यर्थो लभ्यते।

पक्षद्वयेपि दोषकीर्तनान्वयो वैदिकेऽश्वदाने सम्भवत्येव। न चैवं विनिगमनाविरहात् लौकिके वैदिके चाश्वदाने इयमिष्टिः स्यादिति वाच्यम्। लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति, एकस्य वाक्यस्यैव क्रतुवाक्यैकवाक्यतातदभावाभ्यां वैरूप्यप्रसङ्गात्। तथा च अन्यतरार्थत्वे वक्तव्ये वैदिकत्वेन प्रत्यासन्नं वैदिकमेवाश्वदानं उपस्थितं भवतीति, तदेवेह निमित्तम्। तथा च सूत्रम्——[2]'अर्थवादोऽनुवादत्वात् तस्माद्यज्ञे प्रतीयेत' [जै. सू. ३।४।३५] इति।

तदनन्तरं च पुनर्विचारः——'योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्' इति वाक्येन किमत्र दातुरधिकारः प्रतिपाद्यते उत प्रतिग्रहीतुरिति।

तत्र पूर्वपक्षः——प्रतिगृह्णातेः प्रतिग्रह एव स्वारस्यात् न दातुरिष्टिः-इति।

न च—प्रजापतिर्वरुणायाश्वमनयदिति दातारमुपक्षिप्य 'स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत्' इति तस्यैव इष्टिकर्तृताप्रतिपादनेन उपक्रमे एव दातुरित्यवगतेः तदनुसारेण प्रतिगृह्णातिः दाने एव लाक्षणिको भविष्यति, षड्भिर्हलैःकर्षतीत्यादाविव णिजर्थगर्भो वा भविष्यति 'प्रतिग्राहयति' इति। तथा च दातुरेवेष्टिरिति—वाच्यम्। 'स स्वां देवतामार्छत्' इत्यत्रत्येन तच्छब्देन, प्रजापतेः दातुर्वा वरुणस्य प्रतिग्रहीतुर्वा परामर्श इति सन्दिग्धतया उपसंहारानुसारेण वरुणस्यैव परामर्श इत्युपपत्तेः।

तदिदमाह सूत्रकारः—'अचोदितं च कर्म भेदात्' [जै. सू. ३।४।३६] इति। दातुः अचोदितं कर्म, प्रतिग्रहेण कर्तुर्भेदात्—विशेषणात्—इत्यर्थः।

---

1. पारमार्थिकम्—वस्तुसत् - न ज्ञायमानं इत्यर्थः।
2. अर्थवादोऽनुपपातात्—इति शाबरभाष्यपाठः।

सिद्धान्तस्तु 'सा लिङ्गादार्त्विजे स्यात्' [जै. सू. ३।४।३७]। ऋत्विजां सम्बन्धी आर्त्विजः-यजमानः, तस्मिन्नेव इयमिष्टिः स्यात्, उपक्रमरूपाल्लिङ्गात्। न चोपक्रमस्य सन्दिग्धार्थता। 'स एतं वारुणं चतुष्कपालमपश्यत्' इत्यत्र विद्यमानेन तत्पदेन, प्रजापतिरितिप्रथमान्तेन स्वसमानविभक्तिकेन प्रस्तुतस्य [1]'स स्वां देवतां आर्च्छत्' इत्यादिसर्वनामपरामृष्टस्य प्रजापतेरेव परामर्शस्य स्वरसतोऽवगम्यमानत्वात्। अतो दातुरेवेयमिष्टिः।

तदनन्तरं 'पानव्यापच्च तद्वत्' [जै. सू. ३।४।३८] इत्यधिकरणम्। 'यस्सोमं वमिति' 'यस्सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्' इति सोमवमने निमित्ते आम्नातश्चरुः। किं, लौकिकं यत् धातुसाम्यार्थं सोमपानं कृतं तत्र वमने सति इयमिष्टिः, उत वैदिकसोमपाने कृते यद्वमनं तत्र?

तत्र पूर्वपक्षसूत्रमेतत्—'पानव्यापच्च' इति।

अत्र अश्वप्रतिग्रहेष्ट्याद्याधिकरणपूर्वपक्षार्थः तत्पदेन परामृश्यत इति व्यवहितपरामर्शकता-यथा पूर्वपक्षे वारुणेष्टिः लौकिकेऽश्वदाने भवतीत्युक्तं, तद्वत् इयमपीष्टिः लौकिकसोमवमने एव-इति। वैदिकं हि सोमपानं सोमप्रतिपत्त्यर्थं, ततश्च पानानन्तरं जातेऽपि वमने प्रतिपत्तिरूपस्य कार्यस्य वैकल्याभावात्, 'इन्द्रियेण वीर्येण व्यृध्यते यस्सोमं वमिति' इति दोषकीर्तनस्य नान्वयः। लौकिके सोमपाने सति वमनानन्तरं इन्द्रियवीर्यक्षयरूपो दोषः सम्भवति। वमने सति इन्द्रियवीर्यशोषस्य दर्शनेन धातुसाम्यरूपफलानिष्पत्तेः।

सिद्धान्तस्तु—वमने सति प्रतिपत्तिवैगुण्यमस्त्येवेति, वमने सति इन्द्रियवीर्यशोषो जायमानो दोषत्वेन कीर्तयितुं शक्यत एव। 'शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमति गाः' इति [2]मन्त्रेण, 'नाभिमतिक्रम्य मे वाचं प्रति मा गाः' इति 'मे नाभिमतिक्रम्य वागूर्ध्वं मा गाः' इति वा सोमप्रार्थनायां सोमस्योर्ध्वमुखतानिषेधेन सम्यग्जरणपर्यन्तस्य सोमपानस्यैव प्रतिपत्तित्वावगमात्। लौकिके एव च सोमपाने, वमनद्वारा अन्तर्गतदोषनिर्हरणेन धातुसाम्यसम्पादकतया वैद्यकोक्तेः जायमानाया इन्द्रियवीर्यग्लानेः अङ्गीकृततया, दोषत्वेन कीर्तनं नोपपद्यत इति, वैदिकमेव वमनं निमित्तम्-इति।

---

1. मु. 'स पर्यदीयत' इत्यादि
2. मु. मन्त्रे सम्यग्जरणपर्यन्तस्य

कः पुनः प्राणानां विकारत्वे हेतुः ? श्रुतत्वमेव। ननु केषुचित् प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयते इत्युक्तम्। तदयुक्तम्-प्रदेशान्तरेषु श्रवणात्। न हि क्वचिदश्रवणं अन्यत्र श्रुतं निवारयितुं उत्सहते।

तस्मात् श्रुतत्वाविशेषात् आकाशादिवत् प्राणा अपि उत्पद्यन्ते इति सूक्तम् ॥ १ ॥

## गौण्यसंभवात् ॥ २ ॥

यत्पुनरुक्तं-प्रागुत्पत्तेः सद्भावश्रवणात् गौणी प्राणानामुत्पत्तिश्रुतिः-इति। तत् प्रत्याह—गौण्यसंभवादिति। गौण्या असंभवः—गौण्यसंभवः। न हि प्राणानामुत्पत्तिश्रुतिः गौणी संभवति। प्रतिज्ञाहानिप्रसङ्गात्। ‘कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति’ (मु. उ. १।१।३) इति हि एक-विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनाय इदमाम्नायते ‘एतस्माज्जायते प्राणः’ इत्यादि। सा च प्रतिज्ञा, प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात् सिद्ध्यति। गौण्यां तु प्राणाना-मुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयेत। तथा च प्रतिज्ञातार्थमुपसंहरति ‘पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्’ (मु. उ. २।१।१०) इति ‘ब्रह्मैवेदं विश्वमिदं वरिष्ठम्’ (मु. उ. २।२।११) इति च। तथा ‘आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्, (बृ.उ. २।४।५) इत्येवंजातीय-कासु श्रुतिषु एषैव प्रतिज्ञा योजयितव्या।

कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम् ?। नैतत् मूलप्रकृति-विषयम्। ‘अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः’ (मु. उ. २।१।२) इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्। अवान्तरप्रकृति-

---

वियदधिकरणसिद्धान्तयुक्तिं वक्तुं आकाङ्क्षामुत्थापयति—कः पुनरिति। न चैवं सति वियदधिकरणेनैव गतार्थता। ‘ऋषयो वाव ते अग्रेऽसदासीत्’ इति श्रुतिगतिनिरूपणार्थत्वात् ॥ १ ॥

अवान्तरप्रकृतिविषयं त्वेतदिति। असदेवेदमग्रआसीदिति वाक्यं प्राणानां प्रलये सद्भावं प्रतिपादयत्, न महाप्रलयविषयम्, अपि तु [1]अग्निसाधनानां

---

1. अग्निसाधनानाम्-चित्याग्निसाधनानाम्।

विषयं त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणं इति द्रष्टव्यम्। व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृति-विकारभावप्रसिद्धेः।

वियदधिकरणे हि 'गौण्यसंभवात्' इति पूर्वपक्षसूत्रत्वात्, 'गौणी जन्मश्रुतिः असंभवात्' इति व्याख्यातम्। प्रतिज्ञाहान्या च तत्र सिद्धा-न्तोऽभिहितः। इह तु, सिद्धान्तसूत्रत्वात्, 'गौण्या जन्मश्रुतेः असंभवात्' इति व्याख्यातम्। तदनुरोधेन तु इहापि 'गौणी जन्मश्रुतिः असंभवात्' इति व्याचक्षाणैः, प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

इतश्च आकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः। यत् 'जायते' इति एकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सत् उत्तरेष्वप्याकाशा-दिषु अनुवर्तते 'एतस्माज्जायते प्राणः' इत्यत्र। आकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितम्, तत्सामान्यात् प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति। न हि एकस्मिन् प्रकरणे एकस्मिंश्च वाक्ये एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इति अध्यवसातुं शक्यम्, वैरूप्य-प्रसङ्गात्। तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वपि उत्पत्तिमत्सु श्रद्धादिषु अनुषज्यते। यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते तत्रापि एष एव न्यायः। यथा 'सर्वाणि भूतानि व्युच्चरन्ति' इत्ययं अन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥ ३ ॥

---

शर्करादीनां सृष्टिं वक्तुं प्रवृत्तमिदं वाक्यं अवान्तरप्रलयविषयं योजयितुं शक्यम्। तत्र अवान्तरप्रकृतेर्हिरण्यगर्भस्य विद्यमानतया तदीयानां प्राणानां सम्भवति सत्त्वम्। एकत्वावधारणमपि हिरण्यगर्भकार्याभिप्रायं भविष्यति ॥ २ ॥

यथा सर्वाणि भूतानि व्युच्चरन्तीत्ययमिति। 'सर्व एत आत्मानो व्युच्चरन्ति' इत्यत्र आत्मनि सम्बन्धे तु गौणत्वं नात्माश्रुतेरितिन्यायप्राप्तं निवारयितुं न शक्यमिति द्रष्टव्यम् ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' (छा. ६।२।३) इत्येतस्मिन् प्रकरणे प्राणानामुत्पत्तिः न पठ्यते, तेजोबन्नानामेव त्रयाणां भूतानां उत्पत्तिश्रवणात् । तथापि, ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां, तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथा हि अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते 'अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' (छा. उ. ६।५।४) इति ।

तत्र, यदि तावत् मुख्यमेव एषामन्नादिमयत्वं, ततो वर्तत एव ब्रह्मप्रभवत्वम् । अथ भाक्तं, तथापि, ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् 'येनाश्रुतं श्रुतं भवति (छा. उ. ६।१।३) इति च उपक्रमात् 'ऐतदात्म्यमिदं सर्वम्' (छा. उ. ६।८।७) इति चोपसंहारात् श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनं इति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः ॥ ४ ॥

२. सप्तगत्यधिकरणम्

## सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः । संख्याविषय इदानीं परिह्रियते । तत्र मुख्यं प्राणं उपरिष्टाद्वक्ष्यति । संप्रति तु कतीतरे प्राणा इति संप्रधारयति ।

---

अथ भाक्तमिति । 'अन्नमयं हि सोम्य मनः' इत्यादिवाक्यं प्राक्सिद्धानामेव मनआदीनां अन्नादिसम्बन्धादुपचितत्वमात्रप्रतिपादनपरं इत्यर्थः ॥ ४ ॥

इति प्राणोत्पत्त्यधिकरणम्

मुख्यं प्राणमिति । प्राणा द्विविधाः–मुख्याः गौणाश्च । प्राणापानादयो मुख्याः, चक्षुरादयोऽमुख्याः । पूर्वस्मिन्नधिकरणे चक्षुरादीनां गौणानां प्राणानां उत्पत्तिर्निरूपिता । श्रेष्ठश्चेत्यधिकरणे मुख्यप्राणोत्पत्तिनिरूपणं भविष्यति । गौणानां प्राणानां सङ्ख्या अस्मिन्नधिकरणे निरूप्यते[1] इति समानविषयत्वं पूर्वोत्तराधिकरणयोः सङ्गतिः । उत्पत्तिमपेक्ष्य सङ्ख्याया बहिरङ्गत्वात् आनन्तर्यम् ।

---

1. आ. निरूप्यते। समान

श्रुतिविप्रतिपत्तेश्च अत्र विशयः। क्वचित् सप्त प्राणाः संकीर्त्यन्ते 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु. उ. २।१।८) इति। क्वचित् अष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते 'अष्टौ ग्रहा अष्टावतिग्रहाः' (बृ. उ. ३।२।१) इति। क्वचिन्नव 'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' (तै. सं. ५।३।२।५) इति। क्वचिद्दश 'नव वै पुरुषे प्राणाः नाभिर्दशमी' (तै सं. ५।३।२।३) इति। क्वचिदेकादश 'दशेमे पुरुषे प्राणा आत्मैकादशः' (बृ. उ. ३।९।४) इति। क्वचिद्द्वादश 'सर्वेषां स्पर्शानां त्वगेकायनम्' (बृ. उ. २।४।११) इत्यत्र। क्वचिच्च त्रयोदश 'चक्षुश्च द्रष्टव्यं च' (प्र. उ. ४।८) इत्यत्र। एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः।

---

क्वचित्सप्तेति। द्वे चक्षुषी, द्वे श्रोत्रे, द्वे नासिके, एका वागिति। क्वचिदष्टाविति। घ्राणरसनवाक्चक्षुश्श्रोत्रमनोहस्तत्वच इति। ग्रहत्वेनेति। यथा पिशाचादिग्रहाविष्टः पुरुषः कार्यमकार्यं वा न जानाति, एवं इन्द्रियैराकृष्टोऽपि पुरुषः [1]कार्याकार्यविकलो भवतीति तेषां ग्रहत्वम्। अतिग्रहा विषयाः, इन्द्रियप्रवृत्तेर्विषयाधीनत्वात्। क्वचिन्नव 'सप्त वै शीर्षण्याः प्राणाः, द्वाववाञ्चौ'। पूर्वोक्ताः सप्त शीर्षण्याः, पायूपस्थाववाञ्चौ। क्वचिद्दश 'नव वै पुरुषे प्राणाः' पूर्वोक्ताः 'नाभिर्दशमी'। क्वचिदेकादशेति। पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, आत्मशब्दो मनःपरः, इन्द्रियसमभिव्याहारात्। क्वचिद्द्वादशेति। बाह्येन्द्रियाणि, हृदयमनोभ्यां अन्तःकरणं द्विविधम्। यद्यपि, 'सर्वेषां स्पर्शानां त्वगेकायनम्' इति मैत्रेयीब्राह्मणाम्नातैकायनप्रक्रियायां त्वगादिशब्दाः स्पर्शादिविशेषलयाधारतया स्पर्शादिसामान्यलक्षका इति वाक्यान्वयाधिकरणे प्रतिपादितम्, तथापि लक्षणार्थे मुख्योऽप्यर्थः प्रतिपादनीय इति, तावन्मात्रेण इन्द्रियसङ्ख्यापि लब्धा भवतीति तात्पर्यम्। क्वचिच्च त्रयोदशेति। यद्यपि प्रश्नोपनिषदि 'चक्षुश्च द्रष्टव्यं च' इति सन्दर्भे, पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि मनोबुद्धिरहङ्कारश्चित्तमिति चतुर्विधमन्तःकरणं तेजः प्राणश्चेति षोडश पर्यायाः समाम्नाताः, तत्र तेजःप्राणयोरिन्द्रियबहिर्भावेऽपि चतुर्दशेन्द्रियाणि प्राप्नुवन्ति, तथापि त्रयोदशत्वं चतुर्दशत्वस्याप्युपलक्षणम्।

---

1. कार्याकार्यविकलः—कार्याकार्यविवेकशून्यः।

किं तावत् प्राप्तम् । सप्तैव प्राणा इति । कुतः ? गतेः । यतः तावन्तोऽवगम्यन्ते 'सप्त प्राणाः प्रभवन्ति तस्मात्' इत्येवंविधासु श्रुतिषु । विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र ।

ननु—'प्राणा गुहाशया निहिताः सप्त सप्त' (मु. उ. २।१।८) इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान् प्राणान् गमयति ।

नैष दोषः । पुरुषभेदाभिप्रायेयं वीप्सा 'प्रतिपुरुषं सप्त सप्त प्राणाः' इति, न तत्त्वभेदाभिप्राया 'सप्त सप्त अन्येऽन्ये प्राणाः' इति ।

ननु अष्टत्वादिकापि संख्या प्राणेषूदाहृता, कथं सप्तैव स्युः ?

सत्यमुदाहृता । विरोधात्तु अन्यतमा संख्या अध्यवसातव्या । तत्र स्तोककल्पनानुरोधात् सप्तसंख्याध्यवसानम्, वृत्तिभेदापेक्षं च संख्यान्तरश्रवणम्-इति मन्यते ॥ ५ ॥

अत्रोच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयस्तु अपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते 'हस्तौ वै ग्रहः, स कर्मणाऽतिग्राहेण गृहीतः, हस्ताभ्यां हि कर्म करोति' (बृ. उ. ३।२।८) इत्येवमाद्यासु श्रुतिषु । स्थिते च सप्तत्वातिरेके सप्तत्वं अन्तर्भावाच्छक्यते

---

ततश्च श्रुतीनां प्राणसङ्ख्याप्रतिपादिकानां विरोधादप्रामाण्यं इति पूर्वपक्षे एकदेशिमतमाह—(प्राप्तं) सप्तैव प्राणा इति । विशेषिताश्चैते इति । शीर्षण्याः प्राणाः सप्तेति, नात्र प्राणानां शीर्षण्यानां सप्तत्वं प्रतिपाद्यते । प्रसिद्धार्थप्रतिपादने वचनवैयर्थ्यापातात् । अपि तु 'ये शीर्षण्याः सप्त त एव प्राणाः' इति । तथा च अशीर्षण्यानां प्राणत्वव्युदासात् वचनं सार्थकमिति भावः । एवं 'सप्त वै शीर्षण्याः' इति श्रुत्यनुसारात् लाघवप्रथमोपस्थितिभ्यां च सप्तत्वं प्राणानां अवधार्य, अष्टत्वादिसङ्ख्या वृत्त्यभिप्राया भविष्यतीत्युक्तम् । तत्र यदि इत्थमुच्यते 'अधिकसङ्ख्यायां न्यूनसङ्ख्याया अन्तर्भावात् सप्तत्वादिसङ्ख्यैव अवयुत्यानुवादः' इति, तदापि न एकादशैवेन्द्रियाणीति सिद्धान्त्यभिमतार्थसिद्धिः, प्रश्नोपनिषत्पर्यालोचनया चतुर्दशत्वस्यैव प्रसङ्गात्—इति द्रष्टव्यम् ॥ ५ ॥

संभावयितुम्। हीनाधिकसंख्याविप्रतिपत्तौ हि अधिका संख्या संग्राह्या भवति। तस्यां हीना अन्तर्भवति, न तु हीनायामधिका। अतश्च नैवं मन्तव्यं 'स्तोककल्पनानुरोधात् सप्तैव प्राणाः स्युः' इति। उत्तरसंख्यानुरोधात्तु एकादशैव ते प्राणाः स्युः। तथा च उदाहृता श्रुतिः 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति। आत्मशब्देन चात्र अन्तःकरणं परिगृह्यते, करणाधिकारात्।

नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते।

सत्यमुदाहृते। न त्वेकादशभ्यः कार्यजातेभ्यः अधिकं कार्यजातमस्ति, यदर्थं अधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदाः, तदर्थानि पञ्च बुद्धीन्द्रियाणि। वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदाः, तदर्थानि च पञ्च कर्मेन्द्रियाणि। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकं अनेकवृत्तिकम्। तदेव वृत्तिभेदात् क्वचित् भिन्नवत् व्यपदिश्यते 'मनः बुद्धिः अहंकारः चित्तं च' इति। तथा च श्रुतिः कामाद्या नानाविधा वृत्तीः अनुक्रम्य आह 'एतत्सर्वं मन एव' (बृ. उ. १।५।३) इति।

---

न त्वेकादशभ्यः कार्यजातेभ्य इति। चक्षुरादीनि हि करणानि 'रूपाद्युपलब्धिः सकरणिका क्रियात्वात् भिदावत्' इत्यनुमानसिद्धानि श्रुत्या अनूद्यन्ते। ततश्च श्रुतीनां मिथः कलहे प्रसक्ते, यस्यां श्रुतौ मुख्यार्थायां गृह्यमाणायां रूपाद्युपलब्धिरूपं कार्यं उपपादितं भवेत् तदनुसारेण इतरा श्रुतिः व्याख्येया। तत्र यदि 'सप्त वै शीर्षण्याः प्राणाः' इति श्रुतिः मुख्यार्था स्वीक्रियेत, तथासति, चक्षुश्श्रोत्रघ्राणरूपाणि [1]त्रीणि ज्ञानकरणानि वाग्रूपमेकं कर्मेन्द्रियमिति सिद्धावपि, स्पर्शरसोपलब्ध्योः गमनादानविसर्गानन्दानां च कर्मणां करणाकाङ्क्षा पूरिता न स्यात्। न हि चक्षुषैव रसोपलब्धिः सम्भवति। अन्धस्यापि रसोपलब्धिदर्शनात्, सचक्षुष्कस्याप्युपहतरसनस्य रसोपलब्ध्यदर्शनात्। एवं अन्यास्वप्युपलब्धिषु यथायथं तत्तदिन्द्रियाणामन्वयव्यतिरेकौ द्रष्टव्यौ। अतः कार्यानुसारेण एकादशैव करणानि।

---

1. मु. 'त्रीणि' नास्ति

अपिच—सप्तैव शीर्षण्यान् प्राणान् अभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः। स्थानभेदाद्धि एते चत्वारः सन्तः सप्त गण्यन्ते—द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्–इति। न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं, हस्तादिवृत्तीनां अत्यन्तविजातीयत्वात्। तथा 'नव वै पुरुषे प्राणाः नाभिर्दशमी' इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण, नाभिर्दशमीति वचनात्। न हि

---

एकमेव चान्तःकरणं सङ्कल्पनिश्चयाहङ्कारस्मरणरूपावान्तरकार्यविभागेन मनोबुद्धि-रहङ्कारश्चित्तमित्यभिधीयते, तदभिप्रायं चतुर्दशत्वम्। न हि चक्षुर्व्यतिरेकेऽपि अन्धादेः यथा रसोपलब्धिः एवं मनोव्यतिरेकेऽपि अहमिति वृत्तिः, येन अहङ्कारो मनोव्यतिरिक्त एव सिध्येत्। तथा च स्मृतिरपि—'इन्द्रियाणि दशैकं च' [भ. गी. १३।५] इति।

स्थानभेदाद्ध्येते इति। चक्षुश्श्रोत्रघ्राणानां गोलकद्वित्वात् प्रत्येकं द्वित्वं, न तु स्वभावत एव चक्षुरादीनां द्वित्वम्। कार्यवैलक्षण्याभावात्। एकमेव चक्षु-रादिकं सावयवं गोलकद्वये व्यासक्तं भवति। अत एव च काणस्य हीनं चक्षुरि-न्द्रियमिति न सम्यग्रूपोपलब्धिः, यथा खञ्जस्य न सम्यग्गमनम्।

यच्चोक्तं सप्तवैशीर्षण्याःप्राणाइतिवाक्यं अपूर्वार्थलाभाय अशीर्षण्यानां प्राणत्व-व्यावृत्त्यर्थम्-इति,

तन्न—प्रमाणबलेन इन्द्रियाणामधिकानां सिद्धत्वेन व्यावृत्तेरसम्भवात्। अपि च 'वसवस्त्वा धूपयन्तु' इत्यादिना आम्नातानां सप्तानां मन्त्राणां उखाधूपने विनियोजकस्य 'सप्तभिर्धूपयन्ति' इति विधेः अर्थवादोऽयं—'सप्त वै शीर्षण्याः प्राणाः, शिर एतद्यज्ञस्य, यदुखा, शीर्षन्नेव यज्ञस्य प्राणान् दधाति' इति। न चात्र[1] स्तुत्यर्थं शीर्षण्यानां छिद्राणां सप्तत्वं [2]कीर्तयतो वाक्यस्य क्लेशेन अशीर्षण्यानां [3]प्राणत्वव्यावृत्तिपरताकल्पनमुचितम्। प्राप्तानुवादेनैव स्तुतिसम्भवात्।

---

1. अत्र — एवं अर्थवादत्वे सति।
2. कीर्तयत इति तथा च, ये शीर्षण्याः प्राणाः ते सप्त-इति वाक्यार्थ इति भावः।
3. मु. प्राणत्वव्यावृत्तिपरता कल्पयितुं उचिता

**नाभिर्नाम कश्चित् प्राणः प्रसिद्धोऽस्ति। मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनं इत्यतो नाभिर्दशमीत्युच्यते। क्वचित् उपासनार्थं कतिचित् प्राणा गण्यन्ते क्वचित् प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किंपरं आम्नानं इति विवेक्तव्यम्। कार्यजातवशात्तु एकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम्।**

**इयमपरा सूत्रद्वययोजना—**

**सप्तैव प्राणाः स्युः, यतः सप्तानामेव गतिः श्रूयते—'तमुत्क्रामन्तं**

---

अस्मिन् पादे सप्तदशकराशिरूपाल्लिङ्गशरीरात् जीवं विवेचयितुं तदवयवभूताः प्राणा निरूप्यन्ते।

तत्र पादाद्यधिकरणपूर्वपक्षे, प्राणानामनुत्पत्तौ जीववन्नित्यत्वेन विवेकस्तेषां जीवात् न सम्यक् सिध्यति। सिद्धान्ते तु, नित्यत्वानित्यत्वविरुद्धधर्माक्रान्ततया जीवप्राणयोर्विवेकः सिध्यति।

एतदधिकरणपूर्वपक्षे तु, प्राणानां सप्तत्वे तेभ्य एव जीवातिरेकोऽनुसन्धेयः, तद्वृत्तिभूतानामितरेषां विवेकस्तु तत एव अर्थसिद्धो भवति। सिद्धान्ते तु, एकादशानामपि स्वतन्त्रतया सर्वेभ्य एव विवेकः स्वातन्त्र्येणानुसन्धेय [1]इति।

सूत्रद्वयस्य वर्णकान्तरमाह—**इयमपरेति**। पूर्ववर्णके एकादशेन्द्रियाणीति यदुक्तं तदुपेत्यैव, तेषु मध्ये जीवेन सह कत्युत्क्रामन्तीति अत्र विचार्यते। क्वचिद्धि चक्षुर्घ्राणरसनवाक्छ्रोत्रमनस्त्वग्विज्ञानान्यष्टावुपक्रम्य 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्याम्नातम्। तत्र सर्वशब्दः प्रकृतत्वात् चक्षुरादिपर इति, मनोविज्ञानयोरेकत्वात् सप्तानामेवोत्क्रान्तिः प्रतीयते, 'दशेमे पुरुषे प्राणाः, आत्मैकादशः, ते यदास्माच्छरीरादुत्क्रामन्ति, अथैनं रोदयन्ति' इति वचनपर्यालोचनया एकादशानामुत्क्रान्तिः प्रतीयते, ततश्च विरोधादप्रामाण्यम्—इति पूर्वपक्षे, 'लाघवात् सप्तानामेवोत्क्रान्तिः, उत्क्रम्यमाणानामेकादशत्वप्रतिपादिका तु श्रुतिः तेषामेव सप्तानां वृत्त्यभिप्राया भविष्यति' इत्येकदेशिमतं व्युत्पादयति—**सप्तैव प्राणाः स्युरिति**। उत्क्रामन्तीति शेषः। न चैवं सति हस्तादीनां सहोत्का-

---

1. **इतीति** फलभेदः इति शेषः।

प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. उ. ४।४।२) इत्यत्र। ननु-सर्वशब्दोऽपि अत्र पठ्यते, तत् कथं सप्तानामेव गतिः प्रतिज्ञायते-इति। विशेषितत्वादित्याह। सप्तैव हि प्राणाः चक्षुरादयः त्वक्पर्यन्ताः विशेषिता इह प्रकृताः 'स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्तते अथ अरूपज्ञो भवति' (बृ. उ. ४।४।१) 'एकीभवति न पश्यतीत्याहुः' (बृ. उ. ४।४।२) इत्येवमादिना अनुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति, यथा 'सर्वे ब्राह्मणा भोजयितव्याः' इति ये निमन्त्रिताः प्रकृता ब्राह्मणाः ते एव सर्वशब्देनोच्यन्ते नान्ये; एवमिहापि, ये प्रकृताः सप्त प्राणाः ते एव सर्वशब्देनोच्यन्ते नान्ये-इति। नन्वत्र विज्ञानमष्टममनुक्रान्तं, कथं सप्तानामेवानुक्रमणम्? । नैष दोषः, मनोविज्ञानयोस्तत्त्वाभेदात् वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात् सप्तैव प्राणाः—इति।

एवं प्राप्ते ब्रूमः—हस्तादयस्तु अपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते 'हस्तौ वै ग्रहः' इत्यादिश्रुतिषु। ग्रहत्वं च बन्धनभावः, गृह्यते-बध्यते क्षेत्रज्ञः अनेन ग्रहसंज्ञकेन बन्धनेन-इति। स च क्षेत्रज्ञो न एकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य। तस्मात् शरीरान्तरसंचारि इदं ग्रहसंज्ञकं बन्धनमिति अर्थादुक्तं भवति। तथा च स्मृतिः

'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च।' (ब्र. पु)

इति प्राङ्मोक्षात् ग्रहसंज्ञकेनानेन बन्धनेन अवियोगं दर्शयति।

---

न्त्यभावे लोकान्तरगतस्य आदानादिकार्यं कथं स्यादिति वाच्यम्। अभिनवानामेव तत्रोत्पत्तिसम्भवात्।

हस्तादीनां ग्रहत्वोक्त्या मोक्षपर्यन्तं बन्धसम्पादकतयाऽनुवृत्तिसूचनात् 'केषांचिदिन्द्रियाणां मरणकाले मोक्षः पुनः परलोके अभिनवानामुत्पत्तिः' इति कल्पनैव गौरवपराहतेति सिद्धान्तमाह—हस्तादयस्त्वपर इति। पुर्यष्टकेनेति। ज्ञानेन्द्रियं कर्मेन्द्रियं प्राणादिप्रभेदो भूतसूक्ष्माणीति चत्वारि पञ्चकानि, चतुर्विधमन्तःकरणं, अविद्या कामः कर्म च—इति पुर्यष्टकम्।

आथर्वणेच विषयेन्द्रियानुक्रमणे 'चक्षुश्च द्रष्टव्यं च' इत्यत्र तुल्यवत् हस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति—'हस्तौ चादातव्यं च उपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च' (प्र.उ. ४।८) इति । तथा 'दशेमे पुरुषे प्राणा आत्मैकादशः, ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्ति अथ रोदयन्ति' (बृ. उ. ३।९।४) इति एकादशानां प्राणानां उत्क्रान्तिं दर्शयति ।

सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानः अशेषान् प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणात् शब्दस्य बलीयस्त्वात् । 'सर्वे ब्राह्मणा भोजयितव्याः' इत्यत्रापि सर्वेषामेव अवनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यं सर्वशब्दसामर्थ्यात् । सर्वभोजनासम्भवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता । इह तु न किंचित् सर्वशब्दार्थसंकोचने कारणमस्ति । तस्मात् सर्वशब्देनात्र अशेषाणां प्राणानां परिग्रहः, प्रदर्शनार्थं च सप्तानामनुक्रमणम्-इत्यनवद्यम् ।

---

प्रदर्शनार्थं च सप्तानामिति । यथा 'स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते अथारूपज्ञो भवति' [1]इत्युपक्रमः, यत्र-यस्यां मुमूर्षादशायां चाक्षुषः-चक्षुरधिष्ठितो जीवः पराङ्-पराङ्मुखतया हृदयदेशमायाति अथ-तदा अरूपज्ञो भवति (एकीभवति-चक्षुरवच्छिन्नं चैतन्यं हृदयपुण्डरीकावच्छिन्नेन सह एकीभवति) इत्युपपादयन् [2]चक्षुरभिमानमात्रपरित्यागविषयोऽपि [3]यथाश्रुतः प्रतीयमानः [4]सर्वेन्द्रियाभिमानपरित्यागोपलक्षणम्, एवं केषाञ्चिदिन्द्रियाणांग्रहणं सर्वेन्द्रियोपलक्षणार्थमिति।

प्रयोजनं पूर्वपक्षे—[5]अनुत्क्रामत्स्विन्द्रियेषु जीवस्य वैलक्षण्यं स्फुटमिति

---

1. इत्युपक्रम इति 'उपपादयन्' इत्युत्तरेण सम्बध्यते ।

2. चक्षुरभिमानमात्रेति मात्रशब्देन घ्राणाद्यभिमानव्यावृत्तिः ।

3. यथाश्रुतः प्रतीयमान इति उत्तरेषु घ्राणादिपर्यायेषु 'स यत्रैषः' इत्यादेरश्रवणात् इति भावः ।

4. सर्वेन्द्रियाभिमानेत्यादि अन्यथा 'एकीभवति न जिघ्रतीत्याहुः' इत्यादेरसामञ्जस्यप्रसङ्गात् इति भावः ।

5. मु. अननूत्क्राम

तस्मात् एकादशैव प्राणाः शब्दतः कार्यतश्च इति सिद्धम् ॥ ६ ॥

३ प्राणाणुत्वाधिकरणम्

## अणवश्च ॥ ७ ॥

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति । अणवश्च एते प्रकृताः प्राणाः प्रतिपत्तव्याः । अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात् ।

---

[1]विवेके नातियत्नः । सगुणोपासनेषु च उत्क्रान्तिध्यानकाले सप्तानामेवोत्क्रान्तिर्ध्येया । सिद्धान्ते तु—सर्वेषामपि मोक्षपर्यन्तं जीवेन सह संश्लेषेण स्फुटविवेचनत्वाभावात् सर्वेन्द्रियेभ्यो जीवस्य विवेकाय अत्यन्तं यत्न आस्थेयः, सगुणोपासनेषु च सर्वेषामुत्क्रान्तिर्ध्येया ॥ ६ ॥

इति सप्तगत्यधिकरणम्

पूर्वाधिकरणे प्राणानामुत्क्रान्तिरुक्ता, सा तेषां विभुत्वान्नाञ्जसी—इत्याक्षिप्यत इति सङ्गतिः ।

'ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्ति' ( बृ. उ. ३।९।४ ) इति 'त एते सर्व एव समाः सर्वेऽनन्ताः' (बृ. उ. १।५।१३) इति श्रुतेश्च विरोधादप्रामाण्यम्, न हि विभूनामुत्क्रान्तिः सम्भवति—एवं पूर्वपक्षे, 'श्रुतीनां परस्परकलहेनानिर्णायकत्वे सति साङ्ख्यस्मृत्यनुसारेण प्राणानां विभुत्वमेवाश्रयणीयम्, तादृशस्मृत्यनुसाराच्च आनन्त्यश्रुतिर्मुख्यार्था, [2]उत्क्रान्तिश्रुतिस्तु अस्मिञ्छरीरे कार्याक्षमत्वाभिप्राया' इत्येकदेशिमताभिप्रायः ।

सिद्धान्तमाह—अणवश्चैते इति । प्राणानामुत्क्रान्त्यादिकं हि तत्र तत्र प्रदेशे बहुधा आम्नायते । आनन्त्यं तु क्वचिदेव, तदपि 'स यो हैतानननन्तानुपास्ते' इति वाक्यशेषपर्यालोचनया उपासनार्थं कल्पितमित्येव प्रतीयते । अतो न प्राणानां महत्त्वम् । सौक्ष्म्यपरिच्छेदाविति । सौक्ष्म्यम्-अतीन्द्रियत्वं, परिच्छिन्नत्वम्—मध्यमपरिमाणत्वम् ।

---

1. मु. विवेकोऽयुक्तः
2. मु. उत्क्रान्तिश्च अस्मिन्

सूक्ष्मा एते प्राणाः । स्थूलाश्चेत् स्युः, मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिव उपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः ।

परिच्छिन्नाश्चैते प्राणाः । सर्वगताश्चेत् स्युः उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वं च जीवस्य न सिध्येत् । सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न—वृत्तिमात्रस्य करणत्वोपपत्तेः । यदेव ह्युपलब्धिसाधनं वृत्तिः अन्यद्वा, तस्यैव जः करणत्वं, संज्ञामात्रे विवादः इति, करणानां व्यापित्वकल्पना निरर्थिका ।

तस्मात् सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः ॥ ७ ॥

४ श्रेष्ठाधिकरणम्

## श्रेष्ठश्च ॥ ८ ॥

मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति । तच्च अविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वं आख्यातम् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु. उ. २।१।३) इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' (प्र. उ. ६।४) इत्यादिश्रवणेभ्यश्च ।

किमर्थः पुनः अतिदेशः ? ।

अधिकाशङ्कापाकरणार्थः । नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः ।

---

साङ्ख्यानां मते-अहङ्कारकार्याणि इन्द्रियाणि, अहङ्कारस्य विभुत्वात् तान्यपि विभूनि । न च तथासति सर्वत्र दर्शनादिकार्योपलब्धिप्रसङ्गः, शरीरावच्छिन्नेन्द्रियप्रदेशस्यैव ज्ञानादिकार्यकरत्वात्—इति । तदाशङ्कते-सर्वगतानामपीति ॥ ७ ॥

इति प्राणाणुत्वाधिकरणम्

इन्द्रियाणामुत्पत्तिं प्रतिपाद्य तत्प्रसङ्गात् तेषां सङ्ख्यादिकमपि विचारितम् । इदानीं इन्द्रियोत्पत्तिन्यायः मुख्यप्राणोत्पत्तावतिदिश्यत इति, तेनैवास्य सङ्गतिः ।

नासदासीय इति । नासदासीदितिशब्दमारभ्य प्रवृत्तं नासदासीयम् । 'एतस्माज्जायते प्राणः' इति श्रुतेः 'आनीदवातम्' इति श्रुतेश्च विरोधादप्रामाण्यमिति पूर्वः पक्षः ।

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' (ऋ. सं. ८।७।१७) इति । आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति, तस्मात् अजः प्राणः-इति जायते कस्यचिन्मतिः । तां अतिदेशेन अपनुदति ।

आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति । अवातमिति विशेषणात् । 'अप्राणो ह्यमनाः शुभ्रः' इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात् । तस्मात् कारणसद्भावप्रदर्शनार्थ एव अयं आनीच्छब्द इति ।

श्रेष्ठ इति च मुख्यं प्राणमभिदधाति, 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा. ५।१।१) इति श्रुतिनिर्देशात् । ज्येष्ठश्च प्राणः, शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । न चेत् तस्य तदानीं वृत्तिलाभः स्यात्, योनौ निषिक्तं शुक्रं पूयेत, न संभवेद्वा । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभात् न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणः, गुणाधिक्यात्, 'न वै शक्ष्यामः त्वदृते जीवितुम्' (बृ. उ. ६।१।१३) इति श्रुतेः ॥ ८ ॥

---

'ऋषयो वाव ते अग्रेऽसदासीत्' इति श्रुतिः अवान्तरकल्पविषया न प्राणानां महाप्रलये स्थितिं प्रतिपादयति-इत्युक्तम् । नात्र तथा वक्तुं शक्यम्, नासदासीन्नोसदासीदितिवचनानुसारेण परोक्षापरोक्षकृत्स्नकार्यनिषेधावगमेन महाप्रलयपरत्वावसायात् नेदं वाक्यं अवान्तरप्रलयविषयं व्याख्यातुं शक्यम्—इति विशेषाशङ्का ।

अनेकश्रुत्यनुसारेण मुख्यप्राणस्यापि कार्यत्वावश्यम्भावात् आनीदवातमितिवाक्यं ब्रह्मपरम्, अवातमिति विशेषणं हि वायुतादात्म्यापन्ने मुख्यप्राणे क्लिष्टम्, वायुभिन्नत्वस्य वायुराहित्यस्य वा तत्रासम्भवात् । ब्रह्मणि तु, प्रलये वायुरूपकार्याभावात् उपपन्नम् । अतः, आनीदितिपदं जीवनरूपं प्राणनं प्रतिपादयत्, स्वरूपसत्तातिरेकेण ब्रह्मणः प्रलयेऽन्यस्य प्राणनस्य असम्भवात् आसीदित्यर्थकम् । स्वधापदं च मायापरमिति द्रष्टव्यम् ।

पूर्वपक्षे अजन्यत्वजन्यत्वाभ्यां जीवप्राणयोर्विवेको निर्धारयितुं न शक्यते, सिद्धान्ते तु सम्भवति तथा निर्धारणमिति ॥ ८ ॥

इति श्रेष्ठाधिकरणम्

## ५ वायुक्रियाधिकरणम्

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

स पुनर्मुख्यः प्राणः किंस्वरूप इति इदानीं जिज्ञास्यते ।

तत्र प्राप्तं तावत् श्रुतेः वायुः प्राण इति । एवं हि श्रूयते—'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' (ऐ. आ. २।३ ३) इति । अथवा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण इति प्राप्तम् । एवं हि तन्त्रान्तरीया आचक्षते—'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' इति । (सां. का. २९)

अत्रोच्यते—न वायुः प्राणो नापि करणव्यापारः । कुतः ? पृथगुपदेशात् ।

वायोस्तावत् प्राणस्य पृथगुपदेशो भवति 'प्राण एव ब्रह्मणश्चतुर्थः

---

एवं मुख्यप्राणमिन्द्रियाणि च निरूप्य, इदानीं तेषां धर्मधर्मिभावो वा स्वातन्त्र्यं वेति निरूप्यते ।

तत्र क्वचित् वायुप्राणयोरभेदः श्रुतिषु प्रतिपाद्यते । क्वचित् पृथगुत्पत्त्युपकार्योपकारकभावप्रतिपादनमुखेन तयोर्भेदः प्रतिपाद्यते । तथा च विरोधादप्रामाण्यशङ्कायाम् ;

स्मृत्यनुसारेण एकदेशी साङ्ख्यो मन्यते - वायुप्राणयोर्नाभेदः, नाप्युपादानोपादेयभावः, अपि तु प्राणः सर्वेषामिन्द्रियाणां क्रिया । तथा च प्राणस्य वायोर्भेदसूचकानि वचनानि मुख्यान्येव, वायुरूपताप्रतिपादकानि चलद्रूपतया गौणानि भविष्यन्ति—इति । तदिदमाह—अथवा तन्त्रान्तरीयेति ।

यथा वायोः पृथगुपदेशात् न बाह्यवायुरेव प्राणः, एवं प्राणमनूत्क्रामन्तं सर्वेप्राणाअनूत्क्रामन्तीति मुख्यस्य प्राणस्य गौणेभ्यः प्राणेभ्यः पृथङ्निर्देशात् न इन्द्रियवृत्तिरपि प्राणः । साङ्ख्यस्मृतिस्तु श्रुतिविरोधात् अनादरणीया । 'यः प्राणस्स वायुः' इति सामानाधिकरण्यं तु वायुविकारत्वात्प्राणस्य उपपद्यते - इति सिद्धान्तयति—अत्रोच्यत इत्यादिना ।

प्राण एव ब्रह्मणश्चतुर्थ इति । अध्यात्म मनोब्रह्मेत्युपासीतेति मनसि ब्रह्म-

पादः स वायुना ज्योतिषा भाति च तपति च' (छा. उ. ३।१८।४) इति। न हि वायुरेव सन् वायोः पृथगुपदिश्येत।

तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणानि अनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात्। वृत्तिवृत्तिमतोश्च अभेदात्। न हि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः' इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः। न च समस्तानां करणानां एका वृत्तिः संभवति, प्रत्येकमेकैकवृत्तित्वात्, समुदायस्य चाकारकत्वात्।

ननु पञ्जरचालनन्यायेन एतद्भविष्यति। यथा एकपञ्जरवर्तिन एकादशपक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूय एकं पञ्जरं चालयन्ति, एवं एकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूय एकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्ते-इति।

---

दृष्टिं विधाय, 'तदेतत् ब्रह्म चतुष्पात्' इत्युपक्रम्य वाक्प्राणश्चक्षुश्श्रोत्राणि चतुरः पादान् प्रतिपाद्य, प्राणाख्ये पादे गुणं विधातुं इदं वाक्यम्। ज्योतिषा-प्राणव्यवहारोपकारिदैवतेन, भाति—लब्धस्वरूपतया अभिव्यक्तो भवति, तपति—स्वव्यवहारसमर्थो भवति।

न हि करणव्यापार इति। न च वृत्तिवृत्तिमतोः ईषत् भेदस्यापि सम्भवात् पृथगुपदेशोपपत्तिरिति वाच्यम्। तमुत्क्रामन्तमित्यादौ हि प्राणोत्क्रान्त्यधीनोत्क्रान्तिमत्त्वेन इन्द्रियाण्याम्नायन्ते, नेदं प्राणस्येन्द्रियवृत्तित्वे उपपद्यते। एतस्माज्जायत इत्यादौ च इन्द्रियोत्पत्तिव्यतिरेकेण प्राणस्योत्पत्तिराम्नायते। न च वृत्तिमद्व्यतिरेकेण वृत्तेरुत्पत्तिराम्नातुमुचिता। धर्मरूपाया वृत्तेः धर्मिणैव सिद्धत्वात्। एवं प्राणाधीनशरीरस्थितिकत्वादिना [1]प्राणस्य इन्द्रियेभ्यो भेदेनाम्नानं उदाहर्तव्यम्।

प्रत्येकमेकैकेति। चक्षुरादीनां हि रूपाद्यालोचनरूपा प्रत्येकवृत्तिः अन्वयव्यतिरेकाभ्यामवधार्यते, चक्षुरन्वये तदन्वयात् चक्षुर्व्यतिरेके तद्व्यतिरेकाच्च। नैवं प्राणवृत्तौ व्यतिरेक उपपादयितुं शक्यते, अन्धादेः चक्षुरादीनां प्रत्येकमभावेऽपि प्राणव्यापारदर्शनादिति भावः।

---

1. मु. प्राणस्य इन्द्रियभेदेन

नेत्युच्यते । युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेव उपेताःपक्षिणः संभूय एकं पञ्जरं चालयेयुरिति, तथा दृष्टत्वात्। इह तु, श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम् , प्रमाणाभावात् । अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य ।

तथा, प्राणस्य श्रेष्ठत्वाद्युद्घोषणं, गुणभावोपगमश्च तं प्रति वागादीनां, न करणवृत्तिमात्रे प्राणे अवकल्पते । तस्मात् अन्यो वायुक्रियाभ्यां प्राणः ।

कथं तर्हि इयं श्रुतिः 'यः प्राणः स वायुः' इति । उच्यते—वायुरेवायं अध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरं नापि वायुमात्रम्, अतश्च उभे अपि भेदाभेदश्रुती न विरुध्येते ॥ ९ ॥

स्यादेतत्—प्राणोऽपि तर्हि जीववत् अस्मिञ्छरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात् , गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम् । तथा हि अनेकविधा विभूतिः प्राणस्य श्राव्यते—सुप्तेषु वागादिषु प्राण एको हि जागर्ति, प्राण एको मृत्युनाऽनाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते,

---

पञ्जरचालनानुरूपैरिति । मिलितैः पक्षिभिः पञ्जरचलने जननीये प्रत्येकपक्षिगता व्यापाराः पञ्जरचलनानुकूलाः । रूपाद्यालोचनरूपाः प्रत्येकं चक्षुरादिव्यापारास्तु न तदनुगुणाः । सुषुप्तौ तेषां सर्वेषां अभावेऽपि प्राणनदर्शनात् इति भावः ।

तथा प्राणस्य श्रेष्ठत्वेति । 'भगवन्नेधि त्वं नः श्रेष्ठोऽसि' इति प्राणं प्रति चक्षुरादिवचनात् तस्य श्रेष्ठत्वं, 'यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यादि वागादिभिः स्वस्वगुणस्य प्राणं प्रत्युपहरणाच्च तेषां प्राणं प्रति गुणभावोऽवगम्यते ॥ ९ ॥

तथा हि अनेकविधा विभूतिरिति । 'तत्सर्वं परे देवे मनस्येकीभवति' इत्यादिवाक्येन, सुषुप्तौ मनश्शब्दोदिते जीवे इन्द्रियाणां लयं प्रतिपाद्य 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' इत्याम्नातम् । तथा वागादीन्यनुक्रम्य 'तानि मृत्युश्श्रमो

प्राणः इतरान् प्राणान् रक्षति मातेव पुत्रान्—इति । तस्मात् प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः । तं परिहरति—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्य जीववत् स्वातन्त्र्यं व्यावर्तयति । यथा चक्षुरादीनि राजप्रकृतिवत् जीवस्य कर्तृत्वं भोक्तृत्वं च प्रति उपकरणानि न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो राजमन्त्रिवत् जीवस्य सर्वार्थकरत्वेन उपकरणभूतः, न स्वतन्त्रः । कुतः । तत्सहशिष्टयादिभ्यः । तैः - चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु । समानधर्मणां च सह शासनं युक्तं बृहद्रथंतरादिवत् । आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति ॥ १० ॥

स्यादेतत्—यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत विषयान्तरं रूपादिवत् प्रसज्येत रूपालोचनादिभिर्वृत्तिभिः यथा चक्षुरादीनां स्वं जीवं प्रति करणभावो भवति। अपि च एकादशैव कार्य-

---

भूत्वोपयेमे, अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः' इति च आम्नायते । 'प्राणो वाव संवर्गः' इत्यादिना च वागादिलयाधारत्वरूपं संवर्गत्वं च प्राणस्याम्नातम् । 'मातेव पुत्रान् रक्षस्व' इति च प्राणं प्रति इन्द्रियाणां वचनम् ।

प्राणसंवादादिष्विति । प्राणसंवादे—'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इति, अस्मासु मध्ये कःश्रेष्ठ इति कलहः, तन्निर्धारणार्थं प्रजापतिसमीपे गमनं, प्रजापतिवचनाच्छ्रेष्ठत्वावधारणम्—इत्यादिकमाम्नातम् । इदं च प्राणस्यापि जीवोपकरणत्वे एव सङ्गच्छते । समानस्कन्धानां हि विवादादिकं लोके दृष्टम् । प्राणसंवादादीत्यादिपदेन 'चक्षुश्च द्रष्टव्यं च' इति इन्द्रियप्रघट्टके एव 'प्राणश्च विधारयितव्यं च' इत्याम्नानं सङ्गृह्यते । सहशिष्ट्यादिभ्यइतिसौत्रादिशब्दार्थमाह—आदिशब्देनेति । संहतत्वं-शरीरादिवत् पञ्चीकृतभूतकार्यत्वम् ॥ १० ॥

विषयान्तरमिति । यथा चक्षुरादीनां ज्ञेयं रूपादिकम् , एवं प्राणस्यापि ज्ञेयं किञ्चित् वक्तव्यमित्यर्थः ।

जातानि रूपालोचनादीनि परिगणितानि, यदर्थं एकादश प्राणाः संगृहीताः, न तु द्वादशमपरं कार्यजातं अधिगम्यते, यदर्थं अयं द्वादशः प्राणः प्रतिज्ञायेत—इति। अत उत्तरं पठति—

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

न तावत् विषयान्तरप्रसङ्गो दोषः। अकरणत्वात् प्राणस्य। न हि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। न चास्य एतावता कार्याभाव एव। कस्मात्? तथाहि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु—'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः' (छा. उ. ५।१।६,७) इति च उपन्यस्य, प्रत्येकं वागाद्युत्क्रमणेन तत्तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा, प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः, प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति। 'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामि' (प्र. उ. २।३) इति च एतमेवार्थं श्रुतिराह। 'प्राणेन रक्षन् अवरं कुलायम्' (बृ. उ. ४।३।१२) इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। 'यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति' (बृ. उ. १।३।१९)। 'तेन यदश्नाति यत् पिबति तेनेतरान् प्राणान् अवति' (छा. उ. १।२।९) इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। 'कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति 'स प्राणमसृजत' (प्र.उ. ६।३-४) इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥ ११ ॥

---

अकरणत्वादिति। ज्ञानकरणत्वाभावादित्यर्थः। पापिष्ठतरं-निर्जीवम्। [1]तत्तद्वृत्तिमात्रहीनत्वं 'वागुत्क्रमणे मूकत्वं चक्षुरुत्क्रमणेऽन्धत्वं' इत्येवंरूपेण ॥ ११ ॥

---

1. मु. तत्र तद्वृत्ति

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

इतश्च अस्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु 'प्राणोऽपानो व्यान उदानः समानः' (बृ. उ. १।५।३) इति। वृत्तिभेदश्चायं कार्यभेदापेक्षः—प्राणः प्राग्वृत्तिः उच्छ्वासादिकर्मा। अपानः अवाग्वृत्तिर्निश्वासादिकर्मा। व्यानः तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः। उदानः ऊर्ध्ववृत्तिः उत्क्रान्त्यादिहेतुः। समानः समं सर्वेष्वङ्गेषु योऽन्नरसान् नयति–इति। एवं पञ्चवृत्तिः प्राणः, मनोवत्। यथा मनसः पञ्च वृत्तयः एवं प्राणस्यापीत्यर्थः। श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः। न तु 'कामः संकल्पः' इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसंख्यातिरेकात्।

नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषया अपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्यातिरेकः।

एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इतिन्यायात् इहापि योगशास्त्रप्रसिद्धा मनसः पञ्चवृत्तयः परिगृह्यन्ते 'प्रमाणविपर्ययविकल्प-

---

**प्राग्वृत्तिरिति** बहिर्नासिकातो निस्सरणवृत्तिः। अवाग्वृत्तिः अन्तराकर्षणवृत्तिः। तथा च छान्दोग्ये 'यद्वै प्राणिति स प्राणः यदपानिति सोऽपानः' इति। **व्यानस्तयोस्सन्धाविति**। तथा च छान्दोग्य एव 'अथ यः प्राणापानयोस्सन्धिः स व्यानः' इत्युपक्रम्य 'अतो यान्यन्यानि वीर्यवन्ति कर्माणि....तानि करोति' इत्युक्तम्। [1]समानं 'एतावाहुती-भुक्तपीते समं नयतीति समानः' इति प्रतिपाद्य, 'इष्टफलमेवोदानः' इति, स्वर्गादिरूपेष्टफलस्य उत्क्रमणेन प्रापकत्वात् तत्त्वेनोपचरित उदानः प्रश्नोपनिषदि। [2]तत्त्वममिप्रेत्याह–**उदान इत्यादिना**।

**प्रमाणविपर्ययेति**। प्रमाणं-यथार्थज्ञानम्। भ्रमसंशयसाधारण्येनान्यथाज्ञानं विपर्ययः। विकल्पः-शशशृङ्गइत्येवंरूपः असत्ख्यातिः। विपर्ययविकल्पयोर्विषयसत्त्वा-

---

1. मु. समानः

2. **तत्त्वमभिप्रेत्येति** तत्त्वम्—उदानपदस्य अनौपचारिकं अर्थम्। तदभिप्रेत्येति वा तदिदमभिप्रेत्येति वा पाठः स्यात्।

निद्रास्मृतयः ' (यो. सू. १।६) नाम । बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् ।

जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वात् मनोवदिति योजयितव्यम् ॥ १२ ॥

६. मुख्यप्राणाणुत्वाधिकरणम्

## अणुश्च ॥ १३ ॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः इतरप्राणवत् ।

---

सत्त्वाभ्यां विशेषः । निद्रा-योगमते ज्ञानाभावेन मनसोऽवस्थानम्, सिद्धान्ते तु मनसस्सूक्ष्मावस्था । स्मृतिः प्रसिद्धा ज्ञानविशेषरूपा ॥ १२ ॥

इति वायुक्रियाधिकरणम्

प्राणं प्रस्तुत्य ' समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' इति अनेकधा परिमाणप्रतिपादनेन विरोधात् अप्रामाण्यमिति पूर्वपक्षे,

यथा महत आकाशस्य औपाधिकं अल्पपरिमाणं स्वाभाविकं विभुत्वम्, एवं प्राणस्यापि स्वाभाविकं महत्त्वं मशकादितुल्यता त्वौपाधिकी-इति एकदेशिपूर्वपक्षे ;

सिद्धान्तमाह—अणुश्चायमिति । इतरप्राणवदिति । तथा च अणवश्चेति सूत्रे यथा इन्द्रियानन्त्यश्रवणं उपासनार्थमिति परिहारो दर्शितः, तथा अत्रापि । समोऽनेनसर्वेणेति श्रुतिरपि आधिदैविकप्राणाभिप्रायेण व्याख्येया ।

न च तथासति अणवश्चेत्यनेन अस्य गतार्थता । तत्र उपासनार्थमानन्त्यश्रवणं इत्युक्तं, इह तु आधिदैविकं तदिति परिहारभेदकथनात् । अयं च परिहारः इन्द्रियानन्त्येऽपि तुल्यः । अपि चेह, सर्वत्र प्राणस्य आकाशन्यायेनैकत्वं आशङ्क्यते, समोमशकेनेत्यादिकं तु औपाधिकमिति । परिहारस्तु - प्राणनानात्वस्य प्रत्यक्षसिद्धत्वेन एकत्वे प्रमाणाभावात् इति ।

मध्यमपरिमाण एव प्राणः सङ्कोचविकासशाली मशकस्य तावन्मात्रपरिमाणः, हिरण्यगर्भस्य त्रैलोक्यशरीरस्य सर्वेण समः-इति न विरोधः श्रुतीनाम् ।

अणुत्वं च इहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम् । पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात् । सूक्ष्मः प्राणः, उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात् । परिच्छिन्नश्च, उत्क्रान्तिगत्यागतिश्रुतिभ्यः ।

ननु विभुत्वमपि प्राणस्य समाम्नायते—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृ. उ. १।३।२२) इत्येवमादिप्रदेशेषु ।

तदुच्यते—आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैव एतद्विभुत्वमाम्नायते, नाध्यात्मिकेन । अपि च - समःप्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते, तस्माददोषः ॥ १३ ॥

७ ज्योतिराद्यधिकरणम्

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति आहोस्वित् देवताधिष्ठिताः प्रभवन्तीति विचार्यते—

तत्र प्राप्तं तावत्—यथास्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति । अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत । अतः स्वमहिम्नैव एषां प्रवृत्तिः—इति । एवं प्राप्ते इदमुच्यते—

---

सौक्ष्म्यपरिच्छेदाविति । त्वगिन्द्रियग्राह्यस्यापि प्राणस्य सौक्ष्म्यं अचाक्षुषत्वाभिप्रायम् । समः प्लुषिणेति । प्लुषिः-सूक्ष्मकीटविशेषः ॥ १३ ॥

इति मुख्यप्राणाणुत्वाधिकरणम्

'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिना अग्न्याद्यधिष्ठितत्वं वागादीनां प्रतीयते । 'यदि वाचाभिव्याहृतम्' [ऐ. उ. ३.११ ] इत्यादिना अग्न्यादिनिरपेक्षमेव जीवं प्रति अभिव्यवहरणादिकरणत्वं प्रतीयते । अतो विरोधादप्रामाण्यमिति पूर्वपक्षे एकदेशिमतं प्रतिपादयति—तत्र प्राप्तं तावदिति । अतः स्वमहि-

ज्योतिराद्यधिष्ठानंत्विति। तुशब्देनपूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिः—अग्न्याद्यभिमानिनीभिर्देवताभिः अधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तते - इति प्रतिजानीते। हेतुं च व्याचष्टे—तदामननादिति। तथा ह्यामनन्ति 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. उ. २।४) इत्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्म(ना [नः] अधिष्ठातृत्वमङ्गीकृत्योच्यते। न हि देवतासंबन्धं प्रत्याख्याय अग्नेः वाचि मुखे वा कश्चित् विशेषसंबन्धो दृश्यते। तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐ उ. २।४) इत्येवमाद्यपि योजयितव्यम्। तथा अन्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' (छा. उ. ३।१८।३) इत्येवमादिना वागादीनां अग्न्यादिज्योतिष्ट्ववचनेन एतमेवार्थं द्रढयति। 'स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्' (बृ. उ. १।३।१२) इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेन एतमेवार्थं द्योतयति।

सर्वत्र च अध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणं अनयैव प्रत्यासत्त्या भवति।

---

म्नैव एषां प्रवृत्तिरिति। अग्निर्वाग्भूत्वेत्यादिवाक्यं तु उपासनाभिप्रायेण यथाकथञ्चिन्नेयम्, यथाश्रुतार्थत्वे देवताभोक्तृतापत्तिरूपस्य बाधकस्य प्रदर्शितत्वात्-इति मन्यते।

स वै वाचमेवेति। सः—प्राणः प्रथमाम्—उद्गानकर्मणि प्रधानभूतां वाचं-वागिन्द्रियावच्छिन्नामग्निदेवतां अत्यवहत्-वागिन्द्रियपरिच्छेदमतीत्य प्रापितवान्। प्राप्यं विशदयितुं वाक्यं सायदेति। मृत्युं-वागिन्द्रियपरिच्छेदकृतं अप्रतिरूपवदनादिकम्। अग्निरभवदिति। प्राणदेवताऽभेदेन उद्गातुरुपासनया यजमाने हिरण्यगर्भतां प्राप्ते आध्यात्मिकवागादिपरिच्छेदस्य नष्टत्वात् यजमानशरीरगतो वाचिविद्यमानोऽग्निः परिच्छेदं विहाय अग्निरूपेणावस्थितोऽभवत्-इत्यर्थः।

सर्वत्र चाध्यात्माधिदैवतविभागेनेति। यथा-मनोब्रह्मेति अध्यात्ममुपक्रम्य वाक्प्राणचक्षुश्श्रोत्राणि पादा दर्शिताः। आकाशोब्रह्मेति अधिदैवतमुपक्रम्य अग्निवाय्वादित्यदिशः पादाः प्रदर्शिताः। अन्यत्र च 'अग्निना वाचा' 'चक्षुषा

स्मृतावपि—

'वागध्यात्ममिति प्राहुः ब्राह्मणास्तत्त्वदर्शिनः।

वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्।' (म. भा. शा. ३१३-५)

इत्यादिना वागादीनां अग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम्।

यदुक्तं स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति,

तदयुक्तम्—शक्तानामपि शकटादीनां अनडुहाद्यधिष्ठितानां प्रवृत्ति-दर्शनात्। उभयथोपपत्तौ च आगमात् देवताधिष्ठितत्वमेव निश्चीयते ॥१४॥

यदप्युक्तं- देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्येति, तत् परिह्रियते—

## प्राणवता शब्दात् ॥ १५ ॥

सतीष्वपि प्राणानां अधिष्ठात्रीषु देवतासु प्राणवता—कार्यकरण-संघातस्वामिना शारीरेणैव एषां प्राणानां संबन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः—'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः, अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा. उ. ८।१२।४) इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति।

---

आदित्येन' 'वायुना प्राणेन' 'मनसा चन्द्रेण' [बृ. उ. ३।१] इति अध्यात्म-मधिदैवतं च सामानाधिकरण्यं निर्दिष्टम्।

एकदेशिना, शक्तस्य अधिष्ठातारं विनैव कार्यजनकत्वमिति उत्सर्ग उक्तः। स यथा, अनडुहादिषु अधिष्ठातुः प्रत्यक्षेण गृहीतत्वात् परित्यज्यते, तथा, प्रकृते श्रुत्या देवताधिष्ठितत्वस्य गृहीतत्वात् परित्याज्यः-इत्याह— यदुक्तं स्वकार्ये-त्यादि ॥ १४ ॥

'देवतानामधिष्ठातृत्वे जीवस्य भोक्तृत्वं न स्यात्' इति द्वितीयं बाधकं परिहर्तुं सूत्रमवतारयति—यदप्युक्तमिति।

अथ यत्रेति। यन्निमित्तीकृत्य-यद्भोगार्थमिति यावत्। आकाशं-चक्षु-र्गोलकावकाशं [1]लक्षयित्वा चक्षुः सम्बद्धं, स-चक्षुरुपाधिस्सन् चाक्षुष इत्युच्यते, तस्य भोक्तुः दर्शनाय चक्षुः इत्यर्थः ॥ १५ ॥

---

1, अनुविषण्णं इत्यस्यार्थमाह—लक्षयित्वासम्बद्धमिति।

अपि च अनेकत्वात् प्रतिकरणं अधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्छरीरेऽवकल्पते। एको ह्यस्मिञ्छरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥ १५ ॥

## तस्य च नित्यत्वात् ॥ १६ ॥

तस्य च—शारीरस्य अस्मिञ्छरीरे भोक्तृत्वेन नित्यत्वं, पुण्यपापोपलेपसंभवात् सुखदुःखोपभोगसंभवाच्च, न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदे अवतिष्ठमाना न हीनेऽस्मिञ्छरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' (बृ. उ. १।५।२०) इति। शारीरेणैव च नित्यः प्राणानां संबन्धः, उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. उ. ४।४।२) इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति, करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति ॥ १६ ॥

८ इन्द्रियाधिकरणम्

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

मुख्यश्चैकः इतरे चैकादश प्राणाः अनुक्रान्ताः।

---

पुण्यमेवामुं गच्छतीति। यद्यपि—व्यष्ट्युपासकस्य 'सर्वेषां भूतानामात्मा भवति' इति वाक्येन सर्वात्मत्वे प्रतिपादिते, सर्वदुःखप्राप्त्या व्यष्ट्युपासनमनर्थायैवेति शङ्कायां, त्रैलोक्येऽहंभावेन सर्वात्मत्वे सत्यपि स्वकृतं पुण्यफलमेव अयं भुङ्क्ते, प्रजाभिः कृतं तु पापं प्रजा एव भुञ्जते, यतो देवान् प्रति पापं न गच्छति-इति अनया श्रुत्या प्रतिपाद्यते, न तु प्रजाकृतपुण्यफलभोक्तृत्वं देवतासु प्रतिषिध्यते, तथापि—नहवैदेवानितिवचनेन [1]प्रजाकृतपापफले देवतानां प्रतिषिद्धे, न्यायतौल्यात् पुण्यफलमपि प्रतिषिद्धं भवत्येव। सर्वेणापि स्वकृतस्यैवोपभोग्यत्वात्। अतो न प्रजानां भोगेन देवतानां सम्बन्धः।

प्रयोजनं-पूर्वपक्षे केवलेभ्य एवेन्द्रियेभ्यो विवेकोऽनुसन्धेयः, सिद्धान्ते देवतासहितेभ्यः-इत्यादि ॥ १६ ॥

इति ज्योतिराद्यधिकरणम्

---

1. मु. 'प्रजाकृत' नास्ति

तत्र इदमपरं संदिह्यते—किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणाः आहोस्वित् तत्त्वान्तराणीति।

किं तावत् प्राप्तम्? मुख्यस्यैवेतरे वृत्तिभेदाः—इति। कुतः? श्रुतेः। तथाहि श्रुतिः मुख्यं इतरांश्च प्राणान् सन्निधाप्य मुख्यात्मतां इतरेषां ख्यापयति—'हन्त अस्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्' (बृ. उ. १।५।२१) इति। प्राणैकशब्दत्वाच्च एकत्वाध्यवसायः। इतरथा हि अन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत, एकत्र वा मुख्यस्य इतरत्र लाक्षणिकत्वं आपद्येत। तस्मात् यथा एकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः एवं वागाद्या अप्येकादशेति।

---

इन्द्रियाणि स्वतन्त्रपदार्थभूतानि सिद्धवत्कृत्य, तत्र देवताधिष्ठानं प्रतिपादितम्। इदानीं, प्राणवृत्त्यतिरेकेण तानि न स्वतन्त्राणि, ततश्च, प्राणदेवतयैवाधिष्ठानसम्भवात् न देवतान्तराधिष्ठानमपेक्षितमिति पूर्वोक्तार्थ आक्षिप्यते-इति सङ्गतिः।

'हन्त अस्यैव सर्वे रूपमसाम' इत्यादिश्रुतेः 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यादिवचनस्य [1]प्राणातिरेकेण इन्द्रियाणां स्वतन्त्रोत्पत्त्यादिप्रतिपादकस्य च विरोधात् अप्रामाण्यमिति पूर्वपक्षे, एकदेशिमतमाह—मुख्यस्यैवेतर इति। मुख्यमितरांश्चेति। 'श्राम्यति वाक्' श्राम्यति चक्षुः, श्राम्यति श्रोत्रं, अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः' इति वाक्येनेत्यर्थः। न च प्राणवृत्तित्वे इन्द्रियाणां तदुत्पत्त्यैवोत्पत्तेः सिद्धतया पृथगुत्पत्तिकथनं व्यर्थं स्यादिति वाच्यम्। तथासति मनस्सर्वेन्द्रियाणिचेत्यत्र इन्द्रियशब्देनैव मनसोऽप्युत्पत्तेः सिद्धतया तस्यापि इन्द्रियान्तर्गतिर्न स्यात्। यदि च तत्र इन्द्रियपदं मनोव्यतिरिक्तविषयं, तर्हि एतस्माज्जायतेप्राणइत्यत्र प्राणपदं प्राणनादिवृत्तिविशिष्टपरमिति चक्षुरादिवृत्तिविशिष्टत्वाकारेणोत्पत्तिकथनार्थं इन्द्रियग्रहणं भविष्यति।

[2]तइन्द्रियाणीतिसूत्रस्य-ते-चक्षुरादयः प्राणादन्यत्र-प्राणात्तत्त्वान्तराणि इति प्रतिज्ञा, पुनः, श्रेष्ठात् अन्यत्रेतिपदावृत्त्या प्राणादन्यत्र 'इन्द्रियाणि' इति तद्व्य-

---

1. मु. प्राणातिरिक्तेन्द्रि

2. तइन्द्रियाणीतिसूत्रस्येति इत्यर्थमभिप्रेत्येत्यनेन सम्बद्ध्यते। एवञ्चिकृष्टोऽयमर्थः प्रदर्शितः परिमले भामतीकल्पतर्वभिप्रेतार्थविमर्शनपुरस्सरम्।

एवं प्राप्ते ब्रूमः—तत्त्वान्तराण्येव प्राणात् वागादीनीति । कुतः ? व्यपदेशभेदात् । कोऽयं व्यपदेशभेदः । ने—प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वा अवशिष्टाः एकादश इन्द्रियाणीत्युच्यन्ते । श्रुतौ एवंव्यपदेशदर्शनात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु. उ. २।१।३) इति ह्येवंजातीयकेषु प्रदेशेषु पृथक् प्राणो व्यपदिश्यते पृथक्च इन्द्रियाणि ।

ननु मनसोऽपि एवंसति वर्जनं इन्द्रियत्वेन प्राणवत् स्यात् । 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात् ।

सत्यमेतत् । स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपि इन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते । प्राणस्य तु इन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्ध-मस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्षे उपपद्यते । तत्त्वैकत्वे तु, स एव एकः सन् प्राणः इन्द्रियव्यपदेशं लभते न लभते चेति विप्रतिषिद्धम् । तस्मात् तत्त्वान्तरभूता मुख्यादितरे ॥ १७ ॥

---

पदेशात्' इति हेतुलाभः इतिशब्दाध्याहारेण, तद्व्यपदेशादित्यत्र तत्पदं च नवियदश्रुतेरित्यारभ्य संज्ञामूर्तिक्लृप्तिरित्यध्यायान्तं प्रस्तुताया उत्पत्तेः परामर्शकम्, तथा च उत्पत्तिव्यपदेशात् इत्यर्थलाभे सति तावन्मात्रोक्तौ प्राणे व्यभिचारः, उत्पत्तिव्यपदेशे सत्यपि प्राणात्तत्त्वान्तरत्वाभात्, अतः अवशिष्टो भागः । तथा च, प्राणोत्पत्तिं निरूप्य पुनः इन्द्रियशब्दमुपादाय इन्द्रियोत्पत्तिप्रतिपादनं भवति प्राणात्तत्त्वान्तरतासाधकम्—इत्यर्थमभिप्रेत्य सिद्धान्तमाह—एवं प्राप्त इति । व्यप-देशभेदादित्यत्र भेदशब्दोपात्तं व्यपदेशगतं विशेषं व्युत्पादयितुं पृच्छति—कोऽय-मिति । इन्द्रियाणीत्युच्यन्त इति । एतस्माज्जायतइत्यनेनान्वयितया इति शेषः । अयं च शेषः 'श्रुतावेवम्' इत्युत्तरभाष्यपर्यालोचनया लभ्यते । न च पृथगुत्पत्ति-प्रतिपादनस्वारस्येन प्राणात् इन्द्रियाणां स्वातन्त्र्यावगमस्य प्रबलं किञ्चित् बाध-कमस्ति, येन क्लेशेन व्याख्यायेत । पूर्वपक्ष्युक्तं च बाधकं परिहरिष्यते ।

स्मृतौ त्वेकादशेति । 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यादौ । ततश्च प्रबलबाधकानुसारेण इन्द्रियमनसोः पृथग्व्यपदेशो गोबलीवर्द-न्यायेनाश्रीयत इति भावः ॥ १७ ॥

कुतश्च तत्त्वान्तरभूताः—

## भेदश्रुतेः ॥ १८ ॥

भेदेन च वागादिभ्यः प्राणः सर्वत्र श्रूयते । 'ते ह वाचमूचुः' (बृ. उ. १।३ २) इत्युपक्रम्य, वागादीनसुरपाप्मविध्वस्तानुपन्यस्य, उपसंहृत्य वागादिप्रकरणं, 'अथ हेमं आसन्यं प्राणमूचुः' इति असुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' (बृ. उ. १।५।३) इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥ १८ ॥

कुतश्च तत्त्वान्तरभूताः—

## वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं च भवति मुख्यस्येतरेषां च । सुप्तेषु वागादिषु मुख्य एको जागर्ति, स एव चैको मृत्युनाऽनाप्तः आप्तास्त्वितरे । तस्यैव च

---

इदं सूत्रं प्राणेन्द्रिययोः प्रकरणभेदोपन्यासपरतया व्याचष्टे—भेदेन चेति । देवासुरसङ्ग्रामकल्पनया उपक्रमं कृत्वा, इन्द्रियाण्येव देवत्वेन विवक्षित्वा, असुरजयार्थं इन्द्रियान्तरैः वागादिषु औद्गात्रे कर्मणि कर्तृत्वे प्रेरितेषु असुरैः वागादीनां 'स्वस्यैव समीचीनवदनादिकं भवतु' इत्यासङ्गलक्षणं छिद्रं दृष्ट्वा पाप्मना वेधः संपादितः, अतः वागादिष्ववाप्यनृतवदनादिकमुपलभ्यते—इत्येवं सर्वाणीन्द्रियाणि असुरनिक्षिप्तपाप्मना विद्धानीति निरूप्य, पृथक् आसन्यः-आस्ये भवः प्राणः मुख्यः 'स्वस्यैव [1]कल्याणवस्तु भवतु' इत्यभिषङ्गरहिततया असुरैर्वेद्धुमशक्यतया प्रतिपादितः । तत्र च निन्दाप्रकरणेन वागादय उपक्षिप्ताः स्तुतिप्रकरणेन च प्राण उपक्षिप्त इति स्पष्टः प्रकरणभेदः । तदिदमाह—ते ह वाचमूचुरित्यादिना । मनो वाचं प्राणमिति । यत्सप्तान्नानीत्युपक्रम्य, सर्वैर्भुज्यमानमेकं, द्वयं-हुतं प्रहुतं, पयश्चैकं पश्वर्थम्-इति चत्वारि प्रदर्श्य, त्रीण्यात्मने स्रष्टा हिरण्यगर्भः कल्पितवानिति सङ्ग्रहेणोक्त्वा, कानित्रीणीत्यपेक्षायां मनोवाचमित्यादिवाक्यम् । मनसो वाचश्च प्राणवृत्तित्वे न सप्तत्वत्रित्वादिकं आञ्जसमुपपद्यते ॥ १८ ॥

---

1. मु. कल्याणवदनं

स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं नेन्द्रियाणाम्। विषयालोचनहेतुत्वं चेन्द्रियाणां न प्राणस्य—इत्येवंजातीयको भूयान् लक्षणभेदः प्राणेन्द्रियाणाम्। तस्मादपि एषां तत्त्वान्तरभावसिद्धिः। यदुक्तं—'ते एतस्यैव सर्वे रूपमभवन्' इति श्रुतेः प्राण एवेन्द्रियाणीति, तदयुक्तम्। तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः। तथाहि—'वदिष्याम्येवाहमिति वाग्दध्रे' इति वागादीनीन्द्रियाण्यनुक्रम्य, 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्' इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय, अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः' (बृ. उ. १।५।२१) इति पृथक् प्राणं मृत्युनानभिभूतं अनुक्रामति। 'अयं वै नः श्रेष्ठः' इति च श्रेष्ठतामस्य अवधारयति।

तस्मात् तदविरोधेन, वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनां—इति मन्तव्यं, न तादात्म्यम्। अत एव प्राणशब्दस्य

---

स एव चैक इति। 'तानि मृत्युः श्रमो भूत्वा उपयेमे' इति चक्षुरादीनां श्रमरूपमृत्य्वाप्तत्वमुक्त्वा, अथेममेवनाप्नोद्योऽयंमध्यमःप्राणइति तद्राहित्यं मुख्यस्य प्राणस्य उक्तम्। तथा प्राणस्येन्द्रियाणां च अस्मासु मध्ये कश्श्रेष्ठ इति विवादमुपक्रम्य, यस्मिन्नुत्क्रान्ते शरीरस्य कुणपता भवति स श्रेष्ठ इति निर्धारणानन्तरं, चक्षुरादिषु उत्क्रान्तेष्वन्धत्वादिकमेव प्राप्तं, प्राणस्यानुत्क्रान्तत्वात् देहस्य शवता तु नाभवत्, प्राणोच्चिक्रमिषायां सर्वेषामेवेन्दियाणामुत्क्रान्तिप्रसक्त्या सह देहस्य शवता प्रसक्ता-इति प्राणसंवादे प्रतिपादितम्। तदाह—तस्यैव चेति।

तस्मात्तदविरोधेनेति। वागादीनां प्राणवृत्तित्वे हि, तान्यन्योन्येनास्पर्धन्तेति प्राणस्य इन्द्रियाणां स्पर्धया उपक्रमो विरुध्येत। न हि वृत्तीनामाश्रयेण सह स्पर्धाप्रसक्तिरस्ति। परतन्त्रस्वभावत्वात्। तथा, वागादीनां पृथग्वचनादिकार्यकरत्वं, प्राणसंवादे च प्राणस्य शरीरे स्थितावपि वागादीनामुत्क्रान्तिप्रतिपादनं च विरुध्येत। न हि वृत्तीनामपि पृथग्वदनादिवृत्तिः सम्भवति। नापि स्थित एवाश्रये उत्क्रान्तिः सम्भवति। अतः तद्रूपताभवनं गौणमिति, आरोपितया च तद्रूपतया प्राणशब्दभाक्त्वमपि गौणमेव भविष्यति।

इन्द्रियेषु लाक्षणिकत्वसिद्धिः । तथा च श्रुतिः 'ते एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते प्राणाः इति' (बृ. उ. १।५।२१) इति मुख्यप्राणविषयस्यैव प्राणशब्दस्य इन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति । तस्मात् तत्त्वान्तराणि प्राणात् इन्द्रियाणीति ॥ १९ ॥

९. संज्ञामूर्तिक्लृप्त्यधिकरणम्

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधाय उपदिश्यते—'सेयं देवतैक्षत, हन्त अहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, तासां त्रिवृतं त्रिवृतं एकैकां करवाणीति' (छा उ. ६।३।२) ।

---

[1]अत्र च. प्रथमसूत्रेण प्राणस्येन्द्रियाणां च पृथगुत्पत्त्याम्नानं, द्वितीयेन भिन्नप्रकरणत्वं, तृतीयेन सुप्तौ प्राणस्य जागरूकता इन्द्रियाणां विलीनवृत्तिकत्वमित्यादिरूपं वैलक्षण्यं स्वातन्त्र्ये दर्शितम् । अतो न सूत्राणां पुनरुक्तता ।

'न वायुक्रिये' इत्यधिकरणे प्राणस्येन्द्रियवृत्तित्वं नास्तीति दर्शितम्, अस्मिन्नधिकरणे इन्द्रियाणां प्राणवृत्तित्वं नास्तीति प्रतिपादितम्-इति विभागः ।

प्रयोजनं पूर्वपक्षे, इन्द्रियाणां प्राणवृत्तित्वात् नाहंप्राणिमीति प्राणस्य विवेकेनैव अर्थात् सिद्धो विवेक इति न पृथक् तदनुसन्धानम् । सिद्धान्ते तु, स्वतन्त्रतया अर्थसिद्धत्वाभावात नाहमन्धइत्यादिना पृथगिन्द्रियेभ्योऽपि त्वंपदार्थो विविक्ततया अनुसन्धेयः ॥ १९ ॥

इति इन्द्रियाधिकरणम् ॥ ८ ॥

वियदादिसृज्यव्यापारे उत्पत्तौ[2] प्राप्तस्य श्रुतिकलहस्य समाधानानन्तरं, स्रष्टृव्यापारोत्पादनायां प्राप्तस्य श्रुतिकलहस्य समाधानं अत्र क्रियते-इति सङ्गतिः ।

सेयं देवतेति । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति प्रकृता परमात्मरूपा देवता ऐक्षत । ईक्षणमेवाभिनयति हन्तेति । बहुस्यांप्रजायेयेति यत्

---

1. 'अत्र च प्रथमसूत्रेण' इत्यादिना 'न सूत्राणां पुनरुक्तता' इत्यन्तेन भामतीकल्पतरूक्तं भाष्यानौचित्यं परिहृतम् । मान्त्रवर्णिकसूत्रव्याख्यायामपि इयं रीतिरनुसृता । विस्तरस्तु परिमले द्रष्टव्यः । 2. मु. व्यापारोत्पत्तौ

**तत्र संशयः—किं जीवकर्तृकं इदं नामरूपव्याकरणं आहोस्वित् परमेश्वरकर्तृकमिति ।**

**तत्र प्राप्तं तावत् जीवकर्तृकमेव इदं नामरूपव्याकरणमिति ।**

---

सङ्कल्पितं बहुभवनं, तत् तेजोऽबन्नेषु सूक्ष्मेषु सृष्टेष्वपि न कार्त्स्न्येन सम्पन्नमिति [1]द्योतयति । तिस्रो देवताः परोक्षत्वात् सूक्ष्माणि तेजोऽबन्नान्येव । नाम-सूर्यश्चन्द्र-इत्यादि । [2]तत्प्रवृत्तिनिमित्तसंस्थानादियुक्तं रूपम् । व्याकरवाणि-विस्पष्टं करवाणि । त्रिवृतमिति । तेजोऽबन्नानि प्रत्येकं द्वेधा विभज्य, द्विधाभूतानामेकैकमर्धं पुनर्द्विधा विभज्य, पुनरपि, द्विधाकृतमंशद्वयं तेजसः अबन्नयोः अपां तेजोऽन्नयोः अन्नस्य असेजसोश्च निक्षिप्य एकैकं भूतं त्रितयरूपं करिष्यामीत्यर्थः ।

अत्र च–जीवेनात्मनानुप्रविश्येतिवचनानुसारेण जीवरूपं प्राप्तस्यैव परमात्मनो नामरूपस्रष्टृत्वमवगम्यते, 'तद्धेदं तर्हि अव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' [बृ. उ. १।४।७] इत्यत्र तु पारमेश्वररूपेणेवेति. विरोधादप्रामाण्ये, 'सद्विद्यागतवाक्यानुसारेण जीवरूपतां प्राप्तस्यैव नामरूपव्याकर्तृत्वम्, तद्धेदमिति तु परम्पराभिप्रायं भविष्यति, तथा च जीव एव नामरूपव्याकर्ता' इति[3] पर्यवसितम् ।

ननु–अनेनजीवेनेत्यत्र, जीवरूपतां प्राप्तस्य कर्तृता कुतोऽवगम्यते, आख्यातेन हि देवतागतमेव कर्तृत्वं प्रतिपाद्यते, हन्ताहमितिप्रस्तुताया देवताया एव व्याकरवाणीत्युत्तमपुरुषेण सम्बन्धात् । न च अनेनजीवेनेतितृतीया जीवस्य कर्तृतां प्रतिपादयति । अहंपदोपात्ताया देवताया एव कर्तृतया अन्वयेन कर्त्रन्तरानपेक्षणात् । जीवस्य कर्तृतयाऽन्वये वा तस्यैवाख्यातेनाभिधानप्रसक्त्या अनभिहिताधिकारीय-तृतीयानुपपत्तेः ।

न च–यथा 'देवदत्तेन यज्ञदत्तः पाचयति' [4]इत्येकवचनान्ताख्यातस्थलेऽपि प्रयोज्यप्रयोजकरूपकर्तृद्वयस्यापि[5] अन्वयः, प्रयोजककर्तुराख्यातेनाभिधानेऽपि तद-

---

1. द्योतयति—हन्तेतिपदेन द्योतयति ।　　2. मु. तत्तत्प्रवृत्ति

3. इतिपर्यवसितमिति एकदेशिमतमिति शेषः ।

4. इत्येकवचनान्ताख्यातस्थलेऽपीति अपिना, कर्तृद्वयभाने द्विवचनाख्यात-प्रयोगापत्तिरूपः आपाततः प्रतीयमानो विरोधः सूचितः । मु. 'अपि' नास्ति

5. मु. 'अपि' नास्ति

**कुतः? 'अनेन जीवेनात्मना' इति विशेषणात्। यथा लोके 'चारेण अहं परसैन्यमनुप्रविश्य संकलयानि' इत्येवंजातीयके प्रयोगे चारकर्तृकमेव सत् सैन्यसंकलनं हेतुकर्तृत्वात् राजा आत्मन्यध्यारोपयति संकलयानीत्युत्त-**

---

नभिहिते प्रयोज्यकर्तरि तृतीया च भवति, एवं व्याकरवाणीत्येकवचान्तेऽपि प्रयोज्यप्रयोजकभावेन कर्तृद्वयस्याप्यन्वयोऽस्तु, प्रयोज्यकर्तुराख्यातेनानभिहितत्वात् तत्र तृतीयाऽप्यस्तु। तथा च, तृतीयाबलादेव जीवस्य व्याकरणे कर्तृत्वमिति–वाच्यम्।

युक्तं णिच्प्रयोगस्थले, धातुना [1]प्रयोज्यव्यापारस्य णिच्प्रत्ययेन विशेष्यतया प्रयोजकव्यापारस्य चाभिधाने, आख्यातेन णिजर्थकर्तृशक्तेरेवाभिधानात् तत्र एकवचनम्, विशेषणीभूतव्यापारं प्रति च कर्तृत्वेन [2]प्रयोज्यस्यान्वयेन तद्गतकर्तृशक्तेराख्यातेनानभिधानात् तत्र तृतीया च। नैवं [3]प्रकृते विशेषणविशेष्यभावेन व्यापारद्वयमभिहितमस्ति। येन कर्तृद्वयस्यान्वयेपि आख्याते एकवचनं प्रयोज्यकर्तरि च तृतीया लभ्येत–इत्यभिप्रेत्य शङ्कते—कुत इति।

परिहरति—अनेन जीवेनेति। अयं भावः–अनेन जीवेनेति न कर्तृतृतीया, अपि तु करणतृतीया। चेतनस्य व्याकरणं प्रति करणत्वं प्रयोज्यकर्तृत्वेनैव पर्यवस्यति। यथा 'चारेण शत्रुसैन्यं सङ्कलयानि' इत्यत्र सैन्यसङ्कलने चारस्य करणत्वं प्रयोज्यकर्तृतयैव, प्रयोजकव्यापारत्वेनाध्यारोपिते सैन्यसङ्कलने प्रकृष्टोपकारकत्वात्, एवं व्याकरणस्य जीवगतस्यैव प्रकृते देवतायामध्यारोपात् तत्प्रयोज्यस्य जीवस्य करणत्वविवक्षया तृतीया भविष्यति।

न च–तथासति व्याकरवाणीत्यस्य, अध्यारोप्य देवतायास्साक्षात्कर्तृत्वं व्याख्याने, क्लिष्टता, व्याकरणेऽवगम्यमानस्य साक्षात्कर्तृत्वस्य अनध्यारोपेणैव व्याख्यानसम्भवादिति–वाच्यम्। तथासति अनेनजीवेनेत्यस्य वैयर्थ्यापत्तेः। तथा च तत्सार्थक्याय अध्यारोप एवोचितः। वरं हि वैयर्थ्यमपेक्ष्य [4]लक्षणाध्यारोपाश्रयणम्।

---

1. प्रयोज्यव्यापारस्येति षष्ठीतत्पुरुषः। एवं प्रयोजकव्यापारस्येत्यत्रापि।
2. मु. प्रयोज्यस्यान्वये तद्गत
3. मु. 'प्रकृते' नास्ति
4. **लक्षणाध्यारोपेति** धातोःप्रयोजकव्यापारलक्षणापर्यवसाय्यध्यारोपेत्यर्थः।

मपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सत् नामरूपव्याकरणं हेतुकर्तृत्वात् देवता आत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण ।

अपि च डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् । तस्मात् जीवकर्तृकमेव इदं नामरूपव्याकरणम्—इति ।

एवं प्राप्तेऽभिधत्ते 'संज्ञामूर्तिक्लृप्तिस्तु' इति । तुशब्देन पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत् । त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात् । येय संज्ञाक्लृप्तिर्मूर्तिक्लृप्तिश्च अग्निरादित्यश्चन्द्रमाविद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च, प्रत्याकृति प्रतिव्यक्ति च अनेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिः भवितुमर्हति । कुतः ? उपदेशात् । तथाहि—'सेयं देवतैक्षत' इत्युपक्रम्य 'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वं इह उपदिश्यते ।

---

तथा च, महाभूतात्मकसृष्टौ तन्नामधेये च ईश्वरस्य [1]साक्षादेव कर्तृत्वेऽपि त्रिवृत्करणानन्तरभाविषु भौतिकसूर्यचन्द्रादिरूपेषु तन्नामधेयेषु च जीवस्यैव साक्षात्कर्तृत्वम्, परमात्मनस्तु कुलालपितृवत् जीवद्वारकमेव कर्तृत्वम्-इत्येकदेशिनोऽभिप्रायः ।

ननु जीवस्य चन्द्रसूर्यादिनामरूपेषु कर्तृत्वं न सम्भवतीत्याशङ्क्याह—अपि चेति । भौतिकेषु शकटादिनामरूपेषु मनुष्याणां कर्तृत्वं प्रसिद्धमेव । चन्द्रसूर्यादिषु तु[2] भौतिकेषु प्रजापत्यादिजीवानां कर्तृत्वं भविष्यति । तथाच, अनेनजीवेनेत्यत्र जीवसामान्यरूपेण भौतिकेषु त्रिवृत्कृतेषु नामरूपेषु कर्तृत्वेऽभिहिते, यथासम्भवं तत्तद्विशेषकर्तृतया जीवविशेषाणां पर्यवसाने न काचिदनुपपत्तिः-इतिभावः ।

उपदेशादिति । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति णिच्प्रयोगाभावेन देवताया एव साक्षात्कर्तृत्वं प्रतीयते । न तत् अध्यारोपेण नेतुमुचितम् । न च अनेनेति व्यर्थम् । जीवस्य करणत्वं हि नावश्यं प्रयोज्यत्वेनैव समर्थनीयम् । अपितु अध्ययनेनवसतीत्यत्रेव उद्देश्यतयापि नामरूपव्याकरणे जीवस्य

---

1. आ. साक्षात्कर्तृत्वेऽपि
2. मु. 'तु' नास्ति ।

**ननु जीवेनेति विशेषणात् जीवकर्तृकत्वं व्याकरणस्य अध्यवसितम्। नैतदेवम्। जीवेनेत्येतत् अनुप्रविश्येत्यनेन संबध्यते, आनन्तर्यात्, न व्याकरवाणीत्यनेन। तेन हि संबन्धे, व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत। न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति। येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत्।**

---

करणत्वमुपपद्यते। जीवभोगार्थं हि नामरूपसृष्टिः। अथवा, शरेणहन्तीत्यत्र शरव्यापारस्य हननानुकूलत्वात् यथा शरस्य करणत्वम्, एवं नामरूपव्याकरणे जीवव्यापारस्यादृष्टस्य उपयोगात् जीवस्य करणत्वनिर्देश उपपद्यते। ततश्च, जीवेनेत्यस्य व्याकरवाणीति प्रधानक्रियान्वयेऽपि न काचित् सिद्धान्तिनः क्षतिः।

भाष्ये तु, वस्तुगतिमनुरुध्य प्रविश्येत्यत्रैवान्वयः प्रतिपादितः। आनन्तर्यादिति। ननु आनन्तर्यं सन्निधिलक्षणं व्याकरवाणीतिप्रधानक्रियाकाङ्क्षया बाध्यताम्। न–प्रवेशक्रियाया अपि साकाङ्क्षत्वात्। 'व्यापकस्य हि परमात्मनः कथं शरीरादौ प्रवेशः' इत्येतस्यामाकाङ्क्षायां सन्निहितं अनेनजीवेनेति औपाधिकंखिल्यभावमुपहरत् प्रविश्येत्यनेन सम्बध्यते।

प्रवेशक्रियासम्बन्धेऽपि न जीवेनेत्येषा कर्तृतृतीया। तत्र, यदि तावत् जीवब्रह्मणोर्भेदविवक्षा तदा न जीवस्य प्रवेशे कर्तृता उपपद्यते। 'समानकर्तृकयोः पूर्वकाले' इतिविहितक्त्वान्तक्रियायां प्रधानक्रियाकर्त्रन्वयस्यावश्यकतया तेनैव कर्त्राकाङ्क्षाया उपरतत्वात्।

अथ आत्मनेतिविशेषणस्वारस्यात् तत्त्वमसीतिप्रधानवाक्यानुगुण्याच्च अभेदविवक्षैवोपेयते, तत्र, जीवेनेत्यस्याप्यंशस्य कर्तृतयान्वयविवक्षायां 'जीवात्मा सन् अनुप्रविश्य' इत्येव स्यात्। व्याकरवाणीत्यनेनैव कर्तृशक्तेरभिहितत्वात्[1]।

ननु–व्याकरवाणीत्यनेन [2]व्याकरणक्रियाकर्तृशक्तिरेवाभिहिता, न तु प्रवेशक्रियाकर्तृशक्तिरभिहिता। तथा च जीवरूपापन्नाया देवतायाः प्रवेशक्रियाकर्तृताबोधनार्थं तृतीया प्रसज्यत एव। दृश्यते हि किञ्चित्क्रियानिरूपितकारकशक्तेरभिधानेऽपि क्रियान्तरनिरूपितां तां अभिधातुं विभक्तिः। यथा 'प्रासादे शेते' इति।

---

1. अभिहितत्वादिति तथा च न कर्तृतृतीयेत्यर्थः।
2. मु. व्याकरणक्रियाशक्तिरेवा

**न च जीवो नाम परमेश्वरादत्यन्तभिन्नः चार इव राज्ञः, आत्मनेति विशेषणात् । उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य। तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति। परमेश्वर एव च नामरूपयोर्व्या- कर्तेति सर्वोपनिषत्सिद्धान्तः, 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छा. उ. ८।१४।१) इत्यादिश्रुतिभ्यः । तस्मात् परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणम् ।**

---

अत्र सौधगतायाः प्रसादनक्रियाधिकरणशक्तेः घञा [1]अभिधानेऽपि तत्रैव शय- नाधिकरणतां प्रतिपादयितुं सप्तमी ।

उच्यते—यदि तावत् क्त्वाप्रत्ययस्य कर्तृप्रतिपादकतापक्षः, तदा प्रसक्तिरेव नास्ति तृतीयायाः । अथ क्रियाद्वयकर्तुरेकत्वमेव तदर्थः, एकत्वे तु कर्ता उपलक्षणं, तदापि न तृतीया प्राप्नोति। क्त्वाप्रत्ययान्तक्रियायां कर्त्रन्वयस्यार्थिकत्वात्। शाब्दा- न्वयस्थल एव च अनभिहिताधिकारविभक्तिप्राप्तिः । अत एव च, 'देवदत्तो(ऽनु)- लिप्तः स्नात्वा भुङ्क्ते' इत्यादौ (अनु)लिप्तत्वविशेषणविशिष्टस्य स्नान एवान्वये तात्पर्यगत्या विद्यमानेऽपि, शाब्दान्वयस्य भोजनक्रियागतत्वात् न तृतीयेति सिध्यति। अन्यथा लिप्तेनेति स्यात् ।

ततश्च, जीवस्य अभेदविवक्षया कर्तृत्वेनान्वयाभ्युपगमे प्रथमान्ततैव स्यात् ।

तस्मात् प्रवेशान्वितायां देवतायां ऐश्वररूपव्यावृत्तिगमकतया जीवेनेत्येतत इत्थंभूतलक्षणतृतीयान्तं इत्येव श्लिष्यते ।

तेन तत्कृतमपीति । इदं च प्रौढ्योक्तम् । परमार्थतो जीवब्रह्मणोरेक- त्वेऽपि, व्यवहारदृष्ट्या भेदमुपेत्य पारमेश्वरेणैव सर्वज्ञादिरूपेण नामरूपव्याकर्तृत्व- मिति प्रतिपादनार्थं प्रकृताधिकरणप्रवृत्तेः ।

तत् सिद्धं—नामरूपेव्याकरवाणीत्येतत् औपचारिकं माभूदिति परमेश्वर एव नामरूपयोस्साक्षाद्व्याकर्तेति[2]। न चैवंसति अस्मिन् वाक्ये जीवेनात्मनानुप्रविश्येति व्यर्थम्। नामरूपव्याकरणं जीवभोगार्थमिति ज्ञापनार्थत्वात् ।

---

1. **अभिधानेऽपीति** प्रसीदन्ति अस्मिन् जना इत्यर्थे विहितेन घञा प्रसादन- क्रियाधिकरणत्वाभिधानं ज्ञेयम् ।

2. आ. साक्षादेव व्याकर्तेति ।

**त्रिवृत्करणपूर्वकमेवेदं इह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैव उक्तत्वात् ।**

---

अपि च, 'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतं एकैकां करवाणि' इति समभिव्याहारात् त्रिवृत्करणकर्तैव नामरूपयोर्व्याकर्तेति प्रतीयते । त्रिवृत्करणे च न प्रजापत्यादीनामपि उत्कृष्टजीवानां कर्तृत्वं सम्भवति । तेषामपि शरीरपरिग्रहस्य त्रिवृत्करणाधीनत्वात्, 'शरीरं विहायापि तेषां कर्तृत्वं सम्भवति' इत्येतत्तु न प्रमाणवत् । अपकृष्टजीवानां तु तत्करणसम्भावनैव नास्ति । अतो न नामरूपव्याकरणं जैवम्-इति मनसि निधाय, त्रिवृत्कुर्वतइतिसौत्रनिर्देशसूचितमर्थमाविष्करोति **त्रिवृत्करणपूर्वकमेवेदमिति** ।

ननु—त्रिवृत्करणं महाभूतानां सर्गादावुत्पन्नानां यदाद्यं तत्रैव जीवस्य कर्तृत्वं न सम्भवति । इह तु नामरूपव्याकरणानन्तरभावि यत् त्रिवृत्कृतानां सतामेव भूतानां पुनस्सूर्यचन्द्रादिरूपेण त्रिवृत्करणं तत् प्रतिपाद्यते । 'नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतम्' इति क्रमपाठात् । नामरूपव्याकरणमपि चेदं स्थूलविषयमिति [1]अनुपदमेव वक्ष्यति—इत्याशङ्क्य, अर्थक्रमानुसारेण पाठक्रमं बाधित्वा त्रिवृत्करणं पूर्वं पश्चान्नामरूपव्याकरणम्-इत्यभिप्रेत्य त्रिवृत्करणपूर्वकं इत्युक्तम् । अयं भावः—इह हि महाभूतानां सृष्टिमुक्त्वा आद्यं त्रिवृत्करणं नोक्तम् । अतो व्याकरणवाक्ये निर्दिश्यमानं त्रिवृत्करणं महाभूतविषयमेव । पाठव्यत्यासस्तु सङ्कल्पवाक्ये नामरूपव्याकरणस्य उद्देश्यतया द्रष्टव्यः । उद्देश्यं हि प्रथमं सर्वत्र निर्दिश्यते । अतः, नामरूपेव्याकरवाणीति उद्देश्यं निर्दिश्य, तत्साधनाय त्रिवृत्करणं निर्दिशति तदनन्तरं 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति ।

ननु—उत्तरत्र सूर्याग्न्यादिरूपेणत्रिवृत्करणस्य प्रतिपादनात् प्रजापत्यादिसृष्ट्यनन्तरभाव्येव इदं त्रिवृत्करणं निर्दिश्यते, न तु सूक्ष्मभूतसृष्ट्यव्यवहितोत्तरभावि । तथा च श्रुतिः—'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतं एकैकामकरोत्' इति त्रिवृत्करणमुक्त्वा 'यथा तु खलु सोम्य इमास्तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि' इति तद्व्युत्पादनमुपक्षिप्य, अग्निसूर्यादिभावेन पुरुषान्तर्गत्या च त्रिवृत्करणं प्रतिपादयति

---

1. अनुपदमिति 'तत्र अग्निरितीदं रूपं' इत्यादिभाष्येणेत्यर्थः ।

तच्च त्रिवृत्करणं अग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य' (छा. उ. ६।४।१) इत्यादिना। तत्र अग्निरिति इदं रूपं व्याक्रियते। सति च रूपव्याकरणे विषयप्रतिलम्भात् अग्निरिति इदं नाम व्याक्रियते। एवमेव आदित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम्। अनेन च अग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येषु अविशेषेण त्रिवृत्करणमुक्तं भवति। उपक्रमोपसंहारयोः साधारणत्वात्। तथा ह्यविशेषेणैवोपक्रमः 'इमास्तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति' (छा. उ. ६।३।४) इति। अविशेषेणैव चोपसंहारः 'यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्' इत्येवमादिः 'यद्वविज्ञातमिवाभूदिति एतासामेव देवतानां समासः' (छा. उ. ६।४।७) इत्येवमन्तः॥ २०॥

---

'यदग्ने रोहितं रूपम्' इत्यादिना 'यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य' इत्यादिना च। अत्र च आधिदैविके अध्यात्मं च त्रिवृत्करणे प्रजापत्यादिजीवस्य कर्तृत्वमुपपद्यत एव-इ तिशङ्कानिरासाथ (सूत्रम्। सूत्रार्थं विशदयन्नवतारयति) [त्रिवृत्कुर्वतइतिसौत्रनिर्देशसूचितमर्थं विशदयति]—तच्च त्रिवृत्करणमित्यादिना। अयं भावः—यद्यप्युत्तरत्र अग्न्यादिषु त्रिवृत्करणं निर्दिश्यते, तथापि उपक्रान्तं त्रिवृत्करणं न तावन्मात्रविषयम्। तासांत्रिवृतंत्रिवृतमिति साकल्येन सृष्टानांभूतानां त्रिवृत्करणोपक्रमात्। अग्न्यादिनिर्देशस्तु वाक्यशेषे उदाहरणमात्रम्। न च कात्स्न्र्येन त्रिवृत्करणे प्रजापत्यादिजीवानां कर्तृत्वमुपपद्यते-इति। तदिदमाह—अनेन च अग्न्याद्युदाहरणेनेति। अग्न्यादयो हि तैजसाः पदार्था लोके प्रसिद्धाः। तत्र अबन्नयोस्समावेशदर्शनं, भौमत्वेन प्रसिद्धेषु भूगोलकादिषु आम्भसत्वेन प्रसिद्धेषु समुद्रादिषु च भूतान्तरसंसर्गप्रदर्शनस्य उपलक्षणम्। यदु रोहितमिवेति। यथा अग्नौ रोहितादि रूपं तैजसादि, एवं अनुक्तस्थलेऽपि रोहितशुक्लकृष्णानि तेजोऽबन्नरूपाण्यूह्यानीत्यर्थः। यद्वविज्ञातमिवेति। यत् उ इति छेदः। उः समुच्चये। यच्चान्यत् रोहितत्वादिना विशिष्य ज्ञातुमशक्यं, तदपि भूतत्रयसमाविष्टमेव द्रष्टव्यमित्यर्थः॥ २०॥

तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनां अध्यात्मं अपरं त्रिवृत्करणं उक्तम्—'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' (छा. उ. ६ ४।७) इति। तत् इदानीमाचार्यो यथाश्रुत्येवोपदर्शयति आशङ्कितं च कंचिद्दोषं परिहरिष्यन्—

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानायाः मांसादि कार्यं यथाशब्दं निष्पद्यते। तथा हि श्रुतिः—'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत् पुरीषं भवति यो मध्यमः तन्मांसं योऽणिष्ठः तन्मनः' (छा. उ. ६।५।१) इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यते इत्यभिप्रायः। तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति। मध्यमं अध्यात्मं मांसं वर्धयति। अणिष्ठं तु मनः। एवं इतरयोरप्तेजसोः यथाशब्दं कार्यमवगन्तव्यम्—मूत्रं लोहितं प्राणश्च अपां कार्यम्, अस्थि मज्जा वाक् तेजस इति ॥ २१ ॥

अत्राह—यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकं अविशेषश्रुतेः 'तासां त्रिवृतं त्रिवृतं एकैकामकरोत्' इति, किंकृतस्तर्हि अयं विशेषव्यपदेशः– इदं तेजः, इमा आपः, इदमन्नम्-इति। तथा—अध्यात्मं इदं अन्नस्याशितस्य कार्यं मांसादि, इदं अपां पीतानां कार्यं लोहितादि, इदं तेजसोऽशितस्य कार्यं अस्थ्यादि–इति, अत्रोच्यते—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

---

अपरं त्रिवृत्करणमिति। अग्न्यादिष्वधिदैवं भूतत्रयमेलनरूपं त्रिवृत्करणमुक्तम्। 'पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' इत्यत्र तु भुक्तस्यान्नादेः पुरीषादिभावेन त्रेधा विभागप्रतिपादनम्–इत्यर्थः ॥

स्थविष्ठो धातुः–स्थूलो भागः। अणिष्ठः-सूक्ष्मः। शरीरे च भूतत्रयविभागप्रतिपादने सति, अर्थात् शरीरंभूतत्रयसमाविष्टमिति प्रतिपादनात् आध्यात्मिकं त्रिवृत्करणं प्रतिपादितं भवति। सूत्रे मांसादीत्यादिपदेन पुरीषमनसोर्ग्रहणम् ॥२१॥

'आशङ्कितं च कञ्चिद्दोषं परिहरिष्यन्' इति यत् प्रागुक्तं तद्विशदयति–अत्राहेति ॥

तुशब्देन चोदितं दोषं अपनुदति। विशेषस्य भावः वैशेष्यम्, भूयस्त्वमिति यावत्। सत्यपि त्रिवृत्करणे क्वचित् कस्यचिद्भूतधातोः भूयस्त्वमुपलभ्यते 'अग्नेः तेजोभूयस्त्वं, उदकस्य अब्भूयस्त्वं, पृथिव्या अन्नभूयस्त्वम्' इति। व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम्। व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिद्ध्येत्। तस्मात् सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोवन्नविशेषवादो भूतभौतिकविषय उपपद्यते।

तद्वादस्तद्वाद इति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति ॥२२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
द्वितीयाध्यायस्य चतुर्थः पादः
समाप्तश्च अध्यायः

---

विशेषस्य भाव इति। स्वार्थे चायं भावप्रत्ययः। 'धातुः प्रसादान्महिमानमीशम्' 'भूमैव सुखम्' इत्यादिवत् ॥ २२ ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम्

इति श्रीमत्परमहंसपरिव्राजकाचार्य - श्रीमद्भूमानन्दसरस्वती-
श्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादि-
गुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्दतीर्थ-
मुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनी-
प्रवाहनिमज्जनसुहितस्य श्रीमदद्वैतानन्दस्य
कृतौ शारीरकभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्चाध्यायः

—:*:—

## तृतीयोऽध्यायः

### प्रथमः पादः

#### १ तदन्तरप्रतिपत्त्यधिकरणम्

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्॥१॥**

**द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः। परपक्षाणां च अनपेक्षत्वं प्रपञ्चितम्। श्रुतिविप्रतिषेधश्च परिहृतः।**

**तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्ते-इत्युक्तम्। अथेदानीं उपकरणोपहितस्य जीवस्य संसारगतिप्रकारः तदवस्थान्तराणि, ब्रह्मसतत्त्वं, विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ, सम्यग्दर्शनात् पुरुषार्थसिद्धिः, सम्यग्दर्शनोपायविधिप्रभेदः, मुक्तिफलानियमश्च-इत्येतदर्थजातं तृतीयेऽध्याये निरूपयिष्यते। प्रसङ्गागतं च किमप्यन्यत्।**

---

उमाकलितवामाङ्गं उत्तंसितसुधाकरम्।
करुणोल्लसितापाङ्गं शरणं यामि शङ्करम्॥ १ ॥

सङ्गतिं दर्शयन् वृत्तवर्तिष्यमाणलक्षणयोः सुखावबोधाय अर्थं सङ्कलयति—द्वितीयेऽध्याय इत्यादिना। अयं भावः—प्रथमाध्यायोक्ते वेदान्तानां ब्रह्मणि समन्वये द्वितीयाध्यायेन विरोधः परिहृतः स्मृत्यादीनाम्। तथा च अध्यायद्वयेन वेदान्तप्रमाणकतया ब्रह्म प्रतिष्ठापितम्। तृतीयाध्यायेन तु तत्प्राप्तौ उपायः प्रतिपाद्यते-इति सङ्गतिः। न हि अप्रतिष्ठिते ब्रह्मस्वरूपे तत्प्राप्तावुपायः क इति जिज्ञासावसरः।

तत्र च 'पुरुषार्थोऽतश्शब्दात्' इत्यधिकरणेन तत्प्राप्तौ तत्साक्षात्कार एवोपाय इति प्रतिपाद्यते। साक्षात्कारसाधनं वैराग्यं जीवस्य गत्यागतिप्रपञ्चपरेण प्रथमपादेन समर्थ्यते। ब्रह्मसाक्षात्कारश्च तत्त्वमसीत्यादिवाक्यजन्यं इति तस्य तत्त्वंपदार्थ-

तत्र प्रथमे तावत् पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रद-र्श्यते वैराग्यहेतोः । 'तस्माज्जुगुप्सेत' इति च अन्ते श्रवणात् ।

जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कः अविद्याकर्मपूर्वप्रज्ञा-परिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते - इत्येतदवगतम् 'अथैनमेते

---

ज्ञानायत्ततया द्वितीयपादे जीवावस्थानिरूपणपरैरधिकरणैः त्वम्पदार्थो विविच्यते, 'न स्थानतः' इत्याद्यधिकरणैर्ब्रह्मतत्त्वनिरूपणपरैः तत्पदार्थः । 'फलमत उपपत्तेः' इति पादान्त्याधिकरणेन तु ईश्वरानुग्रहस्तत्र कारणमिति प्रतिपाद्यते । तृतीयपादेन तु गुणोपसंहारानुपसंहारतदुपयोगिविद्याभेदाभेदप्रपञ्चनपरेण उपासनाजनितचैत्तैकाग्र्य-लक्षणं ब्रह्मसाक्षात्कारसाधनं निरूप्यते । चतुर्थपादेन च 'पुरुषार्थोऽतः' इत्यधि-करणं विहाय अवशिष्टैरधिकरणैः 'ज्ञानस्य बहिरङ्गसाधनानि कर्माणि अन्तरङ्ग-साधनानि सन्न्यासशमदमादीनि' इति निरूपणाय तेषां विधीनां प्रभेदा विचार्यन्ते । अध्यायान्त्याधिकरणेन च, उत्पन्ने सम्यग्ज्ञाने मुक्तिरूपस्य फलस्य प्रतिबन्धकाभावा-पेक्षानियतत्वाभावः प्रतिपाद्यते । तथा च, कृत्स्नेन तृतीयाध्यायेन सपरिकरं मोक्ष-साधनतया ब्रह्मसाक्षात्कारो व्युत्पाद्यते । प्रसङ्गात् गुणोपसंहारपादे लोकायतमत-निराकरणं च भविष्यति ।

प्राणपादे च जीवोपकरणानां प्राणानां उत्पत्तिर्निरूपिता । रंहतिपादेन च प्राणादिविशिष्टस्य गतिर्निरूप्यत इति, द्वितीयान्त्यपादेन तृतीयाद्यपादस्य आन्त-रालिकोऽपि सम्बन्धोऽस्ति ।

कृत्स्नाया अपि मोक्षोपायप्रवृत्तेः ऐहिकामुष्मिकफलवैराग्यायत्ततया प्रथमतः तदेव दृढीक्रियते-इत्याह—तत्र प्रथमे तावदिति । [1]पञ्चाग्निविद्याया वैराग्यपर्य-वसायित्वं तदुपसंहारपर्यालोचनया अवगम्यत इति दर्शयति—तस्मादिति । यतः, पापिनां सुखगन्धोऽपि नास्ति, पुण्यवतां तु देवभृत्यत्वादिप्रयुक्तः सुखगन्धो यद्यपि वर्तते, तथापि उत्क्रान्तिप्रमुखा गर्भवासान्ता दुःखपरम्परा दुष्परिहरा, तस्मादित्यर्थः ।

विवादविषयं निष्कष्टुं उभयसम्मतमर्थं दर्शयति—जीवो मुख्यप्राणेति । अथैनमेते प्राणा अभिसमायन्तीत्येवमादेरिति । अयमर्थः तत्र व्युत्पादितः—

---

1. मु. पञ्चाग्निविद्याश्रितस्य विचारस्य

प्राणा अभिसमायन्ति ' इत्येवमादेः ' अन्यन्नवतरं कल्याणतरं रूपं कुरुते ' (बृ. उ. ४।४।१-४) इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात् । धर्माधर्मफलोपभोगसंभवाच्च । सः किं देहबीजभूतैर्भूतसूक्ष्मैः असंपरिष्वक्तो गच्छति आहोस्वित् संपरिष्वक्तः-इति चिन्त्यते ।

किं तावत् प्राप्तम् ? असंपरिष्वक्त इति । कुतः ? करणोपादानवत् भूतोपादानस्य अश्रुतत्वात् । ' स एतास्तेजोमात्राः समभ्याददानः ' (बृ.उ.

---

यथा राजानं ग्रामात् ग्रामान्तरं जिगमिषुं भृत्या अनुगच्छन्ति, एवमेते प्राणा जीवस्य मरणकालगतमोहानन्तरं लोकान्तरं जिगमिषुं तं अनुगता भवन्ति । 'स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्ववक्रामति ' तेजोमात्राः—इन्द्रियाणि । ततश्च बाह्यविज्ञानलोपे सति जीवस्य पारलौकिकफलगोचरः कर्मबलायातः प्रत्ययविशेषो जायते । ' तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ' विद्या-उपासना । पूर्वप्रज्ञा-अतीतमनुष्यमर्कटादिजात्युचितव्यवहारवासना । ' तद्यथा तृणजलायुका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरति, एवमेवायमात्मा इदं शरीर निहत्य अविद्यां गमयित्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरति ' यथा तृणजलूका एकस्य तृणस्य अग्रभागमागत्य अन्यमाक्रमं-स्थानं तृणं आसाद्य पूर्वस्मात्तृणादात्मानमुपसंहरति, एवमेव जीवः पूर्वशरीरं विमुक्तप्राणमचेतनमापाद्य अन्यमाक्रमं-स्थानं शरीरं आसादयति । तदनन्तरं, यथा सुवर्णकारः किञ्चित्सुवर्णमादाय समीचीनमाभरणमुत्पादयति एवमेवायमात्मा अन्यत् नवतरं कल्याणतरं रूपं-शरीरं कुरुते-इत्यन्तेन प्रतिपादितम् । उक्तेऽर्थे उपपत्तिमाह-धर्माधर्मेति । अनुत्क्रान्तस्य हि न स्वर्गनरकादिगमनं सम्भवति । उत्क्रान्तिश्च विभोर्जीवस्य न इन्द्रियाद्युपाधिविनाकृतस्य सम्भवति । अतः उपपत्तिबलादपि प्राणादियुक्तस्य जीवस्य उत्क्रान्तिरुपेया । ननु-इन्द्रियपरिष्वङ्गस्य स्वीकृततया भूतसूक्ष्मपरिष्वङ्गः सिद्ध एव, इन्द्रियाणां सूक्ष्मभूतरूपत्वात्-इत्यतो विशिनष्टि—देहबीजभूतैरिति । स्थूलदेहबीजभूतैरित्यर्थः । तथा च इन्द्रियातिरिक्तं यत् स्थूलशरीरं तत्सूक्ष्मावस्थानि यानि भूतानि तद्विषयः संशयः ।

४।४।१) इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति, वाक्यशेषे चक्षुरादिसंकीर्तनात् । नैवं भूतमात्रोपादानसंकीर्तनमस्ति । सुलभाश्च सर्वत्र भूतमात्राः । यत्रैव देह आरब्धव्यः तत्रैव सन्ति । ततश्च तासां नयनं निष्प्रयोजनम् ।

तस्मात् असंपरिष्वक्तो यातीति ।

एवं प्राप्ते पठत्याचार्यः 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः' इति ।

---

अयमत्र पूर्वपक्षाशयः—उक्तभूतपरिष्वङ्गो जीवस्य किं श्रुतितः, आहोस्वित् न्यायतः ? । नाद्यः 'स एतास्तेजोमात्राः' इत्यादौ तदश्रवणात् । चन्द्रलोकारोहावरोहप्रतिपादकवाक्यपर्यालोचनयापि न सिध्यति । [1]तद्धि इत्थमाम्नायते—'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षं अपरपक्षात् यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशं आकाशाच्चन्द्रमसं एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन् यावत्सम्पातमुषित्वा अथ एतमेवाध्वानं पुनर्निवर्तन्ते यथेतं आकाशं आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति' इति । अत्र हि इष्टादिकारिणां धूमाद्यातिवाहिकदेवताभिः चन्द्रलोकं प्रति गमनं तेषामेव आकाशादिक्रमेण पुनरवरोहः [आम्नातः] । नात्र तेषामारोहतां भूतपरिष्वङ्गप्रतिपादकः कश्चिच्छब्दोऽस्ति । अतो न श्रुतिपर्यालोचनया तत्सिद्धिः । वाक्यशेष इति । 'एकीभवति न पश्यतीत्याहुः' इत्या[दौ](दिना) । न द्वितीय इत्याह—सुलभाश्चेति । इतो हि भूतमात्राभिस्सहगमनं तस्मिन् लोके भोगोपयोगिशरीरारम्भाय । तत्तु तस्मिन्नेव लोके विद्यमानैर्भूतैः सिद्धमिति वृथा इतो भूतानां नयनम् ।

---

1. आ. तत्र हि इत्थं

**तदन्तरप्रतिपत्तौ - देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तः रंहति-गच्छति-इत्यवगन्तव्यम्। कुतः ? प्रश्ननिरूपणाभ्याम्। तथाहि प्रश्नः—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा. उ. ५।३।३) इति। निरूपणं च प्रतिवचनं-द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीः दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापःपुरुषवचसो भवन्ति' (छा. उ. ५।९।१) इति। तस्मात् अद्भिः परिवेष्टितो जीवो रंहति-व्रजति इति गम्यते।**

---

'तदन्तरप्रतिपत्तौ' इतिसूत्रे मांसादिभौममितिसूत्रगतमांसादिपदेनोपस्थितं शरीरं तत्पदेन परामृश्यते। तदाह—देहान्तरप्रतिपत्ताविति। प्रश्ननिरूपणाभ्यामिति। अयं भावः—वेत्थयथापञ्चम्यामाहुताविति श्वेतकेतुमारुणेयं प्रति प्रवाहणेन जैवलिना पृष्टे सति श्वेतकेतुना नोत्तरितं, पुनश्च तत्पित्रा आगत्य प्रवाहणः पृष्टः, तं प्रति, द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपानग्नीन् कल्पयित्वा श्रद्धासोमवृष्ट्यन्नरेतोरूपाणि च आहुतिद्रव्याणि कल्पयित्वा श्रद्धादीनां द्युलोकादिषु याः प्राप्तयः तत्राहुतित्वं च कल्पयित्वा श्रद्धादीनां चाहुतीनां सोमराजवृष्ट्यन्नरेतोगर्भरूपाः परिणामाः प्रतिपादिताः। आदित्यादीनां च समिदादिभावः कल्पितः। अनन्तरं च 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहृतम्। अतः अयं सन्दर्भः पञ्चाग्निविद्यापर एव। तथा च, 'तद्य इत्थं विदुः' इति तस्या एव विद्याया अर्चिरादिना ब्रह्मप्राप्तिं फलं कथयति। अस्यां च उपासनायां द्युलोकादिषु श्रद्धादिशब्दप्रतिपाद्यानामपां प्राप्तिः आलम्बनभूता कुतश्चित् प्रमाणात् स्वसिद्धिमपेक्षते। तच्च प्रमाणं चन्द्रलोकारोहावरोहप्रतिपादकं वाक्यमेव, सोमराजवृष्ट्यन्नादिभावप्रत्यभिज्ञानात्। ततश्च पञ्चाग्निविद्यावाक्ये अबादिपदैः इष्टादिकारिणां द्युलोकादिप्रक्षेप्यत्वेन प्रतिपादनं [1]अपेक्षितम्। तच्च तदैव सम्भवति। यद्यारोहावरोहवाक्ये अब्विशिष्टा इष्टादिकारिणो विवक्षिता भवेयुः। न ह्यन्यथा अबादिपदैः अजहल्लक्षणया तेषां समर्पणं भवति। अतो वाक्यद्वयपर्यालोचनया भूतसूक्ष्मपरिष्वक्तस्यैव रंहणम्-इति। तच्च भूतसूक्ष्मं अग्निहोत्रादिकाले हुतं द्रव्यमेव।

---

1. **अपेक्षितम्**—विवक्षितम्।

नतु अन्या श्रुतिः जलूकावत् पूर्वदेहं न मुञ्चति यावत्, न देहान्तरमाक्रमति-इति दर्शयति 'तद्यथा तृणजलायुका' (बृ. उ. ४।४।३) इति।

तत्रापि अप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकया उपमीयत इति अविरोधः।

एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः—व्यापिनां करणानां आत्मनश्च देहान्तरप्रतिपत्तौ कर्मवशात्

---

[1]ननु-यदि अद्भिः परिवेष्टनं जीवस्य एतस्मिन्नेव शरीरे अङ्गीक्रियते, तथासति पारलौकिकशरीरसम्बन्ध एतद्देहावस्थितिकाले एव प्राप्त इत्यायाति। तच्च तद्यथातृणजलायुकेतिश्रुतिविरुद्धम्। तया हि श्रुत्या, यथा जलूका पूर्वसम्बद्धतृणस्यान्तं प्राप्य तृणान्तरेण सम्बध्यते तथा जीवः पूर्वदेहं विहाय देहान्तरं प्राप्नोति—इति प्रतिपाद्यते। तथा च, दृष्टान्तस्वारस्यात् पूर्वदेहावसान एव देहान्तरप्राप्तिरिति प्रतीतेः, कथं एतस्मिन्नेव शरीरे देहान्तरबीजभूतसूक्ष्मभूतपरिष्वङ्गः—इति शङ्कते—नन्वन्या श्रुतिरिति। तत्राप्यप्परिवेष्टितस्यैवेति। अयं भावः—'पूर्वतृणत्यागसमयएवोत्तरतृणग्रहणं' इत्यंशेन दृष्टान्तसाम्यं न विवक्षितम्। अपि तु—यथा जलूका तृणान्तरग्रहणकाले दीर्घीभूता तृणद्वयसंलग्ना भवति तथा जीवोऽपि पूर्वदेहत्यागकाले [2]भूतसूक्ष्मपरिणामभूतं स्थूलदेहं भावनया सम्बद्धो दीर्घीभूत इव भवति-इत्येतावत् साम्यं विवक्षितमिति। ननु—पारलौकिकशरीरे भावना न सम्भवति। सा हि प्रत्ययावृत्तिरूपा। पारलौकिके च, मरणकाले प्रत्यय एव कुतः-इतिशङ्कानिराकरणार्थं कर्मोपस्थापितेत्युक्तम्।

एवं श्रुत्यनुसारेण स्वपक्षं निरूप्य, मतान्तराणि निरस्यति—एवमिति। या विकल्पनाः तास्सर्वा एव अनादर्तव्याः इत्यन्वयः। साङ्ख्यानां कल्पनामाह-व्यापिनामिति। वृत्तिलाभः—तच्छरीरप्रदेशावच्छेदेन ज्ञानादिकार्यजनकता।

---

1. नन्वित्यादिशङ्कासमाधानाभ्यां रचिता भाष्यव्याख्या भामतीप्रस्थानानुसारिणी।

2. मु. भूतसूक्ष्मपरिणामभूतस्थूलदेहभावनया

वृत्तिलाभः तत्र भवति ; केवलस्यैवात्मनो वृत्तिलाभः तत्र भवति इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते ; मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते ; जीव एव उत्प्लुत्य देहात् देहान्तरं प्रतिपद्यते शुक इव वृक्षाद्वृक्षान्तरम् - इत्येवमाद्याः, ताः सर्वा एव अनादर्तव्याः, श्रुतिविरोधात् ॥ १ ॥

ननु—उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात् । तत्र, कथं सामान्येन प्रतिज्ञायते-सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति । अत उत्तरं पठति—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

---

[1]नैयायिककल्पनामाह-केवलस्यैवेति । येषां मते आत्मनो बाह्येन्द्रियाणां च विभुत्वं मनस्त्वणुत्वं, तन्मतमाह-मन एव वा केवलमिति । दिगम्बरकल्पनामाह-जीव एवेति । इत्येवमाद्या इत्यनेन, क्षणिकानामात्मादीनां पारलौकिकशरीरावच्छेदेन उत्पत्तिरिति-बौद्धानां, देहातिरिक्तस्यात्मनोऽभावात् परलोकगतिरेव नास्तीति—लोकायतस्य च, कल्पना संगृह्यते ॥ १ ॥

तत्र कथं सामान्येनेति । ननु—शरीरस्य पाञ्चभौतिकतया अत्र अप्छब्दो भूतान्तराणामुपलक्षको भविष्यति । अत्र हि, पुरुषवचस इत्यनेन अपां पुरुषपदप्रतिपाद्यत्वं कथं भवतीति विवक्षितम् । अपां च पुरुषपदप्रतिपाद्यता न साक्षात्, अपि तु शरीराकारेण परिणतानामेव । तथा च कथं आपः शरीराकारपरिणता इति प्रश्नार्थो भवति । केवलानां च अपां शरीराकारपरिणत्यसम्भवात् भूतान्तरोपलक्षकत्वमुचितमेव—इति चेत्—

भवेदेतदेवम्, यदि शरीरस्य पाञ्चभौतिकता भवेत्, न तु तदस्ति । तथा [2]हि सति एकस्मिन्नेव शरीरे पृथिवीत्वादिनिवेशस्यावश्यकतया पृथिवीत्वादिजातिसाङ्कर्यं भवेत् । न च—[3]शरीरस्यैकैकभूतारब्धत्वं यदि जातिसाङ्कर्यपरिहारा-

---

1. नैयायिककल्पनामिति व्याख्यान्तरेषु सौगतकल्पनां इत्युक्तम् ।
2. मु. 'हि' नास्ति
3. मु. शरीरस्यैकभूता

**तुशब्देन चोदितामाशङ्कामुच्छिनत्ति। त्र्यात्मिका ह्यापः, त्रिवृत्करणश्रुतेः। तास्वारम्भिकास्वभ्युपगतासु इतरदपि भूतद्वयं अवश्यमभ्युपगन्तव्यं भवति। त्र्यात्मकश्च देहः, त्रयाणामपि तेजोबन्नानां तस्मिन् कार्योपलब्धेः।**

---

याङ्गीक्रियते तदा अवकाशसमीरणोष्मप्रस्वेदगन्धात्मना उपलम्भो न स्यादिति वाच्यम्। यथा, सुवर्णस्य तैजसत्वेऽपि उपष्टम्भकभूतान्तरवशात् पीतत्वादिप्रत्ययः, तथा, पार्थिवादिषु शरीरेष्वपि भूतान्तराणामुपष्टम्भकतया तत्तद्धर्मप्रतीतिरुपपद्यते।

त्रिवृत्करणपक्षमुपेत्याह—त्र्यात्मिका हीति। पञ्चीकरणपक्षे तु पञ्चात्मकत्वं द्रष्टव्यम्।

त्र्यात्मकश्च देह इति। न च जातिसाङ्कर्यापत्त्या त्र्यात्मकत्वं त्यक्तुमुचितम्। मूतत्वमूर्तत्वयोः आकाशे मनसि च परस्परात्यन्ताभावसमानाधिकरणत्वेऽपि घटादौ समावेशदर्शनेन, पृथिवीत्वादीनामपि क्वचित् परस्परात्यन्ताभावसमानाधिकरणत्वेऽपि शरीरे समावेशोपपत्तेः।

न च—धर्माणां [1]परस्परासामानाधिकरण्ये परस्परात्यन्ताभावसमानाधिकरण जातित्वं [2]प्रयोजकम्। जातित्वं च अवच्छेदककोटौ अवश्यं निवेशनीयमेव। अन्यथा घटान्यत्वपटान्यत्वयोरपि पटघटयोः परस्परात्यन्ताभावसमानाधिकरणयोः कुड्यादावनिवेशापत्त्या तस्य घटत्वादिप्रसङ्गात्-इति वाच्यम्। धर्माणां परस्परासामानाधिकरण्यस्य किञ्चिदवच्छेदेन ग्रहणं विना अनुपपत्तेरभावेन तथावच्छेदककल्पनाया एव निर्मूलत्वात्। यत्र हि कार्यत्वकारणत्वव्यापकत्वव्याप्यत्वशक्तत्वशक्यत्वादौ व्यक्तिविशेषगततया ग्रहणेन व्यक्त्यन्तरेऽपि प्रवृत्त्यादिकमुपलभ्यते, तत्र हि अवच्छेदककल्पनमावश्यकम्।

न च—अत्रापि, गोत्वे गृहीते 'नायमश्वः' इति प्रतीतिर्दृश्यते, अतः गोत्वाश्वत्वयोर्विरुद्धत्वं परस्परासामानाधिकर(ण्यं)[ण्यरूपं][3]उक्तावच्छेदकेनैव ग्राह्यमिति

---

1. मु. परस्परासामानाधिकरण्येऽपि

2. प्रयोजकम्—अवच्छेदकम्। दृश्यते हि कारणतावच्छेदके कारणताप्रयोजकशब्दप्रयोगः। भूतत्वमूर्तत्वयोस्तु अजातित्वात् समानाधिकरणत्वोपपत्तिः।

3. उक्तावच्छेदकेनैव ग्राह्यमिति गोत्वाश्वत्वाद्यनन्तविरुद्धजातीनां परस्परासामानाधिकरण्यस्य अनुभूयमानतया कार्यत्वादिन्यायेन तदपि अवच्छेदकेन क्रोडीकृत्यैव ग्राह्यम्-इति भावः।

वाच्यम् । तथासति सास्नादिमत्त्वकेसरादिमत्त्वयोस्तदुपाध्योरपि विरुद्धत्वस्य अवच्छेदकापेक्षत्वेन [1]जातित्वस्यापि अवच्छेदककोटौ निवेशो न भवेत् ।

[2]तथा च यथा उपाधीनां विरुद्धत्वं तेन तेन विशेषरूपेणैव अननुगतेन गृह्यते, तथा जातीनामपि गोत्वाश्वत्वादीनां तत्तद्विशेषरूपेणैव विरुद्धत्वं ग्राह्यम् । एवं च 'गोत्वमश्वत्वविरुद्धम्' इत्येवंरूपेण आप्तादिभ्योऽवगच्छतः एकधर्मज्ञाने धर्मान्तराभावज्ञानमुपपद्यत इति न तदर्थं उक्तावच्छेदककल्पना ।

अपि च–नेदं जातिगतासामानाधिकरण्यसामान्येऽवच्छेदकम् । जातेः यत्किञ्चित्सामानाधिकरण्यनियमेन तत्सामान्याभावस्य तत्राभावात् । परस्परासामानाधिकरण्यं तु नानुगतम्, येन अनुगतमवच्छेदकमपेक्षेत । असामानाधिकरण्यस्य परस्परत्वं नाम [3]उपात्तधर्मिद्वयगतत्वे सति उपात्तधर्मिभ्यामेव निरूपितत्वम्। उपात्तानां च अनुगतत्वाभावात् कथं तद्घटितं तत् अनुगतं स्यात् ।

न च–जातिगतजात्यसामानाधिकरण्यमवच्छेद्यम्, अतो नाननुगमः-इति वाच्यम् । व्यापकजातौ व्याप्यजात्यसामानाधिकरण्यसत्त्वेऽपि तत्र अवच्छेदकस्याभावात्, अवच्छेदकस्यापि परस्परत्वघटितत्वेन अननुगमस्य अपरिहार्यत्वाच्च ।

सुवर्णघटे परस्परात्यन्ताभावसमानाधिकरणयोर्घटत्वसुवर्णत्वयोः सत्त्वेन [4]अवच्छेदकस्यापि अवच्छेद्याधिकवृत्तित्वात् । न च–सौवर्णो घट एव न भवति, अपि तु घटप्रतिकृतिरिति–वाच्यम् । तत्रापि घटइतिव्यवहारस्य जलाहरणादिकार्यस्य च दर्शनेन घटत्वाभावस्य वक्तुमशक्यत्वात् ।

यदि च सुवर्णत्वव्याप्यं [5]घटत्वं अन्यदेव पृथिवीत्वव्याप्यात् घटत्वात् इति न जातिसाङ्कर्यम्; तथासति महाभूतगतपृथिवीत्वाद्यपेक्षया शरीरत्वव्याप्यं पृथिवीत्वादिकमन्यदेवेति नात्रापि जातिसाङ्कर्यम् ।

---

1. जातित्वोस्यापीति उपाधिक्रोडीकाराभावापत्त्या इति शेषः । मु. जातिवदस्यापि ।

2. मु. 'न च'

3. उपात्तेति असामानाधिकरण्याश्रयत्वेनाभिमतेत्यर्थः ।

4. अवच्छेदकस्य - अवच्छेदकत्वेनाभिमतस्य, अवच्छेद्याधिकवृत्तित्वात्- अवच्छेद्याशून्यवृत्तित्वात् । तथा च न तस्य अवच्छेदकत्वं वक्तुं शक्यम्, अनतिप्रसक्तस्यैव अवच्छेदकतायाः सम्प्रतिपन्नत्वात्-इति भावः ।

5. मु. घटत्वाद्यन्यदेव; पृथिवीत्वव्याप्यघटत्वाद्यन्यदेव

पुनश्च त्र्यात्मकः, त्रिधातुत्वात्त्रिभिर्वातपित्तश्लेष्मभिः । न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्मात् भूयस्त्वापेक्षोऽयं 'आपः पुरुषवचसः' इति प्रश्नप्रतिवचनयोः अप्शब्दः, न कैवल्यापेक्षः । सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते ।

ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते ।

नैष दोषः—इतरापेक्षया अपां बाहुल्यं भविष्यति । दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहान्तरारम्भे, कर्माणि च अग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि । कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिः द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति । तस्मादपि अपां बाहुल्यप्रसिद्धिः । बाहुल्याच्च अप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणां उपादानमिति निरवद्यम् ॥ २ ॥

## प्राणगतेश्च ॥ ३ ॥

---

अतो न शरीरस्य पाञ्चभौतिकत्वं प्रमाणबलायातं [1]प्रत्याख्यातुं युक्तम् । तथा च श्रुतिरपि—'पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः, (बृ. उ. ४।४।५) इति आत्मनः पृथिव्यादिविकारत्वं प्रतिपादयन्ती, साक्षात् आत्मनि पृथिवीत्वादिविकारत्वस्यासम्भवात् देहैक्याध्यासमाश्रित्य प्रवृत्ता, देहस्य पाञ्चभौतिकत्वमुपहरति । अतो युक्तमुक्तं त्र्यात्मकश्च देह इति ॥ २ ॥

ननु—यदि पञ्चाग्निविद्यावाक्यपर्यालोचनया भूतसूक्ष्मविशिष्टस्य जीवस्य रंहणं, तदा दक्षिणमार्गगामिनामेव भूतपरिष्वङ्गस्सिध्यति, पञ्चाग्निविद्याया [2]दक्षिणमार्गालम्बनत्वात्, न तु उत्तरमार्गगामिनां, नापि नरकयायिनाम्—इत्यत आह प्राणगतेश्चेति ।

अयं भावः - जीवद्दशायां हि चक्षुरादीनां प्राणानां [3]गमनादिकं देहाश्रयाणामेव दृष्टम् । मरणानन्तरमपि लोकान्तरगमनं तेषां श्रुतं मार्गत्रयसाधारण्येन ।

---

1. मु. प्रत्याख्यातुं शक्यम्

2. दक्षिणमार्गालम्बनत्वादिति द्युपर्जन्यादिपञ्चाग्नीनां पुनरावृत्तिमार्गे एव सम्भवात् इति भावः ।

3. मु. गमनागमनादिकं

प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. उ. ४।४।२) इत्यादिश्रुतिभिः। सा च प्राणानां गतिः नाश्रयमन्तरेण संभवतीत्यतः, प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते। न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा, जीवतो दर्शनात् ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

स्यादेतत्—नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः। तथाहि श्रुतिः मरणकाले वागादयः प्राणा अग्न्यादीन् देवान् गच्छन्तीति दर्शयति 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' (बृ. उ. ३।२।१३) इत्यादिना-इति चेत्,

---

अतः तदपि देहाश्रयाणामेव वक्तव्यम्। तत्र च यावल्लोकान्तरप्राप्ति स्थूलभूतानामसम्भवात् सूक्ष्मभूतरूपमेव प्राणगत्युपपादकं शरीरं कल्पनीयम्। पञ्चाग्निविद्यावाक्यं च स्थालीपुलाकन्यायेन मार्गत्रयरंहणेऽपि भूतसूक्ष्मसंपरिष्वङ्गज्ञापकं भविष्यति। तथा च 'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन वै ॥' [ब्र. पु.] इति वचनं पुर्यष्टकान्तर्गतभूतसूक्ष्मसंपरिष्वङ्गं आमोक्षं दर्शयति ॥ ३ ॥

वातं प्राण इत्यादिनेति। आदिपदेन 'चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रं पृथिवीं शरीरं आकाशमात्मा ओषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवति' इति गृह्यते। यत्र-यस्मिन् काले, अस्य पुरुषस्य वागादय अग्न्यादीन् प्रति गच्छन्ति, तदा अयं पुरुषः क-किमालम्बनः परलोकाय भवतीति याज्ञवल्क्यं प्रति आर्तभागस्य प्रश्नः।

तथा च, अनया श्रुत्या वागादिप्राणानामग्न्यादिगमनप्रतिपादनात्, तमुत्क्रामन्तमितिश्रुत्या च जीवेन सह गमनप्रतिपादनात्, उत्क्रान्तिविषयश्रुतीनां मिथो विगानेन स्वार्थेतात्पर्यासम्भवात्, न जीवस्य श्रुत्यनुसारेण उत्क्रान्तिर्निरूपयितुं शक्यते—इति शङ्ककस्य हृदयम्।

न—भाक्तत्वात् । वागादीनामग्न्यादिगतिश्रुतिर्गौणी, लोमसु केशेषु च अदर्शनात् । 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति हि तत्राम्नायते । न हि लोमानि केशाश्च उत्प्लुत्य ओषधीर्वनस्पतींश्च गच्छन्तीति संभवति । न च जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्प्यते । नापि प्राणैर्विना देहान्तरे उपभोग उपपद्यते। विस्पष्टं च प्राणानां सह जीवेन गमनं अन्यत्र श्रावितम् । अतो वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन् गच्छन्तीति उपचर्यते ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

स्यादेतत्—कथं पुनः 'पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति' इत्येतत् निर्धारयितुं पार्यते, यावता, नैव प्रथमेऽग्नौ अपां श्रवणमस्ति । इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेन अधीताः । तेषां च प्रमुखे 'असौ वाव लोको गौतमाग्निः' इत्युपन्यस्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा. ५·४।१-२) इति श्रद्धा हौम्यद्रव्यत्वेनावेदिता । न तत्र आपो हौम्यद्रव्यतया श्रुताः । यदि नाम पर्जन्यादिषु उत्तरेषु चतुर्ष्वग्निषु अपां हौम्यद्रव्यता परिकल्प्येत, परिकल्प्यतां नाम ।

---

प्रसक्ते हि विरोधे यदि लक्षणादिना विरोधं परिभूय विवक्षितार्थत्वं सम्भवति, तदा न अत्यन्तमविवक्षितार्थत्वमुचितम् । तथा च, क्वलक्षणाश्रयणमित्याकाङ्क्षायां, 'वनस्पतीन् केशाः' इत्यादौ दृष्टविरोधपरिहाराय लक्षणाया अवश्याश्रयणीयतया, तत्प्रायपठितं अग्निंवागप्येतीत्येतदेव लाक्षणिकं भविष्यति, न तु तमुत्क्रामन्तमित्यादि—इत्यभिप्रायेण परिहरति—भाक्तत्वादित्यादिना । तथा च अग्निंवागप्येतीत्यादौ वागादिपदानि वागाद्यवच्छिन्नतत्तद्देवतांशलक्षकाणि । मरणकाले वागाद्यवच्छिन्नदेवतांशः निरवच्छिन्ने अग्न्यादिस्वरूपे अप्येति-उपाधिकृतं भेदं विहाय एकतां गच्छति-इति वाक्यार्थः ॥ ४ ॥

यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्विति । श्रद्धाहुतेः सोमराजाख्यं परिणाममुक्त्वा, अनन्तरं चत्वारोऽग्नयः 'पर्जन्यो वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ

तेषु होतव्यतयोपात्तानां सोमादीनां अब्बहुलत्वोपपत्तेः । प्रथमे त्वग्नौ, श्रुतां श्रद्धां परित्यज्य अमुना आपः परिकल्प्यन्त इति साहसमेतत् । श्रद्धा च नाम प्रत्ययविशेषः, प्रसिद्धिसामर्थ्यात् । तस्मात् अयुक्तः पञ्चम्यामाहुतौ अपां पुरुषभावः—इति चेत्—

नैष दोषः—यतः, तत्रापि प्रथमेऽग्नौ ता एव—आपः श्रद्धाशब्देनाभिप्रेयन्ते । कुतः ? उपपत्तेः । एवं हि आदिमध्यावसानसंगानात्

---

देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति, पृथिवी वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति, पुरुषो वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतस्सम्भवति, योषा वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भस्सम्भवति' इतीत्थं प्रतिपादिताः । ततश्च, पञ्चाग्निविद्यायां, रंहतां जीवानां स्वर्गलोके सोमभावश्रवणात् , तदनन्तरं च वर्षादिभावप्रतिपादनात् , तेषां स्वर्गलोकमारभ्यैव भूतपरिष्वङ्गः सिध्येत् । स्वर्गलोकगमनात् प्राक्तु श्रद्धापदेन प्रतिपादनात् श्रद्धाविशिष्टस्यैव इत उत्क्रान्तिस्सिध्येत् । अतः भूतपरिष्वक्तस्य इतआरभ्योत्क्रमणमिति पञ्चाग्निविद्यावाक्यपर्यालोचनया न सिध्यति । न च 'पञ्चम्यामाहुतावापः पुरुषवचसः' इत्युपक्रमोपसंहारपर्यालोचनया पञ्चस्वप्याहुतिषु अपां सम्बन्धावगमात् श्रद्धापदं अब्लक्षकमिति वाच्यम् । एतादृशोपक्रमोपसंहारपर्यालोचनया हि न पञ्चसु अपां सम्बन्धः प्रतीयते, अपि तु पञ्चमी या रेतोरूपा आहुतिः तत्रैव अपां सम्बन्धः प्रतीयते । अतः न तदनुसारेण श्रद्धापदं लक्षणया नेयम् । तस्मादयुक्त इति । पञ्चम्यामाहुताविति वचनपर्यालोचनया श्रद्धाशब्दो लक्षणया व्याख्यातुं अयुक्त इत्यर्थः ।

एवं ह्यादिमध्यावसानसङ्गानादिति । अयं भावः-उपक्रमे 'पञ्चम्यामाहुतावापः पुरुषवचसः' इत्यत्र अपां शब्दो यद्यपि पुरुषवचस [1]इत्यत्रैवान्वयः, तथापि, पञ्चम्यामाहुतावित्यत्र कस्याहुतावित्यपेक्षायां सन्निधानात् 'अपां' इत्येव विपरिणम्यते । अबाहुतेश्च पञ्चमत्वाय अन्यासाञ्चतसृणामाहुतीनामपेक्षायां सजातीयेनैव-सङ्ख्यापूरणमितिन्यायात् ता अपि अबाहुतय इत्येव अवगम्यते । तथा च उपक्रमे तावत् पञ्चस्वप्याहुतिषु अबनुवृत्तिरवगता भवति । एवं 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः' इत्युपसंहारेऽपि पञ्चस्वाहुतिषु अपामनुवृत्तिरवगम्यते ।

---

1. मु. इत्यत्रान्वयः

अनाकुलमेतत् एकवाक्यमुपपद्यते। इतरथा पुनः, पञ्चम्यामाहुतौ अपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यदि अनपो हौम्यद्रव्यं श्रद्धां नाम अवतारयेत्, ततः अन्यथा प्रश्नः अन्यथा प्रतिवचनमिति एकवाक्यता न स्यात्। 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति चोपसंहरन् एतदेव दर्शयति।

श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवत् अब्बहुलं लक्ष्यते। सा च श्रद्धाया अप्त्वे युक्तिः। कारणानुरूपं हि कार्यं भवति। न च श्रद्धाख्यः प्रत्ययो मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमाय उपादातुं शक्यते पश्वादिभ्य इव हृदयादीनि इति आप एव श्रद्धाशब्दा भवेयुः। श्रद्धाशब्दश्च अप्सु उपपद्यते, वैदिकप्रयोगदर्शनात् 'श्रद्धा वा आपः' (तै. सं. १।६।८।१) इति। तनुत्वं च श्रद्धासारूप्यं गच्छन्त्य आपो देहबीजभूताः इत्यतः श्रद्धाशब्दाः स्युः, यथा सिंहपराक्रमो नरः सिंहशब्दो भवति। श्रद्धापूर्वककर्मसमवायाच्च अप्सु श्रद्धाशब्द उपपद्यते, मञ्चशब्द

---

अपि च तत्र इतितुपञ्चम्यामिति इतिशब्दः पूर्वप्रकृतप्रकारपरामर्शी। ततश्च श्रद्धादिपर्यायोक्तस्सर्वोऽपि अपामेव पुरुषपरिणतिप्रकार इत्यवगम्यते। तच्च तदैव सङ्गच्छते। यदि आप एव सोमराजादिपरिणतिक्रमेण पञ्चमाहुतौ पुरुषवचसो भवेयुः।

तथा च उपक्रमोपसंहारपर्यालोचनया पञ्चस्वाहुतिष्वपामनुवृत्तेः स्वरसतोऽवगमात् तदनुरोधाय श्रद्धाशब्दस्य अप्स्वेव लक्षणा उपेया। एवंसति आदिमध्यावसानसङ्गानं भवतीति।

श्रद्धापदेन अपां लक्षणायां शक्यसम्बन्धमाह—श्रद्धाकार्यं चेति। मुख्यार्थग्रहणे [1]अनुपपत्त्यन्तरमाह—न च श्रद्धाख्य इति। न चेयं लक्षणा अप्रसिद्धेत्याह—श्रद्धाशब्दश्चेति। कार्यकारण[भाव]सम्बन्धेन लक्षणामुक्त्वा गौणीमप्याह—तनुत्वमिति। प्रकारान्तरेण लक्षणामेवाह—श्रद्धापूर्वकेति।

---

1. अनुपपत्त्यन्तरम् आदिमध्यावसानविगानापत्तिरूपानुपपत्तेरन्यां अनुपपत्तिम्।

इव पुरुषेषु। श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः, 'आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे' इति श्रुतेः ॥ ५ ॥

## अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अथापि स्यात् प्रश्नप्रतिवचनाभ्यां नाम आपः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्। न तु तत्संपरिष्वक्ता जीवा रंहेयुः। अश्रुतत्वात्। न ह्यत्र अपामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति। तस्मात् 'रंहति संपरिष्वक्तः' इत्ययुक्तम्-इति चेत्—

नैष दोषः—कुतः? इष्टादिकारिणां प्रतीतेः। 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' (छा. उ. ५।१०।३) इत्युपक्रम्य इष्टादिकारिणां धूमादिना पितृयाणेन पथा चन्द्रप्राप्तिं कथयति 'आकाशाच्चन्द्रमसं एष सोमो राजा' छा. उ. ५।१०।४) इति। त एव इहापि प्रतीयन्ते, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' (छा. उ. ५।४।२) इति श्रुतिसामान्यात्। तेषां च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात्

---

अस्मै–पुरुषाय, सन्नमन्ते-सम्पादयन्ति। स्वच्छसलिलापूरिततीर्थाद्यवलोकने हि स्नानादिपावनक्रियासु चेतः [1]प्रसीदतीति प्रसिद्धमेतत् ॥ ५ ॥

श्रुतिसामान्यादिति। ननु–'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति' इति स्वर्गं प्राप्तास्वप्सु सोमराजभावेन परिणतासु उपासनाय आहुतिद्रव्यत्वं तत्प्राप्तावाहुतित्वं तदाधारस्य द्युलोकस्य अग्नित्वं इत्यादि कल्प्यते। तत्र आलम्बनसमर्पकं इष्टादिकारिणां[2]आरोहप्रतिपादकवाक्यमिति, तत्पर्यालोचनया अत्र जीववैशिष्ट्यं अपां सिध्यति, एतत्पर्यालोचनया च आरोहतामबादिवैशिष्ट्यमिति। तदेव च वाक्यं अत्र आलम्बनसमर्पकं इत्यत्र नियामकं च, द्युलोकंप्राप्तानामिष्टादिकारिणां एषसोमोराजेति सोमभावस्य आरोहवाक्ये प्रतिपादनात् पञ्चाग्निविद्यावाक्ये च द्युलोकं गतानामपां सोमराजभावेन परिणामप्रति-

---

1. प्रसीदति—श्रद्धत्ते।
2. मु. आरोहावरोहप्रतिपादक

पादनात् उभयत्र सोमराजपदस्य ऐकार्थ्यपर्यवसानं-इति वक्तव्यम्। [1]तत्तु न सम्भवति। एषसोमोराजेति वाक्ये हि एतत्पदं न इष्टादिकारिणां परामर्शकम्। 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इति तेषां बहुवचनान्ततयैव प्रस्तुतत्वात्। एष इति च एकवचनान्तम्। अतः आकाशाचन्द्रमसमित्येकवचनान्ततया सन्निधावुपात्तश्चन्द्र एव तेन परामृश्यते। सोमराजत्वं च चन्द्रस्यैव प्रसिद्धम्। तद्देवानामन्नमित्युत्तरवाक्यमपि 'प्रथमां पिबते वह्निः' इत्यादिशास्त्रानुसारेण चन्द्र एव स्वरसम्। ततश्च धूमादिमार्गेणारोहतां सोमराजभावस्यानवगमात् कथं वाक्यद्वयपर्यालोचनया अभिमतार्थसिद्धिः-इति चेत्,

उच्यते—वाजसनेयके हि 'अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति' इति इष्टादिकारिणां धूमादिमार्गप्राप्तिपूर्वकं पितृलोकाच्चन्द्रमिति चन्द्रप्राप्तिमभिधाय, आम्नायते—'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानं आप्यायस्वापक्षीयस्वेति एवमेनांस्तत्र भक्षयन्ति' इति। अत्र च, तेचन्द्रंप्राप्येति तत्पदेन प्रथमाबहुवचनप्रस्तुतान् इष्टादिकारिणः परामृश्य तेषामेव अन्नत्वं देवभक्ष्यत्वं च प्रतिपाद्यते इत्युररीकरणीयम्। तदैकरूप्याय छान्दोग्येऽपि एषसोमोराजातद्देवानामन्नंतंदेवाभक्षयन्तीति देवान्नत्वं देवभक्ष्यत्वं च तेषामेव वक्तव्यम्। तदुपपत्तये एषसोमोराजेति पूर्ववाक्येऽपि तेषामेव परामर्शो वक्तव्यः। यद्यपि ते बहुवचनेन प्रस्तुताः, तथापि, प्रथमाविभक्त्युपात्तानामेव एष इति प्रथमान्तेन परामर्शसम्भवे, आकाशाच्चन्द्रमसमिति द्वितीयया प्रस्तुतस्य चन्द्रस्य परामर्शो न युक्तः। बहुष्वपि [2]विभक्त्यर्थगुणभूतस्यैकत्वस्य जात्यभिप्रायेण नयनोपपत्तेः। देवान्नत्वं देवभक्ष्यत्वं च तेषां उत्तरसूत्रे प्रतिपादयिष्यति। सोमराज-

---

1. भाक्तंवेतिसमनन्तरसूत्रावतरणिकाभाष्यार्थवर्णनावसरे भामत्यां वाजसनेयकवाक्यस्थस्य 'एनान्' इत्यस्य 'सोममयान् लोकान्' इत्यर्थो वर्णितः, भाष्येतु 'कर्मिणः' इति। कल्पतरौ तु भामत्युक्तार्थस्य युक्ततरत्वमुक्तम्। तत्र उपपत्तितया कल्पतरूक्तं छन्दोगश्रुत्यर्थं वर्णयन् शङ्कते, युक्ततरत्वोक्तेः 'इष्टादिकारिणां प्रतीतेः' इति प्रकृतसूत्रविरोधं अयुक्ततां च सूचयितुम्—**तत्तु न सम्भवति** इत्यादिना। विमृष्टश्चायं परिमले।

2. **विभक्त्यर्थगुणभूतस्य** कर्मधारयोऽयम्। विभक्त्यर्थप्राधान्यवादेऽपि सङ्ख्यातिरिक्तस्यैव तत्, अतः ईक्षत्यधिकरणन्यायेन प्रकृत्यर्थानुसारेण प्रत्ययार्थो नेयः-इति भावः।

प्रत्यक्षमेव आपः सन्ति। ता आहवनीये हुताः सूक्ष्मा आहुतयः अपूर्वरूपाः सत्यः तानिष्टादिकारिण आश्रयन्ति। तेषां च शरीरं नैधनेन विधानेन अन्त्येऽग्नौ ऋत्विजो जुह्वति 'असौ स्वर्गाय लोकाय स्वाहा' इति। ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुतिमय्य आपः अपूर्वरूपाः सत्यः तानिष्टादिकारिणो जीवान् परिवेष्ट्य अमुं लोकं फलदानाय नयन्तीति यत् तदत्र जुहोतिना अभिधीयते 'श्रद्धां जुह्वति' इति।

तथाचाग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' (श-ब्रा. ११।६।२।६) इत्येवमादिना अग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिः प्रदर्शिता।

---

पदमपि तेषु देवभोग्यत्वगुणयोगेन वा, अमृतमयशरीरत्वगुणयोगेन वा उपपद्यते। अतो न सोमराजपदप्रत्यभिज्ञानुपपत्तिः।

अपि च, पर्जन्याग्निं प्रस्तुत्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति' इत्युच्यते। चन्द्रलोकादवरोहवाक्येऽपि 'मेघो भूत्वा प्रवर्षति' इति वर्षभावः प्रतिपाद्यते। तथा च अवरोहवाक्यप्रत्यभिज्ञाऽपि।

तत् सिद्धं वाक्यद्वयपर्यालोचनया भूतसम्परिष्वक्तरंहणम्।

आहुत्योऽपूर्वरूपा इति। यद्यपि सिद्धान्ते [1]ईश्वरप्रसादादिरूपमपूर्वं, मीमांसकादिमते आत्मगतोऽतिशयविशेषः, न तद्रूपत्वं सूक्ष्माणामाहुतीनां, तथापि तत्सहकृतत्वात् तद्रूपोपचारः। ततस्ता इत्यादि। ननु—उत्क्रान्तिसमय एव भूतसूक्ष्मं तत्तन्नाडीविशेषनिष्क्रमणरूपफलदानेन सह जीवमावेष्टयति, न तु अन्त्येष्ट्यनन्तरमेव। सत्यम्—तथापि, स्वर्गादिरूपफलदानमन्त्येष्ट्यनन्तरमेवेति भावः।

ननु—रंहतो जीवस्य भूतसूक्ष्मं आहुतिरूपमिति विशेषः कुतो निर्धार्यते—इत्याशङ्क्य, षट्प्रश्ननिरूपणे आहुतीनामुत्क्रान्त्यादिप्रतिपादनात् तथावसीयत इत्याह—तथा चेति। अग्निहोत्राहुतीः प्रक्रम्य जनकेन याज्ञवल्क्यं प्रति 'न त्वेवैनयोः त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न च पुनरावृत्तिं न लोकंप्रत्यु-

---

1. ईश्वरप्रसादादीति आदिशब्दार्थः कोपः। मीमांसकादीत्यादिशब्दार्थः नैयायिकः।

तस्मात् आहुतीमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते ॥ ६ ॥

कथं पुनरिदं इष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते ? यावता, तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानां अन्नभावं दर्शयति 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छा. उ. ५।१०।४) इति । 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानं आप्यायस्वापक्षीयस्वेति एवमेनांस्तत्र भक्षयन्ति' (बृ. उ. ६।२ १६) इति च समानविषयं श्रुत्यन्तरम् । न च व्याघ्रादिभिरिव देवैः भक्ष्यमाणानां उपभोगः संभवति—इति । अत उत्तरं पठति—

## भाक्तं वानात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥

वाशब्दः चोदितदोषव्यावर्तनार्थः । भाक्तं एषामन्नत्वम्, न मुख्यम् ।

---

त्थायिनं च वेद' इत्यज्ञाने उद्भाविते, याज्ञवल्क्येन तथेत्युक्ते, जनकेनैव षट् प्रश्ना निरूपिताः । 'ते वा एते आहुती हुते उत्क्रामतः, तेऽन्तरिक्षमाविशतः, ते अन्तरिक्षमाहवनीयं कुर्वाते वायुं समिधं मरीचिमेव शुक्रामाहुतिं, तेऽन्तरिक्षं तर्पयतः, ते दिवमाविशतः, ते दिवमाहवनीयं कुर्वाते समिधमादित्यं चन्द्रमसमेव शुक्रामाहुतिं, ते दिवं तर्पयतः, ते तत आवर्तेते' इति प्रक्रम्य, पृथिवीं पुरुषं योषितं च आहवनीयत्वेन परिकल्प्य, संवत्सरादींश्च समिदादित्वेन प्रतिपाद्य, योषिदग्नेः यः पुत्रो जायते स लोकंप्रत्युत्थायीति निरूपितम् । अत्र च आहुत्योरेवारोहावरोहप्रतिपादनात् आपःपुरुषवचस इत्यत्र अप्छब्द आहुतिरूपाप्पर इति निर्धार्यते ॥ ६ ॥

ते चन्द्रं प्राप्यान्नं भवन्तीति । ते—इष्टादिकारिणः । तत्र यथा सोमं राजानं आप्यायस्वापक्षीयस्वेति भक्षयन्ति एवं तानेनान् तत्र भक्षयन्तीत्यन्वयः । पुनःपुनराप्यायनं कृत्वा पुनःपुनरपक्षयं कृत्वा भक्षयन्ति । अत्र क्रियासमभिहारस्य[1] क्रियाद्वयसमुच्चयस्य च विवक्षितत्वात् लोट् । तथा च पाणिनिसूत्रं—'क्रियासमभिहारे लोट्' 'समुच्चयेऽन्यतरस्याम्' इति । 'लोटो हिस्वौ' इति [2]सूत्रेण सूत्रद्वयविहितलोटः स्थाने हिस्वावादेशौ नियम्येते । परस्मैपदिभ्यो हिः आत्मनेपदिभ्यः स्वः ।

---

1. समभिहारः-पौनःपुन्यम् । 2. सूत्रेण-सूत्रभागेन ।

मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयका अधिकारश्रुतिः उपरुध्येत। चन्द्रमण्डले चेत् इष्टादिकारिणामुपभोगो न स्यात्, किमर्थं अधिकारिणः इष्टाद्यायासबहुलं कर्म कुर्युः। अन्नशब्दश्च उपभोगहेतुत्वसामान्यात् अनन्नेऽप्युपचर्यमाणो दृश्यते। यथा 'विशोऽन्नं राज्ञां पशवोऽन्नं विशाम्' इति। तस्मात् इष्टस्त्रीपुत्रमित्रभृत्यादिभिरिवगुणभावोपगतैः इष्टादिकारिभिः यत् सुखविहरणं देवानां, तदेव एषां भक्षणमभिप्रेतं, न मोदकादिवच्चर्वणं निगरणं वा। 'न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति' (छा. ३।६।१) इति च देवानां चर्वणादिव्यापारं वारयति। तेषां च इष्टादिकारिणां देवान् प्रति गुणभावोपगतानामपि उपभोग उपपद्यते राजोपजीविनामिव परिजनानाम्। अनात्मवित्त्वाच्च इष्टादिकारिणां देवोपभोग्यभाव उपपद्यते। तथा हि श्रुतिः अनात्मविदां देवोपभोग्यतां दर्शयति

---

ननु–क्रियासमभिहारविवक्षायां 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकेन लोडन्तस्य द्विर्भाव आम्नातः। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति सूत्रेण, पूर्वस्मिन्-क्रियासमभिहारे लोट्प्रकृतेरनुप्रयोगश्च विहितः। यथा-खादखादेति खादति-पुनःपुनः खादतीत्यर्थः। कथं तदभाव इह। कथं च अपक्षीयस्वेति कर्मलकारः, येन यगात्मनेपदयोस्सम्भवः, सोमंराजानमिति द्वितीयाश्रवणेन भक्षयन्तीत्यनुप्रयोगे कर्तृविवक्षया अपक्षीयस्वेत्यत्र कर्तृलकारावश्यम्भावात्-इति चेत्,

उच्यते–न केवलमिह [1]क्रियासमभिहारविवक्षा अपि तु समुच्चयविवक्षापि। समुच्चये द्विर्भावो नाम्नातः। अनुप्रयोगश्च 'समुच्चये सामान्यवचनस्य' इति, क्रियाद्वयान्वयितया साधारणार्थकस्य धातोरेव आम्नातः। यथा–'धानाः खाद सक्तून् पिबेत्येवमभ्यवहरति' इति। खादनपानरूपं तृप्त्यनुकूलं व्यापारं करोतीत्यर्थः। उभयविवक्षायां च 'विप्रतिषेधे परं कार्यम्' इति सूत्रेण समुच्चयप्रयुक्तमेव कार्यं प्रकृते भवतीति, सामान्यवचनस्य भक्षयतेरनुप्रयोगः द्विर्भावाभावश्च सिध्यति। भक्षणं च आप्यायनापक्षययोस्साध्यतयान्वितं भवति सामान्यम्। अपक्षीयस्वेति कर्मप्रयोगस्तु छान्दसो भविष्यति।

---

1. मु. क्रियासमभिहारः, अपि तु

'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृ. उ. १।४।१०) इति। स च अस्मिन्नपि लोके इष्टादिभिः कर्मभिः प्रीणयन् पशुवद्देवानामुपकरोति अमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलं उपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्यते।

अनात्मवित्त्वात्तथाहिदर्शयतीत्यस्य अपरा व्याख्या—अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणः, न ज्ञानकर्मसमुच्चयानुष्ठायिनः। पञ्चाग्निविद्यां इह आत्मविद्येत्युपचरन्ति, प्रकरणात्। पञ्चाग्निविज्ञानविहीनत्वाच्चेदं इष्टादिकारिणां गुणवादेन अन्नत्वं उद्भाव्यते पञ्चाग्निविज्ञानप्रशंसायै। पञ्चाग्निविद्या हि इह विधित्सिता, वाक्यतात्पर्यावगमात्। तथा हि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' (प्र. उ. ५।४) इति। तथा अन्यदपि श्रुत्यन्तरम् 'अथ ये शतं पितॄणां जितलोकानामानन्दाः, स एकः कर्मदेवानामानन्दः, ये कर्मणा देवत्वमभिसंपद्यन्ते' (बृ. उ. मा. ४।१।३४) इति इष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति। एवं भाक्तत्वादन्नभाववचनस्य इष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते। तस्मात्, रंहति संपरिष्वक्तः इति युक्तमेवोक्तम् ॥ ७ ॥

---

पञ्चाग्निविद्यामिहात्मविद्येत्युपचरन्तीति। पञ्चाग्निविद्याया अपि आहुतिपरिवेष्टितजीवविषयत्वेन आत्मविद्यात्वादिति भावः। वाक्यतात्पर्यावगमादिति। 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसः' इत्युपक्रमात् 'अथ य एतान् पञ्चाग्नीन् वेद' इत्युपसंहाराच्च 'कृत्स्नमिदं पञ्चाग्निविद्याप्रकरणं' इत्यवगमात्, तन्मध्येऽपि त्रयाणां मार्गकथनपूर्वकं केवलकर्मिणां देवान्नत्वप्रतिपादनं तन्निन्दाद्वारा पञ्चाग्निविद्यास्तुत्यर्थमवसीयते। ततश्च देवान् प्रति भृत्यादिभावेन विद्यमानानां केवलकर्मिणां देवभक्ष्यत्वाद्युपचारो नानुपपन्न इति भावः। जितलोकानां-पितृलोकप्राप्तिसाधनैः कर्मभिः जितः पितृलोको यैः ते जितलोकाः। कर्मदेवपदं श्रुतिरेव व्याचष्टे ये कर्मणेति।

अत्र—तदन्तरप्रतिपत्तावितिसूत्रेण असंपरिष्वक्तस्यैवरंहणमितिशङ्काया निराकृतत्वात्, शङ्कामते सकलबन्धनिदानदेहस्य मरणकाल एव वियोगात् वैराग्यस्य

## २ कृतात्ययाधिकरणम्

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते 'तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' (छा. उ. ५।१०।५) इत्यारभ्य, यावत् 'रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिम्, इति।

तत्रेदं विचार्यते—किं निरनुशया भुक्तकृत्स्नकर्माणः अवरोहन्ति आहोस्वित् सानुशया इति।

किं तावत् प्राप्तम् ?। निरनुशया इति। कुतः ?। यावत्संपातमिति विशेषणात्। संपातशब्देनात्र कर्माशय उच्यते--संपतन्त्यनेन अस्माल्लोकात्

---

यन्मान्द्यं तत्, आत्मज्ञानविमुखानां आमोक्षं तस्य बन्धनागारस्य अनुवृत्तिप्रतिपादनेन [1]निराकृत्य, वैराग्यं दृढीक्रियते। अग्न्यादिगतिश्रुतेरितिसूत्रेण, 'श्रुतीनामुत्क्रान्तिविषयाणां परस्परकलहेन उत्क्रान्तेरेवाभावात् स्वर्गनरकाभावे न पापेषु वैराग्यम्' इति शङ्का श्रुतिविरोधपरिहारेण उत्क्रान्तिसमर्थनात् निराक्रियते। अश्रुतत्वादितिसूत्रेण, 'रंहतां न देवान्नत्वं अपि तु तान् प्रति चन्द्रस्यैवान्नत्वमिति न काम्यकर्मसु वैराग्यम्' इति शङ्का, 'रंहतां देवान्नत्वं भृत्यादिरूपेणेति कर्मिणामिहापि कर्मकर्तृत्वेन देवपारतन्त्र्यं परलोकेऽपि भृत्यत्वादिना तदिति दुःखं कर्म' इतिप्रतिपादनेन निराकृता। अतो वैराग्यपर्यवसायिता अस्याधिकरणस्य ॥ ७ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम्

पूर्वाधिकरणे, विद्याकर्मपूर्वप्रज्ञापरिग्रहवतां भूतसूक्ष्मपरिष्वक्तानां रंहणं इत्युक्तम्। अवरोहतां तु कर्मास्ति वा न वेति इह विचार्यते। ततश्च पूर्वाधिकरणोपक्षिप्तकर्मगतविशेषचिन्तनात् सङ्गतिः।

यावत्सम्पातं-कृतस्य कर्मणः समाप्तिपर्यन्तं, स्वर्गलोके उषित्वा। **निरनुशया इति।** अनुशयः-स्वर्गार्थं यत् कर्म कृतं इह लोके तद्व्यतिरिक्तं कर्म, यच्च स्वर्गभो-

---

1. मु. निराक्रियते। अग्न्यादि

अमुं लोकं फलोपभोगायेति । यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति । 'तेषां यदा तत्पर्यवैति' (बृ.उ. ६।२।१६) इति च श्रुत्यन्तरेण एष एवार्थः प्रदर्श्यते ।

स्यादेतत्—यावत् अमुष्मिंल्लोके उपभोक्तव्यं कर्म तावदुपभुङ्क्ते इति कल्पयिष्यामीति ।

नैवं कल्पयितुं शक्यते, यत्किंचेति अन्यत्र परामर्शात् ।

'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात् पुनरैति अस्मै लोकाय कर्मणे' ॥ (बृ. उ. ४।४।६)

इति ह्यपरा श्रुतिः यत्किंचेत्यविशेषपरामर्शेन कृत्स्नस्य इह कृतस्य कर्मणः तत्र क्षयिततां दर्शयति ।

---

गानन्तरं अस्मिन्नपि लोके भोगसम्पादकं किञ्चित् कर्म [1]तदंशोऽपि । तेषां यदा तत्पर्यवैतीति । 'अथेममेवाकाशमभिनिष्पद्यन्ते' इति श्रुतिशेषः ।

ननु—यावत्सम्पातमुषित्वेत्यत्र वाक्यशेषो भवति—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्' इति । रमणीयचरणाः-सुकृतिनः रमणीयां ब्राह्मणादि-योनिं आपद्येरन्निति यत्, तत् अभ्याशो ह—क्षिप्रमेव, एवं कपूयचरणाः—पापिनोऽपि । ततश्च अवरोहतां पुण्यपापानुसारेण शुभाशुभयोनिप्राप्तेः प्रतिपादनात् यावत्सम्पातमितिवाक्यं 'स्वर्गोपभोगजनकं यावत् कर्म वर्तते तस्य कृत्स्नस्य फलं स्वर्गेऽनुभूय' इत्येवंपरतया व्याख्येयम्-इति चेत्,

न—यावत्सम्पातमित्युपक्रमस्य उपसंहारानुसारेण क्लिष्टार्थत्वायोगात् । अतः उपसंहार एव तदनुसारेण यथाकथञ्चित् व्याख्येयः ।

तदिदमाह—स्यादेतदित्यादिना । कर्मणे इति । अस्मिन् लोके पुनः कर्म कर्तुं आयातीत्यर्थः ।

---

1. तदंशोऽपीति एकस्यैव कर्मणः लोकद्वये फलप्रदत्वस्य शास्त्रतोऽवगमात् इति भावः । वक्ष्यति चैतत् ।

अपि च-प्रायणं अनारब्धफलस्य कर्मणः अभिव्यञ्जकम् । प्राक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्य अभिव्यक्त्यनुपपत्तेः । तच्च अविशेषात् यावत्किंचिदनारब्धफलं तस्य सर्वस्य अभिव्यञ्जकम् । न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति । न हि अविशिष्टे प्रदीपसंनिधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते । तस्मात् निरनुशया अवरोहन्तीति ।

एवं प्राप्ते ब्रूमः—कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन् उपभोगेन क्षयिते तेषां यत् अम्मयं शरीरं चन्द्रमसि उपभोगायारब्धं तत् उपभोगक्षयदर्शनशोकाग्निसंपर्कात् प्रविलीयते, सवितृकिरणसंपर्कादिव हिमकरके, हुतभुगर्चिः संपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये - कृतस्य इष्टादेः कर्मणः फलोपभोगेनोपक्षये सति, सानुशया एव इममवरोहन्ति । केन हेतुना ? । दृष्टस्मृतिभ्यामित्याह । तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति 'तत् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' (छा.उ. ५।१०।७) इति । चरणशब्देन अनुशयः सूच्यत इति वर्णयिष्यति ।

---

कृत्स्नस्यैव कर्मणः परलोकेऽनुभवः इत्यत्र न्यायमाह—अपि चेति । प्रायणं-मरणम् । न चैवं सति अवरोहतां निमित्ताभावात् सुखदुःखवैचित्र्यदर्शनं अनुपपन्नं भवेदिति वाच्यम् । कर्मणां क्षयेऽपि कर्मजनिताया वासनाया अनुवर्तमानतया पापवासनावासिता दुःखिनः पापनिरताश्च भवन्ति, पुण्यवासनावासिताः सुखिनः पुण्यनिरताश्च भवन्ति । 'रमणीयचरणाः' 'कपूयचरणाः' इति श्रुतिरपि वासनाभिप्रायैव ।

तथा हि प्रत्यक्षा श्रुतिरित्यादि । यावत्सम्पातमित्युपक्रमो हि न यथाश्रुतो व्याख्यातुं शक्यः । स्वर्गस्थे हि जीवे, [1]सञ्चितानि विचित्राणि कर्माणि सन्ति, कानिचित् तस्मिन्नेव काले स्वर्गोपभोगयोग्यानि, कानिचित्तु कालान्तरे, अन्यानि

---

1. सञ्चितानीति । प्रारब्धकर्मानुगतं अत्र सञ्चितत्वं ग्राह्यम् ।

दृष्टश्चायं जन्मनैव प्रतिप्राणि उच्चावचरूप उपभोगः प्रविभज्यमानः आकस्मिकत्वासंभवात् अनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः सुकृत-दुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेश-जातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' (गौ. ध. सू. २।२।२९) इति सानुशयानामेवावरोहं दर्शयति ।

कः पुनरनुशयो नामेति ?

---

मनुष्यादिशरीरोपभोगयोग्यानि । कर्मणां नानायोनिफलारम्भप्रतिपादकशास्त्रात् अय-मर्थोऽवगम्यते । न चैतानि सर्वाणि तस्मिन्नेव काले स्वर्गे उपभोक्तुं शक्यन्ते । अतः शास्त्रान्तरपर्यालोचनयैव सङ्कुचद्वृत्तिः उपक्रमः । तथा च उपसंहारपर्या-लोचनयावगम्यमानः अवरोहतामनुशयसद्भावो न तेन बाधितुं शक्यते । न च वासनामात्रेण शुभाशुभयोनिप्राप्तिरुपपद्यते । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इतिशास्त्रेण कर्मविशिष्टाया एव वासनाया फलारम्भकत्वावगमात् । न च—'रमणीयचरणाः' 'कपूयचरणाः' इत्यादौ पुत्रभार्यादिकृतकर्मानुसारेणैव योनिप्राप्तिः इत्युच्यते, श्रूयते हि पुत्रादिकृत-श्राद्धाद्यनुसारेण पितुः फलप्राप्तिः-इति वाच्यम् । सर्वेषां कर्मफलानां स्वर्गे उपभोगः-इति वदतः पूर्वपक्षिणो मते, अन्यकृतं अनुपभुक्तफलं कर्म अवशिष्टमस्तीति वक्तु-मशक्यत्वात्, रमणीयचरणाः इति बहुव्रीहिणा साक्षात्स्वसम्बन्धिन एव कर्मणः प्रतीयमानतया अन्यकृतकर्मपरत्वकल्पनायोगाच्च । तथा च, स्वर्गार्थं यत् कर्म कृतं तस्यैव साकल्येन तत्रोपभोगप्रतिपादनपरं यावत्सम्पातमित्यादि शास्त्रम् ।

सौत्रं दृष्टपदं श्रुत्यभिप्रायं व्याख्याय भोगवैचित्र्यदर्शनपरतया व्याचष्टे—दृष्टश्चायमिति । अभ्युदयः-स्वर्गादिः प्रत्यवायः—दुःखादिः । वर्णाः - ब्राह्मणादयः आश्रमाः—ब्रह्मचार्यादयः ये स्वकर्मनिष्ठाः, ते प्रेत्य परलोके । विशिष्टानि—उत्कृष्टानि देशादीनि मेधान्तानि येषां ते तथाविधः इति बहुव्रीहिः ।

एवं स्वमते, यत् स्वर्गसाधनं कर्म तस्य कृत्स्नस्य स्वर्गे अनुभवेन क्षये सति अवशिष्टैः कर्मभिः अवरोहः-इति प्रतिपादितम् । मतान्तरे तु, अमुमर्थं पूर्वपक्ष

केचित्तावदाहुः—स्वर्गार्थस्य कर्मणो भुक्तफलस्य अवशेषः कश्चित् अनुशयो नाम। भाण्डानुसारिस्नेहवत्। यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित् स्नेहशेषः अवतिष्ठते, तथा अनुशयोऽपि—इति।

ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम्।

नायं दोषः। न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे। ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढाः। बाढम्। तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न शक्यते। यथा किल कश्चित् सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तः चिरप्रवासात् परिक्षीणबहूपकरणः छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति, एवं अनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति।

नचैतद्युक्तमिव। न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्य अवशेषानुवृत्तिरुपपद्यते कार्यविरोधित्वात्—इत्युक्तम्। नन्वेतदप्युक्तम्—न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति। तदेतदपेशलम्—स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति स्वर्गच्युतस्यापि कंचित् फललेशं जनयतीति, न शब्दप्रमाणकानां ईदृशी कल्पना अवकल्पते। स्नेहभाण्डे तु स्नेहलेशानुवृत्तिः दृष्टत्वादुपपद्यते। तथा सेवकस्य उपकरणलेशानुवृत्तिश्च दृश्यते। न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते। नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्। अवश्यं च एतदेवं विज्ञेयम्—न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानः अनुशय इति। यदि हि येन सुकृतेन कर्मणा इष्टादिना

---

कृत्वा स्वर्गार्थकर्मण एव अवशिष्टेन केनचिदंशेन इहावृत्तिरिति वर्णयन्ति। तन्मतमाह—केचित्तावदाहुरिति। यथा किल कश्चिदिति। अनेन एतन्मते 'अवशिष्टेन भागेन यथापूर्वमुपभोगाभावस्य दर्शनात्' इत्यभिप्रायं सौत्रदृष्टपदं व्याख्यातं भवति। स्मृतिश्च 'ततश्शेषेण' इति द्रष्टव्या, स्वर्गार्थात् कर्मणः अवशिष्टेन भागेन-इति तदर्थः।

स्वर्गमन्वभूवन् तस्यैव कश्चिदेकदेशः अनुशयः कल्प्येत, ततो रमणीय एवैक अनुशयः स्यात्, न विपरीतः । तत्र इयमनुशयविभागश्रुतिः उपरुध्येत 'तद्य इह रमणीयचरणाः' 'अथ य इह कपूयचरणाः' इति । तस्मात् आमुष्मिकफले कर्मजाते उपभुक्ते अवशिष्टं ऐहिकफलं कर्मान्तरजातं अनुशयः तद्वन्तोऽवरोहन्तीति ।

यदुक्तं - यत्किचेत्यविशेषपरामर्शात्, सर्वस्य इह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति ।

नैतदेवम्—अनुशयसद्भावस्य अवगमितत्वात् । यत्किचिदिह कृतं आमुष्मिकफलं कर्म आरब्धभोगं तत् सर्वं फलोपभोगेन क्षपयित्वेति गम्यते ।

यदप्युक्तं - प्रायणं अविशेषात् अनारब्धफलं कृत्स्नमेव कर्म अभिव्यनक्ति, तत्र केनचित् कर्मणा अमुष्मिल्लोके फलमारभ्यते केनचिदस्मिन् इत्ययं विभागो न संभवतीति ।

---

तत्रेयमनुशयविभागश्रुतिरिति । न च—तवापि मते स्वर्गादवरोहतां रमणीयकपूयानुशयाभ्युपगमे, तेषां विशिष्टदेशेत्यादिना समीचीनफलप्रतिपादनं स्मृतिगतं विरुध्येत, कृत्स्नस्यैव स्वर्गार्थस्य कर्मणः परलोक एव प्रक्षयाभ्युपगमे च शेषपदमपि विरुध्येत - इति वाच्यम् । स्वर्गादवरोहन्तो ये रमणीयचरणाः तदभिप्रायेयं स्मृतिर्भविष्यति । शेषपदमपि, स्वर्गेऽनुपभुक्तं यत् अन्यफलोपयोगि अवशिष्टं तदभिप्रायम् । तस्मादामुष्मिकफले कर्मजाते उपभुक्ते इति । इदं च आमुष्मिकस्य कर्मणः कात्स्न्र्येन परलोके उपभोगाभिधानं, यत् शास्त्रानुसारेण परलोकमात्रफलकं कर्म अवगतं तदभिप्रायम् । यत्तु लोकद्वये फलप्रदत्वेन एकमेव कर्म शास्त्रतोऽवगतं, तस्य केनचिदंशेन इहाप्युपभोगो [1]न वार्यते ।

---

1. न वार्यत इति अत एव कालिदासः "स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां शेषैः पुण्यैः हृतमिव दिवः कान्तिमत् खण्डमेकम्" इति पद्येन 'दिवः खण्डमिव' इति पुरं उत्प्रेक्षमाणो भुवि भोगं कथयन् इममर्थं सूचयति ।

तदपि अनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम्। अपि च-केन हेतुना प्रायणं अनारब्धफलस्यकर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम्। आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेः तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत; ततो वक्तव्यम्—यथैव तर्हि प्राक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिः एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासंभवात् बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिः-इति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमपि अनेकं कर्म एकस्मिन् प्रायणे युगपदभिव्यक्तं सत् एकां जातिं आरभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्। नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्। ऐकान्तिकफलत्वविरोधात्। न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते।

स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति—

'कदाचित् सुकृतं कर्म कूटस्थमिह तिष्ठति।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते' (म.भा.शा. २९०।१८)

इत्येवंजातीयका। यदि च कृत्स्नं अनारब्धफलं कर्म एकस्मिन् प्रायणे अभिव्यक्तं सत् एकां जातिं आरभेत, ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावात् न उत्तरा जातिः उपपद्येत। ब्रह्महत्यादीनां च एकैकस्य कर्मणः अनेकजन्मनिमित्तत्वं स्मर्यमाणं उपरु-

---

ततस्स्वर्गनरकतिर्यग्योनिष्विति। प्रायणस्य कृत्स्नकर्माभिव्यञ्जकत्वपक्षे, प्रायणानन्तरं यैः स्वर्गादियोनिः प्राप्ता न तु कर्माधिकृतमनुष्ययोनिः, तेषां स्वर्गादियोनिषु स्थितानां पुण्यपापानधिकृतत्वात् न उत्तरशरीरसिद्ध्यर्थं कर्मानुष्ठानं सम्भवति, प्राचीनानां च कर्मणां स्वर्गादिशरीर एव क्षयः, इति पुनश्शरीरारम्भो निमित्ताभावान्न भवेत्-इति भावः। अनेकजन्मनिमित्तत्वं स्मर्यमाणमिति। 'श्वसूक-

ध्येत । न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम् । न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीति, अव्यापिकाऽपि इयं प्रायणस्याभिव्यञ्जकत्वकल्पना । प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः । स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्च इदं द्रष्टव्यम् । यथा हि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपं अभिव्यनक्ति न सूक्ष्मम्, एवं प्रायणं समानेऽपि अनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति न दुर्बलस्येति । तस्मात् श्रुतिस्मृतिन्यायविरोधात् अश्लिष्टोऽयं अशेषकर्माभिव्यक्त्यभ्युपगमः । शेषकर्मसद्भावे अनिर्मोक्षप्रसङ्गः इत्ययमपि अस्थाने संभ्रमः । सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः ।

तस्मात् स्थितमेतत् अनुशयवन्तोऽवरोहन्तीति ।

ते चावरोहन्तो यथेतमनेवं च अवरोहन्ति । यथेतमिति - यथागतमित्यर्थः । अनेवमिति-तद्विपर्ययेणेत्यर्थः । धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोः अवरोहे संकीर्तनात् यथेतंशब्दाच्च यथागतमिति प्रतीयते, रात्र्याद्यसंकीर्तनात् अभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥ ८ ॥

---

रखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति' इत्यादौ । न च दृष्टफलस्येति । तात्कालिकवृष्ट्यादिफलत्वं हि कारीर्यादेः [1]शास्त्रादवसीयते ।

यथेतमनेवञ्चेतिसौत्रांशं व्याचष्टे—ते चावरोहन्त इति । [2]ननु—सूत्रकृता श्रौतो यथेतमित्यंशः अनेवंविधत्वस्यापि लक्षकतया किमिति व्याख्यायते, तत्प्रतिपादनस्य प्रकृतानुपयोगित्वात्-इति चेत्—न-यथा उपक्रमगतो यथेतमितिशब्दः, धूमादिगमनपर्वापेक्षया अन्येषामपि अभ्रादिपर्वणां कीर्तनात् पूर्वोक्तानां रात्र्यादिगमनपर्वणां च अकीर्तनात् उत्तरवाक्यपर्यालोचनया अनेवंविधत्वस्य उपलक्षको भवति,

---

1. शास्त्रात् न्यायसहितात् निर्णीयते इत्यर्थः । मु. शास्त्रादवगम्यते
2. नन्वित्यादिशङ्कासमाधाने शिवार्कमणिदीपिकायां स्पष्टे ।

## चरणादिति चेन्न उपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

अथापि स्यात्—या श्रुतिः अनुशयसद्भावप्रतिपादनाय उदाहृता 'तद् य इह रमणीयचरणाः' इति, सा खलु चरणात् योन्यापत्तिं दर्शयति नानुशयात्। अन्यच्चरणं अन्योऽनुशयः। चरणं चारित्रं आचारः शीलं इत्यनर्थान्तरम्। अनुशयस्तु भुक्तफलात् कर्मणोऽतिरिक्तं कर्म अभिप्रेतम्। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति 'यथाकारी यथाचारी तथा भवति' (बृ. उ. ४।४।५) इति, 'यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि, यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि' (तै.उ. १।११.२) इति च। तस्मात् चरणाद्योन्यापत्तिश्रुतेः नानुशयसिद्धिः—इति चेत्;

नैष दोषः—यतः अनुशयोपलक्षणार्थैव एषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥ ९ ॥

---

एवं, यावत्सम्पातमित्युपक्रमोऽपि 'तद्य इह रमणीयचरणाः' इत्युपसंहारानुसारेण स्वर्गार्थं यत्कर्म कृतं तन्मात्रविषयो भविष्यति-इति दृष्टान्तविधया प्रकृतोपयोग-सम्भवात् [1]इति दिक् ॥ ८ ॥

सन्ध्यावन्दनादिः पादप्रक्षालनादिश्च आचारः। तथा च, 'रमणीयचरणाः' इत्यादिपर्यालोचनया शुभाचारात् [2]समीचीनयोनिरवगम्यते। कपूयचरणा इति वचनेन तु उच्छिष्टादिसम्पर्कादिदुराचारात् असद्योनिरवगम्यते। अतः, कथं चित्रोद्भिदादिकं ब्रह्महत्यादि च अनुशयस्स्यात्—इति शङ्कितुरभिमानः।

यतोऽनुशयोपलक्षणार्थेति। सौर्यादीनां ब्राह्मणादियोग्यब्रह्मवर्चसादिफला-म्नानात् चित्रादीनां च मनुष्ययोग्यपश्वादिफलाम्नानात् ब्रह्महत्यादीनां च कपूययो-निफलत्वप्रतिपादनात् [3]कर्मणां सदसद्योनिफलकत्वे प्रामाणिके सति चरणपदं [4]कर्मणां [5]लक्षकं भविष्यतीति भावः ॥ ९ ॥

---

1. आ 'इति दिक्' नास्ति 2. आ. समीचीनयोनिप्राप्तिर
3. मु. कर्मणामपि 4. मु. कर्मणामप्युपलक्षकं
5. लक्षकम्—जहल्लाक्षणिकम्। उपलक्षणार्थेतिशब्देन लक्षणां सूत्रयत् सूत्रं अत्रानुकूलम्। अत एव अनुपदं 'श्रौतं शीलं विहाय लाक्षणिकः' इति अनुवादो भाष्ये। चरणशब्दः कर्मणि मुख्यः— इति तु बादरिपक्षो वक्ष्यते।

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्—कस्मात् पुनः चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते, ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति। अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम्। अन्यथा हि आनर्थक्यमेव शीलस्य प्रसज्येत-इति चेत्;

नैष दोषः—कुतः? तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षम्। न हि सदाचारहीनः कश्चित् अधिकृतः स्यात्, 'आचारहीनं न पुनन्ति वेदाः' (वसिष्ठस्मृतिः) इत्यादिस्मृतिभ्यः।

पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एव आचारः तत्रैव कंचिदतिशयं आरप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः।

तस्मात् कर्मैव शीलोपलक्षितं अनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। न हि कर्मणि संभवति शीलाद्योन्यापत्तिः युक्ता। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणं अनुष्ठानं कर्म इत्यनर्थान्तरम्। तथा हि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हि इष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते 'धर्मं चरत्येष महात्मा' इति। आचारोऽपि च

---

आचारहीनं न पुनन्ति वेदा इति। वेदाः-वैदिकानि कर्माणि, आचारहीनं न पुनन्ति-स्वफलभाजं न कुर्वन्ति। तथा च प्रयाजादिवत् आचारस्य कर्माङ्गत्वमिति भावः। अथवा, स्वर्गादिप्रतिबन्धकाहरहरुपचीयमानपाप्मनिवृत्तिरूपपुरुषसंस्कारद्वारा सन्ध्यावन्दनादीनामुपयोगः। 'आपः शुन्धन्तु मैनसः' 'यदह्ना पापमकार्षम्....अहस्तदवलुम्पतु' इत्यादिमन्त्रलिङ्गात्-इत्यभिप्रायेणाह—**पुरुषार्थत्वेऽप्याचारस्येति** ॥ १० ॥

धर्मविशेष एव। भेदव्यपदेशस्तु कर्मचरणयोः ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते। तस्मात् रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणाः निन्दितकर्माणः-इति निर्णयः ॥ ११ ॥

३ अनिष्टादिकार्यधिकरणम्

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टादिकारिणः चन्द्रमसं गच्छन्तीत्युक्तम्। ये त्वितरे अनिष्टादिकारिणः तेऽपि किं चन्द्रमसं गच्छन्ति उत न गच्छन्तीति चिन्त्यते।

तत्र तावदाह—इष्टादिकारिण एव चन्द्रमसं गच्छन्ति-इत्येतत् न। कस्मात्? यतः अनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम्। तथा ह्यविशेषेण कौषीतकिनः समामनन्ति 'ये वै के च अस्माल्लोकात्

---

ननु—यद्याचरतिः कर्मसामान्यवाचकः, तदा 'आचारहीनं न पुनन्ति वेदाः' इत्यत्रापि कर्मसामान्यग्रहणमेव स्यात्-इत्याशङ्क्याह—आचारोऽपि धर्मविशेष-एवेति। तथा च, चरतेः कर्मसामान्यवाचकत्वेऽपि आचारपदस्य कर्मविशेषवाचकत्वे न क्षतिः। भेदव्यपदेशस्त्विति। 'यथाकारी यथाचारी' इत्यादौ आचरतेः सदाचारादिपरत्वात् करोतिः तद्व्यतिरिक्तपरः।

प्रयोजनं पूर्वपक्षे, बन्धकस्य कर्मणः अवरोहतामभावात् वैराग्यमान्द्यं, सिद्धान्ते तु, आमोक्षं तदनुवृत्तेः, देवभृत्यत्वादिरूपक्षुद्रफलस्यापि तस्य सन्ध्यावन्दनाद्यनेकक्लेशयुक्तत्वाच, ततो वैराग्यम् ॥ ११ ॥

इति कृतात्ययाधिकरणम्

'यावत्सम्पातमुषित्वा' 'प्राप्यान्तं कर्मणस्तस्य' इत्येवमादेः स्वत एव सङ्कोचसहिष्णुतया वचनान्तरानुसारेण स्वर्गार्थकर्ममात्रपरताऽस्तु। 'ये वै के च अस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्यस्य तु असङ्कुचितार्थत्वे न किञ्चिद्बाधकमस्ति। अतो नास्य सङ्कोचकल्पना युक्तेति प्रत्यवस्थानात् सङ्गतिः।

प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ. उ. १।२) इति। देहारम्भोऽपि च पुनर्जायमानानां न अन्तरेण चन्द्रप्राप्तिं अवकल्पते। पञ्चम्यामाहुताविति आहुतिसंख्यानियमात्। तस्मात् सर्व एव चन्द्रमसमासीदेयुः। इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्, न—इतरेषां चन्द्रमण्डले भोगाभावात् ॥ १२ ॥

## संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति-सर्वे चन्द्रमसं गच्छन्तीति। कस्मात्? यतो भोगायैव चन्द्रारोहणम्, न निष्प्रयोजनं नापि प्रत्यवरोहायैव। यथा कश्चित् वृक्षमारोहति पुष्पफलोपादानाय न निष्प्रयोजनं नापि पतनायैव। भोगश्च अनिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्। तस्मात् इष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे। ते तु संयमनं-यमालयं अवगाह्य, स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय, पुनरेव इमं लोकं प्रत्यवरोहन्ति। एवंभूतौ तेषामारोहावरोहौ भवतः। कुतः? तद्गतिदर्शनात्।

---

अस्य वचनस्य इष्टादिकारिविषयत्वे च अनिष्टादिकारिणां शरीरारम्भोऽपि न स्यादित्याह—देहारम्भोऽपीति। ननु—इष्टादिकारिणामनिष्टादिकारिणां च चन्द्रमण्डलप्राप्त्या तुल्यभोगत्वे पापात् कस्यापि निवृत्तिर्न स्यात्, पुण्याभावेऽपि स्वर्गप्राप्तिसम्भावनया पुण्येऽपि प्रवृत्तिर्नस्यात्—इत्याशङ्क्य, पापिनां पञ्चसङ्ख्याहुतिसम्पादनाय चन्द्रमण्डलारोहणमात्रं न तु तत्र भोगोऽपि - इति परिहरति—इष्टादिकारिणामित्यादिना ॥ १२ ॥

अनेन सूत्रेण, भोगाभावात् पापिनां चन्द्रगमनं नास्तीति प्रतिपाद्यते। ततश्च, तेषां भोगाय यमप्राप्तिरेव। ननु—आरोहानन्तरं यमयातनानुभवः, तदनन्तरमवरोहः, कथं सूत्रे आरोहावरोहावुभावपि यमयातनानुभवानन्तरं निर्दिश्येते-इत्याशङ्क्य, अध्याहारेण सूत्रं योजयति—ते तु संयमनमित्यादिना। तथा च, 'इतो यमसदनारोहानन्तरं संयमनेऽनुभूय ततोऽवरोहन्ति' इत्येकं साध्याहारं सूत्रवाक्यम्, एवंभूतावितरेषामारोहावरोहौ इत्यपि वाक्यान्तरं-इति द्रष्टव्यम्। [1]वैवस्वतं-यमं, जनानां सङ्गमनं-प्राप्यं, 'हविषा प्रीणयत' इति वाक्यशेषः। यथा च इदं

---

1. मु. वैवस्वतं सङ्गमनं जनानां

तथा हि यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति 'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' (क. उ. २।६) इति । 'वैवस्वतं संगमनं जनानाम् ।' (तै. आ. ६।१) इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥ १४ ॥

## अपि च सप्त ॥ १५ ॥

अपिच सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः । तान् अनिष्टादिकारिणः प्राप्नुवन्ति, कुतः ते चन्द्रं प्राप्नुयुः-इत्यभिप्रायः ॥ १५ ॥

ननु विरुद्धमिदं-यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्ते इति । नेत्याह-

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्य अधिष्ठातृत्वव्यापाराभ्युपगमात् अविरोधः । यमप्रयुक्ता एव हि ते चित्रगुप्तादयः अधिष्ठातारः स्मर्यन्ते ॥ १६ ॥

---

वचनं सामान्यतः सर्वेषामपि जनानां यमप्राप्तिं कथयदपि 'न सांपरायः' इतिवचनानुसारेण प्रमत्तनास्तिकादिपरतया व्याख्यायते, तथा 'चन्द्रमसमेव ते सर्वे' इत्यपि वचनं 'अथ य इमे ग्राम इष्टापूर्ते' इतिवचनानुसारेण 'ये वै केचिदिष्टादिकारिणः' इत्येवं व्याख्येयम् ॥ १३ ॥

सुगमम् ॥ १४ ॥

न च सप्तानां नरकाणां पातालगतत्वेन पापिनां तत्र गमने कथं यमपुरप्राप्तिरिति वाच्यम् । यमसदनं गत्वा तेषां यमानुज्ञयैव पातालप्रवेशात् ॥ १५ ॥

स्पष्टम् ॥ १६ ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाग्निविद्यायाम् 'वेत्थ यथासौ लोको न संपूर्यते' (छा. उ. ५।३।३) इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते-अथैतयोः पथोः न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं, तेनासौ लोको न संपूर्यते' (छा. उ. ५।१०।८) इति। तत्र एतयोःपथोरिति विद्याकर्मणोरित्येतत्। कस्मात्? प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपदे प्रकृते। 'तद्य इत्थं विदुः' इति विद्या। तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः। 'इष्टापूर्ते दत्तम्' इति कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः। तत्प्रक्रियायां 'अथैतयोःपथोः न कतरेण चन' इति श्रुतम्।

एतदुक्तं भवति—ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि

---

'प्रयोजनाभावेऽपि 'ये वै के च' इतिश्रुतिपर्यालोचनया सर्वेषां चन्द्रप्राप्तिरस्तु' इतिशङ्कानिराकरणार्थं सूत्रम्। 'असौ स्वर्गो लोकः इतो गच्छद्भिः यथा न सम्पूर्यते, तथा वेत्थ किम्' इति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः। तेन च प्रतिवचनेऽनुक्ते तस्यैव प्रवाहणस्य वाक्यं अथैतयोःपथोरिति। एतयोः-विद्याकर्मप्राप्ययोरुत्तरदक्षिणमार्गयोर्मध्ये केनापि यानि न सम्बध्यन्ते, तानीमानि सर्पकीटादीनि भूतानि पुनःपुनरसकृदावर्तमानानि जायस्व म्रियस्व भवन्ति। समुच्चये लोट्, तस्य स्वादेशः। अत्र श्रुतिगतैतत्पदार्थकथनपरः विद्याकर्मणोरिति सूत्रभागः। तदाह—एतयोः पथोरिति विद्याकर्मणोरित्येतदिति। इदं च एतयोरित्यस्य पथोरित्यस्य च वैयधिकरण्यविवक्षया। एतयोरित्यत्र प्राप्यत्वं षष्ठ्यर्थः। 'अथ य एतौ पन्थानौ न विदुः ते कीटाः पतङ्गा यदिदं दन्दशूकम्' इति वाजसनेयकपर्यालोचनया सामानाधिकरण्यविवक्षायां तु, एतयोरित्यनेनैव विद्याकर्मप्राप्यत्वेन पथोः परामर्शः, तेनैव रूपेण तयोः प्रकृतत्वात्। प्रतिपदे-प्रतिपत्तिसाधने।

ननु—तुशब्देन 'सर्वे चन्द्रमण्डलं न गच्छन्ति' इति साध्ये दर्शिते, तत्र हेतुर्वक्तव्यः, श्रुत्यर्थकथनस्य तु न प्रकृतोपयोगः—इत्याशङ्क्य, 'प्रकृतत्वात् विद्याकर्मणोरित्येतत् एतयोरित्यनेन विवक्षितम्' इति श्रुत्यर्थे दर्शिते अर्थाद्धेतुर्लभ्यत

कर्मणा पितृयाणे, तेषामेषः क्षुद्रजन्तुलक्षणः असकृदावर्ती तृतीयः पन्था भवतीति । तस्मादपि न अनिष्टादिकारिभिः चन्द्रमाः प्राप्यते ।

स्यादेतत्—तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्ते-इति ।

तदपि नास्ति, आरोहानर्थक्यात् । अपिच, सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्सु असौ लोकः प्रयद्भिः संपूर्येतेत्यतः, प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत । तथा हि प्रतिवचनं दातव्यं यथा असौ लोको न संपूर्यते । अवरोहाभ्युपगमादसंपूरणोपपत्तिरिति चेत्, न—अश्रुतत्वात् । सत्यमवरोहादप्यसंपूरणमुपपद्यते । श्रुतिस्तु तृतीयस्थानसंकीर्तनेन असंपूरणं दर्शयति 'एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा. उ. ५।१०।८) इति । तेन अनारोहादेव असंपूरणमिति युक्तम् । अवरोहस्य इष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात् । तुशब्दस्तु शाखान्तरीयवाक्यप्रभवां अशेषगमनाशङ्कां उच्छिनत्ति । एवं सति, अधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते-ये वै केचिदधिकृता अस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति-इति ॥ १७ ॥

---

इत्याह—एतदुक्तमिति । तथा च, मार्गद्वयप्रतिषेधेन पापिनां क्षुद्रजन्तुताप्राप्तेः प्रतिपादनात् न तेषां धूमादिना चन्द्रमण्डलगमनं इत्यर्थः सिध्यति ।

ननु—साक्षादेव हेतौ वक्तव्ये अर्थकथनव्याजेन सूत्रकृता किमिति हेतुः प्रतिपाद्यते—इति चेत्,

[1]उच्यते-एतयोःपथोरित्यत्र न पापिनां मार्गद्वयस्य प्रतिषेधः । तथासति प्रकृतमार्गद्वयप्रतिषेधात् मार्गान्तरस्य चानिर्देशात् मार्गाभावेन पापिनां गतिरेव

---

1. श्रुतप्रकाशिकायां हि अस्मिन्नधिकरणे - आद्यं सूत्रपञ्चकं पूर्वपक्षनिरूपणपरम्, 'विद्याकर्मणोरिति तु प्रकृतत्वात्' इत्येतदेव सिद्धान्तसूत्रम्-इत्युक्तम् । भगवत्पादीयाधिकरणरचनायां च दूषणमुक्तम्—'संयमने तु' इति तुशब्दनिरस्यमानशङ्काव्यतिरेकेण 'विद्याकर्मणोरिति तु' इति तुशब्दनिरसनीयशङ्काया अनिरूपणात्—इति । तदेतद्दूषणं 'उच्यते' इत्यादिग्रन्थसन्दर्भेण उद्धृतप्रायं भवति ।

यत्पुनरुक्तम्—देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, पञ्चम्या-माहुताविति आहुतिसंख्यानियमात्-इति । तत् प्रत्युच्यते—

## न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनां आदर्तव्यः। कुतः ? तथोपलब्धेः । तथा हि अन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते 'जायस्वम्रियस्वेत्येतत् तृतीयं स्थानम्' (छा. उ. ५।१०।८) इति ।

अपि च, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति मनुष्य-शरीरहेतुत्वेन आहुतिसंख्या संकीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात् ।

---

न स्यात् । न च एतत्तृतीयंस्थानमिति तेषां मार्गप्रतिपादकम् । स्थानपदस्य भोग-भूमिप्रतिपादकतया मार्गप्रतिपादकत्वासम्भवात्, क्षुद्रजन्तूनां मार्गत्वासम्भवाच्च। अतः, एतयोःपथोरित्यत्र पथिन्शब्दः प्रापकत्वगुणयोगेन कर्मविद्यापरः । तथा च, 'ये विद्याकर्मणोरनधिकृताः तेषां क्षुद्रजन्तुता' इति श्रुत्यर्थे सति, मार्गद्वयस्य पापिनः प्रत्यप्रतिषेधात् 'चन्द्रमण्डलं गत्वा ततोऽवरुह्य पापिनां क्षुद्रजन्तुता' इति कल्पनायां नानुपपत्तिः—इतिशङ्कानिराकरणार्थं श्रुत्यर्थकथनव्याजेन अर्थाद्धेतुर्दर्शितः ।

अयमत्र परिहारार्थः—एतयोरित्यनेनैव विद्याकर्मणोः परामर्शात् न पथोरि-त्यनेनापि तयोर्ग्रहणम् । पौनरुक्त्यात्, पथोरित्यस्य मुख्यवृ(त्त्यैव)[त्तेरेव]ग्रहण-ग्रहणसम्भवे गौणत्वकल्पनानुपपत्तेश्च । न च तथासति पापिनां मार्ग एव न स्यादिति शङ्कनीयम् । स्थानपदस्यैव मार्गलक्षकत्वोपपत्तेः । 'एतत् तृतीयं स्थानम्' इति हि मार्गद्वयनिरूपितं तृतीयत्वं स्थानपदार्थस्योच्यते । सङ्ख्यापूरणं च गुहाधि-करणन्यायात् सजातीयेनैवेति, स्थानपदस्य मार्गलक्षकत्वं उचितमेव । तेषां च क्षुद्रजन्तूनां मार्गत्वमपि उपपन्नमेव । यथा हि धूमादिपर्वाणि उत्तरोत्तरभूमिप्रापक-त्वेन स्थितानि, एवं क्षुद्रयोनयोऽपि उत्तरोत्तरक्षुद्रयोनिप्रापिकाः । पापिनामनेक-क्षुद्रयोनिप्राप्तेश्शास्त्रसिद्धत्वात् । परं तु, धूमादिषु मार्गपर्वसु न भोगः क्षुद्रजन्तुषु तु भोगोऽप्यस्तीति द्योतनाय मार्गे एव स्थानशब्दः प्रयुक्तः ॥ १७ ॥

अपिच, पञ्चम्यामाहुतौ अपां पुरुषवचस्त्वमुपदिश्यते, न अपञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात् । तत्र, येषामारोहावरोहौ संभवतः तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति । अन्येषां तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिः देह आरप्स्यते ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

अपिच स्मर्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां च अयोनिजत्वम् । तत्र, द्रोणादीनां योषिद्विषयैकाहुतिः नास्ति, धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः । यथा च तत्र आहुतिसंख्यानादरो भवति एवमन्यत्रापि भविष्यति । बलाकापि अन्तरेणैव रेतःसेकं गर्भं धत्त इति लोके रूढिः ॥ १९ ॥

## दर्शनाच्च ॥ २० ॥

अपि च. चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोः अन्तरेणैव ग्राम्यधर्मं उत्पत्तिदर्शनात् आहुतिसंख्यानादरो भवति एवं अन्यत्रापि भविष्यति ॥ २० ॥

ननु–'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्' (छा. उ. ६।३।१) इत्यत्र त्रिविध एव भूतग्रामः श्रूयते,

---

ननु, 'आपः पुरुषवचसः' इत्यत्र पुरुषपदं मनुष्यामनुष्यसाधारणम् । तत्पुरोवादे 'तद्य इह रमणीयचरणाः, तद्य इह कपूयचरणाः' इति प्रस्तुत्य ब्राह्मणादियोनिवत् श्वादियोनेरपि प्रतिपादनात्, अत आह–अपि चेति ॥ १८ ॥

ऋषेः कस्यचित् द्रोणे स्कन्नं रेतो द्रोणाचार्यरूपेण परिणतमिति न तस्य योषिदाहुतिः । धृष्टद्युम्नः अग्निमध्यान्निर्गतः द्रौपदी वेदिमध्यान्निर्गता सीता भूमेर्निर्गतेति तेषां योषित्पुरुषविषये द्वे अपि आहुती न स्तः ॥ १९ ॥

जरायुः–गर्भवेष्टनचर्म, तत्र जाता मनुष्यादयः, अण्डजाः पक्ष्यादयः, स्वेदजा मत्कुणादयः, उद्भिज्जाः-भूमिमुद्भिद्य जाताः वृक्षादयः ॥ २० ॥

कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति। अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयेन उद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इति अन्यत्र स्वेदजोद्भिज्जयोर्भेदवादः इत्यविरोधः ॥ २१ ॥

४ तत्साभाव्यापत्त्यधिकरणम्

## तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

इष्टादिकारिणः चन्द्रमसमारुह्य तस्मिन् यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम्। अथ अवरोहप्रकारः परीक्ष्यते।

तत्रेयमवरोहश्रुतिर्भवति—'अथ एतमेवाध्वानं पुनर्निवर्तन्ते यथेतं आकाशं आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा. उ. ५।१०।५) इति।

तत्र संशयः—किं आकाशादिस्वरूपमेव अवरोहन्तः प्रतिपद्यन्ते किं वा आकाशादिसाम्यम्—इति। तत्र प्राप्तं तावत् आकाशादिस्वरूपमेव प्रति-

---

त्रीण्येव बीजानीति। अण्डजादीनामेव पूर्वेषामुत्तरोत्तरान् प्रति बीजत्वम्।

स्वेदस्य ऊष्मादिकृतशोकजन्यत्वेन स्वेदजं संशोकजशब्देन विवक्षितम्। तस्य तृतीयेन उद्भिज्जशब्देन श्रुतौ सङ्ग्रहः कृतः।

प्रयोजनं पूर्वपक्षे-पापिनामपि यथाकथञ्चित् स्वर्गप्राप्तेर्विद्यमानतया पापात् न अतिवैराग्यम्। सिद्धान्ते तु, भोगाभावेऽपि स्वर्गदर्शनमपि पापिनां नास्तीति ततोऽत्यन्तवैराग्यम् ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम्

श्रुतौ चन्द्रमण्डलारोहणानन्तरं अवरोहः प्रतिपादितः। अतः श्रौतक्रमानुसारेण आरोहं निरूप्य अपादसमाप्तेः अवरोहप्रकारो निरूप्यते।

पद्यन्ते इति। कुतः ? एवं हि श्रुतिर्भवति। इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा। तथा च वायुर्भूत्वाधूमोभवतीत्येवमादीन्यक्षराणि तत्स्वरूपापत्तौ आञ्जस्येनावकल्पन्ते। तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति।

एवं प्राप्ते ब्रूमः—आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यत् अम्मयं शरीरं उपभोगार्थमारब्धं तत् उपभोगक्षये सति प्रविलीयमानं सूक्ष्मं आकाशसमं भवति, ततो वायोर्वशमेति, ततो धूमादिभिः संपृच्यते—इति। तदेतदुच्यते—'यथेतमाकाशमाकाशाद्वायुम्' इत्येवमादिना। कुत एतत् ? उपपत्तेः-एवं हि एतदुपपद्यते। न हि अन्यस्य अन्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते।

---

एवं हि श्रुतिर्भवतीति। ननु—वायुर्भूत्वाधूमोभवतीत्युत्तरवाक्यपर्यालोचनया अवरोहतां वाय्वादिभावावगमेऽपि यथेतमाकाशमाकाशाद्वायुमितिवाक्येन 'निवर्तन्ते' इत्यनुषङ्गयुक्तेन अनुशयिनामाकाशवायुप्राप्तेः भेदेनावगमात् तदनुसारेण औपसंहारिको वाय्वादिभावो न मुख्यः। अपि च अनुशयिनां जीवानां कथं वाय्वादिभावः, न हि तेषां वाय्वाद्याकारेण परिणामः सम्भवति, अपरिणामित्वात्-इति चेत्,

उच्यते—'आकाशं प्रति निवर्तन्ते' 'वायुं प्रति निवर्तन्ते' इति वाक्याभ्यां या अवरोहतामाकाशवायुप्राप्तिरवगम्यते, सा द्वेधा सम्भवति—तादात्म्येनाकाशादिप्राप्तौ अन्यथा वा। तत्र वायुप्राप्तेः वायुर्भूत्वाधूमोभवतीति उत्तरवाक्ये तादात्म्येनानुवादात्, सन्दिग्ध उपक्रमः तादात्म्यविषयतया व्यवस्थाप्यते। जीवस्यापरिणामित्वेऽपि भूतसूक्ष्मस्य आकाशाद्यात्मना परिणामे सति तदैक्याध्यासमापन्नो जीवः शक्यते निर्देष्टुं वायुर्भूत्वाधूमोभवतीति।

न ह्यन्यस्यान्यभाव इति। भवेदेतदेवं पूर्वपक्ष्युक्तम्, यदि प्राक्सिद्धादाकाशादाकाशान्तरात्मना अनुशयिनां परिणाम इह प्रतिपाद्येत। अत्र तु 'यथेतम्' 'एतम्' इतिवाक्यपर्यालोचनया, ये गमनकाले विद्यमाना आकाशादयः तद्भावः प्रतीयते। न च प्राक्सिद्धाकाशात्मना अनन्तरं परिणामः सम्भवति। जायमानमपेक्ष्य प्राक्सिद्धस्य भिन्नत्वात्। अतो मुख्यार्थानुपपत्त्या लक्षणा आश्रयणीया इति

विभुत्वाच्च आकाशेन नित्यसंबन्धत्वात् न तत्सादृश्यापत्तेरन्यः तत्संबन्धो घटते। श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव। अतः आकाशादितुल्यतापत्तिरेव अत्र आकाशादिभाव इति उपचर्यते ॥ २२ ॥

५ नातिचिराधिकरणम्

## नातिचिरेण विशेषात् ॥ २३ ॥

तत्र आकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेः भवति विशयः — किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थाय उत्तरोत्तरसादृश्यं गच्छन्ति उत अल्पमल्पमिति।

---

भावः। प्राक्सिद्धाकाशात्मभावमुपेत्यापि दूषणमाह-[1]आकाशस्वरूपेति। प्राक्सिद्धाकाशोपमर्देन वायुभावे हि आकाश एव न भवेदिति भावः। एतावतापि आकाशसमोभवतीत्यर्थलाभः कुतः इत्यपेक्षायां आह—विभुत्वाच्च आकाशेनेति।

पूर्वपक्षे—भूतसूक्ष्मस्य आकाशाद्यात्मना परिणामे सति आकाशाद्यभिमानिदेवतानामिव अवरोहतामनुशयिनां आकाशादिशरीरकत्वसम्पत्तेः सम्भवति भोग इति न वैराग्यम्। सिद्धान्ते तु-अवरोहतां भूतसूक्ष्मस्य तथापरिणामाभावात् जाड्यमेवानुवर्तत इति, काम्यकर्मणां भोगान्ते पुनः जाड्यमनेककालमनुभाव्यमिति वैराग्यसिद्धिः ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम्

पूर्वाधिकरणप्रतिपादिते अनुशयिनामाकाशादिसादृश्ये विशेषचिन्तनात् सङ्गतिः।

किं दीर्घंदीर्घं कालं पूर्वपूर्वसादृश्येनेति। यथा व्रीह्यादिभावानन्तरं अतिचिरं प्राग्योन्यापत्तेः अवस्थानम्, एवं व्रीह्यादिभावात् प्राक् आकाशादिसाम्येनापि किमतिचिरं व्रीह्यादाविवावस्थानम्, उत व्रीह्यादिसाम्यापेक्षया अल्पकालावस्थानम्— इति संशयार्थः।

---

1. 'प्राक्सिद्धेति' इति आ. पाठः। तत्र, प्राक्सिद्धाकाशेति भाष्यपाठः स्यात्।

तत्र-अनियमः, नियमकारिणः शास्त्रस्य अभावात्-इत्येवं प्राप्ते

---

तत्रानियम इति । [1]ननु–'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति व्रीह्यादिभावं प्रतिपाद्य 'अतो वै खलु दुर्निष्प्रपतरम्' इति वाक्यं आम्नायते । तत्र च, व्रीह्यादिभ्यो दुःखेन निस्सरणमिति यद्यपि यथाश्रुति प्रतीयते, तथापि प्राग्योन्यापत्तेः दुःखस्यासम्भवात् चिरकालता दुरुपसर्गेण [2]प्रतिपादनीया । ततश्च, व्रीह्यादिभ्यो निस्सरणं चिरकालेनेत्यर्थे सति, ततः प्राचीनेभ्यो निस्सरणं अल्पेन कालेनेति सिध्यति–इति चेत्;

न–भवेदेतदेवं, यदि, अतोवैखलुदुर्निष्प्रपतरमित्यत्र, अतएव व्रीह्यादिभावादेव [3]दुःखेन निस्सरणमिति परिसङ्ख्यार्थं एतद्वाक्यं भवेत्, न तु तथा वचनव्यक्तिर्विवक्षिता, अपि तु, व्रीह्यादिष्ववस्थानोक्त्यनन्तरं योन्यापत्तौ प्रतिपादितायां व्रीह्यादिभ्यो निस्सरणस्य अर्थसिद्धतया, 'चिरमचिरं वा तत्रावस्थाय निस्सरणं' इत्यनियमे प्राप्ते 'चिरेणैव ततो निस्सरणम्' इति नियमप्रतिपादनात्, व्रीह्यादौ चिरमचिरंवेत्यनियमव्यावृत्तिः लभ्यते, न त्वाकाशादिषु चिरावस्थानव्यावृत्तिः । तथा च [4]व्रीह्यादिभावात् आकाशभावः चिरमचिरंवेत्यत्र नियामकाभावात् अनियम एव ।

न च–एवमपि अतोवैखलुदुर्निष्प्रपतरमित्यत्र एकस्य तकारस्य छान्दसत्वेन लुप्तत्वात् दुर्निष्प्रपतरमिति अतिशयितविलम्बेननिस्सरणमित्यर्थः प्रतीयते । तथा च 'किमपेक्षयातिशयेन' इत्यपेक्षायां आकाशादिभ्य इति सन्निधानात् प्रतीयते । ततश्च व्रीह्यादिभ्य आकाशादिषु अवस्थानं अल्पकालमिति अर्थात् सिध्यति - इति वाच्यम् ।

दुर्निष्प्रपतरमित्यत्र तकारलोपो वा छान्दसः रेफोपजनो वा छान्दसः इत्यत्र नियामकाभावात् । अपि चेह तरप्प्रत्ययो न प्रवर्तते । 'द्विवचनविभज्योपपदे

---

1. भाष्ये अनियमपूर्वपक्ष उक्तः । तत्र अरुच्या भामत्यां प्रकारान्तरेण पूर्वपक्षः उक्तः । अरुचिबीजं च कल्पतरौ उक्तम् । शङ्कासमाधानाभ्यां तन्निरासेन अनियमपूर्वपक्षं भाष्योक्तं दृढीकर्तुं आरभते—**नन्वित्यादिना** ।

2 आ. बोधनीया

3. **दुखेन**—चिरकालेन ।

4. मु. व्रीह्यादिभावश्चिरमचिरं

इदमाह—नातिचिरेणेति। अल्पमल्पं कालं आकाशादिभावेनावस्थाय वर्षधाराभिः सह इमां भुवं आपतन्ति। कुत एतत्? विशेषदर्शनात्। तथाहि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि 'अतो वै खलु दुर्निष्प्रपतरम्' (छा. उ. ५।१०।६) इति। तकार एकः छान्दस्या प्रक्रियया लुप्तो

---

तरबीयसुनौ' इति सूत्रेण द्विवचनान्ते विभजनीये चोपपदे सत्येव तरबीयसुनोर्विधानात्। यथा—देवदत्तयज्ञदत्तयोर्मध्ये देवदत्त आढ्यतरः, माधुराः पाटलिपुत्रकेभ्य आढ्यतराः—इति। न चात्र प्रकृते तदुभयमस्ति। अतो नात्र तरपोऽवकाश इति रेफोपजन एव छान्दस उपेयः।

अतो व्रीह्यादिभावात् प्राक् अनियम इति पूर्वपक्षः।

तकारएकश्छान्दस्येति। अयमर्थः—यदि रेफोपजनोऽङ्गीक्रियेत, तदा अर्थविशेषो न लभ्यते। तरप उपगमे तु अतिशयरूपार्थाधिक्यं लभ्यते। अतः तरप्प्रत्ययमुपेत्य तकारलोप एव छान्दस उपेयः। न च द्विवचनान्तस्य विभक्तव्यस्य चोपपदस्य अभावात् तरपोऽनुपपत्तिः। शब्दतस्तदुपादानाभावेऽपि सन्निधानेन आकाशादिभ्य इत्यवगन्तुं शक्यत्वात्। शब्दत अनुपात्तत्वेऽपि गम्यमानेनापि विभक्तव्येन तरप्प्रत्ययस्य 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इत्यत्र दर्शनात्। अत्र हि, विद्याविहीनात् कर्मणो विद्यायुक्तं कर्म वीर्यवत्तरं इत्यर्थो विवक्षितः। तथा च अतइत्यनेन, सन्निहितानां व्रीह्यादीनां परामर्शात्, आकाशादिभ्यो यन्निष्क्रमणं तदपेक्षया व्रीह्यादिभ्यो निष्क्रमणं अत्यन्तविलम्बेन इत्यर्थे सति आकाशादिष्ववस्थानं व्रीह्यादिष्ववस्थानमपेक्ष्य अल्पकालमिति सिध्यति।

वस्तुतस्तु, दुर्निष्प्रपतरमित्यत्र तकारलोपो न कल्प्यत एव। डप्रत्ययान्तत्वे पतेः [1]टिलोपसम्भवात्। '[2]सप्तम्यां जनेर्डः' [3]इत्यत्र 'अन्येभ्योऽपि दृश्यते'

---

1. टिलोपेति डित्वसामर्थ्यात् अभस्यापि टेः लोपः-इति वैयाकरणसिद्धान्तात् इति भावः।

2. मु. पञ्चम्यां जनेर्डः

3. इत्यत्रेति इति जनेर्डप्रत्ययविधानं प्रक्रम्य प्रवृत्ते 'अन्येष्वपिदृश्यते' इति सूत्रे इत्यर्थः।

मन्तव्यः । दुर्निष्प्रपततरं—दुर्निष्क्रमतरं—दुःखतरं अस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः । तदत्र दुखं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति । सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः । तस्मिन्नवधौ शरीरानिष्पत्तेः उपभोगासंभवात् । तस्मात् व्रीह्यादिभावापत्तेः प्राक् अल्पेनैव कालेन अवरोहः स्यादिति ॥ २३ ॥

६ अन्याधिष्ठिताधिकरणम्

## अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते—'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' (छा. उ. ५।१०।६) इति ।

---

इति वार्तिकेन धात्वन्तरेभ्योऽपि डप्रत्ययस्यानुशिष्टत्वात्, तत्र 'दृशिग्रहणं उपपदान्तरेभ्योऽपि भवतीति द्योतनाय' इति वृत्तिकारेणोक्तत्वाच्च, [1]'कृत्यल्युटो बहुलम्' इति सूत्रे बहुलग्रहणात्, ये प्रत्यया येनयेनोपाधिना विहिताः ते तदभावेऽपि प्रयोगानुसारेण भवन्तीत्युपगमाच्च । [2]तथा च, दुर्निष्प्रपतरमिति तरपोऽभ्युपगमे न काचिदनुपपत्तिः ।

[3]न च-तरप उपगमेऽपि अतोवैखलुदुर्निष्प्रपतरमित्यत्र अत इत्यनेन आकाशादीनामपि परामर्शात् सर्वेभ्योऽपि अतिविलम्बेन निष्क्रमणं प्रतीयते । कथं आकाशादिकमपेक्ष्य व्रीह्यादिभ्यः अत्यन्तविलम्बेन निष्क्रमणं इत्यर्थलाभः—इति वाच्यम् । आकाशादिकमपेक्ष्य व्रीह्यादीनां सन्निहिततरत्वात्, आकाशादीनामपि परामर्शे तरबर्थातिशयप्रतियोग्यलाभप्रसङ्गाच्च, अतइत्यनेन व्रीह्यादीनामेव परामर्शो न्याय्यः ।

आकाशादिष्वल्पकालमवस्थानमितिव्युत्पादनव्याजेन, व्रीह्यादिसाम्यमापन्नस्य यत् ततो निष्क्रमणं तत् अतिविलम्बेनेति व्यवस्थापनात्, वैराग्यपर्यवसायिता ॥२३॥

इति नातिचिराधिकरणम्

---

1. डप्रत्ययस्य खलर्थवृत्तित्वं सम्पादयति—कृत्येत्यादिना ।
2. तथाचेति तकारलोपकल्पनं विनैव इति शेषः ।
3. नचेत्यादि उक्तशङ्कासमाधाने प्रकृताधिकरणपूर्वपक्षसिद्धान्तत्वेन शास्त्रदर्पणोक्ते । अनियमपूर्वपक्षानुसारं तु इमे सिद्धान्तोपरि शङ्कासमाधाने केवलम् ।

तत्र संशयः—किं अस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुख-दुःखभाजः अनुशयिनो भवन्ति आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु स्थावर-शरीरेषु संश्लेषमात्रं गच्छन्तीति ।

किं तावत् प्राप्तम् । स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति । कुत एतत् ? जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रुति-

---

पूर्वस्मिन्नधिकरणे, आकाशादिभ्यो वर्षान्तेभ्यो निष्क्रमणमपेक्ष्य व्रीह्यादिभ्यो निष्क्रमणं अतिविलम्बेनेति व्रीह्यादिभावे विशेषः प्रतिपादितः । तथासति, आका-शादिसाम्यापत्तिरूपादाकाशादिभावात् व्रीह्यादियोन्यापत्तिरेव व्रीह्यादिभाव इत्यपि विशेषोऽस्तु-इति दृष्टान्तमुखेन प्रत्यवस्थानात् सङ्गतिः ।

ननु—वायुर्भूत्वाधूमो भवतीत्यादौ मुख्यार्थं परित्यज्यापि अमुख्यवृत्त्या 'वायु-सदृशो भूत्वा' इत्येवमादिरूपेण व्याख्येयमित्युक्तम् । एवमत्रापि 'त इह व्रीहियवा ओषधिवनस्पतयः' इत्यादावपि व्रीह्यादिसंश्लिष्टाभवन्तीत्यमुख्यार्थता किं न स्यात्—अत आह—स्थावरभावस्य चेति । व्रीह्यादिषु हि कश्चिदुपभोक्ता अपेक्षितः । तथा च अपेक्षानुसारेण प्रकृते मुख्यार्थत्वमुपेयम् ।

न च—तत्र जीवान्तरमेव भोक्तृ भविष्यति, स्वर्गादवरोहन्तस्तु तत्संश्लिष्टा [1]एव भवन्तु-इति वाच्यम् । तथाकल्पनायां प्रमाणाभावात् । आकाशादिस्थले तु, यथेतमितिवाक्यपर्यालोचनया प्राक्सिद्धानामेवाकाशादीनामवगमात् तद्भावापत्तेरनु-शयिनामसम्भवात् वाय्वादिपदानां सादृश्यलक्षणा उपेता । इह तु व्रीह्यादिपदानां व्रीह्यादिसंश्लिष्टतालक्षणायां न किञ्चिन्नियामकमस्ति । अनुशयिनां व्रीह्यादिशरीरापत्ते-स्सम्भवात् । न चेह जीवान्तरैरधिष्ठिता एव व्रीह्यादयः व्रीह्यादिपदैरुपादीयन्ते, येन अनुशयिनां तच्छरीरापत्तिः अनुपपन्ना स्यात् ।

न च—अस्मिन् प्रकरणे, अनुशयिनां यत्र शरीरग्रहणमाम्नातं 'तद्य इह रमणीयचरणा रमणीयां योनिम्' इत्यादौ, तत्र तदुपयुक्तं पुण्यादिकं कीर्तितम्, इह तु व्रीह्यादिभावे तदुपयुक्तं पापं न कीर्त्यते, अतो नात्र शरीरग्रहणं विवक्षितम्-इति वाच्यम् । 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इत्यस्य यथा-श्रुतार्थत्वसिद्धये शरीरापत्तौ सिद्धायां, तदुपयुक्तस्य पापस्य आक्षेपोपपत्तेः । [2]शब्दत

---

1. मु॰ 'एव' नास्ति 2. आ॰ अत एव तस्य

स्मृत्योः उपभोगस्थानत्वप्रसिद्धेः, पशुहिंसादियोगाच्च इष्टादेः कर्मजातस्य अनिष्टफलत्वोपपत्तेः। तस्मात् मुख्यमेवेदं अनुशयिनां व्रीह्यादिजन्म, श्वादिजन्मवत्—यथा 'श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति मुख्यमेव अनुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति एवं व्रीह्यादिजन्मापीति।

---

एव तस्य कीर्तनमपेक्षितमिति निर्बन्धस्तु अप्रयोजकः। अपि च 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इति तदुपयुक्तं कर्मापि [1]प्राक् कीर्तितमस्ति।

ननु—पुण्यरूपस्य तस्य कथं क्लेशसम्पादकव्रीह्यादियोनिप्रापकता, अत आह—पशुहिंसादियोगाच्चेति। 'न हिंस्यात्' इति वाक्येन कृत्स्नाया हिंसाया अनिष्टसाधनताबोधनेन यागीयहिंसाया अनिष्टसाधनतया तद्युक्तस्येष्टादेः स्थावरत्वापत्तिः फलं नानुपपन्नम्।

[2]ननु—'न हिंस्यात्' इति वाक्येन न कृत्स्नाया अपि हिंसाया अनिष्टसाधनता बोध्यते, अपि तु पुरुषार्थाया एव। नहिंस्यादित्यत्र आख्यातस्य कर्तृवाचकत्वमते शब्दादेव पुरुष उपस्थितो भवति, तदवाचकत्वपक्षे तु आख्यातार्थभावनाक्षेपात्। तथा च निषेधोपस्थिते बलवदनिष्टसाधनत्वे कस्यानिष्टसाधनमित्यपेक्षायां उपस्थितत्वात् पुरुषस्येति सम्बध्यते। एवमेव अनूदितेष्टसाधनतायामपि कस्येष्टसाधनमित्यपेक्षायां [3]उपस्थितत्वात् पुरुषस्येष्टसाधनं इत्यपि सम्बन्धो भवति। निषेधस्थले हि अनिष्टगतबलवत्तानिरूपणापेक्षितविधिशक्त्युपस्थितेष्टसाधनत्वानुवादेनैव अनिष्टसाधनता बोध्यते। तथा च अयमर्थस्सम्पन्नः—पुरुषस्येष्टसाधनत्वेन प्रसिद्धा या हिंसा सा तस्य बलवदनिष्टसाधनम्-इति।

न च-एवंसति हिंसोद्देशेन बलवदनिष्टसाधनताविधिपरे वाक्ये उद्देश्यायाः हिंसायाः कथं पुरुषेष्टसाधनत्वं विशेषणम्, उद्देश्यविशेषणस्य परिसङ्ख्याफलकत्वेन अन्याय्यत्वात्-इति वाच्यम्।

यत्र हि उद्देश्यविशेषणं परिसङ्ख्यामात्रफलकं तत्रैव तत् अन्याय्यम्। यथा—ग्रहं संमार्ष्टीति। तत्र हि उद्देश्यतावच्छेदकस्य विधेयव्याप्यताया व्युत्पत्ति-

---

1. 'प्राक्' नास्ति

2. पूर्वमीमांसकाभिमतं भामत्युक्तं हिंसाविधिनिषेधयोर्भिन्नविषयकत्वं उपपादयन् भाष्योक्तमाक्षिपति-नन्वित्यादिना 'भवेदेतदेवम्' इत्यतःप्राक्तनग्रन्थपर्यन्तेन।

3. मु. 'उपस्थितत्वात्' नास्ति

सिद्धत्वेन ग्रहत्वावच्छिन्नस्य सर्वस्य सम्मार्गसम्बन्धित्वावगमात् एकत्वविशेषणं ग्रहान्तरव्यावृत्तिमात्रफलकमिति तन्न विवक्ष्यते। यत्र तु उद्देश्याकाङ्क्षापूरणार्थं विशेषणं भवति तत्र तत् विवक्ष्यत एव। यथा 'यस्योभयं हविरार्तिमार्छेत्' इति। अत्र आर्तिर्धर्मिविशेषापेक्षित्वात् हविषो विवक्षितत्वम्। एवं च, प्रकृतेऽपि कस्येष्टसाधनमिति उद्देश्यांशे अपेक्षाया उत्थितत्वात् पुरुषस्येति उपस्थितं विवक्ष्यते। उपस्थितिमूलक एव च निषेध्यनिषेधयोस्समानविषयकत्वन्यायः। अत एव 'नानृतं वदेत्' इति क्रतुप्रकरणपठितस्य वाक्यस्य क्रत्वर्थानृतवदने क्रत्वर्थतयैव प्रतिषेधपरत्वम्। प्रतिषेध्यस्य क्रत्वर्थत्वं पुरुषार्थत्वं नाम, क्रतूपकारकत्वं पुरुषोपकारकत्वं च। प्रतिषेधस्यापि क्रत्वर्थत्वं पुरुषार्थत्वं च क्रतुपुरुषानिष्टबोधकतैव। तथा च, [1]यथा-नानृतंवदेदिति क्रतुप्रकरणगते वाक्ये क्रतोरुपस्थिततया, निषेधोपस्थिते अनिष्टसाधनत्वे कस्येत्यपेक्षायां क्रतोरिति सम्बन्धवत् अनूदितेष्टसाधनत्वेऽपि कस्येत्यपेक्षायां क्रतोरित्येव सम्बध्यते। क्रतोरिष्टः क्रतूपकारः, अनिष्टं तु क्रतुवैगुण्यम्। तथा - नहिंस्यादितिनिषेधस्य पुरुषार्थत्वात् प्रतिषेध्या [2]हिंसा पुरुषार्थैव भवतीति, क्रतुगताया हिंसायाः प्रतिषेधाविषयत्वात् न तस्याः प्रत्यवायकरता।

न च—प्रतिषेध्यप्रतिषेधयोः समानविषयकत्वं न नियतम्, 'दीक्षितो न ददाति' 'न जुहोति' इत्यादौ प्रतिषेधस्य क्रत्वर्थत्वेऽपि प्रतिषेध्यानां दानादीनां पुरुषार्थत्वस्योपेतत्वात्—इति वाच्यम्।

बाधकवशेन तत्र समानविषयत्वपरित्यागेऽपि अन्यत्र तत्परित्यागस्य अनुचितत्वात्। दीक्षितोनददातीत्यादौ प्रकरणात् प्रतिषेधस्य क्रत्वर्थत्वं तावत् अवश्यंभावि। तत्र, यदि प्रतिषेध्या दानादयः शास्त्रेण क्रत्वर्थतया बोधिता एव स्वीक्रियेरन्, तदा विधिप्रतिषेधयोस्समानविषयत्वेन षोडशिग्रहवत् दानादीनामपि विकल्पः स्यात्, स मा भूदिति, उपस्थितस्यापि क्रतोः प्रतिषेध्यांशे सम्बन्धो नोपेयते, अपि तु, ये पुरुषार्थतया क्रतुबहिष्कृता एव दानहोमादयः प्रसिद्धाः त एवानूद्यन्ते। तथा च प्रतिषेध्यप्रतिषेधयोर्भिन्नविषयत्वात् विकल्पो न भवति। अनृतवदनस्य तु क्रतूपकारकस्य ऋत्विगानत्याद्युपयोगिनः 'अधिकां दक्षिणां दास्यामि' [3]इत्येवंवचनोक्त्यादिरूपस्य शास्त्रं विनैव सिद्धत्वात् समानविषयत्वेऽपि निषेध्यनिषेधयोः

---

1. मु. 'यथा' नास्ति
2. मु. हिंसापि
3. मु. इत्येवं वचनो

न विकल्पः प्रसज्यत इति न तत्र उत्सर्गः परित्यज्यते। एवं नहिंस्यादित्यत्रापि उपस्थितस्य पुरुषस्य परित्यागे कारणं नास्तीति, पुरुषार्थाया एव हिंसाया अनेन प्रतिषेधात्, क्रत्वर्थाया हिंसायाः कथं प्रत्यवायकरत्वमुच्यते—इति चेत्,

[1]भवेदेतदेवम्, यदि नानृतंवदेदित्यत्र क्रत्वर्थविशेषणेन क्रत्वनुपयुक्तस्यानृतवदनस्य यथा व्यावृत्तिः एवं नहिंस्यादित्यत्र पुरुषार्थत्वविशेषणेन क्रतूपकारिण्या हिंसाया व्यावृत्तिर्भवेत्, न तु तदस्ति। क्रत्वर्थाया अपि हिंसायाः क्रतूपकारमुखेन पुरुषाभिलषिततया व्यावृत्तेरसम्भवात्। ननु - साक्षात्पुरुषाभिलषितसाधनभूतैव हिंसा पुरुषविशेषणेनोपस्थाप्यते, न तु उपकारमुखेन पुरुषोपयुक्ता—इति चेत्, न—तथासति शत्रुवधादेरपि द्रव्यप्राप्त्यादिद्वारैव पुरुषाभिलषितसाधनतया तेषामपि ग्रहणं न स्यात्। 'क्रतुबहिर्भूता या पुरुषाभिलषितसाधनं सा संगृह्यते' इत्यत्र तु न किञ्चिन्नियामकमस्ति।

तथा च, आख्यातोपस्थितपुरुषं प्रति इष्टसाधनतयोपगता या हिंसा सा सर्वापि इह निषेध्येति, यागीयहिंसाया अपि पुरुषेष्टसाधनतया तस्या अपि निषेधविषयता भवत्येव। [2]अत एव, 'यो ब्राह्मणायापगुरेत् तं शतेन यातयात् तस्मात् ब्राह्मणाय नापगुरेत' इति वाक्यं यद्यपि क्रतुप्रकरणगतम्, तथापि नापगुरेतेति निषेधोपात्तमनिष्टं किमित्यपेक्षायां, तंशतेनयातयादितिवाक्योपस्थितशतयातनाख्यनरकविशेषस्य वाक्येन समर्पणात्, क्रतुप्रकरणबाधेन निषेधस्य पुरुषार्थत्वात् निषेध्यापगोरणस्यापि उपस्थितपुरुषार्थत्वस्थितौ, क्रतूपयुक्तं तदनुपयुक्तं वा यावत् अपगूरणं तत् सर्वं निषेध्यमुपेयते। पुरुषार्थत्वविशेषणस्य क्रतूपयुक्तव्यावर्तकत्वे तु क्रतूपयुक्तब्राह्मणापगूरणं प्रत्यवायकरं न भवेत्।

न च वाच्यं—क्रतूपयुक्ताया अपि हिंसायाः यदि निषेधोऽभ्युपगम्येत, तथा सति, नहिंस्यादिति निषेधस्य निषेध्यसमानविषयकतानियमात्[3] क्रत्वर्थताप्युपेया भवेदिति, एकस्यैव वाक्यस्य क्रत्वर्थपुरुषार्थनिषेधबोधकतया स्वातन्त्र्यपारतन्त्र्यलक्षणं वैरूप्यं भवेत्-इति।

---

1. भामत्युक्तं पूर्वमीमांसकसम्मतं च भिन्नविषयकत्वं समानविषयकत्वव्यवस्थापनेन निराकुर्वन् भाष्योक्तं समर्थयितुं आरभते—**भवेदेतदेवमित्यादिना** 'तस्मात् युक्तमुक्तं......अनिष्टफलत्वोपपत्तेरिति' इत्यन्तेन।

2. **अत एवेति** निषेध्यमुपेयते-इत्युत्तरेण सम्बध्यते।

3. आ. नियमसिद्ध्यर्थं क्रत्व

निषेध्यनिषेधयोस्समानविषयकत्वं इति न्यायो हि उपस्थितिमूलकः। नहिंस्यादितिवाक्ये तु क्रतूपस्थापकं प्रकरणादिकं किञ्चित् प्रमाणं नास्तीति कथं क्रतुशेषता स्यात्। क्रत्वर्थहिंसा तु [1]पुरुषार्थत्वेन क्रोडीकृतेति न तस्या व्यावृत्तिः। निषेधबोधिता पुरुषानिष्टसाधनता तु, नरकविशेषप्रतिपादकवाक्यशेषे तमादाय पर्यवसिता भविष्यति, तदभावे तु विश्वजिन्न्यायेन दुःखसामान्यमादाय पर्यवसिता भविष्यतीति न नहिंस्यादित्यस्य क्रतुवैगुण्ये पर्यवसानम्, येन क्रत्वर्थता भवेत्।

[2]स्यादेतत्-यदि क्रत्वर्थः पश्वालम्भो हिंसा भवेत्, तदा खलु 'न हिंस्यात्' इति निषेधविषयत्वात् प्रत्यवायकरो भवेत्। हिंसात्वं तु न तस्य भवति। पशुं प्रकृत्य हि श्रूयते—'हिरण्यशृङ्ग ऊर्ध्वं स्वर्गं लोकमेति'इति। तथा च यागीय-पशुप्राणवियोगानुकूलव्यापारस्य पश्वनुग्रहार्थतावगमात् न तस्य हिंसात्वम्। हिंसनी-याननुग्राहकस्यैव व्यापारविशेषस्य हिंसात्वात्। तथा च श्रुतिः पशुं प्रकृत्यैव 'न वा उ एतन्म्रियसे न रिष्यसि' इति। न रिष्यसि—न हिंस्यसे इति यावत्। अतो यागीयपश्वालम्भो न प्रत्यवायकरः-इति।

न स्यात्। प्राणवियोगफलोपहितः तदनुकूलो व्यापारो हिंसा, यागीय-पश्वालम्भोऽपि भवति तथेति कथं न हिंसा। यथा हि व्रणिनो व्रणच्छेदनादिकं तदनुग्राहकमपि छेदनं भवत्येव। न तत्र, 'तदनुग्राहकं यन्न भवति छेदनादि तदेव छिदिधात्वर्थः' इति कल्प्यते, एवमत्रापि हिंसनीयानुग्रहरहितं यत् प्राणवियोजनं सैव हिंसेति न कल्पयितुमुचितम्। ततश्च यागीयपशोः यदि हिरण्यशृङ्गइत्यादिवचनानु-सारेण स्वर्गप्राप्तिः प्रतीयते, तदा सा भवतु नाम। देवताधिकरणोक्तन्यायेन अर्थवादात्प्रतीयमानस्याप्यर्थस्योपगमात्। नवाउएतन्म्रियसेनरिष्यसीत्यादिवाक्य-प्रतिपाद्यं तु तदालम्भस्याहिंसात्वं स्तुत्यर्थमारोप्यते इत्येवोचितम्, प्रवृत्तिनिमित्त-सद्भावेन तस्य हिंसात्वावश्यम्भावात्। तथा च 'अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः' [छा. उ. ८.१५] इति वाक्यं यागीयपश्वालम्भस्य हिंसात्वमभ्यनु-जानाति। तीर्थं-विहितस्थलं, ततोऽन्यत्रेत्यर्थः। यदि यागीयपश्वालम्भो हिंसैव न भवेत् तदा अन्यत्रतीर्थेभ्य इति व्यर्थमेव भवेत्। अहिंसन्नित्येव तद्व्यावृत्तिसिद्धेः।

1. आ. पुरुषार्थत्वेनैव
2. स्यादेतदित्यादि शङ्काग्रन्थार्थः विशिष्टाद्वैतिनां सिद्धान्तः।

एवं प्राप्ते ब्रूमः—अन्यैः जीवैः अधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति। पूर्ववत्—यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम्, एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम्। कुत एतत्? तद्वदेव इहाप्यभिलापात्। कः अभिलापस्य तद्भावः? कर्मव्यापारमन्तरेण संकीर्तनम्। यथा आकाशादिषु प्रवर्षणान्तेषु न कंचित् कर्मव्यापारं परामृशति एवं व्रीह्यादिजन्मन्यपि। तस्मात् नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम्। यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति तत्र कर्मव्यापारं 'रमणीयचरणाः' 'कपूयचरणाः' इति च।

---

ननु-यदि हिंसानिषेधः अन्यत्रतीर्थेभ्यइतिवचनानुसारेण विहितव्यतिरिक्तविषयः प्रतीयते, तदा कथं यागीयहिंसायाः प्रत्यवायकरतेति शङ्का-इति चेत्,

न ह्यत्र पूर्वपक्षिणा 'हिंसाया एव प्रत्यवायकरता' इत्येतावन्मात्रं विवक्षितम्, अपि तु इष्टादिकं कर्माङ्गानुसारेण प्रत्यवायकरम्-इति। ततश्च, हिंसायाः प्रत्यवायकरत्वाभावेऽपि वाजपेयादिषु सुराग्रहादीनां प्रत्यवायकरता अस्त्येव।

तस्मात् युक्तमुक्तं 'पशुहिंसादियोगाच्च इष्टादेः कर्मजातस्य अनिष्टफलत्वोपपत्तेः' इति। न च यागाङ्गानां पशुहिंसादीनां अनिष्टकारित्वे तत्र कस्यापि प्रवृत्तिर्न स्यादिति वाच्यम्। यथा द्रव्यव्ययादिना यागतदङ्गादीनामनिष्टफलकत्वेऽपि यागजनितफले रागवशात् प्रवर्तते, एवं पश्वाद्यालम्भस्य प्रत्यवायकरत्वेऽपि यागफलेऽत्यन्तरागवशात् प्रवृत्त्युपपत्तेः। इयांस्तु विशेषः—द्रव्यव्ययादिना प्राप्तमनिष्टं प्रत्यक्षादिप्रमाणकं, पश्वालम्भादौ प्रत्यवायकरता तु 'न हिंस्यात् सर्वा भूतानि' 'न सुरां पिबेत्' इत्यादिशास्त्रसिद्धा। अतो न प्रवृत्त्यनुपपत्तिः।

यथा आकाशादिषु प्रवर्षणान्तेष्विति। भोगोपयोगिव्रीह्यादियोन्यापत्तिर्हि तदुत्पादककर्माभिव्यक्त्या। तत्र च 'शरीरजैः कर्मदोषैः याति स्थावरतां नरः' इत्यादिशास्त्रसिद्धः पापविशेष एव[1] उत्पादकः। तदभिव्यक्तिश्च वर्षधाराभिः पतनकाले नास्तीत्यवगम्यते। यदि तदभिव्यक्तिरधुना स्यात्, तदा 'यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति' इत्येतदनन्तरं 'तद्य इह रमणीयचरणाः'

---

1. मु. एव कर्म।

अपि च, मुख्ये अनुशयिनां व्रीह्यादिजन्मनि, व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः। यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने प्रवसतीति प्रसिद्धम्। तत्र, व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत।

अतः संसर्गमात्रमनुशयिनां अन्याधिष्ठितेषु व्रीह्यादिषु भवति।

एतेन-जनेर्मुख्यार्थत्वं प्रतिब्रूयात् उपभोगस्थानत्वं च स्थावरभावस्य। न च वयं उपभोगस्थानत्वं स्थावरभावस्यावजानीमहे। भवत्वन्येषां जन्तूनां अपुण्यसामर्थ्येन स्थावरभावमुपगतानां एतत् उपभोगस्थानम्, चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जते-इत्याचक्ष्महे ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

यत्पुनरुक्तं-पशुहिंसादियोगादशुद्धं आध्वरिकं कर्म, तस्य अनिष्ट-

---

इत्यादिनेव प्रवर्षणानन्तरमपि पापादिकं कीर्त्येत। तत्तु आकाशादिपर्यायेष्विव व्रीह्यादिपर्यायेष्वपि न कीर्त्यते। अतो ज्ञायते-नात्र अवरोहतां पुण्यपापाभिव्यक्तिरस्ति, किं तु रेतस्सिग्भावानन्तरमेव पुण्यपापाभिव्यक्तिः-इति। ततश्च अनभिव्यक्तकर्मभिः व्रीह्यादियोन्यापत्तेरसम्भवात् अन्यैर्जीवैरधिष्ठितेष्वेव व्रीह्यादिषु अनुशयिनां जडप्रायतया संश्लेषमात्रम्।

एवंसत्येव, व्रीह्यादीनां लवनादिषु तदभिमानिनां जीवानां उत्क्रमणेऽपि संश्लिष्टानामनुशयिनां तेष्वनुवृत्तिरुपपद्यते। जडतया लवनादिकृतवेदनाभावात्। लवनाद्यनन्तरमपि अनुशयिनां तत्रानुवृत्तिः रेतोभावेन गर्भप्रवेशाय अपेक्षिता। तदाह—अपि चेति। ततश्च व्रीह्यादियोनिप्रयोजकपुण्यपापाद्यभिव्यक्तेः अस्यां दशायां अभावात् 'यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति' इतिवाक्यशेषानुसाराच्च 'त इह व्रीहियवाः' इत्यादिकमपि वायुर्भूत्वेत्यादिवत् अमुख्यवृत्त्यैव व्याख्येयम् ॥ २४ ॥

'अथ य इमे ग्रामे' इत्यादौ इष्टादेः कर्मणः स्वर्गप्राप्त्यर्थं अभिव्यक्तेः प्रतिपादनात् तच्छेषभोगार्थं व्रीह्यादिभावो भविष्यति। तस्य च पशुहिंसादियोगेन अनिष्टफलकत्वमुपपद्यते-इतिशङ्कानिराकरणार्थं एतत्सूत्रम्-इत्याह—यत्पुनरुक्तमिति।

मपि फलमवकल्पते, इत्यतो मुख्यमेव अनुशयिनां व्रीह्यादिजन्मास्तु, तत्र गौणीकल्पनाऽनर्थिका-इति

तत् परिह्रियते। न, शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य। 'अयं धर्मः' 'अयमधर्मः' इति शास्त्रमेव विज्ञाने कारणम्, अतीन्द्रियत्वात्तयोः (अ)नियतदेशकालनिमित्तत्वाच्च—यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेषु अधर्मो भवति। तेन, न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः, स कथमशुद्ध इति शक्यते वक्तुम्।

ननु 'न हिंस्यात् सर्वा भूतानि' इति शास्त्रमेव भूतविषयां हिंसां अधर्म इत्यवगमयति।

बाढम्। उत्सर्गस्तु सः। अपवादः 'अग्नीषोमीयं पशुमालभेत' इति। उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम्। तस्मात् विशुद्धं कर्म वैदिकम्, शिष्टैरनुष्ठीयमानत्वात्, अनिन्द्यमानत्वाच्च। तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम्।

---

अपवादः अग्नीषोमीयंपशुमालभेतेति। ननु—[1]कथमयमपवादः। हिंसासामान्यस्य नहिंस्यादितिवाक्येन बलवदनिष्टसाधनत्वे बोधिते अग्नीषोमीयंपशुमालभेतेतिविधिना यागीयपशुहिंसाविशेषस्य बलवदनिष्टाननुबन्धित्वबोधनात् अपवादतेति चेत्, न—अङ्गविधीनां विनियोगमात्रतात्पर्यकत्वेन बलवदनिष्टाननुबन्धित्वबोधने तात्पर्याभावात्। यो हि पुरुषप्रवर्तको विधिः, तेन प्रवृत्तिसिद्धये बलवदनिष्टाननुबन्धित्वमपि तात्पर्यतो [2]बोध्यते। अङ्गविधयस्तु न पुरुषप्रवर्तकाः, अपि तु अङ्गानां प्रधानविनियोगतात्पर्यकाः। तत्सिद्धये च इष्टसाधनत्वमेव तात्पर्यगत्या तैः प्रतिपादनीयम्। तस्मिन् बोधिते, किंतदिष्टमिति विशेषाकाङ्क्षायां, प्रकरणादिना 'क्रतूपकारः' इत्यवगमे सति विनियोगसिद्धेः, विधिशक्त्योपस्थितस्यापि बलवदनिष्टाननुबन्धित्वस्य अनुवादमात्रविषयत्वात्, तत्रापितात्पर्यमिति निर्बन्धे, प्रकरणा-

---

1. मु. कथमपवादः
2. आ. बोधनीयम्

दिना, क्रतुवैगुण्यानापादकत्वे एव बलवदनिष्टाननुबन्धित्वपर्यवसानाच्च, न हिंसा-निषेधप्राप्तपुरुषानिष्टसाधनताव्यावृत्तिः—इति चेत् ;

उच्यते—अङ्गविधीनां प्रधानविध्येकवाक्यत्वे सति, प्रवर्तकेन प्रधानविधिना बलवदनिष्टाननुबन्धित्वं बोध्यमानं साङ्गे प्रधाने अन्वेतीति, तदभिप्रायेयं 'अपवादोऽग्नीषोमीयं पशुमालभेत' इति भाष्योक्तिः । तेन च पुरुषं प्रत्येव बलवदनिष्टाननुबन्धित्वं बोध्यते ।

न च-तथापि प्रधानविधिः कृत्स्नाङ्गान्वितप्रधानस्य बलवदनिष्टाननुबन्धित्व बोधयन् पश्वालम्भव्यतिरिक्तेष्वङ्गेषु चरितार्थः, नहिंस्यादिति निषेधोऽपि यागीयहिंसाव्यतिरिक्तस्थले चरितार्थः, कथं एतयोर्मध्ये क्रतुविधेः अपवादत्वम्-इति वाच्यम् । एवंसति यागविधेः निरवकाशत्वाभावेऽपि विशेषविषयत्वं नापैति, अग्नीषोमीयविध्येकवाक्यतापन्नप्रधानविधेः विशिष्य पश्वालम्भे बलवदनिष्टसाधनत्वाभावबोधकत्वात् । विशेषविषयेण च वाक्येन सामान्यप्रतिपादकस्य वाक्यस्य सङ्कोचो लोकव्युत्पत्तिसिद्धः । यथा हरीन्द्रावित्यादौ विशेषविषयेण 'अकः सवर्णे दीर्घः' इत्यनेन 'इको यणचि' इत्यस्य ।

न चैवं विशेषवचनस्य अग्नीषोमीयंपशुमालभेतेतिविध्येकवाक्यतापन्नस्य प्रधानविधेः बलवदनिष्टसाधनत्वाभावप्रतिपादकस्य बलवत्त्वनिषेधमात्रेण पर्यवसानोपपत्तेः नहिंस्यादितिनिषेधस्य [1]अनिष्टसाधनतामात्रपर्यवसाने न काचिदनुपपत्तिरिति वाच्यम् । तथा सति, नहिंस्यादित्यस्य विहितहिंसायामनिष्टसाधनतामात्रबोधकता रागत एव प्राप्तायां अविहितहिंसायां तु बलवदनिष्टसाधनत्वबोधकतेति वैरूप्यं स्यात् ।

अपि च-नहिंस्यादितिवाक्यं बलवदनिष्टजनकत्वबोधकमपि न तावन्मात्रे पर्यवस्यति, अपि तु, वाक्यशेषस्य फलविशेषसमर्पकस्य सत्त्वे तमादाय पर्यवस्यति, तदभावे तु, यथा विश्वजिद्वाक्यमिष्टसाधनताबोधकं सुखसामान्यस्वर्गमादाय पर्यवस्यति एवमिदमपि बलवद्दुःखरूपनरकसामान्ये पर्यवस्यतीति, कथं बलवदनिष्टाननुबन्धित्वबोधकविधिपर्यालोचनया यत्किंचिदनिष्टजनकतायां पर्यवसानम् ।

तस्मात् बलवदनिष्टजनकत्वतदभावबोधकयोस्सामान्यविशेषवचनयोर्विरोधे विहितेतरविषयत्वमेव सामान्यवाक्यस्योपेयम् ।

---

1. मु. अनिष्टसाधनतापर्यवसाने

**न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति। तद्धि कपूयचरणानधिकृत्योच्यते। नैवमिह वैशेषिकः कश्चित् अधिकारोऽस्ति।**

---

न च-एवंसति [1]श्येनादीनां प्राणवियोगानुकूलव्यापारत्वेन हिंसारूपाणामपि सतां विहितत्वेन प्रत्यवायकरता न स्यात्, हिंसानिषेधस्य विहितेतरविषयत्वात्–इति वाच्यम्। श्येनादिषु निन्दाश्रवणेन शिष्टविगानदर्शनेन प्रायश्चित्ताम्नानेन च तेषां प्रत्यवायकरत्वे प्रमाणसिद्धे सति, [2]अनाम्नातप्रायश्चित्तविहितेतरविषयत्वस्य नहिंस्यादितिनिषेधवाक्ये कल्पनात्, श्येनादिविधीनामपि इष्टसाधनताबोधमात्रपरत्वमेव कल्प्यते, न तु बलवदनिष्टाननुबन्धित्वबोधकतापि।

न च श्येनादीनां निषेधविषयत्वेन नरकजनकत्वाभ्युपगमे कथं तेषु प्रवृत्तिः स्यादिति वाच्यम्। यथा आस्तिककामुकस्य निषेधमुल्लङ्घ्यापि रागोत्कटयात् [3]परदारातिचारादिषु प्रवृत्तिः, एवं शत्रुविषयकद्वेषोत्कटयात् श्येनादिषु प्रवृत्तिः निषेधमुल्लङ्घ्यापि भविष्यति। इयांस्तु विशेषः–परदारातिचारादिषु इष्टसाधनता शास्त्रं विनैव अवगता, श्येनादिषु तु शत्रुवधार्थत्वं 'श्येनेनाभिचरन् यजेत' इति शास्त्रादवगतम्।

तत् सिद्धं अनाम्नातप्रायश्चित्तासु विहितहिंसासु दोषराहित्यम्। एवं वाजपेयगतसुराग्रहादिष्वपि द्रष्टव्यम्, 'न सुरां पिबेत्' इत्यादिनिषेधानामपि उक्तन्यायेन विहितेतरविषयत्वात्। उक्तन्यायसिद्धमेवार्थं 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इत्यादिवचनान्यनुवदन्ति[4] प्रकृतन्यायमुपोद्बलयन्ति। एवं च यत् [5]किञ्चित् वैधहिंसानिन्दाप्रतिपादकवचनं पुराणादिषु, तत् [6]वैदिकहिंसाप्राशस्त्यप्रतिपादनपरवचनप्रतिबद्धं सत् प्रकृताधिकरणपूर्वपक्षन्यायमूलं नादर्तव्यम्, निवृत्तिमार्गस्तुतिपरं वा व्याख्येयम्।

---

1. आ. श्येनादीनामपि
2. अनाम्नातप्रायश्चित्तविहितेति कर्मधारयः।
3. मु. परदारादिषु
4. **अनुवदन्तीति** सुबन्तमेतत् सन्नन्तविशेषणम्। आ. इतिवचनान्यप्यनुवदन्ति
5. मु. क्वचित्
6. **वैदिकहिंसाप्राशस्त्येति** प्राशस्त्यं बलवदनिष्टाजनकत्वम्। मु. 'प्राशस्त्य' नास्ति।

अतः चन्द्रमण्डलस्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावः, यत्कारणं व्रीह्यादिभावस्यानन्तरं अनुशयिनां रेतःसिग्भाव आम्नायते 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' (छा. उ. ५।१०।६) इति। न चात्र मुख्यो रेतःसिग्भावः संभवति। चिरजातो हि प्राप्तयौवनो रेतस्सिक् भवति। कथमिवानुपचरितं तद्भावं अद्यमानान्नानुगतोऽनुशयी प्रतिपद्यते। तत्र तावत् अवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युगन्तव्यः, तद्वत् व्रीह्यादिभावोऽपि व्रीह्यादियोग एव इत्यविरोधः ॥ २६ ॥

## योनेः शरीरम् ॥ २७ ॥

अथ रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि योनेरधि शरीरं अनुशयिनां अनुशयफलोपभोगाय जायते - इत्याह शास्त्रम् 'तद्य इह

---

तत् सिद्धं 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इत्यत्रोपात्तस्येष्टादेः व्रीहियोनिफलकत्वासम्भवात् अन्यस्य च तदुपयोगिनः कर्मणः अनुपादानात् व्रीह्यादिषु अनुशयिनां संश्लेषमात्रम्-इति ॥ २५ ॥

यथा रेतस्सिग्भावोऽनुशयिनः तत्संश्लेष एव, एवं तत्प्रायपाठात् व्रीह्यादिभावोऽपि तत्संश्लेष एव - इत्यभिप्रायः ॥ २६ ॥

योनिप्राप्त्यनन्तरमेव साध्वसाधुशरीरप्राप्तिप्रतिपादनात् न ततः प्राक् शरीरप्राप्तिः, अतोऽपि व्रीह्यादिषु संश्लेष एव-इत्यभिप्रायः।

प्रयोजनं - पूर्वपक्षे - पुण्यकर्मण इष्टादेः व्रीह्यादिफलकत्वे अत्यन्तं हेयतेति चित्तशुद्ध्यर्थिनामपि तत्र प्रवृत्तिर्न स्यात्, सिद्धान्ते तु तन्नास्तीति व्युत्पाद्यते। तद्व्युत्पादनव्याजेन च, रेतसा सह गर्भगोलकप्रवेशपर्यन्तं कर्मिणां स्वर्गादवरूढानां मूर्छिततया अवस्थानमिति 'रेतस्सिग्योगोऽथ' इत्यादिसूत्रद्वयेन प्रतिपाद्यते।

तत्र च, यद्यपि स्वर्गादवरूढानां व्रीह्यादिसंश्लेषपर्यन्तं झटिति निस्सरणं, तथापि व्रीह्यादिसंश्लेषानन्तरं गर्भगोलकप्रवेशोऽतिविलम्बितः। यदि हि व्रीह्यादयोऽ-

रमणीयचरणाः' (छा. उ ५।१०।७) इत्यादि। तस्मादपि अवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति।

तस्मात् व्रीह्यादिसंश्लेषमात्रं अनुशयिनां तज्जन्म इति सिद्धम् ॥२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
तृतीयाध्यायस्य प्रथमः पादः ॥१॥

---

नुशयिविशिष्टाः पुरुषेणानुपयुक्ता एव नाशं प्राप्नुयुः, ततः पुनरपि समुद्रादि-प्रवेशानन्तरं जलधरावकृष्टानां वर्षणेन व्रीह्यादिभावः। उपयुक्ता अपि व्रीह्यादयो यदि षण्डादिभिस्संश्लिष्यन्ते, [1]तदा योनिप्राप्तिर्दुर्लभा। रेतस्सिक्सम्पर्केऽपि यदि वन्ध्यायोनिसम्पर्कः यदि वा ऋतुं विनैव सम्पर्कः, तदापि न शरीरप्राप्तिः। अतो दैववशादेव रेतस्सिग्भावानन्तरं अवन्ध्यासु ऋतुमतीषु सम्पर्केण शरीरप्राप्तिः गर्भयातनानुभवानन्तरमेव[2]कर्मिणां वक्तव्येति 'कष्टा कर्मफलगतिः' इति सूचनात् वैराग्य-पर्यवसायिता ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम्

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
तृतीयस्याध्यायस्य प्रथमः पादः।

---

1. आ. तदाऽपि
2. मु. कर्मणां

तृतीयाध्यायस्य द्वितीयः पादः

१. सन्ध्याधिकरणम्

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः। इदानीं तु तस्यैव अवस्थाभेदः प्रपञ्च्यते॥

इदमामनन्ति—'स यत्र प्रस्वपिति' (बृ. उ. ४।३।९) इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' (बृ. उ. ४।३।१०) इत्यादि। तत्र संशयः — किं प्रबोधे इव स्वप्नेऽपि पारमार्थिकी सृष्टिः आहोस्वित् मायामयीति।

---

वृत्तवर्तिष्यमाणपादयोः अर्थमनुवदन् सङ्गतिं सूचयति—अतिक्रान्त इत्यादिना। तस्यैवावस्थाभेद इति। 'न स्थानतोऽपि' इत्यतः प्राक्तनैरधिकरणैः इति शेषः। इदं च नस्थानतइत्यादिभिः क्रियमाणस्य तत्पदार्थविचारस्यापि उपलक्षणम्। तथा च महावाक्यप्रतिपाद्याभेदनिरूपकपदार्थविचारः [1]पादार्थः।

तत्र च पूर्वपादविचारफलभूतं वैराग्यं अधिकारिविशेषणमिति वैराग्योपयोगिविचारानन्तरं पदार्थशोधनोपयुक्तो विचारः क्रियत इति प्रथमद्वितीयपादयोर्हेतुहेतुमद्भावः [2]सङ्गतिः इति भावः।

प्रबोधः—जागरावस्था।

---

1. पादार्थं इति एतेन—'पादानुगतार्थोऽनुपपन्नः' इत्यादिना श्रुतप्रकाशिकोक्तविकल्पतद्दूषणानां अनवकाशो ज्ञेयः।

2. सङ्गतिरिति एतेन—पादसङ्गतिरनुपपन्नेति श्रुतप्रकाशिकोक्तेः अनवसरः स्फुटितः।

तत्र तावत् प्रतिपद्यते - सन्ध्ये (तथ्यरूपा) सृष्टिरिति । सन्ध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात् 'सन्ध्यं तृतीयं स्वप्नस्थानम्' (बृ. उ. ४।३।९) इति । द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा सन्धौ भवतीति सन्ध्यम् । तस्मिन् सन्ध्ये स्थाने तथ्यरूपैव सृष्टिः भवितुमर्हति । कुतः ? यतः प्रमाणभूता श्रुतिः एवमाह 'अथ रथान् रथयोगान् पथः सृजते' इत्यादि । 'स हि कर्ता' इति चोपसंहाराात् एवमेवावगम्यते ॥१॥

---

यद्यपि आरम्भणाधिकरणे चैतन्यातिरिक्तानां सर्वेषां अनृतत्वं श्रुतिन्यायैर्व्यवस्थापितं, [1]तथापि, यथा प्रबोधे व्यावहारिका घटादयः, तथा स्वप्नेऽपि व्यावहारिकाः उत शुक्तिरजतादिवत् प्रातिभासिकाः—इति संशयार्थो द्रष्टव्यः ।

द्वयोर्लोकस्थानयोरिति । यद्यपि पूर्वं प्रबोधः अनन्तरं स्वप्नः ततस्सुषुप्तिः इत्युत्सर्गानुसारेण प्रबोधसम्प्रसादस्थानयोस्सन्धौ भवतीति द्वितीया सन्ध्यपदव्याख्या उपपद्यते, इहलोकपरलोकस्थानयोर्द्वयोस्सन्धौ भवं इति आद्या तु व्याख्या नोपपद्यते, 'स्वे शरीरे यथाकामं परिवर्तते' 'कण्ठे स्वप्नं विनिर्दिशेत्' इति वचनपर्यालोचनया शरीरमध्य एव स्वप्नावस्थावगमेन इहलोकपरलोकसन्धिस्थानत्वाभावात् ।

उच्यते—इहलोकपरलोकसन्धिस्थानत्वमौपचारिकं श्रुतावेव दर्शितं 'तस्मिन् सन्ध्ये स्थाने तिष्ठन् एते उभे स्थाने पश्यति इदञ्च परलोकस्थानञ्च' इति। स्वप्नावस्थायां हि ऐहिकानपि पदार्थान् कदाचित् पश्यति, पारलौकिकानपि पदार्थान् कदाचित् पश्यति, ग्रामद्वयसन्धिस्थितोऽपि पुरुषः ग्रामद्वयस्थान् पदार्थान् पश्यति । तथा च उभयत्रविद्यमानपदार्थदर्शनानुकूलस्थानत्वगुणेन स्वप्नावस्थाया उभयसन्धिस्थानत्वमुपचरितम् ।

यतः प्रमाणभूता श्रुतिरेवमाहेति । 'सृजते' इति निर्देशो हि लोके सत्यानामेव घटादीनां उत्पत्त्यनुकूले व्यापारे प्रयुज्यते । कर्तृत्वनिर्देशोऽपि सत्य-

---

1. तथापीत्यादि एतेन—सिद्धान्ते अधिकरणवैयर्थ्यं इति श्रुतप्रकाशिकोक्तं दूषणं निरस्तं वेदितव्यम्।

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपि च, एके शाखिनः अस्मिन्नेव सन्ध्ये स्थाने कामानां निर्मातारं आत्मानमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क. उ. ५।८) इति। पुत्रादयश्च तत्र कामा अभिप्रेयन्ते-काम्यन्त इति। ननु कामशब्देन इच्छाविशेषा एव उच्येरन्, न–'शतायुषः पुत्रपौत्रान् वृणीष्व' (क. उ. १।२३) इति प्रकृत्य अन्ते 'कामानां त्वा-कामभाजं करोमि' इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात्। प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः। प्राज्ञस्य हीदं प्रकरणम् 'अन्यत्र धर्मात् अन्यत्राधर्मात्' (क. उ. २।१४) इत्यादि।

---

पदार्थस्रष्टैव भवति। न हि शुक्तिरजतादिषु रजतंसृष्टमिति निर्देशो वर्तते। नापि तद्भ्रमशालिनि 'अयं तस्य कर्ता' इति निर्देशोऽस्ति। अतः 'सृजते' इति 'स हि कर्ता' इति निर्देशाच्च तथ्यैव [1]स्वप्नसृष्टिः ॥ १ ॥

परमेश्वरसृष्टानां वियदादीनां पारमार्थिकत्वं दृष्टम्, तथा स्वाप्नानामपि पदार्थानां ईश्वरसृष्टत्वस्य श्रुत्या प्रतिपादनात् तेषामपि सत्यत्वं भविष्यतीति प्रतिपादनाय एतत् सूत्रम्।

ननु–'य एष सुप्तेषु' इति श्रुतौ इच्छाविशेषाणामेव ईश्वरसृष्टत्वस्य स्वप्ने प्रतिपादनात् कथं तत्रत्यानां पदार्थानां सत्यता स्यात्-इत्याशङ्क्य, 'अत्र कामपदं काम्यमानवस्तुपरम्, तथा च काम्यमानानां स्वप्नावस्थागतानां पुत्रपश्वादीनां ईश्वरसृष्टत्वं सिध्यति' इति प्रतिपादयति—ननु कामशब्देनेत्यादिना। नन्वेवमपि कथं अस्य वाक्यस्य ईश्वरपरत्वं, येन तस्य स्वाप्नपदार्थस्रष्टृता सिध्येत्, युक्तं तु सुप्तिसम्बन्धात् पुत्रादिकाम्यमानवस्तुसम्बन्धाच्च जीवलिङ्गात् जीवपरत्वम्, अत आह—प्राज्ञं चैनं निर्मातारमिति। तथा च-यः एष सुप्तेषु जीवेषु तदन्तर्यामितया तामवस्थां नियमयन् जागर्ति, यश्च स्वप्ने काम्यमानानां पुत्रादीनां निर्माता, स परमेश्वरः-इति श्रुतेरर्थः। एतस्माच्च कठवल्लीवाक्यात् सहिकर्तेति बृहदारण्यकगतमपि वाक्यं ईश्वरपरमेव योजनीयम्।

---

1. मु. 'स्वप्न' नास्ति

तद्विषय एव च वाक्यशेषोऽपि 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' (क. उ. ५।८) इति। प्राज्ञकर्तृका च सृष्टिःतथ्यरूपा समधिगता जागरिताश्रया, तथा स्वप्नाश्रयापि सृष्टिः भवितुमर्हति। तथाच श्रुतिः 'अथो खल्वाहुः जागरितदेश एवास्यैष इति, यानि ह्येव जाग्रत् पश्यति तानि सुप्तः' (बृ. उ. ४।३।१४) इति स्वप्नजागरितयोः समानन्यायतां श्रावयति। तस्मात् तथ्यरूपैव सन्ध्ये सृष्टिरिति ॥ २ ॥

एवं प्राप्ते प्रत्याह—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति-यदुक्तं सन्ध्ये सृष्टिः पारमार्थिकीति। मायैव सन्ध्ये सृष्टिः, न परमार्थगन्धोऽप्यस्ति। कुतः?

---

तथा च, सृजतइत्यादिनिर्देशात् ईश्वरकर्तृकत्वाच्च स्वप्नस्य सत्यत्वसिद्धौ 'न तत्र रथा न रथयोगाः-रथे योजनीया अश्वादयः न पन्थानो भवन्ति' इति निषेधवाक्यं स्वप्नसृष्टेः प्राक् स्वाप्नरथादीनामभावं प्रतिपादयति, न तु रथादिसृष्टिकाले एव, येन स्वाप्नानां मिथ्यात्वं भवेत्। 'अथ रथान् रथयोगान्' इति अथशब्देनानन्तर्यार्थिकेन, पूर्वं रथाद्यभावः अनन्तरं रथादिसृष्टिः इत्यवगमात्। स्वप्नसत्यत्वे एव 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा, स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' इति मन्त्रोऽपि सङ्गच्छते। कुलायात्–शरीरादिति यावत्। यत्र कामोऽस्य वर्तते तत्र ईयते–गच्छतीति। यदि स्वप्नोऽनृतो भवेत् तदा तस्य शरीरमध्य एवोपपत्तेः शरीरात् [1]बहिर्गमनं न प्रतिपाद्येत, अनृतपदार्थानां उचितदेशाद्यनपेक्षणात्। न च–'स्वे शरीरे यथाकामं परिवर्तते' इति श्रुतिविरोधः, पूर्वशरीरस्य शयनदेशे एव विद्यमानतया शरीरान्तरेणैव बहिर्गमनस्य वक्तव्यत्वात्, स्वेशरीरे इत्यनेन च पूर्वशरीरस्थताप्रतिपादनात्–इति वाच्यम्। बहिर्निर्गतस्यापि स्वाप्नशरीरस्य स्वशब्दार्थतोपपत्त्या तस्य 'पूर्वशरीरे एव स्वप्नः' इत्यनिर्धारकत्वात्। यानि ह्येव जाग्रत् पश्यति तानि-तत्सदृशानि सुप्तः-स्वप्नावस्थः। जाग्रत्सदृशत्वं च स्वाप्नानां तथ्यरूपत्वमिति भावः ॥ २ ॥

---

1. आ. बहिर्जीवगमनं

कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । न हि कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः । किं पुनरत्र कार्त्स्न्यमभिप्रेतं ? देशकालनिमित्त-संपत्तिः अबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने संभाव्यन्ते । न तावत् स्वप्ने रथादीनामुचितो देशः संभवति । न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन् ।

स्यादेतत्—बहिर्देहात् स्वप्नं द्रक्ष्यति, देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिः बहिर्देहात् स्वप्नम् 'बहिष्कुलायादमृतश्चरित्वा, स ईयतेऽमृतो यत्र कामम्' (बृ. उ. ४।३।१२) इति । स्थितिगतिप्रत्ययभेदश्च न अनिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीत—इति ।

---

अत्र तुशब्दः पूर्वपक्षोक्तहेतूनां पारमार्थिकत्वसाधकताव्यावर्तकः सन् स्वप्नसत्यत्वव्यावर्तकः । मात्रशब्दस्तु साक्षादेव सत्यताव्यावर्तकः । अतो न पौनरुक्त्यम् । मायाशब्दो हि ऐन्द्रजालिकगन्धर्वादिसृष्टेष्वनृतेष्वेव प्रयुज्यते । अतः सोऽनृतवचनः[1] ।

---

1. अनृतवचन इति 'मायाशब्दो ह्याश्चर्यवाची' इति विशिष्टाद्वैतिभिर्वर्ण्यमानोऽर्थः अनुपपन्नः इति भावः । तैर्हि स्वप्नदृगेकानुभाव्यत्वं स्वप्नकालमात्रावस्थायित्वं च आश्चर्यरूपत्वं स्वाप्नार्थानामुक्तम् । तच्च अनुपपन्नम् । स्वाप्नरथादीनां सत्यत्वे तेषां स्वप्नदृगेकानुभाव्यत्वस्यैव असिद्धेः । स्वप्नदृशेव स्वप्नदृष्टमनुष्यादिभिरपि तेषां निरीक्ष्यमाणत्वात् । न च स्वप्नदृष्टाश्चेतना असत्या रथादय एव सत्या इत्यर्धजरतीये अस्ति प्रमाणम् । उक्तरूपस्य आश्चर्यरूपत्वमप्यसिद्धम्, जाग्रत्पदार्थानामपि स्वप्नदृगननुभाव्यत्वेन अविशेषात् । स्वप्नानुभवकालमात्रावस्थायित्वमप्यसिद्धम्, एकत्र स्वप्ने दृष्टस्य गजादेः दिनान्तरस्वप्नेऽपि दर्शनस्य लोकसिद्धत्वात् । तत्र स्वाप्नार्थभेदे प्रमाणाभावात् । दिनान्तरेऽपि तं दिदर्शयिषोः परमेश्वरस्य इच्छया पुनर्दर्शनपर्यन्तमवस्थानकल्पनस्यैव लघुत्वात् । न च 'अथ रथान्...सृजते' इतिश्रुतिबलेन प्रतिस्वप्नं स्वाप्नप्रपञ्चभेदकल्पनं युक्तम् । तथा सति 'यत्रैतत्पुरुषः सुप्तः...स यदा प्रबुध्यते...देवेभ्यो लोकाः' इति कौषीतकिवाक्यबलात् जाग्रत्प्रपञ्चस्यापि प्रतिप्रबोधं भेदकल्पनापत्त्या, स्वप्नजागरप्रपञ्चयोरुभयोरपि तत्तदवस्थामात्रावस्थायित्वस्य अविशेषापत्तेः । विस्तरस्तु शिवार्कमणिदीपिकायां द्रष्टव्यः ।

नेत्युच्यते। न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति 'कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पञ्चालानभिगतश्च अस्मिन् प्रतिबुद्धश्च' इति। देहाच्चेदपेयात् पञ्चालेषु प्रतिबुध्येत तानसावभिगत इति; कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यते तं अन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति। परिधावंश्चेत् पश्येत् जाग्रद्वत वस्तुभूतमर्थमाकलयेत्। दर्शयति च श्रुतिः अन्तरेव देहे स्वप्नम् 'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' (बृ. उ. २।१।१८) इति। अतश्च श्रुत्युपपत्तिविरोधात्

---

न हि सुप्तस्य जन्तोरित्यादि। [1]ननु—जाग्रद्दशायां विद्यमानस्य शरीरस्य क्षणमात्रेणानेकयोजनातिलङ्घनसामर्थ्याभावेऽपि स्वाप्नशरीरस्य तथा भविष्यति, ईश्वरसङ्कल्पाधीनस्य तस्य विचित्रशक्तित्वसम्भवात्। अत एव च 'अर्गलितदेशे शयानः स्वाप्नेन शरीरेणापि कवाटाद्युद्घाटनं विना कथं बहिर्निर्गच्छेत्' इत्यपि[2] शङ्का न कार्या, कवाटादीनां तदप्रतिघातकत्वकल्पनात्।

यत्र च प्रत्यागमनवर्जितस्स्वप्नो भवति तत्र, देशान्तरे एव स्वाप्नशरीरादुत्क्रान्तस्य ईश्वरसङ्कल्पवशात् पुनः पूर्वशरीरे प्रवेशो भविष्यतीति कल्प्यते। पार्श्वस्थानां शयनदेशे एवोपलम्भस्तु नानुपपन्नः, पूर्वशरीरस्य शयनदेशे एव विद्यमानत्वात्।

कुरुदेशादीनामन्यथाभावोऽपि न विरुध्यते, स्वाप्नानां तेषां ईश्वरसङ्कल्पसृष्टानां पूर्वतनेभ्यो भिन्नत्वात्। जाग्रद्वस्तुजातस्य च तदानीं दर्शनं नोपेयते। स्वाप्नानां चक्षुरादीनां जाग्रद्वस्तुग्रहणासामर्थ्यात्। 'स्वे शरीरे' [3]इत्यादिश्रुत्यविरोधश्च [4]प्रागेव दर्शितः।

---

1. नन्वित्यादि अयं शङ्काग्रन्थः 'उच्यते' इत्यतः प्राक्तनग्रन्थपर्यन्तः।
2. मु. 'अपि' नास्ति
3. आ. इति श्रुत्य
4. प्राक्—द्वितीयसूत्रभाष्यव्याख्यानावसाने।

बहिष्कुलायश्रुतिः गौणी व्याख्यातव्या-बहिरिव कुलायात् अमृतश्चरित्वा–इति, यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति, स बहिरिव शरीरात् भवतीति। स्थितिगतिप्रत्ययभेदोऽपि एवं सति विप्रलम्भ एव अभ्युपगन्तव्यः।

कालविसंवादोऽपि च स्वप्ने भवति-रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रप्रवर्तिनि स्वप्ने कदाचित् बहून् वर्षपूगान् अतिवाहयति।

निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वा उचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा।

---

यश्च स्वप्ने कालविसंवादः 'दिवसेसुप्तस्य रात्रिदर्शनं रात्रौसुप्तस्य दिवसदर्शनम्' इत्येवंरूपः, स वर्षान्तरे सुप्तस्य वर्षान्तरे चेद्दर्शनं तदा नानुपपत्तिः। तथा हि-लवणार्णवपरिवृतस्य लक्षयोजनविस्तृतस्य जम्बूद्वीपस्य मध्ये विद्यमानो मेरुः तस्य परितो विद्यमाना भोगभूमिः इलावृतं वर्षम्, तस्य दक्षिणतो हरिकिंपुरुषभारताख्यानि त्रीणि वर्षाणि, पश्चिमतः केतुमालाख्यमेकं वर्षम्, उत्तरतो रम्यकहिरण्मयकिंपुरुषाख्यानि त्रीणि वर्षाणि, पूर्वतो भद्राश्वसंज्ञकमेकं वर्षम्। तत्र मेरुं प्रदक्षिणीकुर्वत आदित्यस्य किरणा यत्र यदा प्रसरन्ति तदा तत्र दिवस इति व्यवहारः, यत्र यदा मेरुणा तत्प्रसरो व्यवधीयते तदा तत्र रात्रिरिति व्यवहारः। तथा च भारते वर्षे दिवससमयेऽपि केतुमालादौ सूर्यकिरणव्यवधानेन रात्रिरुपपद्यते, भारते च वर्षे रात्रिसमयेऽपि केतुमालादौ दिवसः सम्भवति। अतो भारते वर्षे शयानस्य रात्रौ केतुमालादौ दिवसदर्शनं नानुपपन्नम्। भारते रात्रौ शयानस्य तत्रैव स्वप्ने दिवसदर्शनमपि न विरुद्धम्। स्वाप्नपदार्थानां जाग्रद्दशापदार्थेभ्योऽन्यत्वेन तदानीं स्वप्नदशाभाविसूर्यकिरणानामप्रसरेण रात्रिकालत्वसम्भवात्।

एवं मुहूर्तमात्रेण स्वप्ने वर्षपूगातिवाहनमपि नानुपपन्नम्। देवादिकालोपाधिभ्यः मनुष्यादिकालोपाधीनामिव जाग्रत्कालोपाधितः स्वप्नकालोपाधीनां विलक्षणत्वोपगमात्।

एवमन्यदपि स्वप्ने निमित्तेन्द्रियादिकं जाग्रद्दशातो विलक्षणमेव ईश्वरसङ्कल्पाधीनं भविष्यति। अतो [1]न काचित् स्वप्नस्य सत्यत्वेऽनुपपत्तिः-इति चेत्;

उच्यते—इयं शरीरदेशकालवस्तुजातस्यान्यथात्वेन स्वप्ने कल्पना तदा भविष्यति, यदि तत्सत्यताग्राहकं किञ्चित् प्रबलं प्रमाणं भवेत्। न च तदस्ति। सृष्टिश्रुतिस्तावत् प्रमाणं नोपपद्यते। 'न तत्र रथाः' [2]इत्याद्युत्तरवाक्येनैव [3]तद्बाधप्रतिपादनात्। तत्र हि 'न तत्र रथादयो भवन्ति, रथादीन् सृजते' इत्याख्यातेन रथादिसृष्टेः रथाद्यभावस्य च समानकालत्वावगमेन सृष्टेः प्राक् रथाद्यभावः इति कल्पयितुमशक्यत्वात्, तदनुसारेण अथशब्दस्य 'देवदत्तो गतः, अथ च यज्ञदत्तः' इत्यादाविव अभावकाले एव सृष्टिसमुच्चयार्थत्वेऽपि उपपत्तेः[4]।

दृश्यते च अनृतेऽपि सृज्यत्वनिर्देशः—ऐन्द्रजालिको वृक्षादीन् सृजतीति।

ईश्वरसृष्टत्वमपि न सत्यत्वसाधकम्, सर्वस्रष्टुस्तस्य शुक्तिरजतादावपि स्रष्टृत्वोपगमात्।

बहिष्कुलायश्रुतिस्तु, ईश्वरसङ्कल्पानुसारेण विचित्रां स्वप्नसृष्टिं अभ्युपगच्छतोऽपि न प्रयोजनवती। स्वाप्नानां पदार्थानां ईश्वरसङ्कल्पानुसारेणैव शरीरमध्येऽपि सम्मानसम्भवात्। अतः 'स्वे शरीरे' इति 'कण्ठे स्वप्नं विनिर्दिशेत्' इति च शरीरमध्ये एव स्वप्नप्रतिपादकश्रुतिविरोधात्, सा श्रुतिः अमुख्यार्थैव भाष्योक्तरीत्या व्याख्येया। न च स्वे शरीरे इति वाक्यं स्वप्नावस्थासम्पन्नशरीरान्तरेऽप्युपपन्नमिति वाच्यम्। तथासति स्वशब्दवैयर्थ्यापत्तेः। सर्वस्यापि स्वभोगोपयोगिनः शरीरस्य स्वीयत्वेन 'शरीरे यथाकामं परिवर्तते' इत्युक्त्यैव तदर्थसिद्धेः।

---

1. **न काचिदित्यादि** इत्थमेव भाष्योक्तानुपपत्तिपरिहारः कृतो विशिष्टाद्वैतिभिः।

2. मु. इत्युत्तर

3. **तद्बाधेति** तदत्यन्ताभावेत्यर्थः। सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहृतनञः अत्यन्ताभावबोधकतायाः व्युत्पत्तिसिद्धत्वात्। 'सकलेतरपुरुषानुभाव्यतया न भवन्ति' इति विशिष्टाद्वैतिनां व्याख्याने अध्याहारो दोषः स्पष्टः।

4. **उपपत्तेरिति** स्वाप्नार्थसत्यत्ववादिनां अथशब्दवैयर्थ्यात् इत्यपि द्रष्टव्यम्। वैलक्षण्यार्थत्वमपि तस्यात्र न सम्भवति, समभिव्याहृतपदोपस्थापितरथत्वादिना वैलक्षण्यस्य रथादिष्वभावात्। सकलेतरपुरुषानुभाव्यत्वं तु अध्याहर्तव्यम्, अध्याहारे च न प्रमाणम्।

बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे। स्वप्न एव चैते सुलभबाधा भवन्ति, आद्यन्तयोर्व्यभिचारदर्शनात्। रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते, मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः। स्पष्टं च अभावं रथादीनां स्वप्ने श्रावयति शास्त्रम् 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादि। तस्मात् मायामात्रं स्वप्नदर्शनम् ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

मायामात्रत्वात्तर्हि न कश्चित् स्वप्ने परमार्थगन्धोऽस्ति—इति।

---

अतः, स्वशब्दः 'प्रागेवसिद्धं यत् स्वशरीरं स्वप्नावस्थापरिदृश्यमानाच्छरीरात्' इत्येतदर्थको वक्तव्यः।

अतो नैतेषां वचनानां स्वप्नसत्यत्वसाधकता भवति।

तन्मिथ्यात्वं तु बाधानुसारेण मानोरथिकपदार्थवत् [1]लोकसिद्धमेव, नतत्ररथाइत्यादिश्रुतिसम्मतं च[2]। अत एव 'उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' इति श्रुतिः मिथ्यात्वद्योतकेन इवशब्देनैव स्वप्नपदार्थान् प्रतिपादयति, 'तदत्राविद्यया मन्यते' इति च तस्य आविद्यकत्वं ब्रवीति। अतो मायामात्रत्वमेव स्वप्नस्योचितम्।

अपि च-येन स्वप्ने जाग्रत्पदार्थेभ्यो विलक्षणा एव शरीरादय उपेयन्ते, तेनापि, तेषु जाग्रत्पदार्थाभेदज्ञानं भ्रम इत्येव वक्तव्यम्, ततश्च स्वप्ने किञ्चिज्ज्ञानं भ्रमः किञ्चित् सत्यमिति किमर्धजरतीयेन ॥ ३ ॥

ननु—स्वप्नमिथ्यात्वमतेऽपि, स्वप्ने यदा देवदत्तादिरागत्य 'श्वस्तव महान् लाभो भविष्यति' इति वदति, उत्थितश्च महान्तं लाभं आप्नोति, तादृशस्थले स्वप्नस्य सत्यत्वमुपेयम्। तथा च, कथं सर्वेषां स्वप्नानां मिथ्यात्वम्-इत्याशङ्कानिराकरणार्थं सूत्रम्।

---

1. आ. लौकिकबाधसिद्धमेव

2. श्रुतिसम्मतञ्चेति लोकसिद्धस्यैव स्वाप्नरथादिमिथ्यात्वस्य स्वयञ्ज्योतिष्ट्व विवेचनोपयोगितया श्रुत्या अनुवादः इति भावः।

नेत्युच्यते—सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथाहि श्रूयते—

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।

समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' (छा. उ. ५।२।९) इति । तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' (ऐ. आ. ३।२।४) इत्येवमादिभिः स्वप्नैः अचिरजीवित्वमावेद्यत इति श्रावयति । आचक्षते च स्वप्नाध्यायविदः 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति । मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते ।

तत्रापि, भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेः भवत्येव वैतथ्यं, बाध्यमानत्वात्—इत्यभिप्रायः ।

तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ।

यदुक्तम् 'आह हि' इति तत् एवं सति भाक्तं व्याख्यातव्यम् ।

---

तादृशस्थलेऽपि स्वप्नस्य सूचकत्वमेव, न तु तदानीं देवदत्तादिवदनं पारमार्थिकम् । 'स्वप्ने मां प्रति त्वया इत्थमुक्तम्' इति प्रश्ने देवदत्तस्य विसंवाददर्शनात्-इति परिहारार्थः ।

यदा कर्मसु काम्येषु आरब्धेषु सत्सु मङ्गल्याभरणादियुक्तां स्त्रियं स्वप्नेषु पश्यति, तेषु काम्यकर्मसु फलस्य समृद्धिं जानीयात् । सः–पुरुषः एनं-स्वप्नद्रष्टारं हन्ति, मरणसूचक इति यावत् । सत्यार्थगन्धिनः-सत्या ये मन्त्रदेवतादयः तत्सदृशविषयाः ।

यच्च पूर्वपक्षिणोऽभिमतं 'स हि कर्तेति वाक्यं ईश्वरस्य कर्तृतां प्रतिपादयति' इति, तदसत्–ततः पूर्वसन्दर्भे 'योऽयं विज्ञानमयः प्राणेषु' इत्यारभ्य जीवस्यैव प्रस्तुतत्वात्, 'स्वप्नेन शारीरमभिप्रहत्य' इत्याद्युत्तरश्लोकसन्दर्भेऽपि जीवस्यैव प्रस्तोष्यमाणत्वात्, कथं सहिकर्तेतिमध्यगतेन वाक्येन ईश्वरस्य कर्तृत्वं प्रतिपादयितुं शक्यम् ।

ननु जीवस्य स्वप्ने उपादानादिगोचरज्ञानाद्यदर्शनात् कथं स्वाप्नपदार्थान् प्रति कर्तृत्वनिर्देशः इत्याशङ्क्याह—भाक्तं व्याख्यातव्यमिति ।

यथा 'लाङ्गलं गवादीनुद्वहति' इति निमित्तमात्रत्वादेवमुच्यते, न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति, एवं निमित्तमात्रत्वात्, सुप्तो रथादीन् सृजते स हि कर्ता-इति चोच्यते, न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं त्वस्य, रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम्।

अपि च, जागरिते विषयेन्द्रियसंयोगात् आदित्यादिज्योतिर्व्यतिकराच्च आत्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति, तद्विवेचनाय स्वप्न उपन्यस्तः। तत्र, यदि रथादिसृष्टिवचनं श्रुत्या नीयेत तदा स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्।

तस्मात्, रथाद्यभाववचनं श्रुत्या रथादिसृष्टिवचनं तु भक्त्या इति व्याख्येयम्। एतेन निर्माणश्रवणं व्याख्यातम्।

यदप्युक्तम् 'प्राज्ञमेनं निर्मातारमामनन्ति' इति, तदप्यसत्— श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' (बृ. उ. ४ ३।९) इति जीवव्यापारश्रवणात्। इहापि 'य एष सुप्तेषु जागर्ति' इति प्रसिद्धानुवादात् जीव एवायं कामानां निर्माता संकीर्त्यते।

---

अपि च, आत्मैवास्यज्योतिर्भवतीत्युपक्रान्तस्य आत्मनस्स्वयञ्ज्योतिष्ट्वस्य, स्वप्नावस्थां प्रदर्श्य 'अत्रायं पुरुषस्स्वयञ्ज्योतिर्भवति' इत्युपसंहृतत्वात्, स्वप्नावस्थोपन्यासः आत्मस्वयञ्ज्योतिष्ट्वनिर्धारणार्थ इति वक्तव्यम्। स्वप्नावस्थोपन्यासस्य स्वयञ्ज्योतिष्ट्वव्युत्पादने एवमुपयोगो वक्तव्यः—जागरितव्यवहारो हि आदित्यादिपरमार्थप्रकाशसाध्यो लोकदृष्ट्याऽवगतः। स्वाप्नोऽपि व्यवहारः परमार्थप्रकाशसाध्य एव वक्तव्यः। तदानीं च आदित्यादीनां पारमार्थिकज्योतिषां अभावात् परमार्थं ज्योतिः व्यवहारोपयुक्तं आत्मैव परिशिष्यते - इति। तत्र यदि आदित्यादिकमपि पारमार्थिकमुपगम्येत परमार्थत्वेन आत्मज्योतिःपरिशेषो दुर्लभः स्यात्। अतः प्रधानप्रतिपाद्यस्वयञ्ज्योतिष्ट्वानुसारेणापि स्वप्नस्यानृतत्वमुपेयं इत्याह—अपि चेति।

स्वयं विहत्य—जाग्रच्छरीरं निश्चेष्टमापाद्य स्वयं निर्माय स्वप्नशरीरं, स्वेन भासा-वासनारूपेण, स्वेन ज्योतिषा-स्वरूपभूतेन। प्रसिद्धानुवादादिति। यएष-

तस्य तु, वाक्यशेषेण 'तदेव शुक्रं तद्ब्रह्म' इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते 'तत्त्वमसि' (छा० ६।९।४) इत्यादिवत्-इति न ब्रह्मप्रकरणं विरुध्यते ।

न चास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते । तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः । पारमार्थिकस्तु नायं संध्याश्रयः सर्गो वियदादिसर्गवत्—इत्येतावत् प्रतिपाद्यते । न च वियदादिसर्गस्यापि आत्यन्तिकं सत्यत्वमस्ति । प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र. सू. २।१।१४) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति, संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यते-इत्यतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वमुदितम् ॥ ४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

अथापि स्यात्—परस्यैवतावदात्मनः अंशो जीवः, अग्नेरिव विस्फुलिङ्गः । तत्रैवंसति, यथा अग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती, ततश्च जीवस्य ज्ञानैश्वर्यवशात् सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यति—इति ।

---

सुप्तेष्विति यच्छब्दयोगात् अनुवादत्वमवगम्यते । तत्र च पुरोवादो बृहदारण्यक स्वयंविहत्येत्यादिस्वप्नवाक्यमेव । तथा च पुरोवादानुसारेण अस्य जीवपरत्वे, सुप्तेषु-व्यापाररहितेषु चक्षुरादिषु य एषः—जीवः जागर्ति-अविपरिलुप्तस्वरूपप्रकाश एव सन् आस्ते-इत्यर्थो द्रष्टव्यः ॥ ४ ॥

ननु—सहिकर्तेति यदि जीवपरं, तदापि किमर्थं औपचारिकं व्याख्यायते, तस्यापि सर्वज्ञत्वसत्यसङ्कल्पत्वादिविशिष्टपरमात्माभिन्नस्य[1] उपादानादिगोचरप्रत्यक्षादिपूर्वकमेव स्रष्टृत्वं सम्भवति-इति सूत्रव्यावर्त्यां शङ्कां दर्शयति—अथापि स्यादिति ।

---

1. मु. अभिन्नतया

अत्रोच्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्य ईश्वरविपरीतधर्मत्वम् । किं पुनः जीवस्येश्वरसमानधर्मत्वं नास्त्येव ? न नास्त्येव । विद्यमानमपि तत् तिरोहितं अविद्यादिव्यवधानात् । तत् पुनः तिरोहितं सत्, परमेश्वरमभिध्यायतो यतमानस्य जन्तोः विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात् ईश्वरप्रसादात् संसिद्धस्य कस्यचिदेव आविर्भवति, न स्वभावत एव सर्वेषां जन्तूनाम् । कुतः ? ततो हि-ईश्वराद्धेतोः अस्य-जीवस्य बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानात् बन्धः तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथाच श्रुतिः–

'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' ॥
(श्वे. उ. १।११) इत्येवमाद्या ॥ ५ ॥

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात् पुनः जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति ? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोः–इति ।

उच्यते–सत्यमेवैतत् । सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावः देहयो-

---

ज्ञात्वा देवमिति । देवं ज्ञात्वा वर्तमानस्य पुरुषस्य सर्वेषां पाशानां अविद्यादीनां हानिर्भवति, क्षीणैः क्लेशैः-पाशशब्दोदितैः जन्ममृत्युप्रहाणिः, जन्मादेः अविद्यादिक्लेशजन्यत्वात् । एवं निर्विशेषविद्याफलं प्रदर्श्य सविशेषविद्याफलं प्रदर्श्यते-तस्याभिध्यानादिति । परमात्मनः सविशेषस्य साक्षात्कारपर्यन्ताद्ध्यानात् देहपातानन्तरं विश्वैश्वर्यं-स्वभोगोपयुक्तानांसर्वेषामैश्वर्यम्, तच्च तृतीयं, 'तृतीयस्यामितो दिवि' इतिवचनानुसारेण लोकत्रयपक्षमाश्रित्य तृतीयस्थानभूतब्रह्मलोकाभिव्यङ्ग्यत्वात्, अनन्तरं तत्त्वसाक्षात्कारे सति 'केवल आप्तकामः' इति क्रममुक्तिः प्रतिपदिता ॥ ५ ॥

ननु–जीवगतसत्यसङ्कल्पादितिरोभावो न स्वप्ने सम्भवति, येन सहिकर्तेति गौणं व्याख्यायेत, तदानीं स्थूलशरीराभिमानाभावात्-इत्यभिप्रायेण शङ्कते—कस्मादिति । सूत्रेणोत्तरमाह—सोऽपि त्विति । तदानीं स्थूलशरीराभिमाना-

गात्-देहेन्द्रियमनोबुद्धिविषयवेदनादियोगात् भवति । अस्ति चात्र उपमा- यथा अग्नेर्दहनप्रकाशनसंपन्नस्यापि अरणिगतस्य दहनप्रकाशने तिरोहिते भवतः, यथा वा भस्मच्छन्नस्य । एवं अविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः । वाशब्दो जीवस्येश्वरादन्यत्वाशङ्काव्यावृत्त्यर्थः ।

ननु-अन्य एव जीव ईश्वरादस्तु, तिरस्कृतज्ञानैश्वर्यत्वात्, किं देहयोगकल्पनया ।

नेत्युच्यते । न ह्यन्यत्वं जीवस्येश्वरात् उपपद्यते, 'सेयं देवतैक्षत' इत्युपक्रम्य 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा. उ. ६।३।२) इति आत्मशब्देन जीवस्य परामर्शात् । 'तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा. उ. ६।९।४) इति च जीवायोपदिशति ईश्वरात्मत्वम् । अतः अनन्य एव ईश्वराज्जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्यो भवति । अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते । यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यात् नैव अनिष्टं कश्चित् स्वप्नं पश्येत् । न हि कश्चित् अनिष्टं संकल्पयते । यत्पुनरुक्तं—जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयति—इति, न तत् साम्यवचनं सत्यत्वाभिप्रायम्, स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात् । जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत् । तस्मात् उपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ ६ ॥

---

भावेऽपि लिङ्गकारणशरीराभिमानस्य सत्त्वात् उपपद्यते तिरोधानम्-इति तात्पर्येण देहपदं देहत्रयपरतया व्याचष्टे—देहेन्द्रियेति । आदिपदं अविद्यात्मककारणशरीरसङ्ग्रहार्थम् ।

अधिकरणार्थमुपसंहरति—तस्मादिति । अत्र-सिद्धान्ते स्वप्नस्य मिथ्यात्वसिद्धौ तदानीन्तनैः शरीरेन्द्रियादिभिः असंस्पृष्टत्वं जीवस्य सिध्यति, तद्दृष्टान्तेन जाग्रत्यपि तस्य तदसंस्पृष्टत्वं सिध्यतीति त्वंपदार्थशोधनोपयोगी अयं विचारः । पूर्वपक्षे तु नैतत् सिध्यति ॥ ६ ॥

इति सन्ध्याधिकरणम्

## २ तदभावाधिकरणम्

# तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नावस्था परीक्षिता । सुषुप्तावस्था इदानीं परीक्ष्यते ।

तत्र, एताः सुषुप्तिविषयाः श्रुतयो भवन्ति—क्वचिच्छ्रूयते 'तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' (छा. उ. ८।६।३) इति। अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ. उ. २।१।१९) इति। तथाऽन्यत्र नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति' (कौ. उ. ४।१९) इति। तथाऽन्यत्र 'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' (बृ. उ. २।१।१७) इति। तथाऽन्यत्र 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा. उ. ६।८।१) इति, 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ. उ. ४।३।२१) इति च।

---

स्वप्नसुषुप्त्यवस्थयोः क्रमस्य लोकसिद्धत्वात् तत्क्रमेण अधिकरणक्रमः-इत्यभिप्रेत्याह—स्वप्नावस्था परीक्षितेति।

तद्यत्रैतदिति। पूर्वं ब्रह्मलोकमार्गभूतादित्यकिरणसम्पर्को नाडीनां प्रतिपादितः, तत्परामर्शार्थः [1]तच्छब्दः। तस्मिन्—आदित्यकिरणसम्पृक्तत्वे सत्येव, नाडीनामयमपरो महिमा यत् सुप्तिस्थानत्वम्-इति तात्पर्यम्। यत्र काले एतत् सुप्तः-एतत्-स्वा[पं](पाख्यं) कृतवान्[2] समस्तः-सम्यक्-अन्तःकरणादिकं विहाय अस्तः-क्षिप्तः ब्रह्मणि, अत एव सम्प्रसन्नः-अन्तःकरणादेर्लीनत्वेन तत्कृतकालुष्याभावात्, स्वप्नं न विजानाति, आसु-पूर्वोपक्रान्तासु नाडीषु सृप्तः-गतः भवति। पुरीतति-हृदयपरिवेष्टने चर्मविशेषे। प्राणे-ब्रह्मणि। अन्तर्हृदय आकाशः-ब्रह्माख्यः।

---

1. तच्छब्द इति तत्र छान्दसः सप्तमीलोपः। 'तस्मिन्' इति तदनुवादः, तदर्थः आदित्यंत्यादिः।

2. कृतवानिति सुप्तपदव्याख्यानम्। ओदनपाकं पचतीतिवत् साधुता।

तत्र संशयः— किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुषुप्तिस्थानानि आहोस्वित् परस्परापेक्षया एकं सुषुप्तिस्थानम्—इति,

किं तावत् प्राप्तं? भिन्नानीति। कुतः? एकार्थत्वात्। न ह्येकार्थानां क्वचित् परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्। नाड्यादीनां च एकार्थता सुषुप्तौ दृश्यते, 'नाडीषु सृप्तो भवति' 'पुरीतति शेते' इति च तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात्। ननु—न सति सप्तमीनिर्देशो दृश्यते—'सता सोम्य तदा संपन्नो भवति' इति। नैष दोषः—तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्। वाक्यशेषो हि तत्र आयतनैषी जीवः सदुपसर्पतीत्याह 'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' (छा. उ. ६।८।२) इति, प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्, आयतनं च सप्तम्यर्थः। सप्तमीनिर्देशोऽपि

---

नाड्यादीनीति। आदिना पुरीतद्ब्रह्मणोर्ग्रहणम्। परस्परापेक्षयेति। नाडीनां मार्गत्वेन उपयोगः, पुरीततः प्राकारस्थानापत्तिः, पर्यङ्कस्थानापत्तिस्तु हार्दाकाशस्य - इति नाडीपुरीतद्ब्रह्मणां परस्परापेक्षत्वम्।

ननु—मार्गादिभावेन नाड्यादीनामुपयोगात् किमिति भिन्नस्थानता तेषां कल्प्यते-इत्यभिप्रेत्य शङ्कते-कुत इति। परिहरति-एकार्थत्वादिति। अयं भावः- यथा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति तृतीयानिर्देशस्य उभयत्र तुल्यतया यागसाधनत्वेनावगतयोर्व्रीहियवयोः यागनिर्वृत्त्याख्यैकप्रयोजनकत्वेन विकल्पः, एवमत्रापि 'नाडीषु सृप्तो भवति, पुरीतति शेते, य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इति सप्तमीनिर्देशेन स्वापं प्रति तुल्यतयाऽधिकरणत्वावगमेन प्रयोजनैक्यात् विकल्प एव युक्तः, न तत्र नाड्यादीनां मार्गत्वादिकल्पनया समुच्चये किञ्चिन्नियामकमस्ति। ननु न सति सप्तमीनिर्देश इति। 'यद्यपि य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इति सदाख्ये आकाशे सप्तमीनिर्देशोऽस्त्येव, तथापि, [1]सतासोम्येत्यत्रापि 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशंदिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव सोम्यैतन्मनः–जीवाख्यं दिशदिशं पतित्वा अन्यत्रायतनमलब्ध्वा प्राणमेव ब्रह्माख्यं उपश्रयते' इति वाक्यशेषपर्यालोचनया सप्तम्यर्थं लम्भयितुं इयमाशङ्का।

---

1. सता सोम्येत्यत्रापीति 'सप्तम्यर्थं लम्भयितुं' इत्युत्तरेण अन्वेति।

तत्र वाक्यशेषे दृश्यते 'सति संपद्य न विदुः सति संपद्यामहे' (छा. उ. ६।९।२) इति । सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते । तस्मात् एकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित् किंचित्स्थानं स्वापायोपसर्पति-इति ।

एवं प्राप्ते प्रतिपाद्यते—तदभावो नाडीष्वात्मनि च-इति । तदभाव इति, तस्य प्रकृतस्य स्वप्नदर्शनस्य अभावः सुषुप्तं इत्यर्थः । नाडीष्वात्मनि चेति, समुच्चयेन एतानि नाड्यादीनि स्वापायोपसर्पति न विकल्पेन इत्यर्थः । कुतः ? तच्छ्रुतेः । तथाहि सर्वेषामेव नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वं श्रूयते । तच्च समुच्चये संगृहीतं भवति । विकल्पे ह्येषां पक्षे बाधः स्यात् । नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवत् इत्युक्तम्, नेत्युच्यते-न ह्येकविभक्तिनिर्देशमात्रेण एकार्थत्वं विकल्पश्च आपतति, नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात् 'प्रासादे शेते पर्यङ्के शेते' इत्येवमादिषु । तथा इहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीति उपपद्यते समुच्चयः ।

---

नाडीपुरीतद्ब्रह्मणां समुच्चयं वदतः सिद्धान्तिनः अयमभिप्रायः—नाडीषु-सुप्तोभवतीत्यादिवाक्यपर्यालोचनया सुप्तौ तावत् नित्यं नाड्यादीनां सम्बन्धः प्रतीयते । विकल्पे च, नाड्यादीनां नित्यवत्सम्बन्धाभावात् वाक्यं बाधितं स्यात् । व्रीह्यादिषु तु गत्यन्तराभावात् नित्यतयावगम्यमानानामपि व्रीह्यादीनां पाक्षिकत्वमुपगतम् । [1]पुरोडाशद्रव्यकत्वेन उत्पत्तिवाक्यपर्यालोचनयावगते हि यागे व्रीहीणां पुरोडाशनिर्वृत्तिद्वारा यागसाधनत्वं वक्तव्यम्, तच्च द्वारं यवेष्वपि तुल्यम् । तथा च पुरोडाशनिर्वृत्तिरूपस्य प्रयोजनस्य एकत्वात् तन्निर्वृत्तौ द्वारभेदस्याप्यलाभेन पुरोडाशप्रकृतिद्रव्यतया निविष्टयोः व्रीहियवयोः युक्तो विकल्पः । न च [2]व्रीहियवाभ्यां पुरोडाशकरणे नित्यतावगमो न बाधितस्स्यादिति वाच्यम् । तथासति 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति शास्त्रद्वयमपि अत्यन्तबाधितं भवेत् । 'व्रीहिभिर्यजेत' इति व्रीहिपदप्रयोगे हि केवलव्रीहिनिर्वर्त्यः कृत्स्नः पुरोडाशः प्रतीयते । एवं यव-

---

1. मु. पुरोडाशद्रव्यकत्वेनैव
2. व्रीहियवाभ्यामिति सर्वत्र प्रयोगे व्रीहियवयोः समुच्चय इति भावः ।

वाक्येऽपि । घृततैलाभ्यां मिश्रिताभ्यां पक्वे अपूपादौ 'घृतेन पक्वोऽपूपः' इति प्रयोगादर्शनेन व्रीहिभिर्यजेतेत्यादावपि कैवल्यावगमस्य व्युत्पत्तिसिद्धत्वात् । तथा च, यथा नीवारादिद्रव्यव्यावृत्तिः अस्माद्व्रीहिवाक्यादुपेयते, एवं द्रव्यान्तरमिश्रितव्रीहिव्यावृत्तिरपि केवलानांनियमात् अवगम्यते । अतः, वाक्यद्वयस्वारस्यानुरोधेन विकल्प एवोपेयः । अयं च विकल्पः यत्र द्वारभेदः सम्भवति, तत्र नोपेयते । यथा 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इति, यथा वा 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्येन [1]पुरोडाशद्रव्यकेऽवगते यागे व्रीहीणां निवेशे । अत्र द्वारभेदसम्भवात्—बर्हिषां साक्षाद्धविराधारत्वं वेद्यास्तु हविराधारबर्हिराधारत्वम्, पुरोडाशस्य साक्षाद्यागोपयोगः व्रीहीणां तु पुरोडाशप्रकृतितया । न चैवंसति [2]हविर्धारणादौ वेद्यादीनां नैरपेक्ष्यावगमबाधः । स्वद्वारभूते [3]कार्ये नैरपेक्ष्यात् । विकल्पं विनैव च वाक्यद्वयनिर्वाहे सम्भवति [4]नित्यतावगमेन, बाधेन विकल्पाङ्गीकरणं अन्याय्यम् ।

अपि च यत्र शास्त्रद्वयसन्निपातेन विकल्प उपेयते तत्र एकैकस्मिन् शास्त्रे चातुर्दोष्यप्रसङ्गेन अष्टौ दोषाः प्रभवन्ति । तथाहि—यदा यवैरनुष्ठानं, तदा व्रीहिशास्त्रे, प्रामाण्यप्रयोजके निर्दोषत्वादौ सत्यपि प्रामाण्यपरित्याग एको दोषः प्रामाण्याभावप्रयोजके च प्रामाण्यानुपलम्भे असत्यपि प्रामाण्याभावाभ्युपगम इति द्वितीयो दोषः, पुनश्च यदा व्रीहिभिरनुष्ठानं, तदा यवशास्त्रे पूर्वोक्तं दोषद्वयं, व्रीहिशास्त्रे तु, परित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ । एवं प्रयोगद्वयेन व्रीहिशास्त्रे चत्वारो दोषाः, यवशास्त्रे दोषद्वयम् । पुनश्च यदा यवैरनुष्ठानं, तदा यवशास्त्रे, परित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम् । एवं प्रयोगत्रयेण अष्टौ दोषाः प्रभवन्ति । एवं च नाडीपुरीतद्ब्रह्मणां वेदिबर्हिर्न्यायेन प्रासादपर्यङ्कन्यायेन च समुच्चये सम्भवति न पाक्षिकबाधापादको विकल्प उपगन्तुं युक्तः ।

---

1. आ. पुरोडाशद्रव्यकेऽपि यागे
2. मु. बर्हिर्धारणादौ
3. कार्ये—बर्हिर्धारणादौ ।
4. **नित्यतावगमेन बाधेनेति** अत्र नित्यतावगमेनेति पूर्वान्वयि, बाधेनेति उत्तरान्वयि । 'नित्यतावगमबाधेन' इति तु पाठः स्यात् ।

तथा च श्रुतिः 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति, एकवाक्योपादानात्। प्राणस्य च ब्रह्मत्वं समधिगतं 'प्राणस्तथानुगमात्' (ब्र. सू. १।१।२८) इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति 'आसु तदा नाडीषु सृप्तो भवति' इति, तत्रापि, प्रदेशान्तरप्रसिद्धस्य ब्रह्मणः अप्रतिषेधात् नाडीद्वारे[ण](णैव) ब्रह्मण्येवावतिष्ठत इति प्रतीयते। नचैवमपि नाडीषु सप्तमी विरुध्यते। नाडीद्वाराऽपि ब्रह्मोपसर्पन् सृप्त एव नाडीषु भवति। यो हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति।

---

अपि च-इह शास्त्रत्रयसन्निपातात्, विकल्पे प्रत्येकं चातुर्दोष्यात्, द्वादश दोषाः प्रभवेयुः। तथाहि—यदा नाड्यां शयनं तदा पुरीतद्ब्रह्मवाक्ययोः प्रत्येकं प्राप्तप्रामाण्यपरित्यागाप्राप्ताप्रामाण्यस्वीकाररूपं दोषद्वयमिति चत्वारो दोषाः सम्पन्नाः। यदा पुरीतति शयनं द्वितीयपर्याये, तदा पुरीतद्वाक्ये परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम्, नाडीवाक्ये तु प्राप्तप्रामाण्यपरित्यागः अप्राप्ताप्रामाण्यस्वीकारश्चेति दोषद्वयम्, यदा तृतीयपर्याये ब्रह्मणि शयनं तदा ब्रह्मवाक्ये परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम्। यदा चतुर्थपर्याये नाडीषु शयनं तदा नाडीवाक्येऽपि परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयम्। आहत्य चतुर्भिः पर्यायैः त्रिषु शास्त्रेषु द्वादश दोषाः पर्यवसिताः। एवं शास्त्रचतुष्टयसन्निपातविकल्पे षोडश दोषा ऊह्याः।

ननु—'दर्भैःस्तृणीत हरितैः'[1] इत्यादिवचनानुसारेण, वेदिर्बर्हिषोः समानविभक्तिनिर्देशे सत्यपि समुच्चय उपेतः, 'प्रासादे शेते पर्यङ्के शेते' इति लौकिकवाक्ये तु दृष्टत्वादेव समुच्चय उपेतः न केवलं संभवमात्रेण-इत्याशङ्क्य, 'समुच्चये सम्भवति अनेकदोषयुक्तः पापीयान् विकल्पो नोपेयः' इति समाधाने सत्यपि, प्रकृते समुच्चयप्रतिपादकंवचनमप्यस्तीत्याह—तथा च श्रुतिरिति।

---

1. इत्यादिवचनेति इत्यादिमन्त्रेत्यर्थः। वेदिबर्हिषोर्विकल्पे उक्तमन्त्रस्य पाक्षिको लोपः स्यात् इति भावः।

अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वात् नाडीस्तुत्यर्थं सुप्तिसङ्कीर्तनम् । 'नाडीषु सृप्तो भवति' इत्युक्त्वा 'तं न कश्चन पाप्मा स्पृशति' इति ब्रुवन् नाडीः प्रशंसति । ब्रवीति च पाप्मस्पर्शाभावे हेतुं 'तेजसा हि तदा संपन्नो भवति' इति । तेजसा नाडीगतेन पित्ताख्येन अभिव्याप्तकरणो न बाह्यान् विषयान् ईक्षते इत्यर्थः । अथवा, तेजसेति ब्रह्मण एवायं निर्देशः । श्रुत्यन्तरे 'ब्रह्मैव तेज एव' (बृ. उ. ४।४।७) इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात् । ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेण, अतः तं न कश्चन पाप्मा स्पृशति इत्यर्थः । ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः 'सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः' (छा. उ. ८।४।२) इत्यादिश्रुतिभ्यः । एवञ्च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थानेन अनुगतो नाडीनां नयः समाश्रितो भवति ।

तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात् तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते—'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इति हृदया-

---

ननु 'तासु तदा भवति अथास्मिन् प्राण एवैकधा भवति' इति वचनानुसारेण, मार्गत्वेन नाडीनां ब्रह्मणा समुच्चयः अस्तु नाम, 'नाडीषु सृप्तो भवति' इत्यत्र तु केवलानामेव नाडीनां सुप्तिस्थानत्वं प्रतिपाद्यताम्, किमिति वाक्यान्तरानुसारेण इहापि मार्गाभिप्राया सप्तमी व्याख्यायते - तत्राह—अपि चेति । तथा च, स्तुतिपरेऽस्मिन् वाक्ये शास्त्रान्तरप्रसिद्धमेव नाडीनां सुप्तिस्थानत्वं अनुवदनीयमिति, इयं सप्तमी मार्गत्वाभिप्रायैव इति तात्पर्यम् । नाडीषुसृप्तोभवतीत्यत्रापि [1]ब्रह्मसमुच्चयोऽवगम्यते, तेजःपदस्य ब्रह्मपरत्वात्—इति पक्षान्तरमाह—अथवेति । नाडीनां नयः—नाडीनां सुप्तिस्थानत्वप्रतिपादकश्शब्दः ।

एवं नाडीब्रह्मणोस्समुच्चयं श्रुतिबलान्निरूप्य, ब्रह्मपुरीततोरपि समुच्चयं श्रुतिबलादेव दर्शयति—तथा पुरीततोऽपीति ।

---

1. मु. 'ब्रह्म' नास्ति ।

काशे सुप्तिस्थाने प्रकृते इदमुच्यते 'पुरीतति शेते' इति। पुरीतदिति हृदयपरिवेष्टनमुच्यते । तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते 'पुरीतति शेते' इति वक्तुम् । प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते । हृदयाकाशस्य च ब्रह्मत्वं समधिगतं 'दहर उत्तरेभ्यः' (ब्र. सू. १।३।१४ इत्यत्र ।

तथा नाडीपुरीतत्समुच्चयोऽपि 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्येकवाक्योपादानादवगम्यते ।

---

ताभिः प्रत्यवसृप्य पुरीतति शेते इत्येकवाक्योपादानादिति । तथा च, नाडीषुसृप्तोभवतीति सप्तम्युपात्तानां नाडीनां तृतीयया प्रत्यवसर्पणमार्गत्वावगमात् तास्ववस्थानं [1]मार्गत्वकृतमेव ।

ननु—अस्तु मार्गत्वं नाडीनाम्, तथापि, 'पुरीतत्परिवेष्टिते हृदयाकाशे नाडीद्वारा पुरीततस्सकाशात् जीवः सुप्तये गच्छति' इत्ययमर्थो न सिध्यति, येन 'पुरीतति शेते' 'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इति वाक्यद्वयं 'प्राकारे शेते प्रासादगतपर्यङ्के शेते' इति वाक्यतुल्यतया नीयेत । ताभिःप्रत्यवसृप्येति वाक्यं हि एवमाम्नायते—'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । अत्र हि, हृदयप्रविष्टस्य जीवस्य नाडीद्वारा परावृत्य हृदयात् पुरीततं प्रति गमनं शयनाय अवगम्यते, 'हृदयात् पुरीततम्' इति 'प्रत्यवसृप्य' इति वचनद्वयस्वारस्यात् । ततश्च, प्रासादान्निर्गत्य ततो बहिरेव प्राकारगतकक्ष्याविशेषे शयाने राज्ञि 'प्रासादगतपर्यङ्के शेते' इति वचनमिव, पुरीतति शयाने जीवे 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति वचनं [2]न सङ्गच्छते । अतः पुरीतद्ब्रह्मणोर्विकल्प एव सुप्तावुपेयः-इति चेत् ;

---

1. **मार्गत्वकृतमेवेति** एतेन-श्रुतप्रकाशिकोक्तं भाष्यदूषणं अनुक्तोपालम्भनं ज्ञेयम्।

2. **न सङ्गच्छते इति** "सुषुप्तौ नाड्या हृदयात् निष्क्रम्य पुरीतति शयनम्, प्रत्यवसृप्येति श्रुतेः" इति विशिष्टाद्वैतिनां सिद्धान्तः। तत्र उक्तासङ्गतिः स्पष्टा। ततश्च पुरीतद्ब्रह्मणोर्विकल्पस्यैवोपेयत्वात् "नाडीपुरीतद्ब्रह्मणां समुच्चयः" इति तेषां सिद्धान्तः विप्रतिषिद्धः इति ध्येयम्।

**सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एवं एतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि-नाड्यः पुरीतत् ब्रह्म चेति। तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं सुषुप्तिस्थानम्।**

---

उच्यते—'ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यत्र कस्मादवसृप्येत्याकाङ्क्षायां अश्रुतोऽपादानविशेषः कल्पनीयः। तत्र 'हृदयात्' इति वक्तुं न शक्यते। स्वप्नानन्तरभावितया हि शयनं अस्मिन् वाक्ये निरूप्यते। 'स यत्रैतत् स्वप्न्यया स्वप्नावस्थया चरति, ते हास्य लोकाः' इत्युपक्रम्य सप्रपञ्चां स्वप्नावस्थां निरूप्य, 'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद' इति तदनन्तरभावितया सुप्तिमुपक्रम्य, तद्विवरणार्थं 'हिता नाम नाड्यः' इति वाक्यं आम्नातम्। अतः, स्वप्नावस्थायां यत्र स्थितः ततः पुरीततमागत्य तत्र शेते-इति वाक्यार्थो वर्णनीयः। स्वप्नस्थानं 'हृदयात्परितो विद्यमाना नाडीविशेषा एव न हृदयम्' इति [1]शास्त्रान्तरे प्रसिद्धम्। तथा च, ताभ्यस्स्वप्नवहनाडीभ्यः हृदयमारभ्य पुरीतत्पर्यन्तं लम्बा या हितनाड्यो वर्तन्ते तन्मार्गेण पुरीतति शेते-इत्युक्ते य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेतइतिवाक्यानुसारेण 'पुरीतत्परिवेष्टितहृदयपुण्डरीकान्तर्गते परमात्मनि शेते' इति पर्यवसानात् नानुपपन्नम्।

न च-एवंसति प्रत्यवसृप्येति परावृत्तिप्रतिपादनं अनुपपन्नम्, नाडीनाञ्च हृदयावधिकं पुरीततंप्रत्यभिप्रस्थानकथनञ्च व्यर्थं भवेत्-इति वाच्यम्। प्रत्यवसृप्येति न परावृत्तिप्रतिपादनम्, अपि तु 'प्रतिसुषुप्तं अवसृप्य' इत्यर्थो विवक्षितः। हृदयात्पुरीततमितिवाक्यं तु द्वासप्ततिस्सहस्राणीतिसङ्ख्याप्रतिपादकवाक्यवत् स्वरूपकथनमात्रपरम्, न तु 'हृदयात् पुरीततं प्रति गच्छति' इति प्रतिपादनतात्पर्यकम्, स्वप्नावस्थानन्तरभाविकथनपरोपक्रमविरोधात्।

अतो न पुरीतद्ब्रह्मणोस्समुच्चये काचिदनुपपत्तिः।

ननु—'सता सोम्य तदा सम्पन्नो भवति' 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति च सत्प्राज्ञसम्बन्धः सुप्तौ प्रतीयते, कथं ब्रह्मसम्पत्तिरेव नियता—इतिशङ्कायां आह—सत्प्राज्ञयोश्चेति।

---

1. शास्त्रान्तरे-श्रुत्यन्तरे सुबालोपनिषदि। विवृतश्चैतत् शिवार्कमणिदीपिकायाम्।

अपि च, नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित् संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्ते नैवाधाराधेयभेदाभिप्रायेणोच्यते, कथं तर्हि, तादात्म्याभिप्रायेण। यत आह 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा. ६।८।१) इति। स्वशब्देन आत्माभिलप्यते, स्वरूपमापन्नः सुप्तो भवतीत्यर्थः। अपि च, न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायित्वात्। स्वप्नजागरितयोस्तु उपाधिसंपर्कवशात्पररूपापत्तिमिवापेक्ष्य तदुपशमात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते। अतश्च 'सुषुप्तावस्थायां कदाचित् सता संपद्यते कदाचिन्न संपद्यते' इत्ययुक्तम्।

अपि च, स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत् सुषुप्तं न क्वचिद्विशिष्यते। तत्र सतिसंपन्नस्तावत् तदेकत्वान्न विजानातीति युक्तम्, 'तत् केन कं विजानीयात्।' (बृ. उ. २।४।१४) इति श्रुतेः। नाडीषु पुरीतति च शयानस्य न किंचित् अविज्ञाने कारणं शक्यं विज्ञातुं, भेदविषयत्वात्, 'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत्' (बृ. उ. ४।३।३१) इति श्रुतेः। ननु भेदविषयस्यापि अतिदूरादि कारणमविज्ञाने स्यात्, बाढमेवं स्यात् यदि जीवः स्वतःपरिच्छिन्नोऽभ्युपगम्येत, यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यतीति। न तु जीवस्य उपाधिव्यतिरेकेण परिच्छेदो विद्यते। उपाधिगतमेव अतिदूरादि कारणमविज्ञाने-इति यद्युच्येत, तथापि, उपाधेरुपशान्तत्वात्, सत्येवसंपन्नोनविजानातीति युक्तम्।

---

किञ्च-सोपाधिकस्यैव जीवस्य नाडीपुरीतदाधेयत्वसम्भवात् उपाधीनां च सुप्तौ लीनत्वेन नाड्याधारत्वं वक्तुमप्यशक्यम्—इत्यभिप्रेत्याह—अपि चेति।

ननु—जीवस्य अन्तःकरणप्रसराधीनो विषयावभासः, सुप्तौ च अन्तःकरणस्य हृदयपुण्डरीके स्वगोलके लीनवृत्तिकत्वात् विषयसम्बन्धिप्रसराभावेन अविज्ञानमुपपद्यते, किमत्र ब्रह्मसम्पत्त्या—इति शङ्कते—उपाधिगतमेवेति।

न च वयमिह तुल्यवत् नाड्यादिसमुच्चयं प्रतिपादयामः। न हि 'नाड्यः सुप्तिस्थानं पुरीतच्च' इत्यनेन विज्ञानेन किंचित् प्रयोजनमस्ति। न ह्येतद्विज्ञानप्रतिबद्धं किञ्चित् फलं श्रूयते। नापि एतद्विज्ञानं फलवतः कस्यचित् अङ्गमुपदिश्यते। ब्रह्म तु अनपायि सुप्तिस्थानम्—इत्येतत् प्रतिपादयामः। तेन तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च। तस्मात् आत्मैव सुप्तिस्थानम् ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

यस्माच्च आत्मैव सुप्तिस्थानं अत एव च कारणात् नित्यवदेव अस्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते 'कुत एतदागात्' (बृ. उ. २।१।१६) इत्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्वे प्राणाः' (बृ. उ. २।१।२०) इत्यादिना। 'सत आगम्य न विदुः सत आगच्छामहे' (छा. उ. ६।१०।२) इति च। विकल्प्यमानेषु तु सुषुप्तिस्थानेषु 'कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मनः' इत्यशासिष्यत्। तस्मादपि आत्मैव सुप्तिस्थानमिति ॥ ८ ॥

---

प्रयोजनं पूर्वपक्षे—लीनोपाधिकस्यापि जीवस्य सुप्तौ कदाचित् ब्रह्मसम्पत्त्यभावात् औपाधिकएवजीवब्रह्मणोर्भेद इति सम्भावयितुमशक्यम्। सिद्धान्ते तु—नियमेन ब्रह्मसम्पत्त्या सुप्तिदृष्टान्तेन औपाधिकएवजीवब्रह्मणोर्भेद इति शक्यं सम्भावयितुम्। तदिदमाह—तेन तु विज्ञानेनेति। स्वप्नजागरितव्यवहारेत्यनेन अधिकरणस्य त्वम्पदार्थशोधनपर्यवसायिता दर्शिता। स्वप्नमिथ्यात्वप्रतिपादनेन हि जाग्रत्स्वप्नगतबाह्येन्द्रियादिभिरेव आत्मनोऽसंसृष्टत्वं सिध्यति, स्वप्नेऽपि अन्तःकरणस्य यथापूर्वमनुवृत्तेः। सुप्तौ तु स्थूलसूक्ष्मोपाधेः कृत्स्नस्यापि अभावेन व्यभिचरितत्वात् न तत्सङ्ग आत्मनः स्वाभाविकः—इति सिध्यतीति ॥ ७ ॥

ब्रह्मण एव नियमेन सुप्तिस्थानत्वे नियमेन ततः प्रबोधकथनमपि सङ्गच्छते, नाड्यादीनां सुप्तिस्थानत्वे तु, ततोऽप्युत्थानप्रसक्त्या ब्रह्मावधिकप्रबोधनियमो न स्यात्-इति ॥ ८ ॥

इति तदभावाधिकरणम्

३. कर्मानुस्मृत्यधिकरणम्

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः, किं य एव सत्संपन्नः स एव प्रतिबुध्यते, उत स वा अन्यो वा - इति चिन्त्यते ।

तत्र प्राप्तं तावत् अनियम इति । कुतः? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते जलराशिरेव स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुः भवतीति दुःसंपादम्, तद्वत् सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति । तस्मात् स एव ईश्वरो वा अन्यो वा जीवः प्रतिबुध्यते-इति ।

---

पूर्वाधिकरणेन सङ्गतिमाह—तस्याः पुनरिति । पूर्वाधिकरणप्रतिपादितां सुप्तिं अवलम्ब्य इह विचारप्रवर्तनात् सङ्गतिः ।

न स एव पुनरुत्थातुमिति । ननु—य एव सुप्तः स एव उत्तिष्ठतीति लोकप्रसिद्धं कथं पूर्वपक्षिणाऽपलप्यते । अथ लोकप्रसिद्धमपि सुप्तस्यैवोत्थानं सुप्तौ ब्रह्मसम्पत्तिमभ्युपगच्छता उपपादयितुमशक्यमित्यभिप्रायः, तदपि न सम्भवति । सुप्तावपि सूक्ष्मेण रूपेण पुण्यपापादेरज्ञानस्य च उपगमेन, सिद्धान्तिना सुप्तस्यैव-पुनरुत्थानमित्युपपादयितुं [1]शक्यत्वात् । [2]यदि तु—सुप्तौ ब्रह्मैक्यमुपगच्छता अज्ञानादिपरिशेषः उपपादयितुं न शक्यते । यथा हि सुप्तौ 'अथास्मिन् प्राण एवैकधा भवति' इत्यादिवाक्यैर्ब्रह्मैक्यं प्रतिपाद्यते तथा सर्वद्वैतोपशमोऽपि प्रतिपाद्यत एव । सुप्तिं प्रकृत्य 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इति 'सलिल एको द्रष्टाऽद्वैतो भवति' इति च आत्ममात्रपरिशेषस्यापि प्रतिपादनात्, 'अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति' इति पुण्यादिनिवृत्तेरपि प्रतिपादनाच्च । अतः सुप्तावज्ञानाद्यवस्थानासम्भवात् मुक्तस्येव ब्रह्मैक्यमापन्नस्य सुप्तस्यापि पुनरुत्थानं न सम्भवति—इत्यभिप्रायः, तथा सति

---

1. आ. सुशक्यत्वात्
2. यदित्विति 'इत्यभिप्रायः' इत्युत्तरेण सम्बध्यते ।

एवं प्राप्ते इदमाह—स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः। कस्मात्? कर्मानुस्मृतिशब्दविधिभ्यः।

विभज्य हेतुं दर्शयिष्यामि। कर्मशेषानुष्ठानदर्शनात्तावत् स एवोत्थातुमर्हति, नान्यः। तथा हि-पूर्वेद्युरनुष्ठितस्य कर्मणः अपरेद्युः शेषमनुतिष्ठन् दृश्यते। न च अन्येन सामिकृतस्य कर्मणः अन्यः शेषक्रियायां प्रवर्तितुमर्हति, अतिप्रसङ्गात्। तस्मात् एक एव पूर्वेद्युरपरेद्युश्च एकस्य कर्मणः कर्तेति गम्यते।

इतश्च स एवोत्तिष्ठति, यत्कारणं अतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणं अन्यस्योत्थाने नोपपद्यते। न हि अन्यदृष्टं अन्योऽनुस्मर्तुमर्हति। सोऽहमस्मीति च आत्मानुस्मरणं आत्मान्तरोत्थाने नावकल्पते।

---

कथमनियमपूर्वपक्षः, 'अन्य एवोत्तिष्ठति' इत्येव हि पूर्वपक्षयितुमुचितम्। ईश्वरो वेति कोटिश्च अत्यन्तनिरालम्बना, पुण्यपापनिमित्तस्य जाग्रद्रूपेणोत्थानस्य ईश्वरे असम्भवात्—इति चेत्,

उच्यते—व्यवस्थितविकल्पन्यायेन अनियमपूर्वपक्षः - यदि ब्रह्मैक्यं सुप्तावुपगम्यते, तत् मुक्ताविव आत्यन्तिकमेव वर्णनीयमिति अन्यस्यैवोत्थानं तदा वक्तव्यम्। यदि तु सिद्धान्ते स्फुटीकरिष्यमाणैः कर्मानुस्मृतिशब्दविधिभिः सुप्तस्यैवोत्थानमुपगम्यते[1] तदा पूर्वोक्तं [2]ब्रह्मैक्यं परित्यज्य नाडीषु पुरीतति वा जीवस्य शयनमङ्गीक्रियताम् - इति। अन्योत्थानपक्षे हि अपूर्वस्यैव कस्यचिज्जीवस्य पुण्यपापादिकं विना उत्थानं वक्तव्यम्, तद्वत् ईश्वरस्यापि पुण्यपापादिरहितस्य उत्थानमस्त्विति सम्भवमात्रेण [3]इयं कोटिः।

अयमत्र सिद्धान्ताभिप्रायः—पूर्वाधिकरणोक्ता ब्रह्मसम्पत्तिस्तावत् न अन्यथाकर्तुं शक्यते। परं तु मुक्ताविव सा नात्यन्तिकी। अन्तःकरणदेहाद्युपाध्यवच्छिन्नस्यैवांशस्य तदुपाध्युपशमेन स्वरूपावस्थानाभ्युपगमात्। अज्ञानोपाधिकस्तु

---

1. मु. अवगम्यते
2. मु. ब्रह्मात्मैक्यं
3. इयं कोटिः—ईश्वरोवेति कोटिः।

शब्देभ्यश्च तस्यैवोत्थानमवगम्यते। तथाहि 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' (बृ.उ. ४।३।१६) 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा उ. ८।३।२) त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' (छा. उ. ६।९।३) इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता न आत्मान्तरोत्थाने सामञ्जस्यमीयुः।

कर्मविद्याविधिभ्यश्च एवमेवावगम्यते। अन्यथा हि कर्मविद्याविधयः अनर्थकाः स्युः। अन्योत्थानपक्षे हि, सुप्तमात्रो मुच्यत इत्यापद्येत। एवं चेत् स्यात्, वद-किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात्।

अपि च-अन्योत्थानपक्षे यदि तावत् शरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्, तत्रत्यव्यवहारलोपप्रसङ्गः स्यात्। अथ, तत्र सुप्त उत्तिष्ठेत्, कल्पनानर्थक्यं स्यात्। यो हि यस्मिञ्छरीरे सुप्तः स तस्मिन्नोत्तिष्ठति अन्यस्मिञ्छरीरे सुप्तः अन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्। अथ मुक्त उत्तिष्ठेत्, अन्तवान् मोक्ष आपद्येत। निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्। एतेन ईश्वरस्योत्थानं प्रत्युक्तम्, नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारौ अन्योत्थानपक्षे स्याताम्।

तस्मात् स एवोत्तिष्ठति नान्य इति।

यत्पुनरुक्तं-यथा जलराशौ प्रक्षिप्तो जलबिन्दुः नोद्धर्तुं शक्यते, एवं,

---

भेदः तदापि अनुवर्तत एव। 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानाति' 'सति सम्पद्य न विदुः' 'अनृतेन हि प्रत्यूढाः' इत्यादिवाक्यैः 'एतावन्तं कालं सुखमस्वाप्सं न किञ्चिदवेदिषम्' इति प्रतिबुद्धानुसन्धानेन च सुप्तावज्ञानपरिशेषोपगमात्, कर्मानुस्मृतिशब्दविधिभ्यश्च प्रलय इव पुण्यपापादीनामपि संस्कारात्मनावस्थानोपगमात्। 'अनन्वागतं पुण्येन' इत्यादिवाक्यं तु तस्यां दशायां पुण्यादिकार्यभोगाभावाभिप्रायं व्याख्येयम्। 'न तु तद्द्वितीयमस्ति' इत्यादिद्वैतनिषेधकानामपि वाक्यानां 'सुप्तौ विद्यमानस्यापि द्वैतस्य दर्शनायोग्यत्वात अविद्यमानप्रायं तत्' इत्यभिप्रायो द्रष्टव्यः। ततश्च अज्ञानतत्कार्यवासनाविशिष्टतया सुप्तौ विद्यमानस्य जीवस्य पुनर्भोगप्रापककर्मोद्बोधनेनोत्थाने न काचिदनुपपत्तिः-इति।

सति संपन्नो जीवो नोत्पतितुमर्हतीति, तत्परिह्रियते-युक्तं तत्र विवेककारणाभावात् जलबिन्दोरनुद्धरणम् । इह तु विद्यते विवेककारणं कर्म चाविद्या चेति वैषम्यम् । दृश्यते च, दुर्विवेचनयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोः हंसेन विवेचनम् ।

अपि च—न जीवो नाम कश्चित् परस्मादन्यो विद्यते, यो जलबिन्दुरिव जलराशेः सतो विविच्येत । सदेव तु उपाधिसंपर्कात् जीव इत्युपचर्यत इति असकृत् प्रपञ्चितम् ।

एवं सति यावत् एकोपाधिगता बन्धानुवृत्तिः तावदेकजीवव्यवहारः, उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः, स एवायमुपाधिः स्वापप्रबोधयोः बीजाङ्कुरन्यायेन - इत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥ ९ ॥

---

प्रतिन्यायं-सुप्तस्य जागरणार्थं हृदयान्निर्गमनं न्यायः, प्रतिनिर्गमनम् । प्रतियोनि आद्रवति - योनिः तत्तदिन्द्रियगोलकम् , तथा च, यस्येन्द्रियस्य यत् गोलकं, तत् प्रति तत्तदिन्द्रियद्वारा स एव जीवः आगच्छतीत्यर्थः । अत्र च 'स वा एष एतस्मिन् सम्प्रसादे' इति सुप्तं प्रकृत्य बुद्धान्तायाद्रवतीति प्रतिपादनात् सुप्तस्यैवोत्थानमवगम्यते । अहरहः, ब्रह्म हार्दं, ब्रह्मैव लोक इति कर्मधारयः । अत्र अहरहरितिवीप्साबलात् एकस्यैवानेकसुप्तिसम्बन्धोऽवगम्यते[1] ततश्च सुप्तस्यैव पुनरुत्थानं सूचयति । ते-सुप्ताः, व्याघ्रादिषु मशकान्तेषु मध्ये यद्यद्रूपेण भवन्ति सुप्तेः प्राक्, ते पुनरुत्थिताः तत्तद्रूपेण आ भवन्ति - सामस्त्येन भवन्ति[2] । बीजाङ्कुरन्यायेनेति । कार्योपाध्यभिप्रायमेतत् ।

अत्र पूर्वाधिकरणोक्तायास्सत्सम्पत्तेरेव आक्षिप्य व्यवस्थापनात् पूर्वाधिकरणप्रयोजनमेव अत्रापि [3]प्रयोजनं द्रष्टव्यम् ॥ ९ ॥

इति कर्मानुस्मृत्यधिकरणम्

---

1. आ. अवगम्यत इति सुप्तस्यैव

2. **सामस्त्येनभवन्तीति** आगत्य भवन्तीति भाष्यम् ।

3. **प्रयोजनंद्रष्टव्यमिति** मतान्तरेष्वपीदंतुल्यम् । अथापि सौत्रहेतुवाक्यघटकपदार्थवर्णने अस्मदीयं भाष्यं द्वेष्टि श्रुतप्रकाशिका । निर्निमित्तस्तु स द्वेषः । यत्कारणं "प्रथमं लौकिकन्यायद्वयं पश्चात् वैदिकं हेतुद्वयम्" इत्येवं औचित्यभूषितं अस्मद्भाष्यम् । "विभज्य हेतुं" इति भाष्येण सूचितं च एतत् ।

### ४ मुग्धाधिकरणम्

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

अस्ति मुग्धो नाम, यं मूर्च्छित इति लौकिकाः कथयन्ति। स तु किमवस्थ इति परीक्षायाम् - उच्यते-तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः, जागरितं स्वप्नः सुषुप्तमिति । चतुर्थी शरीरादपसृप्तिः। न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धाऽस्ति । तस्मात् चतसृणामेवावस्थानामन्यतमावस्था मूर्च्छेति ।

एवं प्राप्ते ब्रूमः—न तावत् मुग्धो जागरितावस्थो भवितुमर्हति। न ह्ययं इन्द्रियैर्विषयानीक्षते । स्यादेतत्—इषुकारन्यायेन मुग्धो भविष्यति- यथा इषुकारो जाग्रदपि इष्वासक्तमनस्तया नान्यान् विषयानीक्षते, एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान् विषयानीक्षते-इति । न—अचेतयमानत्वात् । इषुकारो हि व्यापृतमना ब्रवीति-इषुमेव अहमेतावन्तं कालं उपलभमानोऽभूवमिति । मुग्धस्तु लब्ध- संज्ञो ब्रवीति-अन्धे तमसि अहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किंचित् मया चेतितमिति । जाग्रतश्च एकविषयविषक्तचेतसोऽपि देहो विध्रियते, मुग्धस्य तु देहो धरण्यां पतति । तस्मात् न जागर्ति ।

नापि स्वप्नान् पश्यति, निस्संज्ञकत्वात् ।

नापि मृतः, प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यात् न वा मृत इति संशयानाः, ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं, प्राणोऽस्ति नास्तीति च नासिकादेशम् । यदि प्राणोष्मणोरस्तित्वं नाव- गच्छन्ति ततो मृतोऽयमित्यध्यवसाय दहनाय अरण्यं नयन्ति । अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति । पुनरुत्थानाच्च न दिष्टं गतः । न हि यमं गतो यमराष्ट्रात् प्रत्यागच्छति ।

---

पूर्वोक्तायां सुप्तौ मूर्छाया अन्तर्भावानन्तर्भावविचारात् सङ्गतिः ।

अस्तु तर्हि सुषुप्तः, निःसंज्ञत्वादमृतत्वाच्च ।

न—वैलक्षण्यात् । मुग्धः कदाचित् चिरमपि नोच्छ्वसिति, सवेपथुः अस्य देहो भवति, भयानकं च वदनं, विस्फारिते नेत्रे । सुषुप्तस्तु प्रसन्नवदनः तुल्यकालं पुनःपुनरुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते । पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः । मुसलसंपातादिनिमित्तत्वात् मोहस्य, श्रमादिनिमित्तत्वाच्च स्वापस्य । न च लोकेऽस्ति प्रसिद्धिः-मुग्धः सुप्त इति ।

परिशेषात् अर्धसंपत्तिर्मुग्धतेत्यवगच्छामः । निःसंज्ञत्वात् संपन्नः, इतरस्माद्वैलक्षण्यात् असंपन्नः—इति ।

कथं पुनः अर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम् ? यावता, सुप्तं प्रति तावत् उक्तं श्रुत्या 'सता सोम्य तदा संपन्नो भवति' (छा. उ. ६।८।१) इति 'अत्र स्तेनोऽस्तेनो भवति' (बृ. उ. ४।३।२२) 'नैतं सेतुं अहोरात्रे तरतो न मृत्यु र्न शोको न सुकृतं न दुष्कृतम्' (छा. उ. ८।४।१) इत्यादि । जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति । न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते, मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते । तस्मात् उपाध्युपशमात् सुषुप्तवत् मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति नार्धसंपत्तिरिति ।

---

अस्तु तर्हि सुप्त इति । अयमेवात्र मुख्यः पूर्वपक्षः, अन्यत् शङ्कामात्रम् ।

ननु—'मुग्धेऽर्धसम्पत्तिः' इत्यत्र, सुप्तौ यावती ब्रह्मसम्पत्तिः ततोऽर्धं मूर्छायां ब्रह्मसम्पत्तिः-इति प्रतीयते, नेदमुपपन्नम्, अन्तःकरणाद्युपाधेः सुप्ताविव मूर्छायामपि लीनत्वेन सुप्तिमूर्छयोर्ब्रह्मसम्पत्तेः तुल्याया एव उपगन्तुं न्याय्यत्वात्—इत्यभिप्रेत्य शङ्कते—कथं पुनरर्धसम्पत्तिरिति ।

मुग्धेऽर्धसम्पत्तिरित्यत्र 'ब्रह्मणा अर्धसम्पत्तिः सुप्तिमपेक्ष्य' इत्यर्थो न विवक्षितः, अपि तु 'सुप्तेनार्धसम्पत्तिः' इत्यर्थो विवक्षितः । तथा च, मुग्धस्य सुप्तेन सह निस्संज्ञत्वादिकं किञ्चित्सादृश्यं भवतीत्यर्थः पर्यवसितः, ब्रह्मसम्पत्तिस्तु सुप्तिमूर्छयोस्तुल्यैव-इति परिहरति—अत्रोच्यत इति ।

अत्रोच्यते—न ब्रूमो मुग्धेऽर्धसंपत्तिः जीवस्य ब्रह्मणा भवतीति। किं तर्हि? अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वं अर्धेनावस्थान्तरपक्षस्य-इति ब्रूमः। दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये। द्वारं चैतत् मरणस्य। यदा अस्य सावशेषं कर्म भवति तदा वाङ्मनसे प्रत्यागच्छतः। यदा तु निरवशेषं कर्म भवति तदा प्राणोष्माणावपगच्छतः। तस्मात् अर्धसंपत्तिं ब्रह्मविद इच्छन्ति।

यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धाऽस्तीति। नैष दोषः-कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्। प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्धसंपत्त्यभ्युपगमाच्च न पञ्चमी गण्यते-इत्यनवद्यम्॥ १०॥

५ उभयलिङ्गाधिकरणम्

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥ ११॥

---

प्रयोजनं पूर्वपक्षे-अवस्थाभ्यः त्वंपदार्थस्य विवेकेऽनुसन्धीयमाने, सुप्तिमपेक्ष्य मूर्छातः पृथक् विवेको नानुसन्धेयः, सुप्तावन्तर्गतत्वेन सुप्तिविवेकेनैव सिद्धत्वात्। सिद्धान्ते तु-सुप्तेस्सकाशात् मूर्छाया भिन्नत्वात् पार्थक्येन विवेकोऽनुसन्धेयः॥ १०॥

इति मुग्धाधिकरणम्

इत आरभ्य आपादपरिसमाप्तेः तत्पदार्थो विविच्यते। महावाक्ये त्वंपदार्थमुद्दिश्य तत्पदार्थो विधीयते। ततश्च उद्देश्यस्य प्रथमनिर्देशार्हत्वात् त्वंपदार्थशोधनपेटिकानन्तरं तत्पदार्थशोधनपेटिका भवति।

ननु[1]—अत्र, ब्रह्मणस्सविशेषत्वस्यानृततया परमार्थतो निर्विशेषमेव ब्रह्म-इति प्रतिपाद्यते। तथा च, इदमधिकरणं आरम्भणाधिकरणेनैव गतार्थम्। यदि तु-तत्र निर्विशेषताप्रतिपादकागमस्य लौकिकमानविरोधं आशङ्क्य, तेषां दुर्बलताप्रतिपादनेन व्यावहारिकता प्रतिपाद्यते, इह तु, सविशेषत्वनिर्विशेषत्वप्रतिपादकयोर्वाक्ययोरेव श्रौतयोः[2] विरोधपरिहारेण निर्विशेषत्वं व्यवस्थाप्यत इति न पौनरुक्त्यम्; तदा-अयं विचारः श्रुतिविरोधपरिहारार्थयोर्वियत्प्राणपादयोरेव कर्तव्यः स्यात्-इति चेत्;

---

1. नन्वित्यादिशङ्का श्रुतप्रकाशिकोक्तं दूषणम्।

2. विरोधपरिहारेणेति विषयभेदेन विरोध एव नास्तीति श्रुतप्रकाशिकोक्तं तु न सम्यक्, भेदेनविषयनिरूपणरूपप्रकारविशेषस्य अत्रैवाधिकरणे निर्धारणीयत्वात्।

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात् संपद्यते तस्य इदानीं स्वरूपं श्रुतिवशेन निर्धार्यते ।

सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः—'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा. उ. ३।१४।२) इत्येवमाद्याः सविशेषलिङ्गाः, 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. उ. ३।८।८) इत्येवमाद्याश्च निर्विशेषलिङ्गाः । किं आसु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यं उत अन्यतरलिङ्गम् ? यदाप्यन्यतरलिङ्गं तदापि किं सविशेषं उत निर्विशेषं ? इति मीमांस्यते ।

तत्र उभयलिङ्गश्रुत्यनुग्रहात् उभयलिङ्गमेव ब्रह्मेति ।

एवं प्राप्ते ब्रूमः—न तावत् स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते । न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेति अवधारयितुं शक्यम्, विरोधात् । अस्तु तर्हि स्थानतः-पृथिव्याद्युपाधियोगात्-इति, तदपि नोपपद्यते । न ह्युपाधियोगादपि अन्यादृशस्य वस्तुनः अन्यादृशः स्वभावः संभवति । न हि स्वच्छः सन् स्फटिकः अलक्तकाद्युपाधि-

---

उच्यते—इहाप्यध्याये महावाक्यार्थज्ञानसाधनतया पदार्थशोधनस्य कर्तव्यत्वप्राप्तेः तत्पदार्थशोधनप्रसङ्गेन निर्विशेषसविशेषत्वप्रतिपादकश्रुतिविरोधपरिहारस्य इहापि सङ्गतत्वात् । उभयलिङ्गा इति । लिङ्ग्यते प्रतिपाद्यते इति व्युत्पत्त्या लिङ्गपदमर्थपरम्[1] । उभयलिङ्गमिति । ब्रह्मणः सविशेषत्वं निर्विशेषत्वं चेत्युभयमपि स्वाभाविकम्, उत एकमेव स्वाभाविकम् । यदाप्येकं स्वाभाविकं, तदापि सविशेषत्वं [2]निर्विशेषत्वं वा-इति विमर्शार्थः ।

अस्तु तर्हि स्थानत इति । ननु—यदि पृथिव्याद्युपाधिकं ब्रह्मणः पृथिव्याद्यात्मत्वमुपगम्यते, तदा औपाधिकस्य तस्य स्फटिकारुण्यादिवत् मिथ्यात्वमेव प्राप्नोतीति न सिद्धान्ताद्विशेषः स्यात् इति चेत्, मैवम्-औपाधिकस्य द्विविधत्वात्-किञ्चिद्धि स्फटिकारुण्यादिकमौपाधिकं अनृतं, चूर्णाद्युपाधिकृतं हरिद्रादीनां लौहित्यं सत्यमिति । ततश्च, प्रकृते औपाधिकस्यापि सविशेषत्वस्य सत्यत्वसम्भवे न सवि-

---

1. अर्थपरमिति श्रुतप्रकाशिकोक्ता लिङ्गशब्दानुपपत्तिः अनेन परिहृता । नैयायिकाभिमतलिङ्गशब्दार्थानुपपत्तिः परेषामपि समाना ।

2. निर्विशेषत्वं वेति निर्विशेषत्वस्य स्वाभाविकत्वेऽपि यथा न निर्धर्मकत्वस्य क्षतिः तथा अद्वैतसिद्धौ स्पष्टम् । तेन न श्रुतप्रकाशिकोक्तदूषणस्यावकाशः ।

योगात् अस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य, उपाधीनां च अविद्याप्रत्युपस्थापितत्वात् । अतश्च अन्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं न तद्विपरीतम् । सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' (क. उ. ३।१५) इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्म उपदिश्यते ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

अथापि स्यात्—यदुक्तं 'निर्विकल्पमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वा उभयलिङ्गत्वमस्ति' इति, तन्नोपपद्यते । कस्मात् ? भेदात् । भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते - चतुष्पाद्ब्रह्म, षोडशकलं ब्रह्म, वामनीत्वादिलक्षणं ब्रह्म, त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म—इत्येवंजातीयकाः । तस्मात् सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम् । ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति । अयमप्यविरोधः, उपाधिकृतत्वादाकारभेदस्य । अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येत-इति चेत् ;

---

शेषागमस्यानृतवस्तुविषयता युक्ता । अस्थूलादिवाक्यानि तु अनौपाधिकस्थूलत्वादिनिषेधपराणि-इति पूर्वपक्षी मन्यते ।

तदपि नोपपद्यते इति । अयमभिप्रायः—अन्यत्र औपाधिकस्य सत्यत्वदर्शनेऽपि, प्रकृते सविशेषत्वं पारमार्थिकमिति वक्तुं न शक्यते, निषेधवाक्यविरोधापत्तेः । न च तान्यनौपाधिकनिषेधपराणीति शक्यं वक्तुम् । तथा सति अध्याहारप्रसङ्गादिति ॥ ११ ॥

यत्तावदुक्तं 'अस्थूलादिवाक्यैः स्थूलत्वादेः स्वरूपेणैव निषेधः प्रतीयते, ततश्च, स्थूलादिपदानामनौपाधिकस्थूलत्वादिप्रतिपादकतामुपेत्य तादृशस्य स्थूलत्वादेः निषेधः इत्यर्थकता अध्याहारादिदोषग्रस्तत्वादयुक्ता' इति, तन्नोपपद्यते । तथा हि सति सविशेषताप्रतिपादकानि वचनानि निरालम्बनान्येव स्युः, स्वरूपत एव सविशेषतानिषेधाभ्युपगमात् । अतः सविशेषताप्रतिपादकवचनसार्थक्याय निर्विशेषताप्रतिपादकानि वचनानि अध्याहारादिना योजनीयानि । वरं हि वाक्यान्तरानर्थक्यमपेक्ष्य लक्षणाद्याश्रयणम्-इति शङ्काभिप्रायः ।

नेति ब्रूमः । कस्मात्? प्रत्येकमतद्वचनात् । प्रत्युपाधिभेदं हि अभेदमेव ब्रह्मणः श्रावयति शास्त्रम्—'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषः अयमेव सः योऽयमात्मा' (बृ. उ. २।५।१) इत्यादि । अतश्च, न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम् । भेदस्योपासनार्थत्वात् अभेदे तात्पर्यात् ॥ १२ ॥

## अपि चैवमेके ॥ १३ ॥

अपि च, एवं-भेददर्शननिन्दापूर्वकं अभेददर्शनमेव एके शाखिनः समामनन्ति—

'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ।

मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' (क. उ. ४।११) इति । तथा अन्येऽपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे. उ. १।१२) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥ १३ ॥

---

यश्चायमस्यां पृथिव्यामिति । 'इयं पृथिवी सर्वेषां भूतानां मधु अस्यै पृथिव्यै सर्वाणि भूतानि मधु' इति वाक्यपूर्वकं इदं वाक्यं आम्नायते । 'अस्यै पृथिव्य' इति षष्ठ्यर्थे चतुर्थी । यश्चायमस्यांपृथिव्यामित्यत्र चकारेण पूर्ववाक्यगतं मधुत्वं पार्थिवस्य शारीरस्य च पुरुषस्य प्रतिपाद्यते । तथा च यश्चेतियत्पदप्रतिनिर्देशाय 'सोऽपि सर्वेषां भूतानां मधु' इति अनुषङ्गाध्याहारौ द्रष्टव्यौ । मधुत्वं उपकारकत्वम् । अयमेवेत्यादिवाक्यशेषेण पृथिव्याद्याधिदैविकपुरुषस्य आध्यात्मिकस्य शारीरस्य च परमात्माभेदः प्रतिपाद्यते ॥ १२ ॥

पूर्वसूत्रं जीवब्रह्मभेदनिषेधश्रुतिसङ्ग्रहार्थत्वेन व्याख्याय, इदं सूत्रं ब्रह्मणि प्रपञ्चनिषेधकश्रुतिसङ्ग्रहार्थत्वेन व्याचष्टे—अपि चैवं भेददर्शनेति ।

अयमत्र सूत्रद्वयाभिप्रायः—

उपक्रमोपसंहारैकरूप्यादितात्पर्यलिङ्गैर्निष्प्रपञ्चब्रह्मैक्यप्रतिपादनपराः श्रुतयः न लक्षणादिभिः कदर्थयितुं शक्यन्ते । ततश्च प्रबलाभिर्निष्प्रपञ्चब्रह्मलिङ्गाभिः यदि

सप्रपञ्चब्रह्मलिङ्गानां प्रपञ्चांशे असदर्थकता भवति, भवतु नाम । दृष्टं हि 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान् अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति पयसाग्निहोत्रंजुहोतीत्यत्र र्तिलगवीधुकपदप्रतिपाद्यारण्यतिलगोधूमयवागूसाधनविधायिवाक्ययोः अनाहुतिर्वैजर्तिलाश्चगवीधुकाश्चेतिनिषेधोन्नायकवाक्यपर्यालोचनया असदर्थकत्वम् ।

यदि तु—तत्र विधिवाक्यस्य जर्तिलगवीधुकयवाग्वोर्होमसाधनतापरत्वमुपेत्य निषेधश्च अनाहुतिवाक्येन पुनरुपेयेत, तदापि विकल्प एव तत्र फलमिति वक्तव्यम् । स च निषेधवाक्यं विनैव सिध्यति । जर्तिलगवीधुकयवागूपयसां त्रयाणां विकल्पं विना निवेशासम्भवात् । तथा च अनाहुतिवाक्यं व्यर्थमेव भवेदिति, तदनुसारेण विधिनिषेधयोः पयस्स्तुतिपरत्वमुपेयते - ग्राम्यारण्यपशुहिंसाऽभावेन प्रशस्तयोरपि यवाग्वोः पयोऽपेक्ष्य अनाहुतित्वमिति । एवंचसति कृत्स्नं एकवाक्यमपि भविष्यति । ततश्च, यवागूवाक्यस्य तात्पर्यविधुरे मुख्यार्थे प्रामाण्याभावात् तदंशे असदर्थकत्वेऽपि न दोषः, तात्पर्यविषयीभूते प्राशस्त्यविशिष्टे पयोहोमे प्रामाण्योपपत्तेः—इत्युच्यते

तदा-प्रकृतेऽपि, परमते स्वाभाविकस्थूलत्वादिनिषेधपराणामस्थूलादिवाक्यानां वैयर्थ्यमेव । शास्त्रानुसारेण हि परमात्मस्वरूपमवधारणीयम् । शास्त्रेण च सत्यज्ञानानन्दात्मकं परमात्मस्वरूपं प्रतिपादितं, न ततः स्थौल्यादिकं परमात्मनि प्रसज्यते । सृष्टिवाक्यपर्यालोचनया तु पृथिव्यादितादात्म्योपाधिकमेव स्थौल्यादिकं प्रसक्तम् । ततश्च अनौपाधिकस्थौल्यादिनिषेधे अप्रसक्तप्रतिषेधत्वात् निषेधसन्दर्भो व्यर्थ एव स्यादिति सृष्टिवाक्यपर्यालोचनया प्रसक्तं यादृशं स्थौल्यादिकं तादृशमेव अत्रापि प्रतिषेध्यम् । यथा च विधिनिषेधाभ्यां जर्तिलादिवाक्ये स्तुतिविशेषलाभः, एवमत्रापि अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मत्वप्रतिपत्तिलाभः । तमेव च निष्प्रपञ्चं तात्पर्यविषयीभूतमर्थं आदाय एकवाक्यत्वं प्रामाण्यं च उपपद्यते ।

एतेन—'सत्यकामस्सत्यसङ्कल्पः' 'हिरण्यश्मश्रुर्हिरण्यकेशः' इत्यादिगुणविशेषविधायकवाक्यपर्यालोचनया 'असङ्गो न हि सज्जते' 'साक्षी चेता केवलो निर्गुणश्च' 'अस्थूलमनणु' इत्यादीनि वाक्यानि सामान्येन निषेधविषयकाणि

विहितेतरविषयाणि भविष्यन्तीति [1]शङ्कापि परास्ता। तात्पर्यलिङ्गोप[गृही][हि]तानामसङ्गत्वादिवाक्यानां सङ्कोचानुपपत्तेः।

अपि च–निर्गुण इत्यस्य सत्यकामत्वादिविहितेतरनीलपीतादिगुणनिषेधपरत्वे असङ्ग इत्यस्य च दोषराहित्यपरत्वे अस्थूलमनण्वित्यादीनां च कर्मनिमित्तस्थूलत्वादिनिषेधपरत्वे वाक्यानां वैयर्थ्यमेव, अलौकिके परमात्मनि विहितव्यतिरिक्तानां गुणानां अप्रसक्तत्वात्। एवं दोषाणामपि न तत्र प्रसङ्गः, प्रमाणाभावादेव। विशिष्य च 'निरवद्यं निरञ्जनम्' इति दोषाः प्रतिषिद्धाः। तत्र किं प्रयोजनं 'असङ्गो न हि सज्जते' इत्यस्पष्टवाक्येन। अपहतपाप्मेत्यादिना पुण्यपापसंसर्गस्य आत्मनि प्रतिषेधेन तन्निमित्तकस्य स्थौल्यादेः अप्रसङ्गेन अस्थूलादिवाक्यमपि तन्निषेधे व्यर्थमेव भवेत्।

अपि च अस्थूलादिवाक्यमपि अविशेषेणैव स्थूलत्वादिनिषेधपरम्। तस्य कथं हिरण्यश्मश्रुत्वादिवाक्यपर्यालोचनया सङ्कोचः कर्तुं युक्तः।

अपि च-वस्तुप्रतिपादनपरेषु वाक्येषु यत्रयत्र गुणाः सृष्टिर्वा प्रतिपाद्यते, [2]तत्र गुणानां प्रतिषेधोऽपि भवति, केषाञ्चिद्विशेषेणैव अवशिष्टानां सामान्येन। [3]तानि च वाक्यानि प्रथमाध्याये एव सप्रपञ्चं विवेचितानि। कथं एवंगतिसामान्याद्युपबृंहितानां लक्षणादिना व्यर्थतापर्यवसाय्यर्थकता उपगन्तुं शक्यते। तस्मात् विधिनिषेधप्रमाणयोर्विरोधे 'इदं रजतं' 'नेदं रजतम्' इत्यादौ निषेधमानस्य विधिज्ञानाप्रामाण्यापादकताया उत्सर्गतो लोकसिद्धत्वात्, इहापि गुणविधिवाक्यानां मुख्यार्थे तात्पर्याभावकल्पनया असदर्थकताभ्युपगमो नानुपपन्नः।

वस्तुतस्तु निषेधबाधितानामपि वेदान्तगुणविधीनां नासदर्थकतेति 'प्रकाशवच्चावैयर्थ्यम्' इत्यादिना अनुपदमेव प्रतिपादयिष्यति-इति ॥ १२ ॥

ननु–निर्विशेषप्रकरणगता ये गुणविधयः तेषां अस्तु निषेधवाक्यैकवाक्यत्वात् बाधः, तत्र उपक्रमादिलिङ्गैः, निषेधवाक्यानां विधिवाक्यार्थबाधकतोत्सर्गेण

---

1. शङ्केति शङ्काग्रन्थोक्तार्थः विशिष्टाद्वैतिनां सिद्धान्तः।
2. आ. तत्र सर्वत्र
3. तानि च वाक्यानीति सद्विद्याब्रह्मविद्याऽक्षरविद्यागतवाक्यानि तानि।

**कथं पुनः आकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीषु अनाकारमेव ब्रह्म अवधार्यते न पुनर्विपरीतं - इत्यत उत्तरं पठति—**

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

**रूपाद्याकाररहितमेव ब्रह्म अवधारयितव्यं न रूपादिमत् । कस्मात्? तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घम्' 'अशब्दमस्पर्शमरूपमव्ययम्' 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा. उ. ८।१४।१) 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मु. उ. २।१।२), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म सर्वानुभूः' (बृ. उ. २।५।१९) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानि-इत्येतत् प्रतिष्ठापितं 'तत्तु समन्वयात्' (ब्र. सू. १।१।४) इत्यत्र । तस्मात् एवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्म अवधारयितव्यम् । इतराणि तु आकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि । उपासनाविधिप्रधानानि हि तानि । तेषु असति विरोधे यथाश्रुतमाश्रयितव्यम्, सति तु विरोधे, 'तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसि भवन्ति' इत्येषः विनिगमनायां हेतुः, येन उभयीष्वपि श्रुतिषु सतीषु अनाकारमेव ब्रह्म अवधार्यते न पुनर्विपरीतमिति ॥ १४ ॥**

---

च, निर्विशेषतात्पर्यकत्वावधारणात् । दहरशाण्डिल्यादिविद्यावाक्येषु तु निषेधा न श्रूयन्ते । अतः तेषां गुणवैशिष्ट्यतात्पर्यकत्वात् प्रसज्यत एव सगुणता ब्रह्मणः इति शङ्कां निराकर्तुं उत्तरसूत्रमवतारयति—कथं पुनरित्यादिना ।

तेष्वसति विरोध इति । दहरादिवाक्यानि हि न गुणवैशिष्ट्यतात्पर्यकाणि, अपि तु गुणवैशिष्ट्येनब्रह्मोपासनातात्पर्यकाणि, तथा च अन्यपराद्वाक्यात् गुणो ब्रह्मणि देवताधिकरणन्यायेन समर्थनीयः, स च प्रमाणान्तराविरोधे एव प्रवर्तते । तथा च, निर्विशेषतात्पर्यकवाक्यान्तरविरोधे सति उपासनापराद्वाक्यात् न ब्रह्मणि गुणवैशिष्ट्यं तात्त्विकं सिध्यति-इति भावः ॥ १४ ॥

का तर्हि आकारवद्विषयाणां श्रुतीनां गतिः ? इत्यत आह—

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानः अङ्गुल्याद्युपाधिसंबन्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात् तदाकारतामिव प्रतिपद्यते। तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। एवमवैयर्थ्यं आकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुं, प्रमाणत्वाविशेषात्।

नन्वेवमपि, यत् पुरस्तात् प्रतिज्ञातं-नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते। नेति ब्रूमः-उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः। उपाधीनां च अविद्याप्रत्युपस्थापितत्वात्। सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्र अवोचाम ॥ १५ ॥

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिः चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. उ. ४।५।१३) इति। एतदुक्तं भवति—नास्यात्मनः अन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरं अस्य स्वरूपम्। यथा सैन्धवघनस्य अन्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैव—इति ॥ १६ ॥

---

यस्सर्वज्ञइत्यादिवाक्यानां व्यावहारिकगुणजातप्रतिपादकतया न निर्विषयतेति प्रतिपादनार्थं सूत्रम्।

प्रकाशस्येव ब्रह्मणोऽपि सविशेषत्वात् आकारप्रतिपादकवाक्यानामवैयर्थ्यमिति तदर्थः ॥ १५ ॥

सर्वनिषेधावधिभूतस्य ब्रह्मणः किं स्वरूपं इत्याकाङ्क्षायां तत्प्रतिपादनार्थं सूत्रम्।

अत्र, पूर्वसूत्रगतप्रकाशशब्दार्थत्वेन प्रस्तुतं ज्ञानं तत्पदेन परामृश्यते।

यद्यपि पूर्वसूत्रे प्रकाशशब्दार्थः आदित्यादिप्रभारूप एव वाक्यार्थान्वयी, तथापि, वाक्यार्थान्वयितया प्रस्तुत एवार्थः तत्पदेन परामर्शनीय इति न नियमः।

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषत्वात् 'अथात आदेशो नेति नेति' (बृ. उ. २.३।६) इति, 'अन्यदेव तद्विदितात् अथो

---

वाक्यार्थानन्वयिनोऽपि पदोपस्थितस्यार्थस्य सर्वनाम्ना परामर्शदर्शनात् । यथा—'नालीकासनमीश्वरशिखरिणां तत्कन्धरोत्थायिनो गन्धर्वाःपुनरेतदध्वचरिते चक्रे तदुद्धारकः । पत्री तत्प्रभुवैरिणां परिवृढो जीवा च यस्याभवत् जीवान्तेवसतां रिपुक्षयविधौ देवाय तस्मै नमः ॥' इत्यादौ ।

अयमस्यार्थः—जीवस्य–बृहस्पतेः अन्तेवसतां–शिष्याणां देवानां रिपोः-त्रिपुरस्य क्षयविधौ, यस्य, शिखरिणां - पर्वतानां ईश्वरः - मेरुः नालीकानां - शराणां आसनं-धनुः अभवत् । तस्य-नालीकं-पद्मं आसनं यस्य-ब्रह्मणः कन्धरायां-ग्रीवायां उत्थानशीलाः ये वेदाः ते गन्धर्वाः-हयाः यस्याभवन् । पुनश्च एतेषां गन्धर्वाणां प्रसिद्धानां अध्वा-आकाशः, तत्र चरितं-गमनं ययोः तौ सूर्यचन्द्रौ रथचक्रे यस्याभूताम् । तस्य-चक्रस्य सुदर्शनाख्यस्य उद्धारकः विष्णुः पत्री-शरः यस्याभवत् । तेषांपत्रिणां-पक्षिणां प्रभोः-गरुडस्य वैरिणां - नागानां परिवृढः - स्वामी-स वासुकिः जीवा-ज्या च यस्याभवत् । तस्मै देवाय-शिवाय नमः—इति ।

अत्र, नालीकासनादिशब्दैरुपस्थितः पूर्वपूर्ववाक्यार्थान्वयी अन्य एवार्थः, तत्कन्धरोत्थायिन इत्यादौ सर्वनामपरामर्शनीयश्चान्यः-इति ।

तन्मात्रमिति मात्रपदेन, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञानघन एव' इति अनन्तपदेन एवकारेण च प्रतिपाद्या रूपान्तरव्यावृत्तिः संगृहीता ॥ १६ ॥

एवं, वेदान्तगतगुणविधितन्निषेधवाक्यानां विरोधो गुणानामनृतत्वान्नास्तीति, न्यायेन प्रतिपादितम् । सम्प्रति, सप्रपञ्चत्वानृतत्वप्रतिपादिकाभिश्श्रुतिस्मृतिभिरेव अस्मदुक्तरीत्या विरोधः परिहृत इति प्रतिपादनार्थं सूत्रम् ।

वाचारम्भणश्रुतिस्तावत् प्रपञ्चमिथ्यात्वप्रतिपादिकेति आरम्भणाधिकरणे प्रपञ्चितम् ।

'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुतिरपि सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्विरोधं सप्रपञ्चत्वस्यानृततया परिहरति ।

अयं हि अस्य वाक्यस्य अर्थः—'द्वे वाव ब्रह्मणो रूपे' इत्यादिना मूर्तामूर्तात्मकं कृत्स्नं प्रपञ्चं पूर्वं प्रतिपाद्य 'अथात आदेशः' इति तन्निषेधोऽभिधीयते नेतिनेतीति। निषेधवाक्यार्थं स्वयमेव श्रुतिराह-नह्येतस्मादिति। एतस्मात्-नेतिनेतीत्यादिष्टात् अन्यत् परं यतो नास्ति, अतो नेतीति।

[1]न च—एवंयोजनायां 'अन्यत्' 'परं' इति शब्दद्वयं नापेक्षितम्। एकेनैव अभिमतार्थसिद्धेः। अतः पदद्वयसार्थक्याय 'एतस्मात्—नेतिनेतीत्यादिष्टात् अन्यत् परं-उत्कृष्टं नास्ति, अपि तु सर्वोत्कृष्टं ब्रह्म - इति योजनया सर्वोत्कृष्टत्वगुणो विधीयते। अथवा, 'एतस्मात्-प्रपञ्चात्[2] ब्रह्मणोऽन्यत् उत्कृष्टं नास्ति' इति योजनया पूर्वोक्त एवार्थो विधीयते। तदनुसारेण च, अथातआदेशोनेतिनेतीतिपूर्ववाक्येऽपि न सप्रपञ्चता पूर्वसन्दर्भगता निषिध्यते, अपि तु 'मूर्तामूर्तात्मकं ब्रह्मणो रूपं' इत्युक्त्या तावन्मात्रमेवब्रह्मणोरूपमितिशङ्कायां, नेतिनेतीतिवाक्येन 'तावन्मात्रमेव ब्रह्मणो गुणजातं न भवति'इति[3] प्रतिपाद्यते, इतिपदेन, अर्थादुपस्थितायास्तावन्मात्रतायाः प्रतिषेधाय परामर्शात्-इति वाच्यम्।

ब्रह्मणोऽन्यत् उत्कृष्टं नास्तीति योजनायामपि अन्यपदस्य वैयर्थ्यम्, अन्यस्मिन्नेव उत्कृष्टत्वप्रसक्तेः। द्वितीययोजना तु अत्यन्तक्लिष्टा, एतस्मादित्यस्य असन्निहितप्रपञ्चपरामर्शकताभ्युपगमात्, 'ब्रह्मणः' इत्यध्याहाराच्च। नेतिनेतीत्यत्र च इतिशब्दो मूर्तामूर्तात्मकमेव रूपद्वयं स्वरसतः परामृशति, न तु तन्मात्रत्वम्, तद्धि मूर्तामूर्तरूपद्वयातिरिक्तगुणान्तररहितत्वं, तस्य असंशब्दितत्वात्। अतः पूर्वोक्तैव योजना समीचीना।

न च सिद्धान्तेऽपि अन्यपदवैयर्थ्यम्। तस्य 'अन्यत्वेन भासमानं' इत्येवं परिणतिसम्भवात्। तथा च, ब्रह्मणोऽन्यत्वेन भासमानं यत् परं—अन्यत् वस्तुजातं, तत् यतो नास्ति, अतो नेतीत्युच्यते-इत्येवंयोजनैव युक्ता।

तत्र च, 'मूर्तामूर्तात्मकस्य रूपद्वयस्य ब्रह्मण्येव विद्यमानत्वेन तत्रैव तत्प्रतिषेधः कथम्' इत्यपेक्षायां सत्यस्यसत्यमिति नामधेयमाम्नातम्। तद्विवरणार्था

1. नचेत्यादि शङ्काग्रन्थोक्तार्थः विशिष्टाद्वैतिनां सिद्धान्तः।
2. प्रपञ्चात् उत्कृष्टं - इत्यन्वयः।
3. मु. इत्यादि प्रति

अविदितादधि' (केन. उ. १।३) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै. उ. २।४।१) इत्येवमाद्या। बाष्कलिना च बाध्वः पृष्टः सन् अवचनेनैव ब्रह्म प्रोवाच इति श्रूयते—'सहोवाच अधीहि भो इति, स तूष्णीं बभूव, तं ह द्वितीये वा तृतीये वा वचन उवाच, ब्रूमः खलु, त्वं तु न विजानासि, उपशान्तोऽयमात्मा' इति।

तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—

'ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत् परं ब्रह्म नसत्तन्नासदुच्यते' (भ. गी. १३।१२)

इत्येवमाद्यासु। तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति ॥ १७ ॥
(म. भा. शा. ३३९।४५)

---

श्रुतिः 'प्राणा वै सत्यं तेषामेष सत्यम्' इति। प्राणाः—इन्द्रियाणि, विषयाणामप्येतदुपलक्षणम्। अत्र, सविषयेन्द्रियात्मककृत्स्नप्रपञ्चसत्यत्वापेक्षया ब्रह्मसत्यत्वं अधिकं प्रतीयते। 'राजराजः' 'मन्मथमन्मथः' इत्यादौ तथादर्शनात्। ततश्च, प्रपञ्चसत्यत्वं 'सन् घटः' 'सन् पटः' इत्येवंरूपेण यत् प्रतीयते, तत् न स्वाभाविकम्, अपि तु सद्रूपब्रह्माध्यस्तत्वोपाधिकम्, ब्रह्मणस्तु सत्यत्वं स्वाभाविकमिति, प्रपञ्चस्य स्वभावतोऽनृततया न निषेधानुपपत्तिः-इति 'अथ नामधेयम्' इत्यादिवाक्यशेषेण प्रतिपाद्यते।

प्रपञ्चमिथ्यात्वप्रतिपादिकां स्मृतिं उदाहरति—**तथा विश्वरूपधर इति।** [1]एवं 'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिः न तु वस्तुभूतः' [वि. पु. २-१२-३९] इति, 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। [2]तमेवार्थस्वरूपेण भ्रान्तिदर्शन-

---

1. विष्णुपुराणं विशिष्टाद्वैतसिद्धान्तपरमिति परेषामभिमानं अपाकुर्वन् प्रकृतं उपोद्बलयति—**एवमित्यादिना।**

2. **तमेवेति** अतीतानन्तरपद्योक्तः पुरुषोत्तमः तच्छब्दार्थः।

# अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एव च अयमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्यः अतएव च अस्य उपाधिनिमित्तां अपारमार्थिकीं विशेषवत्तां अभिप्रेत्य जलसूर्यकादिवदिति उपमा उपादीयते मोक्षशास्त्रेषु—

'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति ।

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र. बिं. उ. १२)

इत्येवमादिषु ॥ १८ ॥

---

तस्थितम्' [वि. पु. १-२-६] इति, 'द्वैतिनोऽतथ्यदर्शिनः' [वि. पु. २-१४-३१] इति, 'ज्ञानं यथा सत्यमसत्यमन्यत्' [वि. पु. २-१२-४५] इति च सहस्रशः प्रपञ्चानृतत्वप्रतिपादकानि उक्तामेव व्याख्यां उपोद्बलयन्ति ।

न च—यदि निर्विशेषमेव ब्रह्म श्रुतिस्मृत्योरभिमतं, तदा, तत्र विशेषानुपन्यस्य तेषां निषेधेन मिथ्यात्वं किमर्थं प्रतिपादनीयम् । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' [1]इति विशेषानुपन्यास एव युक्तः-इति वाच्यम् । 'आम्नातस्यार्थं वक्तुं प्रभवामः, नाम्नातं पर्यनुयोक्तुम्' इति न्यायात् । अपि च-निर्विशेषस्य परमात्मनः अध्यारोपापवादाभ्यामेव बोधनं कर्तुं शक्यं न तु प्रकारान्तरेणेति, न प्रक्षालनाद्धिपङ्कस्येतिन्यायः प्रकृते प्रवर्तते । तस्मात् श्रुतिस्मृतिन्यायानुसारिभिः परमार्थतोनिर्विशेषमेव आत्मतत्त्वमुपगन्तव्यम् ॥ १७ ॥

जीवब्रह्मभेदाभेदश्रुतिविरोधोऽपि भेदानृतत्वप्रतिपादनेन श्रुत्यैव परिहृत इति [2]प्रतिपादनाय 'अत एव चोपमा सूर्यकादिवत्' इत्यादित्रिसूत्री ।

ज्योतिरात्मा-ज्योतिस्स्वरूपः, उपाधिना-जलरूपेण, भेदरूपः-भेदेन रूप्यते-प्रतीयते इति भेदरूपः, भिन्न इति यावत् । देवः-परमात्मा, एवम्-उपाधिकृतापारमार्थिकभेदवान् भवति, क्षेत्रेषु—अविद्यादिषु, एकधा-ईश्वररूपेण, बहुधा-जीवरूपेण ॥ १८ ॥

---

1. इति-इतिन्यायात् । 2. मु. इति प्रतिपादयति

अत्र प्रत्यवस्थीयते—

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः । न त्वात्मा मूर्तः न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्च उपाधयः, सर्वगतत्वात् सर्वानन्यत्वाच्च । तस्मात् अयुक्तोऽयं दृष्टान्तः इति ॥ १९ ॥

अत्र प्रतिविधीयते—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

युक्त एव त्वयं दृष्टान्तः, विवक्षितांशसंभवात् । न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् कंचित् विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचित् दर्शयितुं शक्यते । सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम् । शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते ।

किं पुनरत्र विवक्षित सारूप्यमिति । तदुच्यते वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं, जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यते-इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति । एवं परमार्थतोऽविकृतं एकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इव उपाधिधर्मान् वृद्धिह्रासादीन् । एवं उभयोः दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यात् अविरोधः ॥ २० ॥

---

सुगमम् ॥ १९ ॥

यथा सूर्यादीनां उपाधिष्वन्तर्भूतत्वेन वृद्धिह्रासभाक्त्वम्, एवं परमात्मनोऽपि उपाध्यन्तर्भावपूर्वकमेव उपाधिगतवृद्धिह्रासादिभाक्त्वमस्ति, अतो विवक्षितमंशमादाय दृष्टान्तदार्ष्टान्तिकयोस्सारूप्यस्य [1]विद्यमानत्वात् न पूर्वोक्ताशङ्का कार्येति, सूत्रं योजयन् परिहरति—युक्त एव त्वयमित्यादिना ॥ २० ॥

---

1. मु. विवक्षितत्वात् न

## दर्शनाच्च ॥ २१ ॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिषु अन्तरनुप्रवेशम्-पुरश्चक्रे द्विपदः, पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' (बृ. उ. २।५।१८) इति, 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा. उ. ६।३।२) इति च। तस्मात् युक्तमेतत् 'अत एव चोपमा सूर्यकादिवत्' इति। तस्मात् निर्विकल्पकैकलिङ्गमेव ब्रह्म, नोभयलिङ्गं विपरीतलिङ्गं च-इति सिद्धम् ॥ २१ ॥

अत्र केचित् द्वे अधिकरणे कल्पयन्ति। प्रथमं तावत्-किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म उत प्रपञ्चवदनेकाकारोपेतम्-इति। द्वितीयं तु-स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्म उत बोधलक्षणं उत उभयलक्षणम्-इति।

---

पूर्वसूत्रोक्तस्य देहाद्युपाध्यनुप्रवेशस्य श्रुत्या समर्थनार्थं इदं सूत्रम्। पुरः-शरीराणि 'पुरः स पक्षी' इत्यत्र, पुर इति पुरस्तादित्यर्थे। पक्षी भूत्वा-जीवो भूत्वा। तैत्तिरीयके, आनन्दमयपर्याये जीवस्य पक्षित्वरूपणात् ॥ २१ ॥

एवं स्वयं नस्थानतोऽपीत्यादीनि दर्शनाच्चेत्येवमन्तानि सूत्राणि परमात्मनो निर्विशेषत्वव्यवस्थापकतया ऐकाधिकरण्येन व्याख्यातानि।

अन्ये तु-नस्थानतोऽपीत्यारभ्य अरूपवदेवहितत्प्रधानत्वादित्येवमन्तानि सूत्राणि परमात्मनो निर्विशेषत्वव्यवस्थापकतया एकमधिकरणम्। प्रकाशवच्चावैयर्थ्यमित्यादीनि तु, परस्परभिन्नसत्ताज्ञानरूपं परं ब्रह्म, इति पूर्वपक्षे 'परस्पराभिन्नसत्यज्ञानात्मकं परं ब्रह्म' इति व्यवस्थापयितुं अपरमधिकरणम्-इति वदन्ति। तन्मतमाह-अत्र केचित् द्वे अधिकरणे इति। किं सल्लक्षणं ब्रह्म उत बोधलक्षणं इति परेषां सिद्धान्तकोटिः। अत्र च, सद्बोधाभिन्नं अखण्डस्वरूपं इत्यर्थो विवक्षितः। उत उभयलक्षणं इति पूर्वपक्षकोटिः। तत्र पूर्वपक्षसूत्रं 'प्रकाशवच्चावैयर्थ्यम्' इति। प्रकाशवत्-ज्ञानवत्, चकारात् सत्तावच्च, सत्यंज्ञानमनन्तमिति [1]श्रुतिद्वयावैयर्थ्यात्-इति तदर्थः। आह चतन्मात्रमित्यारभ्य सिद्धान्तसूत्राणि। तन्मात्र-

---

1. श्रुतिद्वयेति श्रुतिगतसत्यज्ञानशब्दद्वयेत्यर्थः। सदेवसोम्येति सत्यंज्ञानमिति च श्रुतिद्वयावैयर्थ्यात् इति व्याख्यान्तरेषु वर्णितम्।

अत्र वयं वदामः—सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति ।

यदि तावत् अनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमिति अयं प्रयासः, तत् पूर्वेणैव 'न स्थानतोऽपि' इत्यनेनाधिकरणेन निराकृतमिति, उत्तरमधिकरणं 'प्रकाशवच्च' इत्येतत् व्यर्थमेव भवेत् ।

न च 'सल्लक्षणमेव ब्रह्म न बोधलक्षणम्' इति शक्यं वक्तुम् । 'विज्ञानघन एव' इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्य आत्मत्वेनोपदिश्येत ।

नापि 'बोधलक्षणमेव ब्रह्म न सल्लक्षणम्' इति शक्यं वक्तुम्, 'अस्तीत्येवोपलब्धव्यः' (क. उ. ६।१३) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत ।

नापि 'उभयलक्षणमेव ब्रह्म' इति शक्यं वक्तुम् । पूर्वाभ्युपगम-विरोधप्रसङ्गात् । सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तया उपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत । श्रुतत्वाददोष इति चेत्, न-एकस्य अनेकस्वभावत्वानुपपत्तेः । अथ 'सत्तैव

---

ज्ञानमात्रं आह श्रुतिः ब्रह्म । मात्रपदं ज्ञानस्य सत्पदार्थभेदव्यावृत्त्यर्थम् । तथा च 'सत्यज्ञानात्मकमखण्डं ब्रह्म' इति सिद्धान्तः ।

एतस्याधिकरणस्य नस्थानतोऽपीत्यनेन गतार्थतामाह—सर्वथापीति । किं सल्लक्षणं उत बोधलक्षणमिति यथाश्रुते दूषणमाह—न च सल्लक्षणमेव ब्रह्मेत्यादिना । एवं यथाश्रुतसिद्धान्तकोटौ खण्डितायां यदि पलायमानस्सिद्धान्ती पूर्वपक्षकोटिमेवावलम्बेत, तत्राह—नाप्युभयलक्षणमिति । अथ अखण्डंब्रह्मेत्येव सिद्धान्तो विवक्षितः, तर्हि तादृशसिद्धान्तप्रतिपादनानुकूलाश्शब्दाः कोटिप्रदर्शन-काले नोल्लिखिताः-इति दूषयति—अथ सत्तैवेति । अत्र हि त्रिकोटिकसंशये अखण्डार्थत्वकोटिर्नोल्लिखितेति भावः ।

ननु-आद्याभ्यां कोटिभ्यां अखण्डार्थत्वकोटिरेव विवक्षिता लक्षणया, न च तत्र नस्थानतोऽपीत्यनेन गतार्थत्वम्, सप्रपञ्चनिष्प्रपञ्चवाक्यविरोधपरिहारार्थं तदधि-

**बोधो बोध एव च सत्ता नानयोः परस्परव्यावृत्तिरस्ति' इति यद्युच्येत, तथापि, 'किं सल्लक्षणं ब्रह्म उत बोधलक्षणं उत उभयलक्षणम्' इत्ययं विकल्पो निरालम्बन एव स्यात् । सूत्राणि तु एकाधिकरणत्वेनैव अस्माभिर्नीतानि ।**

**अपिच-ब्रह्मविषयासु श्रुतिषु आकारवदनाकारप्रतिपादनेन विप्रतिपन्नासु, अनाकारे ब्रह्मणि परिगृहीते अवश्यं वक्तव्या इतरासां श्रुतीनां गतिः, तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राणि अर्थवत्तराणि संपद्यन्ते ।**

**यदप्याहुः-आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेन अनाकारप्रतिपत्त्यर्था एव न पृथगर्थाः-इति**

---

करणं इदं तु सत्यादिवाक्यस्याखण्डार्थत्वव्यवस्थापनाय-इति चेत्, न-तथापि लक्षणवाक्यानामखण्डार्थत्वव्यवस्थापनार्थेन 'जन्माद्यस्य यतः' इत्यनेन गतार्थत्वात्-इति भावः ।

स्वमते निर्विशेषप्रकरणगता ये गुणविधयः तेषां निषेधवाक्यशेषतया निष्प्रपञ्चब्रह्मप्रतीतिपरत्वम्[1], ये तु दहराद्युपासनाप्रकरणगता गुणविधयः तेषां तत्तद्गुणविशिष्टोपासनापरत्वम्-इति व्यवस्था दर्शिता ।

अन्ये तु वदन्ति—'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यैः अमृतत्वकामस्य साक्षात्कारो निष्प्रपञ्चब्रह्मगोचरो विधीयते, तादृशसाक्षात्कारश्च प्रपञ्चप्रविलयं विना [2]नोत्पद्यत इति प्रपञ्चप्रविलयद्वारानिष्प्रपञ्चब्रह्मसाक्षात्कारोपयोगिनिष्प्रपञ्चब्रह्मोपासनं विधीयते । तत्र च उपासनाविधिशेषतया अस्थूलादिवाक्यानि मुख्ययैव वृत्त्या निष्प्रपञ्चं ब्रह्म प्रतिपादयन्ति । तत्प्रकरणगता गुणविधयश्च तच्छेषतया । दहरादिवाक्यान्यपि निष्प्रपञ्चब्रह्मप्रतिपत्तिपराणि । तेषां यद्यपि साक्षात्सत्यकामत्वादिविशिष्टब्रह्मप्रतीतिपरताऽवगम्यते, तथापि सत्यकामादिशब्दा लक्षणया असत्यकामत्वादिव्यावृत्तिप्रतिपादनद्वारा निष्प्रपञ्चे ब्रह्मणि पर्यवस्यन्ति-इति ।

तन्मतमनुवदति—यदप्याहुरिति । यद्यपि, द्रष्टव्यादिवाक्यानां साक्षात्कारविधिपरत्वं उपासनाविधिशेषत्वेनैव निष्प्रपञ्चं ब्रह्म समर्प्यते-इत्येतत् समन्वयसूत्रे एव निराकृतम्; तथापि, दहरादिप्रकरणगतान्यपि सत्यकामत्वादिवाक्यानि निष्प्रपञ्चब्रह्मप्रतिपत्तिपराणि—इत्येतन्निराकरणार्थः अयं सन्दर्भः ।

---

1. मु. परत्वमुक्तम् 2. मु. नोपपद्यते

तदपि न समीचीनमिव लक्ष्यते। कथम्? ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते, यथा - युक्ता ह्यस्य हरयः शता दशेति अयं वै हरयः अयं वै दश च सहस्राणि बहूनि चानन्तानि च' (बृ. उ. २।५।१९) इत्येवमादयः, ते भवन्ति प्रविलयार्थाः, 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ. उ. २।५।१९) इत्युपसंहारात्। ये पुनः उपासनाधिकारे प्रपञ्चा उच्यन्ते, यथा—'मनोमयः प्राणशरीरो भारूपः' (छा. उ. ३।१४।२) इत्येवमादयः, न तेषां प्रविलयार्थत्वं न्याय्यम्, 'स क्रतुं कुर्वीत' (छा. उ. ३।१४।१) इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां संबन्धात्। श्रुत्या च एवंजातीयकानां गुणानां उपासनार्थत्वेऽवकल्प्यमाने न लक्षणया प्रविलयार्थत्वं अवकल्पते। सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' इति विनिगमनकारणवचनं अनवकाशं स्यात्। फलमप्येषां, यथोपदेशं क्वचिद्दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित् क्रममुक्तिः—इत्यवगम्यत एव, इत्यतः पार्थगर्थ्यमेव उपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम्।

कथं चैषां एकवाक्यता उत्प्रेक्ष्यते इति वक्तव्यम्?

एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवत्-इति चेत्,

---

विनिगमनकारणवचनं अनवकाशं स्यादिति। केभ्यश्चिद्वाक्येभ्यः सप्रपञ्चब्रह्मावगमे सति निष्प्रपञ्चवाक्यविरोधे प्रसक्ते निष्प्रपञ्चवाक्यप्राबल्ये कारणं वक्तव्यम्, सप्रपञ्चवाक्याभावे तु तत्कथनमसङ्गतमेव, अतः सूत्रविरुद्धेयं कल्पनेति भावः। दहरादिवाक्येषु सप्रपञ्चत्वविवक्षायां तात्पर्यग्राहकं लिङ्गमाह-**फलमपीति**।

सप्रपञ्चनिष्प्रपञ्चवाक्यानां भिन्नप्रदेशपठितानां परस्पराकाङ्क्षारहितानां एकवाक्यतापि [1]नास्तीत्याह—**कथं चेति**। सर्वेषां एकब्रह्मसम्बन्धित्वेन आकाङ्क्षामुत्थाप्य एकवाक्यता कल्प्यत इति शङ्कते—**एकनियोगप्रतीतेरिति**। अस्थूलादिवाक्येषु दहरादिवाक्येषु च ब्रह्मोपासननियोगस्तावत् प्रतीयते, तत्र च, लाघवात् ब्रह्मोपासनानियोगः सर्वत्र एक एव कल्पनीय इति एकनियोगप्रतिपादकतया सर्वेषां

---

1. मु. न सम्भवतीत्याह

न—ब्रह्मवाक्येषु नियोगाभावात्। वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनि—इत्येतत् विस्तरेण प्रतिष्ठापितं 'तत्तु समन्वयात्' (ब्र. सू १।१।४) इत्यत्र।

किंविषयश्चात्र नियोगः अभिप्रेयते इति वक्तव्यम्। पुरुषो हि नियुज्यमानः, कुर्विति स्वव्यापारे कस्मिंश्चित् नियुज्यते।

ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति, अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवति, अतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवं अपवर्गकामस्य प्रपञ्चप्रविलयः। यथा च तमसि व्यवस्थितं घटादितत्त्वं अवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमव-

---

ब्रह्मवाक्यानां एकवाक्यता। यद्यपि दर्शपूर्णमासनियोगापेक्षया प्रयाजावान्तरनियोगो भिन्न एव, तथापि उभयत्र अधिकारयुक्तो नियोग एक एवेति, पृथगाख्यातश्रवणेऽपि यथा प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यता कल्प्यते, एवं ब्रह्मवाक्येष्वपि भविष्यति-इति भावः।

ब्रह्मवाक्येषु नियोगाभावादिति। यद्यपि प्रयाजवाक्ये [1]अधिकाराश्रवणेन तदाकाङ्क्षायां दर्शपूर्णमासवाक्येन तस्य एकवाक्यता युक्ता। दहरादिवाक्येषु तु पृथगधिकारश्रवणेन आकाङ्क्षाभावात् न अस्थूलादिवाक्यैरेकवाक्यताकल्पनं न्याय्यम्। 'लाघवात् ब्रह्मसम्बन्धि सर्वमुपासनं एकम्' इति तु अत्यन्तासङ्गतम्, नानाशब्दादिभेदादिति न्यायविरोधात्, अन्यथा, ज्योतिष्टोमदर्शपूर्णमासादिनियोगोऽपि लाघवादेक एव स्यात् इति, वेदान्तानामुपासनापरत्वेऽपि न सर्वत्र नियोगैक्यं वक्तुं शक्यम्, तथापि 'निष्प्रपञ्चं ब्रह्म उपासनाविधिशेषतया बोध्यते' इत्यप्यसंङ्गतमिति दर्शयितुं समन्वयसूत्रोक्तं स्मारितम्।

अपि च 'निष्प्रपञ्चवाक्येषु नियोगोपगमे तस्य विषयः किं साक्षादेव प्रपञ्चप्रविलयः, उत साक्षान्निष्प्रपञ्चोपासनमेव विषयः प्रपञ्चप्रविलयस्तु नियोगविषयफलम्' इति मनसि निधाय विकल्पयति—किंविषयश्चेति। आद्यं शङ्कते—नन्विति। ननु—प्रपञ्चप्रविलयोपगमे तदात्मकस्य ब्रह्मणोऽपि विलयः स्यात्-इति शङ्कायामाह—

---

1. मु. अधिकारिणोऽश्रवणेन

बुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चः न प्रपञ्चस्वभावं ब्रह्म। तेन, नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति।

अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविलयो नाम। किं अग्निप्रतापसंपर्काद्घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः? आहोस्वित् एकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवत् अविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्यः? इति।

तत्र यदि तावत्, विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्यः-इत्युच्येत, स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशः अशक्यविषय एव स्यात्। एकेन च आदिमुक्तेन पृथिव्यादिप्रविलयः कृत इति, इदानीं पृथिव्यादिशून्यं जगद्भविष्यत्।

अथ-अविद्याध्यस्तो ब्रह्मण्येकस्मिन् अयं प्रपञ्चो विद्यया प्रविलाप्यते-इति ब्रूयात्; ततो ब्रह्मैव अविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम्-'एकमेवाद्वितीयं' ब्रह्म 'तत्सत्यं स आत्मा तत्त्वमसि' इति। तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते तया च अविद्या बाध्यते, ततश्च अविद्याध्यस्तः

---

ब्रह्मस्वभावो हीति। प्रपञ्चब्रह्मणोर्हि न स्वरूपैक्यम्, अपि तु ब्रह्मस्वभावः प्रपञ्चः, तत्रारोपित इति यावत्। ब्रह्म स्वभावः—पारमार्थिकं स्वरूपं यस्य प्रपञ्चस्य स तथाभूतः इति विग्रहः।

यदि घृतकाठिन्यप्रविलयवत् प्रपञ्चप्रविलयो विवक्षितः, तदा तस्य पुरुषकृत्यसाध्यतया न नियोगविषयत्वं साक्षात्सम्भवतीत्याह—यदि तावत् विद्यमानोऽयमिति। अविद्याध्यस्तः प्रपञ्चः निष्प्रपञ्चोपासनया विलीयते-इत्युपगमेऽपि, तस्य पुरुषकृत्यसाध्यत्वात् पुरुषकृतिसाध्योपासनैव नियोगविषय इत्यापतति, प्रविलयस्तु फलमिति वक्तव्यम्, तदपि नोपपद्यते, आरोपितप्रपञ्चस्य अधिष्ठानतत्त्वज्ञाननिवर्त्यत्वात्, तत्त्वज्ञानस्य च सिद्धस्वरूपपरैरेव वाक्यैः उपपत्तेः न नियोगपरत्वम्-इति भावः।

सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते । अनावेदिते तु ब्रह्मणि, 'ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं च' इति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायेत ।

ननु आवेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चप्रविलयविषयो वा नियोगः स्यात्, न—निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैव उभयसिद्धेः । रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानं अविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति । न च कृतमेव पुनः क्रियते ।

नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम, सः प्रपञ्चपक्षस्यैव वा स्यात् ब्रह्मपक्षस्यैव वा ।

---

ननु—शाब्दब्रह्मावगममात्रेण प्रपञ्चप्रविलयासिद्धेः शब्दात् ब्रह्मावगत्य ततो निष्प्रपञ्चोपासनं प्रविलयाय भविष्यति-इति शङ्कते-नन्वावेदिते ब्रह्मणीति । न-नि प्रपञ्चब्रह्मात्मत्वावेदनेनैवेति । अयं भावः-येषां मते तावत् शब्दादेव ब्रह्मापरोक्षं तान् प्रति, शाब्देन प्रपञ्चप्रविलयो न स्तीति वक्तुमशक्यम् । परं तु प्रतिबन्धापनयार्थमुपासनमपेक्षितं, न तु तावता उपक्रमाद्यवधारितब्रह्मप्राधान्यानां वेदान्तवाक्यानां नियोगशेषतया ब्रह्मसमर्पकता वक्तुं शक्यते ।

ननु—यन्मते शब्दात् परोक्षमेव ज्ञानं मानससाक्षात्कार एव अविद्यानिवृत्तिद्वारा मोक्षोपयुक्तः, तेषां मते, वेदान्तानां स्वजन्यज्ञानमादाय प्रयोजनवत्त्वासम्भवात्, उपासनाजनिते मानससाक्षात्कारे उपासनाद्वारैवोपयोगो वक्तव्य इति, अवश्यकं उपासनाविधिशेषत्वम्, उपक्रमाद्यवगतमपि ब्रह्मप्राधान्यं निष्प्रयोजनत्वादेव परित्यक्तव्यम्-इति चेत्;

न—तन्मतेऽपि उपासनाजनितसाक्षात्कारगताप्रामाण्यशङ्काविधूननेन[1] शाब्दज्ञानस्य सप्रयोजनत्वात् न उपक्रमाद्यवगतं ब्रह्मप्राधान्यं हातव्यम् । ब्रह्मप्रधानानामपि वाक्यानां उपास्यसमर्पणेनार्थिकमुपासनाविध्युपकारकत्वं न वार्यते, प्रवृत्तिस्तु निर्विशेषवाक्यानां ब्रह्मप्रतिपादनोद्देशेनैव, न तु ब्रह्मविषयकोपासनानियोगप्रतिपत्त्युद्देशेन-इति द्रष्टव्यम् ।

---

1. शङ्काविधूननेनेति उक्तञ्चैतत् कल्पतरौ-वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः । मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते-इति ।

प्रथमे विकल्पे, निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवत् जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चविलये नियोग उच्येत, कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत।

द्वितीयेऽपि, 'ब्रह्मैव अनियोज्यस्वभावं जीवस्य स्वरूपं जीवत्वं त्वविद्याकृतमेव' इति प्रतिपादिते ब्रह्मणि, नियोज्याभावान्नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपि 'इदं पश्य इदमाकर्णय' इतिचैवंजातीयकेषु निर्देशेषु 'प्रणिधानमात्रं कुरु' इत्युच्यते न साक्षात् 'ज्ञानमेव कुरु' इति। ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते कदाचिन्न जायते, तस्मात् तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन् दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते। न च प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थे अन्यथाज्ञानं नियुक्तस्याप्युपपद्यते। यदि पुनः नियुक्तोऽहमिति अन्यथा ज्ञानं कुर्यात्, न तु तत् ज्ञानं ; किं तर्हि मानसी सा

---

यच्च एकदेशिभिरुच्यते—'द्रष्टव्यः' इत्यादावपि दर्शनं विधीयत इति, तदपि न—दर्शनस्य कृत्यसाध्यत्वेनाविधेयत्वात्-इत्याह—द्रष्टव्यादिशब्दा अपीति यद्यपि-लोके 'इदं पश्य' 'इदमाकर्णय' इत्यादौ द्रष्टव्यश्रोतव्यविषयकावधानाख्यो व्यापारो दर्शनश्रवणोपकारको विधेय इति वक्तुं शक्यम्। द्रष्टव्य इत्यत्र तु उपायविधिरपि वक्तुं न शक्यते। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति सन्निध्याम्नातैरेव वाक्यैः उपायविधिलाभात् ; तथापि—श्रवणादिष्वेव प्रवृत्त्यतिशयं जनयितुं दर्शनार्हत्वेन आत्मा स्तूयते। ननु 'सत्यज्ञानानन्दात्मकं ब्रह्म' इति ज्ञानस्य वेदान्तैरेव सिद्धत्वेन तस्याविधेयत्वेऽपि [1]प्रकारान्तरेणब्रह्मज्ञानं विधेयमस्तु-इति पलायमानस्यशङ्कायां, (आह—न चेति)। [2]तत् किं प्रमा उत न ? आद्योऽनुपपन्नः इत्याह—न च प्रमाणान्तरेणेति। द्वितीयमनूद्य दूषयति—यदिपुनरिति। स्वयमेव-

---

1. मु॰ तस्य प्रकारान्तरेण ब्रह्मज्ञानात् नियमोऽस्तु
2. तत् - विधेयं ज्ञानम्

क्रिया। स्वयमेव चेत् अन्यथोत्पद्येत, भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च। न तत् नियोगशतेनापि कारयितुं शक्यते, न च प्रतिषेधशतेनापि वारयितुं शक्यते। नहि तत् पुरुषतन्त्रं, वस्तुतन्त्रमेव हि तत्। अतोऽपि नियोगाभावः।

किंचान्यत्—नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये, यदभ्युपगतं अनियोज्यब्रह्मात्मत्वं जीवस्य तत् अप्रमाणकमेव स्यात्। अथ, शास्त्रमेव अनियोज्यब्रह्मात्मत्वमप्याचक्षीत तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च श्रुतहानिः अश्रुतकल्पना कर्मफलवत् मोक्षस्यादृष्टफलत्वं अनित्यत्वं च - इत्येवमादयो दोषा न केनचित् परिहर्तुं शक्याः।

तस्मात् अवगतिनिष्ठान्येव ब्रह्मवाक्यानि न नियोगनिष्ठानि। अतश्च 'एकनियोगप्रतीतेरेकवाक्यता' इत्ययुक्तम्।

अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे, तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु च असिद्धम्। न हि शब्दान्तरादिभिः प्रमाणैः नियोगभेदेऽवगम्यमाने सर्वत्र एको नियोग इति शक्यमाश्रयितुम्। प्रयाजदर्शपूर्णमासवाक्येषु तु अधिकारांशेनाभेदात् युक्तमेकत्वम्। न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति। न हि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः। नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात्। न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं च एकस्मिन् धर्मिणि युक्तं समावेशयितुम्।

तस्मात् अस्मदुक्त एव विभागः आकारवदनाकारोपदेशानां युक्ततरः-इति ॥ २१ ॥

---

कृतिं विनैव। भ्रान्तिः-अनाहार्यरूपा। तथा च, आहार्यस्य अनाहार्यस्य वा ज्ञानस्य अन्यथाकारस्य अप्रमात्वं तावत् उपगन्तव्यम्। तत्रापि अनाहार्यस्य विधेयत्वमेव न सम्भवति। आहार्यस्य तु विधेयत्वसम्भवेऽपि, न अमृतत्वकामस्तत्राधिकारी, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इतिवचनानुसारेण तत्त्वज्ञानस्यैव अमृतत्वसाधनत्वावगमात्-इति भावः ॥ २१ ॥

इति उभयलिङ्गाधिकरणम्

## ६ प्रकृतैतावत्त्वाधिकरणम्

# प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

---

अयमत्र विषयः—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इति ब्रह्मणो रूपद्वयं प्रस्तुत्य 'तदेतत् मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च' इति वाक्येन भूतत्रयात्मकं ब्रह्मणो रूपं मूर्तमिति निरूप्य, तत्कार्यत्वेन आदित्यमण्डलं निरूपितं 'तस्यैतस्य मूर्तस्यैष रसो य एष तपति' इति वाक्येन। यद्यपि आदित्यमण्डलं पञ्चीकृतपञ्चभूतकार्यं, तथापि, त्रयाणां भूतानां अतिस्पष्टत्वसाम्येन तत्कार्यत्वं आदित्यमण्डलस्य दर्शितम्। 'अथामूर्तं वायुश्चान्तरिक्षं च' इति भूतद्वयं अमूर्तत्वेन प्रतिपाद्य, तत्कार्यत्वेन च आदित्यमण्डलान्तर्वर्तिपुरुषो निरूपितः 'तस्यैतस्यामूर्तस्य एष रसो य एष एतस्मिन् मण्डले पुरुषः' इति। यद्यपि च आदित्यमण्डलान्तर्वर्तिपुरुषश्चेतनो न साक्षात् भूतकार्यं, तथापि तच्छरीरस्य भूतकार्यत्वात् तदभेदोपचारेण सोऽपि भूतकार्यत्वेन निरूप्यते। तच्छरीरमपि यद्यपि पञ्चभूतकार्यं, तथापि अस्पष्टत्वसामान्यात् [1]वाय्वाकाशकार्यत्वमुक्तम्। एवमुक्तं मूर्तामूर्तप्रपञ्चं 'इत्यधिदैवतम्' इति देवतासम्बन्धित्वेनोपसंहृत्य, 'अथाध्यात्मम्' इति शरीरान्तर्गततया मूर्तामूर्तनिरूपणं प्रस्तुत्य, 'इदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाशः'—योऽयं अन्तरात्मन्—शरीरे आकाशः तस्मात् यदन्यत्-इत्यर्थः, इति वाक्येन, शरीरारम्भकं तेजोऽबन्नात्मकं आध्यात्मिकं मूर्तं निरूप्य, तत्कार्यत्वेन चक्षुर्गोलकं निरूपितम्। 'तस्यैतस्य मूर्तस्य एष रसो यच्चक्षुः' इति। गोलकस्य पाञ्चभौतिकत्वेऽपि स्पष्टत्वाभिप्रायं भूतत्रयकार्यत्वम्। 'अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशः' इति शारीरं वायुमाकाशं च अमूर्तत्वेन निरूप्य, तत्कार्यत्वेन लिङ्गशरीरं निरूपितं अस्पष्टत्वसामान्यात् 'तस्यैतस्यामूर्तस्य एष रसो योऽयं दक्षिणेऽक्षन् पुरुषः' इति। लिङ्गशरीरस्य पुरुषपदप्रतिपाद्यता च पुरुषतादात्म्येन। यद्यपि च तत् सर्वशरीरव्यापि, तथापि तदभिमानिनो हिरण्यगर्भस्य आदित्यरूपस्य 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः' इति शास्त्रेण दक्षिणाक्षिस्थानत्वावगमात् तदभेदोपचारेण लिङ्गशरीरमपि [2]दक्षिणाक्षिस्थत्वेन निरूपितम्। तदनन्तरं च, 'तस्य

---

1. वाय्वाकाशेति वाय्वाकाशमात्रेत्यर्थः।
2. मु. दक्षिणाक्षिस्थानत्वेन

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' (बृ. उ. २।३।१) इत्युपक्रम्य पञ्चमहाभूतानि द्वैराश्येन प्रविभज्य अमूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति' (बृ. उ. २।३।६) इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे। न ह्यत्र 'इदं, तत्' इति विशेषितं किंचित् प्रतिषेध्यं उपलभ्यते। इतिशब्देन तु अत्र प्रतिषेध्यं किमपि समर्प्यते, नेतिनेतीति इतिपरत्वात् नञ्प्रयोगस्य। इतिशब्दश्चायं सन्निहितालम्बनः एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते 'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु। सन्निहितं चात्र प्रकरणसामर्थ्यात् रूपद्वयं सप्रपञ्चं ब्रह्मणः तच्च ब्रह्म, यस्यैते द्वे रूपे।

तत्र नः संशय उपजायते–किमयं प्रतिषेधो रूपे रूपवच्च उभयमपि प्रतिषेधति आहोस्विदेकतरम्? यदाप्येकतरं तदापि, किं ब्रह्म प्रतिषेधति रूपे परिशिनष्टि आहोस्वित् रूपे प्रतिषेधति ब्रह्म परिशिनष्टि–इति। तत्र प्रकृतत्वाविशेषात् उभयमपि प्रतिषेधतीति आशङ्कामहे। द्वौ चैतौ प्रतिषेधौ,

---

हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिः यथा पुण्डरीकं यथा सकृद्विद्युत्तम्' इति नानारूपतया लिङ्गशरीरं निरूपितम्। महारजनं-हरिद्रा कुसुम्भं वा, तेन रक्तं वासो माहारजनं, पाण्डु-श्वेतं अविलोमविकारभूतं कम्बलादिकं आविकम्। यो वर्षास्वतिरक्तवर्णतया आविर्भवति कीटविशेषः स इन्द्रगोपः, [1]सकृत् विद्युत्तं-विद्युत्, सकृदुदिता विद्युदित्यर्थः। अमुमर्थं संगृह्णाति— द्वेवावेत्यादिना दर्शयित्वेत्यन्तेन।

प्रकृतत्वाविशेषात् उभयमपि प्रतिषेधतीति। ननु–सर्वासूपनिषत्सु ब्रह्म प्रतिपाद्यते। तस्यापि प्रतिषेधे तत्प्रतिपादनमनर्थकं स्यात्। अतो ब्रह्मप्रतिषेधेन पूर्वपक्षो नोपपद्यत इति चेत्; न–यथा हि, शास्त्रप्रतिपाद्यस्यैव सप्रपञ्चत्वस्य प्रतिषेधमुपेत्य, अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थत्वात् सप्रपञ्चत्वाम्नानं

---

1. मु. इति, विद्युत्तं

द्धिः नेतिशब्दप्रयोगात् । तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यते अपरेण रूपवद्ब्रह्म इति भवति मतिः । अथवा, ब्रह्मैव रूपवत् प्रतिषिध्यते, तद्धि वाङ्मनसातीतत्वादसंभाव्यमानसद्भावं प्रतिषेधार्हम्, न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः, अभ्यासस्तु आदरार्थः–इति ।

एवं प्राप्ते ब्रूमः—

न तावत् उभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात् । कञ्चिद्धि परमार्थं आलम्ब्य अपरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः । तच्च परिशिष्यमाणे कस्मिंश्चिद्भावे अवकल्प्यते । उभयप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत । अपरिशिष्यमाणे चान्यस्मिन्, य इतरः प्रतिषेद्धु-मारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात् तस्यैव परमार्थत्वापत्तेः प्रतिषेधानु-पपत्तिः ।

---

[1]न व्यर्थम्, एवं ब्रह्मप्रतिपादनमपि निषेधवाक्यैकवाक्यतापन्नं अध्यारोपापवादाभ्यां [2]शून्यताप्रतिपादनपरं भविष्यतीति न व्यर्थम् । एवं च पूर्वाधिकरणोक्तार्थदृष्टान्तेन अत्र पूर्वपक्षप्रवर्तनात् तेन सङ्गतिर्द्रष्टव्या । यदि तु निरधिष्ठाननिषेधानुपपत्त्या न शास्त्रस्य शून्यतापरत्वं वक्तुं शक्यमिति निर्बन्धः, तदा ब्रह्मप्रतिषेधेन प्रपञ्चपरि-शेषताऽस्तु । यथा च श्रुतिषु प्रपञ्चप्रतिषेधकवाक्यैकवाक्यतापत्त्या सप्रपञ्चत्वप्रति-पादनं निष्प्रपञ्चत्वप्रतीतिपरमुपेयते, एवं ब्रह्मप्रतिपादनमपि निषेधैकवाक्यतापत्त्या निरात्मताप्रतिपत्तिपरमेव किं न स्यात्-इति पूर्वपक्षिणोऽभिमानः । तदिदमाह– अथवा ब्रह्मैव रूपवदिति ।

अयमत्र सिद्धान्ताभिप्रायः-प्रतिप्रकरणं प्रपञ्चनिषेधावगमेन सप्रपञ्चत्वं अता-त्त्विकमुपेयते, न चैवं ब्रह्मणः प्रतिषेधो भवति । अथातआदेशोनेतिनेतीतिवाक्यं तु यदि स्वरसतो ब्रह्मनिषेधावबोधकं भवेत् तदापि अनेकवाक्यविरोधो मा भूदिति प्रपञ्चनिषेधविषयतयैव सङ्कोचनीयम् [इति । ]

---

1. मु. न व्यर्थमित्युच्यते, एवं
2. आ. शून्यताप्रतिपत्तिपरं

नापि ब्रह्मप्रतिषेध उपपद्यते, 'ब्रह्म ते ब्रवाणि' (बृ. उ. २।१।१) इत्याद्युपक्रमविरोधात् । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' (तै उ. २।६।१) इत्यादिनिन्दाविरोधात् । 'अस्तीत्येवोपलब्धव्यः' (क. उ. ६।१३) इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च । वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते । न हि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परम्' 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१।१ इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनः अभावोऽभिलप्येत । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति हि न्यायः । प्रतिपादनप्रक्रिया त्वेषा 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' (तै. उ. २।४।१) इति । एतदुक्तं भवति—वाङ्मनसातीतं अविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति । तस्मात्, ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्म—इत्यभ्युपगन्तव्यम् ।

---

वस्तुतस्तु इदमपि वाक्यं न स्वारस्येन ब्रह्म प्रतिषेधति-इति प्रतिपादयति—ब्रह्मतेब्रवाणीत्युपक्रमविरोधादिति । ननु-नायं मूर्तामूर्तब्राह्मणे उपक्रमः, अपि तु अजातशत्रुब्राह्मणे । अतः, कथं तदनुसारेण, एतस्य ब्रह्मप्रतिषेधे तात्पर्यं नास्तीति वक्तुं शक्यम्-इति चेत्, उच्यते—अजातशत्रुब्राह्मणे हि उपसंहारो भवति 'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इति, तदनन्तरं च शिशुब्राह्मणं प्राणोपासनाविषयम्, अनन्तरं च मूर्तामूर्तब्राह्मणं, तदन्ते च पुनः पठ्यते 'अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इति । अतोऽयमर्थोऽवगम्यते—अजातशत्रुब्राह्मणे वक्तव्यत्वेन प्रस्तुतस्य ब्रह्मणो यत् सत्यस्यसत्यत्वं उक्तं, तत्र प्रथमसत्यशब्दोदितप्राणालम्बनमुपासनं प्रसङ्गात् शिशुब्राह्मणे निरूप्य, यत् परमसत्यत्वं ब्रह्मणो द्वितीयेन सत्यपदेन उपक्षिप्तं तत् प्रपञ्चप्रतिषेधेन प्रदर्शयितुं मूर्तामूर्तब्राह्मणम्—इति । अतः, तदन्तर्गतेन नेतिवाक्येन ब्रह्मप्रतिषेधो नोपपद्यत इति ।

उपक्रमपर्यालोचनया श्रुत्यन्तरपर्यालोचनया च ब्रह्मप्रतिषेधासम्भवमुक्त्वा, प्रकृतपरामर्शकेतिशब्दपर्यालोचनयापि ब्रह्मप्रतिषेधो न सम्भवतीति, सौत्रप्रकृतशब्द-

तदेतदुच्यते—प्रकृतैतावत्त्वं हि प्रतिषेधतीति । प्रकृतं यत् एतावत्-इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं, तत् एष शब्दः प्रतिषेधति । तद्धि प्रकृतं प्रपञ्चितं च पूर्वस्मिन् ग्रन्थे अधिदैवतमध्यात्मं च । तज्जनितमेव च वासनालक्षणमपरं रूपं अमूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं महारजनाद्युपमाभिर्दर्शितम्, अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदेतत् सप्रपञ्चं ब्रह्मणो रूपं, संनिहितालम्बनेन इतिकरणेन, प्रतिषेधकं नञं प्रति उपनीयते इति गम्यते । ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन् ग्रन्थे, न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायां इदमुपक्रान्तम् 'अथात आदेशो नेति नेति' इति । तत्र, कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदं इति निर्णीयते । तदास्पदं हीदं समस्तं कार्यं नेतिनेतीति प्रतिषिद्धम् । युक्तं च, कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेतिनेतीति प्रतिषेधनं, न तु ब्रह्मणः, सर्वकल्पनामूलत्वात् ।

न चात्र इयमाशङ्का कर्तव्या-कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति ? 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'—इति । यतः नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय च, इति निरवद्यम् ।

---

सूचितमर्थं विशदयति—तदेतदुच्यत इति । ननु—'तस्य हैतस्य रूपम्' इति वाक्येन लिङ्गशरीरस्य नानारूपत्वमुच्यते, तत् कथम्? न हि लिङ्गशरीरे उद्भूतं किञ्चिद्रूपमस्ति, अत आह—वासनालक्षणमिति । नीलपीतादिगोचरजाग्रदनुभवजनिता लिङ्गशरीरे वासना विद्यन्ते, ता एव 'यथा माहारजनं वासः' इत्यादिना उपमीयन्ते इति भावः ।

लोकप्रसिद्धं त्विदमिति । [1]यद्यपि–मूर्तामूर्तात्मकस्य प्रपञ्चस्य स्वरूपेण लोकप्रसिद्धत्वेऽपि श्रुतिं विना न [2]ब्रह्मरूपतया निर्णयःसम्भवति, तथापि - कार्यस्य

---

1. यद्यपीत्यादिशङ्कासमाधानेन श्रुतप्रकाशिकोक्तं भाष्यदूषणं निरस्तं वेदितव्यम्
2. ब्रह्मरूपतया—ब्रह्मणोरूपमिति ।

द्वौ चैतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। यद्वा-पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति उत्तरो वासनाराशिम्। अथवा—'नेति नेति' इति वीप्सेयं इतीति। यावत् किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः। परिगणितप्रतिषेधे हि क्रियमाणे, यदि नैतद्ब्रह्म, किमन्यत् ब्रह्म इति जिज्ञासा स्यात्। वीप्सायां तु सत्यां, समस्तस्य विषयजातस्य प्रतिषेधात् अविषयः प्रत्यगात्मा ब्रह्मेति, जिज्ञासा निवर्तते। तस्मात् प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति, परिशिनष्टि ब्रह्म-इति निर्णयः।

इतश्च एष एव निर्णयः। यतः ततः-प्रतिषेधात् भूयो ब्रवीति अन्यत् 'परमस्ति' इति। अभावावसाने हि प्रतिषेधे क्रियमाणे, किं परमस्तीति ब्रूयात्।

तत्र एषा अक्षरयोजना—नेतिनेतीति ब्रह्म आदिश्य तमेवादेशं पुनर्निर्वक्ति। नेतिनेतीत्यस्य कोऽर्थः। न ह्येतस्मात्-ब्रह्मणो व्यतिरिक्त-

---

कर्त्रुपादानापेक्षायां, लाघवात् उपादानकर्त्रोः एकत्वेनैव सम्भावितत्वात् तावन्मात्रेण सृष्ट्यादिवाक्यैरनुवादे सति निर्णीतता भवतीति, सम्भावनासिद्धं मूर्तामूर्तप्रपञ्चस्य ब्रह्मरूपत्वं द्वेवावेतिवाक्येनानूद्यते निषेध्यत्वाय जर्तिलगवीधुकयवागूहोमवाक्यवत् इति भावः।

किमन्यद्ब्रह्मेतिजिज्ञासा स्यादिति। प्रतिषिद्धात् परिगणितात्, अन्यत् यत् अवशिष्टं अप्रतिषिद्धं तत् किं परमार्थत एव ब्रह्मणो रूपम्—इति शङ्का स्यात्। वीप्सया सर्वप्रपञ्चनिषेधे तु, जडस्य विषयस्य अनृतत्वात् तद्विनिर्मुक्त एव प्रत्यगात्मेति निर्णये न प्रागुक्तशङ्का उन्मिषतीत्यर्थः।

'ततो ब्रवीति च भूयः' इति सूत्रशेषं, नह्येतस्मादितिवाक्यशेषाभिप्रायेण अथनामधेयमितिवाक्यशेषाभिप्रायेण च व्यवस्थया योजयति—यत इत्यादिना। नह्येतस्मादित्यादिवाक्यस्य यदा 'एतस्मात्—अथातइतिवाक्यप्रस्तुतात्[1] अन्यत् जडजातं न ह्यस्ति इति कृत्वा नेतीत्यादेशः, परं तु ब्रह्मास्ति' इति योजना, तदा, ततोब्रवीतीतिसूत्रशेषः नह्येतस्मादिति वाक्यविषयः। यदा तु नह्येतस्मादितिवाक्यस्य

---

1. प्रस्तुतात् आदिश्यमानत्वेनोपस्थापितात्

मस्तीत्यतो नेतिनेतीत्युच्यते, न पुनः स्वयमेव नास्ति-इत्यर्थः । तच्च दर्शयत्यन्यत् परं अप्रतिषिद्धं ब्रह्म अस्तीति ।

यदा पुनः एवं अक्षराणि योज्यन्ते—न ह्येतस्मात्—'इति न इति न' इति प्रपञ्चप्रतिषेधरूपात् आदेशनात् अन्यत् परं आदेशनं ब्रह्मणोऽस्तीति, तदा, 'ततो ब्रवीति च भूयः' इत्येतत् नामधेयविषयं योजयितव्यम्-'अथ नामधेयम्, सत्यस्य सत्यमिति, प्राणा वै सत्यं तेषामेष सत्यम्' (बृ. उ. २।३।६) इति हि ब्रवीति—इति । तच्च, ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति । अभावावसाने तु प्रतिषेधे, किं 'सत्यस्य सत्यम्' इत्युच्येत । तस्मात् ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसानः इत्यध्यवस्यामः ॥ २२ ॥

## तदव्यक्तमाह हि ॥ २३ ॥

यत् प्रतिषिद्धात् प्रपञ्चजातात् अन्यत् परं ब्रह्म, तदस्ति चेत्, कस्मान्न गृह्यत इति । उच्यते—तत् अव्यक्तं अनिन्द्रियग्राह्यम्, सर्वदृश्यसाक्षित्वात् । आह ह्येवं श्रुतिः 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः तपसा कर्मणा वा' (मु. उ. ३।१।८) 'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते' (बृ. उ. ३।९।२६) 'यत्तदद्रेश्यमग्राह्यम्, (मु. उ. १।१।६) 'यदा ह्येवैष एतस्मिन्न-

---

'एतस्मात् इतिनेत्येवंरूपादादेशात् अन्यत् परं[1] आदेशनं नास्ति' इति योजना, तदा, ततोब्रवीतीति सूत्रशेषः अथनामधेयमित्यादिश्रुतिवाक्यशेषविषयो द्रष्टव्यः-इति व्यवस्था ॥ २२ ॥

ननु-यदि प्रतिषिद्धसर्वप्रपञ्चं ब्रह्म, तर्हि 'सन् घटः' इत्यादिप्रतीतिषु सप्रपञ्चतया कथं सद्रूपब्रह्मावभासः, युक्तं तु निष्प्रपञ्चतयैव भानम्—इति, सूत्रव्यावर्त्यां शङ्कां आह—यत् प्रतिषिद्धादिति । यद्यपि 'सन् घटः' इति भासते ब्रह्म, तथापि, अविद्यादिदोषवशात् तत् सप्रपञ्चतया भासते, निष्प्रपञ्चं तु तत्स्वरूपं अविद्यादिदोषरहितान्तःकरणेनावगन्तव्यम्, अतः तत् अविद्यादिदोषवतां व्यक्तं न भवति-इति परिहारतात्पर्यमाह—उच्यत इति । नान्यैर्देवैः-नान्यैरिन्द्रियैः । यदा

---

1. परम्-उत्कृष्टम्

दृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' (तै. उ. २।७।१) इत्याद्या। स्मृतिरपि 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते, (भ. गी. २।२५) इत्याद्या। ॥ २३ ॥

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपि च एनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं च भक्तिध्यानप्रणिधानम्। कथं पुनरवगम्यते संराधनकाले पश्यन्तीति। प्रत्यक्षानुमानाभ्यां-श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः—

'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' (क. उ. ४।१) इति।
'ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः'
(मु. उ. ३।१।८) इति चैवमाद्या।

---

ह्येवैष इति। दृश्यं-बाह्यं घटपटादिकं, निरुक्तं-शब्दैकगम्यं धर्माधर्मादिकं, आत्म्यं-अहमिति आत्मतादात्म्येन गृह्यमाणं स्थूलसूक्ष्मशरीरं, निलयनं-सर्वकार्यलयाधारभूतं अव्यक्तं, वैर्विनिर्मुक्ते अभयं यथा भवति तथा प्रतिष्ठां - साक्षात्कारं लभते इत्यर्थः ॥ २३ ॥

संराधनं च भक्तिध्यानप्रणिधानमिति। भक्तिः-माहात्म्यज्ञानपूर्वकस्नेहाख्यः अन्तःकरणवृत्तिविशेषः, ध्यानं अवधानेन प्रत्ययावृत्तिः, ताभ्यां परमात्मनि चित्तस्य प्रणिधानं स्थापनम्।

खानि-छिद्राणि—इन्द्रियाणि, पराञ्चि-बाह्यविषयतया, व्यतृणत्- हिंसितवान् स्वयंभूः-परमात्मा, तस्मात् सर्वोऽपि जन्तुः पराङ्-बाह्यप्रधान एव सन्, पश्यति, न अन्तरात्मानं पश्यति। धीरत्वमेव विशदयति आवृत्तचक्षुरिपि। निगृहीतेन्द्रिय इति यावत्।

ज्ञानस्य-अन्तःकरणस्य प्रसादः-विवेकाविर्भावः, तेन विशुद्धसत्त्वः-न्यक्कृतरजस्तमोवृत्त्या सत्त्वांशप्रधानो भवति यदा पुरुषः, ततः ध्यायमानो निष्कलं पश्यति।

स्मृतिरपि

'यं विनिद्रा जितश्वासाः [सत्वस्थाः] (संतुष्टाः) संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानाः तस्मै योगात्मने नमः ॥(म.भा.शा. ४७.५५)
'योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' (म. भा. उ. ४६. १) इति चैवमाद्या ॥ २४ ॥

ननु संराध्यसंराधकभावाभ्युपगमात् परापरात्मनोरन्यत्वं स्यादिति-नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यथा प्रकाशाकाशसवितृप्रभृतयः अङ्गुलिकरकोदकप्रभृतिषु कर्मसु उपाधिभूतेषु सविशेषा इव अवभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति, एवं उपाधिनिमित्त एवायं आत्मभेदः, स्वतस्तु ऐकात्म्यमेव । तथा हि वेदान्तेषु अभ्यासेन असकृत् जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥२५॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

अतश्च—स्वाभाविकत्वादभेदस्य अविद्याकृतत्वाच्च भेदस्य, विद्यया अविद्यां विधूय जीवः परेण अनन्तेन - प्राज्ञेनात्मना एकतां गच्छति ।

---

युञ्जानाः—ध्याननिष्ठाः यं ज्योतिः पश्यन्ति तस्मै योगात्मने-योगगम्याय नमः ॥ २४ ॥

जीवब्रह्मणोः औपाधिकानृतभेदाभ्युपगमात् संराध्यसंराधकभाव उपपद्यते—इत्यभिप्रायेण सूत्रं योजयति—यथा प्रकाशेति । सूत्रे प्रकाशादिवदिति षष्ठ्यन्ताद्वतिः । [1]प्रकाशः—आरोपितरूपेणावभासः । अवैशेष्यं—आरोपितविशेषरूपस्य परमार्थतोऽभावः । कर्म-उपाधिः । तथा चायमर्थः-प्रकाशादेरिव उपाधौ ब्रह्मणोऽपि आरोपितरूपेण प्रकाशः अवैशेष्यं च उपपद्यते । इयं च व्यवस्था तत्त्वमस्याद्यभ्यासात् [2]उपगन्तव्या-इति ॥ २५ ॥

सूत्रे अनन्तेनेत्येतदनन्तरं 'जीवस्य' 'एकता' इतिपदाध्याहारेण सूत्रं योजयति—अतश्चेत्यादिना ॥ २६ ॥

---

1. प्रकाशः—प्रकाशश्चेत्यत्र प्रकाशशब्दार्थः ।
2. आ. अवगन्तव्या

तथाहि लिङ्गम्—'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३।२।९) 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४।४।६) इत्यादि ॥ २६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये। क्वचित् जीवप्राज्ञयोर्भेदो व्यपदिश्यते—'ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मु. उ. ३।१।८) इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च, 'परात्परं पुरुषमुपैति दिव्यम्' (मु. उ. ३।२।८) इति गन्तृगन्तव्यत्वेन, 'यः सर्वाणि भूतान्यन्तरो यमयति' (बृ. उ. ३।७) इति नियन्तृनियन्तव्यत्वेन। क्वचित्तु तयोरेवाभेदो व्यपदिश्यते 'तत्त्वमसि' (छा. उ. ६।८।७) 'अहं ब्रह्मास्मि' (बृ. उ. १।४।१० 'एष त आत्मा सर्वान्तरः' (बृ. उ. ३।४।१) 'एष त आत्मान्तर्याम्यमृतः' (बृ.उ. ३।७।३) इति। तत्र एवमुभयव्यपदेशे सति, यद्यभेद एवैकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात्। अतः उभयव्यपदेशदर्शनात् अहिकुण्डलवत् अत्र तत्त्वं भवितुमर्हति। यथा अहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनीति तु भेदः एवमिहापीति ॥ २७॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथवा-प्रकाशाश्रयवत् एतत् प्रतिपत्तव्यम्। यथा प्रकाशः सावित्रः

---

जीवब्रह्मणोर्भेदाभेदविषयश्रुती भेदाभेदयोः पारमार्थिकत्वमुपेत्यैव व्याख्येये। यथा एकस्याहेः, अहित्वेनाभेदः तस्यैव कुण्डलावस्थापन्नस्य प्रांशुत्वावस्थापन्नात् भेदश्च पारमार्थिक एव, एवं ब्रह्मणोऽपि चैतन्यरूपेणाभेदः जीवत्वेश्वरत्वरूपेण भेदश्च पारमार्थिकः-इति केचित् वदन्ति। तन्मतमाह—तस्मिन्नेव संराध्यसंराधकभावे इति ॥ २७ ॥

पूर्वसूत्रे एकस्यैव चैतन्यस्य अवच्छेदकभेदात् भेदाभेद इत्युक्तम्। अनेन तु-जीवचैतन्यमीश्वरचैतन्यं च परमार्थतो भिन्नमेव, अभेदनिर्देशस्तु चैतन्यरूपत्व-[2]साजात्येन द्रष्टव्यः, यथा आदित्यस्य तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्स्वरूपसाजात्येन अभेदनिर्देशः-इति प्रतिपाद्यते इत्याह—अथवेति ॥ २८ ॥

---

1. आ 'एव' नास्ति
2. मु. सामान्येन

तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात्, अथ च भेदव्यपदेशभाजौ भवतः, एवमिहापीति ॥ २८ ॥

## पूर्ववद्वा ॥ २९ ॥

यथा वा पूर्वमुपन्यस्तं 'प्रकाशादिवच्चावैशेष्यम्' इति, तथैवैतत् भवितुमर्हति। तथा हि अविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते। यदि पुनः परमार्थत एव बद्धः कश्चिदात्मा अहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन वा एकदेशभूतः अभ्युपगम्येत, ततः, पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यं प्रसज्येत। न चात्र उभावपि भेदाभेदौ श्रुतिः तुल्यवत् व्यपदिशति। अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदति अर्थान्तरविवक्षया। तस्मात्, प्रकाशादिवच्चावैशेष्यं इत्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

इतश्च एष एव सिद्धान्तः। यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रं 'नान्योऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) इत्येवमादि। 'अथात आदेशो नेति नेति' (बृ. उ. २।३।६) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ. उ. २।५।१९) इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणात् ब्रह्ममात्रपरिशेषाच्च एष एव सिद्धान्त इति गम्यते ॥ ३० ॥

---

पारमार्थिकभेदावलम्बनयोः द्वयोरपि पक्षयोः श्रुतिस्मृतिविरुद्धत्वात् 'औपाधिकोऽनृतो भेदः अभेदस्तु पारमार्थिकः' इति या प्रकाशादिवच्चावैशेष्यमिति सूत्रेण व्यवस्था दर्शिता सैव समीचीना-इति सूत्रार्थमाह—**यथा वा पूर्वमिति।** **प्रकाशाश्रयन्यायेन वा एकदेशभूत इति।** यदा प्रभा आदित्येन संसृष्टतया आदित्यैकदेश इव भवति, एवं जीवोऽपि नियन्तव्यत्वादिना तेन संसृष्टः तदेकदेश इव-इति भावः २९ ॥

न केवलं तत्त्वमस्याद्यभेदाभ्यासादेव पारमार्थिको जीवब्रह्मणोरभेदः, अपि तु, निषेधकशास्त्रादपि तथैवावधार्यते-इति सूत्रं व्याचष्टे—**इतश्चैष एव सिद्धान्त इति** ॥ ३० ॥

इति प्रकृतैतावत्त्वाधिकरणम्।

## ७ पराधिकरणम्

# परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

यदेतत् निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितं अस्मात्परं अन्यत्तत्त्वमस्ति नास्तीति, श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्धि वाक्यानि आपातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परं अन्यत्तत्त्वं प्रतिपादयन्तीव । तेषां हि परिहारं अभिधातुं अयमुपक्रमः क्रियते ।

परं अतः—ब्रह्मणः अन्यत्तत्त्वं भवितुमर्हति । कुतः ? सेतुव्यपदेशात् उन्मानव्यपदेशात् संबन्धव्यपदेशात् भेदव्यपदेशाच्चेति ।

सेतुव्यपदेशस्तावत्—'अथ य आत्मा स सेतुर्विधृतिः' (छा. उ. ८।४।१) इति आत्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति । सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः । इह तु

---

पूर्वाधिकरणेन सङ्गतिमाह—यदेतन्निरस्तेति । ननु—'सर्वद्वैतविवर्जित सर्वाधिष्ठानभूतं परमात्मतत्त्वम्' इति सकलश्रुतिस्मृतितदनुगुणन्यायैः व्यवस्थापितम्, तथा च, ततः परमपि किञ्चित्तत्त्वमस्तु-इति शङ्कायाः कथमुन्मेषः-इत्याशङ्क्याह—कानिचिद्वाक्यानीति । सेत्वादिव्यपदेशानां ब्रह्मणि गतिं वक्तुं अयमारम्भ इति भावः । यद्यपि—'तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' इति मन्त्रगतस्य सेतुशब्दस्य ब्रह्मणि गतिः व्युत्पादितैव, तेनैव न्यायेन[1] 'एष सेतुर्विधरणः' इत्यादावपि सेतुपदगतिः वक्तुं शक्यत एव, तथापि—तस्मिन्नधिकरणे सेतुपदस्य ब्रह्मण्येव गतिप्रतिपादनं नावश्यकम्, पूर्ववाक्यप्रस्तुते इतरवाग्विमोकपूर्वके आत्मज्ञानेऽपि तद्वृत्तेरुपपत्तेः । अतः, अस्मिन्नधिकरणे ब्रह्मणोऽन्यत्र नेतुमशक्यानां सेतुपदानां या गतिः वक्तव्या सा तत्रानुदिता-इत्येव वक्तुं शक्यम् । उन्मानादिव्यपदेशानां च तत्र गतिर्नोक्ता । अतः सेतून्मानसम्बन्धभेदव्यपदेशानां 'ब्रह्मणोऽन्यदपि किञ्चित्तत्त्वमस्ति' इति सूचयतां गतिं वक्तुं इदमधिकरणमारम्भणीयम् । जलसन्तानविच्छेदकरे मृद्दार्वादिप्रचय इति । जलगतिविच्छेदहेतुभूते संस्थानविशेषेण परागर्वाक्तीरसंसृष्टतया स्थिते मृदादिसमुदाय इत्यर्थः । जाङ्गलं-परतीरगतं भूविशेषम् ।

---

1. 'एष सेतुर्विधरणः' इत्यादावपीति श्रुत्यन्तरेऽपीत्यर्थः ।

सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिव आत्मसेतोरन्यस्य वस्तुनः अस्तित्वं गमयति । 'सेतुं तीर्त्वा' (छा. उ. ८।४।२) इति च तरतिशब्द-प्रयोगात् । यथा लौकिकं सेतुं तीर्त्वा जाङ्गलं असेतुं प्राप्नोति एवं आत्मानं सेतुं तीर्त्वा अनात्मानमसेतुं प्राप्नोतीति गम्यते ।

उन्मानव्यपदेशश्च भवति-तदेतद्ब्रह्म चतुष्पात् अष्टाशफं षोडशकलम्-इति । यच्च लोके उन्मितं—एतावदिदमिति परिच्छिन्नं कार्षापणादि ततोऽ-न्यद्वस्तु अस्तीति प्रसिद्धम्, तथा, ब्रह्मणोपि उन्मानात् ततोऽन्येन वस्तुना भवितव्यमिति गम्यते ।

तथा सम्बन्धव्यपदेशोऽपि भवति 'सता सोम्य तदा संपन्नो भवति' (छा. उ. ६।८।१) इति, 'शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तः' (बृ. उ. ४।३।२१) इति च । मितानाञ्च मितेन संबन्धो दृष्टः, यथा नराणां नगरेण । जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ । अतः ततः परं अन्यत्तत्त्वमस्तीति गम्यते ।

भेदव्यपदेशश्च एतमेवार्थं गमयति । तथाहि—'अथ य एषोऽन्त-रादित्ये हिरण्मयः पुरुषो दृश्यते' (छा. उ. १।६।६) इति आदित्याधारमी-श्वरं व्यपदिश्य, ततो भेदेन अक्ष्याधारमीश्वरं व्यपदिशति 'अथ य एषो-ऽन्तरक्षिणि पुरुषो दृश्यते' (छा. उ. १।७।५) इति । अतिदेशं चास्य अमुना रूपादिषु करोति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' (छा. उ. १।७।५) इति । सावधिकं चेश्व-रत्वं उभयोर्व्यपदिशति—'ये चामुष्मात् पराञ्चो लोकाः तेषां चेष्टे देव-

---

उन्मानं-कैश्चिदवयवैरवच्छिन्नतया प्रतिपादनम् । चतुष्पादिति । गवादीनां चतुर्षु पादेषु प्रत्येकमग्रतो द्वौ पश्चाच्च द्वौ खुराविति षोडशकलत्वम्, खुरद्वय-मेकैकं शफमिति अष्टाशफत्वं च, अवयवविशेषैः प्रसिद्धम्, तेभ्यश्च गवादिभ्योऽ-न्यदपि तत्त्वं प्रसिद्धम् । एवं ब्रह्मण्यपि चतुष्पात् अष्टाशफं षोडशकलं इति व्यप-देशात् तस्य सावयवत्वम्, ततश्चान्यत् किञ्चित्तत्त्वमस्ति-इति उपेतव्यम् । कार्षा-पणादीति । वराटकानामशीत्या एकः पणः, षोडश पणाः कार्षापणम् ।

कामानां च' (छा. उ. १।६।८) इत्येकस्य, 'ये चैतस्मादर्वाञ्चो लोकाः तेषां चेष्टे मनुष्यकामानां च' (छा. उ. १।७।६) इत्येकस्य, यथा इदं मागधस्य राज्यं इदं वैदेहस्येति ॥ ३१ ॥

एवं एतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्ति–इत्येवं प्राप्ते, प्रतिपाद्यते—

## सामान्यात्तु ॥ ३२ ॥

तुशब्देन, प्रदर्शितां प्राप्तिं निरुणद्धि। न ब्रह्मणोऽन्यत् किंचित् भवितुमर्हति, प्रमाणाभावात्। न हि अन्यस्यास्तित्वे किंचित् प्रमाणं उपलभामहे। सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्, अनन्यत्वं च कारणात् कार्यस्य। न च ब्रह्मव्यतिरिक्तं किंचिदजं संभवति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते।

ननु सेत्वादिव्यपदेशा ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्।

नेत्युच्यते। सेतुव्यपदेशस्तावत् न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते। 'सेतुरात्मा' इति ह्याह, न 'ततः परमस्ति' इति। तत्र, परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत। न चैतत् न्याय्यम्। हठो हि अप्रसिद्धकल्पना। अपि च - सेतुव्यपदेशात् आत्मनो लौकिकसेतुनिदर्शनेन सबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयतापि

---

सेतुव्यपदेशबलात्, ब्रह्मातिक्रम्य प्राप्तव्यं अन्यत्तत्त्वं अस्तीति गम्यते। ब्रह्मणश्चतुष्पात्त्वादिव्यपदेशबलात् ततोऽधिकं किञ्चिद्वस्तु अस्तीति गम्यते। जीवब्रह्मणोस्सम्बन्धाभिधानात् ब्रह्मणोऽन्यत् जीवाख्यं तत्त्वं अस्तीति गम्यते। अन्तरादित्यवाक्यपर्यालोचनया ब्रह्मणोऽन्यत् अक्ष्याधारं किञ्चित्तत्त्वं अस्तीति गम्यते। अतः अद्वितीयंब्रह्मतत्त्वमितिसिद्धान्तो न सङ्गच्छते-इति पूर्वपक्षः ॥ ३१ ॥

सेतुसामान्यात् ब्रह्मणि सेतुशब्दोपपत्तेः न अनेकश्रुतिसिद्धं ब्रह्मणोऽद्वितीयत्वं हातव्यमिति, सूत्रं योजयन् सिद्धान्तमाह—तुशब्देनेत्यादिना।

प्रासङ्क्ष्येत। न चैतत् न्याय्यम्, अजत्वादिश्रुतिविरोधात्। सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्तः इति श्लिष्यते। जगतः तन्मर्यादानां च विधारकत्वं सेतुसामान्यं आत्मनः। अतः, सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते। 'सेतुं तीर्त्वा' इत्यपि तरतिः अतिक्रमासंभवात् प्राप्नोत्यर्थे एव वर्तते। यथा-व्याकरणं तीर्ण इति प्राप्त इत्युच्यते नातिक्रान्तः, तद्वत् ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

यदप्युक्तं उन्मानव्यपदेशात् अस्ति परं इति,

तत्राभिधीयते—उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः। किमर्थस्तर्हि? बुद्ध्यर्थः, उपसनार्थ इति यावत्। चतुष्पात् अष्टाशफं षोडशकलं इत्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति विकारद्वारेण ब्रह्मग उन्मानकल्पनैव क्रियते। न हि अविकारेऽनन्ते

---

ननु-विधारकत्वगुणेन सेतुश्रुतेर्ब्रह्मण्युपपत्तावपि, सेतुंतीर्त्वेति ब्रह्मणोऽतिक्रमणीयत्वमवगम्यते, अतः, कथं तस्यापरिच्छिन्नत्वम्-इत्याशङ्क्याह - तरतिः अतिक्रमासम्भवादिति। आनन्त्यश्रुतिविरोधात् अतिक्रमणीयत्वानुपपत्तिः इति भावः। प्राप्तिरपि सगुणस्य देशविशेषोपाधिकभेदनिबन्धना, निर्विशेषे तु प्राप्तिश्रवणं अभेदाभिप्रायमेवेति द्रष्टव्यम् ॥ ३२ ॥

चतुष्पात् अष्टाशफं षोडशकलं इति ब्रह्मणि कल्पना विकारद्वारा, उपासनार्थेति श्रुतिवशादेवावगम्यते। तथा हि—चतस्रो दिशः प्राच्यादयः चतस्रः कलाः इत्युक्त्वा 'एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम, स य एतमेवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते' इति, पृथिव्यन्तरिक्षद्युसमुद्राश्चतस्रः कलाः इत्युक्त्वा 'एष वै सोम्य चतुष्कलः पादो ब्रह्मणः अनन्तवान्नाम, स य एतमेवं विद्वान्....अनन्तवानित्युपास्ते' इति, अग्निसूर्यचन्द्रविद्युतश्चतस्रः कलाः इत्युक्त्वा 'एष वै सोम्य ज्योतिष्मान्नाम, स य एतमेवं विद्वान्....ज्योतिष्मानित्युपास्ते' इति, प्राणचक्षुश्श्रोत्रमनांसि चतस्रः कलाः इत्युक्त्वा 'एष वै सोम्य आयतनवान्नाम, स य एतमेवं विद्वान्....आयतनवानित्युपास्ते' इति च विकारद्वारकचतुष्पात्त्वेनैवोपास्यत्वस्य श्रवणात्।

ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम्, मन्दमध्यमोत्तमबुद्धित्वात् पुंसामिति ।

पादवत् । यथा मनआकाशयोः अध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोः चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते चत्वारश्च अग्न्यादय आकाशसंबन्धिनः आध्यानाय, तद्वत् । अथवा-पादवदिति-यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते, न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते, क्रयविक्रये परिमाणानियमात्, तद्वत् इत्यर्थः ॥ ३३ ॥

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

इह सूत्रे, द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारोऽभिधीयते । यदप्युक्तं संबन्धव्यपदेशात् भेदव्यपदेशाच्च परं अतः स्यात्-इति, तदप्यसत् । यतः एकस्यापि स्थानविशेषापेक्षया एतौ व्यपदेशौ उपपद्येते ।

संबन्धव्यपदेशे तावत् अयमर्थः—बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्य उपाध्युपशमे य उपशमः, सः परमात्मना संबन्ध इति उपाध्यपेक्षयैव उपचर्यते, न परिमितत्वापेक्षया । तथा भेदव्यपदेशोऽपि

---

पादवदिति श्रौतार्थनिदर्शनाभिप्रायेण व्याचष्टे—यथा मनआकाशयोरिति । 'मनो ब्रह्मेत्युपासीत, इत्यध्यात्मम्, अथाधिदैवतम्—आकाशो ब्रह्मेति.... तदेतत् चतुष्पाद्ब्रह्म' इत्युपक्रम्य, अध्यात्मं वाक्प्राणचक्षुश्श्रोत्राणि चत्वारः पादा अधिदैवतं अग्निवाय्वादित्यदिशश्चत्वारः पादा आम्नाताः । लौकिकनिदर्शनाभिप्रायेण व्याचष्टे—अथवेति ॥ ३३ ॥

सुप्तौ सतासोम्येतिनिर्दिश्यमाना सत्सम्पत्तिः अभेदरूपा, न भेदघटितसम्बरूपा, येन अतिरिक्ततत्त्वास्तित्वशङ्का स्यात् । अभेदस्य स्वाभाविकत्वेऽपि सुप्तावेव विशिष्य निर्देशस्तु, भेदोपाधेस्तदानीमुपशान्तत्वात्-इत्याह—सम्बन्धव्यपदेशे तावत् अयमर्थ इति । 'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि' इत्यादिनाऽवगम्यमानो भेदोऽपि मण्डलाद्युपाधिनिबन्धन इति प्रतिपादयति—तथा भेदव्यपदेशोऽपीति ॥ ३४ ॥

ब्रह्मणः उपाधिभेदापेक्षया उपचर्यते, न स्वरूपभेदापेक्षया। प्रकाशादिवत् इति उपमोपादानम्। यथा एकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वा उपाधियोगादुपजातविशेषस्य उपाध्युपशमात् संबन्धव्यपदेशो भवति उपाधिभेदाच्च भेदव्यपदेशः, यथा वा सूचीपाशाकाशादिषु उपाध्यपेक्षयैव एतौ संबन्धभेदव्यपदेशौ भवतः, तद्वत् ॥ ३४ ॥

## उपपत्तेश्च ॥ ३५ ॥

उपपद्यते चात्र ईदृश एव संबन्धो नान्यादृशः। 'स्वमपीतो भवति' (छा. उ. ६।८।१) इति हि स्वरूपसंबन्धमेनमामनन्ति, स्वरूपस्य चानपायित्वात् न नरनगरन्यायेन संबन्धो घटते। उपाधिकृतस्वरूपतिरोभावात्तु स्वमपीतोभवतीत्युपपद्यते। तथा, भेदोऽपि नान्यादृशः संभवति, बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात्। तथाच श्रुतिः एकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशं उपपादयति—'योऽयं बहिर्धा पुरुषादाकाशः' 'योऽयमन्तः पुरुष आकाशः' 'योऽयमन्तर्हृदय आकाशः' (छा. उ. ३।१२ ७-९) इति ॥ ३५॥

## तथाऽन्यप्रतिषेधात् ॥ ३६ ॥

एवं सेत्वादिव्यपदेशान् परपक्षहेतून् उन्मथ्य, संप्रति स्वपक्षं हेत्वन्तरेण उपसंहरति। तथा अन्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते। तथा हि—'स एवाधस्तात्' 'अहमेवाधस्तात्' 'आत्मैवाधस्तात्' (छा. उ. ७।२५।१२), 'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ. उ. २।४।६), 'ब्रह्मैवेदं सर्वम्' (मु. उ. २।२।११) 'आत्मैवेदं सर्वम्' (छा. उ. ७।२५।२), 'नेह नानास्ति किंचन' (बृ. उ. ४।४।१९),

---

सतासोम्येति अभेदप्रतिपादनमेव-इत्यत्र उपपत्तिमाह-स्वमपीतो भवतीति। भेदनिर्देशोऽप्यौपाधिकः—इत्यत्र उपपत्तिमाह—तथा भेदोऽपीति ॥ ३५ ॥

सएवाधस्तादित्यादौ एवकारबलात् अन्यप्रतिषेधोऽवगम्यते। यस्मात् परमात्मनः उत्कृष्टं निकृष्टं वा अन्यत् किञ्चिन्नास्ति, तेनेदं पूर्णं पुरुषेण सर्वम्—इत्यन्वयः ॥ ३६ ॥

'यस्मात् परं नापरमस्ति किंचित्' (श्वे. उ. ३।९), 'तदेतद् ब्रह्म अपूर्वमनपरमनन्तरमबाह्यम्' (बृ. उ. २।५।१९) इत्येवमादिवाक्यानि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तर आत्मा अस्ति—इत्यवधार्यते ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन—सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति। अन्यथा हि तत् न सिद्ध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनां एवमात्मकत्वात्। तथा अन्यप्रतिषेधेऽप्यसति वस्तु वस्त्वन्तरात् व्यावर्तत इति परिच्छेद एव आत्मनः प्रसज्येत। सर्वगतत्वञ्चास्य आयामशब्दादिभ्यो विज्ञायते। आयामशब्दः—व्याप्तिवचनः शब्दः। 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' (छा. उ. ८।१।३) 'आकाशवत् सर्वगतश्च नित्यः' 'ज्यायान् दिवः ज्यायानाकाशात्' (छा. उ. ३।१४।३) 'नित्यः सर्वगतः स्थाणुः अचलोऽयं सनातनः' (भ. गी २।२४) इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति। ॥ ३७ ॥

८ फलाधिकरणम्

## फलमत उपपत्तेः ॥ ३८ ॥

---

तथाऽन्यप्रतिषेधे[ऽप्य](ह्य)सतीति। ननु—अन्यवस्तुप्रतिषेधेन त्रिविधपरिच्छेदशून्यतारूपमानन्त्यं उपपद्यतां नाम; सर्वगतत्वं सर्ववस्तुभिः तादात्म्येन सम्बद्धत्वं, तत्तु, द्वितीयस्य वस्तुनोऽसत्त्वे कथमुपपद्यते-इति चेत्-न। न ह्यन्यप्रतिषेधेन द्वितीयवस्तुनोऽत्यन्तासत्त्वं ब्रूमः, अपि तु आरोपितत्वम्, ततश्च अधिष्ठानस्य ब्रह्मणः स्वस्मिन्नारोपितेन द्वैतजातेन तादात्म्योपपत्तेः सर्वगतत्वमुपपद्यते-इति तात्पर्यं सूत्रभाष्ययोः। अणुत्वे सर्ववस्तूपादानत्वानुपपत्तिः मध्यमपरिमाणत्वे सावयवत्वमिति, परिशेषात् सर्वगतत्वसिद्धिः-इति न्यायः ॥ ३७ ॥

इति पराधिकरणम्

तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायां अयमन्यः स्वभावो वर्ण्यते । यदेतत् इष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां, किमेतत् कर्मणो भवति, आहोस्वित् ईश्वरात्-इति भवति विचारणा । तत्र तावत् प्रतिपाद्यते-फलं अतः—ईश्वरात् भवितुमर्हति । कुतः ? उपपत्तेः । स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् (विचित्रान्) विदधत् देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते । कर्मणस्त्वन्वक्षविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्, अभावात् भावानुत्पत्तेः ।

---

इयता प्रबन्धेन यः तत्त्वंपदार्थयोर्विवेको दर्शितः, स सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परमेश्वरादेव भवतीति प्रतिपादनार्थं इदमधिकरणमिति, पूर्वाधिकरणैरस्य सङ्गतिर्द्रष्टव्या ।

ननु—निर्विशेषस्य परमात्मनः कथं फलदातृत्वं तदुपयोगिसर्वज्ञत्वादिकल्याणगुणाकरत्वं च—इत्याशङ्क्याह—तस्यैवेति । परमात्मनः स्वशक्तिमायाविलासरूपमनन्तकल्याणगुणाकरत्वं सिद्धान्तेऽप्युपगतमिति भावः । इष्टानिष्टेति । इष्टं—स्वर्गादिकं देवानाम्, अनिष्टं क्षुत्पीडादिरूपं पश्वादीनां, मिश्रं तु सुखदुःखयोस्समतयोपभोगरूपं मनुष्याणाम्-इति विभागः । ईश्वरानपेक्षात् कर्मणो वा फलं ईश्वराद्वा कर्माराधितात् फलं इति सन्देहे, सिद्धान्तेनोपक्रमः - फलमत उपपत्तेरिति । सर्वाध्यक्षः—अन्तर्यामितया सर्वप्रेरकः । अनेन विशेषणेन, कर्मणःफलजनकतासामर्थ्योद्बोधः परमात्मायत्त इति सूचितम् । सृष्टिस्थितिसंहारानिति, विचित्रायां सृष्टौ वैषम्यनैर्घृण्यादिदोषपरिहाराय ईश्वरस्यापि कर्मापेक्षेति दर्शितम् । तथा च ईश्वरकर्मणी परस्परोपकारके इति सिध्यति । 'देशकालविशेषाभिज्ञत्वात्' इत्यनेन, यथा सेवादिफलं राजाधीनं देशकालानुरूपं व्यवस्थया दृष्टं एवं कर्मफलमपि चेतनायत्तमेवापेक्षितमिति दर्शितम् । येनापि केवलस्यैव कर्मणः फलजनकता कल्प्यते, तेनापि फलजनने कर्मणो द्वारं किञ्चित् कल्पनीयम्, तच्च नापूर्वम्, अपि त्वीश्वरप्रसाद एवेति, ईश्वराराधनरूपतैव कर्मण उपेया-इति वक्तुं उपक्रमते—कर्मणस्त्वित्यादिना । अन्वक्षविनाशिनः—प्रत्यक्षविनाशिनः । ननु कारणं विनैव कार्यमस्तु-इत्यत आह—अभावादिति ।

स्यादेतत्—कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत् फलं कालान्तरितं कर्त्रा भोक्ष्यते-इति।

तदपि न परिशुध्यति, प्राग्भोक्तृसंबन्धात् फलत्वानुपपत्तेः। यत्कालं हि यत् सुखं दुःखं वा आत्मना भुज्यते, तस्यैव लोके फलत्वं प्रसिद्धम्। न हि असंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः।

अथोच्येत-मा भूत् कर्मानन्तरं फलोत्पादः, कर्मकार्यादपूर्वात् फलमुत्पत्स्यत इति।

तदपि नोपपद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः, तदस्तित्वे च प्रमाणाभावात्। अर्थापत्तिः प्रमाणमिति चेत्, न—ईश्वरसिद्धेः अर्थापत्तिक्षयात् ॥ ३८ ॥

## श्रुतत्वाच्च ॥ ३९ ॥

न केवलं उपपत्तेरेव ईश्वरं फलहेतुं कल्पयामः, किं तर्हि, श्रुतत्वादपि ईश्वरमेव फलहेतुं मन्यामहे। तथा हि श्रुतिर्भवति 'स वा एष महानज आत्मा अन्नादो वसुदानः' (बृ. उ. ४।४।२४) इत्येवंजातीयका ॥ ३९ ॥

## धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव हेतोः-श्रुतेः उपपत्तेश्च। श्रूयते तावत् अयमर्थः 'स्वर्गकामो यजेत' इत्येवमादिषु

---

स्वकालं स्वोत्पत्त्यव्यवहितोत्तरकालम्। ननु तर्हि तदानीमेव स्वर्गाद्यनुभवः स्यात्-इत्यत आह—तत् फलमिति। न हि सुखदुखोत्पत्तिरेव फलम्, अपि तु सुखदुःखानुभव एव-इति परिहरति—यत्कालं हीति। चेतनेनाप्रवर्तितस्येति। लोके हि दण्डचक्रादीनां चेतनव्यापारविषयीभूतानामेव स्वकार्यजनकता दृष्टा। अतः अपूर्वस्यापि ईश्वरव्यापारविषयीकृतस्यैव फलजनकता उपेया। न च जीवेनान्यथासिद्धिः, तस्य कर्मानुरूपफलाभिज्ञत्वाभावात्। तथा च अवश्यापेक्षिते ईश्वरे, राजादिदृष्टान्तेन ईश्वरप्रसाद एव द्वारमिति नापूर्वं कल्पनीयम् ॥ ३८ ॥

अन्नं आ-समन्तात् ददातीति अन्नादः। वसु दीयमानं अनेनेति वसुदानः। ॥ ३९ ॥

वाक्येषु । तत्र च, विधिश्रुतेर्विषयभावोपगमात् यागः स्वर्गस्योत्पादक-इति गम्यते । अन्यथा हि अननुष्ठातृको याग आपद्येत, तत्र अस्योपदेश-वैयर्थ्यं स्यात् ।

नन्वप्यक्षविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः;

---

एवं सिद्धान्तेनोपक्रम्य पूर्वपक्षमाह— धर्मं जैमिनिरत एवेति ।

तत्र च विधिश्रुतेरिति । अयमर्थः—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ अयं वाक्यार्थः-ज्योतिष्टोमनामकयागकरणिका भावना स्वर्गकामस्येष्टसाधनम् इति । [1]तथा च, लिङ्प्रस्थापितमिष्टं किमित्यपेक्षायां, इच्छाविषयतया स्वर्गकामपदेन विशिष्योपात्तः स्वर्ग एवेति सिद्धौ, यागकरणको भावनाख्यो व्यापारः स्वर्ग-साधनमिति पर्यवस्यति । भावनां प्रति यागस्य करणत्वं च, भावनाभाव्ये प्रकृष्टो-पकारकत्वमेव । तथा च यागोऽपि स्वर्गजनक इति सिध्यति । इदं च सर्वं लिङा इष्टसाधनत्वे बोधिते एव सिध्यतीति, उक्तं विधिश्रुतेर्विषयभावोपगमादिति । विधि-श्रुतिः-लिङ्, तद्विषयभावः-[2]तत्समभिव्याहृताख्यातप्रतिपाद्यत्वम् ।

ननु—भावनाया भाव्यापेक्षायां धातुना साध्यरूपतयोपस्थितः समानपदो-पात्तश्च याग एव भाव्यः किं न स्यात् । न च-एवंसति इष्टसाधनताबोधकश्रुति-विरोधः, यागस्येष्टत्वाभावात्-इति वाच्यम् । भावनायां साध्यत्वेनान्वययोग्यस्य इष्टविशेषस्य उपस्थित्यभावेन लिङ्श्रुतेरविवक्षितार्थत्वोपपत्तेः । न च स्वर्गस्तथा, तस्य पुरुषविशेषणतया सिद्धरूपेणोपस्थितस्य इष्टत्वेऽपि भावनायां भाव्यत्वेनान्वया-नर्हत्वात्-इत्यत आह—अन्यथाहीति । इष्टसाधनतयाऽवगते एव पुरुषप्रवृत्तेः अतथाभूते यागे प्रवृत्तिर्नोपपद्यते । तथा च, यजेतस्वर्गकामइत्युपदेशो व्यर्थ एव भवेत् । न च तत् युक्तम् । न चेह यागस्य भावनोद्देश्यतयान्वययोग्यता । यावद्धि प्रकृतिप्रत्ययात्मकपदद्वयसमभिव्याहारेण यागस्य भावनान्वयो भवति ततः प्रागेव समानप्रत्ययोपात्तमिष्टमेव भावनाभाव्यमित्यवगम्यते । तच्चेष्टं किं इत्यपेक्षायां स्वर्ग-कामपदेन पर्यवसानमात्रमेवोपेयते, न तु स्वर्गपदार्थस्य शाब्दो भावनान्वयः, येन

---

1. तथा चेति पर्यवस्यतीत्यनेनान्वेति ।

2. तत्समभिव्याहृताख्यातेति धातुरत्र आख्यातपदार्थः । तत्र तत्पदप्रयोगो निरुक्ते प्रसिद्धः ।

नैष दोषः—श्रुतिप्रामाण्यात् । श्रुतिश्चेत् प्रमाणं, यथा अयं कर्मफलसंबन्धः श्रुत उपपद्यते तथा कल्पयितव्यः । न च अनुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति । अतः, कर्मणो वा सूक्ष्मा काचित् उत्तरावस्था फलस्य वा पूर्वावस्था अपूर्वं नाम अस्तीति तर्क्यते । उपपद्यते चायमर्थः उक्तेन प्रकारेण । 'ईश्वरस्तु फलं ददाति' इत्यनुपपन्नम् । अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेः, वैषम्यनैर्घृण्यप्रसङ्गात्, तदनुष्ठानवैयर्थ्यापत्तेश्च । तस्मात् धर्मादेव फलमिति ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेव - ईश्वरं फलहेतुं मन्यते । केवलात् कर्मणः अपूर्वाद्वा केवलात् फलम्—इत्ययं पक्षः तुशब्देन व्यावर्त्यते ।

---

पदार्थान्तरविशेषणत्वं विरोधि भवेत् । अक्रियारूपस्यापि स्वर्गस्य उद्देश्यतया, भावनासाध्यत्वे नानुपपत्तिः, उद्देश्यता च तस्य कामपदसमभिव्याहारात् सिध्यति-इति भावः ।

कर्मणो वा सूक्ष्मा काचिदिति । यदि तु कर्मणः [1]जनकत्वोपपत्तये अवान्तरव्यापारकल्पना, तदा कर्मण एव सूक्ष्मावस्था अपूर्वम्, यदि तु फलस्य जन्यत्वोपपत्तये अपूर्वकल्पनं, तदा तस्यैव प्रागवस्था अपूर्वम्, सर्वथापि श्रुतयागस्वर्गसाध्यसाधनभाव उपपद्यते । येनापि च ईश्वरस्य फलप्रदत्वमुच्यते तत्प्रसादश्चावान्तरव्यापारः, तेनापि, कर्मणः फलहेतुत्वं अवश्यमुपेयमेव, अन्यथा वैषम्यनैर्घृण्यप्रसङ्गात् । कर्मजन्येश्वरप्रसादं वदतापि अपूर्वं द्वारमुपेयमेव । अन्यथा कर्मानुष्ठानानन्तरमेव ईश्वरप्रसादसम्पत्त्या तदानीमेव फलमपि स्यात् । [2]तथा च आवश्यके अपूर्वे तेनैव फलोपपत्तौ ईश्वरतत्प्रसादकल्पनं गौरवपराहतम्, 'अन्नादो वसुदानः' इत्यादिवचनं तु तत्तदुपासनविधेर्थवादो भविष्यति, सेवादौ राजप्रसादादेर्द्वारता तु दृष्टत्वादुपेयते, ईश्वरप्रसादस्य द्वारत्वे तु न तथाविधं किञ्चन प्रमाणमस्ति-इति पूर्वपक्षिणो हृदयम् ॥ ४० ॥

---

1. मु. फलजनकत्वो
2. मु. तथा च सति

**कर्मापेक्षादपूर्वापेक्षाद्वा यथा तथा अस्तु, ईश्वरात् फलम्–इति सिद्धान्तः। कुतः? हेतुव्यपदेशात्। धर्माधर्मयोरपि हि कारयितृत्वेन ईश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन–'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एव असाधु कर्म कारयति तं यमधो निनीषते' (कौ. उ. ३।८) इति।**

**स्मर्यते चायमर्थो भगवद्गीतासु—**

**'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।**
**तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम्॥**
**स तया श्रद्धया युक्तः तस्या राधनमीहते।**
**लभते च ततः कामान् मयैव विहितान् हितान्' (७।२१) इति।**

---

अयमत्र सिद्धान्ताभिप्रायः—भवेत् ईश्वरतत्प्रसादाभ्युपगमे गौरवम्, यदि तत्कल्पनीयतोपेयेत। ईश्वरस्तावत् श्रुतिस्मृतिप्रमाणसिद्धत्वात् न कल्पनीयः। तस्य फलदातृत्वमपि भाष्योदाहृतश्रुतिस्मृतिवचनैस्सिद्धम्। तस्य कर्माराध्यत्वमपि 'तद्यदिदमाहुः अमुं यजामुं यजेत्येकैकं देवं एतस्यैव सा विसृष्टिः एष ह्येव सर्वे देवाः' इति कर्माराधनीयसकलदेवात्मकत्वात् सिद्धम्। 'यज्ञेन यज्ञमयजन्त देवाः' इति वचनमपि यागाराधनीयत्वं परमात्मनः प्रतिपादयति। स्मृतिरपि—'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्याद्या कर्माराध्यत्वं परमात्मनः प्रतिपादयति। आराधने च आराधनीयप्रसादस्य द्वारत्वं प्रसिद्धमेव। न चैवं कर्मानन्तरमेवेश्वरप्रसादे सति तदानीमेव फलं स्यादित्यपि शङ्कनीयम्। प्रसन्नस्यापि परमेश्वरस्य देशकालौचित्येन फलसम्पादकत्वोपपत्तेः। ईश्वरतत्प्रसादकर्माराध्यत्वानां प्रमाणसिद्धत्वात् तत्र गौरवं न दोषावहम्। अपूर्वापेक्षाद्वेति तु अनादरोक्तिः, तदभ्युपगमेऽपि आराधनीयप्रसादस्य अवश्योपगमनीयत्वात्। यथा च विहिताचरणात् ईश्वरस्य प्रसादः, तथा निषिद्धाचरणात् ईश्वरस्य प्रकोपो भवतीत्यपि द्रष्टव्यम्। 'एष ह्येव साधु कर्म कारयति' एष ह्येवासाधु कर्म कारयति' इति कर्मकारयितृत्वमवगम्यते। 'यमेभ्यो लोकेभ्य उन्निनीषते' 'यमधो निनीषते' इति तस्य

सर्ववेदान्तेषु च ईश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव च ईश्वरस्य फलहेतुत्वं-यत् स्वकर्मानुरूपाः प्रजाः सृजतीति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥ ४१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
तृतीयाध्यायस्य द्वितीयः पादः

---

शुभाशुभफलसम्पादकता च अवगम्यते । न च एतेषां वचनानां अर्थवादत्वं न्याय्यम्। अतः 'फलमत उपपत्तेः' इत्येव पक्षः समीचीनः ॥ ४१ ॥

इति फलाधिकरणम्

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
तृतीयस्याध्यायस्य द्वितीयः पादः।

तृतीयाध्याये तृतीयः पादः

१. सर्ववेदान्तप्रत्ययाधिकरणम्

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

व्याख्यातं विज्ञेयस्य ब्रह्मणः तत्त्वम्। इदानीं तु, प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते।

ननु—विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितं एकरसं सैन्धवघनवत् अवधारितम्, तत्र, कुतो विज्ञानभेदाभेदचिन्तावतारः। न हि कर्मबहुत्ववत् ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्, ब्रह्मणः एकत्वादेकरूपत्वाच्च। न च एकरूपे ब्रह्मणि अनेकरूपाणि विज्ञानानि संभवन्ति। न हि अन्यथार्थोऽन्यथाज्ञानमिति अभ्रान्तं भवति। यदि पुनः एकस्मिन् ब्रह्मणि बहूनि विज्ञानानि वेदा[न्ते](न्तान्तरे)षु प्रतिपिपादयिषितानि, तेषामेकमभ्रान्तं भ्रान्तानीतराणीति, अनाश्वासप्रसङ्गो वेदान्तेषु। तस्मात् न तावत् प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। नाप्यस्य

---

पूर्वस्मिन् पादे तत्त्वंपदार्थौ दर्शितौ, इह पादे वाक्यार्थो निरूप्यत इति, पादयोः पौर्वापर्यम्।

[1]ननु—वेदान्तवाक्यार्थः उपक्रमादिलिङ्गैः समन्वयलक्षणे एव निरूपितः, अतः पुनर्निरूपणं कीदृग्विधम्। यदि तु—समन्वयलक्षणे ब्रह्म वा जीवादिकं वा वाक्यार्थ इति सन्दिह्य ब्रह्मैव वाक्यार्थ इति प्रतिपादितम्, इह तु 'वाक्यार्थीभूतं ब्रह्म एतावद्विशेषणविशिष्टम्' इतिनिर्धारणोपयोगिगुणोपसंहारात्मको वाक्यार्थो निरूप्यते-इत्युच्यते, तदपि नोपपद्यते निर्विशेषे वाक्यार्थे विशेषणानामभावात्। अथोच्येत-निर्विशेषे वाक्यार्थे विशेषणानामभावेऽपि तत्तदाशङ्कानिवृत्त्युपयोगीन्युपलक्षणानि सन्त्येव, तदुपसंहारोऽत्र निरूप्यते-इति, तथापि 'आनन्दादयः प्रधानस्य' इत्येवमादीनि कानिचिदेवाधिकरणानि निर्विशेषविषयाणि अत्र पादे सङ्गतानि स्युः,

---

1. नन्वित्यादिशङ्कासमाधानेन श्रुतप्रकाशिकोक्तदूषणानां निरासः कृतप्रायः।

चोदनाद्यविशेषादभेद उच्येत । ब्रह्मविज्ञानस्य अचोदनालक्षणत्वात् । अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैः ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' इत्यत्र । तत् कथं इमां भेदाभेदचिन्तां आरभते—इति ।

तदुच्यते—सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेति अदोषः । अत्र हि, कर्मवत् उपासनानां भेदाभेदौ संभवतः, कर्मवदेव च उपासनानि दृष्टफलान्यदृष्टफलानि च उच्यन्ते, क्रममुक्तिफलानि च कानिचित् सम्यग्ज्ञानोत्पत्तिद्वारेण । तेषु एषा चिन्ता संभवति—किं प्रतिवेदान्तं विज्ञानभेदः आहोस्विन्नेति ।

तत्र पूर्वपक्षहेतवस्तावत् उपन्यस्यन्ते । नाम्नस्तावत् भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु । अस्ति चात्र वेदान्तान्तरविहितेषु विज्ञानेषु

---

अन्यानि तु सगुणोपासनाविषयाणि अत्र पादे न सङ्गतानि, तेषां निर्विशेषवाक्यार्थे उपयोगाभावात् । यदि चित्तैकाग्र्यसम्पादनपापाकर्षणद्वारा सविशेषोपासनानां निर्विशेषवाक्यार्थज्ञानोपयुक्तत्वात् गुणोपसंहारप्रसङ्गेन सविशेषवाक्यार्थज्ञानोपयोगिगुणोपसंहारो निरूपितः सविशेषोपासनासिद्धये, तथापि गुणोपसंहार एवैकः पादार्थ इति वक्तुं न शक्यते । विद्याभेदाभेदयोरपि इह चिन्तनीयत्वात्-इति चेत् ;

उच्यते—गुणोपसंहार एव पादार्थः, तदुपयोगितया सर्वशाखासु विद्याया अभेदः प्रतिपाद्यते, विद्यानां भेदप्रतिपादनं तु अभेदापवादेनेति न पादार्थभेदः ।

तदुच्यते—सगुणब्रह्मविषयेति । ननु—निर्विशेषाया अक्षरविद्याया अपि शिरोव्रतसत्त्वासत्त्वाभ्यां भेदाशङ्कायां तस्य स्वाध्यायधर्मत्वं व्यवस्थापयिष्यते । तथा च, रूपभेदाभावेऽपि धर्मविशेषेण निर्विशेषविद्यायामपि भेदाशङ्का सम्भवति-इति चेत् ;

उच्यते—'रूपभेदनिमित्ता भेदाशङ्का नास्ति' इत्यत्रैव [1]अस्य भाष्यस्य तात्पर्यम् । तथा, अर्थसंयोगरूपाख्याऽविशेषैः निर्विशेषविद्याया अभेदसाधने सम्भवत्यपि चोदनाऽविशेषात्तन्नसम्भवतीति द्रष्टव्यम् ।

---

1. मु. 'अस्य' नास्ति

अन्यदन्यन्नाम-तैत्तिरीयकं वाजसनेयकं कौथुमकं (कौषीतकं) शाट्यायनकं-

---

**प्रसिद्धं ज्योतिरादिष्विति ।** 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः एतेन सहस्रदक्षिणेन यजेत' इति श्रूयते ।

तत्र सन्देहः—एतेनयजेतेत्यनेन प्रकृतंज्योतिष्टोममेवानूद्य तस्य सहस्रदक्षिणाख्यो गुणो विधीयते ज्योतिरादीनि च तस्यैव नामानि ? अथवा ज्योतिरादिनामकानि त्रीणि कर्माणि प्रकृतात् ज्योतिष्टोमात् भिन्नानि तान्येव सहस्रदक्षिणाविशिष्टतया एतेनेत्यादिवाक्येन विधीयन्ते ? इति ।

तत्र पूर्वपक्षः—यजेतेति प्रकृतकर्मप्रत्यभिज्ञानात् नाम्नां च आख्यातपरतन्त्रतया ज्योतिरादीन्यपि प्रकृतस्य कर्मणो नामधेयानि, एकस्याप्यनेकनामत्वं तु लोकसिद्धमेव, घटकलशाद्यनेकपर्यायदर्शनात्-इति ।

सिद्धान्तस्तु—भवेदेतदेवम्, यदि ज्योतिरादिनामानि आख्यातपरतन्त्राणि भवेयुः । तानि तु आख्याता सामानाधिकरण्येन [1]प्रथमान्ततया पृथगेव श्रुतानि उपक्रमे एव शब्दभेदात् अर्थभेदं सूचयन्ति । यथा हि एकस्य शब्दस्य अनेकार्थत्वं अन्याय्यम्, अष्टदोषदुष्टविकल्पप्रसरात्, एवं एकस्यार्थस्य अनेकशब्दत्वमपि अन्याय्यम् । तथा च उपक्रमे एव अथैषज्योतिरित्यादिनिर्देशबलादर्थभेदे सिद्धे सति, कोऽसौ ज्योतिरादिपदैः अर्थो विवक्षितः इति विवक्षायां एतेनसहस्रदक्षिणेनयजेतेतिवाक्येन यागरूपोऽसाविति निर्धार्यते । तथा च, प्रथमोपनिपतितभेदानुसारेण चरमोपजातं अभेदसाधकं प्रत्यभिज्ञानं परित्यज्यत इति, नामानुसारेण कर्मभेदो व्यवस्थापितः पूर्वतन्त्रे [२. २. ८]

**तैत्तिरीयकमित्यादि ।** ननु—तैत्तिरीयकादीनि शाखानामान्येव, न तु तत्प्रतिपाद्यविद्यानामानि । विद्यासु च प्रयोगो लक्षणयैव । न च विनिगमनाविरहादुभयनामत्वमिति वाच्यम् । विद्यानामेकशाखागतानां बहुत्वात् तन्नामत्वे अनेकार्थत्वं प्राप्नोति, शाखायास्त्वेकत्वात् न नानार्थता प्रसज्यत इति शाखानामत्वमेव न्याय्यम्, तच्छाखाप्रतिपाद्यतासम्बन्धेन विद्यासु तु लक्षणेति, अनन्यलभ्यत्वाभावात् न शक्यतेति, कथं तैत्तिरीयकादिनामभेदात् विद्यानां भेदः—इति चेत् ;

---

1. **प्रथमान्ततयेति** आख्यातसामानाधिकरण्ये तृतीयान्तता युक्तेति भावः ।

इत्येवमादि । तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्येवमादिषु । अस्ति चात्र रूपभेदः ।

---

उच्यते — पाणिन्यनुशासनपर्यालोचनया हि तैत्तिरीयकादिपदानां विद्यानामत्वमपि प्रतीयते । तित्तिरिशब्दात् तेनप्रोक्तमित्यर्थे 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' इति सूत्रेण छणप्रत्यये सति, 'छन्दोब्राह्मणानि च तद्विषयाणि' इति प्रोक्तप्रत्ययान्तस्याध्येतृवेदितृप्रत्ययान्तानियमात्, 'तदधीते तद्वेद' इति अणि 'प्रोक्ताल्लुक्' इति सूत्रेण अणो लुकि, तित्तिरिणा प्रोक्तं अधीयते तैत्तिरीयाः- इति रूपं शाखाध्येतृवाचि सिध्यति । ततो 'गोत्रचरणाद्वुञ्' इति सूत्रेण तस्येदमित्यधिकारपठितेन वुञ् । शाखाध्येतृवाची शब्दः चरणइत्युच्यते । अयं च वुञ् 'चरणाद्धर्माम्नाययोः' इति वार्तिकेन अर्थविशेषे नियमितः । तथा च, तैत्तिरीयाणां धर्म आम्नायो वा उभयमपि तैत्तिरीयकम् ।

एवं वाजसनेयकशब्दोऽपि । [1]वाजसनस्य स्त्री वाजसनी, तस्यापत्यमित्यर्थे स्त्रीभ्यो ढक्' इति ढकि वाजसनेयेनप्रोक्तमित्यर्थे 'शौनकादिभ्यश्छन्दसि' इति, णिनि, ततोऽध्येतृप्रत्ययस्य लुकि, वाजसनेयेन प्रोक्तं अधीयते वाजसनेयिनः इति स्थिते, 'गोत्रचरणात्....' इति वुञ् ।

शटस्य गोत्रं शाट्यः, [2]गर्गाद्यञ्, 'यञिञोश्च' इति यूनि फक् । शाट्यायनेनप्रोक्तमित्यर्थे प्राग्दीव्यतीयोऽण्, ततोऽध्येतृप्रत्ययस्य लुकि, शाट्यायनेनप्रोक्तमधीयते शाट्यायना इत्येवं स्थिते, वुञ् । [3]एवं कुथुमिनाप्रोक्तमधीयते कौथुमाः, वुञ्, कौथुमकम् ।

तथा च, तैत्तिरीयकादिशब्दाः 'चरणाद्धर्माम्नाययोः' इति वार्तिकपर्यालोचनया तत्तच्छाखिधर्मत्वेन प्रवृत्तिनिमित्तेन विद्यानामपि वाचकाः-इत्युपेयमेव ।

---

1. मु. वाजं-अन्नं सनिः-भागः अस्येति विग्रहे, इकारान्तात् वाजसनिशब्दात् 'इतश्चानिञः' इति सूत्रेण ढकि

होलीरभाष्ये-वाजस्य-अन्नस्य सनिः-दानं यस्य महर्षेः अस्ति, सोऽयं वाजसनिः, तस्य पुत्रः वाजसनेयः-इत्युक्तम् ।

2. गर्गात्—गर्गादित्वात् ।

3. मु. 'एवं' नास्ति

वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यादिष्विति । अयमर्थः—

वाजिभ्यो वाजिनम्' इति वाक्यं, वैश्वदेव्यामिक्षेतिवाक्यप्रतिपाद्यादन्यदेव कर्म विदधाति, उत द्वाभ्यां वाक्याभ्यां एकमेव कर्म विधीयते : इति सन्देहे, पूर्वः पक्षः-एकमेव कर्म उभयत्र । ननु-आमिक्षा उत्पत्तिशिष्टा तद्धितप्रत्ययरूपश्रुत्यवगत-विश्वदेवसम्बन्धा च । तथा च प्रबलयामिक्षयावरुद्धे वैश्वदेवयागे कथं वाजिनस्य निवेशः स्यात्-इति चेत्, न—अत्र हि वाक्यद्वयेऽपि यागो न श्रुतः, अपि तु कल्पनीयः । तथा च उभयोर्वाक्यैकवाक्यतामुपेत्य लाघवात् उभयद्रव्यविशिष्ट एक एव यागः कल्प्यत इति वाजिनामिक्षयोरुभयोरपि तुल्यकालमेव यागसम्बन्धा-वगमात् नात्र 'उत्पत्तिशिष्टत्वमामिक्षायाः वाजिनस्योत्पन्नशिष्टत्वम्' इति वक्तुं शक्यते । यथा च 'वाजं-अन्नं आमिक्षा येषां ते वाजिनः' इति व्युत्पत्त्या वाजि-पदोक्तानां विश्वदेवानां वाजिनसम्बन्धो वाक्यीयः, एवं वैश्वदेव्यामिक्षेत्यत्र आमिक्षा-सम्बन्धोऽपि तेषां वाक्यीय एव, पदान्तरोपात्तत्वादामिक्षायाः । यद्यपि विश्वे देवा देवता अस्या इति विग्रहवाक्यानुसारात् तद्धितेनाप्यामिक्षाभिधीयते, तथापि आमिक्षापदसमभिव्याहाराभावे न तद्धितमात्रस्य तस्मिन्नर्थे पर्यवसानं भवति । अतः एकस्मिन्नेव यागे आमिक्षावाजिनयोः समुच्चयो विकल्पो वा-इति ।

सिद्धान्तस्तु-वैश्वदेवीतिवाक्यविहिते कर्मणि वाजिनस्य विकल्पेन समुच्चयेन वा निवेशासम्भवात् वाजिनद्रव्यको यागः अन्य एव । तथाहि—यद्यप्यत्र द्रव्यदेव-तासम्बन्धानुसारेण यागः कल्पनीयः, तथापि अवगतो द्रव्यदेवतासम्बन्धो यथोपपद्यते तथैव कल्पनीयः, न तु तद्विरोधेन । वैश्वदेवीतिपदेन च विश्वदेवदेवता उत्पत्तिकाले एव आमिक्षावरुद्धा अवगम्यते । आमिक्षापदस्य च केवलस्य श्रुत-त्वात् द्रव्यान्तरनिरपेक्षैव सा अवगम्यते । नियमपरं च द्रव्यपदम् । अतः उत्पत्ति-शिष्टामिक्षावरुद्धो देवतासम्बन्धः । न तत्र उत्पन्नशिष्टस्य वाजिनस्य विकल्प-समुच्चयाभ्यां निवेशःसम्भवति, असहायत्वनियमयोः बाधापत्तेः । यद्यपि च पदान्तरमपेक्ष्य तद्धितपर्यवसानं, तथापि, तेन देवताविशिष्टं द्रव्यं अभिधीयत एव । सर्वनाम्नामिव पदान्तरं तु [1]तदभिधेयस्य प्रकृततासम्पादनार्थम् । न चैतावता देवताविशिष्टामिक्षा तद्धितस्याशक्येति वक्तुं शक्यते । अतः वैश्वदेव्यामिक्षेति-वाक्यावगतद्रव्यदेवतासम्बन्धानुसारेण कल्प्यो यागः केवलया नियमितया आमि-

---

1. तदभिधेयस्य—तद्धिताभिधेयस्य ।

तद्यथा–केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति, अपरे पुनः

---

क्षया अवरुद्ध एव कल्प्यत इति तत्रासम्भवन्निवेशो वाजिनगुणः स्वनिवेशयोग्यं कर्म भिनत्ति ।

ननु–यद्यपि उत्पत्तिशिष्टा आमिक्षा श्रौती च, तथापि, वचनानुसारेण तां बाधित्वा वाजिननिवेशो भवेदेव । वाजिपदेन आमिक्षाविशिष्टान् विश्वदेवाननूद्यैव वाजिनसम्बन्धविधानात् । सति वचने [1]श्रौतोत्पत्तिशिष्टप्राबल्यन्यायानवतारात् । न च–वाजिपदं योगेन विश्वान् देवान् प्रतिपादयति, रूढ्या अश्वम्, अतो रूढिप्राबल्यात् वाजिपदं न विश्वदेवप्रतिपादकमिति–वाच्यम् । रूढिमपेक्ष्यापि उपस्थितयोगस्य प्रबलत्वात् । अतो न कर्मभेदः–इति चेत्;

उच्यते—यद्यपि वाजिपदं विश्वदेवप्रतिपादकं, तथापि न पूर्ववाक्यावगतामिक्षाबाधः । कर्मान्तरविधौ अबाधेनैव वाक्यद्वयप्रवृत्तिसम्भवे बाधकल्पनानवतारात् । [2]आमिक्षाया [3]नित्यत्वनिरपेक्षत्वे च निरवकाशे । वाजिभ्योवाजिनमिति वाक्यं तु कर्मान्तरविधिनापि सावकाशम् । अतोऽपि न बाधः पूर्ववाक्यस्य । न चात्र उपस्थितत्वमात्रेण योगस्य प्राबल्यम् । असति निर्वचने क्लिष्टयोगस्य उपस्थितस्यापि हेयत्वात् । न ह्यत्र मण्डपानकर्तृत्वं मण्डपपदमिव वाजिपदं आमिक्षाविशिष्टान् विश्वदेवान् अक्लेशेन प्रतिपादयति । तस्मात् [4]वाजिपदोद्देश्याश्वदेवताकं वाजिनद्रव्यकं अन्यदेव कर्मेति ।

केचिच्छाखिन इति । वाजसनेयिनां छन्दोगानां च द्युपर्जन्यपृथिवीपुरुषयोषितोऽग्नयः समाना एव । वाजसनेयिनां तु [5]अन्योऽग्निरपि 'तस्याग्निरेवाग्निः' इत्यादिना पुनराम्नायते । न च तस्य छान्दोग्ये उपसंहारः सम्भवति । 'अथ ह य एवमेतान् पञ्चाग्नीन् वेद' इति [6]पञ्चत्वसङ्ख्याम्नानविरोधात् । ततश्च

---

1. श्रौतोत्पत्तिशिष्टप्राबल्यन्यायेति 'श्रौतस्य प्राबल्यं' 'उत्पत्तिशिष्टस्य प्राबल्यं' इति न्यायेत्यर्थः ।

2. कर्मान्तरविधिरित्यत्र हेत्वन्तरमाह—**आमिक्षाया इत्यादिना** ।

3. **नित्यत्वेति** नियतत्वेत्यर्थः । द्रव्यपदस्य नियमपरत्वात् इति भावः । एतेन विकल्पपक्षो निरस्तः, निरपेक्षत्वेनेत्यनेन समुच्चयपक्षः ।

4. **वाजिपदोद्देश्येति** चतुर्थ्यन्तवाजिपदेन उद्देश्यतयाबोधितेत्यर्थः ।

5. आ॰ अन्त्योऽग्निरपि 6. मु. पञ्चत्वसङ्ख्याविरोधात्

पञ्चैव पठन्ति । तथा प्राणसंवादादिषु केचित् ऊनान् वागादीनामनन्ति केचित् अधिकान् । तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कारीर्यादिषु । अस्ति चात्र धर्मविशेषः । यथा—आथर्वणिकानां शिरोव्रतमिति । एवं पुनरुक्त्यादयोऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः ।

तस्मात् प्रतिवेदान्तं विज्ञानभेद इति ।

---

छान्दोग्यगतायाम्पञ्चाग्निविद्यायामसम्भवन्निवेशेन षष्ठाग्निना वाजनेयकगता विद्या भिद्यते । एवं प्राणविद्यायामपि वाजसनेयिनां छन्दोगानां च वाक्चक्षुश्श्रोत्रमनोरूपाः चत्वारः प्राणाःसमाना एव । परं तु वाजसनेयके रेतोरूपोऽधिकः प्राण आम्नायते । यद्यपि चात्र उपसंहारोपगमेन विध्यैक्यं वक्तुं शक्यं, तथापि, पुनरुक्तिदोषपरिहाराय विद्याभेदे स्वीकर्तव्ये तदुपष्टम्भकतया प्राणविद्यायां रूपभेदोऽप्युपन्यस्त इति द्रष्टव्यम् ।

धर्मविशेषः - अङ्गविशेषः । **आशङ्कितः** शाखान्तराधिकरणपूर्वपक्षसूत्रे । **कारीर्यादिष्विति** । कारीरीवाक्यान्यधीयानास्तैत्तिरीयाः भूमौ भोजनमाचरन्ति नाचरन्त्यन्ये । तथा [1]अग्निमधीयानाः केचिच्छाखिनः उपाध्यायस्योदकुम्भमाहरन्ति, नाहरन्त्यन्ये । एते च धर्माः अध्ययनद्वारा तत्तच्छाखोक्तधर्मोपकारकतया पर्यवस्यन्ति । एवंसति शाखाभेदेन कर्मभेद उपगन्तव्यः । अन्यथा हि, एकस्मिन्नेव कर्मणि भूभोजनादिजन्योपकारापेक्षानपेक्षे इति विरुद्धमापद्येत ।

**आथर्वणिकानामिति** । 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति आथर्वणिकानां अक्षरविद्यायां शिरस्यङ्गारपात्रधारणाख्यं शिरोव्रतं आम्नातम्, अन्येषां तु नाम्नातम् । अतो भवेत् शाखाभेदेन निर्विशेषविषयाया अप्यक्षरविद्याया भेदः-इति शङ्का । नच शिरोव्रतस्य वाजसनेयिभिः उपसंहारश्शक्यः । तस्य आथर्वणिकमात्राधिकारित्वात् ।

**एवं पुनरुक्त्यादयोऽपि भेदहेतव इति**। पुनरुक्तिः-अभ्यासः । यथा 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इति ।

---

1. अग्नि—चयनप्रतिपादकं वेदभागम् ।

अत्र सन्देहः—किं पञ्चभिरेतैर्वाक्यैः एकमेव कर्म विधीयते, उत प्रत्याख्यातं भिन्नं भिन्नं कर्म विधीयते ? इति ।

तत्र पूर्वपक्षः—यथा हि, यजति जुहोति ददातीति भिन्नप्रवृत्तिनिमित्तधातुबलात् प्रत्ययप्रतिपाद्याया भावनाया विशेषणीभूतधात्वर्थभेदात् भेदो भवति, नैवमत्र भेदो भावनाया वक्तुं शक्यते । सर्वत्र यजतिधातोरेव श्रवणात् । तथा च, प्रत्यभिज्ञया पञ्चस्वपि वाक्येषु एकमेव कर्म । न च एकेनैव वाक्येन एकस्य कर्मणो विधानसम्भवात् वाक्यान्तरवैयर्थ्यपरिहाराय कर्मभेद उपगन्तव्य इति वाच्यम् । पूर्ववाक्यविहितकर्मानुवादेन उत्तरवाक्यानां स्तावकतया वैयर्थ्याभावात् । न च 'पूर्ववाक्यं विधायकं उत्तरवाक्यान्यनुवादकानि' इत्यत्र विनिगमनाविरहः । स्वाध्यायविधिपरिगृहीतपाठक्रमानुसारेणपूर्वाज्ञातवाक्यार्थावगमदशायां प्राप्तत्वाभावेन विधिशक्तिकुण्ठनाभावात्, उत्तरवाक्यार्थावगमकाले पूर्ववाक्यतः प्राप्तिसम्भवेन विधिशक्तिकुण्ठनात् । अतो [1]मन्त्रवर्णप्राप्तदेवतानुवादेन उत्तरवाक्यानि स्तावकानि, पूर्ववाक्यं तु समिन्नामककर्मविधायकम्-इति ।

सिद्धान्तस्तु—सर्वत्र विधिस्वारस्यात् तादर्थ्यसम्भवे नानर्थप्रायस्तुतिपरत्वं कल्पयितुं शक्यम् । सम्भवति चात्र प्रत्यभ्यासं कर्मभेदाभ्युपगमेन विधिः । न च—अत्र भेदकासम्भवः, प्रकृत्यर्थस्य एकरूपत्वात्-इति वाच्यम् । विधेरेव भेदकतासम्भवात् । प्रथमतो हि एतावदवगतम्—पूर्ववाक्यप्रतिपाद्यस्यैव पुनः उत्तरवाक्येन प्रतिपादने, अग्निहोत्रं जुहोतीतिवाक्यप्रतिपाद्यस्यैव दध्नाजुहोतीत्यादिवाक्येन प्रतिपादने गुणविधिलाभवत् इह कस्यचिदर्थस्यालाभात् वाक्यसार्थक्याय पूर्ववाक्यप्रतिपाद्यात् कर्मणः उत्तरवाक्यप्रतिपाद्यं कर्म विजातीयमेव-इति । ततश्च तत्तद्वैजात्याभिव्यञ्जकं किमित्यपेक्षायां तत्तद्वाक्यार्थव्यवस्थितेतिकर्तव्यताविशेषबोधकैर्वाक्यैः तन्निर्धारणं भवतीति अनन्यप्रयोजनवाक्यावृत्तौ कर्मभेद एव ।

तथा च शाखाभेदेन [2]पञ्चाग्न्यादिविद्यायाः प्रतिपादनस्य [3]निष्प्रयोजनत्वापत्त्या, अभ्यासात् भेद एवोपेयः ।

---

1. आ. मन्त्रवर्णप्राप्ततनूनपादादिदेवता
2. मु. पञ्चाग्निविद्यायाः
3. आ. भेदाभावे निष्प्रयोजन

**एवं प्राप्ते ब्रूमः—सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति । कुतः ? चोदनाद्यविशेषात् । आदि ग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते -**

---

पुनरुक्त्यादयइत्यादिशब्देन समाप्त्यशक्त्यन्यार्थदर्शनानि गृह्यन्ते । तथाहि—छान्दोग्ये प्रणवोपासनसमाप्तिः 'ओङ्कार एवेदं सर्वम्' इत्यनेन [1]व्यवह्रियते । माण्डूक्ये तु 'ओमित्येतदक्षरमिदं सर्वम्' इति सार्वात्म्यं प्रतिपाद्य पुनश्च कांश्चित् गुणान् प्रतिपाद्य अनन्तरं समाप्तिर्व्यवह्रियते । उभयत्र च विद्यैक्ये सति माण्डूक्याम्नातानां अन्येषां गुणानां छान्दोग्ये उपसंहारावश्यम्भावात् सार्वात्म्यान्त एव समाप्तिव्यवहारो विरुध्येत ।

यदि च सर्वासु शाखासु विद्यैक्यं भवेत्, तदा सर्वशाखाध्ययनपूर्वकं तत्तच्छाखाम्नातगुणावधारणेनैव अनुष्ठानं वक्तव्यम् । न चैतच्छक्यते । सर्वशाखाध्ययनपूर्वकं कृत्स्नगुणावधारणस्य पुरुषायुषेणाप्यसम्भवात् । अतः अशक्तेरपि शाखाभेदेनोपासनाभेदः ।

तथा अन्यार्थदर्शनमपि । 'नैतदचीर्णव्रतोऽधीते' इति वाक्येन आथर्वणोपनिषदः चीर्णशिरोव्रतेनैव अध्ययनं कर्तव्यमित्यवगम्यते । अन्यासां तु शाखानां तदभावेऽप्यध्ययनं अवगम्यते । न चैतत् सर्वशाखासु विद्यैक्ये उपपद्यते । न हि, सैवोपासना चीर्णव्रताध्ययनपूर्वकमेव गृहीता सती फलं प्रयच्छति तदभावेऽपि फलं प्रयच्छति इति-युक्तम् । अतः चीर्णव्रताध्ययनपूर्वकमनुष्ठीयमाना विद्या शाखान्तरविहितविद्यातो भिन्नेत्येवोपेयम् ।

सर्ववेदान्तप्रत्ययमितिसिद्धान्तसूत्रे प्रत्ययपदं कर्मसाधनम् । [2]तथा च [3]सर्ववेदान्तैः प्रतीयमानानि विज्ञानान्यनूद्य एकवचनसामर्थ्यादवगतमेकत्वं विधीयत इति सिद्धान्तप्रतिज्ञालाभं अभिप्रेत्याह—सर्ववेदान्तप्रत्ययानीति । सर्वास्वपि

---

1. व्यवह्रियते इतीत्यादिः, साम्प्रदायिकैरिति शेषः ।
2. आ. 'तथा च' नास्ति
3. मु. सर्ववेदान्ते

**संयोगरूपचोदनाख्याविशेषात् इत्यर्थः। यथा एकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नः तादृश एव चोद्यते 'जुहुयात्' इति, एवम् 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' (बृ. उ. ५।१।१) इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना। प्रयोजनसंयोगोऽप्यविशिष्ट एव 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति। रूपमप्युभयत्र तदेव विज्ञानस्य-यदुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम्। यथा च द्रव्यदेवते यागस्य रूपं एवं विज्ञेयं रूपं विज्ञानस्य, तेन हि तत् रूप्यते। समाख्याऽपि सैव-प्राणविद्येति। तस्मात् सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम्। एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्या इत्येवमादिषु योजयितव्यम्। ये तु नामरूपादयो भेदहेत्वाभासाः ते प्रथमे एव काण्डे 'न नाम्ना स्यात् चोदनाभिधानत्वात्' इत्यारभ्य परिहृताः॥ १॥**

---

शाखासु वैदिकानां 'तदेवेदं कर्म' 'तदेवेदमुपासनम्' इतिप्रत्यभिज्ञाबलात् एकत्वं सिध्यतीति वक्तव्यम्। तत्र प्रत्यभिज्ञाजनकं चोदनाद्यैकरूप्यम्। तत्र चोदना-प्रतिपादकश्शब्दः, अर्थसंयोगः-प्रयोजनसम्बन्धः, रूपं-कर्मसु अग्निहोत्रादिषु द्रव्यादिकं उपासनासु उपास्यम्, आख्या-नाम, तेषामैकरूप्यं प्रत्यभिज्ञाजनकम्। अथ वा-चोद्यत इति चोदना-प्रयत्नः, तस्यैकरूप्यं-तुल्येन शब्देन प्रतिपाद्यत्वम्। तदभिप्रेत्याह—यथैकस्मिन्नग्निहोत्र इति।

एवं चोदनाद्यैकरूप्यसिद्धप्रत्यभिज्ञाबलेन सर्वासु शाखासु अग्निहोत्राद्यैक्यवत् विद्यानामपि ऐक्यमिति सिद्धान्तं साधयित्वा, पूर्वपक्ष्युद्भावितान् भेदहेतून् निराकरोति—ये तु नामरूपादय इति। 'न नाम्ना स्यात् चोदनाभिधानत्वात्' इति शाखान्तराधिकरणसिद्धान्तसूत्रान्तर्गतं कौथुमककाठकादिनाम्नामग्निहोत्रादिभेदकतानिराकरणार्थं सूत्रम्। कौथुमकवाजसनेयकादिनाम्ना भेदो न स्यात्, तस्य चोदनाभिधानत्वात्-शाखानामत्वात्। ननु चरणाद्धर्माम्नाययोरितिवार्तिकानुसारेण कर्मनामत्वमपि तस्योक्तमिति चेत्, न—'अनेकमन्यपदार्थे' इति अन्यपदार्थे बहुव्रीह्यनुशासनस्येव अस्यापि लाक्षणिकार्थपरत्वात्। अस्तु वा कर्मनामत्वं, तथापि, ज्योतिरादिनामवत् अस्य न भेदकृतोपपद्यते। ज्योतिरादिनामानि उत्पत्तिविधि-

इहापि कंचिद्विशेषमाशङ्क्य परिहरति—

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्यादेतत्-सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदात् नोपपद्यते। तथाहि वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति 'तस्याग्निरेवाग्निर्भवति' (बृ. उ. ६।२।१४) इत्यादिना। छन्दोगास्तु तं नामनन्ति, पञ्चसंख्ययैव च ते उपसंहरन्ति 'अथ ह य एतानेवं पञ्चाग्नीन् वेद' (छा. उ. ५।१०।१०) इति। येषां च स गुणोऽस्ति येषां च नास्ति कथं उभयेषां एका विद्या उपपद्येत। न चात्र गुणोपसंहारः शक्यते प्रत्येतुम्, पञ्चसंख्याविरोधात्।

तथा प्राणसंवादे श्रेष्ठादन्यान् चतुरः प्राणान् वाक्चक्षुश्श्रोत्रमनांसि छन्दोगा आमनन्ति। वाजसनेयिनस्तु पञ्चममप्यामनन्ति 'रेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' (बृ. उ. ६।१।६) इति।

---

गतानि प्रथमत एव भिन्नतया कर्म अवगमयन्ति। तैत्तिरीयकादिनामानि तु श्रुतिबहिर्भूतानि अध्यापकसंप्रदायागतानि न कर्मण उत्पत्तिसमये एव भेदमवगमयन्ति, अपि तु उत्पत्तिविधिप्रत्यभिज्ञावधृतैक्ये कर्मणि पश्चान्निपतन्ति न प्रथमावगतमैक्यं बाधितुमुत्सहन्ते। एवं च 'न नाम्ना स्यादचोदनाभिधानत्वात्' इति पाठः कचित् कोशे दृश्यमानः अस्मिन्नर्थे योज्यः-अचोदनाभिधानत्वात्-उत्पत्तिचोदनागताभिधानत्वाभावात्-इति। यथा च तैत्तिरीयकादिनाम्नां न कर्मभेदकत्वं एवं विद्याभेदकत्वमपि नास्ति। अपि च-यदि तैत्तिरीयकादिनामभेदात् विद्याभेदो वा कर्मभेदो वा उपेयेत, तथासति तच्छाखागतानां कर्मणां विद्यानां च तैत्तिरीयकादिनामाभेदात् अभेदोऽपि स्यात्। तत्र चेत् शब्दान्तराद्यवगतभेदानुसारेण नामैक्यं बहूनां उपगम्यते, चोदनाद्यविशेषावगतैक्यानुसारेण एकस्य बहुनामत्वमपि उपगन्तुं न्याय्यम् ॥ १ ॥

रूपभेदात् पञ्चाग्निविद्या छान्दोग्यवाजसनेयकयोः भिद्यते-इति यत् पूर्वपक्षिणोक्तं तत्परिहारार्थं सूत्रं अवतारयति—इहापीति।

आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदः द्रव्यदेवताभेदादिव यागस्य-इति चेत् ।

नैष दोषः—यतः एकस्यामपि विद्यायां एवंजातीयको गुणभेद उपपद्यते । यद्यपि षष्ठस्याग्नेः उपसंहारो न संभवति, तथापि, द्युप्रभृतीनां पञ्चानामग्नीनां उभयत्र प्रत्यभिज्ञायमानत्वात् न विद्याभेदो भवितुमर्हति । न हि षोडशिग्रहणाग्रहणयोः अतिरात्रो भिद्यते । पठ्यतेऽपि च षष्ठोऽग्निः छन्दोगैः 'तं प्रेतं दिष्टं इतोऽग्नय एव हरन्ति' (छा. उ. ५।९।२) इति। वाजसनेयिनस्तु साम्पादिकेषु पञ्चस्वग्निषु अनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित् समित्' (बृ. उ. ६।२।१४) इत्यादि समामनन्ति, स नित्यानुवादः ।

---

यद्यपिषष्ठस्याग्नेरित्यादि । अत्र भाष्ये, छान्दोग्यवाजसनेयकयोः द्युपर्जन्यादीनां पञ्चानामग्नीनां प्रत्यभिज्ञानात् विद्यैक्ये सिद्धे सति, षष्ठस्याग्नेः षोडशिग्रहणाग्रहणवत् विकल्पो भविष्यति, परं तु स व्यवस्थितः 'वाजसनेयिनां षडग्नयः छन्दोगानां तु न' इति । ततश्च छान्दोग्यगतस्य 'अथ य एवमेतान् पञ्चाग्नीन् वेद' इति पञ्चसङ्ख्याम्नानस्य न विरोधः-इत्येकः प्रकारः प्रदर्शितः ।

'पठ्यतेऽपि च' इत्यादिवाक्येन, छान्दोग्येऽपि श्मशानाग्निरुपास्यत्वेनाम्नात इति, उभयत्रापि षडग्न्युपासनमेवेति पक्षान्तरं दर्शितम् ।

'वाजसनेयिनस्तु साम्पादिकेषु' इत्यादिना, 'छान्दोग्ये वाजसनेयके च पञ्चैवाग्नय उपास्यत्वेन प्रतिपाद्यन्ते, छान्दोग्ये 'तं प्रेतं दिष्टम्' इति षष्ठाग्निप्रतिपादनं वाजसनेयके तस्याग्निरेवाग्निरित्यादिप्रतिपादनं च अनुवादमात्रम्' इति पक्षान्तरं दर्शितम् ।

ननु यदि षष्ठस्याग्नेर्नोपास्यत्वं कथं तर्हि तस्याग्निरेवाग्निरित्यादिना तत्रापि समिदादिकं वाजसनेयके समाम्नातम्—इत्याशङ्क्याह — साम्पादिकेष्विति । सम्पत्—आरोपः, तेन कल्पिताः साम्पादिकाः द्युलोकादयोऽग्नयः । तथा च, तस्याग्निरेवाग्निरित्यादिना प्रसिद्धानामेवाग्न्यादीनामग्नित्वादिप्रतिपादनं 'इह द्युलोकादिष्विव उपासनोपयुक्तमग्न्यादिकं नास्ति' इति द्योतनाय । अतोऽयं नोपास्य इति श्रुतितात्पर्यम्—इति भावः ।

अथाप्युपासनार्थ एष वादः, तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम् । न चात्र पञ्चसंख्याविरोध आशङ्क्यः । सांपादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता न विधिसमवायिनीति अदोषः ।

एवं प्राणसंवादादिष्वपि अधिकस्य गुणस्य इतरत्रोपसंहारो न विरुद्ध्यते ।

न च आवापोद्वापभेदात् वेद्यभेदो विद्याभेदश्च आशङ्क्यः । कस्यचित् वेद्यांशस्य आवापोद्वापयोरपि भूयसो वेद्यराशेः अभेदावगमात् ।

तस्मात् ऐकविद्यमेव ॥ २ ॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यदप्युक्तं आथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणात् अन्येषां

---

पठ्यतेऽपिचेति वाक्येन, यः 'उभयत्रापि षडग्नय उपास्याः' इति पक्षो दर्शितः तत्र अभिमतिं द्योतयन् अमुं पक्षं समर्थयते—अथाप्युपासनार्थ इति । विकल्पपक्षस्तावत् अष्टदोषदुष्टतया न समञ्जसः, अनुवादपक्षोऽपि व्यर्थतादोषग्रस्तः इति भावः । न विधिसमवायिनीत्यदोष इति । ननु—पञ्चाग्निविद्यायां स्पष्टो विधिर्नोपलभ्यते, अपि तु 'असौ वाव लोको गौतमाग्निः तस्यादित्य एव समित्' इति सिद्धवदाम्नानानुसारेण विधिरुन्नेयः । तथा च, 'अथ य एतान् पञ्चाग्नीन् वेद' इति पञ्चत्वसङ्ख्याकीर्तनानुसारेण तद्विशिष्टानामेवाग्नीनामुपास्यत्वविधिरुन्नीयताम्—इति चेत्, न—वाजसनेयके तस्याग्निरेवाग्निरित्यादिना षष्ठस्याग्नेरपि आम्नाततया तस्याप्युपास्यत्वावश्यम्भावे पञ्चत्वसङ्ख्यायाः अविधेयत्वोन्नयनात् । अतः सा कल्पिताग्न्यभिप्राया अनूद्यते इत्येवोपगन्तव्यमिति भावः । 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यादिना आम्नातायाः प्राणविद्यायाः छान्दोग्यवाजसनेयकयोः प्रत्यभिज्ञया ऐक्ये सति, रेतोरूपः प्राणो वाजसनेयके आम्नातः छान्दोग्ये उपसंहर्तव्यः—इत्याह—एवं प्राणसंवादादिष्वपीति ॥ २ ॥

समाचारशब्दः आथर्वणिकानां वेदाध्ययनाङ्गव्रतोपदेशपरग्रन्थनाम, तस्मिन् ग्रन्थे तथात्वेन-अध्ययनाङ्गव्रतत्वेन शिरोव्रतस्याम्नानात् स्वाध्यायस्य-अध्ययनस्य अङ्ग

च तदनपेक्षणात् विद्याभेद इति, तत् प्रत्युच्यते—स्वाध्यायस्यैष धर्मो न विद्यायाः । कथमिदमवगम्यते ? यतः, तथात्वेन-स्वाध्यायधर्मत्वेन समाचारे-वेदव्रतोपदेशपरे ग्रन्थे आथर्वणिकाः 'इदमपि वेदव्रतत्वेन व्याख्यातम्' इति समामनन्ति । 'नैतदचीर्णव्रतोऽधीते' (मु. उ. ३।२।११) इति च अधिकृतविषयादेतच्छब्दात् अध्ययनशब्दाच्च 'स्वोपनिषदध्ययनधर्म एवैषः' इति निर्धार्यते ।

ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मु. उ. ३।२।१०) इति ब्रह्मविद्यासंयोगश्रवणात् एकैव सर्वत्र ब्रह्मविद्येति संकीर्येत एष धर्मः ;

न—तत्रापि एतामिति प्रकृतप्रत्यवमर्शात् । प्रकृतत्वं च ब्रह्मविद्यायाः ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येव एष धर्मः ।

---

शिरोव्रतमिति 'स्वाध्यायस्य तथात्वेन समाचारे' इतिसूत्रांशं योजयति—स्वाध्यायस्यैष धर्म इति । स्वाध्यायधर्मत्वप्रतिज्ञायामेव अधिकाराच्चेति हेत्वन्तरम् । तद्व्याचष्टे—नैतदचीर्णव्रतोऽधीते इति चेति ।

ननु 'नैतदचीर्णव्रतोऽधीते' इतिवचनानुसारेण समाचारग्रन्थगत 'इदमपि वेदव्रतत्वेन व्याख्यातम्' इतिवचनानुसारेण च भवतु शिरोव्रतस्याध्ययनाङ्गत्वम् । इदमेव आथर्वणवाजसनेयकगताक्षरविद्याया एकत्वे नोपपद्यते । न ह्येकैव विद्या शिरोव्रतयुक्ताध्ययनगृहीता सती फलजननसमर्था तदभावेऽपि फलजननसमर्थेति विरुद्धरूपान्वयिनी शक्योपगन्तुम् । यदि तु-आथर्वणिकानां शिरोव्रतविशिष्टाध्ययनपूर्विकैव फलवती विद्या अन्येषां तु तदभावेऽपीति व्यवस्थितविकल्पाभ्युपगमात् न विरोधः, तदापि-'तेषामेवैतां ब्रह्मविद्यां वदेत' इति वाक्येन साक्षाद्ब्रह्मविद्याङ्गत्वमेव तस्यावगम्यते । अतः कथं विद्यैक्यम्-इति शङ्कते—नन्विति । सङ्कीर्येतेति । न च सङ्करः शक्यते उपगन्तुम् । शिरोव्रतस्य आथर्वणिकमात्राधिकारिकत्वात् । अतो विद्याभेद एव विरोधपरिहारायोपगन्तव्य इति भावः ।

ग्रन्थविशेषापेक्षमिति । तथा च आथर्वणोपनिषत्प्रतिपाद्यत्वेनैव रूपेण शिरोव्रतस्य ब्रह्मविद्याङ्गत्वं न स्वरूपेणेति पर्यवस्यति । एवञ्च एतदुपनिषदध्य-

सर्ववच्च तन्नियम इति निदर्शननिर्देशः । यथा च सवाः सप्त सौर्यादयः शतौदनपर्यन्ताः वेदान्तरोदितत्रेताग्न्यनभिसंबन्धात् आथर्वणोदितैकाग्न्यभिसंबन्धाच्च आथर्वणिकानामेव नियम्यन्ते, तथैव अयमपि धर्मः स्वाध्यायविशेषसंबन्धात् तत्रैव नियम्यते। तस्मादप्यनवद्यं विद्यैकत्वम् ॥३॥

## दर्शयति च ॥ ४ ॥

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् 'सर्वे

---

यनोपायां अक्षरविद्यां ये सम्पादयन्ति तेषामेव शिरोव्रतापेक्षा नान्येषामिति न सर्वेषां तदपेक्षा । अतो न विद्याभेदः । एकस्यामेव विद्यायां शिरोव्रततदभावयोः व्यवस्थयोपपत्तेः । शिरोव्रतमाथर्वणिकानामेव नान्येषामिति व्यवस्थापि तस्याध्ययनविशेषसंयोगादेव उपपादनीया-इत्यभिप्रेत्याह--तथैवायमपि धर्म इति ।

इयता प्रबन्धेन विद्याभेदकतया पूर्वपक्ष्युद्भावितेषु नामरूपधर्मविशेषपुनरुक्तिसमाप्तिभेदान्यार्थदर्शनाशक्त्वेषु नामरूपधर्मविशेषान्यार्थदर्शनानि परिहृतानि ।

समाप्तिभेदोऽपि न विद्याभेदसाधकः । छान्दोग्यमाण्डूक्यादिषु प्रणवसार्वात्म्यादिना समाप्तिव्यवहारः अस्यां शाखायां एतावन्त्येवाङ्गानीत्यभिप्रायः, न त्वस्या उपासनाया एतावन्त्येवाङ्गानीत्यभिप्रायः ।

शाखाभेदेन पुनरुक्तिरपि न भेदापादिका । अभ्यासाधिकरणे अनन्यप्रयोजनायाः पुनरुक्तेरेव भेदसाधकतोपगमात् । शाखाभेदे तु 'स्वाध्यायोऽध्येतव्यः' इति विधौ स्वशब्दोपादानेन, पितृपितामहादिपरम्परागतशाखाध्ययनेनैव तस्यविधेश्चरितार्थतया, शाखान्तराध्ययने नियमाभावात्, शाखाभेदेन पुनःपुनराम्नानस्य तत्तच्छाखाध्यायिपुरुषबोधनोपयुक्ततया निष्प्रयोजनत्वाभावात् ।

अत एव अशक्तिरपि नास्ति । यदि हि सर्वशाखाध्ययनपूर्वकमेव अङ्गजातमवगन्तव्यमिति निर्बन्धो भवेत्, तदा सर्वशाखाध्ययनस्य कर्तुमशक्यतया सकलाङ्गोपसंहारेण अशक्यं विद्यैक्ये अनुष्ठानं भवेत्, तत्तु नास्त्येवेत्युक्तम् । अतः स्वशाखोक्तान्यङ्गानि अध्ययनपूर्वकं ज्ञात्वा, शाखान्तरोक्तान्यङ्गानि तत्तच्छाखाध्यायिभ्यो वा महर्षिप्रणीतकल्पविशेषेभ्यो वा ज्ञातुं शक्यन्त एव । अतो विद्यैक्ये न काचिदनुपपत्तिः ॥ ३ ॥

वेदा यत्पदमामनन्ति' (क. उ. २।१५) इति। तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगाः' (ऐ. आ. ३।२।३।१२) इति च। तथा 'महद्भयं वज्रमुद्यतम्' (क. उ. ३।२) इति काठके उक्तस्य ईश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते 'यदा ह्येवैष एतस्मिन् उदरमन्तरं कुरुते, अथ तस्य भयं भवति, तत्त्वेव भयं विदुषोऽमन्वानस्य' (तै. उ. २।७।१) इति। तथा, वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा. उ. ५।१८।१) इति। तथा सर्ववेदान्तप्रत्ययत्वेन अन्यत्र विहितानां उक्थादीनां अन्यत्र उपासनविधानायोपादानात् प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥ ४ ॥

## २ उपसंहाराधिकरणम्

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

इदं प्रयोजनसूत्रम्।

---

सर्ववेदान्तेषु वेद्यैकत्वोपदेशादिति। ननु-सर्वेषु वेदेषु वेद्यैकत्वप्रतिपादनं विद्यैक्ये कथं लिङ्गम्? इत्थं-यथा ह्येकस्यैव ब्रह्मणः शाखाभेदेनाम्नानेऽपि पुनरुक्तिः दोषाय न भवति बोध्यपुरुषभेदात्, एवं विद्यैक्येऽपि न पुनरुक्तिर्दोषायेति दृष्टान्तविधया वेद्यैक्यं विद्यैक्यावगमकं भवति।

सिद्धवदुपादानमिति। तद्धि उपसंहारं द्योतयत् विद्यैक्यं द्योतयति। वाजसनेयकगतस्य प्रादेशमात्रत्वस्य छान्दोग्ये उपसंहाराभावे सिद्धवदुपादानानुपपत्तेः। प्रायदर्शनन्यायेनेति। यथा शाखाभेदेऽपि उक्थादीनां न भेदः, एवं उक्थादिसन्निधौ समाम्नातानामुपासनानामपि न शाखाभेदेन भेदः ॥ ४ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्

इदं प्रयोजनसूत्रमिति। विद्यैक्ये सति अर्थसिद्धे उपसंहारे पुनस्सूत्रकरणं शङ्काविशेषनिवर्तनाय।

**स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानां, अन्यत्रोदितानां विज्ञानगुणानां अन्यत्रापि समाने विज्ञाने उपसंहारो भवति, अर्थाभेदात्—य एव हि तेषां गुणानां एकत्रार्थो विशिष्टविज्ञानोपकारः, स एवान्यत्रापि। उभयत्रापि हि तदेवैकं विज्ञानम्। तस्मादुपसंहारः।**

---

अत्रेयं शङ्का—अस्तु शाखाभेदेन दहरशाण्डिल्यादिविद्यानामैक्यम्। अथापि शाखान्तरोक्ता गुणा अन्यत्र नोपसंहरणीयाः। यदि हि शाखान्तरोक्तानां गुणानां शाखान्तरे उपसंहारः श्रुतिसम्मतो भवेत्, तदा एकस्यां शाखायां ये गुणा उक्ताः, तेषु मध्ये कमपि गुणं शाखान्तरे तस्यामुपासनायां न प्रतिपादयेत्, उपसंहारसम्भवात्, अपि तु अन्यत्रानुक्तानेव गुणान् प्रतिपादयेत्। तथा च, सम्भवदुपसंहाराणामपि गुणानां प्रतिपादनं अनुपसंहारं द्योतयति। न च—शाखान्तरोक्तानामपि गुणानां अनुपसंहारे सर्वाङ्गजन्योपकाराभावात् विद्या फलवती न भवेत्, विनियोगानुसारेण तेषामपि गुणानां उपकारकत्वावगमात्-इति वाच्यम्। [1]यतः पुनराम्नानानुसारेण एवं कल्प्यते-यस्यां शाखायां यावन्तो गुणा आम्नाताः तच्छाखिनां तस्यामुपासनायां तावद्भिरेव गुणैः अखण्डोपकारनिष्पत्तिरिति। अपि च शाखान्तरोक्तगुणानामुपसंहारे, अस्यां शाखायां येन क्रमेण गुणा अनुसन्धेया इति आम्नानतोऽवगम्यते स क्रमोऽपि बाधितः स्यात्, गुणान्तरावापे क्रमवैपरीत्यावश्यंभावात्। अतो विद्यैक्येऽपि नोपसंहारः-इति।

अत्रायं परिहाराभिप्रायः—शाखान्तरोक्तानामेव गुणानां पुनः शाखान्तरे आम्नानं न उपसंहाराभावं गमयति। तद्धि शाखान्तराम्नातविद्याप्रत्यभिज्ञाद्वारा [2]विद्यैक्यगमकम्। अतः तदभावे विद्यैक्यस्यैवाज्ञानेन गुणोपसंहारासम्भवात्[3] न सम्भवत्प्राप्तिकं तदाम्नानम्। नापि क्रमविरोधादनुपसंहारः। क्रमो हि पाठक्रमाख्यसन्निधिविशेषप्रमाणकः पदार्थधर्मश्च। गुणास्तु शाखान्तरगतश्रुत्यादिप्रमाणकाः क्रमधर्मिणश्च। अतो गुणोपसंहारानुसारेण क्रमबाध एव न्याय्यः-इति।

---

1. मु. 'यतः' नास्ति

1. आ. विद्यैक्यावगमकम्

2. न सम्भवत्प्रासिकं तदाम्नानम् 'पुनःशाखान्तरेगुणाम्नानं सम्भवत्प्रासिकरणविषयम्' इत्येतत् नैव स्यात् इत्यर्थः।

विधिशेषवत् । यथा हि विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेति अर्थाभेदात् उपसंहरणं एवमिहापि ।

यदि हि विज्ञानभेदो भवेत्, ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकारभावाभावाच्च न स्यात् उपसंहारः, विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ॥ ५ ॥

३. अन्यथात्वाधिकरणम्

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजसनेयके 'ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचुः त्वं न उद्गायेति' (बृ. उ. १।३।२) इति प्रक्रम्य वागादीन् प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते 'अथ हेममासन्यं प्राणं ऊचुः त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति। तथा छान्दोग्येऽपि 'तद्ध देवा उद्गीथमाजह्रुः अनेनैनानभिभविष्यामः' (छा. उ. १ २।१) इति प्रक्रम्य इतरान् प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते 'अथ ह य एवायं मुख्यः

---

ननु—कर्मभेदेऽपि दर्शादिगतानामङ्गानां पश्वादिषु प्राप्तिर्दृष्टा, एवं विज्ञानानां भेदेऽपि अन्यदीया गुणा अन्यत्र प्राप्यन्ताम्-इत्यत आह—प्रकृतिविकारेति । यत्र हि श्रुत्यादिप्रमाणकः प्रकृतिविकारभावो भवति, तत्र अन्यस्या अपि प्रकृतेर्धर्माः विकारे भवन्ति । विज्ञानानां तु न तथा प्रकृतिविकारभावः, [1]मानसप्रत्ययविशेषाणां तेषां आम्नातैरेव गुणैः अनुष्ठानस्य कर्तुं शक्यतया इतिकर्तव्यताकाङ्क्षाराहित्येन [2]तन्मूलचोदनालिङ्गादिकल्प्यातिदेशाप्रवृत्तेः-इति भावः । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्च इति । शङ्काविशेषनिराकरणेनेति भावः ॥ ५ ॥

इति उपसंहाराधिकरणम्

अधिकरणद्वयेन सप्रयोजनं निरूपितस्य विद्यैक्यस्य अत्र अपवादः क्रियत इति सङ्गतिः । देवाः-सात्विकावस्थानि चक्षुरादीन्द्रियाणि असुरान्-राजसतामसाव-

---

1. आ. मानसप्रत्ययरूपाणां
2. आ. तन्मूलचोदनादिलिङ्गकल्प्या

प्राणः तमुद्गीथमुपासांचक्रिरे’ (छा. उ. १।२।७) इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते ।

तत्र संशयः—किमत्र विद्याभेदः स्यात् आहोस्वित् विद्यैकत्वमिति ।

किं तावत् प्राप्तं ? । पूर्वेण न्यायेन विद्यैकत्वमिति ।

ननु न युक्तं विद्यैकत्वं प्रक्रमभेदात्—अन्यथा हि प्रक्रमन्ते वाजसनेयिनः अन्यथा छन्दोगाः—‘त्वं न उद्गाय’ इति वाजसनेयिनः उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगास्तु उद्गीथत्वेन ‘तमुद्गीथमुपासांचक्रिरे’ इति । तत् कथं विद्यैकत्वं स्यादिति चेत्—

---

स्थानीन्द्रियाणि । वाजसनेयके ‘देवाश्चासुराश्च..ते एषु लोकेष्वस्पर्धन्त’ इति देवासुरशब्दोदितानामिन्द्रियाणां कलहमुपक्रम्य, ‘हन्तासुरान् यज्ञ उद्गीथेनात्ययाम’ इति उद्गीथाश्रयणेनासुरात्ययाभिप्रायं च देवानां प्रदर्श्य, त्वन्नउद्गायेत्येवंरूपेण वाग्घ्राणचक्षुश्श्रोत्रमनसां उद्गातृत्वेन नियोगे तैः तथेतिप्रतिज्ञापूर्वकमौद्गात्रकर्मकरणे च प्रतिज्ञाते तदारम्भे च सति असुराणां तच्चेष्टावगमात् तैः वागादयः असुरपाप्मना अप्रतिरूपवदनादिना विद्धा इति वागादीन्निन्दित्वा, ‘अथहेममासन्यंआस्ये भवं प्राणं ऊचुः त्वन्न दुगायेति तथेति तेभ्य एष प्राण उदगायत्’ इति प्राणस्योद्गातृत्वप्रार्थने, तेन चाङ्गीकृते, पुनः प्राणं प्रत्यपि वागादिवदेव पाप्मवेधाभिप्रायमात्रेण असुराणां ‘स यथा अश्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुः’ इति अश्मलोष्टनिदर्शनेन असुरविध्वंसनं च प्रतिपाद्य ‘ततो देवा अभवन् पराऽसुराः’ इति प्राणाश्रयात् देवैरसुराः पराभूताः-इति प्रतिपादितम् । छान्दोग्येऽपि ‘देवासुरा ह वै यत्र संयेतिरे’ इत्यादिना इन्द्रियसङ्ग्रामाद्युपवर्णनं वाजसनेयकवदेव सर्वं कृतम्, परं तु तत्र वागादयो नोद्गातृत्वेनाम्नाताः, अपि तु उद्गीथत्वेन । तेषां च असुरपाप्मवेधेन निन्दापूर्वकं मुख्यप्राणस्यापि उद्गीथत्वमेवाम्नातम् । ‘अथ ह य एवायं मुख्यः-मुखे भवः प्राणः तमुद्गीथमुपासाञ्चक्रिरे’ इति ।

आख्यायिकातात्पर्यमाह—उभयत्रापि चेति । छान्दोग्ये उद्गीथालम्बनं प्राणोपासनमवगम्यते वाजसनेयके उद्गात्रालम्बनमिति तु विशेषः । ‘अन्यथात्वं शब्दादिति चेत्’ इत्यन्तस्सूत्रांशः सिद्धान्त्याक्षेपप्रदर्शनार्थः । तं व्याचष्टे—ननु न

**नैष दोषः—न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति। अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्। तथाहि—देवासुरसंग्रामोपक्रमत्वं असुरात्ययाभिप्रायः उद्गीथोपन्यासः वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रयः तद्वीर्याच्चासुरविध्वंसनमश्मलोष्टनिदर्शनेन—इत्येवं बहवोऽर्था उभयत्रापि अविशिष्टाः प्रतीयन्ते। वाजसनेयकेऽपि च उद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम् 'एष उ वा उद्गीथः' (बृ. उ. १।३।२३) इति। तस्मात् छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम्। तस्माच्च विद्यैकत्वमिति ॥६॥**

---

युक्तमित्यादिना। नाविशेषादित्यंशः तन्निराकरणेन पूर्वपक्षप्रदर्शनार्थः। तं व्याचष्टे—**नैष दोष इति।**

**अविशेषस्यापि बहुतरस्येति।** ननु—'बहुतरांशप्रत्यभिज्ञानेन उद्गीथालम्बनत्वोद्गात्रालम्बनत्ववैषम्यं बाधनीयं भूयोऽनुग्रहस्य न्याय्यत्वात्' इति पूर्वपक्ष्यभिमतं न समीचीनम्। यत्र हि समकक्ष्याणामेव भूयस्त्वाल्पत्वं तत्रैव भूयोऽनुग्रहन्यायः। अत्र तु स्तुत्युपयोगितया अर्थवादोपात्तानामेव भूयसामर्थानां प्रत्यभिज्ञा। उपास्यस्य तु प्रधानस्य उद्गीथस्य उद्गातुश्च नास्ति प्रत्यभिज्ञा, अपि तु वैषम्यात् प्रत्यभिज्ञाविच्छेद एवेति उपास्यभेदादवगम्यमानं विद्ययोर्भिन्नत्वं न अर्थवादावगतार्थसादृश्येन हातुं शक्यम्-इति चेत्,

न—उपास्यस्याप्युभयत्र प्रत्यभिज्ञानात्। छान्दोग्ये वाजसनेयके चोभयत्रापि हि प्राणांशेन अस्त्युपास्येऽपि प्रत्यभिज्ञानम्। उद्गीथांशेनापि प्रत्यभिज्ञानमाह—**वाजसनेयकेऽपि चेति।** तथा च विद्यैक्ये सति, वाजसनेयके उद्गीथोद्गात्रोस्समुच्चयात् छान्दोग्येऽपि उद्गात्रुपसंहारेण समुच्चयो द्रष्टव्यः ॥६॥

अयमत्र सिद्धान्ताभिप्रायः—यद्यपि उपास्यांशेऽपि प्राणमादाय अस्ति प्रत्यभिज्ञानम्, तथापि, नात्र प्राणस्य प्राधान्येन उपास्यत्वम्, अपि तु प्राणदृष्ट्या कर्माङ्गयोरेव उद्गीथोद्गात्रोः उपास्यत्वम्। यथा चैतत् तथा 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इतिचातुर्थिकाधिकरणे स्पष्टं भविष्यति। ततश्च अप्रधानप्राणांशमादाय प्रत्यभिज्ञानं नाभेदसाधकम्, प्रधानोपास्यांशमादाय प्रत्यभिज्ञाविच्छेदेन भेदावगमात्।

यदपि पूर्वपक्षिणा-उभयत्राप्युद्गीथस्योपास्यत्वावगमात् अभेदो विद्ययोः-इत्युक्तं तदपि न सम्भवति, छान्दोग्ये हि उद्गीथावयव ओङ्कार उपास्यः,

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

न वा विद्यैकत्वं अत्र न्याय्यम्, विद्याभेद एवात्र न्याय्यः। कस्मात्? प्रकरणभेदात् - प्रक्रमभेदादित्यर्थः। तथाहि इह प्रक्रमभेदो दृश्यते। छान्दोग्ये तावत् 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां. उ. १।१।१) इत्येवं उद्गीथावयवस्योंकारस्योपास्यत्वं प्रस्तुत्य रसतमत्वादिगुणोपव्याख्यानं तत्र कृत्वा अथ 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' (छा. उ. १।१।१०) इति पुनरपि तमेवोद्गीथावयवमोंकारमनुवर्त्य देवासुराख्यायिकाद्वारेण तं 'प्राणं उद्गीथमुपासांचक्रिरे' इत्याह। तत्र यदि उद्गीथशब्देन सकला भक्तिः अभिप्रेयेत तस्याश्च कर्ता उद्गाता ऋत्विक्, ततः उपक्रमश्चोपरुध्येत लक्षणा च प्रसज्येत। उपक्रमतन्त्रेण च एकस्मिन् वाक्ये उपसंहारेण भवितव्यम्। तस्मात् अत्र तावत् उद्गीथावयवे ओंकारे प्राणदृष्टिरुपदिश्यते। वाजसनेयके तु, उद्गीथशब्देनावयवग्रहणे कारणाभावात् सकलैव भक्तिः आवेद्यते, 'त्वं न उद्गाय' इत्यपि तस्याः कर्ता उद्गातर्त्विक् प्राणत्वेन निरूप्यते इति प्रस्थानान्तरम्।

यदपि तत्र उद्गीथसामानाधिकरण्यं प्राणस्य, तदपि उद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति, न विद्यैकत्वमाव-

---

वाजसनेयके तु न अवयवलक्षणायां प्रमाणमस्ति-इति प्रतिपादयितुं छान्दोग्यगतमुपक्रममनुसन्धत्ते— छान्दोग्ये तावदिति। उद्गीथावयवस्योङ्कारस्येति। एतच्च उत्तराधिकरणे स्पष्टं भविष्यति। ननु ओमित्येतदक्षरमुद्गीथमुपासीतेति वाक्ये उद्गीथपदं अवयवलक्षणया ओङ्कारपरमस्तु, अक्षरपदसामानाधिकरण्यात्। प्राणमुद्गीथमुपासाञ्चक्रिरे इत्यत्र तु उद्गीथपदस्योङ्कारपरत्वे किं नियामकम्-इत्याशङ्क्य, ओमित्येतदक्षरमितिवाक्यप्रस्तुते एवोङ्कारे रसतमत्वापयितृत्वसमृद्धिगुणकान्युपासनान्युक्त्वा, अनतिवृत्ताधिकारमेवोङ्कारं 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति पुनः परामृश्य 'प्राणमुद्गीथमुपासाञ्चक्रिरे' इतिवाक्यप्रवृत्तेः, अत्र उद्गीथशब्द ओङ्कार एवेति निर्धार्यते-इत्यभिप्रेत्याह—रसतमत्वादीति।

एवं वाजसनेयके उद्गीथस्योपास्यत्वप्रतिपादनेऽपि, सकलैव तत्र भक्तिर्गृह्यत इति वैषम्यं प्रतिपाद्य, तत्र उद्गीथस्य प्राणदृष्ट्योपास्यत्वमेव नास्तीत्याह—यदपीति।

**इति। सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम्। न च प्राणस्योद्गातृत्वं असंभवेन हेतुना परित्यज्येत, उद्गीथभाववत् उद्गातृभावस्यापि उपासनार्थत्वेनोपदिश्यमानत्वात्। प्राणवीर्येणैव च उद्गाता औद्गात्रं कर्म करोतीति नास्त्यसंभवः। तथा च तत्रैव श्रावितं 'वाचा च ह्येव स प्राणेन चोदगायत्' (बृ. उ. १।३।२४) इति।**

'एष ह वा उद्गीथः' इति वाक्यं न प्राणदृष्ट्या उद्गीथस्य उपास्यत्वं प्रतिपादयति। अपि तु उपक्रमानुसारेण उद्गातरि द्रष्टव्यत्वेन प्रस्तुतस्य प्राणस्य यथा 'सोऽयास्य आङ्गिरसः' इत्यादिभिर्वाक्यैः अयास्याङ्गिरसत्वं बृहस्पतित्वं ब्रह्मणस्पतित्वं सामत्वं इत्येवमादयो गुणाः प्राणस्य सर्वशरीरव्याप्तिरूपसर्वात्मत्वालम्बनाः प्रतिपादिताः, तद्वत् उद्गीथत्वमपि प्राणस्य प्रतिपादयति। अत एव वाक्यशेषे उद्गीथशब्दस्य निर्वचनं प्राण एव दर्शितं—'प्राणो वा उत् प्राणेन हीदं सर्वमुत्तब्धं वागेव गीथा उच्च गीथा च उद्गीथः' इति। ननु—'एष ह वा उद्गीथः' इति वाक्यपर्यालोचनयामास्तु उद्गीथस्योपास्यत्वम्, 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्युपक्रमानुरोधात् उद्गीथस्योपास्यत्वसिद्धौ 'अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति' इति वाक्ये कर्तृप्रतिपादकमुद्गायेतिपदं उद्गानकर्मण्येवोद्गीथे सौकर्यातिशयविवक्षया भविष्यति-इत्याशङ्क्याह—**सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति।** अस्तु उक्तगत्या वाजसनेयकेऽप्युद्गीथस्योपास्यत्वम्, तथापि, छान्दोग्ये ओङ्कार उद्गीथावयव उपास्यः वाजसनेयके तु कृत्स्नः-इत्यस्ति भेदः। वस्तुतस्तु 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्यत्र उद्गीथस्य न प्राणदृष्ट्योपास्यत्वमवगम्यते, अपि तु, प्रकृतोपासनाफलभूतासुरात्ययसाधनत्वमात्रमवगम्यते। तत्तु, प्रकृतोपासनाया यज्ञान्तर्गतौद्गात्रकर्ममध्ये कर्तव्यतया आश्रयत्वेन उद्गीथस्य प्रविष्टत्वात् उपपद्यत इति, न तदनुसारेण भूयसां उद्गातृवाचकानां पदानां लक्षणा न्याय्या। अस्तु वा उद्गीथस्यापि उपास्यत्वम्, तथापि, समुच्चयोपपत्त्या उपक्रमोपसंहारविरोधाभावात् न [1]उद्गायेत्यस्य असकृदभ्यस्तस्य लक्षणा उचिता। उद्गातरि प्राणदृष्टौ आलम्बनं वक्तुं शङ्कते—**न च प्राणस्येति।**

1. मु. उद्गातेत्यस्य

न च विवक्षितार्थभेदे अवगम्यमाने वाक्यच्छायानुकारमात्रेण समानार्थत्वं अध्यवसातुं युक्तम् । तथाह्यभ्युदयवाक्ये पशुकामवाक्ये च 'त्रेधा तण्डुलान् विभजेत् ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' इत्यादिनिर्देशसाम्येऽपि, उपक्रमभेदात् अभ्युदयवाक्ये देवतापनयोऽध्यवसितः पशुकामवाक्ये तु यागविधिः । तथा इहापि उपक्रमभेदात् विद्याभेदः ।

---

तथाह्यभ्युदयवाक्ये पशुकामवाक्ये चेति ।

एवमाम्नायते—'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान् विभजेत् ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति । अत्रायमनुष्ठानक्रमः—[1]दर्शे, अमावास्यायामेव दर्शार्थं वेद्यग्निप्रणयनादिकं कर्तव्यम् । तत्र, यदि चतुर्दश्यामेव अमावास्याभ्रान्त्या वेद्यादिकं कृतं तत्र इदं प्रायश्चित्तप्रतिपादकं वाक्यम् । तस्यार्थः—यस्य यजमानस्य हविर्निर्वापे सति पुरस्तात् चन्द्रोदयो भवेत् सः त्रेधेत्यादिवाक्यप्रतिपाद्यं कर्म कुर्यात्—इति ।

तत्र संशयः—किं अनेन वाक्येन प्रतिपाद्यते—किं प्रकृताद्दर्शात् कर्मान्तरमेव ? उत तस्यैव नैमित्तिको विकृतः प्रयोगः ? इति ।

तत्र पूर्वः पक्षः—यदि दर्शस्यैव विकारः अनेन विधीयेत, तदा 'ये मध्यमाः' इति प्रथमवाक्ये अग्न्यनुवादेन दातृत्वगुणविधानात् पुरोडाशप्रकृतिभूतानां च तण्डुलानां मध्यमत्वगुणविधानात् वाक्यभेदः । यदि तु मध्यमानुद्दिश्य अग्निदेवतासम्बन्धमात्रं विधीयत इत्युच्यते, तदापि, मध्यमानामग्निसम्बन्धः अग्नेश्च दातृत्वगुणसम्बन्धः इति वाक्यभेदः । एवं द्वितीयवाक्ये, स्थविष्ठानामिन्द्रसम्बन्धः तस्य च प्रदातृत्वगुणसम्बन्धः प्रणीताकार्ये दधि पुनः चरुत्वं विधेयमिति अत्यन्तं वाक्यभेदः । एवं तृतीयवाक्येऽपि शिपिविष्टत्वगुणः विष्णुरूपा देवता क्षोदिष्ठानां च शृताधिकरणत्वं चरुत्वं च विधेयमिति वाक्यभेदः । अतः, 'प्राप्तदर्शानुवादेन निमित्ते सति गुणरूपो विकारो विधीयते' इति वक्तुं न शक्यते । अपि च-प्राप्ते

---

1. दर्शे—दर्शेष्टौ श्वःकरिष्यमाणायाम् ।

दर्शत्रिके तण्डुला अग्न्यर्थं सम्पादिताः शृतं दधि च इन्द्रार्थम् । तत्र यदि 'ये स्थविष्ठाः' इति वाक्येन इन्द्रसम्बन्धः, 'येक्षोदिष्ठाः' इति वाक्येन [1]विष्णुसम्बन्धश्च विधीयेत, तदा उत्पत्तिशिष्टदेवतावरुद्धे देवतान्तरनिवेशो वक्तव्यः, तदपि न न्याय्यम् । अतः द्रव्यदेवताविशिष्टं अपूर्वं नैमित्तिकं विधीयते, अपूर्वं च कर्म अनेकगुणविशिष्टं विधातुं शक्यत इति न वाक्यभेदः–इति ।

सिद्धान्तस्तु–सत्यपि वाक्यभेदादौ, प्राप्तस्य दर्शस्य नैमित्तिकविकारो विधीयते, श्रुतिस्वारस्येन कर्मैक्यावगमात् ।

तत्र यद्यपि 'उत्पत्तिशिष्टन्यायेन इन्द्रादेः तण्डुलादिषु न निवेशः' इति प्रकृते वक्तुं न शक्यते, उत्पत्तिशिष्टस्यापि अग्न्यादेः नित्यतया नैमित्तिकेन उत्पन्नशिष्टेनापीन्द्रादिना बाधसम्भवात्, नित्यनैमित्तिकयोर्मध्ये नैमित्तिकस्य प्रबलत्वात् ;

तथापि, वचनेनापि उत्पत्तिशिष्टानां देवतानां हविस्सम्बन्धोऽपनीयत[2] इति उत्पत्तिशिष्टन्यायाशङ्कावकाश एव प्रकृते नास्ति । 'त्रेधा तण्डुलान् विभजेत्' इति वाक्यं हि न तण्डुलानां मध्यमादिभावेन त्रिप्रकारविभागपरम्, 'ये मध्यमाः' इत्याद्युत्तरवाक्यैरेव त्रेधा देवताविध्यनुसारेण तदर्थस्य प्राप्तत्वात् । अतः–अर्थान्तरं किञ्चिद्वक्तव्यम् । '[3]तच्च किम्' इत्यपेक्षायां, लाघवात् विभजेदित्येतावन्मात्रं विधीयते, 'कस्य विभागः' इत्यपेक्षायां, स्ववाक्योपात्तानां तण्डुलानां अन्वयस्य [4]वैयर्थ्यपराहतत्वात्, विभागसामर्थ्यादेव संयुक्तं किञ्चित् विभागान्वयीति सामान्यतोऽवगमे सति, प्रकृतदर्शान्वितानामेव द्रव्याणां येमध्यमाइत्यादिवाक्ये यत्पदश्रवणेन अनुवादावगमात्, तेषां च देवतान्तरसम्बन्धकरणात्, तदुपपत्तये पूर्वदेवतापनयोऽपेक्षित इति, देवताभिस्संयुक्तं दर्शद्रव्यं देवताभ्यो विभजेत्–इत्यर्थः सिध्यति । त्रेधातण्डुलानिति तु, हविष एव [5]अवयुत्यानुवादः ।

---

1. मु॰ विष्णुशिपिविष्टसम्बन्धश्च
2. आ॰ अपनीतः
3. तच्चकिमित्यपेक्षायामिति 'इत्यर्थःसिद्ध्यति' इत्यनेनान्वेति ।
4. वैयर्थ्येति तण्डुलानां त्रेधाविभागस्य येमध्यमाइत्यादिवाक्यप्राप्तत्वात् वैयर्थ्यं तण्डुलान्वयस्येति ज्ञेयम् ।
5. अवयुत्य—हविस्त्रये एकं पृथक्कृत्य ।

यद्यपि 'ये मध्यमाः' इत्यादिवाक्यैर्यच्छब्दघटितैः प्रकृतद्रव्यानुवादेन नैमित्तिकदेवतासम्बन्धविधानादेव पूर्वदेवतापनयस्सिध्यति, तथापि, दर्शे केषाञ्चिदुपांशुयाजस्यापि सत्त्वात् तदीयहविषो देवतान्तरविधानाभावात् सामर्थ्येन पूर्वदेवतापनयो न प्राप्नोतीति, आज्यस्य पूर्वदेवतापनये वचनं सार्थकम् ।

अतो न प्रकृतहविषां देवताविधानमनुपपन्नम् । प्रकृतकर्मप्रत्यभिज्ञानाच्च, सत्यपि वाक्यभेदे तत्रैव गुणविधानं न्याय्यम् ।

तत्र यद्यपि, सन्निधिमात्रकृतं प्रत्यभिज्ञानं न वाक्यभेदाभ्युपगमेन कर्मैक्यसाधनक्षमं, तथापि, लिङ्गान्तरसहकृतं भवत्येव तत्साधकम् । तथा हि श्रूयते— 'यदि बिभीयात् अभिमोदेष्यतीति महारात्रे हवींषि निर्वपेत्, फलीकृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात्, अर्धं न, यद्यभ्युदियात् तेनातच्य प्रचरेत्, यदि न, तेन ब्राह्मणान् भोजयेत्' इति ।

अस्यार्थः–किं चतुर्दश्यामेवामावास्याभ्रमात् दर्श आरब्धः अतश्चन्द्रमा मामभिमुख उदेष्यति? उत स्वकाल एव?–इति सन्दिहानस्य यद्यकालोपक्रमप्राप्तकर्मवैगुण्यनिमित्तं भयं भवेत्, तदा अर्धरात्रे हविर्निरुप्य फलीकरणान्तं कृत्वा तूष्णीमासीत, [1]पेषणादिकं न कुर्यात् सायन्दोहसम्पादितं च दधि द्वेधा कुर्यात् । तत्र, यदि चन्द्रोदयो भवेत् तदा स्वकालकर्तव्यदर्शार्थं सायन्दोहसम्पाद्यं यद्दधि तदुपयोग्यातञ्चनार्थं अर्धं निदध्यात्, अर्धान्तरं वेद्यामेव निदध्यात्, न त्वातञ्चनार्थम् । यद्युदयो भवेत्, तदा आतञ्चनार्थं स्थापितेन दध्ना सायन्दोहं पुनरातच्य स्वकाले दर्शं कुर्यात्, यद्युदयो न भवेत्, तदा अविगुणस्य निर्वृत्ततया पुनःकरणानपेक्षणात् [2]आतञ्चनाभावेन प्रतिपत्त्यपेक्षं स्थापितं दधि ब्राह्मणभोजनेन प्रतिपादयेत् ।

अत्र–अभ्युदयपक्षे पुनरातञ्चनविधानं पूर्वपक्षे नोपपद्यते । यदि हि दर्शः स्वकाले पुनरारम्भणीयः स्यात्, तदा सायन्दोहेन पुनर्दधिसम्पादनाय आतञ्चनमपेक्षितमिति, इदं वाक्यं तत्र पूर्वप्रयोगसम्पादितदधिशेषेणैव आतञ्चनं कार्यमिति

---

1. मु. पेषणादिकं तु द्रव्यविशिष्टस्य कर्मणो विधीयमानतया तत्र न कुर्यात्

2. **आतञ्चनाभावेनेति** आतञ्चनार्थनिहितादन्येन दध्ना दर्शनिर्वृत्त्या उपयोगाभावात् आतञ्चनं यतो नास्ति ततो हेतोः इत्यर्थः ।

नियमाय भविष्यति । तच्च सिद्धान्ते शक्यते वक्तुम् । अकालारब्धस्य दर्श-प्रयोगस्य विकृतस्य समापनेन पूर्वं सम्पादितस्य दध्नो विकृतप्रयोगोपयुक्तत्वात्, पुनः सङ्कल्पमारभ्य नित्यप्रयोगस्य स्वकाले कर्तव्यतया, तत्र सायन्दोहेन दधिसम्पादन-स्यावश्यकत्वात् ।

ननु—पूर्वपक्षेऽपि अकालोपक्रान्तस्य दर्शस्य परित्यागेन पुनः नैमित्तिकस्य कर्मान्तरस्य सङ्कल्पप्रभृतिसकलाङ्गयुक्तस्य समापनानन्तरं स्वकाले दर्श आरम्भणीयः। तत्र सायंदोहेन दध्नस्सम्पादनाय पुनरातञ्चनं प्राप्तमिति पूर्वशेषेणैव आतञ्चनं कार्य-मिति नियमपरत्वं सम्भवत्येव । न च तथापि पूर्वं सम्पादितस्य दध्नो नैमित्तिके कर्मान्तरे अविनियुक्तत्वेन विद्यमानतया तेनैव स्वकालकर्तव्यदर्शसिद्धेः पुनर्दधि-सम्पादनायातञ्चनं न प्रसज्यत इति वाच्यम् । अकालसम्पादितस्य दध्नो विगुण-तया तस्य दर्शाङ्गत्वानुपपत्तेरिति चेत्;

न—यद्यपि पूर्वं कर्म अकाले आरब्धं, तथापि तत् समापनीयमेव[1] । ततश्च, कालापराधदोषस्य नैमित्तिकेन कर्मणा परिहृततया स्वकाले पूर्वारब्धस्यैव दर्शस्य परिसमाप्तिः [2]प्रसज्यते । तत्र च पूर्वसम्पादितमेव दध्यादिकं हविः प्रायश्चित्त-परिहृतकालदोषं सम्पन्नमस्तीति पुनरातञ्चनाप्राप्तेः वाक्यमिदमनुपपन्नं भवेत् । न च 'पूर्वसम्पादितं हविः अभ्युदये निमित्ते विधीयमाने कर्मान्तरे उपयुक्तमिति वाच्यम्। कर्मान्तरविधिपक्षे द्रव्यविशिष्टस्य कर्मणो विधीयमानतया तत्र द्रव्यस्योपादेयत्वेन, 'पूर्वकर्मशेषभूतं द्रव्यं ग्राह्यम्' इत्यत्र प्रमाणाभावेन, द्रव्यस्यान्यस्यैव सम्पादनीय-त्वात् । तथा च येमध्यमास्स्युरित्यादिवाक्यगतं यत्पदमपि पूर्वपक्षिणा क्लेशेनैव व्याख्येयम् । सिद्धान्ते तु, प्रकृतद्रव्योद्देशेनैव निमित्ते देवताविधानपरत्वाद्वाक्यस्य न काचिदनुपपत्तिः ।

अतः कर्मैक्यस्य प्रमाणसिद्धतया येमध्यमाइत्यादिषु वाक्येषु वाक्यभेदा-पत्तिः न दोषाय । अपि च—सन्निधिकृतप्रत्यभिज्ञानानुसारेण कर्मैक्यावगमस्य वाक्यैकत्वरक्षणाय बाधोऽस्तु नाम । सन्निधेः वाक्यमपेक्ष्य दुर्बलत्वात् । इह तु, न केवलं सन्निधिमात्रेण दर्शस्य प्रत्यभिज्ञा, अपि तु, दर्शद्रव्यमेव अभ्युदयनिमित्तके कर्मणि अङ्गमिति द्रव्यैक्येन उपोद्बलिता । तच्च कर्मभेदे नोपपद्यते, अन्यशेषभूतस्य

1. एवेति एवेन परित्यागव्यावृत्तिः ।
2. आ. तव प्रसज्ज्यते

अन्यत्राङ्गत्वकल्पनायाः क्लिष्टत्वात् । दार्शिकद्रव्यमेव इहाङ्गमिति तावत् येमध्यमा इत्यादौ यत्पदेनावगम्यत इति स्फुटमेव ।

तथा, 'फलीकृतैस्तण्डुलैरुपासीत' इति-फलीकरणान्तं कृत्वा चतुर्दशी-सन्देहे सति तूष्णीं स्थेयमित्यपि, तथा अवगमयति । फलीकरणानन्तरं पेषणादौ सति तण्डुलत्वलोपेन चरुसम्पत्तिर्न स्यात्—इति हि तस्य तात्पर्यम् । यदि द्रव्यान्तरमेव अभ्युदयेष्टौ स्यात्, तदा पूर्वसम्पादितानां तण्डुलानां रक्षणं वृथैव स्यात् ।

तथा, द्वेधा कृतस्य दध्नः आतञ्चनार्थं स्थापितस्य अभ्युदयाभावपक्षे पुनः कर्मणोऽप्रसङ्गात् प्रतिपत्त्यपेक्षस्य ब्राह्मणभोजनेन प्रतिपत्तिः प्रतिपाद्यते 'तेन ब्राह्मणान् भोजयेत्' इति, न त्वर्थान्तरस्य । अभ्युदयपक्षे, यदि ह्यभ्युदयेष्टिः कर्मान्तरं तदा पूर्वस्यैव दध्नो ग्रहणे प्रमाणाभावात् अन्यार्थमुपात्तस्य च अन्यत्र विनियोगानुपपत्तेः, [1]तस्यापि प्रतिपत्तिरपेक्षितेति सापि [2]प्रतिपाद्येत । अतो ज्ञायते— अभ्युदयेष्टिर्न कर्मान्तरं तदेव च दधि अत्रोपयुज्यते-इति ।

तथा, शृतेचरुमिति शृतशब्दोऽपि संस्कृतस्य पयसो वाचकः, तथा च, प्रातर्दोहसम्पादनीयं यत् दार्शिकप्रयोगाङ्गं तदेव शृतपदार्थ इति दर्शद्रव्यमेव अभ्युदयेष्टावङ्गम् । अन्यथा 'आदित्यः प्रायणीयः पयसि चरुः' इतिवत् 'विष्णवे शिपिविष्टाय पयसि चरुम्' इत्येव स्यात् ।

तथा च द्रव्यमुखेन सम्पन्नायाः प्रत्यभिज्ञाया अनन्यथासिद्धतया, येमध्यमाः इत्यादिवाक्येऽपि[3] एकवाक्यताबाधेन दर्शविकृतप्रयोगपरतैव वाक्यस्योपेयेति, दार्शिकद्रव्येष्वपनीतदेवताकेषु देवतान्तरविधिरेवायम् - इति अभ्युदयवाक्ये प्रति-पादितम् ।

पशुकामवाक्यं तु एवमाम्नायते—'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये स्थविष्ठाः तानग्नये सनिमतेऽष्टाकपालं निर्वपेत् ये मध्यमाः तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति ।

तत्र सन्देहः — किमिदमपि वाक्यं दार्शिककर्मद्रव्ये एव देवताविधिपरम्, उत द्रव्यदेवताविशिष्टकर्मान्तरविधिपरम् ? इति ।

---

1. तस्यापि—अर्थान्तरस्यापि ।
2. प्रतिपाद्येतेति 'न तु प्रतिपाद्यते' इति शेषः ।
3. आ. वाक्यत्रयेऽपि

**परोवरीयस्त्वादिवत्** । यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं, स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा. उ. १।९।२) इति परोवरीयस्त्वगुणविशिष्टमुद्गीथोपासनं अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नम्, न च इतरेतरगुणोपसंहारः एकस्यामपि शाखायां, तद्वत् शाखान्तरस्थेष्वप्येवंजातीयकेषूपासनेषु-इति ॥ ७ ॥

---

तत्र, येस्थविष्ठाइति द्रव्यमुखेन प्रकृतकर्मप्रत्यभिज्ञानात् अभ्युदयवाक्यमिव प्रकृतकर्मण्येव देवताविधिपरमिति पूर्वः पक्षः ।

सिद्धान्तस्तु—अमावास्यामिष्ट्वेति, प्रकृतस्य कर्मणः क्त्वाप्रत्ययेन समाप्तिद्योतनात्, तत्र देवतान्तरविधानमनुपपन्नमिति द्रव्यदेवताविशिष्टकर्मान्तरविधिरेव, 'ये स्थविष्ठाः' इत्यादौ यत्पदं तु लोकप्रसिद्धानामेव तण्डुलानां अनुवादकं भविष्यति, शृतशब्दोऽपि पयोमात्रलक्षकः-इति ।

तथाच, अभ्युदयवाक्यस्य पशुकामवाक्यस्य च छायातौल्येऽपि, यथा पूर्वदेवतापनयादिबलात् तत्र पूर्वस्मिन्नेव कर्मणि विधिः, अन्यत्र, इष्ट्वेति समाप्तिप्रतिपादनात् कर्मान्तरविधिः-इत्यर्थवैषम्यमाश्रितम्, तथा, छान्दोग्यवाजसनेयकयोर्देवासुरसङ्ग्रामादिप्रतिपादनतौल्येऽपि उपास्यवैलक्षण्याद्विद्याभेद एवोपेयः ।

**यथा परमात्मदृष्ट्यध्याससाम्येऽपीति** । अन्तरादित्यविद्यायां उद्गीथः परमात्मदृष्ट्योपास्यः, आकाशविद्यायामपि उद्गीथ एव परमात्मदृष्ट्योपास्यः, तथापि, यथा गुणभेदात् उपासनयोर्भेदः, तथा अत्रापि प्रधानोपास्यभेदात् भेदः इति सौत्रनिदर्शनार्थः ।

ननु—अन्तरादित्यविद्याया आकाशविद्यायाश्च यद्यपि असाधारणगुणा बहवो विलक्षणाः, तथापि, उत्पत्तिविध्यैक्यादैक्यं प्राप्नोति । उद्गीथाध्याये हि रसतमत्वाप्तिसमृद्धिगुणोपासनाविधयः, अनन्तरं आदित्यप्राणदृष्टिविधानं अधिदैवताध्यात्मभेदेन, ततोऽमृताभयादिदृष्टिविधानं, ततोऽन्तरादित्यविद्या, ततः आकाशविद्या । सर्वत्रापि 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येक एव उपासनोत्पत्तिविधिः अन्ये सर्वे गुणविधयः-इति । यदि तु-तत्र अधिकारभेदेन गुणानां फलानां च प्रतिपादनात् प्राप्ते कर्मणि तस्यतस्य वाक्यस्य नानागुणानां फलानां च बोधकत्वे वाक्यभेदः स्यात्, 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इत्येवमादिना पृथगधिकारकरणञ्च

व्यर्थं स्यात् । तथापि—तस्यैवोत्पन्नस्योपासनस्य एते तत्तद्गुणफलविशिष्टस्य प्रयोगस्य विधयो भवन्तु, न तु उत्पत्तिविध्यैक्ये विद्याभेदो वक्तुं शक्यते । न च—ओमित्येतदक्षरमुद्गीथमुपासीतेति नोत्पत्तिविधिः, अपि तु, वक्ष्यमाणासूपासनासु उद्गीथावयवत्वविशिष्टप्रणवरूपालम्बनविधिरिति-वाच्यम् । तथासति उपासीतेत्यत्र [1]धातुपारार्थ्यं प्रसज्ज्येत । अपि च—वक्ष्यमाणासूपासनासु यद्ययं आलम्बनविधिः स्यात्, तथासति, प्राप्तोपासनानुवादेन ओमित्येतदक्षरं आलम्बनं तस्मिंश्चालम्बने उद्गीथपदेन उद्गीथावयवत्वं विधेयम्, उत्तराधिकरणे उद्गीथपदस्य उदगीथावयवपरताया वक्ष्यमाणत्वात् । एवंसति वाक्यभेदः । [2]न च—नात्र ओङ्काररूपमालम्बनं विधीयते, अपि तु, वक्ष्यमाणानामुपासनानां खल्वेतस्यैवाक्षरस्योपव्याख्यानंभवतीत्यधिकारानुसारेणैव ओङ्कारे प्राप्ते तदनुवादेन उद्गीथावयवत्वमात्रं विधीयते-इति वाच्यम् । अन्तरादित्यादिवाक्येषु तथाधिकाराभावेन तत्र ओङ्कारस्याप्राप्तत्वात् । येषु च वाक्येषु तथाधिकारोऽस्ति तत्र उद्गीथस्यापि श्रवणेन ओमित्येदक्षरमुद्गीथमुपासीतेतिवाक्याभावेऽपि उद्गीथावयवत्वलाभसम्भवात् । अतोऽयं उत्पत्तिविधिरेव, तदैक्याच्च कथं आकाशविद्याया अन्तरादित्यविद्याया भेदः - इति चेत्;

उच्यते—अस्य उत्पत्तिविधित्वेऽपि, देवासुरसङ्ग्रामाख्यायिकातः प्राक् ये रसतमत्वादयो गुणाः फलानि च प्रतिपादितानि तत्सम्बन्ध्येवायम् । प्राणविद्यायां 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति पृथगधिकारकरणात् तदारभ्य अन्य एव उपासनाविधिः, एतद्विशेषत्वे तस्य इत एव अक्षरालम्बनत्वलाभात् पृथगधिकारो व्यर्थ एव स्यात् । तथा च ओमित्येतदक्षरमित्युत्पन्नस्योपासनस्य 'आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते' इति आप्तिगुणविशिष्टः कामापयितृत्वफलकः एकः प्रयोगः, 'समर्धयिता ह वै कामानां भवति' इति

---

1. **धातुपारार्थ्यं प्रसज्ज्येत**—धात्वर्थस्य अप्राधान्यं-अविधेयत्वं प्रसज्ज्येत । न चेष्टापत्तिः युक्ता । एकपदश्रुत्या उपासनस्य विधेयत्वप्रतीतेः । अन्यथा सोमेन-यजेतेत्यत्रापि अधिकारविधिलभ्ययागानुवादेन सोमगुणमात्रविधित्वकल्पनप्रसङ्गात् ।

2. **न चेत्यादि** एतच्छङ्काग्रन्थोक्तार्थः शिवार्कमणिदीपिकायां उत्पत्तिविधित्व-निराकरणपूर्वकं सिद्धान्तत्वेन व्यवस्थापितः । एषान्तु व्याख्यातृणां उत्पत्तिविधित्व-मेवेष्टमिति "उच्यते" इत्यादौ समनन्तरग्रन्थे स्पष्टं भविष्यति । परिमलस्याप्युत्पत्ति-विधित्वमेवेष्टम् ।

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत—संज्ञैकत्वात् विद्यैकत्वं अत्र न्याय्यम्, उद्गीथविद्येति हि उभयत्राप्येका संज्ञा-इति; तदपि नोपपद्यते। उक्तं ह्येतत् 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' इति। तदेव चात्र न्याय्यतरम्। श्रुत्यक्षरानुगतं हि तत्। संज्ञैकत्वं तु श्रुत्यक्षरबाह्यं उद्गीथशब्दमात्रयोगात् लौकिकैर्व्यवहर्तृभिरुपचर्यते। अस्ति चैतत् संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषु उद्गीथविद्येति, तथा प्रसिद्धभेदानामप्यग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते, तथेहापि

---

समृद्धिगुणविशिष्टः कामसमर्धयितृत्वफलकः अपरः प्रयोगः। रसतमत्वगुणे तु विशिष्य फलाश्रवणेऽपि, अनुक्तफलेषु सामान्यतः फलप्रतिपादकेन 'यदेव विद्ययेतिवाक्येन कर्मसमृद्धिः फलं सिद्ध्यति। प्राणाद्युपासनानि तु भिन्नान्येव, एतद्विध्यसंस्पर्शात्। तदनन्तरं च अन्तरादित्यादिविद्याः समाम्नाता इति न तत्र उत्पत्तिविध्यैक्यम्।

अस्तु वा उद्गीथाध्याये वक्ष्यमाणानि यान्युपासनानि प्रस्तावादिविरुद्धालम्बनानवरुद्धानि तेषां सर्वेषां उत्पत्तिविधिरयम्; तथापि, न उपासनानामैक्यं प्रसज्यते। पृथगुत्पत्तिविधिसिद्धभेदानामेव अयं तन्त्रेण संग्रहोपक्रमः। एतस्य संग्रहरूपता च तस्योपव्याख्यानमितिवाक्येन उत्तरसन्दर्भस्यैतद्विवरणतयावतारणात् अवगम्यते। खल्वेतस्यैवाक्षरस्योपव्याख्यानंभवतीति तु मध्ये समाम्नानं अस्यैव सर्वत्रानुवृत्तिद्योतनाय। एवञ्च अन्तरादित्यादिविद्यासु विशिष्याक्षरग्रहणाभावेऽपि एतदुपक्रमानुसारादेव तास्वपि उद्गीथावयवप्रणवालम्बनत्वं सिध्यति। 'प्राणविद्यातः प्रागेवानुवृत्तिः ओमित्येतदितिवाक्यस्य' इति पक्षे तु न सिध्यति। अपि च तस्मिन्नपि अयमुपक्रमो व्यर्थः। रसतमत्वादिगुणेष्वपि 'ओमित्येतदक्षरमुद्गीथः' [छा. उ. १-१-५] इत्यादिवाक्यपर्यालोचनयैव प्रणवालम्बनत्वसिद्धेः-इत्यलं प्रपञ्चेन।

परोवरीयान्—परश्चासौ वरश्चेति परोवरः, निपातनादोत्वम्, अतिशयेन परोवरः परोवरीयान् ॥ ७ ॥

भविष्यति । यत्र तु नास्ति कश्चित् एवंजातीयको भेदहेतुः, तत्र भवतु संज्ञैकत्वात् विद्यैकत्वं, यथा संवर्गविद्यादिषु ॥ ८ ॥

४ व्याप्त्यधिकरणम्

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. उ. १।१।१) इत्यत्र अक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणे अध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभानात् कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः ।

तत्र अध्यासो नाम - द्वयोर्वस्तुनोः अनिवर्तितायामेवान्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते - यस्मिन्नितरबुद्धिरध्यस्यते अनुवर्तत एव तस्मिन् तद्बुद्धिः अध्यस्तेतरबुद्धावपि । यथा नाम्नि ब्रह्मबुद्धौ अध्यस्यमानायामपि अनुवर्तत एव नामबुद्धिः, न ब्रह्मबुद्ध्या निवर्तते । यथा वा प्रतिमादिषु

---

स्पष्टम् ॥ ८ ॥

इति अन्यथात्वाधिकरणम्

पूर्वाधिकरणे छन्दोगानां प्राणविद्या उद्गीथावयवोङ्कारालम्बनेत्युक्तं, तदिह साध्यत इति सङ्गतिः ।

सामानाधिकरण्ये श्रूयमाणे इति । ननु—यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या...सोमं क्रीणाति' इत्यादौ कारकविभक्तेः प्रत्येकं श्रवणात् सर्वेषामारुण्यादीनां भावनयैवान्वयः न तु परस्परम्, तथा अत्रापि 'अक्षरं उद्गीथम्' इति कारकविभक्तिद्वितीयाश्रवणात् भावनायामेवान्वय उचित इति कथं सामानाधिकरण्यं श्रूयते-इति चेत्; पार्ष्ठिकान्वयमादाय सामानाधिकरण्यावगमोऽस्ति, स एव 'श्रूयमाणे' इतिपदेन विवक्षितः ।

अनिवर्तितायामेवान्यतरबुद्धाविति । ननु—आलम्बनस्य नामादेरन्यतरस्य नामत्वाद्याकारबुद्धौ अनिवर्तितायां कथं तत्र विष्ण्वादिबुद्धिः स्यात्, विष्ण्वाद्यभेदग्रहरूपस्याध्यासस्य भेदाग्रहरूपकारणाधीनत्वात्, नामत्वादेर्भेदकस्य च ज्ञानं भेदाग्रहविरोधि इति—चेत्; न—इह अध्यासपदेन आहार्यारोपो विवक्षितः, तत्र च न भेदकज्ञानं विरोधि, अनाहार्यभ्रमे एव तस्य विरोधित्वात् ।

विष्ण्वादिबुद्ध्यध्यासः। एवमिहापि अक्षरे उद्गीथबुद्धिरध्यस्यते उद्गीथे वा अक्षरबुद्धिरिति।

अपवादो नाम - यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेः निवर्तिका भवति। यथा-देहेन्द्रियसंघाते आत्मबुद्धिः आत्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्वमसि' इत्यनया यथार्थबुद्ध्या निवर्त्यते। यथा वा-दिग्भ्रान्तिबुद्धिः दिग्याथात्म्यबुद्ध्या निवर्त्यते। एवमिहापि अक्षरबुद्ध्या उद्गीथबुद्धिर्निवर्त्यते उद्गीथबुद्ध्या वा अक्षरबुद्धिरिति।

एकत्वं तु अक्षरोद्गीथशब्दयोः अनतिरिक्तार्थवृत्तित्वम्। यथा द्विजोत्तमो ब्राह्मणो भूमिदेवः इति।

विशेषणं पुनः—सर्ववेदव्यापिनः ओमित्येतस्याक्षरस्य ग्रहणप्रसङ्गे औद्गात्रविषयस्य समर्पणम्। यथा-नीलं यदुत्पलं तदानयेति। एवमिहापि, उद्गीथो य ओंकारः तमुपासीतेति।

एवं एतस्मिन् सामानाधिकरण्यवाक्ये विमृश्यमाने एते पक्षाः प्रतिभान्ति। तत्र अन्यतमनिर्धारणे कारणाभावात् अनिर्धारणप्राप्तौ—

इदमुच्यते—व्याप्तेश्च समञ्जसमिति। चशब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः। तदिह, त्रयः पक्षाः सावद्या इति पर्युदस्यन्ते। विशेषणपक्ष एवैको निरवद्य इत्युपादीयते।

---

अनिर्धारणप्राप्ताविति। ननु—निर्धारितप्रामाण्यस्य [1]वेदस्य पूर्वपक्षिणापि नियतोऽर्थो वक्तव्यः, न त्वप्रामाण्यावहमनिर्धारणमेव—इति चेत्; उच्यते— अयमत्र पूर्वपक्षाशयः—'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्र उद्गीथः प्रणवश्चेति उपासनायां विषयद्वयम्, अथवा द्वयोःपदयोःसामानाधिकरण्यम्-इति विशये, सामानाधिकरण्यपक्षस्य अध्यासाद्यन्यतमस्कन्धनिर्धारणाभावेन स्वीकर्तुमशक्यतया, वैयधिकरण्यमवलम्ब्य, यथा 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादौ तुल्यविभक्तिश्रवणेऽपि देवताद्वयमुपेयते एवमिहापि प्रत्येकं द्वितीयासमभिव्याहारात् उपास्यद्वयमुपेत्य तद्विशिष्टोपासनाविधिपरत्वमास्थेयम्—इति।

---

1. मु. 'वेदस्य' नास्ति

तत्र अध्यासे तावत्, यद्बुद्धिः इतरत्राध्यस्यते तच्छब्दस्य लक्षणा-वृत्तित्वं प्रसज्येत, तत्फलं च कल्प्येत। श्रूयत एव फलं 'आपयिता ह वै कामानां भवति' (छा. उ. १।१।७) इत्यादीति चेत्, न–तस्य अन्य-फलत्वात्। आप्त्यादिदृष्टिफलं हि तत् न उद्गीथाध्यासफलम्।

अपवादेऽपि समानः फलाभावः। मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न-पुरुषार्थोपयोगानवगमात्। न च कदाचिदपि ओङ्कारात् ओङ्कार-बुद्धिर्निवर्तते उद्गीथाद्वा उद्गीथबुद्धिः। न चेदं वाक्यं वस्तुतत्त्वप्रति-पादनपरम्, उपासनाविधिपरत्वात्।

नापि एकत्वपक्षः संगच्छते; निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्, एकेनैव विवक्षितार्थसमर्पणात्। न च हौत्रविषये आध्वर्यवविषये

---

सिद्धान्तस्तु–समानविभक्तिश्रवणात् सामानाधिकरण्यं प्रतीयते, अग्नयेच-प्रजापतयेचेत्यत्र चशब्दस्तदपवादकः, नेहतदस्तीति, अक्षरोद्गीथपदयोधर्म्यैक्यपर्य-वसानमपेक्षितम्, न च तत्र अनध्यवसायः–इति निरूपयितुं अध्यासादिपक्षान् दूषयति—तत्राध्यासे तावदिति।

आप्त्यादिदृष्टिफलं हि तदिति। ननु–'आपयिता ह वै कामानाम्' इत्यादेः अक्षरोद्गीथाध्यासफलत्वाभावेऽपि यदेवविद्ययेतिवाक्यप्रतिपाद्यं कर्मसमृद्धि-रूपं तत्फलं वक्तुं शक्यत इति किमिति अध्यासपक्षः परित्यज्यते—इति चेत्; न–अध्यासविवक्षायां अक्षरोद्गीथयोस्साधारणधर्म एव प्रतिपादनीयः स्यात्। 'ओमिति ह्युद्गायति' इत्युत्तरवाक्ये तु अक्षरोद्गीथयोस्सम्बन्ध एव प्रतिपाद्यते। अतो नाध्यासो विवक्षितः।

नन्वथापि 'अध्यासपक्षे लक्षणावृत्तित्वं प्रसज्यते' इति कथमुच्यते। न हि इह शाब्दं सामानाधिकरण्यम्, अपि तु पार्ष्ठिकम्। पार्ष्ठिकबोधश्च मानस इति न तत्र शब्दव्यापारः—इति चेत्; न—सामानाधिकरण्ये हि यद्यपि कारकद्वारा क्रियायामेव अक्षरोद्गीथपदार्थयोरन्वयः, तथापि कारकान्वयितया द्वाभ्यां पदाभ्यां एक एव धर्मी बोधनीयः। तत्र, यदि अक्षरपदेन अक्षरत्वाकारेणोद्गीथो बोध्यते उद्गीथपदेन वा उद्गीथत्वाकारेण अक्षरं बोध्यते उभयथापि अन्यशब्दस्य अन्यत्र वर्तनात् लक्षणा प्रसज्यत एवेति भावः।

वा अक्षरे ओंकारशब्दवाच्ये उद्गीथशब्दप्रसिद्धिरस्ति, नापि सकलायां साम्नो द्वितीयायां भक्तौ उद्गीथशब्दवाच्यायां ओंकारशब्दप्रसिद्धिः, येन अनतिरिक्तार्थता स्यात् ।

परिशेषात् विशेषणपक्षः परिगृह्यते । व्याप्तेः—सर्ववेदसाधारण्यात् । सर्वव्याप्यक्षरं इह माप्रसञ्जीत्यतः उद्गीथशब्देन अक्षरं विशेष्यते, कथं नाम उद्गीथावयवभूत ओंकारो गृह्येतेति ।

ननु अस्मिन्नपि पक्षे समाना लक्षणा, उद्गीथशब्दस्य अवयवलक्षणार्थत्वात् ।

सत्यमेवमेतत् । लक्षणायामपि तु सन्निकर्षविप्रकर्षौ भवत एव । अध्यासपक्षे हि अर्थान्तरबुद्धिः अर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा । विशेषणपक्षे तु अवयविवचनेन शब्देन अवयवः समर्प्यत इति सन्निकृष्टा । समुदायेषु हि प्रवृत्ताः शब्दाः अवयवेष्वपि प्रवर्तमाना दृष्टाः पटग्रामादिषु ।

---

उद्गीथशब्देनाक्षरं विशेष्यत इति । न च—यथा उद्गीथावयवत्वं ओङ्कारे समर्पयत् उद्गीथपदं अक्षरपरमित्युच्यते, एवं अक्षरपदमपि अक्षरावयवित्वं समर्पयत् उद्गीथपरमेवास्तु, न ह्यन्यतरनिर्धारणोपयोगि किञ्चिन्नियामकमस्ति—इति वाच्यम् । उत्तरत्र 'कतमाकतमर्क् कतमत्कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति, वागेवर्क् प्राणस्साम ओमित्येतदक्षरमुद्गीथः' इति वाक्येन उद्गीथपदार्थः क इति प्रश्नं कृत्वा उद्गीथ ओङ्कार इति प्रतिपादनात्, खल्वेतस्यैवाक्षरस्योपव्याख्यानंभवतीति उत्तरत्र अक्षरप्राधान्यस्यैवानुसन्धानाच्च, ओङ्कारे एव उद्गीथावयवत्वम्-इत्यवगम्यते, ततश्च, वक्ष्यमाणासूपासनासु उद्गीथावयवोङ्कारातिरिक्तोङ्कारव्यावृत्तिः सिध्यति ।

नन्वस्मिन्नपि पक्ष इति । ततश्च कोऽध्यासपक्षाद्विशेष इति भावः । विप्रकृष्टा लक्षणेति । यथा हि 'मुखं चन्द्रः' इति रूपकस्थले चन्द्रपदात् चन्द्रत्वप्रकारकबोधे सत्यपि चन्द्रपदेन मुखव्यक्तिप्रतिपादनात् लक्षणा, तत्र चालम्बनं मुखे चन्द्रसादृश्यं, आरोपश्च चन्द्रत्वस्य मुखे स्वीकार्यः, एवं, इहाप्यध्यासपक्षे उद्गीथपदेनोङ्कारव्यक्तिप्रतिपादनं तत्र च उद्गीथत्वारोपः आलम्बनं च उद्गीथाभेददृष्टिविषयत्वं इति स्वीकार्यम् । अतो गौरवम् । अवयवलक्षणापक्षे तु अवयविपदस्याव-

अतश्च, व्याप्तेर्हेतोः ओमित्येतदक्षरमित्येतस्य उद्गीथमित्येतत् विशेषणमिति समञ्जसमेतत्—निरवद्यमित्यर्थः ॥ ९ ॥

### ५ सर्वाभेदाधिकरणम्

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्य उपास्यत्वमुक्तम् । वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः । ते च गुणाः प्राणे पुनः प्रत्यर्पिताः 'यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' (बृ. उ. ६।१।१४) इत्यादिना । अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानम्, एता ह वै देवता अहंश्रेयसे विवदमानाः' (कौ. उ. २।१४) इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तम्, न त्विमे वसिष्ठत्वादयो गुणा उक्ताः ।

तत्र संशयः—किं इमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्, उत नास्येरन्—इति ।

---

यववृत्तिमात्रं स्वीकार्यं नत्वारोपादिकमिति लाघवमित्यर्थः । पटग्रामादिष्विति । पटैकदेशे ग्रामैकदेशे च दग्धे 'पटो दग्धः' 'ग्रामो दग्धः' इति प्रयोगेष्वित्यर्थः ॥ ९ ॥

### इति व्याप्त्यधिकरणम्

अन्यथात्वंशब्दादित्यधिकरणे प्राणविद्याविषयको विचारः प्रवर्तितः । तत्प्रसङ्गात् उद्गीथपदस्य ओङ्कारलक्षणा प्रतिपादिता, अत्रापि प्राणविद्याविषयक एव विचारः क्रियत इति सङ्गतिः ।

[1]ननु—अस्मिन्नधिकरणे छान्दोग्यवाजसनेयकयोराम्नातायाः प्राणविद्याया ज्येष्ठत्वादिगुणान्वितायाः अथातो निःश्रेयसादानमित्यारभ्य कौषीतक्याम्नाताया प्राणविद्यायाश्च ऐक्यं सिद्धवत्कृत्य गुणोपसंहारानुपसंहारौ चिन्त्येते । तन्नोपपद्यते, विद्यैक्यस्यासम्भवात् । तदसम्भवश्च फलभेदात् रूपभेदाच्च । तथा हि—

कौषीतकिशाखायां 'तथो एवैवं विद्वान् सर्वेषां भूतानां प्राणमेव प्रज्ञात्मानं अभिसम्भूय सहैतैस्सर्वैरस्माच्छरीरादुत्क्रामति, स वायुप्रविष्ट आकाशात्मा स्वरेति

---

1. इयं नन्वित्यादिशङ्का "न विद्यैक्यमितिचेत्" इत्यन्ता ।

स तद्भवति यत्रैते देवाः, तत्प्राप्य तदमृतो भवति यदमृता देवाः' इति फलमाम्नायते। अस्यार्थः—तथा उ इति छेदः, उः अप्यर्थे। पूर्वस्मिन् वाक्ये प्राणेन मिलित्वा इन्द्रियाणि स्वर्गतानीति प्रतिपादितम्। विद्वानपि तथैव प्राणं प्रज्ञात्मानं अभिसंभूय मरणकाले प्राणं प्राप्य एतैरिन्द्रियैस्सहितः शरीरादुत्क्रामति, स आकाशवत्सूक्ष्मात्मा वायुदत्तच्छिद्रप्रविष्टस्सन् स्वः-सत्यलोकं एति यत्र—सत्यलोके देवा विद्यन्ते। सतद्भवतीत्यस्य विवरणं तत्प्राप्यतदमृतोभवतीत्यादि। अनेन, देवानां सत्यलोकस्थानां यत् प्राणदेवतासायुज्याख्यममृतं, तत् उपासकस्यापि भवतीति दर्शितम्। अतः कौषीतक्यां अथातोनिःश्रेयसादानमित्यारभ्याम्नाता प्राणविद्या प्राणदेवतासायुज्यफला।

छान्दोग्ये तु 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति' इति फलमाम्नातम्—प्राणो हि सर्वेभ्य इन्द्रियेभ्यो ज्येष्ठः। यौनौ निषिक्ते रेतसि प्राणस्य वृत्तिलाभः, इन्द्रियाणां तु तत्तद्गोलकोत्पत्त्यनन्तरम्, अतः प्राणो ज्येष्ठः। श्रेष्ठश्च—गुणैरुत्कृष्टः। ततश्च यथा वयसा प्राण इन्द्रियेभ्यो ज्येष्ठः गुणेभ्यश्चोत्कृष्टः एवं उपासकोऽपि भवति-इति।

वाजसनेयके चेदं ऐहिकत्वेन प्रतिपादितम् 'ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति' इति स्वशब्दोपादानात्।

अतः फलभेदस्तावत् उपगन्तव्यः।

तथा रूपभेदोऽप्युपगन्तव्यः—

छान्दोग्यवाजसनेयकयोर्हि प्राणश्श्रेष्ठ इति निर्धारणार्थं सर्वेषामिन्द्रियाणां प्राणस्य च प्रजापतिसकाशगमनमाम्नाय[1]—प्रजापतिना 'यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति प्रतिपादिते वाक्चक्षुश्श्रोत्रमनांसि क्रमेण उत्क्रान्तानि। तेषां मध्ये एकैकस्याभावे मूकत्वान्धत्वबधिरत्वाविवेकित्वान्येव यथायथं प्राप्तानि। अन्ये त्विन्द्रियव्यापारा जीवनं च स्थितमेव। प्राणस्य तूत्क्रान्तौ [2]उपस्थितायामेव सर्वेषामिन्द्रियाणामुत्क्रमणं प्राप्तम्। ततः 'प्राणश्श्रेष्ठः' इति निर्धार्य वाक्चक्षुश्श्रोत्रमनोरेतोभिः स्वस्वासाधारणा ये गुणा वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वप्रजातित्वरूपाः ते प्राणे प्रत्यर्पिताः 'यदहं वसिष्ठाऽस्मि त्वं

1. आम्नायेति 'प्राणश्रेष्ठत्वनिर्धारणं दर्शितम्' इत्यनेनान्वेति।
2. आ. उपक्रान्तायामेव

तद्वसिष्ठोऽसि' इतिप्रकारेण-इति प्राणश्रेष्ठत्वनिर्धारणं दर्शितम्। अत्र च वागादीनां वसिष्ठत्वादिकं स्वस्वकार्यकरत्वमेव, तस्य च प्राणाधीनत्वमित्यङ्गीकार एव प्राणे प्रत्यर्पणम्। अतः छान्दोग्यवाजसनेयकयोः वागादिकार्यस्य प्राणाधीनत्वानुसन्धानेन प्राणस्य श्रैष्ठ्यमवगम्यते।

कौषीतकिशाखायां तु 'अथातो निःश्रेयसादानम्' इति प्राणश्रैष्ठ्यावधारणमुपक्रम्य, प्राणसहितानामिन्द्रियाणां शरीरादुत्क्रान्तौ 'तत् दारुभूतं शिश्ये अथैनत् वाक् प्रविवेश तद्वाचावदत् शिश्य एव' इत्यादिना शरीरस्य जाड्यम्, एकैकप्रवेशे च वदनादिकार्यमेवासीत् नोत्थानंशरीरस्येति प्रतिपाद्य, 'प्राणप्रवेशे शरीरोत्थानमभवत् अतः प्राणश्श्रेष्ठः' इति निर्धारणं दर्शितम्। अत्र च, प्राणप्रवेशात् प्रागेव वागादीनां वदनादिकार्यावगमात् वागादिकार्यस्य प्राणानधीनत्वमवगम्यते।

अतो विरुद्धार्थयोरवगमे सति न विद्यैक्यमिति चेत्;

उच्यते—

छान्दोग्यवाजसनेयकयोः कौषीतक्यामिव प्राणदेवतासायुज्यं विवक्षितमेव। [1]प्राणदेवतासायुज्यं हि प्राणदेवतागतगुणान्वय एव। तच्च ज्येष्ठश्चश्रेष्ठश्च भवतीति प्रतिपादितमेव। न च वाजसनेयके स्वानामिति विशेषणेन ज्ञातीनां मध्ये ज्येष्ठश्श्रेष्ठो भवतीति ऐहिकत्वावगमात् कौषीतक्यां तु स्वरेतीत्यामुष्मिकत्वावगमात् भेदः शङ्कनीयः। वाजसनेयके 'ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति अपि च येषां बुभूषति' इति अन्यत्रापि ज्येष्ठत्वादिप्रतिपादनेन तत्रापि पारलौकिकफलत्वोपगमात्। अतो न फले विप्रतिपत्तिः।

नापि रूपभेदः। उभयत्रापि श्रेष्ठत्वगुणान्वितं प्राणतत्त्वं प्रत्यभिज्ञायते। तदुपपादनं परं छान्दोग्यवाजनेयकयोः कौषीतक्यां च असदर्थालम्बनेनार्थवादेन वैषम्येण क्रियते। न च प्रधानार्थसाम्ये सति असदार्थवादिकवैषम्येण विद्याभेदो भवति। आर्थवादिकसाम्यवैषम्ययोर्विद्याभेदाभेदाप्रयोजकत्वात् सतोः प्रधानार्थप्रत्यभिज्ञानतदभावयोः। न हि—प्राणसहितानां सर्वेषामिन्द्रियाणां युगपदेव उत्क्रान्तानां एकैकेन्द्रियप्रवेशेन प्राणाभावेऽपिवदनादिकार्यकरत्वं इत्यर्थः सन्-इति वक्तुं शक्यम्।

---

1. मु. प्राणदेवतासायुज्यमपि

तत्र प्राप्तं तावत् नास्येरन्निति । कुतः ? एवंशब्दसंयोगात् । 'अथो य एवं विद्वान् प्राणे निःश्रेयसं विदित्वा' इति तत्रतत्र एवंशब्देन वेद्यं वस्तु निवेद्यते । एवंशब्दश्च संनिहितावलम्बनो न शाखान्तरपरिपठितं एवञ्जातीयकं गुणजातं शक्नोति निवेदयितुम् । तस्मात् स्वप्रकरणस्थैरेव गुणैः निराकाङ्क्षत्वमिति ।

एवं प्राप्ते प्रत्याह—अस्येरन् इमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयः अन्यत्रापि । कुतः ? सर्वाभेदात् । सर्वत्रैव हि तदेवैकं प्राणविज्ञानं अभिन्नं प्रत्यभिज्ञायते, प्राणसंवादादिसारूप्यात् । अभेदे च विज्ञानस्य कथं इमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन् ।

---

नापि-एकैकेन्द्रियस्य उत्क्रान्तस्य पुनः प्रवेशः-इत्यर्थः सन् । परं तु, त्रिष्वपि आम्नानेषु एतावानर्थो विवक्षितः-शरीरेन्द्रियस्थितेः प्राणाधीनत्वात् प्राणश्श्रेष्ठः-इति । अपि च—वदनादियत्किञ्चित्कार्यस्य कौषीतक्यां प्राणानधीनत्वावगमेऽपि, वागादीनां वसिष्ठत्वादिरूपकार्यविशेषः प्राणाधीनत्वेन छान्दोग्यवाजसनेयकयोर्यः प्रतिपादितः तस्य शरीरोत्थानसाध्यत्वात् प्राणाधीनत्वं कौषीतक्यामप्यनुमतमेव । वाचो हि वसिष्ठत्वं लौकिकवैदिकविषयकसद्व्यवहारेण वसुमत्तासंपादकत्वम् । 'वसिष्ठो ह स्वानां भवति' इति तद्गुणफलाम्नानात् । स्वकार्यकरत्वमात्रस्य नित्यं विद्यमानतया फलत्वानुपपत्तेः । एवं चक्षुषः प्रतिष्ठात्वं समविषमभूमिदर्शनेन सम्यक्स्थितिहेतुत्वम्, 'प्रतितिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च' इति फलकीर्तनात्, वाजसनेयके च 'चक्षुषा हि प्रतितिष्ठति समे च दुर्गे च' इत्याम्नानाच्च । श्रोत्रस्य संपत्त्वं वेदादिग्रहणहेतुत्वात् धनादिसंपादकत्वम् । 'श्रोत्रे हीमे वेदा अभिसंपन्नाः सं हास्मै कामा अभिपद्यन्ते यं कामं कामयते' इति वाक्यशेषात् । मनस आयतनत्वं ऐहिकामुष्मिकभोगायतनत्वम् । उक्तरूपं च वसिष्ठत्वादिकं शरीरोत्थानानन्तरभाव्येवेति न कौषीतक्यां तदुपसंहारे विरोधोऽस्ति ।

ननु-यदि विद्यैक्यं, तथासति 'उपसंहारोऽर्थाभेदात्' इत्येवोपसंहारे सिद्धे कथं पूर्वपक्षः ? अत आह—एवंशब्दसंयोगादिति । अयमाशयः-एवंशब्दः प्रकृतपरामर्शकः । तथा च, तस्यां शाखायां यत् प्रकृतं तत् एवंपदेन परामृष्ट-

नन्वेवंशब्दः तत्र तत्र भेदेन एवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम् ।

---

व्यम् । कौषीतक्याञ्च वागादिगतवसिष्ठत्वादिहेतुत्वं ज्येष्ठत्वं च प्राणेऽनाम्नातमिति न तस्य परामर्शः सम्भवति । न च–शाखान्तरवाक्यैकवाक्यतया, शाखान्तराम्नातमपि इह प्रकृतमेवेति, तस्य परामर्शे काऽनुपपत्तिः–इति वाच्यम् । तथासति एवंशब्दो व्यर्थः स्यात्, तदभावेऽपि प्रकृतत्वादेव तेषां वेदनविषयत्वलाभसम्भवात् । अतः एवंशब्दो व्यर्थो मा भूदिति तस्य शाखान्तरंगतगुणव्यावृत्तिफलकतैव आस्थेया । नन्वेवंसति सर्वासु विद्यासु कर्मसु च तत्रतत्र प्रदेशे एवम्पदस्य श्रवणेन शाखान्तराम्नाताङ्गव्यावर्तकता भवेत्; भवतु पूर्वपक्षिणः का हानिः । एतदधिकरणसिद्धान्तन्यायानुसन्धानेनैव तस्याश्शङ्काया निरासो भविष्यति–इति ।

अयमत्र सिद्धान्ताभिप्रायः—यद्यपि शाखान्तरगतं गुणजातं शाखाद्वयैकवाक्यतानुसन्धानेनैव एवम्पदपरामर्शयोग्यम् । स्वशाखाम्नातं तु तदनपेक्षमेव एवम्पदेन परामृष्टुं शक्यम्, तथापि, प्रकृतपरामर्शिन एवंशब्दस्य एतादृशं वैषम्यं अकिञ्चित्करम् । अन्यथा, स्वशाखाम्नातस्यापि दूरस्थस्य परामर्शो न भवेत् । न चैवमपि परिसङ्ख्याफलकत्वादेवम्पदस्य शाखान्तरगतगुणव्यावृत्तिःस्यादिति वाच्यम् । फलपरवाक्यगतस्यैवम्पदस्य गुणान्तरपरिसङ्ख्याफलकत्वानुपपत्तेः । वाक्यभेदप्रसङ्गात् । न च परिसङ्ख्यापरमेव वाक्यमस्त्विति वाच्यम् । अपेक्षितफलपरत्वे सम्भवति त्रिदोषयुक्तपरिसङ्ख्यापरत्वस्यान्याय्यत्वात् ।

अपि च-स्वशाखाम्नातगुणमात्रपरामर्शकत्वे, कल्प्येतापि शाखान्तराम्नातगुणपरिसङ्ख्यापरत्वम्, तत्तु नास्ति । शाखाद्वयाम्नातवाक्यैकवाक्यतया सर्वेषामपि गुणानां प्रकृतत्वाविशेषेण एवम्पदपरामर्शयोग्यतया शाखान्तराम्नातगुणपरिसङ्ख्यापरत्वस्यासम्भवात् ।

अपि च–वाक्यस्य परिसङ्ख्याफलकत्वे फलपदं अनर्थकं भवेत् । न च वाजसनेयकाद्याम्नातफलानुवाद इति वाच्यम् । तत्राप्येवम्पदश्रवणेन फलपरत्वानुपपत्तेः ।

अतः स्वपरशाखासाधारण्येन प्राप्तानां गुणानां फलपरे वाक्ये अनुवादः इत्येवमाश्रयणीयमिति ।

अत्रोच्यते—यद्यपि कौषीतकिब्राह्मणगतेनैवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातं असंशब्दितं असंनिहितत्वात्; तथापि, तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनैवंशब्देन तत् संशब्दितमिति न परशाखागतमपि अभिन्नविज्ञानावरुद्धं गुणजातं स्वशाखागताद्विशिष्यते। न चैवं सति श्रुतहानिरश्रुतकल्पना वा भवति। एकस्यामपि हि शाखायां श्रुताः गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात्। न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरं गतः तद्देश्यैरविभावितशौर्यादिगुणोऽपि अतद्गुणो भवति। यथा च तत्र परिचयविशेषात् देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते एवं अभियोगविशेषात् शाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्यस्येरन्। तस्मात् एकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्याः—इति ॥ १० ॥

६ आनन्दाद्यधिकरणम्

## आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वं इत्येवंजातीयका ब्रह्मणो धर्माः क्वचित् केचित् श्रूयन्ते। तेषु संशयः—किं आनन्दादयो ब्रह्मधर्मा यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः किं वा सर्वे सर्वत्र-इति। तत्र, यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायां इदमुच्यते—

---

तत्तच्छाखागतैवम्पदस्य स्वशाखाम्नातगुणमात्रपरामर्शकत्वेऽपि [1]नानुपपत्तिरिति अभ्युपेत्याह—यद्यपीति। तत्तच्छाखागतानामेवम्पदानां शाखान्तराम्नातगुणपरिसङ्ख्यायकत्वानुपपत्तेः वेदेत्यस्य विषयाकाङ्क्षायां वेद्यविशेषसमर्पकतया सर्वशाखावगतं गुणजातं तत्तच्छाखागतैवम्पदानुसारेण समुच्चित्य वेद्यतया सिद्ध्यति—इत्याह-तथापीत्यादिना ॥ १० ॥

इति सर्वाभेदाधिकरणम्

सविशेषविषयासु प्राणाद्युपास्तिषु गुणोपसंहारः अस्तु नाम। निर्विशेषब्रह्मविद्यायां तु गुणोपसंहारो न सम्भवति। निर्विशेषं हि ब्रह्म अखण्डं सत्यादिवाक्य-

---

1. मु. एवम्पदस्य नानुपपत्तिः

आनन्दादयः प्रधानस्य - ब्रह्मणः धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः । कस्मात्? सर्वाभेदादेव । सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते । तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादि-निदर्शनेन ॥ ११ ॥

नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन् । तथाहि तैत्तिरीयके आनन्दमयमात्मानं प्रक्रम्य आम्नायते—तस्य प्रियमेव

---

प्रतिपाद्यम्, तादृशब्रह्मावगतिश्च एकेनैव पदेन भवतीति एकस्यामपि शाखायां पदा-न्तरं नापेक्षितम्, कुतःशाखान्तराम्नातगुणोपसंहारः, यथा च शास्त्रेण प्रतिपाद्यते तथैव ध्यातव्यम् - इति, न प्रतिपादनार्थं ध्यानार्थं वा गुणोपसंहारोऽपेक्षित इति पूर्वपक्षाभिप्रायः ।

परिहाराभिप्रायस्तु - यद्यपि निर्विशेषं ब्रह्म परमार्थतः, तथापि तत्र असत्त्वा-नानन्दत्वजडत्वादिभ्रान्तयः तेषुतेषु पुरुषेषु सम्भवन्ति । तादृग्भ्रान्तिनिवृत्तिश्च सामग्रीविशेषजनितादेव ब्रह्मस्वरूपावबोधात् भवति । तत्र, लक्ष्ये अखण्डे वस्तुनि यद्यपि विशेषणानि न सन्ति, तथापि, लक्षके वाच्ये वाक्यार्थे अनानन्दत्वादिविरु-द्धानन्दत्वादिधर्मानुसन्धानात् सा शङ्का निवृत्ता भवतीति, वाच्यार्थकोटौ आरोपिता-नामानन्दत्वादिधर्माणां उपसंहारोऽपेक्षितः (इति) । ध्यानकालेऽपि तत्तदाशङ्कानि-वृत्त्युपयोगिधर्मानुसन्धानपूर्वकमेव निर्विशेषे लक्ष्ये मनो निधातव्यमिति, निर्विशेषो-पासनायामपि गुणोपसंहारः सार्थकः ॥ ११ ॥

यदि निर्विशेषोपासनायां शाखान्तराम्नातगुणोपसंहारः प्रधानस्य ब्रह्मण एकत्वात् उपेयेत, तथासति दहरशाण्डिल्यानन्दमयादिविद्यास्वपि प्रधानस्य ब्रह्मण एकत्वात् परस्परमुपसंहारःस्यात् - इतिशङ्कानिवर्तनार्थं [1]सूत्रं प्रियशिरस्त्वादीति । आदिपदेन सत्यकामत्वमनोमयत्वादिग्रहणम् ।

---

1. **सूत्रं प्रियशिरस्त्वादीतीति** एभिर्व्याख्यातृभिः सूत्रावतारणं 'सूत्रम्' इत्येव परिसमाप्यते, न तु सूत्रप्रतीकमपि ध्रियते । विशिष्यात्र प्रतीकधारणं तु 'आनन्दमया-ब्रह्मत्ववादिनामद्वैतिनां इदं सूत्रं नानुकूलं प्रत्युत प्रतिकूलम्' इति विशिष्टाद्वैतिभिरुद्भा-व्यमानदूषणस्य अनवकाशद्योतनार्थम् । प्रकृतसूत्रभाष्यभावप्रकाशनेन च अनवकाशः प्रकाशयिष्यते ।

शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ' (तै. उ. २।५) इति । अत उत्तरं पठति—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्त्यन्यत्र प्राप्तिः । यत्कारणं, प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया च उपचितापचितरूपा उपलभ्यन्ते । उपचयापचयौ च सति भेदे संभवतः । निर्भेदं तु ब्रह्म 'एकमेवाद्वितीयम्' (छ. उ. ६।२।१) इत्यादिश्रुतिभ्यः ।

न चैते प्रियशिरस्त्वादयो ब्रह्मधर्माः, कोशधर्मास्त्वेते-इत्युपदिष्टमस्माभिः 'आनन्दमयोऽभ्यासात् (ब्र. सू. १।१।१२) इत्यत्र ।

---

अयमत्र परिहाराभिप्रायः—सविशेषवाक्येषु उपासनाविधिपर्यालोचनया तानितान्युपासनानि भिद्यन्ते । तत्र च, यस्यामुपासनायां शास्त्रबलात् यावन्तो गुणा विधीयन्ते तावद्भिरेव तस्या उपकारसिद्धेः अन्यत्राम्नातगुणोपसंहारो न प्रधानैक्यमात्रेण सम्पादयितुं शक्यते । विद्यान्तराम्नातगुणोपसंहारे तत्तदुपासनाविधिप्राप्तक्रमादिविरोधापत्तेश्च—इति ।

परस्परापेक्षयेति । इष्टवस्तुदर्शनजं सुखं प्रियम्, तत्प्राप्तिजन्यं मोदः, तदुपभोगजं प्रमोदः, सर्वानुयायी आनन्दः-इति परस्परापेक्षया उत्कर्षापकर्षौ । एवं मनोमयत्वसत्यसङ्कल्पत्वादीनामपि औपाधिकधर्मत्वात् तारतम्यादिकं द्रष्टव्यम् । सति भेद इति । भिद्यत इति भेदः-सप्रपञ्चत्वम् , ब्रह्मण उपास्यतया सप्रपञ्चत्वे विवक्षिते इत्यर्थः । परमार्थतो निर्विशेषे ब्रह्मणि सत्यसङ्कल्पत्वादीनामौपाधिकधर्माणां उपासनाविवक्षयैवाम्नानात् यथोपासनं व्यवस्थेति भावः । उपास्यानां ब्रह्मधर्माणां यथाविधि व्यवस्थेति प्रतिपादनार्थं प्रवृत्ते अस्मिन् सूत्रे प्रियशिरस्त्वादिग्रहणं नोपपद्यते इत्याह—न चैत इति ।

ननु भवतु आनन्दमयाधिकरणोक्तरीत्या प्रियशिरस्त्वादीनां कोशधर्मत्वम्, तथापि नानुपपत्तिः । न ह्यत्र ब्रह्मधर्माणामेव साङ्कर्यशङ्कापरिहारो विवक्षितः, अपि तु निर्विशेषविद्यागतानामानन्दादिधर्माणां यथा सर्वासु शाखासु प्राप्तिः एवं सत्यस-

अपि च परस्मिन् ब्रह्मणि चित्तावतारोपायमात्रत्वेन एते परिकल्प्यन्ते, न द्रष्टव्यत्वेन। एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादिनाम्।

ब्रह्मधर्मांस्त्वेतान् कृत्वा न्यायमात्रमिदं आचार्येण प्रदर्शितं प्रियशिरस्त्वाद्यप्राप्तिरिति। स च न्यायः अन्येषु निश्चितेषु ब्रह्मधर्मेषु उपासनायोपदिश्यमानेषु नेतव्यः संयद्वामत्वादिषु सत्यकामत्वादिषु च। तेषु हि, सत्यप्युपास्यस्य ब्रह्मण एकत्वे प्रक्रमभेदादुपासनाभेदे सति न अन्योन्यधर्माणां अन्योन्यत्र प्राप्तिः। यथा च द्वे नार्यौ एकं नृपतिं उपासाते-छत्रेणैका चामरेणान्या, तत्र उपास्यैकत्वेऽप्युपासनाभेदो धर्मव्यवस्था च भवति एवमिहापीति। उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मणि उपपद्यते न निर्गुणे परस्मिन् ब्रह्मणि। अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः॥

---

क्लृप्तत्वादीनामपि अव्यवस्थया प्राप्तिः-इति शङ्कायाः परिहारोऽपि। इयं च शङ्का प्रियशिरस्त्वादीनामपि भवति-ब्रह्मप्रतिपत्त्युपयोगितया कोशानां सर्वत्रोपसंहारस्य अपेक्षितत्वात् तद्धर्माणां प्रियशिरस्त्वादीनामपि तद्द्वारा प्राप्तिरस्त्विति। तत्राह— अपि चेति। पञ्चकोशाम्नानं निर्विशेषप्रकरणे न निर्विशेषवस्तुध्यानाङ्गतया कोशोपासनाविधानार्थम्, अपि तु, तत्त्वंपदार्थयोरैक्यस्य बोधनीयतया कर्तृत्वाद्यनर्थसम्पृक्तस्य त्वंपदार्थस्य कथं तद्विनिर्मुक्ततत्पदार्थैक्यमिति शङ्कायां, कोशोपाधिक एव त्वंपदार्थस्य अनर्थसम्बन्धः परमार्थतस्तु चैतन्यमात्रस्वरूप एव त्वमर्थः इति प्रतिपादनार्थम्। तदाह—चित्तावतारेति। न च एतच्छङ्कानिवृत्त्यर्थमेव अन्यत्र कोशोपसंहारोऽस्त्विति वाच्यम्। तत्रतत्र त्वंपदार्थशोधनार्थमवस्थाद्युपन्यासादेर्विद्यमानत्वात्। तावतापि ध्यानायोपसंहारशङ्कानुन्मेषाच्च। यस्यां शाखायाञ्च निर्विशेषप्रकरणे विशिष्य त्वंपदार्थशोधनोपायो नाम्नातः तत्र शाखान्तरोक्तत्वंपदार्थशोधोऽप्युपसंहर्तव्य इति, प्रियशिरस्त्वादिकं कोशधर्मत्वेन प्राप्नोतीति, तदप्राप्तिरिति सिद्धान्तोऽपि न सङ्गच्छते।

अतः आनन्दमयवाक्ये सविशेषब्रह्मोपासनं विवक्षितमिति कृत्वाचिन्तयैव प्रियशिरस्त्वादिग्रहणम्। कृत्वाचिन्तायाः प्रयोजनमाह—स च न्याय इति। संयद्वामत्वादिष्विति। एते च, सूत्रे आदिपदेन संगृहीताः॥ १२॥

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे तु-आनन्दादयो धर्माः ब्रह्मस्वरूपप्रतिपादनायैवोच्यमानाः अर्थ-सामान्यात्-प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात् सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यम्, प्रतिपत्तिमात्रप्रयोजना हि ते इति ॥ १३ ॥

७ आध्यानाधिकरणम्

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

काठके हि पठ्यते—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः' ( क. उ. ३।१० ) इत्यारभ्य 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति। तत्र संशयः—किं इमे सर्व एवार्थादयः ततस्ततः परत्वेन प्रतिपाद्यन्ते उत पुरुष एव एभ्यः सर्वेभ्यः परः प्रतिपाद्यते? इति। तत्र तावत्, सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः। तथाहि श्रूयते–'इदमस्मात्परं इदमस्मात्परम्' इति। ननु बहुष्वर्थेषु परत्वेन

---

ननु–यदि यस्यामुपासनायां ये धर्मा आम्नाताः ततोऽन्येषां नोपसंहारः, तथासति निर्विशेषप्रकरणाम्नातानां सर्वज्ञत्वादीनामपि सविशेषवाक्ये उपसंहारो न स्यात्—इत्याशङ्कानिवृत्त्यर्थं सूत्रम्।

अयमत्र परिहाराभिप्रायः—सर्वज्ञत्वादीनामाम्नानस्य निर्विशेषप्रकरणेऽपि एतदेव प्रयोजनम्, यत् प्रधानादिव्यावृत्तासाधारणस्वरूपेण ब्रह्मावगमः। इदं च प्रयोजनं सविशेषविद्यास्वपि तुल्यम्, तत्रापि उपास्यब्रह्मस्वरूपस्य धर्मिणः प्रधानादि-व्यावृत्ततया अवगन्तव्यत्वात्। परं तु तत्र सर्वज्ञत्वादीनां अनृतत्वं नावगन्तव्यमिति निषेधमुखप्रवृत्तनिर्विशेषवाक्योपसंहारो नास्ति–इति ॥ १३ ॥

इति आनन्दाद्यधिकरणम्

[1]विद्याभेदाभेदप्रसङ्गात् वाक्यभेदाभेदौ विचार्येते।

अथवा-इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिवाक्यप्रतिपाद्याः पूर्वपक्षे भिन्ना उपासना इति, पादसङ्गतिः।

---

1. आ. विद्याभेदाभेदविचारप्रसङ्गात्

प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्; नैष दोषः—वाक्यबहुत्वोपपत्तेः। बहून्येव हि एतानि वाक्यानि प्रभवन्ति बहूनर्थान् परत्वोपेतान् प्रतिपादयितुम्। तस्मात् प्रत्येकमेषां परत्वप्रतिपादनमिति।

एवं प्राप्ते ब्रूमः—पुरुष एव हि एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तम्, न प्रत्येकं एषां परत्वप्रतिपादनम्। कस्मात्? प्रयोजनाभावात्।

---

वाक्यबहुत्वोपपत्तेरिति। ननु—उपक्रमादिलिङ्गपर्यालोचनया ब्रह्मपरत्वेनावधारिते वाक्ये कथं इन्द्रियादिप्रतिपादनं सङ्गच्छते। न हि पूर्वपक्षिणा सिद्धान्ते यथा ब्रह्मप्रतिपत्त्युपयोगितया इन्द्रियादिप्रतिपादनं तथोपगन्तुं शक्यम्, प्रत्येकं वाक्यबहुत्वमुपगम्य तत्तदुपासनापरत्वस्य उपगतत्वात्। न च—यथा भूमविद्यायां ब्रह्मपरायामपि मध्ये नामाद्युपास्तिप्रतिपादनं तथा कठवल्लीष्वपि भविष्यति—इति युक्तम्। तत्र 'यो नाम ब्रह्मेत्युपास्ते' इति आख्यातश्रवणस्य 'यावन्नाम्नोगतं तत्रास्य यथाकामचारो भवति' इति फलश्रवणस्य च सद्भावात् अवान्तरवाक्यभेदेन उपासनाविधेरङ्गीकारः, इह तु नैवमिति, कथं अवान्तरवाक्यभेदं स्वीकृत्य उपासनाविध्यभ्युपगमः— इति चेत्;

उच्यते—'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। [1]भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः[2]। [3]बौद्धा दश सहस्राणि [4]तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते॥' इति स्मृत्या इन्द्रियतन्मात्राहङ्कारबुद्ध्यव्यक्तपुरुषाणामुपासनात् उत्तरोत्तरोत्कर्षेण फलप्रतिपादनात्, इहापि इन्द्रियादिपरत्वाम्नानस्य फलापेक्षणात्, तदेव स्मृतिप्रसिद्धं अस्या उपासनायाः फलमिति कल्प्यते, इन्द्रियादेः उत्तरोत्तरोत्कर्षेण उभयत्र प्रत्यभिज्ञानात्—इति।

प्रयोजनाभावादिति। ब्रह्मप्रकरणगतस्य परत्वेनेन्द्रियाद्याम्नानस्य ब्रह्मप्रमितिप्रयोजनत्वे सामान्यतोऽवगते 'अव्यक्तात् पुरुषः परः, पुरुषान्न परं किञ्चित् सा

---

1. भौतिकाः — सूक्ष्मशब्दादिभूतध्यायिनः।
2. आभिमानिकाः — करणाभिमान्यादित्यादिदेवताध्यायिनः।
3. बौद्धाः — अन्तःकरणध्यायिनः।
4. तिष्ठन्ति विगतज्वराः — प्रतिष्ठिता भवन्ति।

न हि इतरेषु परत्वेन प्रतिपन्नेषु किञ्चित् प्रयोजनं दृश्यते श्रूयते वा । पुरुषे तु इन्द्रियादिभ्यः परस्मिन् सर्वानर्थव्रातातीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः । तथा च श्रुतिः 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' (क. उ. ३।१५) इति । अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयन् पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति । आध्यानायेति । आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः । सम्यग्दर्शनार्थमेव हि इह आध्यानमुपदिश्यते, न त्वाध्यानमेव स्वप्रधानम् ॥ १४ ॥

## आत्मशब्दाच्च ॥ १५ ॥

इतश्च पुरुषप्रतिपत्त्यर्थैवेयमिन्द्रियादिप्रवाहोक्तिः । यत्कारणं 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (क. उ. ३।१२) इति, प्रकृतं पुरुषं आत्मेत्याह । अतश्च अनात्मत्वमितरेषां विवक्षितमिति गम्यते । तस्यैव च दुर्विज्ञानतां संस्कृतमतिगम्यतां च दर्शयति । तद्विज्ञा-

---

काष्ठा सा परा गतिः' इत्यादिना एकवाक्यतया निरतिशयपुरुषगतपरत्वप्रतिपादनद्वारा दृष्टविधयैवोपपन्ने सति, न उपासनापदाध्याहारेण वाक्यभेदमुपेत्य अदृष्टार्थता कल्पयितुमुचिता । न च—सिद्धान्तेऽपि, इन्द्रियादीनां मध्ये उत्तरोत्तरस्य पूर्वपूर्वापेक्षया परत्वमप्रसिद्धमिति तदपि प्रतिपादनीयम्, अतः अवान्तरवाक्यभेदोऽपरिहार्यः-इति वाच्यम् । आनुमानिकाधिकरणोक्तरीत्या ग्रहातिग्रहरूपत्वादिना प्रमाणान्तरप्रसिद्धस्योत्तरोत्तरपरत्वस्य अनुवादसम्भवात् । जर्तिलगवीधुकयवागूहोमसाधनत्ववत् असतोऽपि तात्पर्याविषयीभूतस्य अनुवादेन, पुरुषपदोदितस्य ब्रह्मणः [1]निरङ्कुशपरत्वप्रतिपादनसम्भवाच्च । न च साङ्ख्यीयया उदाहृतस्मृत्या परत्वप्रतिपादनस्य प्रयोजनमुपहर्तुं शक्यम् । तस्याः साङ्ख्यमतसिद्धप्रधानादिप्रतिपादिकायाः इह अप्रत्यभिज्ञानात् । 'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्ये हि रूपकवाक्यविन्यस्तान्येव प्रसिद्धानि मनोबुद्धिशरीरादीनि गृह्यन्त इति आनुमानिकाधिकरणे निरूपितम् । अतः परत्वप्रवाहोक्तेः ब्रह्मप्रतिपत्तिपरतैव, न तु अवान्तरोपास्तिपरत्वेन वाक्यभेदः ॥ १४ ॥

---

1. मु. निरङ्कुशपरत्वप्रतिपादनपरत्वसम्भवाच्च ।

नायैव 'यच्छेद्वाङ्मनसी प्राज्ञः' (क. उ. ३।१३) इति आध्यानं विदधाति। तद्व्याख्यातं 'आनुमानिकमप्येकेषाम्' (ब्र. सू. १।४।१) इत्यत्र। एवमनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते, नेतरेषु। अपिच—'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क. उ. ३।९) इत्युक्ते किं तत् अध्वनः पारं विष्णोः परमं पदं इत्यस्यामाकाङ्क्षायां इन्द्रियाद्यनुक्रमणात् परमपदप्रतिपत्त्यर्थ एव अयमायास इत्यवसीयते ॥ १५॥

८ आत्मगृहीत्यधिकरणम्

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

ऐतरेयके श्रूयते—'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत अम्भो मरीचीर्मरमापः' (ऐ. उ. १।१-२) इत्यादि।

तत्र संशयः—किं पर एवात्मा इह आत्मशब्देनाभिलप्यते उत अन्यः कश्चिदिति। किं तावत् प्राप्तं। न परमात्मा इह आत्मशब्दाभिलप्यो भवितुमर्हतीति। कस्मात्? वाक्यान्वयदर्शनात्।

ननु वाक्यान्वयः सुतरां परमात्मविषयो दृश्यते, प्रागुत्पत्तेरात्मैकत्वावधारणात् ईक्षणपूर्वकस्रष्टृत्ववचनाच्च।

---

गूढोत्मा। गूढः आत्मा इति छेदः। [1]सूच्यग्रादिवत् अन्तर्गतवस्तुसंस्पर्शसमर्थत्वं अग्र्यत्वम्। कामक्रोधादिमलराहित्येन निशितत्वं सूक्ष्मत्वम्। आत्मेत्याहेति। ततश्च आत्मशब्दप्रयोगेण प्रकृतपुरुषस्य प्राशस्त्यद्योतनात् तात्पर्यविषयता सूचिता ॥ १५ ॥

इति आध्यानाधिकरणम्

यथा 'अव्यक्तात् पुरुषः परः' इत्यादिवाक्यैकवाक्यत्वात् 'इन्द्रियेभ्यः पराः' इत्याद्याम्नानं ब्रह्मप्रतिपत्तिपरम्, तथा 'स इमान् लोकानसृजत' इत्यादिलोकसृष्टिप्रतिपादकवाक्यैकवाक्यतया 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिसन्दर्भोऽपि हिरण्यगर्भपरोऽस्त्विति प्रत्यवस्थानात् सङ्गतिः।

---

1. सूच्यग्रादिवदित्यादि अनेन—अग्र्यशब्दः 'अग्रं उपमानत्वेन अर्हति' इत्यर्थे अर्हार्थयत्प्रत्ययान्तः-इत्युक्तं भवति।

नेत्युच्यते, लोकसृष्टिवचनात्। परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिः आदौ वक्तव्या, लोकसृष्टिस्त्विह आदावुच्यते। लोकाश्च महाभूतसन्निवेशविशेषाः। तथाचाम्भःप्रभृतीन् लोकत्वेनैव निर्ब्रवीति 'अदोऽम्भः परेण दिवम्' (ऐ. उ. १।२) इत्यादिना। लोकसृष्टिश्च परमेश्वराधिष्ठितेन अपरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते। तथा हि श्रुतिर्भवति 'आत्मैवेदमग्र आसीत् पुरुषविधः' (बृ. १।४।१) इत्याद्या। स्मृतिरपि—

'स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति।

---

ननु—अत्राधिकरणे ऐतरेयकगतस्य आत्मावाइत्यादेः हिरण्यगर्भपरत्वमाक्षिप्य ब्रह्मपरत्वं व्यवस्थाप्यते। नैतस्य पादसङ्गतिः सम्भवति। एकशाखागतं किञ्चिद्वाक्यं उदाहृत्य उपक्रमादिलिङ्गैः तस्य ब्रह्मपरत्वव्यवस्थापनं हि प्रथमाध्याये सङ्गतम्। अत्र तु नानाशाखागतवाक्योदाहरणपूर्वकं गुणोपसंहारः तदुपयोगितया विद्यैक्यं वा प्रतिपादनीयम्—इति चेत्;

तर्हि इहापि, सदेवेतिछान्दोग्यवाक्ये ऐतरेयकगते 'आत्मा वा' इत्यादिवाक्ये च किमेका विद्या उत द्वे इति प्रथमः संशयः, तदर्थं च ऐतरेयकगतं आत्मावाइत्यादि हिरण्यगर्भपरं ब्रह्मपरं वेति संशयः।

तत्र पूर्वः पक्षः—नैका विद्येति। सद्विद्यायाः परमात्मपरत्वात् ऐतरेयकवाक्यस्य हिरण्यगर्भपरत्वादिति।

अम्भःप्रभृतीनिति। 'स ईक्षत लोकान्नु सृजा इति, स इमान् लोकानसृजत, अम्भो मरीचीर्मरमापः अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठा अन्तरिक्षं मरीचयः पृथिवी मरः या अधस्तात् ता आपः' इत्याम्नायते। अस्यार्थः-ईक्षत-ऐक्षत। अम्भोमरीचीर्मरमाप इति लोकनामानि। अम्भःपदार्थं व्याचष्टे—अदोऽम्भः इति। विप्रकृष्टा आपः चान्द्रमस्यः अम्भःपदार्थः। ताः दिवं परेण—द्युलोकात् परतः, तासां द्यौः प्रतिष्ठा—आश्रयः। मरीचिपदार्थमाह-अन्तरिक्षमिति। अन्तरिक्षलोकः सूर्यकिरणव्याप्ततया मरीचिः। पृथिवीलोको मरणयुक्ततया मरपदार्थं इत्याह-पृथिवी मरः [इति]। पातालानि अप्पदार्थं इत्याह-या अधस्तादिति। अस्तु प्रकृते लोकसृष्टिप्रतिपादनम्, तावता कथं हिरण्यगर्भपूर्वपक्षसिद्धिः अत आह—

ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' (ऐ. आ.) इत्यत्र पूर्वस्मिन् प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिं आमनन्ति । आत्मशब्दोऽपि तस्मिन् प्रयुज्यमानो दृश्यते 'आत्मैवेदमग्र आसीत् पुरुषविधः' (बृ. उ. १।४।१) इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् ।

अपि च—'ताभ्यो गामानयत् ताभ्योऽश्वमानयत् ताभ्यः पुरुषमानयत् ता अब्रुवन्' इत्येवंजातीयको भूयान् व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्धः इहाप्यनुगम्यते । तस्मात् विशेषवानेव कश्चित् इह आत्मा स्यादिति ।

एवं प्राप्ते ब्रूमः—पर एवात्मा इह आत्मशब्देन गृह्यते, इतरवत् । यथा इतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१।१) इत्येवमादिषु परस्यात्मनो ग्रहणम्, यथा च इतरस्मिन् लौकिके आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्यः आत्मशब्देन गृह्यते, तथा इहापि भवितुमर्हति । यत्र तु 'आत्मैवेदमग्र आसीत्' इत्येवमादौ पुरुषविध-इत्येवमादि विशेषणान्तरं श्रूयते भवेत् तत्र विशेषवत आत्मनो ग्रहणम् । अत्र

---

लोकसृष्टिश्चेति । पुरुषविधः - मनुष्याकारः । रेतःपदार्थमाह—प्रजापतेरिति । देवाः प्रजापते रेतः—प्रजापतिजन्याः । रेतश्शब्देन देवाः पूर्ववाक्ये विवक्षिताः ।

ऐतरेयके—देवतासहितेष्विन्द्रियेषु सृष्टेषु, तैश्च अस्माकं भोगसिद्ध्यर्थमायतनं सम्पादयेति स्रष्टुः प्रार्थनायां कृतायां, तेन च गवाश्वयोः शरीरे समानीते, 'नेदमस्माकं भोगायालम्' इति तैः प्रत्याख्याते, पुनस्तेन मनुष्यशरीरे समानीते, 'अलमिदमस्मद्भोगाय' इति तैरङ्गीकृतम्—इत्युपाख्यायते । तदाह— अपि चेति । विशेषवत्स्विति । शरीरादिविशेषयुक्तेष्विति यावत् । अशरीरस्य परमात्मनः प्रकृते स्रष्टृत्वोपगमे नायं व्यापारः सम्भवतीति भावः ।

लौकिक आत्मशब्दप्रयोग इति । यद्यपि 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति कोशानुसारेण आत्मपदं प्रमात्रादिसाधारणम्; तथापि, 'अत सातत्यगमने' इति धातोः मन्प्रत्ययेन निष्पन्नस्य आत्मपदस्य व्याप्तिवाचकतया योगरूढिभ्यां आत्मपदं प्रत्यक्चैतन्यवाचकमेव, न तु देहधृतिजीवस्वभावानाम्, तेषु परिच्छिन्नेषु योगासम्भवात् । पुरुषविध इत्येवमादिविशेषणान्तरमिति ।

पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते 'स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजत' इत्येवमादि। तस्मात् तस्यैव ग्रहणमिति न्याय्यम् ॥ १६ ॥

## अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

वाक्यान्वयदर्शनान्न परमात्मग्रहणम्—इति पुनर्यदुक्तं तत् परिहर्तव्यमिति। अत्रोच्यते, स्यादवधारणादिति। भवेदुपपन्नं परमात्मनो ग्रहणम्। कस्मात्? अवधारणात्। परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणं आञ्जसमवकल्पते। अन्यथा हि अनाञ्जसं तत् परिकल्प्येत।

लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि। यथा 'तत्तेजोऽसृजत' (छा. उ. ६।२।३) इत्येतत् श्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमित्ययूयुजं एवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति।

योऽप्ययं व्यापारविशेषानुगमः ताभ्यो गामानयदित्येवमादिः सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः। न ह्ययं सकलः कथाप्रबन्धो

---

यद्यपि आत्मपदमत्रापि परमेश्वरे एव स्वारस्येनोपपद्यते, तथापि उत्तरत्र जीवलिङ्गानां बहूनामुपलम्भात् हिरण्यगर्भपरं तत् आस्थीयते। उत्तरत्र हि, पुरुषविधपदेन शिरःपाण्यादिमत्त्वं, 'स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः' इति पुरुषपदनिर्वचनेन विद्यमानानां पापानां दाहप्रतिपादनेन पापसम्बन्धः, 'सोऽबिभेत्' इति भयसम्बन्धः, 'स वै नैव रेमे' इत्यरतिश्च, जीवलिङ्गान्यवगम्यन्ते ॥ १६ ॥

लोकसृष्टिवचनं त्विति। तथा च, पूर्वपक्षे हिरण्यगर्भपरतया सद्विद्यातो भेदात् न महाभूतोपसंहारः, सिद्धान्ते तु, तदैक्यात् महाभूतस्रष्टृत्वं सृष्टानां च [1]लोकानां [2]वाचारम्भणश्रुत्युपसंहारेण मिथ्यात्वं सिद्ध्यतीति फलभेदः।

---

1. आ. लोकादीनां
2. आ. वाचारम्भणादि

विवक्षित इति शक्यते वक्तुम्, तत्प्रतिपत्तौ पुरुषार्थाभावात्। ब्रह्मात्मत्वं त्विह विवक्षितम्। तथाह्यम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनं च शरीरं उपदिश्य स एव स्रष्टा 'कथं न्विदं मद्दते स्यात्' (ऐ. उ. ३।११) इति वीक्ष्य इदं शरीरं प्रविवेशेति दर्शयति

---

विवक्षितार्थावधारणानुगुण्येनैवेति। विवक्षितो [1]ह्ययमर्थः—उपक्रमे 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषत्' इति अद्वैतप्रतिपादनात्, मध्ये च 'स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत' इति स्रष्टुरेव जीवरूपेण प्रवेशश्रवणात्, 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' इति च जीवस्य [2]ब्रह्मैक्यप्रतिपादनात्, अन्तःकरणसाक्षिणं च प्रज्ञानशब्देनोपक्रम्य 'प्रज्ञानं ब्रह्म' इति तस्य ब्रह्मत्वेनोपसंहाराच्च, निर्विशेषं प्रत्यगभिन्नं ब्रह्म प्रकरणार्थ इति प्रतीयते। तदानुगुण्यं चेन्द्रियादिसृष्टिप्रतिपादनस्य, 'तदुपाधिकमेव जीवस्य द्रष्टृत्वादिकं न तु स्वाभाविकम्' इतितात्पर्यकत्वे उपपद्यते। तथा चोत्तरत्र श्रुतिर्दर्शयति—'यदि वाचाभिव्याहृतम्' इत्यादि। अतो गवाद्यानयनादिव्यवहारप्रतिपादनस्य[3] त्वंपदार्थशोधोपयोगितया न ब्रह्मपरत्वविरोधिता।

तत्प्रतिपत्तौ पुरुषार्थाभावादिति। उपलक्षणमेतत् असदर्थकताया अपि। न हि इन्द्रियप्रवेशात् प्राक् केवलमेव गवादिशरीरं सृष्ट्वा समानीतमिति सम्भवति, इन्द्रियविशिष्टस्यैव शरीरस्योत्पत्तेः। नापि गवाश्वयोश्शरीरमिन्द्रियैरस्वीकृतमिति सम्भवति। तथा सति गवादीनां भोग एव न स्यात्। अतो यथाश्रुतार्थतात्पर्यकत्वे असदर्थत्वनिष्प्रयोजनत्वे माभूतामिति 'देहेन्द्रियविलक्षणः त्वंपदार्थः' इति बोधयितुं कल्पितेयमाख्यायिका। तत्र च शरीरस्येन्द्रियायतनत्वप्रतिपादनेन शरीरविवेको दर्शितः। 'यस्मिन् प्रतिष्ठिता अन्नमदाम' इति इन्द्रियवचोभङ्ग्या भोक्तृत्वं तेषां शिरसि निक्षिप्तम्। तत्प्रसङ्गाच्च साधिष्ठातृकाणामिन्द्रियाणां विराडवयवेभ्यः सृष्टिः प्रतिपादिता 'मुखाद्वाक् वाचोऽग्निः' इत्यादिना। 'कथंन्विदं मद्दते स्यात्' इति वाक्येन 'शरीरेन्द्रियादिकं स्रष्टारं चेतनं विना स्वकार्यसमर्थं न

---

1. आ. ह्ययमत्रार्थः
2. आ. ब्रह्मत्वप्रतिपादनात्
3. मु. व्यवहारस्य

'स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत' (ऐ. उ. ३।१२) इति। पुनश्च 'यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्' इत्येवमादिना करणव्यापारविवेचनपूर्वकं 'अथ कोऽहम्' इति वीक्ष्य 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' (ए. उ. ३।११-१३) इति ब्रह्मात्मत्वदर्शनमवधारयति। तथा उपरिष्टात् 'एष ब्रह्मैष इन्द्रः' इत्यादिना समस्तभेदजातं सह महाभूतैः अनुक्रम्य 'सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' (ऐ. उ. ५।३) इति ब्रह्मात्मत्वदर्शनमेवावधारयति। तस्मादिह आत्मगृहीतिरिति अनपवादम्।

अपरा योजना—आत्मगृहीतिरितरवदुत्तरात्।

वाजसनेयके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्त-

---

भवेत्' इति प्रतिपाद्य, तदनुग्राहकतया तद्विलक्षणस्य स्रष्टुः तत्र प्रवेशः प्रतिपादितः 'स एतमेव सीमानम्' इति वाक्येन। एतं—ब्रह्मरन्ध्रदेशे विद्यमानं द्वयोः कपालयोः सीमानं विदार्य एतया द्वारा प्रापद्यत—प्राप्तवान्, सः जीवरूपेण प्रविष्टः परमात्मा एतमेव - जीवाख्यं पुरुषं ततमं - तनोतीति तः 'अन्येभ्योऽपि दृश्यते' इति डः, व्याप्ततममित्यर्थः, ब्रह्म अपश्यत्। प्रज्ञा नेत्रं—चक्षुः—प्रकाशकं यस्य तत् प्रज्ञानेत्रम्।

एवं ऐतरेयकवाक्यस्य हिरण्यगर्भपरत्वशङ्कानिराकरणार्थतया सूत्रद्वयं व्याख्याय, इदानीं सद्विद्यायाः सत्ताख्यसामान्यपरत्वशङ्कानिराकरणार्थतया योजयति— अपरा योजनेति।

सदेवसोम्येतिवाक्यं सत्तासामान्यपरं उत ब्रह्मपरमिति विचारस्य प्रथमाध्याय एव सङ्गतत्वात् कथं पादसङ्गतिः-इति शङ्कायां तथाविधविचारस्य विद्याभेदतदैक्यपर्यवसायितां दर्शयितुं [1]वाजसनेयकवाक्यमुदाहरति—वाजसनेयक इत्यादिना। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिवाक्यस्य ब्रह्मोपक्रमोपसंहारान्तःपातितया माभूत् तत्र विद्याभेदः, छान्दोग्यवाजसनेयकवाक्ययोस्तु भिन्नोपक्रमत्वात् विद्याभेदः-इति प्रत्यवस्थानात् सङ्गतिः।

---

1. आ. वाजसनेयकवाक्यमप्युदाहरति

ज्योतिः पुरुषः' (बृ. उ. ४।३।७) इति आत्मशब्देनोपक्रम्य तस्यैव सर्वसङ्ग-विनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति । तथा ह्युपसंहरति 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४ २५) इति । छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६।२।१) इति अन्तरेणैवात्मशब्दं उपक्रम्य उदर्के 'स आत्मा तत्त्वमसि' इति तादात्म्यमुपदिशति ।

तत्र संशयः—तुल्यार्थत्वं किमनयोराम्नानयोः स्यात् अतुल्यार्थत्वं वेति ।

अतुल्यार्थत्वमिति तावत् प्राप्तम्, अतुल्यत्वादाम्नानयोः । न हि आम्नानवैषम्ये सति अर्थसाम्यं युक्तं प्रतिपत्तुम्, आम्नानतन्त्रत्वादर्थपरिग्रहस्य । वाजसनेयके च आत्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते । छान्दोग्ये तु उपक्रमविपर्ययात् उपदेशविपर्ययः । ननु छन्दोगानामपि अस्त्युदर्के तादात्म्योपदेशः इत्युक्तम् । सत्यमुक्तम् । उपक्रमतन्त्रत्वादुपसंहारस्य तादात्म्यसंपत्तिः सा—इति मन्यते ।

---

अयमत्र पूर्वपक्षाभिसन्धिः—वाजसनेयकवाक्यस्य कतमआत्मेत्युपक्रमानुसारात् अस्तु विशुद्धात्मपरता । छान्दोग्यवाक्यस्य तु सदेवसोम्येत्युपक्रमात् सत्तासामान्यपरता अवगम्यते । सत्पदं हि आकृत्यधिकरणन्यायेन सत्ताजातिवाचकं नात्मवाचकम् । ततश्च उपक्रमानुसारात् उत्तरसन्दर्भोऽपि सत्ताजातिपरतयैव योजनीयः । तथाहि—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यद्वितीयत्वावधारणं अभिव्यञ्जकस्याभावेन प्रलये घटत्वादिजातेरनभिव्यक्त्यभिप्रायम् । ईक्षणं च अबादीक्षणवत् गौणम् । न च ईक्षत्यधिकरणेन गतार्थता । उपक्रमबलेन विशेषशङ्कासमुत्थानात् । तत्तेजोऽसृजतेत्यादिकं तु तेजआदौ सृष्टिकाले सत्तासमवायपरम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि अवान्तरसामान्यानां महासामान्ये [1]अन्तर्गत्यभिप्राया । एवमन्यान्यपि वाक्यानि यथासम्भवं सत्तासामान्य एव योजनीयानि ।

तादात्म्यसम्पत्तिरिति । अवश्यं च सिद्धान्तिनाप्येतदुपगन्तव्यम् ।

---

1. अन्तर्गत्यभिप्रायेति व्याप्यदेशानां व्यापकदेशान्तर्गतिरिति, व्याप्यानां व्यापकान्तर्गतिः औपचारिकी । ततश्च एकविज्ञानेनसर्वविज्ञानवचनमप्यौपचारिकं इति भावः ।

तथा प्राप्ते अभिधीयते—आत्मगृहीतिः सदेवसोम्येदमग्रआसीदित्यत्र छन्दोगानामपि भवितुमर्हति; इतरवत्—यथा कतमआत्मेत्यत्र वाजसनेयिनामात्मगृहीतिः तथैव। कस्मात्? उत्तरात्-तादात्म्योपदेशात्।

अन्वयादिति चेत् स्यादवधारणात्—

यदुक्तं उपक्रमान्वयात् उपक्रमे च आत्मशब्दश्रवणाभावात् नात्मगृहीतिरिति, तस्य कः परिहार इति चेत्; सोऽभिधीयते स्यादवधारणादिति। भवेदुपपन्नेह आत्मगृहीतिः, अवधारणात्। तथाहि—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा. उ. ६।१।१) इति एकविज्ञानेन सर्वविज्ञानं अवधार्य तत्संपिपादयिषया 'सदेव' इत्याह। तच्च आत्मगृहीतौ सत्यां सम्पद्यते। अन्यथा हि योऽयं मुख्य आत्मा स न विज्ञात इति नैव सर्वविज्ञानं सम्पद्येत।

तथा प्रागुत्पत्तेरेकत्वावधारणं जीवस्य च आत्मशब्देन परामर्शः स्वापावस्थायां च तत्स्वभावसंपत्तिकथनं परिचोदनापूर्वकं च पुनः पुनः तत्त्वमसीत्यवधारणम्-इति च सर्वमेतत् तादात्म्यप्रतिपादनायामेव अवकल्पते न तादात्म्यसंपादनायाम्।

---

शब्दभेदे अर्थभेदस्यावश्यकतया भिन्नपदोपात्तयोस्तत्त्वम्पदार्थयोरभिन्नस्वरूपमात्रपर्यवसायितानुपपत्तेः-इति पूर्वपक्ष्यभिमानः।

सत्पदं न केवलसत्तापरम्। तस्य अस्तिधातोश्शतृप्रत्यये सति निष्पन्नस्य सत्ताश्रयवाचकतया ब्रह्मणि पर्यवसानसम्भवात्—इत्यभिप्रायेण सिद्धान्तयति—आत्मगृहीतिरित्यादिना।

यदुक्तं आकृत्यधिकरणन्यायेन सामान्यपरत्वं तदनुवदति—यदुक्तमिति। आकृत्यधिकरणस्य रूढपदविषयत्वात्, पाचकादिपदवत् सत्पदस्य धर्मिपर्यन्तत्वे नानुपपत्तिः—इत्यभिप्रेत्य परिहरति—सोऽभिधीयत इति। सम्मुग्धतया सद्वस्तूपक्रमस्य उत्तरसन्दर्भस्वारस्येन ब्रह्मणि पर्यवसानं दर्शयति—तथाहीति। परिचोदनापूर्वकम्—'भूय एव मा भगवान् विज्ञापयतु' इतिप्रश्नपूर्वकम्।

एवं सत्पदस्य सम्मुग्धतयासद्वस्तुप्रतिपादकतामुपेत्य वाक्यशेषबलात् ब्रह्मनिर्णयो दर्शितः। इदानीं, सत्पदस्य 'सत्ये साधौ च सच्छब्दः' इत्यभिधानानुसा-

न चात्र उपक्रमतन्त्रत्वोपन्यासो न्याय्यः। न ह्युपक्रमे आत्मत्व-सङ्कीर्तनं अनात्मत्वसङ्कीर्तनं वा अस्ति। सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुद्ध्यते, विशेषाकाङ्क्षित्वात् सामान्यस्य। सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः संभवति, अतोऽन्यस्य वस्तुजातस्य आरम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः। आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति। आहर पात्रं, पात्रमाहर-इत्येवमादिषु अर्थसाम्येऽपि तद्दर्शनात्।

तस्मात् एवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥ १७ ॥

---

रेण रूढस्य 'ऐतदात्म्यमिदं सर्वं तत् सत्यम्' इति वाक्यशेषानुसारेण सत्यवस्तुपरत्वावगमात्, ब्रह्मव्यतिरिक्तस्य च सर्वस्य अनृततया, ब्रह्मपरत्वमुपक्रमस्वारस्यादेवावगम्यते - इत्याह—सच्छब्दार्थोऽपि चेति। आकृत्यधिकरणन्यायाभ्युपगमेऽपि अबाध्यत्वस्य ब्रह्मासाधारणतया [1]आक्षेपस्य ब्रह्मण्येव प्रवृत्तेरिति भावः।

तस्मादेवञ्जातीयकेषुवाक्येष्विति। ननु सद्विद्यायास्सत्ताजातिपरतानिरासार्थेऽस्मिन् वर्णके, पादसङ्गत्यर्थं शाखान्तरगतस्य निर्विशेषवाक्यस्य यस्यकस्यचित् उदाहर्तव्यत्वे सति विशिष्य ज्योतिर्ब्राह्मणोदाहरणं किमिति कृतम्;

[2]उच्यते—सिद्धान्ते उभयोः विद्यैक्यं सिद्ध्यत् परस्परोपकारकतामनयोराम्नानयोस्सम्पादयति–इति द्योतनाय। तथा हि—सद्विद्यायां यथा प्रत्यग्ब्रह्मैक्यं बोध्यते एवं ज्योतिर्ब्राह्मणेऽपि। तत्त्वमसीति सद्विद्यायां ज्योतिर्ब्राह्मणे तु सवाएषमहानजआत्मेति। तत्र च तत्त्वम्पदार्थशोधः उभयोरप्याम्नानयोरपेक्षितः। तत्र सद्विद्यायां तत्पदार्थः शोध्यते वाचारम्भणंविकारोनामधेयमित्यादिना। स च तत्पदार्थः, शोधनदशायामेव एकविज्ञानेनसर्वविज्ञानप्रतिज्ञया जीवरूपेण स्रष्टुरेव प्रवेशश्रवणेन च त्वम्पदार्थपर्यन्तं नीयते। ज्योतिर्ब्राह्मणे तु 'स यत्तत्र किञ्चित् पश्यति अनन्वा-

---

1. आक्षेपस्येति 'आकृत्या व्यक्तिराक्षिप्यते' इत्यपि हि आकृत्यधिकरणसिद्धान्तः। आक्षेपयोग्या च व्यक्तिरत्र ब्रह्मैवेति उपक्रमो ब्रह्मपर एव इत्यर्थः।

2. शारीरकन्यायसङ्ग्रहे विवरणाचार्योक्तं आश्रित्य समाधत्ते — **उच्यते इत्यादिना**। न्यायसङ्ग्रहोक्तं शब्दत उपनिबद्धं कल्पतरौ, उपपादितश्च परिमले।

९. कार्याख्यानाधिकरणम्

# कार्याख्यानादपूर्वम् ॥ १८ ॥

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय, तस्यैव अपो वास आमनन्ति । अनन्तरं च छन्दोगा आमनन्ति 'तस्माद्वा एतत् अशिष्यन्तः पुरस्ताच्चोपरिष्टाच्च अद्भिः परिदधति' (छा. उ. ५।२।२) इति । वाजसनेयिनस्त्वामनन्ति 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ. उ. ६।१।१४)[का] 'तस्मादेवंवित् अशिष्यन्नाचामेत् अशित्वा चाचामेत् एतमेव तदनमनग्नं कुरुते' [मा] इति ।

---

गतस्तेन भवति असङ्गो ह्ययं पुरुषः' इति त्वंपदार्थः शोध्यते । स च तत्पदार्थपर्यन्तं नीयते अतऊर्ध्वं विमोक्षायैव ब्रूहीति । अतश्च आम्नानवैषम्यमपि परस्परोपकारकतायां सुतरामुपयुज्यते, सद्विद्यायां तत्पदार्थोपक्रमस्य [1]तस्य त्वम्पदार्थपर्यन्तशोधनोपयुक्तत्वात्-ज्योतिर्ब्राह्मणे त्वंपदार्थोपक्रमस्यापि [2]तस्य तत्पदार्थपर्यन्तशोधनोपयुक्तत्वात् । एवं च, पदभेदेऽर्थभेदोऽपेक्षित इति शङ्कापि निरस्ता । पदार्थशोधनदशायामेव तत्त्वंपदार्थभेदपर्यन्तताया दर्शिततया न्यायस्य अभेदप्रतीतिविरोधित्वानुपपत्तेः—इति ॥ १७ ॥

इति आत्मगृहीत्यधिकरणम्

सदेवेतिसामान्योपक्रमस्य यथा वाक्यशेषानुसारेण ब्रह्मपरता, एवमत्रापि आचामन्तीतिवर्तमानापदेशस्य आचामेदितिवाक्यशेषानुसारेण विधित्वम्–इति प्रत्यवस्थानात् सङ्गतिः ।

प्राणसंवादे प्राणश्रैष्ठ्यावधारणानन्तरं किम्मेऽन्नंभविष्यतीति प्राणेन पृष्टे इन्द्रियाणामुत्तरम्—'यत्किञ्चिदिदं आ श्वभ्य आ शकुनिभ्यः इति होचुः तद्वा एतदनस्यान्नम्' श्वशकुनिप्रभृतिभिः प्राणिभिः यत् भक्ष्यते तत् प्राणान्नमिति तदर्थः । अत्र, 'सर्वैरद्यमानं प्राणान्नम्' इति दृष्टिः विवक्षिता । 'न ह वा एवंविदि किञ्चनानन्नं

---

1. तस्य—तत्पदार्थस्य । मु. 'तस्य नास्ति

2. तस्य—त्वम्पदार्थस्य ।

**तत्र आचमनं अनग्नताचिन्तनं च प्राणस्य प्रतीयते। तत् किं उभयमपि विधीयते उत आचमनमेव उत अनग्नताचिन्तनमेवेति विचार्यते। किं तावत् प्राप्तम्? उभयमपि विधीयत इति। कुतः? उभयस्याप्यवगम्यमानत्वात्। उभयमपि चैतत् अपूर्वत्वात् विध्यर्हम्। अथवा आचमनमेव**

---

भवति' इति वाक्यशेषात्। एवं छान्दोग्ये प्राणान्नदृष्टिविधानानन्तरमाम्नायते 'स होवाच किं मे वासो भविष्यतीति आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्च अद्भिः परिदधति लम्भुको ह वासो भवति अनग्नो ह भवति'। लम्भुकः-प्राप्तिशाली।

वाजसनेयके तु काण्वाः 'तस्यो मे किमन्नं किं वास इति यत्किंच आ श्वभ्य आ शकुनिभ्य आ कीटपतङ्गेभ्यः तत्तेऽन्नं आपो वास इति न ह वा अस्य अनन्नं जग्धं भवति नानन्नं परिगृहीतं य एवमेतत् अनस्यान्नं वेद' अन्यैर्जग्धं परिगृहीतञ्च विदुषः अनन्नं--अनुपकारकं न भवति, अपि तु उपकारकमेव—इति फलाम्नानात् अन्नदृष्टिर्विवक्षिता। तदनन्तरं 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतमेव तत् अनं-प्राणं अनग्नं कुर्वन्तो मन्यन्ते' इति पर्यवस्यति।

माध्यन्दिनास्तु 'तस्मादेवंविदशिष्यन्नाचामेत् अशित्वा चाचामेत् एतमेव तदनमनग्नं कुरुते' इत्यप्यामनन्ति।

उभयमपि चैतदपूर्वत्वादिति। ननु—उभयविधिरिति न समीचीनम्, वाक्यभेदप्रसङ्गात्। नापि 'आचमनमेव विधेयम्, वासस्त्वकीर्तनं तस्यैवार्थवादः' इति समीचीनम्। आचमनं 'आचान्तेन कर्तव्यम्' इत्यादिवाक्यानुसारेण सर्वकर्माङ्गतयावगतं प्राणोपासनायामपि प्राप्तं अनूद्य अपूर्वं वासस्त्वमेव तदीयानामपां द्रष्टव्यतया प्रतिपाद्यत इति युक्तम्, 'प्राप्तानुवादेन ह्यप्राप्तं विधेयम्' इति हि न्यायः। अन्यथा हि 'लम्भुको ह वासो भवति' इति वाक्यशेषोऽपि [1]असङ्गतो भवेत्। न हि स्तुत्यर्थमुपात्तस्य वासोविज्ञानस्य फलं प्रतिपादनीयम्। अतः कथं 'उभयं विधेयम्, आचनमेव वा विधेयम्' इति पूर्वपक्षः--इति चेत्;

---

1. मु. असङ्गत एव स्यात्

विधीयते । विस्पष्टा हि तस्मिन् विधिविभक्तिः—तस्मादेवंविदशिष्यन्नाचामेत् अशित्वा चाचामेदिति । तस्यैव स्तुत्यर्थं अनग्नतासंकीर्तनमिति ।

एवं प्राप्ते ब्रूमः - न आचमनस्य विधेयत्वमुपपद्यते, कार्याख्यानात् । प्राप्तमेव हीदं कार्यत्वेन आचमनं प्रायत्यार्थं स्मृतिप्रसिद्धं अन्वाख्यायते । ननु इयं श्रुतिः तस्याः स्मृतेः मूलं स्यात् । नेत्युच्यते—विषयनानात्वात् । सामान्यविषया हि स्मृतिः पुरुषमात्रसंबन्धं प्रायत्यार्थमाचमनं प्रापयति । श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात् । न च भिन्नविषययोः श्रुतिस्मृत्योः मूलमूलिभावोऽवकल्पते । न चेयं श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम् । पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्य इह प्रत्यभिज्ञायमानत्वात् । अत एव च नोभयविधानम् । उभयविधाने च वाक्यं भिद्येत । तस्मात् प्राप्तमेव अशिशिषतामशितवतां च उभयत आचमनं अनूद्य 'एतमेव तदनमग्नं कुर्वन्तो मन्यन्ते' इति प्राणस्यानग्नताकरणसंकल्पः अनेन वाक्येन आचमनीयास्वप्सु प्राणविद्यासंबन्धित्वेन अपूर्व उपदिश्यते । न च अयमनग्नतावाद आचमनस्तुत्यर्थ इति न्याय्यम्, आचमनस्याविधेयत्वात्, स्वयं च अन-

---

उच्यते—आचामेदिति आचमने स्पष्टो विधिः । अतः, अयमनुवाद इति तावत् वक्तुं न शक्यते । एवं सति, यदि सर्वकर्माङ्गतया आचमनं शुद्ध्यर्थतया प्राप्तमस्ति तदा वचनसार्थक्याय प्राणविद्याऽसाधारणः आचमनान्तरविधिरयं भविष्यति । ततश्च, वचनसार्थक्याय साधारणमाचमनं कृत्वा पुनः प्राणविद्यायामसाधारणाचमनमिदं अनुष्ठेयम् । अतो नानुपपत्तिराचमनविधेः—इति ।

अयमत्र सिद्धान्ताभिप्रायः—उभयविधानं वाक्यभेदावहं सम्भवत्येकवाक्यत्वे न न्याय्यम् । आचमनं च प्रयतभावोपयोगितया प्राणविद्यायां प्राप्तं शक्यमनुवदितुम् । अतः अप्राप्तमनग्नताचिन्तनमेव एकवाक्यतारक्षणाय विधेयम् । एवं 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्' इति विधिविभक्तिरपि, दध्ना जुहोतीत्यत्र दधिरूपविशेषणे इव एवंविद्रूपविशेषणे संक्रान्ता भविष्यति—इति । पुरुषमात्रसम्बन्धम्—तत्तत्कर्मोपयुक्तपुरुषसम्बन्धम् । विदधती—विधायकत्वेनोपगता ।

श्रतासंकल्पस्य विधेयत्वप्रतीतेः । न चैवं सति एकस्याचमनस्योभयार्थता अभ्युपगता भवति प्रायत्यार्थता परिधानार्थता चेति । क्रियान्तरत्वाभ्युपगमात्–क्रियान्तरमेव हि आचमनं नाम प्रायत्यार्थं पुरुषस्य अभ्युपगम्यते, तदीयासु त्वप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्य अभ्युपगम्यते-इत्यनवद्यम् ।

अपि च—'यदिदं किंच आश्वभ्य आ कृमिभ्यः आ कीटपतङ्गेभ्यः तत्तेऽन्नम्' (बृ. उ. ६।१।१४) इत्यत्र तावत् न 'सर्वान्नाभ्यवहारश्चोद्यते' इति शक्यं वक्तुम् । अशब्दत्वात् अशक्यत्वाच्च । 'सर्वं तु प्राणस्यान्नम्' इतीयमन्नदृष्टिः चोद्यते । तत्साहचर्याच्च आपोवासइत्यत्रापि न अपामाचमनं चोद्यते, प्रसिद्धास्वेव तु आचमनीयास्वप्सु परिधानदृष्टिश्चोद्यते-इति युक्तम् । न ह्यर्धवैशसं संभवति ।

अपि च-आचामन्तीति वर्तमानापदेशित्वात् नायं शब्दो विधिक्षमः । ननु-मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम् । सत्यमेवमेतत् । अवश्यविधेये त्वन्यतरस्मिन् वासःकार्याख्यानात् अपांवासःसंकल्पनमेव अपूर्वं विधीयते, नाचमनम्, पूर्ववद्धि तत् इत्युपपादितम् ।

यदप्युक्तं–विस्पष्टा चाचमने विधिविभक्तिरिति ; तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तम् । अत एव आचमनस्याविधित्सितत्वात्, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते - इत्यत्रैव काण्वाः पर्यवस्यन्ति, नामनन्ति तस्मादेवंविदित्यादि ।

---

ननु-यदि आचमनीयास्वप्सु वासोदृष्टिर्विधीयेत तदा एकमेवाचमनं प्रायत्यार्थं स्वसाधनीभूताब्द्वारा वासोदृष्टिजन्यः परिधानशब्दार्थो य उपकारः तदर्थमपि स्यात्-इति शङ्कते—नचैवंसतीति । क्रियान्तरत्वाभ्युपगमात्—वासोदर्शनशेषत्वरहितक्रियात्वाभ्युपगमादिति यावत् ।

दृष्टिविधिप्रायपाठादपि प्रकृते वासोदृष्टिविधिरेवोपेय इत्याह—अपि चेति ॥ १८ ॥

इति कार्याख्यानाधिकरणम्

तस्मात् माध्यंदिनानामपि पाठे आचमनानुवादेन एवंवित्त्वमेव-प्रकृतप्राणवासोवित्त्वं विधीयत इति प्रतिपत्तव्यम् ।

योऽप्ययमभ्युपगमः—क्वचित् आचमनं विधीयते क्वचिद्वासोविज्ञानमिति; सोऽपि न साधुः । आपोवासइत्यादिकाया वाक्यप्रवृत्तेः सर्वत्र ऐकरूप्यात् । तस्मात् वासोविज्ञानमेव इह विधीयते नाचमनम्-इति न्याय्यम् ॥ १८ ॥

१० समानाधिकरणम्

## समान एवं चाभेदात् ॥ १९ ॥

वाजसनेयिशाखायां अग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता । तत्र च गुणाः श्रूयन्ते 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्येवमादयः । तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते—मनोमयोऽयं पुरुषो भाः सत्यः तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' बृ. उ. ५।६।१) इति ।

तत्र संशयः—किमियं एका विद्या अग्निरहस्यबृहदारण्यकयोः गुणोपसंहारश्च, उत द्वे इमे विद्ये गुणानुपसंहारश्च-इति ।

---

पूर्वत्र आचमनानुवादेन वासस्सङ्कल्पो विधेय इत्युक्तम् । इह तु, क्व उपासनाविधिः क्व गुणविधिरिति निर्धारणाभावात् अग्निरहस्यबृहदारण्यकयोरुभयत्रापि विद्याविधिः स्वीकर्तव्य इति, भवेदेव तस्या भेदः-इति पूर्वपक्षोत्थानात् सङ्गतिः ।

इत्येवमादय इति । आदिपदेन आकाशात्मानं कामरूपिणं मनोजवं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वादिशोऽनुप्रभूतं सर्वमिदमभ्यात्तं अवाक्यनादरं यथा व्रीहिर्वा यवो वा' इत्यादि गृह्यते ।

अत्र बृहदारण्यकाग्निरहस्ययोः मनोमयत्वादयः केचिद्गुणाः समाना एव, सत्यसङ्कल्पत्वादयोऽग्निरहस्ये सर्वेशानत्वादयो बृहदारण्यके च [1]विलक्षणाः आम्नायन्ते--इति ।

---

1. आ. विलक्षणाः । समाना अपि तु उभयत्राम्नायन्ते

किं तावत् प्राप्तम्? विद्याभेदो गुणव्यवस्था चेति। कुतः? पौनरुक्त्यप्रसङ्गात्। भिन्नासु हि शाखासु अध्येतृवेदितृभेदात् पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसाय एकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिषु—इत्युक्तम्। एकस्यां पुनः शाखायां अध्येतृवेदितृभेदाभावात् अशक्यपरिहारे पौनरुक्त्ये, न विप्रकृष्टदेशस्था एका विद्या भवितुमर्हति। न चात्र एकमाम्नानं विद्याविधानार्थं अपरं गुणविधानार्थमिति विभागः संभवति। तदा हि अतिरिक्ता एव गुणा इतरत्रेतरत्र च आम्नायेरन् न समानाः। समाना अपि तु उभयत्राम्नायन्ते मनोमयत्वादयः। तस्मात् नान्योन्यगुणोपसंहार इति।

एवं प्राप्ते ब्रूमहे—यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति एवं एकस्यामपि शाखायां भवितुमर्हति, उपास्याभेदात्। तदेव हि ब्रह्म मनोमयत्वादिगुणकं उभयत्रापि उपास्यं अभिन्नं प्रत्यभिजानीमहे। उपास्यं च रूपं विद्यायाः। न च विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः। नापि विद्याऽभेदे गुणव्यवस्थानम्।

ननु पौनरुक्त्यप्रसङ्गाद्विद्याभेदोऽध्यवसितः। नेत्युच्यते—अर्थविभागोपपत्तेः। एकं ह्याम्नानं विद्याविधानार्थं अपरं गुणविधानार्थमिति न किंचित् नोपपद्यते। ननु—एवं सति, यदपठितमग्निरहस्ये तदेव बृहदारण्यके

---

ननु—समानगुणाम्नानं विद्याप्रत्यभिज्ञाद्वारा ऐक्यसम्पादनार्थं भवेत्, तथा च अग्निरहस्यविहितोपासनानुवादेन बृहदारण्यके गुणविधिः—इति चेत्;

न—विनिगमनाविरहेण उभयत्रापि विद्याविधेरावश्यकत्वात्। अपि च एकत्र विद्यानुवादेन गुणविध्युपगमे गुणानामनेकत्वेन वाक्यं भिद्येत। अतो न विद्यैक्यमिति भावः।

अयमत्र सिद्धान्ताभिप्रायः—विनिगमनाविरहे हि उभयत्रापि विद्याविधिरिति स्यात्। न च सोऽस्ति। 'यत्र गुणभूयस्त्वं तत्र प्रधानं यत्र गुणानामल्पत्वं तत्र न प्रधानम्' इति न्यायो हि लोकसिद्धः। तथा हि-यत्र रथगजतुरगपदातिच्छत्रचामरादीनि बहून्यङ्गानि तत्र राजेत्यध्यवस्यन्ति। यत्र तु तुरगादीनि कानि चिदेवाङ्गानि तत्र अमात्यादय इत्यध्यवस्यन्ति। अतः अग्निरहस्ये अनेकगुणश्रवणात् तत्रैव

पठितव्यं 'स एष सर्वस्येशानः' इत्यादि, यत्तु पठितमेव मनोमयइत्यादि तत् न पठितव्यम्। नैष दोषः--तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात्। समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाप्य तस्यां ईशानत्वाद्युपदिश्यते। अन्यथा हि कथं तस्यामयं गुणविधिरभिधीयते।

अपि च-अप्राप्तांशोपदेशेन अर्थवति वाक्ये संजाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाऽप्युपपद्यमानत्वात् न तद्बलेन प्रत्यभिज्ञा उपेक्षितुं शक्यते। तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेति उपपन्नम् ॥ १९ ॥

---

प्रधानोपास्तिविधिः, बृहदारण्यके तु गुणानामल्पतया प्राप्तोपासनानुवादेन गुणविधिः— इति निर्णयसम्भवात्। न चैवमपि बृहदारण्यके प्राप्तोपासनानुवादेनानेकगुणविधाने वाक्यभेद इति वाच्यम्। [1]तावद्गुणविशिष्टस्य विततिलक्षणक्रमस्यैकस्यैव विधानेन, तत्पृष्ठलग्नतया गुणानामन्येषां अर्थादेव प्राप्तिसम्भवात् ॥ १९ ॥

इति समानाधिकरणम्

बृहदारण्यके सप्तमप्रपाठके 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति' इति हिरण्यगर्भोपासनां विधाय, सत्यपदोदितस्य हिरण्यगर्भस्य अद्भ्य उत्पत्तिं निरूप्य, सत्यनामाक्षरोपासनं च तदङ्गभूतं विधाय, तदेवोपास्यं सत्यं अनतिवृत्ताधिकारं 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' इति आदित्यमण्डलाक्षिस्थानगततया उपदिश्य, पुनश्च आदित्यस्थानगतं तमेव 'य एष एतस्मिन् मण्डले पुरुषः' इत्यनुकृष्य, तस्य शिरोबाहुपादरूपाणि त्रीण्यङ्गानि भूर्भुवस्सुवर्व्याहृतिरूपाणि प्रतिपाद्य, तस्योपनिषदहरिति अहर्नाम प्रदर्श्य, पुनश्च 'य एषोऽक्षिणि पुरुषो दृश्यते' इति अक्षिस्थं तमेव अधिकृत्य

---

1. शिवार्कमणिदीपिकायां अस्मिन्नधिकरणे एवं वाक्यभेदमाशङ्क्य, "सर्वत्रप्रसिद्ध्यधिकरणे प्रपञ्चितेन अवाक्यभेदोपपादनप्रकारेण समाधेया" इति वर्णितम्। सर्वत्रप्रसिद्ध्यधिकरणे च प्रकारचतुष्टयं निरूपितम्। तत्र द्वितीयं प्रकारं अवलम्ब्य समाधत्ते तावद्गुणविशिष्टेति। प्रकारश्चायं परिमले सर्वत्रप्रसिद्ध्यधिकरणे प्रसङ्गान्तरेणोक्तः।

## ११ सम्बन्धाधिकरणम्

# संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके 'सत्यं ब्रह्म' (बृ. ५।५।१) इत्युपक्रम्य 'तद्यत्तत्सत्यं असौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' (बृ. उ. ५।५।२) इति तस्यैव सत्यस्य ब्रह्मणः अधिदैवतमध्यात्मं च आयतनविशेषमुपदिश्य व्याहृतिशरीरत्वं च संपाद्य द्वे उपनिषदौ उपदिश्येते-तस्योपनिषदहरिति अधिदैवतम्, तस्योपनिषदहमिति अध्यात्मम् ।

तत्र संशयः—किं अविभागेनैव उभे अप्युपनिषदौ उभयत्रानुसंधातव्ये उत विभागेन—एका अधिदैवं एकाऽध्यात्ममिति ।

तत्र सूत्रेणैवोपक्रमते—यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्तः एवमन्यत्रापि एवंजातीयके विषये भवितुमर्हति, एकविद्याभिसंबन्धात् । एका हीयं सत्यविद्या अधिदैवमध्यात्मं चाधीता । उपक्रमाभेदात् व्यतिषक्तपाठाच्च । कथं तस्यामुदितो धर्मः तस्यामेव न स्यात् । यो ह्याचार्ये कश्चित् अनुगमनादिराचारश्चोदितः स ग्रामगतेऽरण्यगते च तुल्यवदेव भवति । तस्मात् उभयोरप्युपनिषदोः उभयत्र प्राप्तिरिति ॥ २० ॥

---

पूर्ववदेव त्रीण्यङ्गानि व्याहृतित्रयात्मकानि निरूप्य तस्योपनिषदहमिति अहंनामोक्तम् ।

अमुमर्थं संगृह्णाति—बृहदारण्यक इत्यादिना । उपक्रमाभेदादिति । उपक्रमे उपासनोत्पत्तिविधेरभेदात् इत्यर्थः । व्यतिषक्तपाठादिति । आदित्याक्षिपुरुषौ क्रमेण पठित्वा अनन्तरमादित्यपुरुषधर्मान्निरूप्य, पुनरक्षिपुरुषमुपक्षिप्य तद्धर्माम्नानात्, परस्परं सङ्कीर्णतया अक्ष्यादित्यपुरुषयोराम्नानं अवगम्यते । यदि हि अक्षिपुरुषविद्या आदित्यपुरुषविद्यातो भिन्ना स्यात्, तदा, यथा उद्गीथे प्राणदृष्टिविधिं कृत्स्नं परिसमाप्य तत्रैवाकाशदृष्टिविधिराम्नातः न तु व्यतिषक्ततया, एवं अत्रापि विद्याभेदविवक्षायां भवेत्--इति भावः ।

एवं प्राप्ते प्रतिविधत्ते—

## न वा विशेषात् ॥ २१ ॥

नैव उभयोरुभयत्र प्राप्तिः। कस्मात्? विशेषात्—उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इति? उच्यते—'य एष एतस्मिन् मण्डले पुरुषः' (बृ. उ. ५।५।२) इति हि आधिदैविकं पुरुषं प्रकृत्य तस्योपनिषदहरिति श्रावयति। 'योऽयं दक्षिणेऽक्षन् पुरुषः' (बृ. उ. ५।५।२) इति च आध्यात्मिकं पुरुषं प्रकृत्य तस्योपनिषदहमिति। तस्येति चैतत् संनिहितावलम्बनं सर्वनाम। तस्मात् आयतनविशेषव्यपाश्रयेणैव एते उपनिषदौ उपदिश्येते। कुत उभयोरुभयत्र प्राप्तिः।

ननु—एक एवायं अधिदैवतमध्यात्मं च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्। सत्यमेवमेतत्। एकस्यापि तु अवस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति।

---

ननु—अस्तु उपासनैक्यमुपास्यैक्यं च, तथापि अहरहंनाम्नोः न सङ्करः, आदित्यमण्डलमुपक्रम्य अहर्नाम्नः प्रतिपादनात्, अक्षिस्थानं च उपक्रम्य अहंनाम्नः प्रतिपादनात्। अतः स्थानभेदात् व्यवस्था भविष्यति। उपासनैक्येऽपि स्थानभेदात् प्रयोगावृत्तिरपेक्षिता। तथा च आदित्यमण्डलगतपुरुषोपासनाप्रयोगे अहर्नाम ध्येयम्, अक्षिगततया उपासनाप्रयोगे अहंनाम ध्येयम्—इति चेत्;

न--तस्योपनिषदिति तच्छब्दः, सर्वनाम्नां प्रधानपरामर्शकत्वव्युत्पत्तिबलात् पुरुषस्य उपनिषदा सम्बन्धमाह, न तु [1]स्थानस्य, अप्रधानत्वात्। अतः, एकस्य पुरुषस्य नामद्वयसम्बन्धावगमात्, पुरुषस्य च प्रयोगद्वयेऽप्यनुस्यूततया, प्रधानानुसारेण गुणभूतयोर्नाम्नोः प्रयोगद्वयेऽप्यावृत्तिः-इति ॥ २० ॥

अयमभिप्रायः—यद्यपि सर्वनाम प्रधानपरामर्शकम्, तथापि, येन रूपेण प्रधानं प्रस्तुतं तद्रूपविशिष्टस्य परामर्शकम्, तथैव व्युत्पत्तेः। तथा च, 'तस्योपनिषदहरिति' इत्यत्र आदित्यमण्डलविशिष्टस्यैव प्रस्तुततया तथाभूतं परामृश्य स्थानविशेषोपाधिकतयैव अहर्नाम निर्दिशति। एवं 'तस्योपनिषदहमिति' इत्यत्रापि विशिष्टपरामर्शात् उपनिषदः स्थानविशेषोपाधिकता द्रष्टव्या। अत एव, व्यवस्थित-

---

1. आ. स्थानेन, तस्य

अस्ति चायं दृष्टान्तः—सत्यप्याचार्यस्वरूपानपाये यत् आचार्यस्यासीनस्यानुवर्तनमुक्तं न तत् तिष्ठतो भवति, यच्च तिष्ठत उक्तं न तत् आसीनस्य—इति । ग्रामारण्ययोस्तु आचार्यस्वरूपानपायात् तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावात् उभयत्र तुल्यवद्भाव इति अदृष्टान्तः सः । तस्मात् व्यवस्था अनयोरुपनिषदोः ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

अपि च एवंजातीयकानां धर्माणां व्यवस्थेति लिङ्गदर्शनं भवति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' (छा. उ. १।७।५) इति । कथमस्य लिङ्गत्वमिति ? तदुच्यते । अक्ष्यादित्यस्थानभेदभिन्नान् धर्मान् अन्योन्यस्मिन्ननुपसंहार्यान् पश्यन् इह अतिदेशेन आदित्यपुरुषगतान् रूपादीन् अक्षिपुरुषे उपसंहरति—'तस्यैतस्य तदेव रूपम्' इत्यादिना । तस्मात् व्यवस्थिते एवैते उपनिषदौ इति निर्णयः ॥ २२ ॥

---

तया 'तस्योपनिषदहः, तस्योपनिषदहम्' इति निर्देशोऽपि सङ्गच्छते । अन्यथा तस्योपनिषदहरहमित्येव स्यात् । अतः व्यवस्था उपनिषदोरिति ॥ २१ ॥

ननु—आदित्याक्षिगततया उद्गीथाध्यायाम्नातं उपासनमुपास्यं च भिन्नमेव । 'उभौ स गायति' इति उपास्यद्वित्वप्रतिपादनात्, उपासनैक्ये प्रमाणाभावाच्च । अतस्तत्र आदित्यपुरुषे आम्नातानां धर्माणां अक्षिपुरुषे अप्राप्तेः अतिदेशः सार्थकः । स कथं उपास्योपासनयोरैक्ये धर्मासाङ्कर्ये च लिङ्गं भवेत्--इत्यभिप्रेत्य शङ्कते—कथमस्य लिङ्गत्वमिति । तदुच्यत इति । उपासनायाः भेदो न सम्भवति, 'य एवं विद्वान् साम गायति' इत्युत्पत्तिविधेरेकत्वात् उपास्यस्य परमेश्वरस्य उभयत्राप्यैक्यमावश्यकम्, उभाविति निर्देशस्तु स्थानभेदोपाधिकः - इति भावः ॥ २२ ॥

इति सम्बन्धाधिकरणम्

पूर्वत्र स्थानभेदाद्धर्माणामसाङ्कर्यं निरूपितम् । वीर्यसम्भृत्यादिगुणेषु शाण्डिल्यादिविद्याविरुद्धस्थानानाम्नानात् तासूपसंहारः - इति प्रत्यवस्थानात् सङ्गतिः ।

## १२ संभृत्यधिकरणम्

'ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते। तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन् न वेति विचारणायां, ब्रह्मसंबन्धादुपसंहारप्राप्तौ, एवं पठति—

### संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः। अत एव च आयतनविशेषयोगात्। तथाहि—शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तं 'एष म आत्माऽन्तर्हृदये' (छा. उ. ३।१४।३)

---

ब्रह्मणा ज्येष्ठानि वीर्याणि सम्भृतानि—स्वस्मिन् स्थापितानि, ज्येष्ठं ब्रह्म अग्रे—ब्रह्मादिदेवेभ्यः प्रागेव दिवं व्याप्नोत्। 'ब्रह्मा देवानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति मन्त्रस्योत्तरार्धं तत्र द्रष्टव्यम्। तदर्थः द्युनिवेशप्रभृतय इति संगृहीतः।

ननु—वीर्यसम्भृत्यादिगुणकोपासनायाः शाण्डिल्यादिविद्यैक्ये सति एषां गुणानां तत्रोपसंहारो भवेत्, तदैक्यं तु तत्प्रत्यभिज्ञया भवेत्, न चेह प्रत्यभिज्ञाप्रयोजकं शाण्डिल्यादिविद्यागतासाधारणगुणसङ्कीर्तनं अस्ति। अतः कथमुपसंहारः- इति चेत्;

उच्यते—वीर्यसम्भृत्यादिगुणेषु न कश्चित् उपासनाविधिः शब्दतोऽस्ति। अतः अनारभ्याधीतानामेषां क्व निवेश इति विवक्षायां, अत्रैव उपासीतेत्यध्याहारेण पृथगुपासनकल्पने गौरवात् खिलग्रन्थपठितानामेषां गुणानां तत्सम्बन्धिशाखागतविद्यासूपसंहारो भविष्यति। खिलस्य तच्छाखानुक्तापेक्षितार्थपूरकत्वेनैव तच्छाखाशेषत्वस्योपपादनीयत्वात्।

नवाविशेषादितिसूत्रे विशेषपदेन स्थानभेदस्य विवक्षितत्वात् इहापि अतश्शब्देन स एव परामृश्यत इत्यभिप्रेत्य, आपाततस्सिद्धान्तमाह—अत एव- चायतनविशेषयोगादिति। सूत्रे, सम्भृतिश्च द्युव्याप्तिश्च तयोस्समाहारः सम्भृति-

इति। तद्वदेव दहरविद्यायामपि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा. उ. ८।१।१) इति। उपकोसलविद्यायां तु अक्ष्यायतनत्वं 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा. उ. ४।१५।१) इति। एवं तत्र तत्र तत्तदाध्यात्मिकमायतनं एतासु विद्यासु प्रतीयते। आधिदैविक्यस्त्वेता विभूतयः संभृतिद्युव्याप्तिप्रभृतयः, तासां कुत एतासु प्राप्तिः।

नन्वेतास्वपि आधिदैविक्यो विभूतयः श्रूयन्ते 'ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' (छा. उ. ३।१४।३) 'एष उ एव भामनीः एष हि सर्वेषु लोकेषु भाति' (छा. उ. ४।१५।४) 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' (छा. उ ८।१।३) इत्येवमाद्याः। सन्ति चान्या आयतनविशेषहीना अपि इह ब्रह्मविद्याः षोडशकलाद्याः।

सत्यमेवमेतत्। तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः। समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्ट-

---

द्युव्याप्ति-इति विग्रहः। तासां कुत इति। द्युव्याप्त्यादीनां विभुधर्माणां अल्पायतनगते परिच्छिन्ने ब्रह्मणि निवेशासम्भवात्-इति भावः।

अमुं सिद्धान्तं दूषयति—नन्विति। एतास्वपीति। तत्र चेत् 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' इति सूत्रोक्तरीत्या परिहारो विवक्षितः, स इहापि समानः।

स्वयं सिद्धान्तमाह—सत्यमेवमिति। नवाविशेषादितिसूत्रे हि विशेषपदेन न आहत्य स्थानभेदो विवक्षितः, अपि तु, तस्योपनिषदहरित्यादौ उपनिषद्विशेषे स्थानविशेषोपादानेन स्थानान्तरव्यावर्तनात् इत्यर्थो विवक्षितः। तथा च इहाप्यत्रशब्देन व्यावृत्तिः परामृश्यते, तद्धेतुश्च उपासनान्तरप्रत्यभिज्ञाभावो विवक्षितः। तदाह—तथाप्यत्रेति। तथा च, खिलोक्तत्वेऽपि तच्छाखागतविद्याविशेषप्रत्यभिज्ञानाभावात्, तच्छाखोक्तसर्वब्रह्मविद्यासूपसंहारे च वाक्यावृत्तिप्रसङ्गात् इहैव

देशा गुणा उपसंह्रियेरन्निति युक्तम् । संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च मनोमयत्वादयो गुणाः परस्परव्यावृत्तस्वरूपत्वात् न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः । न च 'ब्रह्मसंबन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनम्' इत्युचितम् ; विद्याभेदेऽपि तदुपपत्तेः । एकमपि हि ब्रह्म विभूतिभेदैरनेकधोपास्यत इति स्थितिः । परोवरीयस्त्वादिवत् भेददर्शनात् । तस्मात् वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहारः इति ॥ २३ ॥

१३ पुरुषविद्याधिकरणम्

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या । तत्र, पुरुषो

---

उपासीतेत्यध्याहृत्य सम्भृत्यादिगुणकमुपासनान्तरं कल्पनीयम्, खिलग्रन्थाम्नानं तु अध्ययनधर्मविशेषसम्बन्धार्थं भविष्यति-इति परिहाराभिप्रायः ॥ २३ ॥

इति सम्भृत्यधिकरणम्

'पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातस्सवनं.... तदस्य वसवोऽन्वायत्ताः....तं चेदस्मिन् वयसि किञ्चिदुपतपेत्—व्याध्यादिकं यदि पीडयेदित्यर्थः, स ब्रूयात् प्राणा वसवः इदं मे प्रातस्सवनं माध्यन्दिनं सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीय' इति तत्र व्याध्युपशमार्थ आशीर्मन्त्रः । 'अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं....तदस्य रुद्रा अन्वायत्ताः' तत्र व्याधिप्राप्तौ 'प्राणा रुद्राः इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुत' इत्यादिराशीर्मन्त्रः । 'अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत् तृतीयसवनं....तदस्यादित्या अन्वायत्ताः' तत्र व्याधिप्राप्तौ 'प्राणा आदित्या इदं मे तृतीयसवनं आयुरनुसन्तनुत' इत्यादिराशीर्मन्त्रः । 'प्र ह षोडशं वर्षशतं जीवति' इति फलं च कीर्तयित्वा 'स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षा, अथ यदश्नाति यत् पिबति यद्रमते तदुपसदैरेति, अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति, अथ यत् तपोदानमार्जवमहिंसासत्यवचनमिति ता अस्य दक्षिणाः....मरणमेवावभृथः' इति ताण्डिनः समामनन्ति । पैङ्गिनोऽप्येवमेवामनन्ति । तदाह—अस्ति ताण्डिनां पैङ्गिनां चेति ।

यज्ञः कल्पितः, तदीयमायुः त्रेधा विभज्य सवनत्रयं कल्पितम्, अशिशिषादीनि च दीक्षादिभावेन कल्पितानि। अन्ये च धर्माः तत्र समधिगताः आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित् पुरुषयज्ञं कल्पयन्ति 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' (महाना. उ. २५) इत्येतेनानुवाकेन।

तत्र संशयः—किं ये इतरत्रोक्ताः पुरुषयज्ञस्य धर्माः ते तैत्तिरीयकेषूपसंहर्तव्याः किं वा नोपसंहर्तव्याः? इति।

पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तौ—

---

तैत्तिरीयकास्तु 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत् यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत् पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत् सायं प्रातरत्ति तत् समिधो यत् प्रातर्मध्यन्दिनं सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतत् सत्रं यन्मरणं तदवभृथः' इति समामनन्ति।

पूर्वत्र प्रत्यभिज्ञानाभावात् उपसंहारो नेत्युक्तम्, इह तु पुरुषयज्ञत्वमरणावभृथत्वाद्यसाधारणधर्मप्रत्यभिज्ञाया विद्यमानत्वात् ताण्डिपैङ्गिशाखागतायास्तैत्तिरीयकगतायाश्च पुरुषविद्याया एकत्वात् उपसंहारो गुणानां भवतु-इति प्रत्यवस्थानात् सङ्गतिः।

ननु—'अन्यथात्वं शब्दात्' इत्यत्र प्राणसंवादादिबहुसारूप्ये सत्यपि, उद्गीथावयवोङ्कार एकत्रोपास्यः अन्यत्र तूद्गाता इत्येतावता वैषम्येण विद्याभेद आश्रितः, इह तु मरणावभृथत्वादिकं किञ्चिदेव सादृश्यं 'आत्मा यजमानः' इत्यादिकं बहु वैषम्यम्, अतः कथमत्र विद्यैक्यशङ्का;

सत्यम्, अन्यथात्वंशब्दादित्यत्र उपसर्जनीभूतानां बहूनां साम्ये सत्यपि प्रधानवैषम्यात् विद्ययोर्भेदो दर्शितः, इह तु पुरुषे उपास्यं यज्ञत्वरूपं यत् प्रधानं

आचक्ष्महे नोपसंहर्तव्या इति। कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाचार्यः पुरुषविद्यायामिवेति। यथा एकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुविद्यायामाम्नानं नैवं इतरेषां तैत्तिरीयाणां आम्नानमस्ति। तेषां हि इतरविलक्षणमेव यज्ञसंपादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपशुऋत्विगाद्यनुक्रमणात्। यदपि सवनसंपादनं तदपि इतरविलक्षणमेव 'यत् प्रातर्मध्यंदिनँ सायं च तानि सवनानि' इति। यदपि किंचित् मरणावभृथत्वादिसाम्यं तदपि अल्पीयस्त्वात् भूयसा वैलक्षण्येन अभिभूयमानं न प्रत्यभिज्ञापनक्षमम्।

न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते। विदुषो यज्ञस्येति हि न चैते समानाधिकरणे षष्ठ्यौ 'विद्वानेव यो यज्ञः तस्य' इति। न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति। व्यधिकरणे त्वेते षष्ठ्यौ 'विदुषो यो यज्ञः' तस्य इति। भवति हि पुरुषस्य मुख्यो यज्ञसंबन्धः। सत्यां च गतौ मुख्य एवार्थ आश्रयितव्यो न भाक्तः। 'आत्मा यजमानः' इति च यजमानत्वं पुरुषस्य निब्रुवन् वैयधिकरण्येनैव अस्य यज्ञसंबन्धं दर्शयति।

---

तत् उभयत्रापि सममिति विद्यैक्यमाशङ्क्यते। एवंसति, छान्दोग्यतैत्तिरीयकयोः ये गुणा विरुद्धाः—यथैकत्र सायंप्रातर्मध्यन्दिनेषु सवनत्रयदृष्टिः अन्यत्र त्रिधा विभक्ते आयुषि, तेषां विकल्पो भविष्यति, अविरुद्धानामुपसंहारो नित्यं भविष्यति-इति पूर्वपक्षिणोऽभिप्रायः।

सिद्धान्ती प्रधानवैषम्यं उत्तरत्र प्रतिपादयिष्यति। गुणानां तु यत्र बहूनां वैषम्यं साम्यं क्वचिदंशे एव, तादृशस्थले भूयोऽनुग्रहन्यायात् अनेकगुणकृतप्रत्यभिज्ञाविच्छेदेन विद्याभेद एव स्वीकर्तव्यः-इति तावत् प्रथममाह—नोपसंहर्तव्या इतीत्यादिना।

इदानीं प्रधानवैषम्यं दर्शयति—न चेति। ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्, अत आह—न हीति। यद्यपि सामानाधिकरण्यमुचितम्, तथापि, तदाश्रयणे आरोपः स्वीकर्तव्यः, तस्यैव च पुरुषस्य यज्ञत्वेन दृष्टस्य पुनः तद्विरुद्धं यजमानत्वरूपं यज्ञकर्तृत्वमपि द्रष्टव्यम्, विदुषोयज्ञस्येत्येतदपि गुणान्तरविधायकमिति वाक्यभेदश्च प्रसज्यते इति, वैयधिकरण्यमेवाश्रीयते।

अपि च–'तस्यैवंविदुषः' इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावं आत्मादीनां च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात्।

अपिच–ससंन्यासामात्मविद्यां पुरस्तादुपदिश्य अनन्तरं तस्यैवंविदुष इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो न स्वतन्त्र इति प्रतीमः। तथाचैकमेव फलं उभयोरप्यनुवाकयोरुपलभामहे 'ब्रह्मणो महिमानमाप्नोति' इति। इतरेषां तु अनन्यशेषः पुरुषविद्याम्नायः। आयुरभिवृद्धिफलो ह्यसौ, 'प्र ह षोडशं वर्षशतं जीवति य एवं वेद' (छा. उ. ३।१६।७) इति समभिव्याहारात्। तस्मात् शाखान्तराधीतानां पुरुषविद्याधर्माणां आशीर्मन्त्रादीनां अप्राप्तिः तैत्तिरीयके ॥ २४ ॥

१४ वेधाद्यधिकरणम्

## वेधाद्यर्थभेदात् ॥ २५ ॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः' इत्यादिः।

---

ननु - वैयधिकरण्यपक्षेऽपि विदुषः साम्पादिकयज्ञसम्बन्धोऽनूद्यत इति वक्तव्यम्, तन्नोपपद्यते। न हीह तस्मिन् पक्षे साम्पादिकस्य कस्यचिद्यज्ञस्य [1]प्रतिपादनं सम्भवति। उत्तरत्र हि आत्मादीनां यजमानत्वादिकमेव सम्पादितं, न तु कस्यचित् यज्ञत्वं सम्पादितम्। नापि यज्ञस्य साम्पादिकस्य विद्वत्सम्बन्धः केनचित् प्रमाणेन प्राप्तः-इति चेत्;

उच्यते–यज्ञाङ्गानां यजमानादीनां सम्पादनात् तत्समुदायस्य यज्ञत्वं अर्थसिद्धम्, तस्य च पूर्वानुवाकाम्नातविद्यासम्बन्धोऽपि प्रकरणात् सिद्ध इति, विदुषो यज्ञस्येति वैयधिकरण्यपक्षे सम्भवत्यनुवादः।

ससन्न्यासामात्मविद्यामिति। 'तस्मान्न्यासमेषान्तपसामतिरिक्तमाहुः' इति सन्न्यासः 'ओमित्यात्मानं युञ्जीत' इति च ब्रह्मविद्या पूर्वानुवाके प्रस्तुता ॥ २४ ॥

इति पुरुषविद्याधिकरणम्

---

1. मु. सम्पादनं

ताण्डिनां 'देव सवितः प्रसुव यज्ञम्' इत्यादिः। शाटचायनिनां 'श्वेताश्वो हरितनीलोऽसि' इत्यादिः। कठानां तैत्तिरीयाणां च 'शं नो मित्रः शं वरुणः' इत्यादिः। वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते 'देवा ह वै सत्रं निषेदुः' इत्यादि। कौषीतकिनामप्यग्निष्टोमब्राह्मणं 'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहः ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति' इति।

किमिमे 'सर्वं प्रविध्य' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन् किंवा नोपसंह्रियेरन्? इति मीमांसामहे।

किं तावत् नः प्रतिभाति। उपसंहार एवैषां विद्यास्विति। कुतः? विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात्। नन्वेषां विद्यार्थतया विधानं नोपलभामहे। बाढम्। अनुपलभमाना अपि तु अनुमास्यामहे संनिधिसा-

---

पूर्वस्मिन्नधिकरणे विद्यासन्निधिसमाम्नातस्य तैत्तिरीयकगतपुरुषयज्ञस्य विद्याङ्गत्वमुक्तम्। एवं तर्हि विद्यासन्निधिसमाम्नातानां मन्त्रादीनामपि विद्याङ्गत्वमस्त्विति प्रत्यवस्थानात् सङ्गतिः।

ननु—विनियोजकवचनाभावे कथं वेधमन्त्रादीनां विद्यासु विनियोगः स्यात्-इत्याशङ्क्य, प्रत्यक्षवचनाभावेऽपि सन्निधिसामर्थ्यकल्पितेन वचनेन विनियोगो भविष्यतीति परिहरति—नन्वित्यादिना।

ननु—'सर्वं प्रविध्य' इत्यादिमन्त्रस्यायमर्थः—शत्रोः सर्वं शरीरं हृदयं च प्रविध्य-भित्त्वा धमनीः-सिराः, शिरश्च प्रवृज्य-नाशयित्वा त्रिधा छिन्नः कर्तव्यः-इति। अयं च मन्त्रो लिङ्गानुसारेण आभिचारिककर्माङ्गतया प्रतीयते। देवसवितरितिमन्त्रो यज्ञयज्ञपतिप्रसवस्य आदित्यात् प्रार्थनां प्रतिपादयन् यज्ञाङ्गं प्रतीयते। श्वेतः—उच्चैश्श्रवाः हयो यस्य स श्वेताश्वः, हरितः-इन्द्रनीलमणिः, तद्वन्नीलोऽसीति इन्द्रप्रकाशकः तद्देवत्ये कर्मणि अङ्गमिति प्रतीयते। शन्नोमित्र इत्यादि 'ऋतं वदिष्यामि तेजस्वि नावधीतमस्तु' इति लिङ्गात् अध्ययनाङ्गमवगम्यते। प्रवर्ग्यश्च, 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति वचनेन क्रत्वव्यभिचरितोपसद्भिः क्रतोरुपस्थापनात् अनारभ्याधीतानां प्रकृतिगामित्वाच्च फलवत्सन्निधावफलंतदङ्गमिति ज्योतिष्टोमाङ्गमवगम्यते। अग्निष्टोमस्य च स्वर्गार्थिता वचनेनैव ज्योतिष्टोमेनस्वर्गकामो-

**मर्थ्यात्। न हि सन्निधेरर्थवत्त्वे संभवति अकस्मादसावनाश्रयितुं युक्तः।**

**ननु नैषां मन्त्राणां विद्याविषयं किंचित् सामर्थ्यं पश्यामः, कथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति। नैष दोषः- सामर्थ्यं तावत् मन्त्राणां विद्याविषयमपि**

---

यजेतेति सिद्धा। अतो वेधादिमन्त्राणां कर्मणां च प्रवर्ग्यादीनां, सन्निधिमपेक्ष्य प्रबलैः श्रुतिलिङ्गवाक्यैः अन्यार्थतया अवगतानां, कथं सन्निधिना विद्यार्थता स्यात्-इति चेत्;

उच्यते—सन्निधेः श्रुत्यादिकमपेक्ष्य दुर्बलत्वं हि श्रुत्यादिकमपेक्ष्य विनियोजकत्वात् वक्तव्यम्, तत् तुल्यं श्रुत्यादिष्वपि। न हि श्रुत्यादिकमपि आसत्तिरूपं सन्निधिं अनपेक्ष्य विनियोजकं भवति। श्रुत्यादिवत् आसत्तिरूपायास्सन्निधेरपि शाब्दबोधाङ्गत्वात्। अतः सन्निधेर्दुर्बलत्वमेवासिद्धम्। अस्तु वा दुर्बलता। अथापि तस्य प्रबलेन बाधो विरोधे सत्येव सम्भवति। न चेह विरोधोऽस्ति, श्रुत्यादिभिः अन्यत्र विनियुक्तानामपि, तदनपबाधेन सन्निधिना वेधादिमन्त्राणां अन्यत्रविनियोग-सम्भवात्।

अपि च-सन्निधिबलेन यदि मन्त्रादीनां विद्यासु विनियोगो नोपेयेत, तदा सन्निधिः व्यर्थ एव स्यात्। वैयर्थ्यप्रसक्तौ च [1]न प्रबलेनापि दुर्बलस्य बाधः सम्भवति। अत एव 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इतिवाक्यप्रमाणेन चयनानुनिष्पन्नस्थण्डिलविशेषस्याग्निष्टोमाङ्गाहवनीयाधारत्वावगमेऽपि, ज्योतिष्टोमप्रकरणाम्नाताया उत्तरवेद्या अपि, प्रकरणपाठो व्यर्थो मा भूदिति आहवनीयाधारतायां समुच्चय उपेयते। तदाह —**न हि सन्निधेरर्थवत्त्वे सम्भवति अकस्मादसावनाश्रयितुं युक्त इति।**

ननु—सन्निधिनापि मन्त्राणां विनियोगः अनुष्ठेयार्थप्रकाशकतामुपेत्यैव वक्तव्यः। वेधादिमन्त्राणां च उपासनोपयुक्तार्थस्मरणजनकता नोपलभ्यते, तत्प्रकाश्यानां धमन्यादिवेधानां उपासनासु अभावात्, अन्यार्थानां च कर्मणां अन्यत्र विनियोगे विनियुक्तविनियोगविरोधः स्यात्-इति शङ्कते—**ननु नैषां मन्त्राणामिति।**

---

1. **न प्रबलेनापीति** आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्-इति न्यायात्-इति भावः।

किंचित् शक्यं कल्पयितुम्, हृदयादिसंकीर्तनात्। हृदयादीनि हि प्रायेण उपासनेष्वायतनादिभावेनोपदिष्टानि, तद्द्वारेण च हृदयंप्रविध्येत्येवंजातीयकानां मन्त्राणां उपपन्नमुपासनाङ्गत्वम्। दृष्टश्च उपासनेष्वपि मन्त्रविनियोगः 'भूः प्रपद्येऽमुनाऽमुनाऽमुना' (छा. उ. ३।१५।३) इत्येवमादिः।

---

हृदयादिसंकीर्तनादिति। मन्त्रगतं हि यद्येकं पद पदद्वयं वा अनुष्ठेयार्थस्मरणोपयुक्तं तदा इतरेषां पदानां तद्विशेषणसमर्पकतया स्तावकतामुपेत्य मन्त्रस्य अवगतो विनियोगो निर्वहति; यथा 'देवस्य त्वा सवितुः प्रसवे' इति मन्त्रे अग्नयेनिर्वपामीति पदद्वयस्य अनुष्ठेयार्थप्रकाशकतया देवस्यत्वेत्यादिपदानां स्तावकता-इति भावः।

ननु—देवस्यत्वेति मन्त्रे इतरेषां पदानां निर्वापस्तावकता सम्भवति, तत्र निर्वापस्य प्राधान्यावगमात्। वेधादिपदानां तु न हृदयादिस्तावकता सम्भवति, वेधादीनामेव मन्त्रे प्राधान्यप्रतीतेः। अतः कथमत्र देवस्यत्वेतिमन्त्रन्यायः प्रवर्तताम्-इति चेत्;

उच्यते—शन्नोमित्रइतिमन्त्रस्य तावत् उपासनोपयुक्तार्थस्मारकता सम्भवति, उपासकेन देवताप्रार्थनस्य उपासनोपयुक्तस्य कर्तव्यतोपपत्तेः। एवं देवतानमस्कारोऽपि उपासनोपयुक्तो भविष्यति। तथा च 'शन्नो मित्रः' इत्यादिप्रार्थनाप्रतिपादकं 'नमो ब्रह्मणे' इत्यादिनमस्कारप्रतिपादकं च भवत्युपासनोपयुक्तम्। 'ऋतं वदिष्यामि' इत्यादिकं उपासनाङ्गभूतसत्यादिवदनप्रकाशकं भविष्यति। तेजस्विनावधीतमिति उपासनोपयुक्ताध्ययनस्मारकम्। अन्यत्तु गुरुशिष्ययोर्हितादिप्रार्थनापरं उपासनासमवेतमेव। एवं च [1]वेधादिमन्त्रोदाहरणं सिद्धान्ते दृष्टान्ततयोपयुक्तं भविष्यतीति, तदुदाहरणे नातीवाभिनिवेष्टव्यम्।

भूः प्रपद्येऽमुनेति। 'अन्तरिक्षोदरः कोशः' इत्यादिना ब्रह्माण्डस्य कोशत्वेन उपासनां पुत्रदीर्घायुष्ट्वफलां विधाय, तत्र 'भूः प्रपद्ये' इत्यादयो मन्त्रा अङ्गत्वेन [2]विनियुक्ताः। अमुनेतिपदस्थाने [3]उपासकेन पुत्रनाम ग्राह्यम्। भूरित्यस्य मन्त्रांशस्य अर्थः तत्रैव ब्राह्मणेन प्रतिपादितः—'यदवोचं भूः प्रपद्य इति, पृथिवीं

---

1. मु. वेधादिमन्त्रान्तरोदाहरणं
2. मु. विहिताः
3. मु. उपासनाकाले

तथा प्रवर्ग्यादीनां कर्मणां अन्यत्रापि विनियुक्तानां सतां अविरुद्धो विद्यासु विनियोगः, वाजपेय इव बृहस्पतिसवस्य-इति ।

---

प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्ये इत्येव तदवोचम्—इति । अमुना पुत्रेण सहित एव पृथिव्यादिकं प्राप्नवानि, न तु पुत्रवियुक्तः—इति उपासकप्रार्थनामन्त्रार्थः ।

ननु—अन्यत्र विनियुक्ततयोपस्थितस्य अन्यत्र विनियोगो न सम्भवति । अत एव, 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र, प्रयाजशेषपदेन प्रयाजार्थतयोपस्थितस्य अभिघारणेऽपि विनियोगासम्भवात् 'प्रयाजशेषं हविष्षु क्षारयेत्' इति वाक्यार्थः स्वीकृतः । तथा च, प्रवर्ग्यादीनां अन्यत्र वचनबलेन विनियुक्ततयावगतानां कथं विद्यासु विनियोगः स्यात्—इत्यत आह—तथा प्रवर्ग्यादीनामिति । बृहस्पतिसवो हि 'यः पुरोधाकामस्स्यात् स बृहस्पतिसवेन यजेत' इतिवचनेन ब्रह्मवर्चसार्थतयावगतः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति क्त्वाप्रत्ययसमभिव्याहृतविधिविभक्त्या वाजपेयार्थतया विधीयते । क्त्वाप्रत्ययेन हि द्वयोर्धात्वर्थयोः एकः कर्ता अवगम्यते । कर्तृत्वं च क्रियाविशिष्टत्वम् । तथा च, एकत्वस्य विशिष्टान्वयिनो विशेषणीभूतक्रियायामप्यन्वयात् तस्या अपि एकत्वमवगम्यते । क्रिया च प्रयोगापरपर्यायेति वाजपेयबृहस्पतिसवयोः एकः प्रयोगोऽवगम्यते । प्रयोगैक्यं च अङ्गप्रधानभावेन वा एकफलार्थत्वेन वा वक्तव्यम् । तत्र, वाजपेयफले वचनेन वाजपेयावरुद्धे बृहस्पतिसवनिवेशासम्भवात् अङ्गाङ्गिभाव एव कल्प्यते । तत्रापि, वाक्यस्य वाजपेयप्रकरणगतत्वात्, बृहस्पतिसवेनयजेतेतिपुनर्विधानावगतबृहस्पतिसवप्रयोगस्यैव फलापेक्षणाच्च, तस्यैव वाजपेयाङ्गता कल्प्यते । यद्यपि च, वाजपेयेनेष्ट्वाबृहस्पतिसवेनयजेतेतिवचनबलादेव बृहस्पतिसवव्यतिरिक्ताङ्गविशिष्टतया वाजपेयं परिसमाप्य तदनन्तरं वसन्ते स्वकाल एव बृहस्पतिसवोऽनुष्ठेय इति अवान्तरप्रयोगभेदोऽस्ति । तथापि, महाप्रयोगैक्यमादाय क्त्वाप्रत्ययावगतकर्त्रैक्यनिर्वाहः । ततश्च, यथा अन्यार्थतयाऽवगतस्य बृहस्पतिसवस्य वाक्येन वाजपेये विनियोगः, एवं प्रवर्ग्यादिकर्मणामन्यार्थतयावगतानां अन्यत्र विनियोगो भविष्यति ।

ननु—विनियुक्तस्य विनियोगे प्रतीतावेव विरोधो न वस्तुनि । अत एव 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र, पुरोडाशकपालपदेन 'पुरोडाशस्यैव सम्बन्धि कपालम्' इति विशेषणस्यव्यावर्तकस्वभावतया अवगमे सति तुषोपवाप-

शेषत्वबोधकताया विरोधेनासम्भवात् प्रतीतिविरोधपरिहाराय पुरोडाशकपालपदस्याधिष्ठानलक्षणोपेयते। वस्तुविरोधस्तु न अधिष्ठानलक्षणया परिहर्तुं शक्यः। बृहस्पतिसवस्य तु प्रकृतवाक्ये अन्यशेषतयानुपस्थितत्वात् नास्ति विनियुक्तविनियोगविरोधः—इति चेत्;

तर्हि प्रवर्ग्यादिकर्मणामपि प्रकृते अन्यशेषतयाऽनुपस्थानात् नास्ति विरोध इति तुल्यम्।

ननु—अत्र भाष्ये ब्रह्मवर्चसार्थतया विनियुक्तस्यैव बृहस्पतिसवस्य वाजपेयाङ्गत्वमित्युक्तम्। सिद्धान्तावसरेऽपि तथैव वक्ष्यते। अत एतत् भाष्याभिमतमवगम्यते। तत्तु मीमांसकमर्यादाविरुद्धम्। [1]अनुपादेयपदार्थसमभिव्याहृतसन्निधेः कर्मभेदकतोपगमात्। तथा हि—कुण्डपायिनामयनप्रकरणे समाम्नातं 'मासमग्निहोत्रं जुहोति' 'मासं दर्शपूर्णमासाभ्यां यजेत' इतिवाक्यं उदाहृत्य तैस्सिद्धान्तितम्—अत्र हि दध्नाजुहोतीत्यादिवत् गुणसंक्रान्तो विधिरिति वक्तुं न शक्यते। मासस्य पुरुषकृत्यसंपाद्यतया दध्यादिवद्विधेयत्वासम्भवात्। अतो मासे होमादिकमेव विधेयम्। न च होमादिकमपि विहितमिति तस्यापि विधेयत्वं न सम्भवतीति वाच्यम्। नित्याग्निहोत्रप्रकरणे तद्विधिसद्भावेऽपि तस्येहानुपस्थितेः। न च इदमेव वाक्यं तत्स्मारकं भविष्यतीति वाच्यम्। तथासति एतस्य वाक्यस्य स्मारकतया विधायकता नास्तीति वाक्यं व्यर्थमेव भवेत्। न च स्मृतस्यैवाग्निहोत्रादेः पुनस्सत्राङ्गतयाविध्यभ्युपगमात् न वाक्यवैयर्थ्यमिति वाच्यम्। एकस्यैव वाक्यस्य स्मारकत्वे विधायकत्वे च 'अग्निहोत्रहोमः प्रसिद्धः स च सत्राङ्गम्' इति वचनव्यक्त्यभ्युपगमे व्यापारद्वयावेशेन वाक्यावृत्तिप्रसङ्गात्। न च अग्निहोत्रादिनाम्ना प्रसिद्धाग्निहोत्रस्मारणम्। नाम्न आख्यातपारतन्त्र्येण, आख्यातस्य विधिस्वरसतया, विहितस्य विधानायोगेन कर्मभेदावगतौ, नाम्ना तत्प्रतिबन्धासम्भवात्। नाम्ना सिद्धरूपेण विहितत्वोपस्थितेः पूर्वापरीभूतात्मना [2]विधेयताप्रतीतिप्रतिबन्धायोगाच्च। अतः, आख्यातस्वारस्येन कर्मान्तरत्वावगमे सति, अग्निहोत्रनाम प्रसिद्धाग्निहोत्रेण सादृश्यं प्रतिपादयत् एतद्वाक्यविहिते कर्मणि नैयमिकाग्निहोत्रधर्मातिदेशार्थं भविष्यति-इति। वाजपेयेनेष्ट्वाबृहस्पतिसवेनयजेतेत्यत्रापि अनुपादेयवाजपेयोत्तरकालरूपगुणसमभिव्याहृता सन्निधिः प्रसिद्धबृहस्पतिसवस्येति प्रकृतवाक्ये बृहस्पतिसवस्य मासाग्निहोत्रादिवत् कर्मान्तरतैवोचिता-इति चेत्;

---

1. अनुपादेयत्वं पुरुषकृतिसाध्यत्वयोग्यतारहितत्वम्।
2. मु. विधेयताप्रतिबन्धा

उच्यते—उक्ते मीमांसकैः एतस्मिन्न्याये भाष्यकाराणामनादर एव।

तथाहि—मासमग्निहोत्रंजुहोतीत्यत्र प्रसिद्धाग्निहोत्रस्य नाम्ना तावत् उपस्थितिरस्त्येव। एवं च वाक्यस्यावृत्तिर्नास्ति। नाम्ना स्मारितस्य आख्यातेन सत्राङ्गतया विधानसम्भवात्। न च आख्यातपरतन्त्रेण नाम्ना आख्यातावगता कर्मोत्पत्तिः निरोद्धुमशक्येति वाच्यम्। अप्रसिद्धनाम्न आख्यातपारतन्त्र्येऽपि, प्रसिद्धनामानुसारेणैवाख्यातवृत्त्युपगमात्।

तथा हि- इष्टिपशुसोमयागेषु फलापेक्षेषु बहुषु उत्पन्नेषु, 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति फलवाक्ये श्रुते, राजसूयपदस्य क्वचित् कर्मविशेषे एतद्दशायामगृहीतशक्तितया यजिपदेन फलापेक्षिणामुत्पन्नानामिष्टिपशुसोमयागानां सर्वेषां फलार्थतया विधिस्वारस्येऽवगते, यजिसमानाधिकरणं राजसूयपदमपि तेषां सर्वेषां नामेति आख्यातानुवर्तित्वं अप्रसिद्धस्य राजसूयपदस्य आश्रितम्। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विधौ श्रुतानां दर्शादिनाम्नां तु 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते' 'एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः' इत्यर्थवादानुसारेण कालयोगिष्वाग्नेयादिषु सोमयागे च प्रसिद्धत्वात्, आख्यातस्वारस्येन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र कालयुक्तानामाग्नेयादीनां तद्रहितानां प्रयाजादीनाञ्च परामर्शे सत्यपि नामानुसारेण कालयोगिषु आख्यातस्य सङ्कोच आश्रितः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तु, आख्यातस्वारस्येन दीक्षणीयाप्रभृतीनामिष्टीनां सोमयागस्य च परामर्शे सत्यपि, ज्योतिष्टोमपदस्य, 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति' इत्यर्थवादावगतदीपकत्वगुणेन ज्योतिःपदेन त्रिवृदादिस्तोमानुपादाय ते यस्य सन्तीति बहुव्रीहिणा 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' इतिवाक्यसिद्धस्तोत्रगतसङ्ख्यात्मकस्तोमसम्बद्धे सोमेनयजेतेतिवाक्योत्पन्ने यागे एतानिवावेत्यर्थवादेन व्युत्पन्नत्वात्, आख्यातस्य सोमयागमात्रविषयतया सङ्कोच आश्रितः। ततश्च अग्निहोत्रनाम्नोऽपि अग्निहोत्रंजुहोतीतिप्रसिद्धाग्निहोत्रोत्पत्तिवाक्येन होमविशेषनामत्वस्य सिद्धतया मासमग्निहोत्रंजुहोतीत्यत्रापि आख्यातस्य तदनुसार उचित एव।

अपिच आख्यातं न उत्पत्तिमेव कर्मणः अवश्यं प्रतिपादयति। प्रयोगविधित्वेऽपि आख्यातस्वारस्याहानेः। तथा च, आख्यातस्य उत्पत्तिप्रयोगयोरुदासीनतया

नाम्ना प्रसिद्धाग्निहोत्रप्रत्यभिज्ञानेन उत्पत्तेः प्रतिरोधात् [1]कांस्यभोजिन्यायेनापि आख्यातस्य प्रयोगविधिपरता सिध्यति। न च—आख्यातेन पूर्वापरीभूततया होमप्रतिपादनात् तेन रूपेण [2]सिद्धार्थनाम्ना प्रत्यभिज्ञानाभावात् कथमुत्पत्तिविधिप्रतिरोधकता—इति। अस्त्वेवं रूपभेदः, तथापि अग्निहोत्रनामार्थस्य जुहोत्यर्थस्य च अभेदेनान्वय आवश्यकः। कथमन्यथा प्रसिद्धाग्निहोत्रवाक्ये वा तस्य नामता स्यात्। ततश्च मासमग्निहोत्रमित्यग्निहोत्रपदस्य जुहोतेश्च सामानाधिकरण्यं पश्यतोऽभिज्ञस्य, य एव होमः प्रसिद्धाग्निहोत्रवाक्ये विहितः स एवायमिति भवत्येव प्रत्यभिज्ञा, न तु सिद्धत्वसाध्यत्वरूपधर्मभेदेन अभेदप्रतीतिप्रतिरोधः। सिद्धत्वादेश्शब्दविशेषोपाधिकृतया अर्थाभेदप्रतीतौ विरोधाभावात्। अन्यथा [3]वेदाःप्रमाणमित्यत्रापि अभेदप्रतीतिः न स्यात्।

स्वीकृतं च नामानुसारेण [4]दूरस्थस्य प्रत्यभिज्ञानं आज्यभागौयजतीति गृहमेधीयप्रकरणपठितवाक्ये। [5]तत्र हि 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इतिवाक्यविहितायामिष्टौ इतिकर्तव्यताकाङ्क्षिण्यां अतिदेशः इतिकर्तव्यतापूरणाय न कल्पनीयः। दर्शपूर्णमासयोःक्लृप्तोपकारजननसामर्थ्ययोः आज्यभागयोः श्रवणेन तदेकवाक्यतया इतिकर्तव्यताकाङ्क्षाया श्चरितार्थत्वात्। यत्र हि विकृतौ प्राकृतं क्लृप्तोपकारजननसामर्थ्यमङ्गं न श्रूयते, तत्र, सन्निधिपठितैरपि वैकृतैरपूर्वैः पदार्थैः न इतिकर्तव्यताकाङ्क्षा शान्ता भवतीति कृत्वा, [6]चोदनालिङ्गादि-

---

1. **कांस्यभोजिन्यायेनेति** शिष्यस्य गुरूपयुक्तभोजनपात्रे भोजननियमः, कांस्यपात्रे भोजननियमश्च। गुरोस्तु न भोजनपात्रनियमः। अत्र शिष्यनियमानुसारेण गुरुः कांस्यपात्रे भुङ्क्ते। अयं न्यायः कांस्यभोजिन्यायः। नियतानुसारेण अनियतनयनं न्यायार्थः।

2. आ० अप्रसिद्धार्थनाम्ना

3. **वेदाः प्रमाणमित्यत्रापीति** अत्र हि समानलिङ्गवचनकत्वं नास्ति, अथापि तत् शब्दगतमिति न अर्थाभेदविरोधि इति भावः।

4. आ० प्रसिद्धस्य दूरस्थस्य

5. **तत्रहीति** इति व्यवस्थापितं बाधलक्षणे-इत्यत्रान्वेति।

6. **चोदनालिङ्गम्**—सादृश्यरूपमनुमापकम्। आदिशब्देन प्रत्यक्षवचनं नामधेयं च ग्राह्यम्।

संपन्नेनातिदेशेन प्रापितैः प्राकृतैः क्लृप्तोपकारजननसामर्थ्यैरेव पदार्थैः झटिति सम्बद्धैः इतिकर्तव्यताकाङ्क्षापूरणे सति, वैकृतानां सन्निधिपाठो व्यर्थो माभूदिति, [1]रक्तपटन्यायेन तेषामपि इतिकर्तव्यतानिवेशः कल्प्यते। आज्यभागयोस्तु उपकारजननसामर्थ्यस्य प्रकृतौ क्लृप्ततया, दार्शपूर्णमासिकयोरेव च तयोः नाम्ना प्रत्यभिज्ञानात् गृहमेधीयवाक्येनान्वये सति, इतिकर्तव्यताकाङ्क्षाया निवृत्ततया चोदकाभाव एव कल्प्यते। एवं सति चोदकात्सम्भवत्प्राप्तिकयोराज्यभागयोः पुनश्श्रवणमपि सार्थकमुपपद्यते। चोदककल्पने तु तत एव आज्यभागयोः प्राप्तिसम्भवात् पुनश्श्रवणं व्यर्थमेव भवेत्, परिसङ्ख्याद्यर्थं वा भवेत्, तच्चायुक्तम्—इति व्यवस्थापितं बाधलक्षणे। न चायमर्थः दूरस्थयोराज्यभागयोः नाम्ना प्रत्यभिज्ञानं विना सम्भवति।

न चैवंसति 'प्रकरणान्तरे प्रयोजनान्यत्वम्' इत्यधिकरणे यत् कर्मभेदप्रतिपादनं तत् विरुध्यत इति वाच्यम्। यथा—अग्निहोत्रंजुहोतीतिवाक्योत्पन्नस्य होमस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'यावज्जीवमग्निहोत्रं जुहुयात्' इतिवाक्याभ्यां काम्यनैमित्तिकरूपेण प्रयोगभेदः सम्पद्यते, तथा—तस्यैव कुण्डपायिनामयनप्रकरणे समाम्नानेन तदङ्गत्वावगमात् प्रयोगभेद इति, भावनाभेदाभिप्रायेण तदधिकरणमुपपद्यते। कर्मभेदनिरूपणपरे द्वितीयाध्याये च भावनाभेदप्रतिपादनमेव साक्षात् सङ्गतम्। शब्दान्तरादिभिर्धात्वर्थभेदप्रतिपादनं तु [2]भावनाभेदफलकतयैव सङ्गच्छते।

एवंच यत् सप्तमे अग्निहोत्रनाम्नोऽतिदेशकत्वमुक्तं तदपि नानुपपन्नम्। धात्वर्थाभेदेऽपि नैयमिकाग्निहोत्रप्रयोगमपेक्ष्य सत्राङ्गप्रयोगस्यान्यतया तत्र अग्निहोत्रप्रकरणाम्नातानामङ्गानां उपदेशेन प्राप्तिसम्भवायोगात्। नित्यतयाम्नातानां ह्यङ्गानां नित्यतयावगम्यमानो यः प्रयोगः तत्रान्वयः, अन्यथा नित्यानित्यसंयोगविरोधप्रसङ्गात्। तत्र च यत्किंचित्फलसम्बन्धं विना विधिपर्यवसानायोगात् तावन्मा-

---

1. रक्तपटन्यायेनेत्यादि यथा पटोभवतीतिवाक्यस्यानाकाङ्क्षत्वेऽपि सहोच्चरितरक्तपदस्याकाङ्क्षया इतरस्याप्याकाङ्क्षामुत्थाप्य 'रक्तः पटो भवति' इति वाक्यपर्यवसानं एवमिहापीत्यर्थः।

2. आ॰ भावनाभेदकल्पकतयैव

एवं प्राप्ते ब्रूमः—नैषामुपसंहारो विद्यास्विति। कस्मात्? वेधाद्यर्थभेदात्। हृदयंप्रविध्येत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयो भिन्नाः, अनभिसंबद्धास्ते उपनिषदुदिताभिर्विद्याभिः। न तेषां ताभिस्सङ्गन्तुं सामर्थ्यमस्ति।

ननु हृदयस्योपासनेष्वप्युपयोगात् तद्द्वारक उपासनसंबन्ध उपन्यस्तः।

नेत्युच्यते–हृदयमात्रसंकीर्तनस्य ह्येवमुपयोगः कथंचिदुत्प्रेक्ष्येत। न च हृदयमात्रं अत्र मन्त्रार्थः। हृदयंप्रविध्यधमनीःप्रवृज्येत्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसंबध्यते। आभिचारिकविषयो ह्येषोऽर्थः। तस्मात् आभिचारिकेण कर्मणा सर्वंप्रविध्येत्येतस्य मन्त्रस्य अभिसंबन्धः।

तथा 'देव सवितः प्रसुव यज्ञम्' इत्यस्य यज्ञप्रसवलिङ्गत्वात् यज्ञेन कर्मणा संबन्धः। तद्विशेषसंबन्धस्तु प्रमाणान्तरादनुसर्तव्यः।

---

प्रकृतमनित्यत्वं अङ्गवाक्येष्वपि अवर्जनीयमिति, अग्निहोत्रंजुहुयात्स्वर्गकामइत्यादिफलसम्बन्धावगतं यथाकथञ्चिदनित्यत्वं सह्यत इति, तत्रैवोपदेशेनाङ्गानामन्वये सति कुण्डपाय्ययनगताग्निहोत्रप्रयोगे नोपदेशेनान्वयः, तस्यात्यन्तानित्यत्वात्। अतस्तत्रातिदेशः। अत एव, ज्योतिष्टोमप्रकरणाम्नातानामङ्गानां ज्योतिष्टोमेनस्वर्गकामोयजेतेतिवाक्यविहितो योऽग्निष्टोमसंस्थाकः प्रयोगः तत्रैवोपदेशतोऽन्वयः न तूक्थ्यादिसंस्थाकप्रयोगेऽपीति संस्थाधिकरणे शेषलक्षणे व्यवस्था दर्शिता।

न चैवमपि मासमग्निहोत्रंजुहोतीत्यादावग्निहोत्रपदं गौणमिति या मर्यादा सा भग्ना भवेदिति वाच्यम्। तत्र प्रकरणे अग्निहोत्रनामप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्यास्फुटतया गौणत्ववाचोयुक्तिसम्भवात्।

एवं च अग्निहोत्रपदेन प्रत्यभिज्ञानात् यथा कुण्डपायिनामयनप्रकरणे तन्त्र भिद्यते, एवं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्रापि नाम्ना प्रसिद्धस्यैवबृहस्पतिसवस्य प्रत्यभिज्ञानादभेदसिद्धौ 'अन्यत्रापि विनियुक्तानां सतां अविरुद्धो विद्यासु विनियोगः वाजपेय इव बृहस्पतिसवस्य' इत्यादि भाष्यं नानुपपन्नम्।

नैषामुपसंहारो विद्यास्वितीति। अयमत्र सिद्धान्ताभिप्रायः—सन्निधिमात्रमवलम्ब्य हि विद्यासु मन्त्रादीनां विनियोगः पूर्वपक्षिणा प्रतिपादनीयः। स तु

लिङ्गादिभिः अन्यत्र विनियोगे सति नोन्मिषति। विद्या हि स्वप्रकरणाम्नातैरङ्गैर्निराकाङ्क्षा इति न तासां वेधमन्त्रादिपर्यन्तमाकाङ्क्षाऽनुवर्तते। अतः सन्निधिनाङ्गत्वं वदता विद्यास्वाकाङ्क्षोत्थापनीया। उत्थाप्य चाकाङ्क्षां विद्याविधीनां मन्त्रादिविशिष्टविद्याविधाने तात्पर्यं कल्पनीयम्। विद्योपकारजननसामर्थ्यरहितानाञ्च प्रवर्ग्यादिकर्मणां वेधादिमन्त्राणाञ्च वैशिष्ट्यासम्भवात्, कर्मणां प्रयाजादिवत् आरादुपकारकत्वं मन्त्राणां चानुष्ठेयार्थस्मारकत्वं क्लेशेन सम्पाद्य, 'मन्त्रादिभिरुपकुर्यात्' इतिशब्दकल्पनापूर्वकं विधिपर्यवसानमाश्रयणीयम्। अतः सन्निधिना विनियोगो बहुकल्पनापेक्षत्वाद्विलम्बितः। ततः प्रागेव, वचनेन 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति अग्निष्टोमस्य 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति च प्रवर्ग्यस्य लिङ्गेन च मन्त्राणां विनियोगः शीघ्रमेवावगम्यते। बहुकल्पनानपेक्षत्वात्। तावतैव च तेषां निराकाङ्क्षतायां सत्यां न सन्निधेर्विनियोजकता भवति। सत्यां हि विनियोज्यपदार्थस्याकाङ्क्षायां सन्निधेर्विनियोजकता। सोऽयं आकाङ्क्षारूपमूलोच्छेदादप्राप्तबाध इत्युच्यते। एवं च, यत् पूर्वपक्षिणोक्तं 'विरोधाभावात् न लिङ्गादिना सन्निधेर्बाधः' इति तन्निरस्तम्। आकाङ्क्षारूपमूलोच्छेदेन विरोधसद्भावात्।

न च—यत्र श्रुतिलिङ्गादिना विनियोगे सन्निधिः क्लृप्त एव भवति तत्र भवतु नाम पूर्वप्रमाणमपेक्ष्य सन्निधेर्दुर्बलता, विद्यासन्निधिसमाम्नातानां तु प्रवर्ग्यमन्त्रादीनां न तत्तत्कर्मभिस्सन्निधिरस्तीति तेष्वपि सन्निधेः कल्पनीयतया कथं प्रकृते वेधादिमन्त्राणां प्रवर्ग्यस्य च कर्मसु शीघ्रं विनियोगो भवेत्—इति वाच्यम्। अन्वयबोधाङ्गं हि न आम्नानसादेश्यरूपस्सन्निधिः, अपि तु अन्वयबोधात् प्राक् शब्दात् अन्वयप्रतियोगिनां पदार्थानां अव्यवधानेनोपस्थितिरेव। सा च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'पुरस्तादुपसदाम्' इति वाचनिकविनियोगस्थले क्लृप्तैव। लिङ्गेन मन्त्रविनियोगस्थलेऽपि 'अनेन मन्त्रेण आभिचारिककर्मादिकमुपकर्तव्यम्' इति कल्पितवचनसिद्ध एवेति न तस्य पृथक्कल्पना अपेक्षिता। सन्निधिना तु [1]मन्त्रसामर्थ्यपर्यालोचनयैव विनियोगः कल्पनीय इति विलम्बः। यथाहुः 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानां आनन्तर्यमकारणम्'। इति।

एवं दुर्बलोऽपि सन्निधिः यद्यत्यन्तमनर्थकः स्यात् तदा भवेदपि तेन विद्यासु प्रवर्ग्यादीनां विनियोगः। न च तदस्ति। आरण्यकग्रन्थसन्निधिसमाम्नानस्य अरण्यानु-

---

1. आ॰ मन्त्रसामर्थ्यादि

**एवं अन्येषामपि मन्त्राणां केषांचिल्लिङ्गेन केषांचिद्वचनेन केषांचित्प्रमाणान्तरेणेत्येवं अर्थान्तरेषु विनियुक्तानां, रहस्यपठितानामपि सतां न संनिधिमात्रेण विद्याशेषत्वोपपत्तिः। दुर्बलो हि संनिधिः श्रुत्यादिभ्यः—इत्युक्तं प्रथमे तन्त्रे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै. सू. ३।३।१३) इत्यत्र।**

---

वचनादिधर्मविशेषप्राप्त्यर्थत्वात्। अवश्यं च वेधादिमन्त्रे तथाभ्युपगन्तव्यम्। तस्य विद्यातदङ्गप्रकाशकतायाः कथमप्यसम्भवेन विद्याङ्गत्वायोगात्। एवं च 'शन्नोमित्रः' इत्यादिमन्त्रस्यापि यथाकथञ्चित् विद्याप्रकाशकतासम्भवेऽपि न क्लेशेन विद्यासु विनियोग आश्रयणीयः। अध्ययनप्रकाशकतायाः स्वारस्यात्। उपनिषत्सन्निधिसमाम्नानं तु वेधादिमन्त्रवदेव अध्ययनाङ्गधर्मविशेषप्राप्त्यर्थं भविष्यति।

विनीयोजकप्रमाणेषु लाघवानुसारिणा शीघ्रं विनियोगे बोधिते गौरवानुसारिणो विलम्बितत्वात् दुर्बलतया मूलोच्छेदेन बाधः-इत्यत्र जैमिनिसूत्रसम्मतिमाह-**दुर्बलो हि सन्निधिरिति**। श्रुतिलिङ्गेत्यादिजैमिनिसूत्रस्यायमर्थः—श्रुत्यादीनां षण्णां प्रमाणानां समुदाये सूत्रनिर्देशानुसारेण यत् परं तस्य पूर्वापेक्षया दुर्बलता, अर्थस्य विनियोगाख्यस्य विप्रकर्षात्-पूर्वमपेक्ष्य उत्तरेण विलम्ब्य बोधनीयत्वात् इति।

तत्र श्रुतिलिङ्गविरोधोदाहरणम्—'निवेशनस्सङ्गमनो वसूनाम्' इति इन्द्रप्रकाशिका ऋक्। तस्या विनियोगः 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति। अत्र लिङ्गेन इन्द्रप्रकाशने विनियोगोऽवगम्यते श्रुत्या गार्हपत्ये। ऐन्द्रयेति तृतीया हि करणतां शक्त्या प्रतिपादयति, गार्हपत्यमिति द्वितीया च कर्मताम्। समभिव्याहारविशेषाच्च, गार्हपत्यस्यैन्द्रमन्त्रकरणकप्रकाशनकर्मत्वमित्यर्थः सिद्ध्यति। उपतिष्ठते इति हि आत्मनेपदं 'उपान्मन्त्रकरणे' इति सूत्रेण 'मन्त्रः करणं यस्मिन् प्रकाशनरूपेऽर्थे तत्र वर्तमानादुपपूर्वात्तिष्ठतेः आत्मनेपदं भवति' इति विहितम्। अतः तेन प्रकाशनं प्रतिपाद्यते। तथा च विभक्तिप्रतिपाद्यकर्मत्वकरणत्वयोः प्रतियोगिविशेषलाभार्थं पदान्तरसमभिव्याहारापेक्षत्वेऽपि, शक्यतया तयोश्श्रौतत्वं न विहन्यते।

तत्र संशयः—किं लिङ्गानुसारेण मन्त्रस्य इन्द्रप्रकाशने विनियोगमुपगम्य, गार्हपत्यमिति द्वितीयायाः सामीपिकाधारत्वलक्षणया सप्तम्यर्थतां स्वीकृत्य, 'गार्ह-

पत्यसमीपे स्थित्वा ऐन्द्या इन्द्रं प्रकाशयेत्' इत्यर्थः स्वीकर्तव्यः ? उत लिङ्गबाधेन मन्त्रगतेन्द्रपदस्य गार्हपत्ये लक्षणां योगं वा परिकल्प्य, श्रुत्या तत्रैव विनियोग आस्थेयः ? अथवा प्रमाणद्वयपर्यालोचनया समुच्चयः ? ।

तत्र पूर्वः पक्षः—प्रमाणद्वयानुसारेण इन्द्रे गार्हपत्ये च विनियोक्तव्यो मन्त्रः । अथवा—विनियोज्यसामर्थ्यानुसारेण विनियोगो वक्तव्यः, न ह्यग्नेः सेके विनियोगः सम्भवति, ततश्च ऐन्द्या गार्हपत्यप्रकाशनसामर्थ्याभावेन तत्र विनियोगो न सम्भवति । अपि च—अस्मिन्नेव वाक्ये ऐन्द्रीतितद्धितेन इन्द्राङ्गतावगमात् न कथञ्चिदपि गार्हपत्यप्रकाशने विनियोगोऽवगन्तुं शक्यते । तस्मात् 'गार्हपत्यसमीपे स्थित्वा इन्द्रं प्रकाशयेत्' इत्येव वाक्यार्थो वर्णनीयः । न च—ऐन्द्या इन्द्रं प्रकाशयेत्, मन्त्रान्तरेण योग्येन गार्हपत्यं प्रकाशयेत्, इति वाक्यभेद एव कुतो नाश्रीयते—इति वाच्यम् । [1]अनेकपदाध्याहारावगतैकवाक्यत्वभङ्गापेक्षया सप्तम्यर्थे द्वितीयाया लाक्षणिकत्वस्यैवोचितत्वात्—इति ।

सिद्धान्तस्तु-वचनपर्यालोचनया असत्ययोग्यतानिश्चये झटिति तावत् ऐन्द्या गार्हपत्यप्रकाशनाङ्गता अवगम्यते । परं तु, अवगता सा यदि कथमपि न सम्पद्येत तदा परित्यज्येत, सति सम्भवे यागस्य स्वर्गसाधनतेव न कथञ्चिदपि हातुं योग्या । सम्भवति चेद् इन्द्रपदस्य लक्षणया गार्हपत्यप्रकाशकता । अथवा-इन्धिधातोर्दीप्त्यर्थकस्य इन्द्रेतिरूपं निपातनात् भविष्यति । तथा च, यौगिकार्थमादाय इन्द्रपदं गार्हपत्यप्रकाशकं सम्भवति । न च ऐन्द्रीतितद्धितविरोधः । तेन हि इन्द्रसम्बन्धः ऋचः प्रतीयते, स च वचनानुसारेण अग्निचयनाङ्गगार्हपत्यप्रकाशनशेषत्वेऽपि न विरुद्ध्यते, तदापि मुख्यया वृत्त्या इन्द्रबोधकत्वाक्षतेः । एवं च, मन्त्रस्याध्ययनविध्यापादितप्रयोजनाकाङ्क्षायाः वचनेन शीघ्रप्रवृत्तेन निवारितत्वात् लिङ्गं विनियोगक्षमं न भवति । सत्यां हि मन्त्रस्य प्रयोजनाकाङ्क्षायां सामर्थ्यपर्यालोचनया विनियोगः कल्पनीयः । अतः मूलोच्छेदेन लिङ्गस्य वचनबाधितत्वात् तदनुसारिविनियोगानुन्मेषेण उभयत्रविनियोगइत्यपि निरस्तम् ।

लिङ्गवाक्यविरोधोदाहरणम्—

'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः'

---

1. अनेकपदाध्याहारेत्यस्य भङ्गान्तेनद्वन्द्वः ।

स्योनं–सुखसाधनभूतं-सदनं-स्थानं हे पुरोडाश ते-त्वदर्थं करोमि, तच्च स्थानं घृतस्य धारया सुशेवं-सुखशयनयोग्यं कल्पयामि-इत्ययमंशः सदनकरणं प्रकाशयति। तस्मिन् सीद-पूर्वार्धप्रस्तुते सदने तिष्ठ, अमृते प्रतितिष्ठ। प्रकृतसदने अवस्थानं अमृतप्रतिष्ठैव भवति। व्रीहीणां मेध-व्रीहीणां सारभूत, सुमनस्यमानः-प्रसन्नमनास्सन्–इत्यंशः आसादनं प्रकाशयति। तथा च, लिङ्गानुसारेण अंशद्वयस्य विभज्य विनियोगः प्रतीयते - पूर्वार्धस्य सदनकरणे उत्तरार्धस्य आसादाने। तस्मिन्सीदेतितत्पदस्योत्तरार्धगतस्य पूर्वार्धसापेक्षतया एकवाक्यतावगमात्, तदनुसारेण कृत्स्नस्य यथाकथञ्चिदेकार्थत्वं परिकल्प्य तत्र विनियोग आस्थेयः-इति च प्रतीयते।

तथा च संशयः—किं विभज्य लिङ्गानुसारेण विनियोगो वक्तव्यः उत एकवाक्यतानुसारेण अविभज्येति।

तत्र पूर्वः पक्षः–देवस्यत्वेत्यादिमन्त्रेषु हि एकवाक्यतानुसारेण, निर्वापप्रकाशकस्यमन्त्रस्यावयवभूतानि यानि देवस्यत्वेत्यादिपदानि तानि यथाकथञ्चित् निर्वापविशेषणसमर्पकाणीत्येव अङ्गीकृतम्; एवं प्रकृतेऽपि, सदनकरणरूपैकार्थतामुपेत्य आसादनं फलतया तस्यैव स्तुत्यर्थमिति स्वीकर्तव्यम्। न च—वैपरीत्यं शङ्कनीयम् 'आसादनं प्रधानतया मन्त्रप्रकाश्यम्, सदनकरणं तु साधनतया तस्यैव विशेषणं स्तुत्यर्थम्'-इति। उपक्रमानुसारेण सदनकरणस्यैव मुख्यताया न्याय्यत्वात्-इति।

सिद्धान्तस्तु–वाक्यानुसारिविनियोगो हि, तत्तत्पदानां क्लेशेन सदनकरणप्रकाशकताकल्पनया वक्तव्य इति विलम्बितः। ततः प्रागेव, लैङ्गिको विभज्य विनियोगः प्रतीयते। पूर्वोत्तरार्धयोः सदनकरणासादनप्रकाशकतायाः क्लृप्तत्वात् वाक्यभेदेऽपि च तत्पदस्य नानुपपत्तिः। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यादौ वाक्यान्तरगतस्यापि तत्पदेन परामर्शदर्शनेन, इहापि तस्मिन्सीदेतिसर्वनाम्नः वाक्यभेदेऽपि पूर्वार्धगतार्थपरामर्शकता उपपद्यते। देवस्यत्वेत्यादिमन्त्रगतानां तु पदानां निर्वपामीत्याख्यातैकवाक्यतां विना प्रधानप्रकरण्युपयुक्तार्थप्रकाशकत्वासम्भवात् आनर्थक्यपरिहाराय वाक्यानुसारेण सामर्थ्यं कल्पितम्। प्रकृते न तथास्ति। वाक्यभेदेऽपि समवेतार्थत्वोपपत्तेः। तथा च अत्रापि शीघ्रप्रवृत्तिकेन लिङ्गेन वाक्यीयविनियोगप्रयोजकप्रकरणाम्नानमन्त्रगतप्रयोजनाकाङ्क्षयोश्चरितार्थत्वात् वाक्यस्य विनियोजकतैव नास्तीति मूलोच्छेदेन बाधः सम्पद्यते।

वाक्यप्रकरणविरोधोदाहरणम्—

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति समाम्नातं प्रस्तरप्रहरणं प्रक्षेपांशेन प्रस्तरं [1]प्रतिपादयत् यथा प्रधानोपकारकम्, एवं सूक्तवाकमन्त्रांशेन इष्टदेवतास्मरणद्वारा प्रधानोपकारकम्। तत्र, दर्शे अग्निरिन्द्रश्च सन्नयतः असन्नयतः अग्निः इन्द्राग्नी च, पौर्णमास्यां अग्निः प्रजापत्यादयोऽग्नीषोमौ च देवताः। सूक्तवाकमन्त्रश्चैवमाम्नायते—'अग्निरिदं हविरजुषत। अवीवृधत महो ज्यायोऽकृत। प्रजापतिरिदं हविरजुषत। अवीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदं हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्राग्नी इदं हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्र इदं हविरजुषत। अवीवृधत महो ज्यायोऽकृत' इति। अत्र, प्रकरणानुसारेण समन्त्रकस्य प्रस्तरप्रहरणस्य दर्शपूर्णमासयोरुभयत्रानुष्ठानेऽपि, तदङ्गभूतस्य सूक्तवाकस्य इष्टदेवतास्मरणार्थतया दर्शगतदेवतासारकांश एव तत्र प्रयोक्तव्यः, पूर्णमासगतदेवतासारकांश एव च तत्र प्रयोक्तव्यः—इति विभज्य प्रयोगः स्वीकृतः। एवं स्थिते, देवतापदसमभिव्याहृतानि इदंहविरजुषतेत्यादिपदानि किं देवतापदानुसारेण व्यवस्थया प्रयोक्तव्यानि, उत अव्यवस्थया सर्वाण्युभयत्रेति[2]।

तत्र पूर्वः पक्षः—अग्न्यादिपदानां प्रकरणानुसारेण उभयत्र विनियोगे प्रसक्तेऽपि प्रजापतेरमावास्यायामभावात्तत्पदस्यासमवेतार्थतया ततो निवृत्तिरुपगता, एवमिन्द्रादिपदेऽपि यथायोगमुपगतम्। इदंहविरजुषतेत्यस्य तु हविःप्रकाशकस्य उभयत्राप्यस्ति सामर्थ्यम्। अतः प्रकरणानुसारेण उभयत्रापि प्रयोक्तव्यम्। न च 'प्रजापतिरिदं हविरजुषत' [3]इत्यत्रत्यस्य हविरित्याद्यंशस्य अमावास्यायां बोधकता न स्यात्, प्रजापतिपदैकवाक्यतां विना तत्र कर्त्राकाङ्क्षायाः अनिवृत्तेः, प्रजापतिपदस्य अमावास्यायां च न प्रयोगः-इति वाच्यम्। प्रकरणानुसारेण उभयत्रापि प्रयोगावश्यकत्वे, अग्निपदेन सह मिलित्वा तस्य बोधकता भविष्यति। यद्यपि च अग्निपदं पृथगेव हविरजुषतेत्यनेन सम्बद्धं, तथापि आवृत्त्या अनेनापि सम्बन्धो भविष्यति। एवं इदंहविरजुषेतामित्यादेरपि यथायोगमन्वयो द्रष्टव्यः। न च—एकवाक्यतानुसारेण प्रजापत्यादिपदैः सह तस्याप्युत्कर्ष उपगन्तव्यः, उभयत्रापि प्रयोगसंपादकं प्रकरणं च तत एव बाध्यताम्-इति वाच्यम्। एषां पदानां प्रकरणानुसरणं विना प्रयोज-

---

1. प्रतिपादयत्—प्रतिपत्तिं प्रापयत्।
2. इतीति संशय इति शेषः।
3. आ. इत्यस्य

नाकाङ्क्षाया अशान्तत्वेन प्रयोजनसिद्ध्यर्थमुपजीव्यस्य प्रकरणस्य वाक्येन बाधायोगात्—इति ।

सिद्धान्तस्तु—सत्यं प्रयोजनसम्बन्धाय प्रकरणमुपजीव्यम् । परं तु, प्रकरणापादितमपूर्वार्थत्वं किंद्वारेत्यपेक्षायां सामर्थ्यानुसारेण इष्टदेवताप्रकाशनद्वारेति स्थिते अग्न्यादिपदानां साक्षादेव तत्र सामर्थ्यादुपपन्नं पदान्तराणां तदेकवाक्यतयेति, येषां पदानां येन पदेन एकवाक्यता क्लृप्ता तेषां तावतैव प्रयोजनाकाङ्क्षायाश्चरितार्थतया, अमावास्यागतदेवतापदैकवाक्यतापन्नानां पदानां न पौर्णमासीगतदेवतापदैकवाक्यताकल्पनक्षमं प्रकरणं भवतीति, तस्मिन्नंशे प्रकरणं बाध्यते । न हि प्रजापत्यादिपदघटितवाक्यस्य अमावास्यायामपि सम्बन्धं बोधयत् प्रकरणं उपजीव्यम् । पौर्णमास्यंशसम्बन्धं बोधयता प्रकरणेनैव प्रयोजनापेक्षाया उपरतत्वात् । अतः क्लृप्तेन वाक्येन वाक्यकल्पनापेक्षं प्रकरणं मूलोच्छेदेन बाध्यते ।

प्रकरणस्थानविरोधोदाहरणम्—

अस्ति राजसूयः इष्टिपशुसोमयागात्मकः । तत्र च सर्वेषां यागानां प्राधान्यम्, 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति इष्टिपशुसोमयागानां प्रत्येकमुत्पन्नानां फलापेक्षिणां स्वाराज्यफलसम्बन्धप्रतिपादनात् । अतः ते सर्वेऽपि प्रकरणिनः । तेषु च अभिषेचनीय इति कश्चिद्यागः । तत्सन्निधौ समाम्नायते 'शौनश्शेपमाख्यापयति' इति । अनेन वचनेन, प्रसिद्धं यत् शुनश्शेपाख्यानं तद्वक्तव्यमिति अङ्गं विधीयते ।

तत्र सन्देहः—किं सन्निध्यनुसारेणाभिषेचनीयमात्राङ्गं ? (प्रकरणानुसारेण च राजसूयसंज्ञकसर्वयागाङ्गम् ) उत प्रकरणानुसारेण सर्वाङ्गमेव ? ।

तत्र पूर्वः पक्षः—सन्निधिरपि न साक्षादङ्गतां प्रतिपादयति, प्रकरणमपि । तथा च उभयोरपि तुल्यबलतया, प्रमाणद्वयानुसारेण योऽर्थः प्राप्नोति सोऽङ्गीकर्तव्यः । तत्र यदि प्रकरणानुसारेण सर्वार्थत्वमेव स्वीक्रियेत, तथासति सन्निधिः अत्यन्तं बाधितः स्यात् । अतः तदनुसारेण अभिषेचनीयाङ्गता उपगन्तव्या । न च—सन्निधिना बोधनीयस्य अभिषेचनीयाङ्गत्वस्यापि प्रकरणेन बोधनात् सन्निधिबोध्यं किमपि नावशिष्यते-इति वाच्यम् । यतः सन्निधिबोध्यमभिषेचनीयाङ्गत्वं प्रकरणादेव लब्धम्, [1]अतः सन्निधेः परिसङ्ख्यायकत्वं स्वीक्रियते । तथा च

1. अतः लब्धस्य पुनर्बोधनात् ।

सन्निधिना इतराङ्गत्वं प्रतिषिध्यते। तथा च, इतराङ्गताबोधनांशे प्रकरणस्य अत्यन्तं बाधो माभूदिति, तत्रापि पाक्षिकाङ्गत्वं सिध्यति। एवञ्च सति, यदा प्रकरणस्य बाधः तदापि अभिषेचनीयव्यतिरिक्तांश एव प्रकरणबाधात् अभिषेचनीये शुनश्शेपाख्यानं नित्यमङ्गं तदितरेषु तु विकल्पेन-इति सिध्यति।

ननु—नात्र सिद्धान्तपूर्वपक्षयोरनुष्ठाने विशेषो वक्तुं शक्यते। नित्यसर्वार्थतेतिसिद्धान्तेऽपि हि शुनश्शेपाख्यानस्य माहेन्द्रस्तोत्रसमीपे एवानुष्ठानम्, पूर्वपक्षेऽपि तथैवानुष्ठानम्। [1]अभिषेचनीयमध्ये, माहेन्द्रस्तोत्रं विदेवनं [2]शौनश्शेपाख्यानं साम्राज्याभिषेकः इत्येवं बद्धक्रमाः केचन पदार्था [3]अभिषेचनीयानन्तरं समाम्नाताः। ते च 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते' इति अन्तिमपदार्थस्य माहेन्द्रस्तोत्रकालेऽपकृष्टतया [4]तदन्तापकर्षन्यायेन अपकृष्टाः। अतः विदेवनादीनां माहेन्द्रस्तोत्रकाले नियतमनुष्ठानम्; न च अभिषेचनीयसन्निधावनुष्ठीयमानस्य सिद्धान्ते कथं सर्वार्थतेति वाच्यम्। कर्तृदेशकालैक्येन इष्टिपशुसोमयागात्मकराजसूयसम्बन्धिमहाप्रयोगैक्येन च परमापूर्वोत्पत्तिसमये आरादुपकारकस्य शौनश्शेपाख्यानस्य अपूर्वद्वारा सर्वोपकारकत्वसम्भवात्। अतः चिन्ता निष्फलेति चेत्;

न—पूर्वपक्षे हि अभिषेचनीयमात्राङ्गत्वंनित्यमित्युपगमात् तद्विकृतिष्वेव नित्यमतिदेशः, सिद्धान्ते तु सर्वयागार्थता नित्येति राजसूयविकृतिमात्रे नित्यमतिदेशः—इति फलविशेषसम्भवात्।

सिद्धान्तस्तु—भवेदेतदेवं यदि सन्निधिप्रकरणयोस्तुल्यबलता स्यात्। यदि ह्यत्र सन्निधिः अभिषेचनीयाङ्गत्वबोधकतया [5]अपूर्वविधिरेव भवेत्, तदापि प्रकरणमपेक्ष्य दुर्बल एव। राजसूयात्मना सर्वेषां इतिकर्तव्यताकाङ्क्षायाः साधारण्येन क्लृप्तत्वात्, विशिष्य असाधारण्येनाभिषेचनीयसम्बन्धबोधनार्थं पृथगाकाङ्क्षायाः कल्पनीयत्वात्। ततश्च क्लृप्ताकाङ्क्षया झटिति विनियोगेन आम्नान-

---

1. **अभिषेचनीयमध्ये**—अभिषेचनीयप्रयोगमध्ये।

2. शौनश्शेपाख्यानं नाम 'हरिश्चन्द्रस्य राज्ञः शतं जाया बभूवुः' इत्यादिना ऐतरेयब्राह्मणे समाम्नातमुपाख्यानम्।

3. **अभिषेचनीयानन्तरं**—अभिषेचनीयविध्यनन्तरम्।

4. **तदन्तापकर्षन्यायेनेति** तदादीनामुत्कर्षः तदन्तानाञ्चापकर्षः-इत्येवंरूपोऽयं न्यायः पूर्वतन्त्रे पञ्चमाध्याये निरूपितः।

5. **अपूर्वविधिरिति** विनियोजकविधिसहकारित्वात् विधिरितिव्यवहृतम्।

चारितार्थ्ये सति न सन्निधिः विनियोगाय प्रभवति। आम्नानानुपपत्तेर्मूलभूतायाः प्रकरणेनैव परिक्षयात्। न च-अन्योन्याकाङ्क्षालक्षणेन प्रकरणेन आसत्तेः अन्वयबोधार्थमपेक्षणात् विलम्बितप्रवृत्तित्वमिति—वाच्यम्। [1]बुद्धौशब्दतोविपरिवृत्तिरूपाया आसत्तेः, प्रकरणेन कृत्स्नेऽपि राजसूये क्लृप्ततया कल्पनीयत्वाभावात्। आम्नानसन्निधिस्तु अनपेक्षित एव। अन्यथा, एकस्मिन्नेव कर्मणि यत् प्रधानसन्निधौ समाम्नातं तस्यैवाङ्गता स्यात्, विप्रकृष्टतयाम्नातस्याङ्गता न स्यात्। एवं सन्निधेः, स्वार्थपरत्वेऽपि दुर्बलत्वेन सम्भावितस्य, प्रकृते तमप्यर्थं परित्यज्य अभिषेचनीयेतराङ्गतापरिसङ्ख्यार्थत्वे दुर्बलत्वं किमु वक्तव्यम्। अतः शुनश्शेपाख्यानादेर्नित्यं सर्वाङ्गता—इति।

इदं तूदाहरणं कृत्वाचिन्तयेति वदन्ति—अत्र हि विषयभूतमाख्यानादिकं अभिषेचनीयावान्तरप्रकरणनिविष्टम्। अभिषेचनीयानन्तरं 'दिशोऽभ्ययं राजाभूदिति पञ्चाक्षान् प्रयच्छति' 'शौनश्शेपमाख्यापयति' इति समाम्नाय, तदनन्तरमपि [2]अभिषेचनीयाङ्गेष्टिविशेषानुक्रमणमुपलभ्यते। 'मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्याश्चामिक्षाया अग्नये स्विष्टकृते समवद्यति' इति प्रागुपक्रान्ताभिषेचनीयाङ्गेष्टि[3]शेषानुवर्तनात्, 'अपान्नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति' इति पुनरप्यभिषेचनीयाङ्गहोमविशेषाम्नानाच्च। तथा च अभिषेचनीयावान्तरप्रकरणेन राजसूयमहाप्रकरणबाधात् आख्यानादेरभिषेचनीयाङ्गतैव। अवान्तरप्रकरणं नास्तीति कृत्वाचिन्तया सन्निधिदौर्बल्ये न्यायमात्रप्रदर्शनार्थं निबन्धेषु तदुदाहरणम्। यत्र अवान्तरप्रकरणं नोन्मिषति तदिह बहूनां प्रकरणे कस्यचित्सन्निधौ समाम्नातं उदाहरणं स्थिरं द्रष्टव्यम्।

स्थानसमाख्ययोर्विरोधोदाहरणम्—

पौरोडाशिकमितिसमाख्यायुक्ते काण्डे सान्नाय्ययागसन्निधौ 'शुन्धध्वं दैव्याय कर्मणे' इति समाम्नायते। अयं च मन्त्रः शोधनप्रकाशकः। अस्ति च पुरोडाशपात्राणां सान्नाय्यपात्राणां च शोधनम्।

तत्र संशयः—किं समाख्यानुसारेण पुरोडाशपात्रशोधनाङ्गता, उत सन्निध्यनुसारेण सान्नाय्यपात्रशोधनाङ्गता।

---

1. बुद्धौशब्दतोविपरिवृत्तिरूपायाः — आकाङ्क्षितपदज्ञानरूपायाः।
2. आ. अभिषेचनीयाङ्गेष्टिशेषा, 3. मु. विशेषानु

**तथा कर्मणामपि प्रवर्ग्यादीनां अन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः । न ह्येषां विद्याभिः सह ऐकार्थ्यं किंचिदस्ति । वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति ।**

---

तत्र पूर्वः पक्षः—पौरोडाशिकमिति समाख्यायाः अयमर्थः—पुरोडाशस्य इदं पौरोडाशं, तस्य व्याख्यानं पौरोडाशिकम् । 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः' इत्यधिकारगतेन 'पौरोडाशपुरोडाशात् ष्ठन्' इतिसूत्रेण ष्ठन् । तथा च, समाख्यया काण्डस्य पुरोडाशसम्बन्धिपदार्थप्रतिपादकत्वावगमात् तदन्तर्गतस्य मन्त्रस्यापि पुरोडाशपात्रशोधनप्रकाशकता प्रतीयते । सान्नाय्यपात्रशोधनाङ्गता तु सन्निधिना न साक्षात् प्रतीयते, समाख्यास्थल इव तद्बोधकशब्दाभावात्, अपि तु सन्निध्यनुमितवचनेन वक्तव्या । तथा च साक्षादर्थबोधकसमाख्यामपेक्ष्य सन्निधेर्दुर्बलतया बाध एव-इति ।

सिद्धान्तस्तु—भवेदेतदेवम्, यदि पौरोडाशिकमित्यादिसमाख्यया 'अनेन मन्त्रेण पौरोडाशपदार्थं प्रकाशयेत्' इत्येतावानर्थः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति वाचनिकविनियोगस्थल इव प्रतिपाद्येत । न तु तदस्ति । अपि तु सा, काण्डस्य पौरोडाशपदार्थव्याख्यानरूपतां साक्षात् प्रतिपादयति । तावता च मन्त्रविनियोगोऽनुमेयः । तत्र समाख्यया विलम्बितं विनियोगानुमानम् । शुन्धध्वमितिमन्त्रो हि सान्नाय्यसन्निधौ समाम्नातः पाठक्रमात् तत्समीपे एवानुष्ठातव्यः प्रतीयत इति, अनुष्ठानसन्निधिः सान्नाय्यस्थले क्लृप्तः । पौरोडाशपात्रशोधनानुष्ठानसादेश्यं तु कल्पनीयम् । अपि च-सन्निधिना शुन्धध्वमितिमन्त्रस्यैव विशिष्य सान्नाय्यसम्बन्धिशोधनाङ्गताऽवगम्यते । समाख्यया तु काण्डस्य प्रथमं पौरोडाशिकत्वमवगम्यते । तदन्तर्गततया मन्त्रस्य तस्मिंस्तन्मन्दमवतरति । अतः शीघ्रप्रवृत्तिकसन्निधिना प्रथमं परिच्छिन्ने विनियोगे मन्त्रस्य प्रयोजनाकाङ्क्षा अपगतेति न समाख्याया विनियोजकता ।

सर्वंप्रविध्येत्यादिमन्त्रेषूक्तमर्थं प्रवर्ग्यादिकर्मस्वपि दर्शयति—**तथा कर्मणामपि प्रवर्ग्यादीनामिति** । यच्च पूर्वपक्षिणा बृहस्पतिसवस्येव प्रवर्ग्यादीनामपि अन्यत्र विनियोगो भविष्यतीत्युक्तम्, तत्राह—**न हीति** । ऐकार्थ्यम्-एकप्रयोजनकत्वं-तद्बोधकप्रमाणमिति यावत् ।

अपि च-एकोयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेन अन्यत्र विनियुक्तो न दुर्बलेन प्रमाणेन अन्यत्रापि विनियोगमर्हति। अगृह्यमाणविशेषत्वे हि प्रमाणयोः एतदेवं स्यात्, न तु बलवदबलवतोः प्रमाणयोः अगृह्यमाणविशेषता संभवति, बलवदबलत्वविशेषादेव।

तस्मात् एवंजातीयकानां मन्त्राणां कर्मणां वा न सन्निधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम्। अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठः इति सन्तोष्टव्यम् ॥ २५ ॥

१५ हान्यधिकरणम्

## हानौतूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

अस्ति ताण्डिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य, धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' (छा. उ. ८।१३।१) इति। 'तथा आथर्वणिकानां 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु. उ. ३।१।३) इति। तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। तथैव कौषीतकिनः 'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्' (कौ. उ. १।४) इति।

तदिह क्वचित् सुकृतदुष्कृतयोर्हानं श्रूयते, क्वचित्तु तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तु उभयमपि-हानमुपायनं च। तत् यत्र उभयं श्रूयते तत्र तावत् न किंचिद्वक्तव्यमस्ति। यत्राप्युपायनमेव श्रूयते

---

ननु-प्रवर्ग्यादीनां कर्मणां विद्याभिस्सह ऐकार्थ्यबोधकप्रमाणाभावोऽसिद्धः, सन्निधेरेव विद्यमानत्वात्-इत्याशङ्क्याह—अपि चेति ॥ २४ ॥

इति वेधाद्यधिकरणम्

विद्यासन्निधिसमाम्नातानां सर्वंप्रविध्येत्यादिमन्त्राणां कर्मणां च न विद्याशेषत्वमिति प्रतिपादितम्। तर्हि कौषीतकिशाखायां हानसन्निधौ समाम्नातं उपायनमपि न हानशेषभूतमिति, यत्र केवलहानं श्रुतं तत्र तस्य नोपसंहारः—इति प्रत्यवस्थानात् सङ्गतिः।

**न हानं, तत्रापि अर्थादेव हानं सन्निपतेत्। अन्यैः आत्मीययोस्सुकृतदुष्कृतयोरुपेयमानयोः आवश्यकत्वात्तद्धानस्य। यत्र तु हानमेव श्रूयते नोपायनं तत्र उपायनं संनिपतेद्वा न वेति विचिकित्सायां - अश्रवणात् असन्निपातः। विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य।**

---

तत्राप्यर्थादेव हानं सन्निपतेदिति। ननु—यथा गवादेरन्यदीयस्य अन्येन स्वरूपत एव ग्रहणं तथा अन्यदीययोस्सुकृतदुष्कृतयोः यद्यन्येन स्वरूपत एव ग्रहणं भवेत्, तदा स्वामिपरित्यागं विना अन्येन ग्रहणासम्भवात् उपायनानुपपत्त्या हानाक्षेपो भवेत्, न तु तथा प्रकृते सुकृतदुष्कृतयोः उपायनपदोदिता प्रियैरप्रियैश्च प्राप्तिः विवक्षिता, आत्मगुणभूतयोः अन्तःकरणपरिणामभूतयोर्वा तयोः स्वरूपतोऽन्यत्र गमनासम्भवात्। अपि तु, विद्वद्कृतपुण्यपापाभ्यां प्रियेषु अप्रियेषु च फलारम्भ एव उपायनम्। तच्च विद्वदुपभोग्याभ्यामपि पुण्यपापाभ्यां अन्यत्र फलारम्भसम्भवात् न विदुषस्स्वाम्यनिवृत्तिं तत्रापेक्षते।

न च—'तस्य पुत्रा दायमुपयन्ति' इति वाक्यं विद्याफलकीर्तनावसरे दृष्टान्तसमर्पकतयोपयुज्यत इति वक्तव्यम्, अन्यथा तदसाङ्गत्यापत्तेः। तथा च दायदृष्टान्तात् अयमर्थः प्रतीयते—यथा विदुषः एतावन्तं कालं दाये स्वाम्यमनुवृत्तं अनन्तरं तु तत्स्वाम्यनिवृत्तिपूर्वकं पुत्राणां तत्र स्वाम्यं भवति, एवं सुकृतदुष्कृतयोरपि एतावत्कालं तदुपभोगयोग्यत्वरूपं तत्स्वाम्यमासीत् इदानीं तु तन्निवृत्तिपूर्वकं प्रियाप्रियेषु तत्स्वाम्यं भवति-इति। तथा च उपायनमात्रश्रवणेऽपि दृष्टान्तसामर्थ्यात् स्वाम्यनिवृत्तिरूपहानाक्षेपो भवेदिति—युक्तम्।

तथासति यत्र केवलं हानं श्रुतं तत्रापि अश्वरोमदृष्टान्तानुसारेण उपायनाक्षेपो भवेत्। अश्वाद्धि प्रहीणानि रोमाणि क्वचित् प्रदेशे यथा पतन्ति, एवं विदुषः प्रहीणे पुण्यपापे क्वचिदन्यत्र पततः इत्यवगतिसम्भवात्। अतः कथं उपायनसन्निधौ हानाक्षेपमुपेत्य हानसन्निधावुपायनाक्षेपः सन्दिह्यते—इति चेत्;

उच्यते—'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यत्र वाक्यस्वारस्येन, देवदत्तस्य गावो यज्ञदत्तेन प्राप्ता इत्यत्र देवदत्तस्वत्वनिवृत्तिपूर्वकं यज्ञदत्तस्य प्राप्तिरिव विद्वत्स्वत्वनिवृत्तिपूर्वकं सुहृद्द्विषत्प्राप्तिरवगम्यते। वचनस्वारस्यावगते चैतस्मिन्नर्थे दायदृष्टान्त उपोद्बलको भवति। अश्वइवरोमाणिविधूयपापमित्यत्र तु न शब्दस्वारस्येन उपायनं प्रतीयते। अतः दृष्टान्तस्वारस्यमात्रेण नोपायनोपसंहारस्सम्भवति-इति तात्पर्यम्।

अपिच--आत्मकर्तृकं सुकृतदुष्कृतयोर्हानं परकर्तृकं तु उपायनम्, तयोः असत्यावश्यकभावे कथं हानेन उपायनमाक्षिप्येत। तस्मात् असंनिपातो हानावुपायनस्य-इत्यस्यां प्राप्तौ—

पठति—हानौ त्विति। हानौ त्वेतस्यां केवलायामपि श्रूयमाणायां उपायनं सन्निपतितुमर्हति। तच्छेषत्वात्। हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये। तस्मात् अन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः।

---

ननु–'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इत्यत्र समभिव्याहारेण हानं प्रत्युपायनस्याङ्गता अवगम्यते। अतः यत्र हानमात्रं श्रुतं तत्रापि शेषतया उपायनस्याक्षेपो भवेत्–इत्याशङ्क्य, प्रयाजदर्शपूर्णमासादिस्थले शेषशेषिभावस्य समानकर्तृकत्वे एव दर्शनात् इह च तदभावात् न शेषशेषिभाव इत्यभिप्रेत्य परिहरति—अपि चात्मकर्तृकमिति।

अयमत्र सिद्धान्ताभिप्रायः–कौषीतकिवाक्ये हानसन्निधावुपायनाम्नानेन अयमर्थोऽवगम्यते-विद्यया हि विदुषि पुण्यपापयोः फलानारम्भकत्वे हानवाक्येनावगते, तर्हि विद्वद्गतं पुण्यपापादिकं किं सर्वात्मना निष्फलं यथा कीर्तनप्रायश्चित्तादिना नष्टं पुण्यपापम्, अथवा पुत्रादिकृतपुण्यपापयोः पित्रादाविव अन्यत्र क्वचित् फलारम्भकता-इति विशये, उपायनश्रवणेन सुहृद्द्विषद्गतफलारम्भकता न त्वत्यन्तं तयोः फलाभावः-इति निर्धार्यते। एवं च 'नाभुक्तं क्षीयते कर्म' इत्यादिशास्त्रानुग्रहोऽपि भवति। प्रायश्चित्तादौ तु, वचनप्रामाण्यात् अदत्तफलस्यैव नाश उपेयते। अतः-कौषीतकिशाखायां अन्यकर्तृकमप्युपायनं उक्तगत्या हानोपपादकं भवत्येवेति हानोपायनयोः शेषशेषिभावः सिद्ध्यति।

न च–एवमपि, कौषीतकिशाखायां पर्यङ्कविद्याफलभूतस्य पुण्यपापहानस्य शेषभूतमप्युपायनं कथं 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यम्' इति निर्विशेषविद्याफलत्वेनावगते, अश्वइवरोमाणिविधूयेत्यस्य 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्याकाशविद्यारम्भे समाम्नानेन तद्विद्याफलत्वेनावगते च, पुण्यपापहाने उपसंह्रियेते। विद्याभेदेन तत्फलस्य हानस्यापि भिन्नत्वात्-इति वाच्यम्।

यदुक्तं अश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्च असन्निपात इति;

तदुच्यते। भवेदेषा व्यवस्थोक्तिः, यद्यनुष्ठेयं किंचित् अन्यत्र श्रुतं अन्यत्र निनीष्येत। न त्विह हानमुपायनं वा अनुष्ठेयत्वेन संकीर्त्यते। विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम्-इत्थं महाभागा विद्या, यत् तत्सामर्थ्यात् अस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति। स्तुत्यर्थे चास्मिन् संकीर्तने, हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वात् अन्यत्रापि हानश्रुतौ उपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय।

प्रसिद्धा च अर्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्तिः 'एकविंशो वा इतोऽसावादित्यः' (छा. उ. २।१०।५) इत्येवमादिषु। कथं हीह एकविंशता आदित्यस्याभिधीयेत अनपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन्। तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते।

विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य 'कथं अन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते' इति नातीवाभिनिवेष्टव्यम्।

---

अत्रापि विदुषि फलानारम्भकयोः पुण्यपापयोः अत्यन्तनिष्फलत्वकल्पनाया अनुपपत्त्या विद्यान्तरदृष्टस्यापि विशेषस्य अनुषङ्गोपपत्तेः। एवं च अश्वइवरोमाणीति-दृष्टान्तोऽपि समञ्जसो भविष्यति।

एते च हानोपायने सविशेषविद्यायामनुचिन्तनीये एव, तत्क्रतुन्यायेन फलस्यापि सविशेषविद्यायां ध्येयत्वात्। निर्विशेषविद्यायां तु न ध्येये, एतदभिप्रायेणोक्तं भाष्ये--न त्विह हानमुपायनं वा अनुष्ठेयत्वेन सङ्कीर्त्यत इति। निर्विशेषविद्यायास्स्तुत्यर्थत्वोक्तिरपि न असदालम्बना। स्वरूपेण पुण्यपापयोः सञ्चारासम्भवेऽपि फलद्वारा तदुपपत्तेः। तथा च विद्यास्तुत्यर्थत्वाच्चेत्यादिभाष्यमपि 'अन्यदीययोः पुण्यपापयोः अन्यत्र स्वरूपेण सञ्चारो न भवति' इत्येतदभिप्रायमेव योजनीयम्।

उपायनशब्दशेषत्वादिति च शब्दशब्दं समुच्चारयन् स्तुत्यर्थमेव हानावुपायनानुवृत्तिं सूचयति। गुणोपसंहारविवक्षायां हि उपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्मात् गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहार-प्रदर्शनार्थं इदं सूत्रम्।

कुशाच्छन्दस्स्तुत्युपगानवदिति उपमोपादानम्। तद्यथा—भाल्लविनां 'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानां अविशेषेण वनस्पतियोनित्वेन श्रवणे, शाट्यायनिनां 'औदुम्बराः कुशाः' इति विशेषवचनात् औदुम्बर्यः कुशा आश्रीयन्ते। यथा च क्वचित् देवासुर-च्छन्दसां अविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्ना-नात् प्रतीयन्ते। यथा च षोडशिस्तोत्रे केषांचित् कालाविशेषप्राप्तौ 'सम-याध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः। यथैव च अविशेषेणो-पगानं केचित् समामनन्ति विशेषेण भाल्लविनः। यथा एतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः एवं हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात्। स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्याम्—'अपि तु वाक्यशेषत्वादितरपर्यु-दासः स्यात् प्रतिषेधे विकल्पः स्यात्' (जै. सू. १०।८।१५) इति।

---

कुशाः—उद्गातॄणां प्रस्तावकर्मणि स्तोत्रसङ्ख्यागणनार्था दारुशलाकाविशेषाः। देवासुरच्छन्दांसि—देवासुरप्रकाशका मन्त्रविशेषाः। समयाध्युषिते—अस्तमयकाल-सन्निहिते। उपगानम्-उद्गातृषु गायत्सु अन्यैः क्रियमाणं होइतिशब्दोच्चारणम्। तत् अन्यैः ऋत्विग्भिः कर्तव्यमिति क्वचित् सामान्यतः प्रतिपादितम्। तत्र 'नाध्वर्यु-रुपगायेत्' इति विशेषवचनं अध्वर्युव्यतिरिक्तैः कर्तव्यमिति बोधयति।

अत्र, पुण्यपापयोर्हानिं क्वचिदुपायनशिरस्कं क्वचिन्नेति पूर्वपक्षे व्यवस्थित-विकल्पः प्रसज्यते, स मा भूदिति, शाखान्तरे श्रुतस्योपायनस्य अन्यत्रापि सम्बन्धः प्रतिपादितः। तथा च, सर्वत्र उपायनशिरस्कमेव हानमिति सिद्ध्यति। [1]अत्र जैमिनिसम्मतिप्रदर्शनाय सूत्रे तदुक्तमित्यंशः। तं व्याचष्टे—तदुक्तं द्वादशलक्ष-ण्यामिति।

---

1. अत्र—विकल्पस्यान्याय्यत्वे।

इदमत्रोदाहरणम्—

'दीक्षितो न ददाति न जुहोति' इत्यादिनिषेधाः ज्योतिष्टोमप्रकरणे समाम्नाताः। ते किं उपदेशातिदेशाभ्यां प्राप्तानां क्रत्वङ्गभूतानां होमादीनां प्रतिषेधकाः उत दूरस्थाग्निहोत्रादिवाक्यशेषभूतास्सन्तः 'अदीक्षितो यावज्जीवमग्निहोत्रं जुहोति-इत्येवमाद्यर्थपर्यवसिताः।

तत्र पूर्वपक्षः—युक्तं 'यजतिषु येयजामहं करोति नानूयाजेषु' इतिवाक्ये यजतिपदैकवाक्यतया नानूयाजेष्वित्यस्य पर्युदासपरत्वम्, इह तु यावज्जीवादिवाक्येन एतेषां निषेधानां एकवाक्यतया अक्लृप्तत्वात् न पर्युदासाश्रयणं युज्यते, तस्मात् प्रतिषेधाः-इति।

सिद्धान्तस्तु—तथासति विकल्पः स्यात्, उपदेशातिदेशाभ्यां क्रत्वर्थतया विहितत्वात् अनेन वचनेन क्रतावेव निषेधाच्च। स मामूदिति, दूरस्थेनापि अग्निहोत्रं जुहोतीत्यादिवचनेन एकवाक्यतां प्रकल्प्य पर्युदासवृत्तिरेवाश्रयणीया-इति।

वस्तुतो नात्र विकल्पः प्रसरति। यदि हि क्रत्वर्थानामेव अयं प्रतिषेध इति कल्प्येत तदा खलु विकल्पः स्यात्। अयं तु, पुरुषार्था ये अग्निहोत्रहोमादयः क्रतुकालेऽपि यावज्जीवादिवाक्येन प्राप्ताः तेषां प्रतिषेधः। तथा च भिन्नविषयत्वात् न विकल्पः। अपि तु, पुरुषार्थहोमविधायकतया क्रतोर्बहिरपि सावकाशानां अग्निहोत्रादिवाक्यानां 'क्रतुवैगुण्यापादका यागदानहोमादयः पुरुषार्थाः' इत्येवं बोधयद्भिः निरवकाशैः निषेधैः बाध एव। अतः, 'प्रतिषेधपक्षे यदि विकल्पः स्यात् तर्हि अत्रापि दूरस्थवाक्यैकवाक्यतया[1] पर्युदासवृत्तिरेव ज्यायसी' इति कृत्वाचिन्तापरमिदमधिकरणं इत्याहुः। तत्प्रयोजनं 'दूरस्थितवाक्यैकवाक्यताकल्पनमपेक्ष्य अष्टदोषदुष्टो विकल्पः पापीयान्' इतिन्यायव्युत्पादनम्।

अयं च जैमिनिसूत्रार्थः—अपित्विति पूर्वपक्षव्यावृत्तिः। दीक्षितोनजुहोतीत्यादिवाक्यस्य यावज्जीवमग्निहोत्रंजुहोतीत्यादिवाक्यशेषत्वात् इतरस्य-दीक्षितस्य पर्युदासः-व्यावृत्तिःस्यात्-अदीक्षितो यावज्जीवं जुहुयात्—इति, प्रतिषेधपक्षे यतो विकल्पो भवेत्—इति।

विधूयपापमित्यादौ विधूयेत्यादिपदैः 'विदुषि सर्वात्मना पुण्यपापयोस्सम्बन्धो नास्ति' इति प्रतिपाद्यत इति सिद्धवत्कृत्य, उपायनं परं अस्ति नास्तीति सन्दिह्य,

---

1. **एकवाक्यतया**—एकवाक्यताङ्गीकारेण—एकवाक्यतामङ्गीकृत्य।

अथवा-एतास्वेव विधूननश्रुतिषु एतेन सूत्रेण एतच्चिन्तयितव्यम्— किं अनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते किं वा अर्थान्तरमिति । तत्र चैवं प्रापयितव्यम्—न हानं विधूननमभिधीयते, 'धूञ् कम्पने' इति स्मरणात् । दोधूयन्ते ध्वजाग्राणीति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात् । तस्मात् चालनं विधूननमभिधीयते । चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनात्—इति ।

एवं प्रापय्य प्रतिवक्तव्यम्-हानावेव एष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात् । न हि परपरिग्रहभूतयोस्सुकृतदुष्कृतयोः अप्रहीणयोः परैरुपायनं संभवति । यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं संभाव्यते; तथापि, तत्संकीर्तनात्तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते । क्वचिच्चेदं विधूननसंनिधौ उपायनं श्रूयमाणं कुशाच्छन्दस्तुत्युपगानवत् विधूननश्रुत्या सर्वत्रापेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं संपद्यते । न च चालनं ध्वजाग्रवत् सुकृतदुष्कृतयोः मुख्यं संभवति । अद्रव्यत्वात् । अश्वश्च रोमाणि विधुन्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति । 'अश्व इव रोमाणि विधूय पापम्' (छा. उ. ८।१३।१) इति च ब्राह्मणम् ।

---

निर्णयः प्रदर्शितः । इदानीं तु, 'धूञ्धातुना सर्वात्मना पुण्यपापासम्बन्धो न प्रतिपाद्यते' इतिशङ्कानिराकरणाय वर्णकान्तरमारभते—अथ वेति । ननु-विधूननं चालनमिति पूर्वपक्षिणापि मुख्यार्थौ वक्तुं न शक्यते, अमूर्तयोः पुण्यपापयोः वृक्षादिवच्चालनानुपपत्तेः-इत्याशङ्क्याह—चालनं त्विति । ततश्च, धूञ्धातुप्रयोगस्य कञ्चित्कालंफलानारम्भमात्रप्रतिपादकतयोपपत्तौ, नाभुक्तंक्षीयतेकर्मेतिशास्त्रबाधेन 'विदुषि पुण्यपापयोरसम्बन्धः' इति न स्वीकर्तव्यमिति भावः । तदानुगुण्येन हानमेव विधूननमिति । विदुषः प्रहीणयोः पुण्यपापयोः फलजनकताशक्तिः अत्यन्तं प्रहीणा माभूत् इत्येतदर्थमेव हि परैरुपायनं प्रतिपाद्यते । तथा च, वाक्यशेषानुसारेणैव नाभुक्तमितिशास्त्रोपपादनसम्भवे न स्वकपोलकल्पनया विदुषि कञ्चित्कालं फलानारम्भकतेति व्याख्या उपपद्यते । अतः, उपायनप्रतिपादकवाक्यशेषानुसारेण विदुषि सर्वात्मना पुण्यपापयोरसम्बन्धः इत्येवोपेयम् । कुशाच्छन्दइत्यंशं पूर्ववर्णकार्थसङ्ग्राहकतया व्याचष्टे—क्वचिच्चेति ।

अनेकार्थत्वा(भ्युपगमा)च्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यातम् ॥ २६ ॥

१६ सांपरायाधिकरणम्

## सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्म अभि प्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति 'स एतं देवयानं पन्थानं आसाद्य अग्निलोकमागच्छति' इत्युपक्रम्य 'स आगच्छति विजरां नदीं तां मनसैवात्येति तत् सुकृतदुष्कृते विधूनुते (कौ. उ. १।३-४) इति।

तत् किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यं आहोस्वित् आदावेव देहादपसर्पणे-इति विचारणायां, श्रुतिप्रामाण्यात् यथाश्रुति प्रतिपत्तिप्रसक्तौ—

पठति—सांपराय इति। सांपराये-गमने एव-देहादपसर्पणे इदं विद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं चाचष्टे-तर्तव्याभावादिति। न हि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतः अन्तराले सुकृत-

---

अनेकार्थत्वाच्चेति। यदाहुः 'क्रियावाचित्वमाख्या'तुं एकोऽर्थः प्रतिपादितः। प्रयोगतोऽनुसर्तव्या [1]अनेकार्था हि धातवः'। इति ॥ २६ ॥

इति हान्यधिकरणम्

पूर्वस्मिन्नधिकरणे 'तत् सुकृतदुष्कृते विधूनुते' इत्यादिकौषीतकिवाक्यानुसारेण सर्वत्र विधूननश्रुतौ उपायनानुवृत्तिरुक्ता, अत्राधिकरणे तदेव वाक्यं उदाहृत्य विचारान्तरं क्रियते इति सङ्गतिः।

'स आगच्छति विजरां नदीम्' इति श्रुतिपाठः। 'विजरां वा अयं नदीं प्रापत् न वा अयं जरयिष्यति' इति निर्वचनात्। विरजां इति पाठस्तु नातीव प्रामाणिकः।

---

1. अनेकार्था इति धातूनां धातुपाठेनिर्दिष्टार्थव्यतिरेकेणार्थान्तरस्यापि स्वीकारे शाब्दिका ज्ञापकश्चाहुः—धातुपाठे 'कुर्द-खुर्द-गुर्द-गुद-क्रीडायामेव' इति एवकारः पठ्यते। तत् धात्वन्तराणां धातुपाठेनिर्दिष्टादर्थान्तरमप्यस्तीति ज्ञापयति। अन्यथा अर्थनिर्देशादेव क्रीडामात्रार्थत्वसिद्धेः एवकारवैयर्थ्यात्—इति।

दुष्कृताभ्यां किंचित प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणान् अक्षीणे ते कल्प्येयाताम्। विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः। स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति। तस्मात् प्रागेव सन् अयं सुकृतदुष्कृतक्षयः पश्चात् पठ्यते॥ तथा ह्यन्येऽपि शाखिनः-ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च॥ २७॥

---

तस्मात् प्रागेव सन्नित्यादि। ननु–श्रुतिपाठक्रमानुसारेण मध्येमार्गं प्रतीयमानस्य सुकृतदुष्कृतहानादेः किमिति देहादुत्क्रान्तिकाले एव सम्बन्धो विवक्ष्यते, अर्चिरादिमार्गप्राप्त्यनन्तरमपि सुकृतदुष्कृते अपेक्षिते एव चन्द्रसंवादोपयोगिशरीरारम्भाय। पर्यङ्कविद्यायां हि चन्द्रप्राप्त्यनन्तरं चन्द्रेण संवाद उपासकस्य श्रूयते— 'तमागतं प्रत्याह कोऽसीति' इति चन्द्रप्रश्नमवतार्य 'तं प्रति ब्रूयात्' इत्युपासकस्य प्रतिवचनमाम्नातम्।

न च–पुण्यपापयोर्विद्याफलप्रतिबन्धकतया स्वविरुद्धे पुण्यपापे विद्यया अवश्यं नाशयितव्ये, विद्याफलारम्भश्च मूर्धन्यनाडीसम्बन्धप्रमुखे इति, ततः प्रागेव मरणकाले विद्यया पुण्यपापयोर्नाशोऽपेक्षितः, अर्थक्रमानुसारेण पाठक्रमाद्विजरानद्यतिक्रमणानन्तरमवगम्यमानोऽपि सुकृतदुष्कृतक्षयः परित्याज्यः, पाठक्रममपेक्ष्य अर्थक्रमस्य बलवत्त्वात्–इति वाच्यम्।

भवेदेतदेवम्, यदि पाठक्रममात्रेण विजरातरणानन्तरं पुण्यपापक्षयो गम्येत। 'तत् सुकृतदुष्कृते' इत्यत्र तदितिपदं हि तस्मादित्यर्थे विद्यमानं प्रकृतनद्यतिक्रमं परामृशत् तस्य सुकृतदुष्कृतक्षयहेतुत्वं प्रतिपादयति। अतो वचनबलादेव मध्येमार्गं पुण्यपापक्षयोऽवगम्यते।

न च–'अश्व इव रोमाणि विधूय पापं....धूत्वा शरीरम्' इति क्त्वाप्रत्ययबलात् पापविधूननानन्तरं शरीरपरित्यागः प्रतीयते, तस्यपुत्रादायमुपयन्तीति दायदृष्टान्तेन च यदा दायः पुत्रैः गृह्यते तदैव पुण्यपापयोरुपायनमवगम्यते। पुत्रैर्दायग्रहणं च मरणात् प्रागेवेति पुण्यपापोपायनं तत्परित्यागपूर्वकं तदैव वक्तव्यम्। तदनुसारेण पर्यङ्कविद्यायामपि तथैवोपगन्तव्यम्–इति वाच्यम्।

## छन्दत उभयाविरोधात् ॥ २८ ॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्य अर्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य

---

तस्य वाक्यस्य विद्यान्तरविषयत्वेन पर्यङ्कविद्यायां तथाभ्युपगमानुपपत्तेः। अतः पर्यङ्कविद्यायां मार्गप्राप्तिप्रतिबन्धकीभूतयोः पुण्यपापयोः सांपराय एव नाशाभ्युपगमेऽपि अन्येषां पुण्यपापानां विजरानद्यतिक्रमणानन्तरमेव क्षयो भविष्यति-इति चेत्—

न--तत्सुकृतदुष्कृते इत्यत्र तस्मादर्थकमपि तत्पदं न नद्यतिक्रमणं परामृशति। तस्य अत्र प्रकरणे अप्रधानत्वात्। प्रधानं ह्यत्र विद्या, सन्निहिता च सा, प्रकरणानुसारेण तस्या बुद्धिस्थत्वात्। अतः एतद्वाक्यं विद्याया एव पुण्यपापक्षयहेतुत्वं प्रतिपादयति। वस्तुतस्तु तदिति प्रथमान्तं विद्वत्परामर्शकम्। 'स आगच्छति विजरां नदीम्' इति पूर्ववाक्ये 'तस्य प्रिया ज्ञातयः सुकृतम्' इत्युत्तरवाक्ये च तत्पदेन विदुष एव परामर्शात्। एवमपि विशेषणतयोपात्ताया विद्याया एव हेतुत्वमवगम्यते। तथा च, यदा मरणकाले फलाभिमुखी विद्या भवति तदैव तया स्वप्रतिबन्धकीभूतयोः पुण्यपापयोः क्षयो न्याय्यः। अर्थविरोधे पाठस्याप्रयोजकत्वात्।

न च चन्द्रसंवादोपयोगिशरीरारम्भाय पुण्यपापयोरपेक्षा। विद्यासामर्थ्यादेव शरीरारम्भस्य चन्द्रसंवादार्थं सम्भवात्। अवश्यं हि ब्राह्मपर्यङ्कारोहणानन्तरं 'तं ब्रह्माह कोऽसीति, तं प्रति ब्रूयात्' इत्याम्नाते उपासकस्य ब्रह्मणा संवादे उपयुक्तं शरीरं विद्ययैवारभ्यत इति वक्तव्यम्, ततः प्रागेव पुण्यपापक्षयपाठात्, एवंसति ताण्डिशाट्यायनिश्रुत्यैकार्थ्यमपि भविष्यति।

तस्मादत्र पाठक्रमो नादर्तव्य इति भावः॥ २७॥

'तत् सुकृतदुष्कृते विधूनुते' इत्यत्र हि विदुषः पुण्पापविधूनने स्वातन्त्र्यं प्रतीयते। तच्च तदैवोपपद्यते, यदि विदुष इच्छातः प्रयत्नपूर्वकं पुण्यपापक्षयोऽभ्युपगम्येत। पुण्यपापक्षयोपयोगी च यत्नो विद्यानुष्ठानमेव। तच्च जीवत एव सम्भवति, न तु परेतस्य, मध्येमार्गं विद्यानुष्ठानोपयोगिनः शरीरस्य तदानीमभावात्। चन्द्रसंवादोपयोगिशरीरस्य च तावन्मात्रार्थतया विद्यानुष्ठानोपयुक्तत्वे प्रमाणाभावात्—इत्यभिप्रायेण, सौत्रं छन्दतइतिपदं विद्यानुष्ठानसम्भवादितिपदाध्याहारेण व्याचष्टे—यदि च देहादपसृप्तस्येत्यादिना।

सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्य इच्छातोऽनुष्ठानानुपपत्तेः अनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात् । तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्, तत्पूर्वकं च सुकृतदुष्कृतहानं इति द्रष्टव्यम् । एवं निमित्तनैमित्तिकयोरुपपत्तिः ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥ २८ ॥

१७ गत्यर्थवत्त्वाधिकरणम्

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

क्वचित् पुण्यपापहानसंनिधौ देवयानः पन्थाः श्रूयते क्वचिन्न । तत्र संशयः—किं हानौ अविशेषेणैव देवयानः पन्थाः संनिपतेत् उत विभागेन क्वचित् संनिपतेत् क्वचिन्नेति । यथा तावत् हानावविशेषेणैवोपायनानुवृत्तिरुक्ता एवं देवयानानुवृत्तिरपि भवितुमर्हति-इत्यस्यां प्राप्तौ आचक्ष्महे—

---

उभयाविरोधादिति[1] पदं व्याचष्टे—ताण्डिशाट्यायनिश्रुत्योरिति ॥ २८ ॥

इति साम्परायाधिकरणम्

[2]एवं अधिकरणद्वयेन, विदुषः पुण्यपापक्षयः साम्पराये एव स च सगुणनिर्गुणविद्यासाधारण्येनोपायनशिरस्क एव - इति व्यवस्थापितम्, तर्हि पुण्यपापक्षयसन्निधौ श्रुतःअर्चिरादिमार्गोऽपि सगुणनिर्गुणविद्यासाधारणोऽस्त्विति सङ्गतिगर्भं पूर्वपक्षमाह--यथातावद्धानावविशेषेणैवेति । ननु निर्विशेषब्रह्मसाक्षात्कारेणाविद्यानिवृत्त्या ब्रह्मप्राप्तेः इहैव सम्भवात्, अर्चिरादिगतिर्व्यर्थेति चेत्—न -उत्तराधिकरणे 'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते' इति वाक्यस्य सर्वब्रह्मविद्यासाधारण्येन गतिप्रापकताया वक्ष्यमाणत्वात्, कठवल्ल्यां निर्विशेषविषयायामपि 'शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभि निस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति मूर्धन्यनाड्या ऊर्ध्वगमनस्य प्रतिपादनाच्च, निर्विशेषविद्यायामपि गतिसिद्धौ, साक्षात्कारपूर्वकाविद्यानिवृत्तिः ब्रह्मलोकगमनानन्तरमेव भविष्यतीति कल्पनोपपत्तेः ।

---

1. पदं—उभयपदम् । आनन्दगिरीयानुसार्ययमर्थः । अथवा—'एवमिति' इत्येव प्रतीकधारणं स्यात् । तथा च सति भामती अनुसृता स्यात् ।

2. इत आरभ्य आन्तं आ पाठान्तरं अन्ते अनुबन्धरूपेण योजयिष्यते, तत्र तत् द्रष्टव्यम् ।

गतेः–देवयानस्य पथः अर्थवत्त्वं उभयथा-विभागेन भवितुमर्हति-क्वचिदर्थवती गतिः क्वचिन्नेति, नाविशेषेण । अन्यथा हि–अविशेषेणैव एतस्यां गतौ अङ्गीक्रियमाणायां विरोधः स्यात्—'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' [मु. उ. ३।१।३] इत्यस्यां श्रुतौ, देशान्तर-प्रापणी गतिः विरुध्येत । कथं हि निरञ्जनः अगन्ता देशान्तरं गच्छेत् । गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमिति आनर्थक्यमेवात्रगतेः मन्यामहे ॥ २९ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

उपपन्नश्चायं उभयथाभावः–क्वचिदर्थवती गतिः क्वचिन्नेति ।

---

कथं हि निरञ्जनोऽगन्तेति । निरञ्जनः–अविद्यादिदोषविनिर्मुक्तः । तद्-गुणसारत्वादित्यत्र हि उपाधिसम्पृक्तस्यैव जीवस्य गत्यादिकमिति व्यवस्थापितम् । अतः अविद्याद्युपाधिविनिर्मुक्तस्य गतिर्नोपपद्यते । न च निरञ्जनत्वं ब्रह्मलोकगम-नानन्तरभावि । 'यदा पश्यः पश्यते रुक्मवर्णम्' इत्यादिपूर्ववाक्यानुसारेण ब्रह्म-साक्षात्कारकाले एव तदवगमात् । गन्तव्यं च परमं साम्यं ब्रह्माभेदात्मकं तत्त्वमसी-त्यादिश्रुतेः स्वाभाविकं न देशान्तरायत्तम् । साम्यमित्यत्र समशब्दो हि समकाला-वित्यादाविव ऐक्यार्थकः । ऐक्यं च जीवस्य ब्रह्मणा सुषुप्तावपीति तद्व्यावृत्त्यर्थं परम-मिति विशेषणम् । सुषुप्तौ हि अविद्यानुवृत्त्या न परममैक्यम् । तथा च 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादीन्यपि वचनानि अनुकूलानि भवन्ति । अन्यत्र च उत्क्रान्तिप्रतिषेधपूर्वकं जीवस्य [1]ब्रह्मप्राप्तिरिहैव समाम्नायते—'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति, तदेष श्लोको भवति-यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति । ततश्च 'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते' इति सामान्यवचनं निर्विशेषविद्याव्यतिरिक्तविषयं भविष्यति ।

कठवल्ल्यां गतिप्रतिपादनमपि प्रकरणे अनिवेशात् उत्कृष्टव्यम् । तथा च दहरविद्यायां तस्यैवमन्त्रस्याम्नानेन उत्कर्षः सूचितः । अथवा–कठवल्लीष्वपि, अग्नि विद्याऽस्ति, तत्रोपयुक्तं भविष्यति शतंचैकेत्यादिवाक्यम् ॥ २९ ॥

---

1. ब्रह्मप्राप्तिरिहैव—इहैव ब्रह्मप्राप्तिः ।

तल्लक्षणार्थोपलब्धेः । गतिकारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते । तत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्च इत्येवमादि बहु देशान्तरप्राप्त्यायत्तं फलं श्रूयते । तत्र अर्थवती गतिः । न तु सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ह्यात्मैकत्वदर्शिनामाप्तकामानां इहैव दग्धाशेषक्लेशबीजानां आरब्धभोगकर्माशयक्षपणव्यतिरेकेण अपेक्षितव्यं किंचिदस्ति, तत्र अनर्थिका गतिः । लोकवच्चैष विभागो द्रष्टव्यः—यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तौ एवमिहापीति । भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥ ३० ॥

१८ अनियमाधिकरणम्

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

सगुणासु विद्यासु गतिरर्थवती न निर्गुणायां परमात्मविद्यायां इत्युक्तम् । सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते-यथा पर्यङ्कविद्यायां उप-

---

तत्र हि पर्यङ्कारोहणमिति । तथाहि—[1]पर्यङ्कविद्यायां ब्रह्मप्रेप्सुं ब्रह्मविदं प्रस्तुत्य आम्नायते—'स आगच्छति इल्यं वृक्षं तं ब्रह्मगन्धः प्रविशति, स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति, स आगच्छति अपराजितमायतनं तं ब्रह्मतेजः प्रविशति, स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः, स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति, स आगच्छति विचक्षणामासन्दीम्, स आगच्छति अमितौजसं पर्यङ्कं तस्मिन् ब्रह्मास्ते, तमित्थंवित् पादेनैवाग्र आरोहति, तं ब्रह्माह कोऽसीति, तं प्रति ब्रूयात्' इति । इल्यः—ब्राह्मलौकिकोऽश्वत्थः, संस्थानम्—स्थलविशेषः, सालज्यमिति तस्य नाम । विभुप्रमितमित्यत्र वेश्मेत्यध्याहारः ॥ ३० ॥

इति गत्यर्थवत्त्वाधिकरणम्

पूर्वस्मिन्नधिकरणे 'निर्विशेषविद्यायां न मार्गप्राप्तिः अपि तु सविशेषविद्यायाम्' इति व्यवस्था दर्शिता । एवं तर्हि 'सगुणास्वपि विद्यासु यत्र गतिश्श्रूयते तत्रैव सा नान्यत्र' इति प्रत्यवस्थानात् सङ्गतिः—इति दर्शयति—सगुणासु विद्यास्विति ।

---

1. पर्यङ्कविद्यायामिति कौषीतकिब्राह्मणोपनिषदि श्रूयते पर्यङ्कविद्या ।

कोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति । नान्यासु—यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति ।

तत्र संशयः—किं यास्वेव एषा गतिः श्रूयते तास्वेव नियम्येत, उत अनियमेन सर्वाभिरेवंजातीयकाभिर्विद्याभिरभिसंबध्येत इति ।

किं तावत् प्राप्तं ? नियम इति, यत्रैव श्रूयते तत्रैव भवितुमर्हति, प्रकरणस्य नियामकत्वात् । यदि अन्यत्र श्रूयमाणापि गतिः विद्यान्तरं गच्छेत्, श्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात् । अपि च—अर्चिरादिका एकैव गतिः उपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत् पठ्यते, तत् सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात् । तस्मान्नियमः-इति ।

एवं प्राप्ते पठति—अनियम इति । सर्वासामेव अभ्युदयप्राप्तिफलानां सगुणानां विद्यानां अविशेषेण एषा देवयानाख्या गतिः भवितुमर्हति । नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः । नैषोऽस्ति विरोधः । शब्दानुमानाभ्यां—श्रुतिस्मृतिभ्यामित्यर्थः । तथाहि श्रुतिः 'तद्य इत्थं विदुः' (छा. उ. ५।१०।१) इति पञ्चाग्निविद्यावतां देवयानं पन्थानं अवतारयन्ती 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा. उ. ५।१०।१) इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति । कथं पुनरवगम्यते विद्यान्तरशीलिनां इयं गतिरिति, ननु श्रद्धातपःपरायणानामेव स्यात्, तन्मात्रश्रवणात् । नैष दोषः—न हि केवलाभ्यां श्रद्धातपोभ्यां अन्तरेण विद्याबलं एषा गतिः लभ्यते ।

'विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' ॥ इति श्रुत्यन्तरात् । तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् ।

---

यथा तत्तदुपासनाप्रकरणाम्नाता गुणाः प्रकरणानुसारेण तत्रतत्र व्यवस्थिताः, न तु सर्वे सर्वत्र प्राप्नुवन्ति, एवं गतिरपि भविष्यतीत्याह—यत्रैव श्रूयत इत्यादि ।

यत्र ब्रह्मलोके क्षुद्रगोचराः कामाः परागताः यं दक्षिणाः—दक्षिणमार्गाः कर्मिणः विद्यारहिताश्च तपस्विनः न यन्ति—न गच्छन्ति, तं अर्चिरादिमार्गेण विद्यया आरोहन्ति—इति प्रतिपादनात्, श्रद्धातपोभ्यां उपासनं ब्रह्मविषयकमुपलक्षणीयम्—इत्याह—विद्यया तदारोहन्तीति ।

वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते 'य एवमेतद्विदुः ये चामी अरण्ये श्रद्धां सत्यमुपासते' (बृ. उ. ६।२।१५) इति। तत्र, श्रद्धालवो ये सत्यं ब्रह्मोपासते-इति व्याख्येयम्। सत्यशब्दस्य ब्रह्मणि असकृत्प्रयुक्तत्वात्।

पञ्चाग्निविद्याविदां च इत्थंवित्तयैवोपात्तत्वात् विद्यान्तरपरायणानामेव एतदुपादानं न्याय्यम्। 'अथ य एतौ पन्थानौ न विदुः ते कीटाः पतङ्गा यदिदं दन्दशूकम्' (बृ. उ. ६।२।१६) इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिः देवयानपितृयाणयोरेव एनानन्तर्भावयति। तत्रापि विद्याविशेषात् एषां देवयानप्रतिपत्तिः। स्मृतिरपि—

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिं अन्ययाऽऽवर्तते पुनः' ॥ (भ.गी.८।२६) इति।

यत् पुनः देवयानस्य पथो द्विराम्नानं उपकोसलविद्यायां पञ्चाग्निविद्यायां च, तत् उभयत्राप्यनुचिन्तनार्थम्। तस्मादनियमः ॥ ३१ ॥

---

ननु—ये चेमेऽरण्ये इत्यादि छान्दोग्यवाजसनेयकगतं वाक्यं प्रकृतपञ्चाग्निविद्याया एव अर्चिरादिमार्गसम्बन्धप्रतिपादकं भवेत्, न तु सामान्यतस्सर्वविद्यासु--इत्यत आह—पञ्चाग्निविद्याविदां चेति। तद्यइत्थंविदुरितिवाक्येन तेषां पृथगुपादानात् 'ये चेमेऽरण्ये' इत्यादिवाक्यं पञ्चाग्निविषयत्वे व्यर्थमेव भवेदिति भवः। एवं वचनेन उत्तरमार्गस्य सर्वब्रह्मविद्यासाधारण्यमुक्त्वा लिङ्गादपि तदाह—अथ य एताविति। पितृयाणस्य कर्मभिरवरुद्धतया परिशेषात् मार्गद्वयमध्ये विद्यावतामुत्तरमार्ग एव, अन्यथा तेषां ब्रह्मलोकप्राप्तिर्न स्यात्--इति दर्शयति—तत्रापीति।

अनुचिन्तनार्थमिति। ननु--द्विराम्नानं अनुचिन्तनार्थमिति वक्तुं न शक्यते। तथाहिसति [1]उपकोसलविद्यायामेव मार्गोऽनुचिन्तनीयो नान्यत्रेति प्राप्नोति, न चैतद्युक्तम्, मार्गप्राप्तेऽपि फलकोटिनिविष्टतया तत्क्रतुन्यायेन सर्वविद्यास्वनुचिन्तनं सूत्रकार एव चतुर्थे दर्शयिष्यति 'तच्छेषगत्यनुस्मृतियोगाच्च' इति। न च उपकोसलविद्यायां [2]पुनराम्नानस्य सम्भवति प्रयोजनान्तरे तत्क्रतुन्यायप्राप्तसर्वविद्यानुचिन्त-

---

1. उपकोसलविद्येति पञ्चाग्निविद्याया अप्युपलक्षणम्।

2. पुनराम्नानस्येति पञ्चाग्निविद्यायामाम्नानन्त्वावश्यकम्। अन्यथा तस्या अब्रह्मविषयत्वात् ब्रह्मविद्याऽसाधारणी गतिः तस्यां न प्राप्नुयात्।

## १९ आधिकारिकाधिकरणम्

# यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते।

ननु विद्यायाः साधनभूतायाः संपत्तौ, कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसंपत्तौ ओदनो भवेन्न वेति चिन्ता संभवति। नापि भुञ्जानः तृप्येन्न वेति चिन्त्यते।

उपपन्ना त्वियं चिन्ता। ब्रह्मविदामपि केषांचित् इतिहासपुराणयोः देहान्तरोत्पत्तिदर्शनात्। तथाहि—अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति, वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन् निमिशापादपगतपूर्वदेहः पुनः ब्रह्मादेशात् मित्रावरुणाभ्यां संबभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते। सनत्कुमारोऽपि ब्रह्मण एव मानसः

---

नपरिसङ्ख्याफलकत्वमुपगन्तुमुचितम्। सम्भवति चेह 'यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न तेऽर्चिषमेवाभिसम्भवन्ति' इतिवचनानुसारेण उपकोसलविद्यानिष्ठस्य अर्चिरादिमार्गप्राप्तौ शव्यकर्मनिरपेक्षताबोधनार्थं सामान्यवचनप्राप्तस्य मार्गस्यानुवादः इति चेत्;

सत्यम्। तथापीह अनुचिन्तनार्थमित्यनेन तदेवप्रयोजनंपुनराम्नानस्येति न विवक्षितम्, अपि तु, सामान्यवचनप्राप्तस्य मार्गस्य पुनराम्नानं परिसङ्ख्यार्थं न भवति यथासम्भवं तस्य प्रयोजनान्तरं वक्तव्यमिति ॥ ३१ ॥

इति अनियमाधिकरणम्

अयमत्र पूर्वपक्षाभिप्रायः—वसिष्ठादिनां अपरोक्षीकृतब्रह्मतत्त्वानामपि शरीरान्तरग्रहणं दृश्यते। न च तत् प्रारब्धाधीनमिति वक्तुं शक्यम्। शरीरभेदे भिन्नकर्मापेक्षणेन, वर्तमानशरीरपातावधिकस्य प्रारब्धकर्मणः शरीरान्तरारम्भाप्रयोजकतया, तेषां शरीरान्तरारम्भः सञ्चितकर्माधीन एव वक्तव्य इति, विदुषामपि प्रारब्धातिरिक्तपुण्यपापाधीनशरीरारम्भपूर्वकं भोगदर्शनेन विद्यायाः न मुक्तिफलता। तथा च 'ब्रह्म वेद ब्रह्मैव भवति' इतिवाक्यानामर्थवादतया निर्विशेषविद्यासन्निधिसमाम्नातं 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्यादिब्राह्मलौकिकमेव फलं भविष्यति-इति।

पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारद-प्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते तेन तेन निमित्तेन स्मृतौ। श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थिते एव तस्मिन् योगैश्वर्यवशादनेकदेहादान-न्यायेन। सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तत् एतेषां देहान्त-रोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वं अहेतुत्वं वेति।

अत उत्तरमुच्यते। न। तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानां अधिकारतन्त्रत्वात् स्थितेः। यथाऽसौ भगवान् सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदया-स्तमयवर्जितं कैवल्यं अनुभवति, 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्त-मेता एकल एव मध्ये स्थाता' (छा. उ. ३।११।१) इति श्रुतेः। यथा च वर्तमाना ब्रह्मविदः आरब्धभोगक्षये कैवल्यमनुभवन्ति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६।१४।२) इति श्रुतेः, एव-

---

तथा च यत् पूर्वं व्यवस्थापितं 'सविशेषविद्यास्वेव सर्वासु अर्चिरादिमार्गः न निर्विशेषविद्यायाम्' इति, तदप्याक्षिप्तं भवतीति सङ्गतिरपि द्रष्टव्या। ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमिति न मुख्यः पूर्वः पक्षः, अहेतुत्वमित्येव मुख्यः पूर्वः पक्षः।

अयमत्र सिद्धान्ताभिप्रायः--नानेकशरीरारम्भकत्वमेकस्यकर्मणोऽनुपपन्नम्। 'श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनि-मृच्छति'॥ इति पापविशेषे अनेकशरीरग्रहणाम्नानात्, योगभ्रष्टानाञ्च योगजनित-पुण्यविशेषेण 'प्राप्य पुण्यकृतां‌न् लोकानुषित्वा शाश्वतीस्समाः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभि जायते' इति ऐहिकामुष्मिकशरीरग्रहणाम्नानात्। एवं च, वसि-ष्ठादीनामपि अपरोक्षीकृतब्रह्मतत्त्वानां अनेकशरीरप्रापकाधिकारिकप्रारब्धसम्भवात्, प्रारब्धस्य च प्रतिबन्धकतायाः चतुर्थे वक्ष्यमाणतया वसिष्ठादीनां मुक्त्यदर्शनं न ब्रह्मविद्यायाः अहेतुत्वं गमयतीति।

तदिदमाह—**नेत्यादिना**। यत् पूर्वपक्षिणोक्तमहेतुत्वं तन्नेत्यर्थः। **अथ तत इति**। जगद्व्यापारसमाप्त्यनन्तरं ततः—जगतः उत्कृष्टः सन् उदेत्य—निर्गत्य--तद-भिमानं विहायेति यावत्। एकलः--एक एव परमार्थगत्या मध्ये स्वरूपस्य स्थाता।

मपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषुतेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतौ अक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते तदवसाने चापवृज्यन्त इति अविरुद्धम् । सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयं अतिवाहयन्तः, स्वातन्त्र्येणैव गृहादिव गृहान्तरं अन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनाय अपरिमुषितस्मृतय एव देहेन्द्रियप्रकृति-वशित्वात् निर्माय देहान् युगपत् क्रमेण वा अधितिष्ठन्ति ।

न चैते जातिस्मरा इत्युच्यन्ते । 'ते एवैते' इति स्मृतिप्रसिद्धेः । यथा हि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहं आविश्य व्युद्य तेन पश्चात् स्वमेव देहं आविवेशेति स्मर्यते । यदि हि उपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणं आवि-र्भवेत्, ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वं अहेतुत्वं वा आशङ्क्येत, न त्वियमाशङ्का युक्ता, ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथाहि श्रुतिः—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. उ. २।२।८)

इति । 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा. उ. ७।२६।२) इति चैवमाद्या । स्मृतिरपि—

'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥' (भ. गी. ४।३७)

---

ननु--यदि वसिष्ठादीनामपरिमुषितस्मृतित्वं तथासति प्राप्तं जातिस्मरतुल्य-त्वम्, जातिस्मराणां च देहान्तरप्राप्तिः प्रारब्धातिरिक्तकर्मणा दृष्टेति तत्तुल्यतया एतेषामपि तथा स्यात्--इत्यभिप्रायेण शङ्कते—न चैते जातिस्मरा इतीति । ते एवैते इति स्मृतिप्रसिद्धेरिति । जातिस्मरा हि देहान्तरप्राप्तौ पूर्वदेहे यन्नामरूपादिकं स्थितं तदात्मना नाविर्भवन्ति । वसिष्ठादयस्तु देहान्तरप्राप्तावपि तुल्यनामरूपाधि-कारा एव पुराणादिषु प्रसिद्धाः । यथा च अपरिमुषितस्मृतित्वेऽपि इदं जातिस्मरे-भ्यो वैलक्षण्यम्, एवं पूर्वप्रवृत्तकर्मणैवशरीरप्राप्तिरित्यपिवैलक्षण्यसत्त्वे न काचिदनु-पपत्तिः--इति भावः ।

'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैः नात्मा संपद्यते पुनः ॥'

इति चैवमाद्या । न च अविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्य एकदेशदाहः एकदेशप्ररोहश्चेति उपपद्यते । न हि अग्निदग्धस्य शालिबीजस्य एकदेशप्ररोहो दृश्यते । प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः, 'तस्य तावदेव चिरम्' (छा. उ. ६।१४।२) इति शरीरपातावधिक्षेपकरणात् । तस्मात् उपपन्ना यावदधिकारं आधिकारिकाणामवस्थितिः । न च ज्ञानफलस्यानैकान्तिकता । तथा च श्रुतिः अविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्' (बृ. उ. १।४।१०) इति ।

ज्ञानान्तरेषु चैश्वर्यादिफलेषु आसक्ताः स्युः महर्षयः, ते पश्चात् ऐश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुः– इत्युपपद्यते ।

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ इति स्मरणात् ।

प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः । कर्मफले हि स्वर्गादौ अनुभवानारूढे स्यादपि कदाचिदाशङ्का भवेद्वा न वेति । अनुभवारूढं तु ज्ञानफलम्, 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः, तत्त्वमसि' इति च सिद्धवदुपदेशात् । न हि 'तत्त्वमसि' इत्यस्य वाक्यस्य अर्थः 'तत् त्वं मृतो भविष्यसि' इत्येवं परिणेतुं शक्यः । 'तद्धैतत्पश्यन्नृषिर्वाम-

---

एवं वसिष्ठादीनां निर्विशेषवस्तुनिष्ठतामुपेत्यापि प्रारब्धानुसारेण शरीरपरिग्रहः सम्भवतीत्युक्तम् । इदानीं, तेषां निर्विशेषनिष्ठतैव नास्ति अपि तु दहरादिसविशेषविद्यानिष्ठत्वमित्याह— ज्ञानान्तरेषु चैश्वर्यादिफलेष्विति । प्रत्यक्षफलत्वाच्चेति । स्वप्रकाशप्रत्यगानन्द एव हि ज्ञानफलमिति भावः ।

तत् सिद्धं निर्विशेषविद्याया गतिनिरपेक्षमेव स्वरूपभूतानन्दप्राप्तिफलकत्वात् तत्र गतेः प्रयोजनाभावेनानुपसंहार इति ॥ ३२ ॥

इति आधिकारिकाधिकरणम्

देवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' (बृ. उ. १।४।१०) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति। तस्मात् ऐकान्तिकी विदुषः कैवल्यसिद्धिः ॥ ३२ ॥

२० अक्षरध्यधिकरणम्

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यां औपसदवत् तदुक्तम् ॥ ३३ ॥

वाजसनेयके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' (बृ. उ. ३।८।८) इत्यादि। तथा आथर्वणे श्रूयते—'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' (मु. उ. १।१।६) इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेण अक्षरं परं ब्रह्म श्राव्यते। तत्र च क्वचित् केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिः उत व्यवस्थेति संशये, श्रुतिविभागाद्व्यवस्थाप्राप्तौ उच्यते—

---

ननु—'आनन्दादयः प्रधानस्य' इत्यत्र, 'निर्विशेषविद्यायाः सर्वत्र एकत्वात् उपलक्षणानां सर्वत्रोपसंहारः' इत्युक्तत्वात् इदमधिकरणं किमर्थम्--इति चेत्—

तत्र हि आनन्दादीनां स्वरूपप्रतिपत्तिप्रयोजनत्वात् उपसंहार इत्युक्तम्। अस्थूलत्वादीनां तु अभावरूपाणां सप्रतियोगिकतया ब्रह्मस्वरूपत्वासम्भवेन नोपसंहार इति शङ्का। न च तेषामस्थूलत्वादीनां अभावत्वोपलक्षणमुखेन स्थूलत्वाद्यारोपाधिष्ठानब्रह्मस्वरूपपर्यवसायितया न स्वरूपबहिर्भाव इति वाच्यम्। तादृशस्यापि स्वरूपस्य सत्यज्ञानादिपदैरेवावगमसम्भवात् स्वरूपप्रतिपत्तौ नैषामुपयोगः। अतः, यथा निर्विशेषफलप्राप्तौ गत्युपयोगाभावात् न गतेस्तत्रोपसंहारः, एवं सत्यज्ञानस्वरूपब्रह्मावगतौ अस्थूलत्वादीनामुपयोगाभावात् न तेषामुपसंहारः--इति सङ्गतिगर्भः पूर्वपक्षो द्रष्टव्यः।

सूत्रे सामान्यतद्भावाभ्यामित्यस्य, 'निषेधवाक्येषु सर्वत्रापि आरोपितविशेषनिराकरणमुखेन ब्रह्मप्रतीतिप्रयोजनस्य सामान्यात् प्रतिपादनीयस्य च ब्रह्मणः सर्वत्र

अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्र अवरोद्धव्याः। सामान्यतद्भावाभ्याम्—समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः। तदेव च सर्वत्र प्रतिपाद्यं ब्रह्म अभिन्नं प्रत्यभिज्ञायते। तत्र किमिति अन्यत्र कृता बुद्धयः अन्यत्र न स्युः। तथा च 'आनन्दादयः प्रधानस्य' इत्यत्र व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानि इह प्रतिषेधरूपाणीति विशेषः। प्रपञ्चार्थश्चायं चिन्ताभेदः।

---

प्रधानभूतस्यैव भावाच्च' इत्यर्थं दर्शयन् सिद्धान्तमाह—अक्षरविषयास्त्विति। अयं भावः[1]—यद्यपि सत्यादिपदैर्ब्रह्मस्वरूपमवगतं, तथापि, सृष्ट्यादिवाक्यपर्यालोचनया तत् सविशेषमेव प्रसक्तम्। अतः सप्रपञ्चत्वभ्रान्तिव्युदासेन ब्रह्मस्वरूपावगमे निषेधवाक्यान्यपेक्षितान्येव।

ननु—सप्रपञ्चताव्युदासोऽपि आनन्त्यप्रतिपादनेन अथात आदेशो नेति नेतीति सामान्यनिषेधेन च सिद्ध एव, पुनः किमिति अस्थूलादिपदानामप्युपसंहारोऽपेक्षणीयः। न च विशेषेण सप्रपञ्चतानिषेधाय अस्थूलादिपदापेक्षा। विशेषाणामानन्त्येन अस्थूलादिपदैरपि निषेधासम्भवात्—इति चेत्;

उच्यते--अथात आदेशो नेति नेतीति संग्रहेण निषिद्धाया एव सप्रपञ्चतायाः विशेषेण पुनर्निषेधो हि दार्ढ्यापादनाय। तथा च, निर्विशेषप्रकरणे तत्रतत्र ये प्रतिषेधाः श्रुताः तेषां सर्वेषां उपसंहारे निष्प्रपञ्चत्वप्रतीतेर्दार्ढ्यं भविष्यतीति तदर्थं विशेषरूपेण प्रतिषेधानामपि उपसंहारोऽपेक्षितः।

सूत्रे विशिष्य अक्षरब्राह्मणोदितानां प्रतिषेधबुद्धीनां सर्वत्रोपसंहारकथनं तु, तत्त्वंपदार्थयोरैक्यप्रतीतिप्रतिरोधिनो ये भ्रमाः प्रसक्ताः तेषां सर्वेषामपि अपाकरणमुपलभ्यते तत्रेत्यभिप्रायेण। तथा हि—तत्पदार्थे अविद्यातत्कार्यपृथिव्याद्यध्यासः त्वंपदार्थे शरीरेन्द्रियाद्यध्यासः प्रसक्तः। तस्य सर्वस्यापि अत्रापाकरणमुपलभ्यते—'अवाय्वनाकाशमरसमगन्धमतेजस्कम्' इति पृथिव्याद्यध्यासापाकरणम्, अतम इति अविद्याध्यासापाकरणम्। त्वंपदार्थे च शरीराध्यासापाकृतिः अस्थूलमित्यादिपदैः इन्द्रियाध्यासापकृतिः अचक्षुष्कमित्यादिपदैः। 'न तदश्नाति किञ्चन' इत्यादिना भोक्तृत्वाद्यध्यासनिरासः।

---

1. **अयंभावः** इत्यादि एवं भाववर्णनेन अनुपदंवर्ण्यमानशङ्कातत्परिहाराभ्याञ्च विशिष्टाद्वैत्युक्तदूषणं निरस्तं वेदितव्यम्।

औपसदवदिति निदर्शनम् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणाम् 'अग्ने वेर्होत्रं वेरध्वरम्' इत्येवमादीनां उद्गातृवेदोत्पन्नानामपि अध्वर्युभिरभिसंबन्धो भवति, अध्वर्युकर्तृकत्वात् पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानाम् । एवमिहापि अक्षरतन्त्रत्वात् तद्विशेषणानां यत्रक्वचिदप्युत्पन्नानां अक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः । तदुक्तं प्रथमे काण्डे—'गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोगः' (जै. सू. ३।३।९) इत्यत्र ॥ ३३ ॥

---

प्रधानानुसारि गुणस्य वर्तनं इत्यत्र दृष्टान्तः औपसदवदिति । यथा जामदग्न्येऽहीन इति । [1]जामदग्न्यः चतूरात्र इति अहीनः, तदङ्गभूतोपसत्सु एककपालादिद्वादशकपालान्तपुरोडाशद्रव्यका द्वादश होमाः विहिताः । तेषां 'अग्ने [2]वेर्होत्रं वेरध्वरं आ पितरं वैश्वानरं अवसेऽकः इन्द्राय देवेभ्यो जुहुता हविः स्वाहा' इत्याद्याः द्वादश मन्त्राः [3]छान्दोग्ये समाम्नाताः । ते उपसदङ्गपुरोडाशसम्बन्धितया औपसदपदोदिताः। तेषां उद्गातृवेदोत्पन्नतया उद्गात्रा उच्चारणं प्राप्नोति, याजुर्वेदिकोपसदङ्गभूततया प्रधानानुसारेण अध्वर्युकर्तृकता प्राप्नोति । सामवेदोत्पन्नमौद्गात्रं यजुर्वेदोत्पन्नमाध्वर्यवं इति हि व्यवस्था । तत्र, उत्पत्तेः प्रथमभावित्वात् छान्दोग्योत्पन्नानां मन्त्राणां उद्गातृकर्तृकत्वमिति पूर्वपक्षे 'गुणमुख्यव्यतिक्रमे' इति सिद्धान्तसूत्रम् । गुणभूतानां मन्त्राणां, मुख्यानां- प्रधानभूतानामुपसदां च, धर्मविरोधे प्रसक्ते, प्रधानार्थत्वाद्गुणानां प्रधानेन वेदसंयोगः—प्रधानवेदसम्बन्धी यः कर्ता स एव कर्ता मन्त्रेषु भविष्यति । यद्यपि उत्पत्तिः प्रथमभाविनी, तथापि, तस्याः प्रयोगविधिशेषत्वात् प्रयोगस्य च यजुर्वेद एव कृतत्वात् याजुर्वेदिक एव कर्ता मन्त्रेष्विति सिद्धान्ताभिप्रायः ॥ ३३ ॥

इति अक्षरध्यधिकरणम्

---

1. जामदग्न्य इत्यादि यद्यपि शाबरे उदाहरणान्तरं दत्तम्, तथाऽपि तुल्यन्यायतया एतदपि शक्यमुदाहर्तुमिति, उदाहरणान्तरं दर्शितं भाष्यकृद्भिः ।

2. वेरित्यादि-वेः-विद्धि । अवसे अस्माकंरक्षणाय, आ अकः-अभिमुखं कुरु ।

3. छान्दोग्ये—छन्दोगानां पञ्चविंशब्राह्मणे ताण्ड्यब्राह्मणमिति प्रसिद्धे । [२१-१०-११]

२१ इयदधिकरणम्

## इयदामननात् ॥ ३४ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥'
(मु. उ. ३।१।१) (श्वे. उ।४।६)

इति अध्यात्माधिकारे मन्त्रं आथर्वणिकाः श्वेताश्वतराश्च पठन्ति । तथा कठाः

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥'
(क. उ. ३।१) इति ।

किमत्र विद्यैकत्वं उत विद्यानानात्वमिति संशयः । किं तावत् प्राप्तम् ? विद्यानानात्वमिति । कुतः ? विशेषदर्शनात् द्वासुपर्णेत्यत्र हि एकस्य भोक्तृत्वं दृश्यते । एकस्य च अभोक्तृत्वं दृश्यते । ऋतंपिबन्तावित्यत्र उभयोरपि भोक्तृत्वमेव दृश्यते । तत् वेद्यरूपं भिद्यमानं विद्यां भिन्द्यात्-

---

पूर्वं अक्षरविद्यायाःसर्वत्रैकत्वात् गुणोपसंहार इत्युक्ते, 'द्वा सुपर्णा' 'ऋतं पिबन्तौ' इत्यत्र विद्याभेदान्नोपसंहार इति प्रत्यवस्थानात् सङ्गतिः । ऋतंपिबन्तावित्यत्रतूभयोरपिभोक्तृत्वमिति । [1]ननु-'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यत्र अस्य मन्त्रस्य जीवद्वितीयपरमेश्वरपरत्वं स्थापयित्वा पिबन्तावित्येतत् छत्रिन्यायेन व्याख्येयमिति प्रतिपादितम् । तथाचेहापि ईश्वरस्याभोक्तृतोपगमात् कथं द्वासुपर्णेति मन्त्रेण भिन्नार्थता इति चेत् ;

न-गुहाम्प्रविष्टावित्यधिकरणे हि, जीवद्वितीयाबुद्धिरिति पूर्वपक्षेऽपि पिबत्पदस्य मुख्यताया अभावात् प्रकरणाद्यनुरोधेन परमेश्वरद्वितीयजीवपरता उपगता । इह तु, पिबन्तावित्यस्य मुख्यतोपपत्तये जीवद्वयप्रतिपादकता मन्त्रस्यास्त्विति पुनराक्षिप्यते । तथा च द्वासुपर्णेतिमन्त्रात् भिन्नार्थतेति सिध्यति । न च-एवंसति प्रकरणे ऋतं पिबन्तावित्यस्य समावेशो न स्यात् , जीवद्वयप्रतिपादनस्य ब्रह्मप्रकरणाननुगुणत्वात्-इति वाच्यम् । पिबन्तावितिपदसमभिव्याहारात्मकस्य वाक्यस्य प्रबलतया, तदनुसारेण मन्त्रस्य प्रकरणादुत्कर्षोपपत्तेः-इति पूर्वपक्षाशयः ।

---

1. नन्वित्यादि एतच्छङ्कातत्समाधानाभ्यां विशिष्टाद्वैत्युक्तदूषणं निरस्तं वेदितव्यम् ।

इत्येवं प्राप्ते ब्रवीति विद्यैकत्वमिति । कुतः ? यतः उभयोरप्यनयोर्मन्त्रयोः इयत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपं अभिन्नमामनन्ति ।

ननु दर्शितो रूपभेदः ।

नेत्युच्यते—उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः, नार्थान्तरम् । 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इति अशनायाद्यतीतः परमात्मा प्रतिपाद्यते । वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते 'जुष्टं यदा पश्यत्यन्यमीशं अस्य महिमानम्' इति । 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबति अशनायाद्यतीतः परमात्मापि साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते । परमात्मप्रकरणं ह्येतत्, अन्यत्र धर्मादन्यत्राधर्मात्' इत्युपक्रमात् । तद्विषय एव च अत्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्' इति । 'गुहां प्रविष्टावा-

---

अयमत्र सिद्धान्ताभिप्रायः—यद्यपि प्रकरणं वाक्याद्दुर्बलम्, तथापि, नेह प्रकरणस्य दौर्बल्यं वक्तुं शक्यते । उपक्रमोपसंहारैकरूप्यावगतं महाप्रकरणं ब्रह्मविषयं मन्त्रेऽप्यनुवर्तते, तच्च श्रुत्यादिभ्यो बलीय इति प्रतर्दनाधिकरणे व्यवस्थापितम् । अतः तदनुसारेण पिबन्ताविति पदं छत्रिन्यायेनैव व्याख्येयम् । न च तात्पर्यग्राहकलिङ्गोपेतस्य उत्तरस्यापि प्रमाणस्य पूर्वप्रमाणापेक्षया प्राबल्यं चेत् प्रतर्दनाधिकरण एव दर्शितं तर्हीदं तेन गतार्थं स्यादिति वाच्यम् । ऋतंपिबन्तावित्यादिषु त्रिषु मन्त्रेषु द्वित्वोपेतं वस्तु प्रतिपाद्यते । तथा च एतेषां तुल्यार्थाभिधायकत्वं सिद्धम् । एवञ्च सति 'बाधकाभावे तुल्यार्थाभिधायकत्वमपि विद्यैक्यावगमकम्' इति न्यायान्तरव्युत्पादनेन मन्त्राणां विद्यैक्यप्रदर्शनपरत्वात् न गतार्थता ।

[1]ननु—इहास्ति बाधकम्-द्वासुपर्णेति मन्त्रो हि पैङ्गिब्राह्मणानुसारेण जीवस्यैवाभोक्तृताप्रतिपादनपर इति प्रथमाध्याये व्युत्पादितम्, ऋतंपिबन्ताविति मन्त्रस्तु प्रकरणाद्यनुसारेण जीवद्वितीयेश्वरप्रतिपादक इति अर्थभेदावगमात्—इति चेत् ; न—पैङ्गिब्राह्मणं नास्तीति कृत्वाचिन्तया इदमधिकरणम् । तत्प्रयोजनं तुल्यार्थाभिधायकत्वमपिविद्यैक्यावगमकमितिन्यायव्युत्पादनमेव ॥ ३४ ॥

इति इयदधिकरणम्

---

1. नन्वित्यादि उक्तशङ्कानिराकरणेन विशिष्टाद्वैत्युद्भावितदूषणं उद्धृतं वेदितव्यम् ।

स्मानौ हि' इत्यत्र च एतत् प्रपञ्चितम् । तस्मात् नास्ति वेद्यभेदः, तस्माच्च विद्यैकत्वम् ।

अपि च–त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते, तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया । न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्ति इत्युक्तम् । तस्मात् प्रपञ्चार्थ एवैष योगः, तस्माच्च अधिकधर्मोपसंहार इति ॥ ३४ ॥

२२ अन्तराभूतग्रामाधिकरणम्

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इत्येवं द्विः उषस्तकहोलप्रश्नयोः नैरन्तर्येण वाजसनेयिनः समामनन्ति । तत्र संशयः—विद्यैकत्वं वा स्यात् विद्यानानात्वं वेति । विद्यानानात्वमिति तावत् प्राप्तम्, अभ्याससामर्थ्यात् । अन्यथा हि अन्यूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात् । तस्मात्, यथा अभ्यासात् कर्मभेदः एवमभ्यासाद्विद्याभेदः–

---

तुल्यार्थाम्नानं विद्यैक्यावगमकमित्युक्तम्, तदिह उदाहरणविशेषे आक्षिप्य समाधीयत इति सङ्गतिः ।

ननु 'अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व' इति प्रथममुषस्तप्रश्नः । पुनश्च 'अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व' इति कहोलप्रश्नः । तयोस्तुल्यार्थयोरभ्यासाद्विद्याभेदशङ्कायां सिद्धान्तेऽपि तुल्यार्थतैव सर्वान्तरवस्तुप्रतिपादकत्वाविशेषेण दृढीक्रियते । कथमयं अभ्यासमूलकविद्याभेदपूर्वपक्षपरिहारो भवेत्;

उच्यते—द्वावत्र पूर्वपक्षौ–एकस्तावत् 'उषस्तप्रश्नो जीवविषयकः कहोलप्रश्नः परमात्मविषयकः' इति । अस्य च, उभयोः परमात्मविषयकतया तुल्यतानिरूपणेन निराकरणं आद्यसूत्रे विवक्षितम् । तर्हि तुल्यार्थत्वे अभ्यासाद्विद्याभेद इति अपरः पूर्वपक्षः । सः 'अन्यथाभेदानुपपत्तिः' इति द्वितीयसूत्रेणानूद्य निराकृतः ।

भाष्ये तु, द्वितीयसूत्रनिराकरणीय एव अभ्यासमूलकः पूर्वपक्षः प्रथमसूत्रव्याख्यानावसर एव कण्ठतो दर्शितः, प्रथमसूत्रनिवर्त्यः पूर्वपक्षस्तु, तुल्यार्थतासिद्धान्तप्रदर्शनव्याजेन सूचितः-इति ।

तत्र प्रथमपूर्वपक्षस्यायमभिप्रायः—उषस्तेन सर्वान्तरे वस्तुनि पृष्टे याज्ञवल्क्यस्योत्तरं 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः यो व्यानेन व्यानिति स त आत्मा सर्वान्तरः' इत्यादिना प्राणनादिविशिष्टविषयकमुपलभ्यते । पुनश्च तेनैवोषस्तेन 'यथा विब्रूयात् असौगौरसावश्व इति एवमेवैतद्व्यपदिष्टं भवति, यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व' इति परिचोदिते, 'न दृष्टेर्द्रष्टारं पश्येः न श्रुतेश्श्रोतारं शृणुयाः' इत्यादिना द्रष्ट्रादिरूपविषयकमुपलभ्यते । प्राणनादिकं द्रष्टृत्वश्रोतृत्वादिकं च जीवे एव असाधारणतया प्रसिद्धम् । अतः उषस्तब्राह्मणं जीवविषयकमित्युपगन्तव्यम् । कहोलब्राह्मणं तु, 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्युत्तरे अशनायाद्यत्ययस्य, 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च' इत्यादिना सन्न्यासश्रवणादिसाध्यमोक्षफलकज्ञानविषयत्वस्य च परमेश्वरधर्मस्य कीर्तनात् परमात्मविषयकमित्यवगम्यते । अतः वेद्यभेदात् उभयोर्ब्राह्मणयोर्विद्याभेदः ।

[1]स्यादेतत्—उषस्तब्राह्मणस्य जीवविषयत्वे हि विद्याभेदो भवेत्, तत्तु, तदुपक्रमे 'यत्साक्षादपरोक्षात् ब्रह्म' इति ब्रह्मश्रुतेः 'य आत्मा सर्वान्तरः' इति सर्वान्तरत्वलिङ्गाच्च ब्रह्मपरत्वावगमात् न सम्भवति । तथा च उपक्रमानुसारेण चरमश्रुतं प्राणनादिकं परमात्मन्येव व्याख्येयम्, सर्वाधारे प्राणनाद्याधारत्वोपपत्तेः । [2]ननु सर्वाधारोऽपि परमात्मा न प्राणितीत्यादिव्यपदेशार्हः, न हि सर्वाधारोऽपि कालः प्राणितीत्यादिव्यपदेशार्हो भवति—इत्यपरितोषः, तर्हि, प्राणितीत्यादिपदं णिजर्थगर्भं भवतु— प्राणयति अपानयतीति । प्राणनादिप्रयोजकत्वं तु परमात्मन उपपद्यत एव । नदृष्टेर्द्रष्टारमित्यादिकं तु न उपक्रान्तसर्वान्तरवस्तुविषयम् । अयं हि तस्याभिप्रायः—उषस्तेन सर्वान्तरे परमात्मनि पृष्टे 'एष त आत्मा सर्वान्तरः' इति सम्मुग्धतया प्रथमं याज्ञवल्क्येनोत्तरितम् । पुनरपि 'स्पष्टतया सर्वान्तरं ब्रह्म

---

1. स्यादेतदित्यादि शङ्काग्रन्थोक्तोऽर्थः विशिष्टाद्वैतिभिः सिद्धान्तत्वेन स्वीकृतः ।
2. नन्विति यदीत्यर्थः ।

कथय' इत्यभिप्रायेण उषस्तस्य 'कतमो याज्ञवल्क्य सर्वान्तरः' इति प्रश्ने, यःप्राणेनप्राणितीत्याद्युत्तरिते, पुनरप्युषस्तपरिचोदना—विस्पष्टं सर्वान्तरं वस्तु कथयेति 'मया पृष्टेन भवता जीवसाधारणपदैरेवोत्तरमुक्तम्, अतो न समीचीनम्' इति पुनरपि चोदिते, नदृष्टेर्द्रष्टारंपश्येरित्यादि याज्ञवल्क्यवचनम्। तत्र च, 'प्राणित्यपानितीत्यादिशब्दैर्निर्दिष्टं त्वं दृष्टेर्द्रष्टारं श्रुतेश्श्रोतारं मतेर्मन्तारं विज्ञातेर्विज्ञातारं जीवं न विद्याः, अपि तु प्राणनादिप्रयोजकपरमात्मा मया प्रतिपादित इति जानीथाः' इति विवक्षितम्। तथा च नदृष्टेर्द्रष्टारमित्यादिवाक्यस्य सर्वान्तरवस्तुनि प्राणितीत्यादिनिर्देशप्रयुक्तजीवत्वभ्रमनिरासपरत्वात् नास्य जीवत्वसाधकता। अतः उपक्रमानुसारात् उषस्तप्रश्नस्य ब्रह्मविषयत्वे कथं विद्याभेदः—इति; (चेत्;)

न स्यात्। यत्र हि उपक्रमोपसंहारयोरल्पभूयस्त्वे न भवतः तत्रैव उपक्रमानुसारेणोपसंहारनयनम्। यत्र तु उपसंहारस्य भूयस्त्वं तत्र वैपरीत्यमेवेति प्रतिष्ठापितं 'दहर उत्तरेभ्यः' इत्यादिषु। इह च उपक्रमगतं साक्षादपरोक्षत्वं जीवस्य स्वप्रकाशस्य सम्भवत्येव। घटादिकं हि अन्तःकरणप्रणाडिकया प्रत्यक्चैतन्यसम्बन्धे सति अपरोक्षं जीवस्तु स्वत एव अपरोक्ष इति साक्षादपरोक्षत्वेन व्यपदिश्यते। अपरोक्षादिति पञ्चमी श्रुतौ प्रथमार्थे द्रष्टव्या। सर्वान्तरत्वं तु आध्यात्मिकसर्वान्तरत्वाभिप्रायमिति 'एष त आत्मा सर्वान्तरः' इत्युत्तरवाक्यबलादेव अवगम्यते। एतत्पदं सन्निहितापरोक्षवस्तुपरम्। जीवश्च तथा, न परमात्मा। तस्य शास्त्रैकगम्यत्वेन एषआत्मेति निर्देशानर्हत्वात्। अतः, एकं ब्रह्मपदं प्राणनद्रष्टृत्वाद्यनेकजीवलिङ्गानुसारेण 'इदं ब्रह्मायाति इदमागच्छति' इत्यादाविव जीवपरमित्येव युक्तम्। प्राणितीत्यादीनां णिजर्थगर्भत्वे लाक्षणिकतापत्तेः। न च—नदृष्टेर्द्रष्टारंपश्येरित्यादिषु प्राणितीत्यादिवाक्यनिर्दिष्टो दृष्टेर्द्रष्टा जीव इति न पश्येः, एवं भ्रमं मा कुरु, अपि तु परमात्मैव—इति कल्पना समीचीना। अध्याहारप्रसङ्गात्। अनन्तरं च द्रष्टृत्वादिना निर्दिष्टे एव उपक्रान्तसर्वान्तरत्वस्य एषतआत्मासर्वान्तरः इति श्रवणाच्च।

अतः इत्थं तदभिप्रायो वर्णनीयः—साक्षादपरोक्षे सर्वान्तरे प्रथमं पृष्टे, एष त आत्मा सर्वान्तर इत्युत्तरिते च, एतत्पदेन अहमितिप्रत्यक्षविषयो भवता सर्वान्तरो यदि निर्दिश्यते, तर्हि, अहमितिप्रतीयमानानामात्मान्तःकरणेन्द्रियादीनां मध्ये कतमः त्वया सर्वान्तरो विवक्षितः तं शृङ्गग्राहिकया प्रदर्शय-इति 'कतमो याज्ञवल्क्य सर्वान्तरः' इति पुनः परिचोदिते, 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' इत्यादिना च पुनरपि याज्ञवल्क्येन प्राणनादिलिङ्गोपन्यासेन प्राणादिव्यति-

इत्येवं प्राप्ते--प्रत्याह—अन्तराऽऽम्नानाविशेषात्स्वात्मनः विद्यैकत्व-मिति। सर्वान्तरो हि स्वात्मा उभयत्राप्यविशिष्टः पृच्छयते च प्रत्युच्यते च। न हि द्वावात्मानौ एकस्मिन् देहे सर्वान्तरौ संभवतः। तदा हि एकस्य

---

रिक्ते बोधितेऽपि उषस्तेन दूषणमुक्तम्—यथा विब्रूयात् आसौगौरसावश्व इति एव-मेवैतत् व्यपदिष्टं भवतीति। मया शृङ्गग्राहिकया सर्वान्तरं प्रतिपादयेति पृष्टम्, भवांस्तु, यथा असौगौरित्यादिवाक्यं दूरस्थं गवादिकं परोक्षतयैव निर्दिशति तथैव प्राणनादितद्धर्मोपन्यासेन प्राणादिप्रेरयितारं कञ्चित् सूचयति, न त्वङ्गुलीनिर्देशसहितं अयंगौरित्यादिवत् शृङ्गग्राहिकया प्रदर्शयति—इति तदभिप्रायः। तदभिप्रायनिरा-करणार्थं नदृष्टेर्द्रष्टारंपश्येरित्यादि याज्ञवल्क्यस्य वचनम्। दृष्ट्यादीनां योऽवभासको जीवः तस्य दृष्ट्यादिजन्यज्ञानावभास्यत्वाभावात् अङ्गुलीनिर्देशेन प्रतिपादयितुं अशक्यः स इति तदभिप्रायः। अतः 'यः प्राणेन प्राणिति' 'यश्च दृष्टेर्द्रष्टा' इति लक्षणमुखेनैव स प्रतिपाद्यत इति।

अतः उषस्तप्रश्नस्य जीवविषयत्वात् कहोलप्रश्नस्य च परमात्मविषयतया विद्याभेद इति।

अमुं पूर्वपक्षं निराकरोति—अन्तराऽऽम्नानाविशेषादिति। पूर्वसूत्रात् आमननादित्यनुवर्तते। अन्तरापदं सप्तम्यन्तं, छान्दसः सप्तम्या आडादेशः। तथा च उषस्तकहोलप्रश्नयोः सर्वाभ्यन्तरे आत्मन आम्नानेन एकार्थत्वं प्रत्यभिज्ञायते। इदं ब्रह्मत्वसाक्षादपरोक्षत्वयोरप्युपलक्षणम्। उत्तरसूत्रात् 'अन्यथा' अनुपपत्तिः' इत्यप-कृष्य सर्वान्तरत्वस्येति च [1]पदं अध्यात्दृत्य भूतग्रामवदिति पदं व्याचष्टे—तदा ह्येकस्येत्यादिना।

अयमत्र परिहाराभिप्रायः—प्रश्नद्वयस्याप्यैकरूप्येण एकार्थत्वं परमात्मविषयत्वं च स्वरसतोऽवगम्यते। अत्र च प्रश्नद्वयेऽपि प्रत्यगभेदेनैव परमात्मा जिज्ञासितः। सर्वान्तरत्वरूपपरमात्मलिङ्गेनैव सह साक्षादपरोक्षत्वस्य जीवलिङ्गस्य उपक्षेपात्। एवञ्चसति उषस्तब्राह्मणे प्राणनादिद्रष्टृत्वादिजीवलिङ्गोपक्षेपो न परमात्मपरत्वविरोधी, अभेदस्य प्रकृते विवक्षितत्वात्। तस्माद्वेद्यैकत्वाद्विद्यैकत्वमिति ॥ ३५ ॥

---

1. पदमिति एतेन श्रुतप्रकाशिकोक्तं अध्याहारबाहुल्यदूषणं निरस्तम्। पदैक-मात्राध्याहारात् अस्य च उभयोः समत्वात्।

आञ्जसं सर्वान्तरत्वं अवकल्प्येत, एकस्य तु भूतग्रामवत् नैव सर्वान्तरत्वं स्यात् । यथा पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तराः अद्भ्यस्तेजोऽन्तरमिति सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति तथेहापीत्यर्थः ।

अथवा--भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति । यथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे. उ. ६।११) इत्यस्मिन् मन्त्रे समस्तेषु भूतग्रामेषु एक एव सर्वान्तर आत्मा आम्नायते एवं अनयोरपि ब्राह्मणयोरित्यर्थः ।

तस्मात् वेद्यैक्यात् विद्यैकत्वमिति ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तं अनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति, तत् परिहर्तव्यम्, अत्रोच्यते—नायं दोषः, उपदेशान्तरवदुपपत्तेः । यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवति एवमिहापि भविष्यति । कथञ्च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति । उपक्रमोपसंहाराभ्यामेकार्थतावगमात् । 'भूय एव मा भगवान् विज्ञापयतु' इति च एकस्यैवार्थस्य पुनः पुनः प्रतिपादयितव्यत्वेनोपक्षेपात् । आशङ्कान्तरनिराकरणेन च असकृदुपदेशोपपत्तेः । एवमिहापि प्रश्नरूपाभेदात्, 'अतोऽन्य-

---

अत्रेयं शङ्का-यदि प्रत्यगभिन्नं ब्रह्म विवक्षितं, तर्हि एकेनैव ब्राह्मणेन तदर्थस्य सिद्धत्वात् पुनस्तत्प्रतिपादनं कहोलब्राह्मणे असङ्गतमिति ;

इमामाशङ्कां अनूद्य निराकर्तुं अन्यथाभेदानुपपत्तिरितिचेन्नोपदेशान्तरवत् इति सूत्रम् ।

आशङ्कान्तरनिराकरणेनचासकृदुपदेशोपपत्तेरिति । अयमर्थः—सुषुप्त्यादिषु येन सद्रूपेण जीवः सम्पन्नो भवति तदेव सर्वात्मकं ब्रह्म त्वमसीति प्रथमतस्तत्त्वमसीति प्रतिपादिते, 'भूय एव मा भगवान् विज्ञापयतु' इति पुनः पुनः प्रश्नाः शङ्काविशेषगर्भिताः । ताश्च शङ्काः तत्सन्दर्भपर्यालोचनया अवगन्तुं शक्यन्ते । तथाहि—प्रथमप्रश्नस्य 'यदि सर्वाः प्रजा सुप्तौ सति सम्पन्नाः तर्हि ताः किमिति न जानन्ति सतिसम्पन्नावयमिति' इति शङ्कागर्भत्वं, नानावृक्षानीतैर्मकरन्दैर्मधुकर-

दार्तम्' (बृ. ३।४।२,३।५।१) इति च परिसमाप्त्यविशेषात् उपक्रमोपसंहारौ तावत् एकार्थविषयौ दृश्येते। 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति द्वितीये प्रश्ने एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थं उत्तरत्रानुकृष्यमाणं दर्शयति। पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं कथ्यते इत्येकार्थतोपपत्तिः। तस्मादेका विद्येति ॥ ३६ ॥

२३ व्यतिहाराधिकरणम्

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' (ऐ. आ. २।२।४।६) इति आदित्य-

---

सम्पादितं मधु प्रस्तुत्य समाम्नातेन 'ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्य इमाः सर्वाः प्रजाः सति सम्पद्य न विदुः' इतिवाक्येनावगम्यते। तदनन्तरप्रश्नस्य 'सति सम्पन्नानां विवेकाभावात् मास्तु सुप्तिकाले सति सम्पन्ना इति ज्ञानं, तत उत्थितानां तु, सतोवयमुत्थिता इति जाग्रद्दशायां ज्ञानेन भवितव्यम्' इत्यभिप्रायकत्वं, जलधरैः समुद्रजलमाकृष्य वृष्टिरूपेण भूमौ निक्षिप्य तेन जलेन संवर्धिता नदीः प्रस्तुत्य 'ता यथा तत्र न विवेकं लभन्ते इयमहमस्मि - समुद्रादहमागतास्मीति, एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः' इतिवाक्यपर्यालोचनयाऽवगम्यते। एवं उत्तरेष्वपि प्रश्नेषु शङ्काविशेषगर्भत्वं तत्तत्सन्दर्भपर्यालोचनया अवगम्यते। एवं च, यथा छान्दोग्ये षष्ठाध्यायगतः नवकृत्वः तत्त्वमसीति प्रत्यगभिन्नपरमात्मोपदेशः शङ्काविशेषनिराकरणाय, एवमिहापि, उषस्तब्राह्मणेन प्रत्यगभिन्ने परमात्मनि प्रतिपादितेऽपि, अशनायादिमता जीवेन सह कथं परमात्मन एकत्वमिति मनसि निधाय, उषस्तपृष्टस्यार्थस्य एवकारगर्भितेन वाक्येन कहोलेन प्रश्ने कृते, याज्ञवल्क्येन तदीयमभिप्रायमवगम्य 'एष त आत्मा सर्वान्तरः' इति पूर्वोक्तमर्थमुपक्षिप्य तस्य एतत्पदनिर्दिष्टस्य 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति अशनायादेः परमार्थगत्या निषेधो दर्शितः।

अतः पुनराम्नानस्य प्रयोजनान्तरार्थत्वात् न आनर्थक्यमूलकाभ्यासन्यायः प्रकृते प्रवर्तते ॥ ३६ ॥

इति अन्तराभूतग्रामाधिकरणम्

पुरुषं प्रकृत्य ऐतरेयिणः समामनन्ति, तथा-जाबालाः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति ।

तत्र संशयः—किमिह व्यतिहारेण उभयरूपा मतिः कर्तव्या उत एकरूपैव-इति ।

एकरूपैवेति तावदाह । न ह्यत्र आत्मन ईश्वरेणैकत्वं मुक्त्वा अन्यत् किंचिच्चिन्तयितव्यमस्ति । यदि चैवं चिन्तयितव्यो विशेषः परिकल्प्येत—संसारिणश्चेश्वरात्मत्वं ईश्वरस्य संसार्यात्मत्वमिति ; तत्र, संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्, ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात् । तस्मात् ऐकरूप्यमेव मतेः । व्यतिहाराम्नायस्तु एकत्वदृढीकारार्थ इति ।

एवं प्राप्ते प्रत्याह—व्यतिहारोऽयं आध्यानायाम्नायते, इतरवत्-यथा इतरे गुणाः सर्वात्मत्वप्रभृतयः आध्यानायाम्नायन्ते तद्वत् । तथाहि विशिषन्ति समाम्नातारः उभयोच्चारणेन 'त्वमहमस्मि अहं च त्वमसि' इति । तच्च उभयरूपायां मतौ कर्तव्यायां अर्थवद्भवति । अन्यथा हि इदं विशेषेणोभयाम्नानं अनर्थकं स्यात्, एकेनैव कृतत्वात् ।

ननु उभयाम्नानस्य अर्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेः निकर्षः प्रसज्येतेत्युक्तम् ।

नैष दोषः, ऐकात्म्यस्यैव अनेन प्रकारेण अनुचिन्त्यमानत्वात् ।

---

पूर्वत्र पृथगाम्नाने सत्यपि विद्यैक्यमित्युक्तम् ; तद्वत्रापि 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिपृथगाम्नाने सत्यपि एकरूपैव मतिः कर्तव्या-इति प्रत्यवस्थानात् सङ्गतिः । उभयरूपा मतिरिति । 'त्वं वा अहमस्मि' 'योऽसौ सोऽहम्' इत्यंशेन देवतोपसर्जना प्रत्यक्प्रधाना मतिः प्रतीयते । 'अहं वै त्वमसि' 'योऽहं सोऽसौ' इत्यंशेन च प्रत्यगुपसर्जना देवताप्रधाना मतिः । तथा च उपास्यदेवताप्रत्यगभेदविषयत्वस्याविशिष्टत्वेऽपि प्रधानोपसर्जनभावभेदेन आम्नानात् द्विरूपता द्रष्टव्या । एकरूपैवेतीति । प्रत्यक्प्रधाना देवतोपसर्जनेत्यर्थः ।

ऐकात्म्यस्यैवानेन प्रकारेणेति । 'देवताया जीवत्वमापादितं स्यात्' इत्यनेन किं विवक्षितम्? देवताचैतन्यं प्रत्यक्चैतन्यं च एकतया ध्यातव्यं स्यादिति चेत् । इष्टत्वात् । उपासकस्य देवतया सह चैतन्यांशमादाय यत् वास्तवमैक्यमस्ति, तदेव हि अहंग्रहोपासनेषु व्यतिहारेण ध्येयमिष्यते । देवतात्वावच्छेदेन जीवगतानां

नन्वेवंसति स एवैकत्वदृढीकार आपद्येत ।

न वयं एकत्वदृढीकारं वारयामः । किं तर्हि ? 'व्यतिहारेणेह द्विरूपा मतिः कर्तव्या, वचनप्रामाण्यात्, नैकरूपा' इत्येतावदुपपादयामः। फलतस्तु एकत्वमपि दृढीभवति । यथा ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुणक ईश्वरः सिद्ध्यति तद्वत् ।

तस्मात् अयमाध्यातव्यो व्यतिहारः समाने च विषये उपसंहर्तव्यो भवति ॥ ३७ ॥

---

संसारित्वादीनां ध्यानं तु नेष्यते, येन देवताया निकर्ष आपादितः स्यात् । अपि तु देवतागता अपहतपाप्मत्वादय एव उपासके ध्येया इष्यन्ते, ते तु उत्कर्षापादका एव—इति भावः ।

तद्गुणकईश्वरस्सिध्यतीति । देवताधिकरणन्यायेनेति भावः । समाने च विषय इति । ऐतरेयकजाबालयोः यामुपासनां प्रस्तुत्य आम्नातः तस्यामित्यर्थः। अथवा—तत्तदुपास्यदेवताप्राप्तिफला या उपासनाः तासु सर्वास्वपीत्यर्थः ।

ननु तासामुपासनानामेतद्विकृतित्वाभावात् तत्र कथं व्यतिहारस्य प्राप्तिर्भवेत् ;

प्रयोजनानुसारादिति ब्रूमः । देवताप्राप्तिफलानि हि सर्वाण्युपासनानि 'देवो भूत्वा देवानप्येति' इति वचनानुसारात् इहैवाभिमानिकदेवभावसंपाद्यानि । यद्यपि 'देवो भूत्वा देवानप्येति' इति वचनं 'वाग्वै ब्रह्म' इत्यादिना वागाद्युपाधिकब्रह्मविषयोपासनाविशेषान् प्रस्तुत्यैव समाम्नातम्, तथापि तत् सामान्यनिर्देशसामर्थ्यात् सर्वविषयं प्रतीयमानं न प्रकरणानुसारेण सङ्कोचमर्हति । अत एव, संवर्गविद्याप्रकरणे तदुपासनानिष्ठस्य ब्रह्मचारिणः कचिद्भिक्षार्थमागतस्य भिक्षाया अदाने वचनं श्रूयते यस्मै वा एतदन्नं तस्मा एतन्न दत्तम्' इति । प्राणार्थं ह्यन्नं पच्यते, अहं च प्राणः, अतः प्राणायैव अन्नं न दत्तमिति । इदं च वाक्यं स्वात्मनि प्राणदेवताऽभेदाभिनिवेशं सूचयति । तथा च जाबालैतरेयकयोर्व्यतिहाराम्नानस्य अभेदाभिमानप्रयोजनकत्वात्, तत्प्रयोजनस्य च देवताप्राप्तिफलासूपासनासु सर्वत्र अविशेषात्, उपासनान्तरेषु दृष्टः शास्त्रीय उपायः ततोऽन्यत्र ग्राह्यः ॥ ३७ ॥

इति व्यतिहाराधिकरणम्

## २४ सत्याद्यधिकरणम्

# सैव हि सत्यादयः ॥ ३८ ॥

'स यो हैतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृ. उ. ५।४।१) इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधाय अनन्तरमाम्नायते—'तद्यत्तत्सत्यं असौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' (बृ. उ. ५।५।२) इत्यादि।

तत्र संशयः—किं द्वे एते सत्यविद्ये किं वा एकैवेति।

द्वे इति तावत् प्राप्तम्। भेदेन हि फलसंयोगो भवति 'जयतीमाँल्लोकान्' इति पुरस्तात्, 'हन्ति पाप्मानं जहाति च' इत्युपरिष्टात्। प्रकृताकर्षणं तु उपास्यैकत्वादिति।

---

पूर्वत्र आम्नानभेदात् द्विरूपा मतिः कर्तव्येत्युक्तम्, तर्हि इहापि फलभेदात् द्विरूपोपासना भविष्यतीति प्रत्यवस्थानात् सङ्गतिः।

'स यो हैतत् महत् यक्षं-यजनीयं पूज्यं प्रथमजं वेद सत्यं ब्रह्म अपरमिति, जयतीमान् लोकान्' इति सफलां प्रधानोपासनां विधाय, सत्यमितितदीयनाम्नोऽक्षराणामप्युपासनमाम्नातं—'तदेतत् त्र्यक्षरं सत्यमिति। स इत्येकमक्षरम्, तीत्येकमक्षरम्, इकारस्सुखोच्चारणार्थः, यमित्येकमक्षरम्। प्रथमोत्तमे अक्षरे सत्यं, मध्यतोऽनृतम्' इति। तदाह—स योहैतदित्यादि। सनामाक्षरोपासनां—नामाक्षरोपासनासहिताम्। उपरिष्टात्—'तद्यत् तत् सत्यमसौ स आदित्यः' इत्यादिकायामिति यावत्।

इदं भेदेन पूर्वपक्षकथनम्, सयोहैतन्महद्यक्षमित्यादिकादुपरिष्टादाम्नातायां आदित्यचक्षुरधिकरणकविद्यायामिव ततः पूर्वं समाम्नातायां 'एष प्रजापतिःयद्धृदयं एतत् ब्रह्म एतत् सर्वं तदेतत् त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरं हरन्त्यस्मै बलिं स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै धनादिकं स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरं एति स्वर्गं लोकं य एवं वेद' इति फलभेदाम्नानाविशेषात् हृदयविद्यायामपि द्रष्टव्यम्।

ननु—हृदयविद्यायामुपास्यतयोक्तस्य प्रजापतेः 'तद्वैतदेतदेव तदास सत्यमेव स यो हैतन्महद्यक्षम्' इतिवाक्येनानुकर्षणं सत्यवाक्ये, सत्यवाक्योक्तस्यानुकर्षणं

एवं प्राप्ते ब्रूमः—एकैवेयं सत्यविद्येति। कुतः? 'तद्यत्तत्सत्यम्' इति प्रकृताकर्षणात्। ननु विद्याभेदेऽपि प्रकृताकर्षणं उपास्यैकत्वादुपपद्यत इत्युक्तम्। नैतदेवम्। यत्र तु विस्पष्टात् कारणान्तरात् विद्याभेदः प्रतीयते तत्र एतदेवं स्यात्। अत्र तु उभयथा संभवे तद्यत्तत्सत्यमिति प्रकृताकर्षणात् पूर्वविद्यासंबद्धमेव सत्यं उत्तरत्राकृष्यत इति एकविद्यात्वनिश्चयः।

यत्पुनरुक्तं फलान्तरश्रवणाद्विद्यान्तरमिति। अत्रोच्यते—तस्योपनिषत् अहः अहं इति च अङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमिति अदोषः। अपिच-अर्थवादादेव फले कल्पयितव्ये सति विद्यैकत्वे च अवयवेषु श्रूयमाणानि बहून्यपि फलानि अवयविन्यामेव विद्यायां उपसंहर्तव्यानि भवन्ति। तस्मात् सैवेयमेका सत्यविद्या तेनतेनविशेषणोपेताऽऽम्नातेत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्नेव प्रयोगे उपसंहर्तव्याः।

केचित् पुनः अस्मिन् सूत्रे, इदं वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं छान्दोग्ये च 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा. उ. १।६।६) 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा. उ. १।७।५) इत्युदाहृत्य, सैवेयमक्ष्यादित्यपुरुषविषया विद्या उभयत्रैकैवेति कृत्वा, सत्यादीन् गुणान् वाजसनेयिभ्यश्छन्दोगानामुपसंहार्यान् मन्यन्ते।

तत् न साधु लक्ष्यते। छान्दोग्ये हि ज्योतिष्टोमकर्मसंबन्धिनीयं

---

'तद्यत्तत्सत्यमसौ स आदित्यः' इत्युत्तरत्र दृश्यते। अतः स्थलत्रयेऽपि उपास्यस्यैकस्यैव प्रतीतेः कथं विद्याभेदः-इत्याशङ्क्य, तथापि फलभेदादुपासनाभेदो भविष्यति, यथा एकस्य परब्रह्मण उपास्यत्वेऽपि दहरादिविद्याभेदः—इत्यभिप्रेत्याह—प्रकृताकर्षणंत्विति।

तस्योपनिषदहरिति। यथा 'तस्योपनिषदहरित्यधिदैवतं हन्ति पाप्मानं जहाति च य एवं वेद तस्योपनिषदहमित्यध्यात्मं हन्ति पाप्मान जहाति च य एवं वेद' इति आदित्याक्षिपुरुषाङ्गोपनिषदोः स्तावकम्, एव 'हरन्त्यस्मै स्वाश्चान्ये च' इत्याद्यपि प्रकृतोपासनाङ्गभूतत्द्दयनामोपासनास्तावकं इत्यपि द्रष्टव्यम्।

छान्दोग्ये हीति। तथा च एकत्र प्राधान्येन उद्गीथ उपास्यः अन्यत्र च सत्याख्यो हिरण्यगर्भ एवेति उपास्यभेदात् विद्याभेदः सिद्धो भवतीति भावः ॥ ३८ ॥

इति सत्याद्यधिकरणम्

उद्गीथव्यपाश्रया विद्या विज्ञायते। तत्र हि आदिमध्यावसानेषु कर्मसंबन्धिचिह्नानि भवन्ति—'इयमेवर्गग्निः साम' इत्युपक्रमे, 'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः' इति मध्ये, 'य एवं विद्वान् साम गायति' इत्युपसंहारे। नैवं वाजसनेयके किंचित् कर्मसंबन्धि चिह्नमस्ति। तत्र, प्रक्रमभेदाद्विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥ ३८ ॥

२५ कामाद्यधिकरणम्

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा. उ. ८।१।१) इति प्रस्तुत्य छन्दोगा अधीयते 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इत्यादि ; तथा वाजसनेयिनः 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते सर्वस्य वशी' (बृ. उ. ४.४।२२) इत्यादि।

तत्र विद्यैकत्वं परस्परगुणयोगश्च किं वा नेति संशयः।

तत्रेदमुच्यते—कामादीति। सत्यकामादीत्यर्थः। यथा देवदत्तो दत्तः सत्यभामा भामेति। यदेतत् छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते तत् इतरत्र-वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र संबध्यते। यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपि इतरत्र-छान्दोग्ये 'एष आत्माऽपहतपाप्मा' इत्यत्र संबध्यते। कुतः ?

---

पूर्वत्र एषप्रजापतिरित्यारभ्य 'हन्ति पाप्मानं जहाति च' इत्येवमन्ते समाम्नाने एकैव विद्येति गुणोपसंहारः प्रदर्शितः। छान्दोग्यगतस्य 'एष आत्मापहतपाप्मा' इत्यादेः सगुणविषयत्वात् वाजसनेयकगतस्य 'स वा एष महानज आत्मा' इत्यादेश्च निर्गुणविषयत्वात् उभयत्र विद्याभेदे सति न गुणोपसंहार इति प्रत्यवस्थानात् संगतिः।

अत्र 'ननु विशेषोऽपि दृश्यते' इत्यादिना पूर्वपक्षाभिप्रायं वर्णयिष्यति। प्रथमतः सिद्धान्तमेव दर्शयति—तत्रेदमुच्यत इति।

आयतनादिसामान्यात् । समानं हि उभयत्रापि हृदयमायतनं समानश्च वेद्य ईश्वरः समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनं इत्येवमादि बहु सामान्यं दृश्यते ।

ननु विशेषोऽपि दृश्यते-छान्दोग्ये हृदयाकाशस्य गुणयोगः, वाजसनेयके तु आकाशाश्रयस्य ब्रह्मण इति ।

न–'दहर उत्तरेभ्यः' (ब्र. सू. १।३।१४) इत्यत्र छान्दोग्येऽपि आकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात् ।

अयं त्वत्र विद्यते विशेषः–सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छा. उ. ८।१।६) इति आत्मवत् कामानामपि वेद्यत्वश्रवणात् । वाजसनेयके तु निर्गुणमेव परं ब्रह्म उपदिश्यमानं दृश्यते, 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' 'असङ्गो ह्ययं पुरुषः' (बृ. ४।३।१४-१५) इत्यादिप्रश्नप्रतिवचनसमन्वयात् । वशित्वादि

---

आकाशाश्रयस्य ब्रह्मण इतीति । ननु–वाजसनेयके 'य एषोन्तर्हृदय आकाशः' इत्याकाशपदोदितं ब्रह्म, तच्छयानस्तु जीव एव, सुप्तिलिङ्गात् । अतः सर्वस्यवशीत्यादिना प्रतिपाद्यमानं गुणजातं योग्यतया आकाशपदोदिते ब्रह्मण्येवान्वेति । अतः कथं वैषम्याशङ्का–इति चेत्; उच्यते—तस्मिन्शेते इतिवाक्ये हि शयानो जीव एव प्रधानतया प्रतीयते । तदनन्तरगाम्नातं वशित्वादिकं च प्राधान्येन शयाने एव अन्वेतुं योग्यं न तु उपसर्जनीभूते आकाशे । न चैश्वराणां धर्माणां जीवे अयोग्यता, परमेश्वराभेदस्य प्रकृते विवक्षितत्वात्–इति भावः ।

छान्दोग्येऽप्याकाशशब्दं ब्रह्मेति । ननु–एतावता 'छान्दोग्ये भूताकाशः प्रतिपाद्यः वाजसनेयके परमात्मा' इति विशेषः परिहृतो भवति । छान्दोग्ये परमात्मा वाजसनेयके तु परमात्मनि शयानो जीवः' इति तु विशेषाशङ्का न परिहृता-इति चेत्; न–वाजसनेयके हि, आकाशशयानो जीव आकाशाभेदेनैव प्रतिपाद्यः, तस्मिञ्छेते इति अधिकरणाधेयभावेन भेदनिर्देशस्तु 'यदा सुप्तः स्वप्नं न कश्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति श्रुत्यन्तरानुसारेण औपचारिकः । तथा च आकाशशयाने प्रतिपाद्यमानं सर्ववशित्वादिकं आकाशे प्रतिपादितमेव भवति ।

एवं तर्हि छान्दोग्यवाजसनेयकयोः प्रकारान्तरेण विद्याभेद इति शङ्कते—अयंत्वत्रेति ।

तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते । तथा चोपरिष्टात् 'स एष नेति नेत्यात्मा' (बृ. उ. ४।४।२२) इत्यादिना निर्गुणमेव ब्रह्म उपसंहरति ।

गुणवतस्तु ब्रह्मण एकत्वात् विभूतिप्रदर्शनाय अयं गुणोपसंहारः सूत्रितो नोपासनायेति द्रष्टव्यम् ॥ ३९ ॥

२६ आदराधिकरणम्

## आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते—'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा' (छा. उ. ५।१९।१) इत्यादि । तत्र पञ्च प्राणाहुतयो विहिताः । तासु च परस्तात् अग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' (छ. उ. ५।२४।२) इति, 'यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणिभूतान्यग्निहोत्रमुपासते' (छा. उ. ५।२४।५) इति च ।

तत्रेदं विचार्यते—किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य उत अलोप इति ।

---

परिहरति—गुणवतस्त्विति । अयं भावः–निर्गुणायां वाजसनेयकगतायां विद्यायां न ध्यानार्थो गुणोपसंहारः, तत्र गुणानामध्येयत्वात् । स्तुत्यर्थगुणोपसंहारस्तु न विद्याभेदेऽपि विरुद्ध्यते । एवं, सगुणविद्यायां गुणानां ध्येयत्वेऽपि शास्त्रप्रामाण्यात् यावन्तो गुणाः ध्येयत्वेनावगताः तावन्त एव ध्येयाः । भिन्नविद्यागतानां तु गुणानां ध्यानविधिना अनुचिन्तनीयत्वेन असङ्ग्रहात् तेषामुपसंहारो हृदयादिस्थानप्रत्यभिज्ञामात्रसिद्धः स्तुत्यर्थं अस्मिन्नधिकरणे प्रतिपाद्यते । [1]एवं, दहरशाण्डिल्यादिसगुणविद्यास्वपि, यदि हृदयादिस्थानप्रत्यभिज्ञानात् सत्यकामत्वादीनां गुणानाञ्च केषाञ्चित् प्रत्यभिज्ञानात् समाख्यादिभेदेन सत्यपि भेदे स्तुत्यर्थं गुणोपसंहारः स्यात्, तदाऽस्तु न काचिदनुपपत्तिः । अनुचिन्तनाय गुणोपसंहारे तु विद्यैक्यमेव प्रयोजकम् ॥ ३९ ॥

इति कामाद्यधिकरणम्

---

1. एवमित्यादि एतेन-विशिष्टाद्वैतिभिरापाद्यमानदूषणं अदूषणं निरूपितम् ।

तद्यद्भक्तमिति भक्तागमनसंयोगश्रवणात् भक्तागमनस्य च भोजनार्थत्वात् भोजनलोपे लोपः प्राणाग्निहोत्रस्य—इत्येवं प्राप्ते, न लुप्येतेति तावदाह। कस्मात्? आदरात्। तथाहि वैश्वानरविद्यायामेव जाबालानां श्रुतिः—'पूर्वोऽतिथिभ्योऽश्नीयात्, यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयात् एवं तत्' इति अतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति। या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेत—इति मन्यते।

ननु भोजनार्थभक्तागमनसंयोगात् भोजनलोपे लोपः प्रापितः; न—तस्य द्रव्यविशेषविधानार्थत्वात्। प्राकृते ह्यग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वात् इहाप्यग्निहोत्रशब्दात् कौण्डपायिनामयनवत्तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यकतागुणविशेषविधानार्थं इदं वाक्यं तद्यद्भक्तमिति। अतः 'गुणलोपेऽपि न मुख्यस्य' इति, एवं प्राप्तम्—भोजनलोपेऽपि अद्भिर्वा अन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानम्-इति ॥ ४० ॥

---

यथा परमात्मनः स्तुतिरूपादरप्रयोजनार्थं, विद्याभेदेऽपि गुणानां उपसंहारात् अलोप उक्तः, एवं वैश्वानरविद्याङ्गभूताग्निहोत्रस्यापि आदरसिद्ध्यर्थं भोजनलोपेऽपि न लोपः—इति दृष्टान्तसङ्गत्या पूर्वपक्षः। विद्याविचारप्रसङ्गात् तदङ्गाग्निहोत्रविचारः पादे [1]प्रासङ्गिकः।

'एवं सर्वाणि भूतानि अग्निहोत्रमुपासते' इति सर्वोपास्यताप्रतिपादनं 'अथ य एवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति' इति प्रकृताग्निहोत्रस्य सर्वभूततृप्तिहेतुत्वप्रतिपादनात्।

सूत्रे अलोप इति प्रसज्यप्रतिषेधात्, तं व्युत्पादयितुं प्रसक्तिमाह— तद्यद्भक्तमिति। यथा हि शालिप्रयुक्तकुल्योपजीविनस्तृणादेः शालिलोपे लोपः, एवं भोजनप्रयुक्तभक्तागमनोपजीविनः प्राणाग्निहोत्रस्य कुल्यां प्रति तृणस्येव भक्तागमनं प्रति प्रयोजकत्वाभावात् भोजनलोपे लोप एव—इति प्रसक्तायां सिद्धान्तिशङ्कायां पूर्वपक्षोऽभिधीयत इति तावदाह—एवंप्राप्ते न लुप्येतेति तावदाहेति।

---

1. प्रासङ्गिक इति एतेन विशिष्टाद्वैतयुक्तं पादासङ्गतिदूषणं उद्धृतम्।

[1]ननु–पूर्वोऽतिथिभ्योऽश्नीयादितिवाक्यं वैश्वानरोपासनानिष्ठस्य प्रसक्ते भोजने तस्य अतिथिभोजनात् पूर्वकालत्वं विधत्ते, तावता तद्यद्भक्तमिति भोजनप्रयुक्तभक्तोपजीवित्वेनावगतस्य प्राणाग्निहोत्रस्य कथं भोजनलोपे लोपो न भवेत्–इति चेत् ;

उच्यते–पूर्वोऽतिथिभ्योऽश्नीयादिति वाक्यं न स्वामिभोजनस्य अतिथिभोजनपूर्वकालतां विधत्ते, तथासति अतिथिभोजनोत्तरकालं स्वामिभोजनविधायकं शास्त्रं बाधितं स्यात् । अतः प्राणाग्निहोत्रस्यैवापकर्षकमेतद्वाक्यम् । प्राणाग्निहोत्रेऽपि 'अश्नीयात्' इति नानुपपन्नम् । 'आस्यमाहवनीयः' इति वाक्येन प्रकृताग्निहोत्रस्यास्याधारत्वविधानेन अशनरूपत्वावगमात् । 'यथा ह वै स्वयमहुत्वा अग्निहोत्रं परस्य जुहुयात्' इतिवाक्यशेषानुसारादपि अश्नीयादिति होमपरमेवावगम्यते–यथा हि स्वयं नित्याग्निहोत्रमकृत्वा परकीयं क्रियते, एवं अतिथीनां प्राणाग्निहोत्रात्पूर्वं अन्नदानमिति । तथा च, दृष्टान्ते नित्याग्निहोत्रस्य उपादानात् दार्ष्टान्तिकेऽपि अश्नीयादिति अग्निहोत्रपरमेवावगम्यते । तथा च अयमर्थस्सिध्यति–तृप्त्यर्थं यजमानस्य भोजनं अतिथिभोजनोत्तरमेव वचनान्तरानुसारेण कर्तव्यम् । तस्य अतिथिभोजनपूर्वकालत्वाविधानात् । वैश्वानरविद्याङ्गभूतं प्राणायस्वाहेत्यादिमन्त्रपञ्चकयुक्तं पञ्चाहुतिरूपं प्राणाग्निहोत्रं अतिथिभोजनात्पूर्वमेव कर्तव्यम्-इति । तथा च, तस्मिन् काले यजमानभोजनाप्रसक्तेः न प्राणाग्निहोत्रस्य भोजनप्रयुक्तभक्तोपजीविता सम्भवति, भोजनप्रयुक्तभक्तागमनस्य तदानीमसम्भवात् । अतः स्वयमेवेदं द्रव्यप्रयोजकम् । तथा चेह अग्निहोत्रमितिनाम्ना अग्निहोत्रसादृश्यबोधकेन तदीयानां पयःप्रभृतीनां द्रव्याणां प्राप्तौ, तदपवादेन तद्यद्भक्तमिति भक्तद्रव्यविधायकं एतद्वाक्यम् ।

नन्वेवंसति भोजनलोपेऽपि प्राणाग्निहोत्रार्थमेव भक्तस्य सम्पादनीयत्वात् कथमुच्यते भोजनलोपेऽप्यद्भिरन्येनवेत्यादि· इति चेत् ;

भोजनलोपे इत्यस्य दैवगत्यादिना भक्तालाभपरत्वात् । तथा च, मुख्यद्रव्यालाभेऽपि यथा प्रतिनिधिना अवश्यप्राप्तं दर्शादिकमनुष्ठीयते, एवं उपासकेन प्राणाग्निहोत्रस्य नित्यं कर्तव्यत्वात् मुख्यद्रव्यालाभेऽपि अबादिकं प्रतिनिधाय कर्तव्यमिति तदाशयः ।

'गुणलोपेऽपि न मुख्यस्य' इति जैमिनीयो न्यायः । तस्यायमर्थः–'अग्निहोत्रहवण्या हवींषि निर्वपेत्' इति श्रूयते । अग्निहोत्रहवणी च सैवोच्यते यया

---

1. नन्वित्यादि एतच्छङ्कासमाधानेन "अद्वैत्यधिकरणरचनायां पूर्वपक्षहेत्वभावात् अनारम्भणीयमिदमधिकरणम्" इति विशिष्टाद्वैत्युक्तं दूषणं परास्तं वेदितव्यम् ।

अत उत्तरं पठति—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजने अतः—तस्मादेव भोजनद्रव्यात् प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यम् । कस्मात् ? तद्वचनात् । तथाहि—'तद्यद्भक्तं

---

अग्निहोत्रं हुतम्, न तु यथा होष्यते । भाविनः पदार्थस्य सन्दिग्धतया भाविहोमसम्बन्धे निश्चयासम्भवेन तत्र शब्दात् स्वरसतो बोधानुदयात् । पवमानेष्टयश्च आधानाङ्गतया विहिताः । तत्र निर्वापश्च दर्शपूर्णमासेष्टितः प्राप्तः । स कर्तव्यो वा न वेति सन्देहः । तत्र पूर्वः पक्षः—तस्यां दशायां अग्निहोत्रस्य अप्रवृत्तत्वेन अग्निहोत्रहवण्या असम्भवात् गुणलोपे च विगुणनिर्वापस्योपकारजनकत्वासम्भवात् न कर्तव्य इति । सिद्धान्तस्तु—प्रकृतिप्राप्तेन निर्वापजन्योपकारेण स्वसिद्धयर्थं निर्वापस्यापेक्षितत्वात्, पवमानेष्टिकाले च अग्निहोत्रहवण्या असम्भवं पर्यालोच्य सर्वथा उपकारलोपो मा भूदिति अग्निहोत्रहवणीविनिर्मुक्त एव निर्वापः पवमानेष्टयुपकारक इति शास्त्रार्थो निर्धार्यते । तस्मात् गुणस्य अग्निहोत्रहवण्या लोपेऽपि यथा मुख्यस्य निर्वापस्य न लोपः, एवं भक्तलोपेऽपि न मुख्यस्याग्निहोत्रस्य लोप इति ॥ ४० ॥

प्राणाग्निहोत्रे 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति वाक्यं द्रव्यविधायकम् । अत्र च तद्धोमीयमिति तत्पदं पूर्ववाक्यार्थावगमसापेक्षम् । पूर्ववाक्ये च तद्यद्भक्तमिति प्रसिद्धभक्तागमनप्रतिपादनात् तस्य च भोजनार्थतयैव प्रसिद्धत्वात् भोजनार्थागतं भक्तं होमीयं इत्यर्थः सिद्धयति । ततश्च यथा-शेषात् स्विष्टकृते समवद्यति' इत्यत्र 'कस्य शेषात्' इत्यपेक्षायाम्, अग्न्यर्थसम्पादितपुरोडाशशेषात् इत्यर्थलाभात्, अग्न्यर्थपुरोडाशशेषस्य च अग्निना प्रयुक्ततया, अन्यप्रयुक्तद्रव्योपजीविनःस्विष्टकृतः स्वयं पुरोडाशाप्रयोजकतया, पुरोडाशशेषलोपे स्विष्टकृदपि लुप्यते, एवं भोजनप्रयुक्तद्रव्योपजीविनः प्राणाग्निहोत्रस्य स्वय प्रयोजकत्वाभावात् भोजनलोपे तत्प्रयोजककभक्तद्रव्याभावेन लोप एव । न च पूर्वोऽतिथिभ्योऽश्नीयादिति भोजनकालादपकृष्टस्य प्राणाग्निहोत्रस्य कथं भोजनलोपे लोपः । भोजनार्थद्रव्योपजीविनः प्राणाग्निहोत्रस्य भोजनकालादपकर्षणासम्भवात्, अश्नीयादित्यस्य भोजन एव स्वरसत्वात्, वचनानुसारेण वैश्वानरोपासकस्य अतिथिभ्यः पूर्वं भोजने दोषाभावात्, भोजनस्यैवायमपकर्षः । अमुमर्थं दर्शयति—उपस्थिते भोजने इत्यादिना ।

प्रथममागच्छेत् तद्धोमीयम्' इति सिद्धवत् भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः ।

न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति । कुण्डपायिनामयने हि, मासमग्निहोत्रंजुहोतीति विध्युद्देशगतोऽग्निहोत्रशब्दः तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः । इह पुनः अर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति ।

तद्धर्मप्राप्तौ चाभ्युगम्यमानायां अग्न्युद्धरणादयोऽपि प्राप्येरन् । न चास्ति संभवः । अग्न्युद्धरणं तावत् होमाधिकरणभावाय । न चायं अग्नौ होमः, भोजनार्थताव्याघातप्रसङ्गात् । भोजनार्थोपनीतद्रव्यसंबन्धाच्च आस्य एवैष होमः । तथाच जाबालश्रुतिः पूर्वोऽतिथिभ्योऽश्नीयादिति आस्याधारामेव इमां होमनिर्वृत्तिं दर्शयति । अत एव च इहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा. उ, ५।१८।२) इति । वेदिश्रुतिश्चात्र

---

यच्च पूर्वपक्षिणोक्तं अग्निहोत्रपदं नैयमिकाग्निहोत्रधर्मप्रापकमिति, तन्निराकरोति—न चेति । यत्र हि विधिवाक्ये कर्मान्तरवाचकशब्दः कर्मान्तरे श्रूयते तत्र विधेयसादृश्यं बोधयन् स्ववाच्यगतामितिकर्तव्यतां अन्यत्र प्रापयेत् । अन्यथा सादृश्यकर्तव्यताबोधपरविधिविरोधात् । यथाकथञ्चित्सादृश्यस्य विधिं विनैव सिद्धत्वात् । अर्थवादगतस्तु अन्यत्रान्यशब्दो न कर्तव्यसादृश्यं बोधयति, अपि तु यथाकथञ्चित्सिद्धं सादृश्यं आदाय निर्वृतो भवति । यथा—'सोमो वै वाजिनम्' इति सोमे वाजिनपदं न वाजिनेतिकर्तव्यतां प्रापयति, अपि तु सिद्धं द्रव्यत्वादिसादृश्यं अनुवदति । यथा वा 'एष वै दर्शपूर्णमासयोरवभृथः' इति अपां व्युत्सेके अवभृथशब्दो जलसम्बन्धित्वमात्रमनुवदति, एवमत्रापि प्राणाहुतिषु अर्थवादगतोऽग्निहोत्रशब्दः सिद्धतया साम्पादिकाहवनीयादिसम्बन्धमात्रेण अग्निहोत्रसादृश्यानुवादकः ।

अग्निहोत्रेतिकर्तव्यतातिदेशोपगमे बहूनां बाधश्च कर्तव्यस्स्यादित्याह—तद्धर्मप्राप्तौ चेति । तथा च बहुबाधकल्पनाद्वरमग्निहोत्रपदस्यानुवादकतामात्रकल्पनं इति भावः । अग्निहोत्रधर्मातिदेशे च आहवनीयादीनां गौणानां सम्पादनं व्यर्थं, मुख्यस्यैव प्राप्तिसम्भवात्—इत्यभिप्रेत्याह—अत एव चेति । इदं च अग्निहोत्र-

स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात् । तदङ्गानां च इह संपिपादयिषितत्वात् । भोजनेनैव च कृतकालेन संयोगात् नाग्निहोत्र-कालावरोधसंभवः । एवं अन्येऽप्युपस्थानादयो धर्माः केचित् कथंचिद्वि-रुध्यन्ते ।

तस्मात् भोजनपक्षे एव एते मन्त्रद्रव्यदेवतासंयोगात् पञ्च होमा निर्वर्तयितव्याः । यच्चादरदर्शनवचनं तत् भोजनपक्षे प्राथम्यविधानार्थम् । न ह्यस्ति वचनस्यातिभारः । न त्वनेन अस्य नित्यता शक्यते दर्शयितुम् । तस्मात् भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥ ४१ ॥

२७ तन्निर्धारणानियमाधिकरणम्

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि 'ओमित्येतदक्षरमुद्गीथमुपा-सीत' (छा. उ. १।१।१) इत्येवमादीनि । किं तानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवत् उतानित्यानि गोदोहनादिवत्-इति विचारयामः ।

---

धर्माणामतिदेशस्य निराकरणं 'भोजनार्थभक्तरूपद्रव्याभावेऽपि दध्यादिरूपाग्नि-होत्रद्रव्याण्येव अत्र भविष्यन्ति, भक्तद्रव्यविधानस्य दध्याद्यपवादार्थतया अपवादा-प्रवृत्तावुत्सर्गप्रवृत्त्युपपत्तेः' इतिशङ्कानिराकरणार्थम् ॥ ४१ ॥

इति (अलोपाधिकरणम्) [आदराधिकरणम्]

पूर्वस्मिन्नधिकरणे अन्यप्रयुक्तद्रव्योपजीविनः प्राणाग्निहोत्रस्य उपासनायाम-नियतत्वमुक्तम् । तदस्तु नाम । उपासनानामुद्गीथालम्बनानां अन्यप्रयुक्तद्रव्यो-पजीवित्वाभावेन, कर्माङ्गत्वे सति तत्र नैयत्यमेव-इति प्रत्यवस्थानात् सङ्गतिः ।

ननु–'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यधिकृत्य विहितानि रसतम-त्वादिगुणकोद्गीथोपासनानि न कर्माङ्गम्, तेषां किञ्चित्कर्मारभ्याधीतत्वाभावेन प्रकरणासम्भवात् । नापि श्रुत्यादिकं कर्माङ्गताबोधकं तेषूपलभ्यते ।

न च–यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यस्य अनारभ्याधीतत्वेऽपि, विहितस्य पर्णमयीत्वस्य फलापेक्षायां, अव्यभिचरित-

किं तावत् प्राप्तम् ? नित्यानीति । कुतः ? प्रयोगवचनपरिग्रहात् । अनारभ्याधीतान्यपि ह्येतानि उद्गीथादिद्वारेण क्रतुसंबन्धात् क्रतुप्रयोगवचनेनैव अङ्गान्तरवत् संस्पृश्यन्ते । यत्त्वेषां स्ववाक्येषु फलश्रवणं 'आपयिता ह वै कामानां भवति' (छा. उ. १।१।७) इत्यादि, तत् वर्तमानापदेशरूपत्वादर्थवादमात्रमेव अपापश्लोकश्रवणादिवत् न फलप्रधानम् । तस्मात् यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनां अप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् प्रकरणपठितवत् नित्यता एवमुद्गीथाद्युपासनानामपि-इति ।

---

क्रतुसम्बन्धयुक्तजुहूद्वारा क्रतोः परामर्शात् 'क्रत्वङ्गभूतां जुहूं पर्णमयीं कुर्यात्' इति वचनव्यक्त्याश्रयणेन वाक्येनैव क्रतुसम्बन्धो बोध्यते, तद्वदत्रापि, अव्यभिचरितक्रतुसम्बन्धोद्गीथादिद्वारा क्रतोः बुद्धिस्थतया 'क्रत्वङ्गभूतानुद्गीथादीनुपासीत' इति वचनव्यक्त्या कर्माङ्गावबद्धानामुपासनानामनारभ्याधीतानामपि वाक्येनैव क्रतुसम्बन्धो भवेत्-इति वाच्यम् । फलापेक्षायां हि सत्यां उद्गीथादिद्वारोपस्थितक्रत्वर्थता परिकल्प्येत, नेह सास्ति, आपयिताहवैकामानांभवतीत्यादिवाक्यैरेव तस्य फलवत्त्वासिद्धेः ।

न च वर्तमानापदेशतया अपापश्लोकश्रवणवत् तस्यार्थवादतेति वाच्यम् । यस्यपर्णमयीजुहूर्भवतीत्यादौ हि न वर्तमानतापदेशमात्रेण स्तुतिपरतोपेता । तथासति 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यत्रापि फलपरता न स्यात् । अपि तु, पर्णतादीनां सिद्धतया स्वतःफलजनकत्वासम्भवेन आश्रयभूतव्यापारापेक्षणात्, तस्य च गोदोहनादाविव सन्निधानतोऽलाभात्, वाक्येनैवाश्रयसम्बन्धबोधने फलसम्बन्धबोधने च वाक्यभेदः स्यादिति, जुहूद्वारोपस्थितक्रत्वर्थतामुपेत्य फलाकाङ्क्षायाः शान्तत्वात् अपापश्लोकश्रवणादीनां स्तुतिमात्रप्रयोजनकत्वमुपगतम् । क्रियारूपाणां तूद्गीथाद्युपासनानां स्वत एव फलजननसमर्थतया वाक्यस्य आश्रयसम्बन्धबोधनेऽपि व्यापाराप्रसक्तेः न निरर्थकप्रायस्तुतिपरता उपगन्तुं न्याय्या, अपि तु प्रतितिष्ठन्तीत्यत्रेव फलपरतैवोपेया ।

अतः कथं, अनारभ्याधीतानामङ्गावबद्धोपासनानां क्रत्वङ्गतया क्रतुप्रयोगवचनपरिग्रहात् पर्णतादिवत् क्रतौ नित्यत्वम्-इति चेत् ;

एवं प्राप्ते ब्रूमः—तन्निर्धारणानियम इति । यान्येतान्युद्गीथादि-कर्मगुणयाथात्म्यनिर्धारणानि-रसतमः आप्तिः समृद्धिः मुख्यप्राणः आदित्यः इत्येवमादीनि, नैतानि नित्यवत् कर्मसु नियम्येरन् । कुतः? तद्दृष्टेः । तथा ह्यनियतत्वं एवंजातीयकानां दर्शयति श्रुतिः, 'तेनोभौ कुरुतो यश्चै-

---

उच्यते—यदि 'फलपरत्वे सम्भवति न स्तुतिपरत्वम्' इति न्याय आश्रीयेत, तथासति 'यत् प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय' इत्यादावपि वर्मकरणवादस्य फलपरतैव स्यात् । प्रयाजादीनां क्रियारूपाणां आश्रयानपेक्षणेन वाक्यस्य फलसम्बन्धबोधने आश्रयसम्बन्धबोधने च व्यापारा-प्रसक्तेः ।

यदि तु—फलपरत्वकल्पने भूयसी क्लिष्टकल्पना—श्रुतपदेषु सन्नन्तविपरिणामः यत्तत्पदाध्याहारः—येन यज्ञस्य वर्म चिकीर्ष्यते तेन प्रयाजानूयाजा इज्यन्त इति । सा तु प्रकरणलब्धक्रतूपकारेणैव फलाकाङ्क्षायां शान्तायां श्रुतपदानामक्लेशेनैव स्तुतिपरत्वकल्पनसम्भवे नोचिता । 'प्रतितिष्ठन्ति ह वै' इत्यादौ कथमपि क्रतूप-स्थितेरभावेन क्रतूपकारमादाय फलाकाङ्क्षाया अनिवृत्ततया अगत्या सन्नन्तविपरि-णामादिना फलपरताऽऽश्रिता—इत्युच्येत ;

तथासति 'आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथ-मुपास्ते' इत्यादावपि उद्गीथादिद्वारोपस्थितक्रतूपकारद्वारेण फलाकाङ्क्षाचारितार्थ्ये सम्भवति न क्लेशेन फलपरतोपेयेति, वर्तमानापदेशानां स्तुतिपरतैवाश्रयणीयेति, पर्णतादिवत् उपासनानां नित्यत्वम्—इति पूर्वपक्षाभिप्रायः ।

तथाह्यनियतत्वमेवञ्जातीयकानां दर्शयति श्रुतिरिति । ननु—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च, यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वाक्यं न अङ्गावबद्धोपास-नानां क्रत्वङ्गताविरोधि । पर्णतादिवत् नित्यतया प्रयोगे प्रसक्ते, यथा अतिरात्रेषोड-शिनंगृह्णाति नातिरात्रेषोडशिनंगृह्णाति इतिवाक्यात् षोडशिग्रहविकल्पः एवं तेनोभौ कुरुतोयश्चैतदेवंवेदयश्चनवेदेत्यंशः क्रत्वङ्गभूतानामेवोपासनानां विकल्पविधायक इति ततो विकल्पः सिद्ध्यति । ततश्च क्रत्वङ्गोपासनानुष्ठानपक्षे अङ्गाधिक्यात् [1]फलाधिक्य-स्यापेक्षितत्वात् 'किं तत् फलं अङ्गाधिक्यकृतम्' इत्यपेक्षायां नानातुविद्याचाविद्या-

---

1. फलाधिक्यस्यापेक्षितत्वादिति षोडशिग्रहस्थले तथाऽङ्गीकारात् इति भावः ।

तदेवं वेद यश्च न वेद' (छा. उ. १।१।१०) इति अविदुषोऽपि क्रियाभ्यनुज्ञानात्, प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात् 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि' 'तां चेदविद्वानुद्गास्यसि' 'तां चेदविद्वान् प्रतिहरिष्यसि' (छा. उ. १।१०।९-११) इति च।

अपि च एवञ्जातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते कर्मफलसिद्ध्यप्रतिबन्धः-तत्समृद्धिरतिशयविशेषः कश्चित् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद, नाना तु विद्या चाविद्या च, यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. उ. १।१।१०) इति। तत्र, नानात्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणात् वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगात् विद्याविहीनमपि कर्म वीर्यवदिति गम्यते। तच्च अनित्यत्वे विद्याया उपपद्यते। नित्यत्वे तु, कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत। सर्वाङ्गोपसंहारे हि वीर्यवत् कर्मेति स्थितिः। तथा लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छा. उ. २।२।३) इत्येवमादीनि।

न चेदं फलश्रवणं अर्थवादमात्रं युक्तं प्रतिपत्तुम्। तथा हि गुणवाद आपद्येत। फलोपदेशे तु मुख्यवादोपपत्तिः। प्रयाजादिषु तु इतिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात् तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम्। तथा

---

चेति पक्षद्वयस्य वैलक्षण्योपक्षेपपूर्वकं क्रत्वङ्गोपासनानुष्ठानपक्षे फलाधिक्यप्रदर्शनाय अयमंशः यदेवविद्ययेत्यादि। वीर्यवत्तरं—अधिकफलयुक्तं कर्म भवति उपासनापक्षे इति तदर्थः। एवंसत्येव यदेवविद्ययाकरोतीति शेषताबोधिका तृतीयाऽपि सङ्गच्छते। इदं रसतमत्वापयितृत्वसमृद्धिगुणकोपासनानामेव विकल्पविधायकम्। तेषामेव प्रस्तुतत्वेन अस्मिन् वाक्ये एवंवेदेतिपरामर्शात्। प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनदर्शनं अङ्गत्वेऽपि विकल्पसूचकमेव भविष्यति। अतः कथं उपासनानामुद्गीथाद्यालम्बनानां स्वातन्त्र्यसिद्धिः-इत्यत आह—तथा लोकसामादिष्विति। 'लोकेषु पञ्चविधं सामोपासीत' इत्यादिवाक्यविहितेषु। इदं उद्गीथालम्बनाप्त्यादिदृष्टीनामप्युपलक्षणं। तत्रापि 'आपयिता ह वै कामानां भवति'

अनारभ्याधीतेष्वपि पर्णमयीत्वादिषु । न हि पर्णमयीत्वादीनामक्रियात्मकानां आश्रयमन्तरेण फलसंबन्धोऽवकल्पते । गोदोहनादीनां हि प्रकृताप्रणयनाद्याश्रयलाभात् उपपन्नः फलविधिः । तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभात् उपपन्नः फलविधिः । न तु पर्णमयीत्वादिषु एवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति । वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात् । उपासनानां तु क्रियात्मकत्वाद्विशिष्टविधानोपपत्तेः उद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते ।

तस्मात् यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि एवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम् । अत एव च कल्पसूत्रकारा न एवञ्जातीयकान्युपासनानि क्रतुषु कल्पयाञ्चक्रुः ॥ ४२ ॥

---

इत्यादिफलश्रवणात् । न चेदं 'वर्म वा एतद्यज्ञस्य क्रियते' इत्यादिवत् प्रशंसामात्रपरम् । तथासति लक्षणाद्वयं उपासनावाक्येषु प्रसज्ज्येत—फलपदानां प्राशस्त्यलक्षणा उद्गीथादिपदानां तु तदर्थोपस्थितक्रतौ । अन्यथा समभिव्याहाराभावेन वाक्यस्य विनियोजकप्रमाणस्य अनुन्मेषात् । प्रयाजादिवाक्ये तु प्रकरणादेव क्रतुसम्बन्धलाभेन क्रतूपस्थापनाय पृथग्लक्षणानपेक्षतया तत्र स्तावकतोपगता । अतोऽत्र लक्षणाद्वयपरिहाराय सन्नन्तविपरिणामादिना फलपरतामुपेत्य स्वातन्त्र्यमेवोपासनानां उपगन्तुं न्याय्यम् । पर्णतादौ तु फलपरत्वेऽपि आश्रयसिद्धये अवश्यं जुह्वादिपदैः क्रतुरुपस्थापनीयः फलाश्रयसम्बन्धपरत्वेन वाक्यभेदश्चेति महत् गौरवम् । अतस्तत्र स्तावकतैव 'न स पापं श्लोकं शृणोति' इत्यादेः । 'तथा हि गुणवाद आपद्येत फलोपदेशे तु मुख्यवादोपपत्तिः' इति भाष्यमपि उक्तस्यैव वैषम्यस्य उपलक्षकम् । अन्यथा, फलपरत्वेऽपि सन्नर्थान्तर्भावादेरावश्यकतया मुख्यवादत्वासम्भवात् । अपि चैवंसति 'उद्गीथमुपास्ते' इत्यादौ उद्गीथपदमपि दृष्टार्थं सम्पद्यते, यागादौ सोमादेरिव उपासनासु प्रत्ययरूपासु विषयस्यापेक्षितत्वेन तत्समर्पकत्वात् । कर्माङ्गोपासनाविधिपक्षे हि व्रीहीन्प्रोक्षतीत्यादाविव अदृष्टरूपसंस्काराधारपरमेव स्यात्, उपासनाभिः उद्गीथादिषु उत्पत्त्याप्तिविकाराणामसम्भवात् ।

तत् सिद्धं कर्माङ्गावबद्धानामुपासनानां स्वातन्त्र्येण फलार्थत्वात् कर्मस्वनियतत्वम् । ततश्च 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यादिकमपि न्यायप्राप्तविकल्पानुवादकतया कर्माङ्गावबद्धसर्वोपासनापरमेव, न त्वाप्त्यादिदृष्टिमात्र-

२८ प्रदानाधिकरणम्

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसनेयके—'वदिष्याम्येवाहमिति वाग्दध्रे' (बृ. उ. १।५।२१) इत्यत्र अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः अधिदैवतं अग्न्यादीनां

---

परम्। अनुवादस्य पुरोवादानुसारित्वात्। एवं विकल्पिततयानूदितानामुपासनानां प्रातिस्विकतत्तद्वाक्यावगतफलातिरिक्तसाधारणफलसमर्पकं यदेवविद्ययकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीति। वीर्यशब्दो हि लोके फलोपयोगिबलवाचकतया प्रसिद्धः, न तु फलवाचक एव। प्रकृते च तरप्प्रत्ययोपात्तः तस्य बलस्य अतिशयः विरोधिना कर्मान्तरेण फलप्रतिबन्धे प्रसक्ते तदभिभावकत्वमेव, अन्यस्यातिशयस्य प्रकृतानुपयोगित्वात्। तदिदमुक्तं पृथग्ध्यप्रतिबन्धःफलमिति। एवंसति प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनदर्शनं स्वतः फलार्थतया प्राप्तस्य विकल्पस्यैव द्योतकं, न त्वङ्गस्यैव सतो विकल्पसूचकम्। विद्ययेतितृतीयापि कर्मफलप्रतिबन्धाभिभावकतया कर्मोपकारकतामात्राभिप्राया। यदेवविद्ययेतिवाक्ये श्रद्धापदं भक्तिपरम्, उपनिषत्पदं तत्तदुपासनागतरहस्यनामपरम् ॥ ४२ ॥

इति तन्निर्धारणानियमाधिकरणम्

वाजसनेयके 'अथातो व्रतमीमांसा' इत्युपक्रमः। व्रतं—तत्तदसाधारणो व्यापारः, तस्य मीमांसा—श्रमरूपेण मृत्युना कस्य व्यापारो नष्टः कस्य न—इति। तदनन्तरं च प्रजापतिसृष्टानीन्द्रियाणि अनुक्रम्य 'वदिष्याम्येवाहमिति वाक् दध्रे द्रक्ष्याम्यहमिति चक्षुः' इत्यादिना, तैस्तैरिन्द्रियैः 'अश्रान्ततयैव स्वस्वव्यापारं करिष्यामः' इति प्रतिज्ञायां धृतायां, तेषां व्यापारः श्रमरूपेण मृत्युना ग्रस्तः प्राणस्य तु व्यापारो न मृत्युना ग्रस्तः—इति प्रतिपाद्य, इत्यध्यात्ममिति अवान्तरोपसंहारं कृत्वा, अथाधिदैवतमिति मध्ये उपक्रम्य, वागाद्यभिमानिनीभिरग्न्यादिदेवताभिः 'अश्रमेणैव स्वस्वव्यापारान् करिष्यामः' इति प्रतिज्ञायां धृतायां, वागादिवदेव तद्देवतानां व्यापारा उपरताः प्राणदेवताया वायोस्तु सैषानस्तमितादेवतायद्वायुरिति अनुपरतत्वं प्रतिपाद्य, 'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति' इति तस्मिन्नेव वायौ श्लोकमुपन्यस्य, 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति तद्व्याख्यानव्याजेन वायुप्राणयोरभेदोऽपि दर्शितः। तदनन्तरं चोपसंहृतं 'तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च' इति।

वायुः। तथा छान्दोग्ये—'वायुर्वाव संवर्गः' (छा. उ. ४।३।१) इत्यत्र अधिदैवतं अग्न्यादीनां वायुः संवर्गोऽवधारितः 'प्राणो वाव संवर्गः' (छा. उ. ४।३।२) इत्यत्र अध्यात्मं वागादीनां प्राणः।

तत्र संशयः—किं पृथगेव इमौ वायुप्राणौ उपगन्तव्यौ स्यातां अपृथग्वेति।

---

अत्र उपक्रमोपसंहारयोर्व्रतविषयतयैकरूपत्वात् एकोपासनाविधिपरमेतद्वाक्यम्। तत्फलं च अध्यात्मप्रघट्टके 'तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद, य उ हैवंविदा स्पर्धते अनुशुष्यति अनुशुष्य हैवान्ततो म्रियते' इति यत् कुलश्रेष्ठत्वं शत्रुमरणञ्च आम्नातं, यच्चान्ते 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति चाम्नातं, तत् सर्वमपि रात्रिसत्रन्यायेन विवक्षितम्।

इतीमां प्राणश्रैष्ठ्यविद्यां सङ्गृह्णाति—वाजसनेयक इत्यादिना।

छान्दोग्ये तु—'वायुर्वाव संवर्गः' इति वायोः प्रलयाश्रयत्वमुपक्षिप्य, अग्निसूर्यचन्द्राम्भांसि तत्र लीयमानानि प्रतिपाद्य, इत्यधिदैवतमिति अवान्तरे उपसंहृत्य, 'अथाध्यात्मं प्राणो वाव संवर्गः' इति प्राणं लयाधिकरणमुपक्षिप्य, स्वापकाले वाक्चक्षुश्श्रोत्रमनांसि प्राणे लीयन्त इति प्रतिपाद्य, 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति चोक्त्वा, 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' इति वायुप्राणयोरेकत्वं प्रदर्शितम्। वागादीनग्न्यादींश्च प्रत्येकं चतुर उक्तान् य एको वायुप्राणपदप्रतिपाद्यो जगार-इति हि तदर्थः। तदनन्तरं च 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम्' इति अग्न्यादीनां चतुर्णां वागादीनां चतुर्णां वायुप्राणसहितानां दशत्वं निरूप्य, 'सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवंवेद' इत्युपसंहृतम्।

अत्रापि एकमेव अधिदैवताध्यात्मविषयमुपासनं विवक्षितम्। यएवंवेदेति एकस्यैव विधेः अन्ते श्रवणात्।

तामिमां संवर्गविद्यां संगृह्णाति—तथा छान्दोग्य इत्यादिना।

पृथगेवेमाविति। अयमर्थः—यद्यपि प्राणश्रैष्ठ्यविद्या एका, तथापि, 'इन्द्रियेषु प्राणश्श्रेष्ठः अग्न्यादिषु वायुश्श्रेष्ठः' इत्यादिरूपेण वायुप्राणौ व्यवस्थिततया ध्येयौ, उत 'इन्द्रियाणामग्न्यादीनां च मध्ये वायुप्राणपदप्रतिपाद्या देवता

अपृथगिति तावत् प्राप्तं तत्त्वाभेदात्। न ह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम्। दर्शयति च श्रुतिः अध्यात्ममधिदैवतं च तत्त्वाभेदं 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. उ. २।४) इत्यारभ्य। तथा 'त एते सर्व एव समाः सर्वेऽनन्ताः' (बृ. उ. १।५।१३) इति आध्यात्मिकानां प्राणानां आधिदैविकीं विभूतिं आत्मभूतां दर्शयति। तथाऽन्यत्रापि तत्र तत्र अध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' (ऐ. आ. ३।३।२) इति स्पष्टमेव वायुं प्राणं चैकं करोति। तथा उदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' (बृ. उ. १।५।२३) इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति प्राणे-

---

श्रेष्ठा' इत्यादिरूपेण युगपदेवानुचिन्तनम्? तथा, संवर्गविद्यापि यद्यप्येका तथापि, 'अग्न्यादीनां वायुस्संवर्गः वागादीनां प्राणस्संवर्गः' इत्यादिव्यवस्थिततयाऽनुचिन्तनम्, उत 'वागादीनामग्न्यादीनां च सर्वेषां वायुप्राणपदप्रतिपाद्या देवता संवर्गः' इत्यादिरूपेण युगपदेवानुचिन्तनम्? इति।

पूर्वत्र कर्माङ्गावबद्धानामुपासनानां कर्मणां च नित्यानित्यरूपेण प्रयोगभेद उक्तः, इह तु वायुप्राणप्रतिपाद्याया देवताया एकत्वात् एक एव प्रयोगः-इति प्रत्यवस्थानात् सङ्गतिः।

ननु—वायुप्राणयोः तत्त्वाभेदेऽपि 'न वायुक्रिये पृथगुपदेशात्' इत्यधिकरणे अवान्तरवैलक्षण्यमुक्तम्, अतोऽत्र अध्यात्माधिदैवतविभागेन व्यवस्थिततया वायुप्राणयोः संवर्गत्वस्य श्रैष्ठ्यस्य च प्रतिपादनात् पृथगुपगमनमेव स्यात्-इत्याशङ्क्याह--**दर्शयति च श्रुतिरित्यादि**। अयं भावः---यद्यपि वायुप्राणयोरवान्तरभेदोऽस्ति, तथापि, नेह वायुप्राणपदार्थः प्राणनादिवृत्तिको बाह्यश्च वायुः, अपि तु तदभिमानिनी हिरण्यगर्भरूपा देवतैव। वाजसनेयके 'सैषानस्तमिता देवता यद्वायुः' इति देवतात्वस्य विवक्षितत्वात्। प्राणपदेनापि 'प्राणाद्वा एष उदेति' इति वाय्वभेदावगमेन देवताया एव विवक्षितत्वात्। छान्दोग्येऽपि 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इत्युपक्रमानुसारेण देवताविवक्षावगमात्। तथा च, छान्दोग्यवाजसनेयकयोः संवर्गविद्यायां श्रैष्ठ्यविद्यायां च वायुप्राणपदाभ्यां तदभिमानिनी देवतैव उपास्यतया विवक्षिता, सा चैकैवेति। आध्यात्मिकाधिदैवतोपाधिभेदेऽपि देवतैकेत्यत्र प्रमाणोपन्यासः **अग्निर्वाग्भूत्वेत्यादि** (ना)।

नैवोपसंहरन् एकत्वं दर्शयति। 'तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च' (बृ. उ. १।५।२३) इति च प्राणव्रतेनैकेनोपसंहरन् एतदेव द्रढयति। तथा छान्दोग्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' (छा. उ. ४।३।६) इति एकमेव संवर्गं गमयति, न ब्रवीति 'एक एकेषां चतुर्णां संवर्गः अपरोऽपरेषाम्' इति। तस्मात् अपृथक्त्वमुपगमनस्येति।

एवं प्राप्ते ब्रूमः—पृथगेव वायुप्राणावुपगन्तव्याविति। कस्मात्? पृथगुपदेशात्। आध्यानार्थो ह्ययं अध्यात्माधिदैवविभागोपदेशः। सः असत्याध्यानपृथक्त्वे अनर्थक एव स्यात्। ननूक्तं-न पृथगनुचिन्तनं तत्त्वाभेदादिति। नैष दोषः। तत्त्वाभेदेऽप्यवस्थाभेदात् उपदेशभेदवशेनानु-

---

'तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः, अथैतस्य मनसो द्यौश्शरीरं ज्योतीरूपमसावादित्यः, अथैतस्य प्राणस्य आपःशरीरं ज्योतीरूपमसौ चन्द्रः' इति वाङ्मनःप्राणगोलकानां पृथिवीद्यद्भिः तद्गतेन्द्रियांशानाञ्चाग्निसूर्यचन्द्रैः उपासनार्थं अभेदं निरूप्य 'त एते सर्व एव समाः' इत्याम्नातम्। न ह्यत्र वागादीनां स्वरूपतः साम्यमुपपद्यते, अपि तु वागाद्यधिष्ठातृदेवतांशमादाय। अग्नौ वाचि पृथिव्याञ्च एकैव देवता, 'तत् यावत्येव वाक् तावती पृथिवी तावानयमग्निः' इत्याम्नानात्। एवं मनःप्राणयोरपि द्रष्टव्यम्। 'यतश्चोदेति सूर्यः' इत्यत्र विद्यमानस्य यत्पदस्य 'तं देवाश्चक्रिरे धर्मम्' इति तत्पदेन सम्बन्धः। 'तस्मादेकमेव व्रतं चरेत्' इत्यत्र, वायुप्राणपदप्रतिपाद्यगोचरमुपासनं सकृदेव कुर्यात्-इत्यर्थः पूर्वपक्षे विवक्षितः।

एकमेव संवर्गं गमयतीति। यद्यपि 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति वायुप्राणयोर्भेदोऽपि दर्शितः, तथापि औपाधिकस्य विद्यमानस्य भेदस्य स्वरूपकथनमात्रं, न तु तथैवोपास्यता विवक्षिता। 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति उपास्यैकत्वावगमात्। एवं वाजसनेयकेऽपि 'स यथैषां प्राणानां मध्यमः प्राणः एवमेतासां देवतानां वायुः' इत्युपमानोपमेयभावेन भेदसूचनमपि नोपास्यत्वाभिप्रायेणेति द्रष्टव्यम्।

पृथगेव वायुप्राणावुपगन्तव्याविततीति। अयमत्र सिद्धान्ताभिप्रायः—यद्यपि अध्यात्ममधिदैवं च प्राणदेवता एकैव, तथापि अध्यात्माधिदैवाधिष्ठानभेदोपाधिकः तस्य भेदोऽप्यस्ति। एवं च 'इत्यध्यात्मम्, इत्यधिदैवतम्' इत्यादिन्यव-

चिन्तनभेदोपपत्तेः। श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्। 'स यथैषां प्राणानां मध्यमः प्राणः एवमेतासां देवतानां वायुः' (बृ. उ. १।५।२२) इति च उपमानोपमेयकरणात्।

एतेन व्रतोपदेशो व्याख्यातः। 'एकमेव व्रतम्' (बृ. उ. १।५।२३) इति च एवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः; भग्नव्रतानि हि वागादीन्युक्तानि, 'तानि मृत्युः श्रमो भूत्वोपयेमे' (बृ. उ. १।५।२१) इति श्रुतेः, न वायुव्रतनिवृत्त्यर्थः, 'अथातो व्रतमीमांसा' (बृ. उ. १।५।२१) इति प्रस्तुत्य तुल्यवत् वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्। 'एकमेव

---

स्थितनिर्देशानुसारेण वागादिसम्बन्धित्वेन अध्यात्मप्राणोपाधिकमेव रूपं विवक्षितम्, अग्न्यादिसम्बन्धित्वेन आधिदैविकवायूपाधिकमेव रूपं विवक्षितम्। तथा च, यथा सत्यविद्यायां अहरहन्नाम्नोः व्यवस्थयैव आदित्यचक्षुरुपाधिकरूपविशिष्टतयैवानुचिन्तनम्, एवमत्रापि वागादिनिरूपितं श्रैष्ठ्यं संवर्गत्वं च प्राणोपाधिकरूपेऽनुचिन्तनीयम् अग्न्यादिनिरूपितं श्रैष्ठ्यं संवर्गत्वं च वायूपाधिकरूपेऽनुचिन्तनीयमिति एकस्या एव देवतायाः उपाधिभेदेन द्विरनुचिन्तनं सिद्धं भवतीति।

एतेन व्रतोदेशो व्याख्यात इति। एकमेवव्रतमित्यत्र अपृथगेवानुचिन्तनं कर्तव्यमिति न विवक्षितम्। व्रतशब्दो हि प्राणस्य वायोश्च असाधारणव्यापारं वक्ति। उपक्रमे 'अथातो व्रतमीमांसा' इति व्यापाराभिप्रायेणैव व्रतशब्दप्रयोगात्। चरेदिति च तस्योपासनं विवक्षितम्। एकमेवेत्यनेन तु आधिदैविकव्रतेषु वायुव्रतस्यैवाभग्नत्वात् तदेवैकमुपास्यम्, नाग्न्यादिव्रतम्, एवं आध्यात्मिकव्रतेषु प्राणव्रतस्यैवाभग्नतया तदेवैकमुपास्यमिति विवक्षितम्। तदुपासनाप्रकारमाह प्राण्याच्चैवापान्याच्चेति। वागादिव्यापारेषु प्राणनापाननरूपता उपास्येति यावत्। चकारः अग्न्यादिव्यापारेषु वायुव्यापारताद्दृष्टिविधानार्थः। एकमेवव्रतञ्चरेदित्यस्य अपृथगनुचिन्तनपरता पूर्वपक्ष्यभिमता वक्तुं न शक्यते, पृथगनुचिन्तनस्यैव आध्यात्मिकाधिदैविकविभागनिर्देशतः प्राप्तत्वात्—इति स्थिते; तर्हि प्राण्याच्चैवापान्याच्चेतिवाक्यशेषानुसारेण वायुव्रतोपासनानिवृत्त्यर्थमस्त्विति यदि कश्चिद्वदेत्, तं प्रत्याह—न वायुव्रतनिवृत्त्यर्थ इति। ननु 'तेनो एतस्यै देवतायै सायुज्यं सलोकताम्' इति

व्रतं चरेत्' इति चोक्त्वा 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ. उ. १।५।२३) इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं दर्शयति। देवता ह्यत्र वायुः स्यात्, अपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्। पुरस्तात्प्रयोगाच्च 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ. उ. १।५।२२) इति। तथा 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' (छा. उ. ४।३।४) इति भेदेन व्यपदिशति। 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम्' (छा. उ. ४।३।८) इति च भेदेनैवोपसंहरति। तस्मात् पृथगेवोपगमनम्।

प्रदानवत्। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ, "सर्वेषामभिगमयन्नवद्यत्यछंबट्कारं" इत्यतो वचनात् इन्द्राभेदाच्च सहप्रदानाशङ्कायां, राजादिगुणभेदात् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात् प्रदानपृथक्त्वं भवति; एवं तत्त्वाभेदेऽपि आध्येयांशपृथक्त्वात् आध्यानपृथक्त्वमित्यर्थः।

तदुक्तं संकर्षे काण्डे 'नाना वा देवता पृथक्त्वविज्ञानात्' इति। तत्र तु द्रव्यदेवताभेदात् यागभेदो विद्यते, नैवमिह विद्याभेदोऽस्ति।

---

प्राणसायुज्यसालोक्ये एव निर्दिश्येते। नेत्याह—देवता ह्यत्रेति। आध्यात्मिकप्राणसालोक्यं हि प्राणिमात्रस्य सिद्धम्। प्राणसायुज्यमपि प्राणे अहमभिमान एव, अन्यस्यासम्भवात्, सोऽपि प्राणिमात्रस्य शरीरान्तर्गते तस्मिन् नित्यसिद्ध एवेति देवतापदं वायुदेवताभिप्रायम्। अपरिच्छिन्नात्मभावः— वायुदेवतासायुज्यं समानभोगरूपम्। नन्वस्तु देवताऽपरिच्छिन्नात्मभावप्राप्तिरेव फलम्, उपासनं तु प्राणोपाध्यन्तर्भावेनैव न वायूपाध्यन्तर्भावेन--इत्यत आह—पुरस्तात्प्रयोगाच्चेति। तथा च उपक्रमानुसारेण वायोरप्युपास्यतावगमात् न वायुपरित्यागो युक्त इति भावः।

सङ्कर्षे काण्डे इति। द्वादशलक्षण्यनुक्तनानाविषयन्यायविचारात्मको जैमिनिकृतो द्वादशलक्षणीपरिशिष्टः काण्डः सङ्कर्षकाण्ड इत्युच्यते। तत्र 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालन्निर्वपेत् इन्द्रायाधिराजायेन्द्रायस्वराजे' इति विहितायामिष्टौ, पुरोडाशत्रयस्य वेद्यामधिश्रयणे कृते किं त्रिभ्यः पुरोडाशेभ्यो मध्यात्

उपक्रमोपसंहाराभ्यां अध्यात्माधिदैवोपदेशेषु एकविद्याविधानप्रतीतेः। विद्यैक्येऽपि तु अध्यात्माधिदैवभेदात् प्रवृत्तिभेदो भवति, अग्निहोत्र इव सायंप्रातःकालभेदात्–इत्येतावदभिप्रेत्य प्रदानवदित्युक्तम् ॥ ४३ ॥

---

पूर्वार्धात् पृथक्पृथगवदानं कार्यम् , उत पुरोडाशत्रयादपि युगपदेवावदानं मध्यात्पूर्वार्धात् कर्तव्यम्? इति सन्देहे 'तेषां पृथक्कृतानां त्रिरवदानं यथाऽन्येषां हविःपृथक्त्वात्' इति सूत्रेण 'यथा आग्नेयाग्नीषोमीयादीनां पृथगेवावदानं एवमत्रापि पृथङ्निष्पादितानां पुरोडाशानां पृथगेवावदानं कार्यम्' इति पूर्वपक्षं कृत्वा 'वचनात् सर्वेषां सहावदीयेत' इति सूत्रेण, 'सर्वेषामभिगमयन्नवद्यत्यछंवट्कारम्' इति वचनात् "सर्वेषाम्–इन्द्रादीनां पुरोडाशान् अभिगमयन्–प्रापयन् युगपदेवावद्यति, न तु पर्यायेण, अछंवट्कारम्–अव्यर्थतायै, पर्यायेणावदाने कृते हि यस्यावदानं प्राक् कृतं तदतिरिक्तस्य हविषः शिष्टतया देवतार्हत्वाभावेन व्यर्थता भवेत्" इत्यर्थकात्, पुरोडाशत्रयस्यापि युगपदेवावदानं कार्यम्, वचनस्यातिभाराभावात्। न चाशक्यता, नलकप्रवेशाद्युपायेन मध्यात् पूर्वार्धात् त्रयाणामपि [1]युगपदवदानसम्भवात्-इति सिद्धान्तिते; युगपदवत्तानां पुरोडाशानां प्रदानं युगपद्वा क्रमेण वेति सन्देहे, 'तेषामपृथक्प्रदानमवदानैकत्वात्' इतिसूत्रेण, 'युगपदवत्तानां युगपदेव प्रदानम्' इति पूर्वपक्षं कृत्वा 'नाना वा देवता पृथक्त्वविज्ञानात्' इति सूत्रेण–यद्यपि सर्वेषु पुरोडाशेष्विन्द्रो देवता, तथापि, तस्य राजादिगुणयोगेन भेदे सति देवतापृथक्त्वात् तद्गुणकेन्द्रोद्देशेन पृथगेव प्रदानं कार्यम्-इति सिद्धान्तितम्। पुनश्च 'अन्यार्थप्रदर्शनाच्च' इति सैद्धान्तिकगुणसूत्रेण—'प्राच्यां दिशि त्वमिन्द्रोऽसि राजा' इत्यादयस्तिस्र ऋचः प्रकृतायां त्रैधातवीयायामिष्टौ याज्यानुवाक्यारूपतया समाम्नायन्ते, तत्र च 'प्रथमामनूच्य मध्यमया यजेत् मध्यमामनूच्य उत्तमया यजेत् उत्तमामनूच्य प्रथमया यजेत् एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्ति' इति याज्यानुवाक्ययोर्व्यत्यस्याम्नानं अन्यार्थदर्शनरूपलिङ्गतया-उदाहृतम्। न हि प्रदानैकत्वे तिसृणामृचां व्यत्यासेन याज्यानुवाक्याभावस्सम्भवतीति ॥ ४३ ॥

इति प्रदानाधिकरणम्

---

1. युगपदवदानेति उपर्यधोभावेनस्थापितानां त्रयाणां पुरोडाशानां मध्ये नलकं प्रवेश्य युगपत् त्रयाणांमध्यादवदानसम्भव इत्यर्थः।

## २९ लिङ्गभूयस्त्वाधिकरणम्

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयिनोऽग्निरहस्ये—'नैव वा इदमग्रेऽसदासीत्' (श. ब्रा. १०.५।३ १) इत्येतस्मिन् ब्राह्मणे मनोऽधिकृत्याधीयते 'तत् षटत्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः' इत्यादि। तथैव 'वाक्चितः प्राणचितः चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीनामनन्ति सांपादिकान्।

तेषु संशयः—किमेते मनश्चिदादयः क्रियानुप्रवेशिनः तच्छेषभूताः,

---

पूर्वस्मिन्नधिकरणे, एकस्या अपि विद्याया आध्यात्मिकाधिदैविकभेदेन प्रयोगभेद उक्तः। मनश्चिदादीनां तु कर्माश्रिततया कर्मणस्सकाशात् प्रयोगभेदो नोपपद्यत इति शङ्क्यते।

'नैव वा इदमग्रेऽसदासीत्' इत्यादिकं हि ब्राह्मणं अग्निचयनप्रकरणम्। तत्र सांपादिकचयनप्रतिपादकानि वाक्यानि 'तत् षट्त्रिंशतं सहस्राणि' इत्यादीनि। तत्—प्रकृतं मनः। मनोमयान्—मनोविकारभूतान् अग्नीन्। अत्र मनोवृत्तिसमुदाये एकैकाहोरात्रावच्छिन्ने इष्टकाचिताग्निदृष्टिः विवक्षिता। पुरुषायुषस्य च शतसंवत्सरपरिमितस्य षट्त्रिंशतं सहस्राणि दिनानि भवन्ति। तथा च, तावता कालेन तावन्तोऽग्नयः सिद्धा भवन्ति। आत्मनः—मनस्सम्बन्धिनः। प्रत्यगात्मरूपानित्यन्ये, तेषु प्रत्यगभेदोऽनुसन्धेय इति यावत्। अर्कान्—अर्चनीयान्। मनसा चीयन्तेति मनश्चितः। ध्यानमात्रसंपाद्यं हि तेषां चयनम्। मनोवृत्तिसंघाते अग्निदृष्टिं विधाय इतरेन्द्रियवृत्तिष्वग्निदृष्टिविधानार्थानि वाक्चितइत्यादिवाक्यानि। प्राणपदं इन्द्रियाधिकारात् घ्राणोपस्थापकम्। वागिन्द्रियव्यतिरिक्तकर्मेन्द्रियपरं कर्मचित इति। अग्निचितः—जाठराग्निचितः।

**क्रियानुप्रवेशिन इति।** प्रसिद्धो ह्यग्निः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इत्यादिवचनानुसारेण ज्योतिष्टोमादिकर्माङ्गभूतः, एवमेतेऽपि साम्पादिका अग्नयः क्रियानुप्रवेशिनः? उत तदप्रविष्टा एव?। ननु 'मनसैवाधीयन्त मनसाऽचीयन्त मनसा ग्रहा अगृह्यन्त मनसा अस्तुवन् मनसा अशंसन् यत्किञ्चिद्यज्ञे कर्म क्रियते यत्किञ्च याज्ञीयं मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयं क्रियते' इतिवाक्यकल्पिते मनोयज्ञे मनश्चिदादीनां निवेश उपेयत एव। अतः सिद्धान्तेऽपि

उत स्वतन्त्राः केवलविद्यात्मकाः ? इति । तत्र प्रकरणात् क्रियानुप्रवेशे प्राप्ते—स्वातन्त्र्यं तावत् प्रतिजानीते—लिङ्गभूयस्त्वादिति ।

भूयांसि हि लिङ्गानि अस्मिन् ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते—'तत् यत्किंच इमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति, 'तान् हैतान् एवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्ति अपि स्वपते' इति चैवंजातीयकानि । तद्धि लिङ्गं प्रकरणाद्बलीयः । तदप्युक्तं पूर्वस्मिन् काण्डे—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै. सू. ३।३।१४) इति ॥ ४४ ॥

## पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥

नैतद्युक्तं स्वतन्त्रा एतेऽग्नयः अनन्यशेषभूता इति । पूर्वस्य क्रियामयस्याग्नेः प्रकरणात् तद्विषय एवायं विकल्प(विशेषोपदेशः) स्यात्, न स्वतन्त्रः ।

---

कथमेषां स्वातन्त्र्यम्—इत्याशङ्क्य, सिद्धान्तकोटिं स्वयमेव व्याचष्टे—केवलविद्यात्मका इतीति । प्रसिद्धज्योतिष्टोमाननुप्रवेश एव स्वातन्त्र्यमिति भावः । प्रकरणादिति । यद्यपि [1]नैवेत्यादिकं ब्राह्मणं न ज्योतिष्टोमादिकर्मप्रकरणम्, अपि तु, तदङ्गभूताग्निप्रकरणमेव, तथापि अङ्गद्वारा ज्योतिष्टोमादिस्तत्रोपस्थित इति सन्निधानमेव प्रकरणपदेन विवक्षितम् ।

तद्यत्किंचेमानिभूतानीत्यादिवाक्यपर्यालोचनया हि मनश्चिदादीनां सातत्यमुपलभ्यते, इदं कर्माङ्गत्वे नोपपद्यते, तथासति कर्मप्रयोगकालमात्रभाविता तेषां वक्तव्या स्यात्, अतो न कर्माङ्गत्वम्—इति सिद्धान्तयति—भूयांसि हि लिङ्गानीति ॥ ४४ ॥

तद्विषय एवायं विकल्प इति । ननु—इष्टकाचिताग्नीनां मनश्चिदादीनां च विकल्प इति कथमुच्यते, एकार्थत्वाभावात् । इष्टकाचितस्याग्नेर्हि आहवनीयधारणं कार्यम्, नैतत् मानसैर्मनश्चिदादिभिर्निर्वर्तयितुं शक्यते—इति चेत्;

उच्यते । यथा इष्टकाचितोऽग्निः कर्मप्रविष्टः एवं मनश्चिदादयोऽपि कर्मप्रविष्टाः इत्येतावदेव विकल्पपदेन सादृश्यपरेण विवक्षितम् ।

---

1. मु. नासदित्यादिकं

ननु प्रकरणात् लिङ्गं बलीयः। सत्यमेवमेतत्। लिङ्गमपि त्वेवंजातीयकं न प्रकरणाद्बलीयो भवति। अन्यार्थदर्शनं ह्येतत्, सांपादिकाग्निप्रशंसारूपत्वात्। अन्यार्थदर्शनं च असत्यां अन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते। तस्मात् सांपादिका अप्येतेऽग्नयः प्रकरणात् क्रियानुप्रवेशिन एव स्युः।

मानसवत्। यथा—दशरात्रस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहव-

---

अन्येतु—'अभागिप्रतिषेधात्' इति सूत्रे, पशुकामश्चिन्वीतेतिवचनानुसारेण चयनस्य क्रत्वाश्रयस्य पशुफलार्थत्वं तन्त्रवार्तिककृताऽभ्युपगतमिति, अग्नेरदृष्टार्थतया, मनश्चिदादीनामपि पशुफलेन चयनेन सह विकल्प उपपद्यते—इति वदन्ति। मनश्चिदादीनां पश्वर्थता तु अतिदेशाच्चेति सूत्रे स्पष्टा भविष्यति।

अन्यार्थदर्शनं ह्येतदिति। लिङ्गं द्विविधम्—अन्यार्थदर्शनरूपं सामर्थ्यरूपं चेति। सामर्थ्यं च द्विप्रकारम्—शब्दगतं अर्थगतञ्चेति। आद्यं 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणां स्वप्रकाश्येऽर्थे विनियोजकम्। द्वितीयं तु 'स्रुवेणावद्यति, स्वधितिनावद्यति' इत्यादौ स्रुवस्वधित्यादिगतं द्रवद्रव्यावदानमांसादिखण्डनोपयुक्तं तत्तद्योग्यार्थविनियोजकम्। सामर्थ्यरूपं लिङ्गमेव च श्रुतिलिङ्गसूत्रे प्रकरणात् बलीयस्त्वेन निबद्धम्। अन्यार्थदर्शनं साहचर्येण सम्बन्धेन कस्यचिदर्थस्य ज्ञापकम्। यथा इदमेव मनश्चिदादीनां सातत्यदर्शनम्। तच्च सत्येव मूलभूते प्रमाणान्तरे तत्सहकारि भवति, न तु स्वयमेव कस्यचिदर्थस्य निश्चयमादधाति, अर्थवादगतसातत्यदर्शनस्य मनश्चिदादिस्तावकत्वेनाप्युपपद्यमानस्य कर्मप्रवेशविरोधित्वाभावादिति, [1]तदर्थं 'क्रियानुप्रवेशोऽपि अन्यार्थदर्शनरूपंलिङ्गमस्ति' इतिप्रतिपादनाय मानसवदिति सूत्रांशः; तं व्याचष्टे—यथा दशरात्रस्येति। द्वादशाहे, प्रथमं प्रायणीयातिरात्रः ततः पृष्ठ्यः षडहः ततः छन्दोमचतुष्टयं तत उदयनीयातिरात्रः—इति द्वादशाहानि। तत्र च, प्रायणीयोदयनीये प्रथमोत्तमे अहनी वर्जयित्वा मध्यगतानां दशानामह्नां दशरात्र इत्यपि पृथक् समाख्या। तदभिप्रायेण दशरात्रस्यदशमेऽहनीत्युक्तम्। तच्च विस्पष्टवाक्यरहिततया अविवाक्यम्। 'पृथिव्या पात्रेण' इत्यादिना

---

1. तदर्थं—क्रियानुप्रवेशविरोधित्वाभावार्थम्।

नाहरणोपस्थानभक्षणानि मानसान्येवाम्नायन्ते, स च मानसोपि ग्रहकल्पः क्रियाप्रकरणात् क्रियाशेष एव भवति, एवं अयमप्यग्निकल्प इत्यर्थः ॥ ४५ ॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति—'षट्त्रिंशत्सहस्राण्यग्नयोऽर्क्याः तेषामेकैक एव तावान् यावानसौ पूर्वः' इति । सति हि सामान्ये अतिदेशः प्रवर्तते । ततश्च पूर्वेण इष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना सांपादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेव एषां द्योतयति ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षं व्यावर्तयति । विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युः न क्रियाशेषभूताः । तथाहि निर्धारयति—'ते हैते विद्याचित एव' इति 'विद्यया हैवैते एवंविदश्चिता भवन्ति' इति च ॥ ४७ ॥

---

पृथिव्यादिषुपात्रदृष्टिर्विवक्षिता । तथा च मानसस्य ग्रहस्य क्रियाप्रकरणाम्नानात् यथा क्रियाङ्गत्वम्, एवं मनश्चिदादीनामपि क्रियाप्रकरणान्तर्गतत्वे सति मानसत्वाविशेषात् क्रियाङ्गत्वमेव भविष्यति ॥ ४५ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यत्र अयमर्थो विवक्षितः—पूर्वः—इष्टकाचितोऽग्निः यावान्—यावन्माहात्म्यविशिष्टः, मनश्चिदादिष्वेकैक एव तावान्—तावन्माहात्म्यविशिष्टः । पूर्वोऽग्निः क्रियामाश्रित्य यत् फलं साधयति मनश्चिदादिरपि तत् फलं क्रियामाश्रित्य साधयतीति यावत् । तथा च मनश्चिदादीनामपि ज्योतिष्टोमादिक्रियामाश्रित्य पशुफलसाधकत्वावगमात् [1]प्रसिद्धाग्निना अस्य विकल्पो भविष्यति । प्रसिद्धाग्न्यभावेऽपि आहवनीयधारणं तु उत्तरवेद्यैव भविष्यतीति ॥ ४६ ॥

'ते हैते विद्याचित एव' इत्यत्र एवकारस्य अयोगव्यावर्तकता प्रतीयत इति अन्ययोगव्यावृत्तिपरतासिद्ध्यर्थं श्रुत्यैव इदं वाक्यं व्याख्यायते 'विद्यया हैवैते एवंविदश्चिता भवन्ति' इति । अत्र च, मानसानाञ्चयनस्वरूपमात्रस्य बाह्यसाधनानपेक्षतया अर्थादेव अन्यव्यावृत्तिलाभे पुनस्तत्प्रतिपादनं, फलं साधयितुं प्रसक्तस्य क्रियाप्रवेशस्य व्यावृत्त्यर्थमिति, स्वातन्त्र्यं अवधारणसामर्थ्याल्लभ्यत इति भावः ॥ ४७ ॥

---

1. प्रसिद्धाग्निना—इष्टकाचिताग्निना ।

## दर्शनाच्च ॥ ४८ ॥

दृश्यते चैषां स्वातन्त्र्ये लिङ्गम् । तत् पुरस्ताद्दर्शितम् 'लिङ्गभूयस्त्वात्' इत्यत्र ॥ ४८ ॥

ननु—लिङ्गमपि असत्यामन्यस्यां प्राप्तौ असाधकं कस्यचिदर्थस्य इत्यपास्य तत् प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसितम्—इत्यत उत्तरं पठति—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः । श्रुत्यादेर्बलीयस्त्वात् । बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे । तानि चेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते । कथम्? श्रुतिस्तावत् 'ते हैते विद्याचित एव' इति । तथा लिङ्गं 'सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । तथा वाक्यमपि 'विद्यया हैवैते एवंविदश्चिता भवन्ति' इति ।

'विद्याचितएव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात् ।

ननु अबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति ।

नेत्युच्यते । तदभिप्रायतायां हि 'विद्याचितः' इतीयता स्वरूपसंकीर्तनेनैव कृतत्वात् अनर्थकमिदमवधारणं भवेत्, स्वरूपमेव ह्येषामबाह्यसाध-

---

यद्यपि 'तत् यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति' इत्यन्यार्थदर्शनरूपं लिङ्गं न कस्यचिदर्थस्य स्वत एव साधकमिति प्रागुक्तम्, तथापि अवधारणश्रुत्युपोद्बलितं स्वातन्त्र्यसाधकं भवत्येवेति भावः ॥ ४८ ॥

ननुलिङ्गमप्यसत्यामन्यस्यांप्राप्ताविति । यद्यपि अवधारणश्रुतिरूप प्रकृते अन्यत् प्रापकं स्वातन्त्र्यस्यास्ति, तथापि प्रकारान्तरेण एतां शङ्कां निवर्तयितुं अनयैव शङ्कया सूत्रमवतारयति ।

प्रकृतायाः शङ्कायाः परिहारं 'न चेदमर्थवादमात्रं' इत्यादिना वक्ष्यति । प्रथमतो लिङ्गभूयस्त्वादितिसूत्रे सङ्ग्रहेणोक्तानि श्रुत्यादीनि विस्पष्टतया इह प्रदर्शयति—श्रुतिस्तावदित्यादिना । 'विद्यया हैवैते' इति वाक्यं पुरुषसम्बन्धं बोधयत् स्वातन्त्र्यं दर्शयति ।

नत्वमिति । अबाह्यसाधनत्वेऽपि मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलमवधारणमर्थवद्भविष्यति ।

तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इति सातत्यदर्शनमेतेषां स्वातन्त्र्येऽवकल्पते । यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे 'प्राणं तदा वाचि जुहोति वाचं तदा प्राणे जुहोति' (कौ।उ।२।५) इति चोक्त्वा उच्यते—'एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति' इति तद्वत् । क्रियानुप्रवेशे तु, क्रियाप्रयोगस्याल्पकालत्वेन न सातत्येन एषां प्रयोगः कल्पेत । न चेदं अर्थवादमात्रमिति न्याय्यम् । यत्र हि विस्पष्टो विधायको लिङादिरुपलभ्यते युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम् । इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेव एषां विज्ञानविधानं कल्पनीयम् । तच्च यथासंकीर्तनमेव कल्पयितुं शक्यत इति सातत्यदर्शनात् तथाभूतमेव कल्प्यते । ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः । एतेन 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इत्यादि व्याख्यातम् ।

तथा वाक्यमपि 'एवंविदः' इति पुरुषविशेषसंबन्धमेवैषामाचक्षाणं न क्रतुसंबन्धं मृष्यते ।

तस्मात् स्वातन्त्र्यपक्ष एव ज्यायानिति ॥ ४९ ॥

---

सातत्यदर्शनमेतेषां स्वातन्त्र्येऽवकल्पत इति । ननु—यथा क्रियाङ्गत्वपक्षे क्रियाकालमात्रवर्तिनां मनश्चिदादीनां सातत्यदर्शनं नोपपद्यते, तथा सिद्धान्तेऽपि 'मनसैव ग्रहा अगृह्यन्त' इत्यादिवाक्यसिद्धमानसक्रतुप्रवेशस्य मनश्चिदादिषु स्वीकर्तव्यतया मानसक्रतुकालवर्तिनां मनश्चिदादीनां सातत्यदर्शनमनुपपन्नमेव । यदि तु अन्यकालकर्तृकाणामपि मनोवृत्तीनां 'सर्वा एता मदीयक्रतूपयुक्तचयनरूपाः' इति ध्यानं मानसक्रतुकालं सम्भवतीति नानुपपत्तिः, तथासति क्रियामयक्रतुकालेऽपि तथाध्यानस्य कर्तुं शक्यतया न सातत्यदर्शनानुपपत्तिः-इति चेत्;

सत्यमेतत् । तथापि अवधारणानुसारेण स्वातन्त्र्यावगमात् सातत्यदर्शनमपि तदनुगुणमेव व्याख्येयमिति तात्पर्यम् । 'वाचं तदा प्राणे' इत्यत्र वाक्प्राणयोः परस्परमाहुतित्वमाहुत्याधारत्वं च ध्येयमिति विवक्षितम् ॥ ४९ ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ५० ॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम् । यत् क्रियावयवान् मनआदिव्यापारेष्वनुबध्नाति 'ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन् मनसाऽशंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' इत्यादिना । संपत्फलो ह्ययमनुबन्धः । न च प्रत्यक्षाः क्रियावयवाः सन्तः संपदा लिप्सितव्याः । न चात्र उद्गीथाद्युपासनवत् क्रियाङ्गसंबन्धात् तदनुप्रवेशित्वमाशङ्कितव्यम्, श्रुतिवैरूप्यात् । न ह्यत्र क्रियाङ्गंकिञ्चिदादाय तस्मिन् अदो नाम अध्यसितव्यमिति वदति। षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदान् आदाय तेषु अग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत् । संख्या चेयं पुरुषायुषस्याहस्सु दृष्टा सती तत्संबन्धिनीषु मनोवृत्तिषु आरोप्यत इति द्रष्टव्यम् । एवं अनुबन्धात् स्वातन्त्र्यं मनश्चिदादीनाम् । आदिशब्दात् अतिदेशाद्यपि यथासंभवं योजयितव्यम् । तथाहि—'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन् क्रियायामनादरं दर्शयति । न च 'सत्येव क्रियासंबन्धे विकल्पः पूर्वेणोत्तरेषाम्' इति शक्यं वक्तुम् । न हि येन व्यापारेण आहवनीयधारणादिना पूर्वः क्रियायामुपकरोति तेन उत्तरे उपकर्तुं शक्नुवन्ति ।

---

यदि हि मनश्चिदादीनां क्रियामयक्रतुप्रवेशः स्यात्, तथासति तत्सन्निधौ मानसक्रत्वङ्गसमाम्नानबललभ्यमानसक्रत्वनुबन्धो निरर्थक एव स्यात् । प्रसिद्धक्रियाननुप्रवेशाभ्युपगमे, प्रसिद्धस्याग्नेः क्रियानुप्रवेशदर्शनात् 'मानसानां मनश्चिदादीनामग्नीनां अनुबन्धी कीदृग्विधः क्रतुः' इत्यपेक्षायां तत्सदृशो मानसः क्रतुरिति तदाम्नानमुपपद्यते । मनसैवाधीयन्तेति । मनश्चिदादिषु आहवनीयो मनसैवाहित इत्यर्थः । चित्याग्नेराधानाभावेन यथाश्रुतानुपपत्तेः । अत्र मनोवृत्तिषु चयनदृष्टिः प्रतीकन्यायेन अवगन्तव्या । तत्र क्रत्वनुबन्ध्याहवनीयाधानादिकं तु मानोरथिकपदार्थन्यायेन द्रष्टव्यम् । यत्किञ्चिद् यज्ञे कर्म क्रियते—आरादुपकारकं, यत्किञ्चिद् यज्ञीयं कर्म क्रियते-सन्निपत्योपकारकम् ।

यत्तु पूर्वपक्षेऽपि अतिदेश उपोद्बलक इत्युक्तं–सति हि सामान्ये अतिदेशः प्रवर्तत इति, तत् अस्मत्पक्षेऽप्यग्नित्वसामान्येनातिदेशसंभवात् प्रत्युक्तम् । अस्ति हि सांपादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कारणानि दर्शितानि ।

एवं अनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम् ।

प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेनस्वेनानुबन्धेनानुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्ति एवमिति ।

दृष्टश्च अवेष्टे राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः, वर्णत्रयानुबन्धात्, राजयज्ञत्वाच्च राजसूयस्य । तदुक्तं प्रथमे काण्डे–'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' (जै. सू. ११।४।७) इति ॥ ५० ॥

---

अग्नित्वसामान्येनेति । उपलक्षणमेतत् पश्वर्थत्वस्यापि । 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यत्र हि, पूर्वोऽग्निः यावत्पशुफलं साधयति मनश्चिदादिष्वेकैकोऽपि तावत्फलं साधयतीत्यर्थो विवक्षितः । न चैतावता प्रसिद्धक्रियानुप्रवेशोऽपि सादृश्यकोटौ निक्षेप्तव्यः, येन, पूर्वेण सह अयं विकल्पितः स्यात् । निर्धारणादिभिः स्वातन्त्र्यावगमेन अग्नित्वपशुसम्पादकत्वमात्रेणैव अतिदेशचारितार्थ्यात् ।

दृष्टश्च अवेष्टेः राजसूयप्रकरणपठिताया इत्यादि । ननु–अत्र राजसूयादुत्कर्षमवेष्टेरुपक्षिप्य तत्प्रतिपादकतया 'क्रत्वर्थायामिति चेत्' इत्याद्येकादशाध्यायगतं सूत्रं उदाहृतम्, तन्नोपपद्यते––न हि तस्मिन्नधिकरणे अवेष्टेरुत्कर्षो राजसूयात् व्यवस्थाप्यते,

किन्तु, 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा....बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणा' इत्यादिना समाम्नाताया अवेष्टेः ऐकतन्त्र्यं उत पृथक्तन्त्रतेति सन्देहे, 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं [हुत्वा तं]अभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्' इत्यादिना मध्यनिधानादिपर्यालोचनया [हविषां] (पुरोडाशानां) साहित्यावगमात् 'एतया अन्नाद्यकामं याजयेत्' इति चैकवचनेन प्रयोगैक्यावगमात् आरादुपकारकाणामैकतन्त्र्यमेव–इति पूर्वपक्षं कृत्वा ;

प्रतियागं दक्षिणाभेदावगमेन तत्तद्दक्षिणानतकर्तृभेदावगमात् कर्तृभेदे च ऐकतन्त्र्यानुपपत्तिः; प्रयोगपृथक्त्वात्, मध्यनिधानादिकं तु लिङ्गं राजसूयक्रतुबहिर्भूतायामेव। अवेष्टेर्हि उत्पन्नायाः 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति सर्वयागसाधारणफलप्रतिपादकवाक्येन राजसूयान्तर्गततया, एतयान्नाद्यकामंयाजयेदिति तावन्मात्रफलप्रतिपादकेन वाक्येन राजसूयबहिर्भावोऽप्यस्ति–इति सिद्धान्तं प्रदर्श्य;

तदनन्तरं च, 'यदि मध्यनिधानादिलिङ्गानुसारेण बहिर्भूताया ऐकतन्त्र्यं स्वीक्रियते तर्हि तदनुसारेण राजसूयान्तर्भूताया अप्यैकतन्त्र्यं किं न स्यात्' इतिशङ्कामुद्भाव्य तत्परिहारप्रदर्शनार्थमिदं गुणसूत्रं क्रत्वार्थायामित्यादि। मध्यनिधानादिकं 'यदि ब्राह्मणः' इत्यादिवाक्येन वर्णत्रयकर्तृकावेष्टिप्रयोगेऽवगम्यते। राजसूयान्तर्भूतप्रयोगस्तु 'राजा स्वाराज्यकामः' इति वचनानुसारेण क्षत्रियकर्तृकः। राजपदस्य क्षत्रियजातिवचनत्वात्। अतो न क्रत्वन्तर्भूताया ऐकतन्त्र्यम्।

ननु–यदि दक्षिणाभेदाम्नानेन भिन्नतन्त्रता क्रत्वन्तर्गतायाः, तर्हि बहिर्भूतायां उत्पत्तिवाक्यानुसारेण दक्षिणाभेदस्यावश्यकतया तत्रापि पृथक्तन्त्रता स्यात्। यदि तु–मध्यनिधानादिलिङ्गाद्यनुसारेण प्रयोगैक्येन कर्त्रैक्ये सिद्धे हिरण्यंदक्षिणेत्यादिषु दक्षिणापदं दक्षिणावयवलक्षकं भविष्यति, अतो न पृथक्तन्त्रता बहिर्भूतायाः; तर्हि क्रत्वन्तर्गतायामपि तथोपपत्तेः न पृथक्तन्त्रता। न हि एक एव दक्षिणाशब्दः किञ्चित्प्रयोगैकवाक्यतायामवयवलक्षकः अन्यत्र तु यथाश्रुतः इति वैरूप्यं सम्भवति-इति चेत्; न–यथा ह्येकस्यैव मन्त्रस्य गौणमुख्यार्थविनियोगप्रमाणवशादर्थभेदो भवति एवं एकस्यैव दक्षिणापदस्य अन्यान्यवाक्यान्वये तत्तद्वाक्यानुगुण एवार्थो ग्राह्य इति, मध्यनिधानादिलिङ्गानुसारेण बहिःप्रयोगवाक्यैकवाक्यतायां लाक्षणिकत्वेऽपि राजसूयवाक्यैकवाक्यतायां लाक्षणिकार्थग्रहणे प्रमाणाभावेन मुख्यार्थत्यागायोगात्। अतो युक्तैव व्यवस्था–बहिर्भूताया ऐकतन्त्र्यं राजसूयान्तर्गतायास्तु तन्त्रपृथक्त्वम्--इति।

ततश्च कथमस्योत्कर्षप्रतिपादकता–इति चेत्—

उच्यते—अवेष्टौ वर्णत्रयसंयोगं राजसूये च तदभावं अनुवदता अनेन सूत्रेण अर्थात् उत्कर्षोऽपि ध्वनितो भवतीति भावः। अत एव स्वयं उत्कर्षसाधकतया 'वर्णत्रयानुबन्धात्, राजयज्ञत्वाच्च राजसूयस्य' इति प्रतिपादितम्। तत्र राजयज्ञत्वादित्यनेन क्षत्रियकर्तृकयज्ञत्वादिति विवक्षितम्। पूर्वतन्त्रे 'राजा स्वाराज्यकामो राजसूयेन यजेत' इतिवाक्यमुदाहृत्य राजपदस्य क्षत्रियजातिवचनत्वस्य व्यवस्थापितत्वात्।

तथाहि— राजपदं आर्यैर्म्लेच्छैश्च परिपालनादिकं प्रवृत्तिनिमित्तीकृत्य क्षत्रियादन्यत्रापि प्रयुज्यते । ब्राह्मणादिष्वपि देशपरिपालननिमित्ते सति राजेति व्यवहारस्य सर्वसम्प्रतिपन्नत्वात् । एवं 'वृक्षराजः' 'पक्षिराजः इति श्रैष्ठ्यनिमित्तकोऽपि राजपदव्यवहार उपलभ्यते । अस्ति च तादृशव्यवहारस्य श्रुतिस्मृत्यनुग्रहोऽपि—राज्यायैव हि तेऽभिषिच्यन्ते तेनैतान् राजेत्याचक्षते' इति । अत्र राज्यपदं राज्ञः कर्म परिपालनं प्रतिपादयति । रञ्जनात् खलु राजत्वं प्रजानां पालनादपि' इति च स्मृतिः । अत्र राजपदं परिपालननिमित्तकमिति स्पष्टमवगम्यते । एवं श्रैष्ठ्यवचनोऽपि राजशब्द उपलभ्यते—'सोमोऽस्माकं ब्राह्मणानां राजा' 'सोमो वा ओषधीनां राजा' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' इत्यादौ ।

कात्यायनस्यापि परिपालनार्थकत्वं सम्मतमेव । 'क्षत्रियसमानशब्दाज्जनपदात् तस्य राजन्यपत्यवत्' इति वार्तिकस्य ह्ययमर्थः—पञ्चालादेर्देशविशेषवाचिनः षष्ठ्यन्तात् पदात् राजनीत्यर्थे विवक्षिते 'जनपदशब्दात् क्षत्रियादञ्' इत्यादिना ये प्रत्यया अपत्ये विहिताः ते भवन्तीति । पञ्चालानां राजा पाञ्चालः-इत्यादि च तदुदाहरणम् ।

'राजा च' इति पाणिनिसूत्रपर्यालोचनया परिपालनादिकमर्थ इत्यवगम्यते । कर्मधारये ब्राह्मणकुमारयोरुत्तरपदयोः राजपदं अन्यतरस्यां प्रकृतिस्वरं भवतीति तदर्थः । राजब्राह्मण इत्यादि तदुदाहरणम् । अत्र राजपदस्य परिपालनाद्यर्थत्वे एव ब्राह्मणपदसामानाधिकरण्यमुपपद्यते ।

एवं क्षत्रियमात्रेऽपि आन्ध्रादिदेशेषु राजपदं म्लेच्छैः प्रयुज्यते । अस्ति चास्या अपि म्लेच्छप्रसिद्धेः श्रुत्याद्यनुग्रहः । 'राजानमभिषेचयेत् तिष्येण श्रवणेन वा' इति श्रुतिः । अत्र हि राजपदं क्षत्रियपरमेव, न तु परिपालकपरम् । क्षत्रियस्य अभिषेकानन्तरं पालकत्वस्य स्मृतिषु विधानेन अभिषेकात् पूर्वं पालकताया असिद्धत्वात् । तथा गौतमस्मृतौ 'द्विजातीनां अध्ययनमिज्या दानम्' इति त्रैवर्णिकानां साधारणधर्मोक्त्यनन्तरं 'ब्राह्मणस्याधिकाः प्रवचनादयः' इति ब्राह्मणवैशेषिकधर्मोक्त्यनन्तरं क्षत्रियवैशेषिकधर्मकथनप्रस्तावे 'राज्ञोऽधिकं रक्षणं सर्वभूतानाम्' इत्युक्तम् । अत्र सन्दर्भानुसारेण राजपदं क्षतियत्वज्ञात्यभिप्रायेणैव प्रयुक्तम् । एवं राजन्यपदं लोके क्षत्रियापत्य एव प्रसिद्धम्, देशपरिपालकब्राह्मणाद्यपत्ये तदप्रयोगात् । अतः तस्य 'राजश्वशुराद्यत्' इति सूत्रे यत्प्रत्ययान्ततया व्युत्पादके राजपदं क्षत्रियत्वाभिप्रायेणैव प्रयुक्तम् ।

एवं राजपदस्य श्रुतिस्मृत्युपष्टब्धार्यम्लेच्छप्रयोगानुसारेण देशपरिपालनकर्तृत्रैवर्णिकादिपरत्वं उत क्षत्रियपरत्वमिति सन्देहे—

यद्यपि[1]आर्यम्लेच्छयोः श्रुतिस्मृतिमूलत्वं समानम्, तथापि आर्याणां स्वरूपतो विशेषोऽस्ति। आर्या हि शब्दार्थतत्त्वसंरक्षणं अदृष्टोपयोगितया यत्नेन कुर्वन्ति। म्लेच्छास्तु दृष्टव्यवहारस्य अपभ्रंशमात्रेणापि सिद्धतया न शब्दार्थतत्त्वसंरक्षणे यतन्ते। अतः तेषां शब्दार्थविप्लवस्य सम्भवात् न म्लेच्छप्रसिद्ध्यनुसारिराजशब्दार्थो ग्राह्यः, अपि तु आर्यप्रसिद्ध्यनुसारेण। एवं च 'राजा राजसूयेन यजेत' इत्यत्र राजपदस्य परिपालनादिनिमित्तेन त्रैवर्णिकपरत्वे सति 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं[हुत्वा तं]अभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्' इतिवचनमुपपद्यते। अत्र हि ब्राह्मणादिकर्तृनिमित्तेन धर्मविशेषोऽभिधीयते, राजपदस्य क्षत्रियपरत्वे तु ब्राह्मणादीनामप्राप्तत्वेन निमित्तत्वानुपपत्तेः वचनमसङ्गतं स्यात्-इति पूर्वपक्षः।

सिद्धान्तस्तु—आर्यप्रसिद्धेः म्लेच्छप्रसिद्धिमपेक्ष्य अन्यत्र बलवत्त्वेऽपि नेह प्राबल्यं सम्भवति। न ह्यत्र म्लेच्छानामपि राजपदतदर्थयोर्विप्लुतिः सम्भवति। पदस्य तावत् आर्यम्लेच्छव्यवहारयोस्तुल्यतया न विप्लुतिः सम्भवति, म्लेच्छा अपि हि आर्या इव राजेत्येव अविप्लुतं प्रयुञ्जते, न तु गावीपदवद्विप्लुतम्। नाप्यर्थविप्लवस्सम्भवति, स हि अनादिभूते अर्थान्तरे विद्यमानेऽपि शक्तिभ्रमात् अर्थान्तरे प्रयोगः—यववराहपदयोः 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' 'वराहं गावोऽनुधावन्ति' इतिवाक्यशेषानुसारेण दीर्घशूकसूकररूपेऽर्थान्तरे विद्यमानेऽपि यथा प्रियङ्गुवायसयोः शक्तिभ्रमात् प्रयोगः। राजपदं तु यत्र म्लेच्छैः क्षत्रियजातौ प्रयुज्यते, तत्राप्यनादितैव प्रयोगस्य श्रुतिस्मृत्यनुसारादिति, न शक्तिभ्रमकृतोऽयं व्यवहारः। ततश्च, आर्यम्लेच्छप्रसिद्ध्योः प्रकृते तुल्यत्वे सति, पालनादिरूपार्थस्य सप्रतियोगिकस्य ग्रहणमपेक्ष्य निष्प्रतियोगिकक्षत्रियत्वजातिग्रहणमेव न्याय्यं राजास्वाराज्यकाम इत्यत्र।

न च 'यदि ब्राह्मणः' इत्यादिलिङ्गानुसारेण त्रैवर्णिकप्राप्त्यर्थं पालनार्थकस्यैव राजपदस्य प्रकृते ग्रहणं न्याय्यम्। लाघवानुसारिविधिस्वारस्यानुसारेण

---

1. आर्यम्लेच्छयोः—आर्यम्लेच्छप्रसिद्ध्योः।

## न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५१ ॥

यदुक्तं मानसवदिति तत् प्रत्युच्यते । न मानसग्रहसामान्यादपि

---

क्षत्रियग्रहणे सिद्धे निपातयदिस्वारस्यानुसारेण तत्प्रतिक्षेपासम्भवात् । अपि तु 'यदि रोचते ब्राह्मणो यजेत' इति योजनया अस्य वाक्यस्य राजसूयबहिर्भूत-प्रयोगान्तरकल्पकतया ब्राह्मणादिप्रापकताया एव अभ्युपगन्तुं युक्तत्वात् । वस्तुतस्तु अवेष्टिसन्निधौ 'एतया अन्नाद्यकामं याजयेत्' इत्यधिकारान्तरश्रवणेन तत्र च राजेतिपदाभावेन तस्य त्रैवर्णिकसाधारणतया, यदिब्राह्मणोयजेतेतिवाक्यस्य तस्मिन् प्रयोगे यदिपदस्वारस्यमनुरुध्यैव ब्राह्मणादिनिमित्तकमध्यनिधानादिधर्मविशेषविधिपर-त्वोपपत्तेः ।

एवं च, यदि पालनादिकं मुख्ययैव वृत्त्या राजपदप्रतिपाद्यं तथापि उक्त-गत्या राजसूयवाक्ये क्षत्रियजातिग्रहणमेव सिद्ध्यति ।

वस्तुतस्तु—पालनं शक्यमेव न भवतीति शक्यं वक्तुम् । तथा हि सति श्रैष्ठ्यमपि शक्यमेव भवेत् । न चैन्न्याय्यम् । क्षत्रियत्वजातिरूपलघुप्रवृत्तिनिमित्तक-शक्तिमुपगम्य अन्यत्र गौणप्रयोगसम्भवे तत्रापि शक्तिकल्पनाया अनुचितत्वात् । अपि च-पालनमात्रस्य प्रवृत्तिनिमित्तत्वे स्वगृहक्षेत्रादिपालके कुटुम्बिमात्रेऽपि राजपदं मुख्यं स्यात् । देशपरिपालकत्वस्य निमित्तत्वे तु राजनियुक्ते देशाधिकारिण्यपि राजेति प्रयुज्येत । 'स्वातन्त्र्येण पालकत्वं तन्निमित्तम्' इत्यपि वक्तुमशक्यम् । तथासति, सम्राजा देशविशेषेऽभिषिक्ते [1]तदनधीनतया परिपालकेऽपि राजपदं प्रयुज्येत ।

अतः क्षत्रिये एव राजपदं मुख्यम्, तद्गतं श्रैष्ठ्यं पालकत्वं च गुणं आदाय अन्यत्र गौणो [2]यथायथं सांप्रतिको वा निरूढो वा प्रयोग इत्येव कल्पनम् ।

तत् सिद्धं राजसूयवाक्ये राजपदस्य मुख्यार्थत्यागे प्रमाणाभावात् राजसूयस्य क्षत्रियकर्तृकतया, त्रैवर्णिककर्तृकप्रयोगाय अवेष्टेस्तत उत्कर्षः—इति ॥ ५० ॥

यदुक्तं पूर्वपक्षिणा—अविवाक्येऽहनि मानसग्रहस्य क्रियाप्रवेशदर्शनात् मानसत्वाविशेषेण मनश्चिदादीनामपि क्रियाप्रवेशः - इति, तन्निराकरणार्थंसूत्रमित्याह—**यदुक्तं मानसवदिति** । मानसत्वसामान्यस्य न क्रियाप्रविष्टत्वसामान्यापादकत्वम्, मूलाभावात्—इति परिहाराभिप्रायमाह—**तत् प्रत्युच्यत इति** । किञ्चित्साम्यस्य

---

1. मु. तदधीनतया परिपालकेऽपि राजपदं न प्रयुज्येत । अयं पाठः परिमळाननुसारी
2. यथायथमित्यादि पालके साम्प्रतिकः श्रेष्ठे निरूढः इत्यर्थः ।

मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम् । पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः । न हि किंचित् कस्यचित् केनचित् सामान्यं न संभवति । न च तावता यथास्वं वैषम्यं निवर्तते । मृत्युवत् । यथा 'स वा एष एव मृत्युः य एष एतस्मिन् मण्डले पुरुषः' (श. ब्रा. १०।५।२।३) इति 'अग्निर्वै मृत्युः' (बृ. उ. ३।२।१०) इति च अग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः । यथा च 'असौ वाव लोको गौतमाग्निः तस्यादित्य एव समित्' (छा. उ. ५।४।१) इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिः तद्वत् ॥ ५१ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

परस्तादपि 'अयं वाव लोक एषोऽग्निश्चितः' इत्यस्मिन् अनन्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लक्ष्यते, न शुद्धकर्माङ्गविधित्वम् । तत्र हि 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' ॥ इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसन् इदं गमयति । तथा पुरस्तादपि 'यदेतन्मण्डलं तपति' इत्यस्मिन् ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते, 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति विद्याफलेनैवोपसंहारात् न कर्मप्रधानता ;

---

साम्यान्तरापादकता नास्तीत्यत्र दृष्टान्तमाह—मृत्युवदिति । अग्निमण्डलगतपुरुषयोः यमस्य च मृत्युपदवत्त्वसाम्येऽपि जनसंहरणहेतुत्वं यमस्यैव नान्ययोः इति व्यवस्था परस्य न स्यादिति भावः । 'न हि लोकापत्तिः' इति सूत्रांशं लोकस्यद्युलोकादेः नाग्निभावापत्तिः—इत्येवं व्याचष्टे—यथा चेति ॥ ५१ ॥

पूर्वोत्तरब्राह्मणयोः कर्मानङ्गभूतविद्याविधिदर्शनात् मनश्चिदादीनां न कर्माङ्गत्वमित्याह—परस्तादपीति । ननु 'अयं वाव लोक एषोऽग्निश्चितः' इति वाक्येन चित्याग्नौ पृथिवीलोकदृष्टिविधानात् कर्मप्रवेशोऽस्ति-इत्याशङ्क्योक्तं न शुद्धकर्माङ्गविधित्वमिति । कर्माङ्गावबद्धत्वेऽपि न कर्माङ्गत्वं लोकदृष्टेः-इति भावः । परेणचेति सौत्रचशब्दार्थमाह—तथा पुरस्तादपीति । 'यदेतन्मण्डलं तपति' इत्यस्मिन् ब्राह्मणे हि 'स एष एव मृत्युः य एष एतस्मिन् पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः'

तत्सामान्यात् इहापि तथात्वम् । भूयांसस्त्वग्न्यवयवाः संपादयितव्या विद्यायां—इत्येतस्मात्कारणात् अग्निनानुबध्यते विद्या, न कर्माङ्गत्वात् ।

तस्मात् मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥ ५२ ॥

३० शरीरेभावाधिकरणम्

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये । न ह्यसति देहव्यतिरिक्तात्मनि परलोकफलाश्चोदना उपपद्येरन्, कस्य वा ब्रह्मात्मत्वमुपदिश्येत ।

ननु शास्त्रप्रमुखे एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनः अस्तित्वमुक्तम् ।

---

इति विद्याविशेषं विधाय 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति तत्फलमाम्नातम् । ननु यदि न मनश्चिदादीनां क्रियाङ्गत्वेन क्रियानुप्रवेश इष्टः तर्हि किमर्थं क्रियासन्निधिसमाम्नानम्—इत्याशङ्काव्यावर्तकतया भूयस्त्वात्त्वनुबन्धइति सौत्रांशं व्याचष्टे—भूयांसस्त्विति । अग्निनाऽनुबध्यते—चित्याग्निसमीपे समाम्नायते ॥ ५२ ॥

इति लिङ्गभूयस्त्वाधिकरणम्

अधिकरणार्थं सङ्ग्रहेण प्रदर्शयन् तस्य पूर्वोत्तरतन्त्रोपयोगमाह—इहेति । बन्धः-स्वर्गादिः ।

शास्त्रप्रमुखे इति । अत्र शास्त्रपदं जैमिनीयतन्त्रपरम् । तत्र हि पैतृमेधिके कर्मणि यजमानशरीरे पात्रासादनविधानानन्तरं 'स एष यज्ञायुधी यजमानः स्वर्गं लोकं याति' इति वाक्यमाम्नायते । तत्र यज्ञायुधपदं स्फ्यादिपरम्, 'स्फ्यश्च कपालानि च' इति प्रकृत्य 'एतानि वै दश यज्ञायुधानि' इति श्रुतेः । 'स एषः स्फ्यादिचयनेन संस्कृतः यजमानः' इत्यत्र किं प्रत्यक्षदृश्यो देह एव प्रतिपाद्यः उत देहातिरिक्त आत्मा देहाभेदोपचारेण प्रतिपाद्यः-इति [संशये], भस्मीभवतो देहस्य गमनं न सम्भवति नापि देहातिरिक्तः कश्चिदात्मास्ति-इति, अप्रमाणमेतद्वाक्यम्-इतिशङ्कामुद्भाव्य, युक्त्या देहातिरिक्त आत्मा शबरस्वामिना निरूपितः । अतः किमर्थं पृथगत्र निरूपणम्-इति शङ्काभिप्रायः ।

सत्यमुक्तं भाष्यकृता, न तु तत्र आत्मास्तित्वे सूत्रमस्ति ; इह तु स्वयमेव सूत्रकृता तदस्तित्वं आक्षेपपुरस्सरं प्रतिष्ठापितम् । इत एव चाकृष्य आचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ 'शारीरके वक्ष्यामः' इति उद्धारः कृतः ।

इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय । अपि च–पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्, कोऽसौ पुरुषो यदर्था एते मनश्चिदादयः-इत्यस्यां प्रसक्तौ इदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वं उच्यते। तदस्तित्वाक्षेपार्थं च इदमादिमं सूत्रम् । आक्षेपपूर्विका हि परिहारोक्तिः विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति ।

अत्र, एके-देहमात्रात्मदर्शिनो लोकायतिकाः देहव्यतिरिक्तस्यात्मनः

---

इत एव चाकृष्येति । [1]यथोक्तं तद्वार्तिककृता–"इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥" इति ।

अस्य विचारस्य पादसङ्गतिं प्रासङ्गिकीं दर्शयति–इह चेदमिति । पूर्वाधिकरणेनापि प्रासङ्गिकीं सङ्गतिमाह–अपि चेति ।

उत्तरसूत्रात् व्यतिरेक इति नेति च अपकृष्यते, शरीर इति च आवृत्त्या प्रतिज्ञाकोटावप्यन्तर्भवति । तथा च, आत्मनः शरीरव्यतिरेको नेति एके-लोकायतिकाः मन्यन्ते-इतियोजनामभिप्रेत्य पूर्वपक्षमाह–अत्रैक इत्यादिना । ननु भौतिके शरीरे चैतन्यं न सम्भवति, लोके हि पृथिव्यादिषु भूतभौतिकेषु व्यस्तेषु-विश्लिष्टेषु चैतन्यं नोपलभ्यते, घटादिष्वदर्शनात् । नापि समस्तेषु-मिलितेषु चैतन्यमुपलभ्यते, अग्नितप्ते जलसिक्ते दृतिवायुसंयुक्ते अयसि तददर्शनात् । तत् कथं शरीरे चैतन्यम्-

---

1. यथोक्तं तद्वार्तिककृतेति अनेन—'शारीरके वक्ष्यामः' इति वृत्तिकारोक्तेः विशिष्टाद्वैत्युक्ताभिप्रायः उक्तवार्तिकेदृढत्वोक्तिस्वारस्यविरुद्धः—इति सूचितम् । वेदान्तैर्हि आत्मनो देहातिरेकं उपक्षिप्य ब्रह्मरूपतापर्यन्तं बोध्यते, तेन देहातिरेकबोधो दृढीकृतो भवतीति ।

अभावं मन्यमानाः, समस्तव्यस्तेषु बाह्येषु पृथिव्यादिषु अदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति संभावयन्तः तेभ्यश्चैतन्यं मदशक्तिवत् विज्ञानं चैतन्यविशिष्टः कायः पुरुष इति चाहुः। न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्माऽस्ति, यत्कृतं चैतन्यं देहे स्यात्। देह एव तु चेतनश्चात्मा चेति प्रतिजानते।

हेतुं चाचक्षते शरीरे भावादिति। यद्धि यस्मिन् सति भवति असति च न भवति तत् तद्धर्मत्वेनाध्यवसीयते, यथा अग्निधर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचैतन्यस्मृत्यादयश्च आत्मधर्मत्वेनाभिमता आत्मवादिनाम्, तेऽपि अन्तरेव देहे उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मात् अव्यतिरेको देहादात्मनः- इति ॥ ५३ ॥

---

इतिशङ्काभिप्रायेणोक्तं समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपीति। यथा हि [1]ताम्बूलमदिरादिपरिणामयोग्येषु पूगगुडादिषु प्रत्येकं यथाकथंचिन्मिलितेषु वा मदशक्तेरदर्शनेऽपि ताम्बूलमदिराकारपरिणामे दृष्टत्वात् मदशक्तिरुपेयते, तथा व्यस्तेषु प्रकारान्तरेणमिलितेषु भूतेषु चैतन्यादर्शनेऽपि शरीराकारपरिणते भूतसंघाते चैतन्यं प्रत्यक्षसिद्धत्वात् उपेयम्, प्रत्यक्षस्यार्थस्य भूतत्वसामान्येन अभावसाधने बाधात्, मदिरादावपि मदशक्त्यभावसाधनप्रसङ्गाच्च-इत्यभिप्रेत्य परिहरति—चैतन्यं शरीराकारपरिणतेषु स्यादिति। चैतन्यमित्यस्य व्याख्यानं विज्ञानमिति।

तद्धर्मत्वेनाध्यवसीयत इति। ननु—यत् यदन्वयव्यतिरेकानुविधायि तत् तद्धर्म इति नास्ति नियमः, घटाद्यन्वयव्यतिरेकानुविधायिनः तत्प्रत्यक्षस्य घटादिधर्मत्वानुपगमात्—इति चेत्—न, ये हि पदार्थाः यद्धर्मत्वेनोपलभ्यन्ते यद्विनाभूताश्च नोपलभ्यन्ते असति बाधके ते तद्धर्मा एव भवन्ति—इत्येतत् इह विवक्षितम्। अयञ्चार्थः 'तेऽप्यन्तरेव देहे उपलभ्यमानाः' इत्यादिना उत्तरत्र स्पष्टीकृतः। अनेन च, गौरोऽहंजानामीत्यादिप्रत्यक्षं चैतन्यादीनां देहधर्मत्वे प्रमाणतया उपन्यस्तं भवति। गौरत्वादिकं देहधर्म इति आस्तिकस्यापि सम्मतम्। तत्सामानाधिकरण्येन चैतन्यमुपलभ्यमानं देहधर्म एव भवेत्। न चास्य बाधकं किञ्चित् प्रमाणं उपलभ्यते, येन लोहितस्स्फटिकइत्यादिवत् भ्रमत्वं परिकल्प्येत - इति भावः।

---

1. ताम्बूलेति चर्वणादिसाध्यः पूगादित्रयपरिणामविशेषः ताम्बूलपदार्थ इति भावः।

एवं प्राप्ते ब्रूमः—

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वेतदस्ति यदुक्तं अव्यतिरेको देहादात्मन इति, व्यतिरेक एवास्य देहात् भवितुमर्हति, तद्भावाभावित्वात् । यदि देहभावे भावात् देहधर्मत्वमात्मधर्माणां मन्येत, ततो देहभावेऽप्यभावादतद्धर्मत्वमेवैषां किं न मन्येत । देहधर्मवैलक्षण्यात् । ये हि देहधर्मा रूपादयः ते यावद्देहं भवन्ति । प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति । देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते, न तु आत्मधर्माश्चैतन्यस्मृत्यादयः ।

---

असिद्धे देहव्यतिरिक्ते धर्मिणीति । यदि हि देहव्यतिरिक्त आत्मा चैतन्यादिधर्मी केनचित् प्रमाणेन सिद्धो भवेत्, तदा तदैक्याध्यासं देहे परिकल्प्य गौरोऽहंजानामीत्यादिप्रत्यक्षं लोहितस्स्फटिकइत्यादिप्रत्यक्षतुल्यं कल्प्येतापि । न च देहातिरिक्तात्मसाधकं किञ्चित् उपलभामहे । ननु आगमादिकं देहातिरिक्तात्मसाधकं भविष्यति । प्रत्यक्षव्यतिरिक्तस्याप्रमाणत्वात् इति तदभिमानः ॥ ५३ ॥

ननु—अत्र आद्यस्तर्को 'यदि ज्ञानेच्छादीनां आत्मधर्मत्वेन सम्मतानां देहधर्मत्वमुपेयेत, तथासति यावद्देहं तस्मिन्ननुवृत्तिःस्यात्' इति ; स नोपपद्यते, न हि 'यावत्पर्यन्तं धर्मी भवति तावत्पर्यन्तं धर्मानुवृत्तिः' इति नियमोऽस्ति, आत्मधर्मत्वेन सम्मतानां ज्ञानेच्छादीनां अयावदात्मभावित्वात् । नापि बाह्यद्रव्यधर्माणां अयं नियमः, शब्दस्य अयावदाकाशभावित्वात् । नापि बाह्यमूर्तधर्मनियमः, संयोगादीनामयावद्द्रव्यभावित्वात् । नापि मूर्तविशेषगुणेष्वयन्नियमः, सत्येव धर्मिणि पाकेन पूर्वरूपनाशात् । एवं 'देहधर्मत्वे रूपादिवदन्यैरुपलभ्येत' इति द्वितीयतर्कोऽपि नोपपद्यते, देहधर्मस्य गुरुत्वादेः अन्यैरनुपलभ्यमानत्वात् । अप्रयोजकत्वं च । गौरोऽहंजानामीत्यादिप्रत्यक्षानुसारेण ज्ञानादीनां देहधर्मत्वे सिद्धे तेषां अयावद्द्रव्यभावित्वस्य अन्यैरनुपलभ्यमानत्वस्य च कल्पनोपपत्तेः । प्राणस्य च सिद्धान्ते न देहधर्मत्वम्, नाप्यात्मधर्मत्वम् । अपि तु वायुविकारविशेषस्य तस्य देहान्तर्गतिमात्रम् । चेष्टायाश्च देहधर्मत्वं सिद्धान्तिनोऽपि सम्मतम् । अतस्तयोः ज्ञानादिभिस्सह देहधर्मत्वनिराकरणमसङ्गतम्, अयावद्देहभावित्वेन देहधर्मत्वानुपपत्तेः आत्मधर्मत्वम्-इतिपर्यवसानानुपपत्तेः—इति चेत् ;

**अपिच-सति हि तावद्देहे जीवदवस्थायां एषां भावः शक्यते निश्चेतुं, न त्वसति अभावः। पतितेऽपि कदाचित् अस्मिन् देहे देहान्तरसंचारेण आत्मधर्मा अनुवर्तेरन्। संशयमात्रेणापि परपक्षः प्रतिषिध्यते।**

---

उच्यते—मूर्तविशेषगुणेषु अयं नियमो दृष्टः, सति धर्मिणि पूर्वगुणनाशेऽपि गुणविभाजकोपाधिना पूर्वसजातीयस्य विशेषगुणान्तरस्य यावद्धर्मिपर्यन्तमनुवृत्तिरिति। पाकेन पूर्वरूपनाशेऽपि रूपान्तरोत्पत्तिदर्शनात्। एवं शरीरेऽपि ज्ञानत्वादिजात्याक्रान्तस्य यस्यकस्यचित् यावद्धर्मिपर्यन्तमनुवृत्तिर्भवेदेव। अन्यैरुपलभ्यमानत्वं तु देहविशेषगुणेषु नियतमेव। गुरुत्वस्य तु विशेषगुणत्वाभावात् न व्यभिचारः। प्राणचेष्टोपन्यासस्तु, "तयोः सत्यपि शरीरे कादाचित्कत्वात् अन्यनिमित्तत्वे आवश्यके यद्यदृष्टनिमित्ततोपेयेत तथासति अयावद्देहभाविनस्तस्य[1] देहविशेषगुणत्वानुपपत्तेः तदाश्रयतया आत्मा सिध्यति" इत्यभिप्रायेण। नाप्यप्रयोजकत्वम्। गोरोऽहंजानामीतिप्रत्यक्षस्य ममशरीरमितिव्यतिरेकग्राहिप्रत्यक्षप्रत्ययविरुद्धस्य देहमात्रात्मनिश्चायकत्वानुपपत्त्या [2]तेन रूपादिवैलक्षण्येन ज्ञानादीनां शरीरधर्मत्वसमर्थनानुपपत्तेः। अतः, यथा जपाकुसुमसंपर्कात् स्फटिके आरुण्यप्रतीतिः तद्वियोगे तु जपाकुसुमेऽनुवर्तमानस्यैवारुण्यस्य स्फटिके वियोगः, एवं, शरीरेऽपि आत्मसंपर्कादेव ज्ञानादेः प्रतीतिः तद्वियोगे तु आत्मन्यनुवर्तमानस्यैव ज्ञानादेः शरीरे अभावः—इति कल्पयितुमुचितम्।

तदिदमाह—अपि चेति।

ननु—ममशरीरमितिप्रत्यक्षेण गौरोऽहमित्यस्य न प्रतिरोधः सम्भवति, घटस्यस्वरूपमित्यादिवत् अभेदेऽपि तथाप्रतीत्युपपत्तेः-इति चेत्; तर्हि, गौरोऽहमित्यस्यापि नाभेदसाधकता सम्भवति, लोहितस्स्फटिकइत्यादिवत् भ्रमत्वोपपत्तेः। न चैवंसति कस्मिन्नपि पक्षे निर्धारणं न भवेत्। मास्तु। तावतापि देहमात्रमात्मेति नास्तिकपक्षः पराकृत एव भवति।

तदिदमाह—संशयमात्रेणापीति।

वस्तुतः सिद्धान्तिनो न निर्णयाभावः, दोषशङ्कारहितत्वेन श्रुत्या देहातिरिक्तात्मनिर्णयसम्भवात्। एवं, बालस्य आद्यस्तन्यपानप्रवृत्त्युपयोगीष्टसाधनतानुमित्यनुकूलस्तन्यपानत्वेष्टसाधनत्वव्याप्तिस्मृत्यनुकूलजन्मान्तरानुभवाश्रयतयापि देहा-

---

1. तस्य—अदृष्टस्य।
2. तेन—प्रत्यक्षेण।

किमात्मकं च पुनः इदं चैतन्यं मन्यते यस्य भूतेभ्य उत्पत्तिमिच्छति- इति परः पर्यनुयोक्तव्यः। न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित्तत्त्वं प्रत्येति। यदनुभवनं भूतभौतिकानां तत् चैतन्यमिति चेत्; तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत, स्वात्मनि क्रियाविरोधात्। न ह्यग्निरुष्णः सन् स्वात्मानं दहति। न हि नटः शिक्षितः सन् स्वस्कन्धमधिरोक्ष्यति। नहि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्। नहि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते। विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैव अस्या भूतभौतिकविषयाया उपलब्धेः भावोऽभ्युपगम्यते एवं व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः। उपलब्धिस्वरूप एव च न आत्मेति आत्मनो देह-

---

तिरिक्तात्मसिद्धिः। न च शब्दानुमानयोरप्रामाण्यं वक्तुं युक्तम्, तथात्वे परबोधनार्थं शब्दाप्रयोगापत्त्या मूकतैव लोकस्य स्यात्। आगामिपाकेष्टसाधनताज्ञानासम्भवेन प्रवृत्तिराहित्यापाताच्च। शब्दप्रयोगस्य आगामिपाकेष्टसाधनताज्ञानस्य च शब्दानुमानप्रामाण्याधीनत्वात्। न च शब्दानुमानयोः विसंवाददर्शनेन प्रमाजनकत्वानुपगमेऽपि सम्भावकतोपगमात् नानुपपत्तिरिति वाच्यम्। तथासति, इदंरजतमित्यादिप्रत्यक्षेऽपि विसंवाददर्शनेन प्रत्यक्षस्यापि प्रामाण्यं न स्यात्। तस्मात् असति प्रबलबाधके प्रत्यक्षस्येव अनुमानादेरपि प्रतीतितः प्रामाण्यमुपेयमेवेति।

आत्मनो ज्ञानरूपतया देहातिरेकं साधयितुं ज्ञानस्य देहधर्मत्वव्युदासाय पीठिकामारचयति—**किमात्मकमिति**। ज्ञानं किं स्वतन्त्रं तत्त्वान्तरं वा, उत कस्यचित्तत्त्वस्य धर्मः? नाद्य इत्याह—**न हीति**। आकाशस्यासत्त्वोपगमात् तन्मते चत्वार्येव तत्त्वानीति न ज्ञानं स्वतन्त्रं तत्त्वान्तरम्। द्वितीयं शङ्कते—**यदनुभवनं भूतभौतिकानामिति**। **स्वात्मनि क्रियाविरोधादिति**। ज्ञानस्य हि भूतभौतिकसंघातदेहधर्मत्वोपगमे देहस्यैव कर्तृतया तस्य ज्ञानक्रियां प्रति कर्मता न स्यात्, कर्तृकर्मभावस्य एकत्र विरुद्धत्वात्-इत्यर्थः। रूपादिवत् भूतधर्मस्य प्रकाशकतापि न स्यात्--इत्याह—**न हीत्यादिना**। व्यतिरेकः-देहधर्मत्वाभावः। ननु यदि कर्तृकर्मविरोधप्रसक्त्या न देहधर्मत्वं तथात्वे आत्मधर्मतापि न स्यात्, आत्मनोऽपि ज्ञानविषयत्वात्, कथञ्च देहातिरिक्तज्ञानसिद्ध्या अभिलषितात्मसिद्धिः-इत्यत आह—**उपलब्धिस्वरूप एवेति**।

व्यतिरिक्तत्वम्। नित्यत्वं चोपलब्धेः ऐकरूप्यात्। अहमिदमद्राक्षमिति च अवस्थान्तरयोगेऽपि उपलब्धृत्वेन प्रत्यभिज्ञानात्। स्मृत्याद्युपपत्तेश्च।

यत्तूक्तं—शरीरे भावात् शरीरधर्म उपलब्धिरिति, तत् वर्णितेन प्रकारेण प्रत्युक्तम्। अपि च—सत्सु प्रदीपादिषूपकरणेषु उपलब्धिर्भवति असत्सु न भवतीति, नचैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति। एवं, सति देहे उपलब्धिर्भवति असति च न भवतीति न देहधर्मो भवितुमर्हति। उपकरणत्वमात्रेणापि प्रदीपादिवत् देहोपयोगोपपत्तेः। नचात्यन्तं देहस्योपलब्धावुपयोगोऽपि दृश्यते, निश्चेष्टेऽप्यस्मिन् देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मात् अनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम् ॥५४॥

२१ अङ्गावबद्धाधिकरणम्

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

समाप्ता प्रासङ्गिकी कथा, संप्रति प्रकृतामेवानुवर्तामहे—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. उ. १।१।१) 'लोकेषु पञ्चविधं सामोपासीत' (छा. उ. २।२।१), 'उक्थमुक्थमिति वै प्रजा वदन्ति, तदिदमेवोक्थम्, इयमेव पृथिवी' (ऐ. आ. २।१।२।१) 'अयं वाव लोक एषोऽग्निश्चितः' (श. ब्रा. १०।५।४।१) इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः

---

स्वप्रकाशज्ञानस्वरूपतया आत्मनोऽभ्युपगमात् न कर्तृकर्मभावविरोधः। उपलब्धृत्वेन—स्वपरप्रकाशात्मना।

न चात्यन्तं देहस्येति। शयानदेहस्य स्वरूपसत्तामात्रेण स्वप्ने उपयोगे सत्यपि न तदीयचेष्टादिकं स्वप्नायापेक्षितम्। एवञ्च, स्वापे चेष्टावच्छरीरं अन्यदेव वक्तव्यम्। ततश्च, उत्थितस्य देहद्वयपरामर्शे सत्यपि स्वप्नजाग्रतोः आत्मन एकस्य प्रत्यभिज्ञानात् स्फुट एव देहाद्विवेक इति सूचितं भवति ॥ ५४ ॥

इति शरीरेभावाधिकरणम्

यथा आत्मनो देहाद्विवेकः, एवं शाखान्तराम्नातोद्गीथाद्युपासनानां शाखान्तरीयोद्गीथादिभ्यो विवेकः-इति दृष्टान्तेन प्रत्यवस्थानात् अनन्तरसङ्गतिः। देहातिरिक्तात्मविचारः प्रासङ्गिकी कथा।

लोकत्वेन पञ्चविधस्य साम्नः उपासनं पृथिव्यात्मना उक्थशस्त्रोपासनं पृथिवीलोकात्मना चित्याग्न्युपासनं कर्माङ्गसामादिसम्बन्धित्वात् कर्माङ्गावबद्धम्। ननु—

प्रतिवेदं शाखाभेदेषु विहिताः, ते तच्छाखागतेष्वेवोद्गीथादिषु भवेयुः अथवा सर्वशाखागतेषु-इति विशयः। प्रतिशाखं च स्वरादिभेदादुद्गीथा-दिभेदानुपादाय अयमुपन्यासः।

किं तावत् प्राप्तम्। स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति। कुतः? संनिधानात्। 'उद्गीथमुपासीत' इति हि सामान्यविहितानां विशेषाकाङ्क्षायां, सन्निकृष्टेनैव स्वशाखागतेन विशेषेण आकाङ्क्षानि-वृत्तेः, तदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति। तस्मात् प्रतिशाखं व्यवस्थेति।

एवं प्राप्ते ब्रवीति अङ्गावबद्धास्त्विवति। तुशब्दः पक्षं व्यावर्तयति। नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्, अपितु सर्वशाखास्वनुवर्तेरन्। कुतः? उद्गीथादिश्रुत्यविशेषात्। स्वशाखाव्यवस्थायां हि उद्गीथमुपासी-तेति सामान्यश्रुतिरविशेषप्रवृत्ता सती संनिधानवशेन विशेषे व्यवस्थाप्य-माना पीडिता स्यात्। न चैतन्न्याय्यम्। संनिधानाद्धि श्रुतिर्बलीयसी।

---

नात्र पूर्वपक्षसिद्धान्तयोः फलभेदः, उद्गीथादेः सर्वास्वपि शाखासु एकरूपत्वात्-इत्याशङ्क्याह—प्रतिशाखं चेति। तथा च, पूर्वपक्षे ओमित्येतदक्षरमित्यादिवाक्यं यस्यां शाखायां आम्नातं तद्वाक्यविधेयस्योपासनस्य तच्छाखायां यादृशस्वरादियुक्त-मुद्गीथादिकमाम्नातं तेनैव सम्बन्धः, नान्यादृक्स्वरयुक्तोद्गीथसम्बन्धः, सिद्धान्ते तु नायं नियमः--इति वैषम्यम्।

ननु--उद्गीथमुपासीतेत्यत्र उद्गीथश्रुत्या सर्वे उद्गीथाः प्रतिपाद्यन्ते, तत्र, सन्निधानेन श्रुतिसङ्कोचो न युक्तः-इति मनसि निधाय शङ्कते—कुत इति। सन्निधा-नादिति। अयं भावः—लोके हि घटमानयेत्यादिवाक्ये घटपदेन सर्वेषां घटानां प्रतिपादनेऽपि न सर्वेषां आनयनकर्मतयाऽन्वयो भवति, अपि तु सन्निहितस्यैव। तथा च सन्निधानानुसारेण श्रुतिसङ्कोचो व्युत्पत्तिसिद्धः-इति।

विशेषे व्यवस्थाप्यमाना पीडिता स्यादिति। अयं भावः-लोके हि घटमानयेतिवाक्ये सर्वघटानयनमशक्यम्, अतो विशेषापेक्षायां घटश्रुतेः सन्निधा-नेन सङ्कोचाभ्युपगमेऽपि, प्रकृते शाखान्तरीयोद्गीथादेः उपासनाकर्मत्वे बाधका-भावात् न सन्निधानमात्रेण सङ्कोचः अभ्युपगन्तुं न्याय्यः-इति। एवमपि, यदि

न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात् स्वरादिभेदे सत्यपि उद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेवोद्गीथादिषु एवंजातीयकाः प्रत्ययाः स्युः ॥ ५५ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

अथवा नैवात्र विरोधः शङ्कितव्यः--कथं अन्यशाखागतेषूद्गीथादिषु अन्यशाखाविहिताः प्रत्यया भवेयुरिति। मन्त्रादिवदविरोधोपपत्तेः। तथाहि मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तरे उपसंग्रहो दृश्यते। येषामपि हि शाखिनां 'कुटरुरसि' (मै. सं. १।१।६) इत्यश्मादानमन्त्रो नाम्नातः तेषामप्यसौ विनियोगो दृश्यते "कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीतिवा" इति। येषामपि समिदादयः प्रयाजा नाम्नाताः तेषामपि तेषु गुणविधिराम्नायते–'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति। तथा, येषामपि 'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते 'छागस्य वपाया मेदसोऽनुब्रूहि' इति। तथा, वेदान्तरोत्पन्नानामपि 'अग्ने वेर्होत्रं वेरध्वरम्' इत्येवमादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः। तथा, बह्वृचपठितस्य सूक्तस्य 'यो

---

सामान्यगोचरप्रत्ययापर्यवसानं भवेत् तदा विशेषाकाङ्क्षायां सन्निधानात् सङ्कोचो भवेदपि, न तु तदस्ति। तदाह—न च सामान्याश्रय इति ॥ ५५ ॥

ननु—उद्गीथादिसामान्यस्य अनुष्ठानकाले विशेषापेक्षा। न हि युगपदेव सर्वेषां उपासनाकर्मत्वं वक्तुं शक्यते। तथाच, उपासनाकाले यस्यकस्यचिद्विशेषस्य ग्राह्यत्वावश्यंभावात् अपेक्षानुसारेण सन्निधानं नियामकं भवेत्—इतिशङ्कानिराकरणं अत्र विवक्षितम्।

अयमत्र निराकरणाभिप्रायः—एतादृशविशेषाकाङ्क्षायां सत्यामपि, न तच्छाखाम्नातस्यैव ग्रहणं सन्निधानबलात् सिद्ध्यति। सर्वशाखागतानामप्युद्गीथादीनां अत्र सन्निधानाविशेषात्। शाखान्तरगतानामप्यङ्गानां शाखान्तरप्राप्तेः 'सर्वशाखास्वेकं कर्म' इतिन्यायसिद्धत्वात्। शाखान्तरश्रुतस्यापि शाखान्तरप्राप्तौ लिङ्गमाह—तथाहीति। ऋतवो वै प्रयाजा इति। हेमन्तशिशिरावेकीकृत्य पञ्चत्व-

जात एव प्रथमो मनस्वान्' इत्यस्य 'अध्वर्यवे सजनीयं शस्यम्' इत्यत्र परिग्रहो दृष्टः। तस्मात् यथा आश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिः एवं आश्रितानामपि प्रत्ययानां इत्यविरोधः ॥ ५६ ॥

३२ क्रतुवज्ज्यायस्त्वाधिकरणम्

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥

'प्राचीनशाल औपमन्यवः' (छा. उ. ५।११।१) इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्य उपासनं श्रूयते। व्यस्तोपासनं तावत् 'औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाच एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' (छा. उ. ५।१२।१) इत्यादि। तथा समस्तोपासनमपि 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' (छा. उ. ५।१८।२) इत्यादि।

तत्र संशयः-किमिह उभयथाप्युपासनं स्यात् व्यस्तस्य समस्तस्य च, उत समस्तस्यैवेति। किं तावत् प्राप्तम्? प्रत्यवयवं सुतेजःप्रभृतिषु

---

सङ्ख्यासाम्यात् अभेदोपचारः। समानत्र-समानदेशे। सजनीयं शस्यमिति। योजातएवेतिसूक्ते हि 'सजनासः' इति पदं पठ्यते, अतः तत् सजनीयम् ॥५६॥

इति अङ्गावबद्धाधिकरणम्

पूर्वस्मिन्नधिकरणे, सन्निधानमात्रेण श्रुतिसङ्कोचो न युक्तः—इत्युक्तम्, तर्हि, समस्तोपासनाविधिसन्निधानेन न व्यस्तोपासनाविषयकाख्यातानां स्तावकत्वमात्रेण सङ्कोचः कर्तुं शक्यते—इति प्रत्यवस्थानात् सङ्गतिः।

ननु—समस्तोपासनं व्यस्तोपासनं चेति पूर्वपक्षो न सम्भवति। तथासति वाक्यं भिद्येत। न च तद्युक्तम्। 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इत्युपक्रम्य तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्युपसंहारेण एकवाक्यतावगमात्। अतः समस्तोपासनमेवैकं विवक्षितम्। 'औपमन्यव कं त्वमात्मानमुपास्स इति, दिवमेव भगवो राजन्निति होवाच' इत्यादौ व्यस्ततया दिवादिषु वैश्वानराभेदप्रतिपादनं तु इन्द्रियादिपरत्वप्रतिपादनं यथा वाक्यार्थीभूतपुरुषपरत्वप्रतिपत्त्यर्थं तद्वत् समस्तोपासनाप्रतिपत्त्यर्थमेव भविष्यति—इतिशङ्कां निराकुर्वन् पूर्वपक्षमुपपादयति—प्रत्यवयवमिति। अयं भावः—युक्तं 'इन्द्रियेभ्यः

'उपास्से' इति क्रियापदश्रवणात् 'तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते' इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तम्।

ततोऽभिधीयते—भूम्नः-पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं-प्राधान्यं-अस्मिन् वाक्ये विवक्षितत्वं भवितुमर्हति, न प्रत्येकमवयवोपासनानामपि। क्रतुवत्—यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते न व्यस्तानामपि प्रयोगः प्रयाजादीनाम्, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य, तद्वत्। कुत एतत् भूमैव ज्यायानिति? तथाहि श्रुतिः भूम्नो ज्यायस्त्वं दर्शयति, एकवाक्यतावगमात्। एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात् प्रतीयते।

तथाहि—प्राचीनशालप्रभृतय उद्दालकावसानाः षडृषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना अश्वपतिं कैकेयं राजानं अभ्याजग्मुः—इत्युपक्रम्य, एकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा, 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिना मूर्धादिभावं तेषां विदधाति; मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इत्यादिना च व्यस्तोपासनमपवदति। पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छा. उ. ५।१८।१) इति भूमाश्रयमेव फलं दर्शयति।

---

परा ह्यर्थाः' इत्यादौ आख्यातफलपदयोरश्रवणेन तस्यार्थवादत्वम्। इह तु, दिवादिषु वैश्वानराभेदं प्रतिपाद्य 'य एतमेवमात्मानं वैश्वानरमुपास्ते' इत्याद्याख्यातश्रवणात् 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले' इत्यादिफलपदश्रवणाच्च भूमविद्यायां अवान्तरवाक्यविधया नामाद्युपास्तिविधिवत् इहापि मध्ये व्यस्तोपासनाविधय उपगन्तव्याः। न च-इह 'मूर्धा त्वेष (वैश्वानरस्य) [आत्मन] इति होवाच मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इति व्यस्तोपासनानिन्दा श्रूयते, अतो न तत्र विधिर्युक्तः-इति वाच्यम्। निन्दावाक्यस्य नहिनिन्दान्यायेन स्तावकतया समस्तोपासनाविधिशेषतया व्यस्तोपासनाविधिविरोधित्वाभावात्—इति।

अयमत्र सिद्धान्ताभिप्रायः—नहिनिन्दान्यायेन प्रकृते निन्दावाक्यस्य व्यस्तोपासनाविधिविरोधित्वं नास्ति—इति वक्तुं न शक्यते। अत्र हि, 'मूर्धा त्वेष आत्मन इति होवाच' इति वाक्येन द्युलोके कृत्स्नवैश्वानरदृष्ट्यपवादं तुशब्देनोपक्षिप्य

यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं, तत् एवं सति अङ्गफलानि प्रधाने एव अभ्युच्चिनोतीति द्रष्टव्यम्। तथा उपास्से इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थं, न व्यस्तोपासनविधानार्थम्।

तस्मात् समस्तोपासनपक्ष एव श्रेयानिति।

केचित्तु अत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यते - इति कथयन्ति। तदयुक्तम्। एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्। 'मूर्धा ते व्यपतिष्यत्' इति चैवमादिनिन्दावचनविरोधात्, स्पष्टे चोपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणतत्त्वाभिप्रायेणाप्युपपद्यमानत्वात्॥ ५७॥

---

तस्य वैश्वानरमूर्धभावो विधीयते। एवमुत्तरत्रापि 'चक्षुष्ट्वेतदात्मनः' इत्यादिवाक्यैः आदित्यादिषु कृत्स्नवैश्वानरदृष्ट्यपवादो विवक्ष्यते। पुनश्च 'एते वै खलु यूयं पृथगिवेमं आत्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति इवशब्देन द्युलोकादिषु पृथक्त्वेन वैश्वानरविज्ञानस्य भ्रमत्वं सूच्यते। अतः तद्वाक्यसहकृतं निन्दावाक्यं व्यस्तोपासना अत्र न विवक्षितेत्येव गमयति। ततश्च, 'दिवमेव भगवो राजन्' इत्यादिसन्दर्भो न व्यस्तोपासनाकर्तव्यतापरः, अपि तु तद्व्युदासेन दिवादीनां वैश्वानरमूर्धत्वादिसुतेजस्त्वादिगुणप्रतिपादनार्थ एवेति, प्रकृते भूमविद्यान्यायस्याप्रवृत्तेः समस्तोपासनमेकमेव प्रकृते विवक्षितम्—इति। अयमर्थो भाष्ये 'पुनश्च व्यस्तोपासनं व्यावर्त्य' इत्यनेन संगृहीतः।

केचित्तु—व्यस्तोपासनान्येव अत्र विवक्षितानि, सामस्त्यप्रतिपादन तु व्यस्तोपासनाविधिसिद्धसमुदायानुवादः—इति पूर्वपक्षं कृत्वा, वचनद्वयप्रामाण्यात् समस्तोपासनं व्यस्तोपासनं चेत्युभयमपि विवक्षितं, परं तु, समस्तोपासना व्यस्तोपासनातः प्रशस्तेति सौत्रेण ज्यायस्त्ववचनेन सूच्यते—इति वदन्ति। तन्मतमनुवदति—केचित्त्वत्रेति। तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वादिति। 'समस्तोपासनावाक्यं व्यस्तोपासनाविधिसिद्धसमुदायानुवादः' इति पूर्वपक्षसम्भावनस्य निर्युक्तिकत्वादिति भावः॥ ५७॥

इति क्रतुवज्ज्यायस्त्वाधिकरणम्

३२ नानाशब्दाधिकरणम्

## नाना शब्दादिभेदात् ॥ ५८ ॥

पूर्वस्मिन्नधिकरणे, सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम् । अतः प्राप्ता बुद्धिः अन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्योपासिष्यन्त इति ।

अपि च-नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते । वेद्यं हि रूपं विद्यायाः द्रव्यदैवतमिव यागस्य । वेद्यश्च एक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते 'मनोमयः प्राणशरीरः' (छा. उ. ३।१४।२) 'कं ब्रह्म खं ब्रह्म' (छा. उ. ४।१०।५) 'सत्यकामः सत्यसंकल्पः' (छा. उ. ८।१।५) इत्येवमादिषु । तथा एक एव प्राणः 'प्राणो वाव संवर्गः (छा. उ. ४।३।३) 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा. उ. ५।१।१) 'प्राणो ह पिता प्राणो माता' (छा. उ. ७।१५।१) इत्येवमादिषु । वेद्यैकत्वाच्च विद्यैकत्वम् । श्रुतिनानात्वमपि अस्मिन् पक्षे गुणान्तरपरत्वान्नानर्थकम् ।

तस्मात् स्वपरशाखाविहितं एकवेद्यव्यपाश्रयं गुणजातं उपसंहर्तव्यं विद्याकार्त्स्न्यायेति ।

एवं प्राप्ते प्रतिपाद्यते नानेति । वेद्याभेदेऽपि एवंजातीयका विद्या भिन्ना भवितुमर्हति । कुतः? शब्दादिभेदात् । भवति हि शब्दभेदः 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' इत्येवमादिः । शब्दभेदश्च कर्मभेदहेतुः

---

यथा द्युमूर्धत्वादिगुणभेदेऽपि तद्विशिष्टस्य वैश्वानरस्यैकस्यैव वाक्यप्रतिपाद्यतया उपासनैक्यं, तथा प्रकरणभेदेन भिन्नगुणाम्नाने सत्यपि गुणिनो ब्रह्मण एकत्वात् एकमेव सर्वत्रोपासनम्, एवं गुणभेदेऽपि प्राणस्य सर्वत्रैकत्वात् तद्विषयमप्युपासनं अभिन्नम्—इति दृष्टान्तसङ्गत्या पूर्वपक्षः ।

'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इतिजैमिनिसूत्रस्य अयमर्थः—'यजति' 'ददाति' 'जुहोति' इत्यादिकं समाम्नायते । देवतोद्देशेन द्रव्यत्यागो यागः । स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दानम् । याग एव प्रक्षेपाधिको होमः । तत्र, यागाद्यवच्छिन्ना कर्मापरनामधेया भावना एका उत यागादिरूपधात्वर्थभेदेन भिन्ना । तत्र पूर्वः पक्षः—अनेकभावनाकल्पने गौरवात् सर्ववाक्यालोचनया यागाद्यने-

समधिगतः पुरस्तात् "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्" इति। आदिग्रहणात् गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्याः।

ननु—वेदेत्यादिषु शब्दभेद एवावगम्यते, न यजतीत्यादिवदर्थभेदः, सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात्, अर्थान्तरासंभवाच्च। तत् कथं शब्दभेदाद्विद्याभेदः-इति।

नैष दोषः। मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः। एकस्यापि हि ईश्वरस्योपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते। तथा एकस्यापि प्राणस्य तत्र तत्र उपास्यस्याभेदेऽपि 'अन्यादृग्गुणोऽन्यत्रोपासितव्योऽन्यादृग्गुणश्चान्यत्र' इत्येवमनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदो विज्ञायते। न चात्र 'एको विद्याविधिः इतरे गुणविधयः' इति शक्यं वक्तुम्, विनिगमनायां हेत्वभावात्। अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः। न च अस्मिन् पक्षे समानाः

---

कधात्वर्थावच्छिन्ना भावना एकैवेति। सिद्धान्तस्तु—शब्दान्तरे कर्मभेदः—भिन्नप्रवृत्तिनिमित्तको धातुः शब्दः, तद्भेदे कर्मणः-भावनायाः भेदः, कृतानुबन्धत्वात्-कृतसम्बन्धत्वात्। यजतीत्युक्ते हि यागविशिष्ट एवाख्यातार्थः प्रतीयते। तत्र, भावनाविशेषणतयावगम्यमानेन यागेन स्वसजातीयस्य करणान्तरस्य व्यवच्छिन्नत्वात् तत्र दानादेर्निवेशासम्भवेन, शब्दसामर्थ्यात् दानाद्यवच्छिन्ना भावना भिन्ना एवावगम्यन्त इति न तेषामैक्यकल्पनं न्याय्यम्—इति। अभ्यासादयश्च कर्मभेदहेतवः सर्ववेदान्तप्रत्ययाधिकरणे एव विवृताः।

अनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेरिति। यद्यपि वेदोपासीतेत्यादीनां अर्थैक्यम्, तथापि तत्तत्प्रकरणगतगुणपदसमभिव्याहारेण तत्तद्गुणोपरक्तं तत्तदुपासनमवगम्यते। तथा च, प्रत्ययरूपस्य उपासनस्य विषयभूतगुणावच्छेदेन भेदावगमात् उपासीतेत्यादीनि पदानि भिन्नार्थानि सन्ति शब्दान्तरतां प्राप्नुवन्ति इत्यपि द्रष्टव्यम्। ननु—एवं शब्दान्तरत्वसम्पादनस्यापि प्रकृते गुणभेदायत्तत्वात् गुणकृत एव उपासनानां भेदो वक्तव्यः, स तु न सम्भवति, प्रधानस्य वेद्यस्य ब्रह्मण एकत्वात्—इत्याशङ्क्याह—एकस्यापि हीति। यद्यपि ब्रह्मैकम्, नापि गुणभेदात् तस्य भेदः, तथापि, आम्नानानुसारेण, अस्यामुपासनायामेतावद्गुणविशिष्टमुपास्यं अन्यस्यामेतावद्गुणविशिष्टं इति व्यवस्था व्यज्यते। यथा च उपासनायां ब्रह्म विषय-

सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः। प्रतिप्रकरणं च 'इदंकामेनेदमुपासितव्यं इदंकामेन चेदम्' इति नैराकाङ्क्ष्यावगमात् न एकवाक्यतापत्तिः। न चात्र वैश्वानरविद्यायामिव समस्तचोदना अपराऽस्ति, यद्बलेन प्रतिप्रकरणवर्तीनि अवयवोपासनानि भूत्वा एकवाक्यतामियुः। वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत।

तस्मात् सुष्ठूच्यते नानाशब्दादिभेदादिति।

स्थिते च एतस्मिन्नधिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ॥ ५८ ॥

३४ विकल्पाधिकरणम्

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

स्थिते विद्याभेदे विचार्यते—किमासां इच्छया समुच्चयो विकल्पो वा स्यात्, अथवा विकल्प एव नियमेन-इति।

तत्र, स्थितत्वात्तावद्विद्याभेदस्य न समुच्चयनियमे किंचित् कारणमस्ति।

---

तया निरूपकम्, एवं गुणा अपीति, रूपभेदात् भेदोऽभ्युपगन्तव्यः। एवं रूपभेदेन उपासनानां भेदं प्रदर्श्य, फलभेदादपि भेदमाह—प्रतिप्रकरणं चेति।

ननु—यदि प्रतिप्रकरणमुपासनानां भेदः स्यात्, तथासति सर्ववेदान्तप्रत्ययमिति यत् 'विद्यायाः शाखाभेदेन भेदेऽपि अभेदः' इत्युक्तं तद्विरुध्येत—इत्यत आह—स्थिते चेति। उक्तगत्या उपासनानां भेदे सिद्ध एव यत्र चोदनाद्यविशेषकृतं प्रत्यभिज्ञानमस्ति तत्र तदैक्यमिति न विरोधः।

दहरशाण्डिल्यविद्ययोस्तु यद्यपि असाधारणगुणाम्नानात् उभयत्र प्रत्यभिज्ञानमस्ति, तथापि 'दहरविद्या' 'शाण्डिल्यविद्या' इति समाख्याभेदात् भेदो द्रष्टव्यः ॥ ५८ ॥

इति नानाशब्दाधिकरणम्

एवं विद्याभेदं प्रसाध्य, तासां क्वचिद्विकल्पः क्वचित् याथाकाम्यं इत्यनुष्ठानप्रकारं निरूपयितुं अधिकरणत्रयम्। तत्र उपास्यसाक्षात्कारद्वारकफलासु अहंग्रहोपासनासु विकल्पः अस्मिन्नधिकरणे व्यवस्थाप्यते।

ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते।

नैष दोषः। नित्यताश्रुतिर्हि तत्र कारणम्; नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति। तस्मात् न समुच्चयनियमः।

नापि विकल्पनियमः। विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात्।

पारिशेष्यात् याथाकाम्यमापद्यते।

ननु अविशिष्टफलत्वात् आसां विकल्पो न्याय्यः। तथाहि— 'मनोमयः प्राणशरीरः' (छा. उ. ३।१४।२) 'कं ब्रह्म खं ब्रह्म' (छा. उ. ४।१०।५) 'सत्यकामः सत्यसंकल्पः' (छा. उ. ८।१।५) इत्येवमाद्याः तुल्यवत् ईश्वरप्राप्तिफला लक्ष्यन्ते।

नैष दोषः। समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात्। तस्माद्याथाकाम्यप्राप्तौ—

उच्यते—विकल्प एव आसां भवितुमर्हति, न समुच्चयः। कस्मात्? अविशिष्टफलत्वात्। अविशिष्टं हि आसां फलं उपास्यविषयसाक्षात्करणम्। एकेन चोपासनेन साक्षात्कृते उपास्ये विषये ईश्वरादौ द्वितीयमनर्थकम्।

अपि च असंभव एव साक्षात्करणस्य समुच्चयपक्षे, चित्तविक्षेपहेतुत्वात्। साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः—'यस्य स्यादद्धा न विचिकित्साऽस्ति' (छा. उ. ३।१४।४) इति 'देवो भूत्वा देवानप्येति' (बृ. उ. ४।१।२) इति चैवमाद्याः। स्मृतयश्च—'सदा तद्भावभावितः'

---

तस्माद्याथाकाम्यप्राप्ताविति। यथा दर्शपूर्णमासज्योतिष्टोमादीनां तुल्यफलानामपि फलभूमार्थं समुच्चयः अधिकारिविशेषे एवमहङ्ग्रहोपासनास्वपि—इति पूर्वपक्षाभिप्रायः।

ननु—एकेनोपासनेन ईश्वरे साक्षात्कृतेऽपि न उपासनान्तरं व्यर्थम्। साक्षात्कारद्वारकतदुपासनाफलत उपासनान्तरजनितफलस्यान्यत्वेन तत्कामिनः तदुपासनाजनितसाक्षात्कारसिद्धये तत्र प्रवृत्त्युपपत्तेः-इत्याशङ्क्याह—अपि चेति। उपासनाजनितसाक्षात्कारो हि उपास्यदेवोऽहमिति दृढाभिमान एव, स च निरन्तरं समानविषयकप्रत्ययादेव भवतीति, नोपासनान्तरावकाशस्सम्भवति—इति भावः। यस्य स्यात् अद्धा—अत्यन्ताभिमानः सएवाहमिति, न विचिकित्सा—सएवाहमन्योवेति, स

(भ. गी. ८।६) इत्येवमाद्याः। तस्मात् अविशिष्टफलानां विद्यानां अन्यतमामादाय तत्परः स्यात् यावत् उपास्यविषयसाक्षात्करणेन तत्फलप्राप्तिः इति ॥ ५९ ॥

३५ यथाकामाधिकरणम्

## काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ६० ॥

अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम्। यासु पुनः काम्यासु विद्यासु 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' (छा. उ. ३।१५।२) 'स यो नामब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा. उ. ७।१।५) इति चैवमाद्यासु क्रियावत् अदृष्टेनात्मना आत्मीयं फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति, ताः यथाकामं समुच्चीयेरन् न वा समुच्चीयेरन्, पूर्वहेत्वभावात्—पूर्वस्य-अविशिष्टफलत्वादित्यस्य विकल्पहेतोः अभावात् ॥ ६० ॥

३६ यथाश्रयभावाधिकरणम्

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कर्माङ्गेषूद्गीथादिषु ये आश्रिताः प्रत्यया वेदत्रयविहिताः किं ते

---

एव यथोक्तं फलं प्राप्नोति—इत्यर्थः। अविशिष्टफलानाम्—उपास्यसाक्षात्कारद्वारकफलत्वेन तुल्यफलानाम् ॥ ५९ ॥

इति विकल्पाधिकरणम्

उपासनात्वसामान्यात् नामादिषुब्रह्मदृष्ट्यादिरूपाणामप्युपासनानां विकल्पनियमप्राप्तौ, सिद्धान्तमाह—यासु पुनरित्यादिना। न पुत्ररोदं रोदिति - पुत्रविपत्तिनिमित्तं रोदनं न प्राप्नोति—पुत्रो दीर्घायुर्भवतीति यावत् ॥ ६० ॥

इति यथाकामाधिकरणम्

'तन्निर्धारणानियमः' इत्यधिकरणे, रसतमत्वादिदृष्टीनां कर्माङ्गत्वाभावात् न कर्मसु नियम इत्युक्तम्; इह तु, कर्माङ्गत्वाभावेऽपि कर्माङ्गोद्गीथाद्याश्रितत्वात् नियम इति प्रत्यवस्थीयते। अतो न तेन पौनरुक्त्यम्।

पूर्वं कर्मबहिर्भूतास्वनहङ्ग्रहोपासनासु याथाकाम्यं व्यवस्थापितम्; इह तु, कर्माङ्गावबद्धासु याथाकाम्यं व्यवस्थाप्यते—इति पूर्वेण सङ्गतिः।

समुच्चीयेरन् किं वा यथाकामं स्युः-इति संशये, यथाश्रयभाव इत्याह। यथैव एषामाश्रयाः स्तोत्रादयः संभूय भवन्ति एवं प्रत्यया अपि, आश्रयपरतन्त्रत्वात् प्रत्ययानाम् ॥ ६१ ॥

## शिष्टेश्च ॥ ६२ ॥

यथा वा आश्रयाः स्तोत्रादयः त्रिषु वेदेषु शिष्यन्ते एवमाश्रिता अपि प्रत्ययाः। नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः ॥ ६२ ॥

---

आश्रयपरतन्त्रत्वादिति। ननु—अत्र पारतन्त्र्यं नाम 'यत्रयत्र आश्रयभूता उद्गीथादयः तत्रतत्र तदाश्रिता उपासनाः' इत्येवंरूपं वक्तव्यम्, तच्च न सम्भवति, प्रमाणाभावात्—इति चेत्-न-यत्रयत्र उद्गीथादि शेषिभूतं वर्तते तत्रतत्र उद्गीथादीनां शेषभूताः पदार्था इति यथोपेयते, तथा उद्गीथाश्रिता अपि पदार्थाः कल्पनीयाः, उद्गीथसम्बन्धित्वाविशेषात्। न च एवंकल्पनायां किञ्चिद्बाधकमस्ति। ननु—अस्ति बाधकम्—रसतमत्वादीनि हि फलकामेन उद्गीथादिषु ध्येयानि, कामाश्चानित्याः, अतो रसतमत्वादिदृष्टीनां नित्यताभ्युपगमे नित्यानित्यसंयोगो विरुद्ध आपद्येत – इति चेत्—न—यथा, सूक्तवाकेन क्रियमाणे प्रस्तरप्रहरणे 'आयुराशास्ते' इत्यादिमन्त्रावयवप्रकाश्यानां फलानां अनुषङ्गेण जायमानानां कामो रागिपुरुषेषु प्रतिप्रयोगं अनुवर्तत एवेति कल्प्यते, एवमत्रापि भविष्यति। अतो न नित्यानित्यसंयोगविरोधः प्रकृते बाधकोऽस्ति ॥ ६१ ॥

ननु—यदि क्रत्वङ्गाश्रितानां काम्यानामुपासनानां नित्यत्वं तर्हि तुल्यतया अप्प्रणयनाद्याश्रितानां गोदोहनादीनामपि क्रतुप्रयोगे नित्यत्वं स्यात्—इत्याशङ्कानिवृत्त्यर्थं सूत्रम्।

गोदोहनादिकं हि क्रत्वर्थचमसस्थानापत्त्या फलाय विधीयते, अतः, तस्य नित्यतोपगमे 'चमसेनापः प्रणयेत्' इति शास्त्रं अत्यन्तबाधितं स्यादिति, गोदोहनादीनां नित्यता न कल्प्यते। रसतमत्वादिदृष्टयस्तु, यथा उद्गीथादीन्यङ्गानि किञ्चित्स्थानापत्तिं विनैव शिष्यन्ते एवमेव शिष्यन्ते, न तु गोदोहनादिवत् अङ्गविशेषस्थानापत्त्या। अतः एषां नित्यताकल्पने नास्ति बाधकम् ॥ ६२ ॥

'य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः' इति 'होतृषदनाद्धैव अपि दुरुद्गीतमनुसमाहरति' इति च समाम्नायते। अत्र उद्गीथावयवप्रणवस्य

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैव अपि दुरुद्गीतं अनुसमाहरति' (छा. उ. १।५।५) इति च, प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात् उद्गाता स्वकर्मण्युत्पन्नं क्षत हौत्रात्कर्मणः प्रतिसमादधाति इति ब्रुवन्, वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसंबन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिङ्गदर्शनम् ॥ ६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणं च—विद्याश्रयं सन्तं ओङ्कारं वेदत्रयसाधारणं श्रावयति 'तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमितिशंसत्योमित्युद्गायति' (छा. उ. १।१।९) इति च। ततश्च 'आश्रयसाधारण्यात् आश्रितसाधारण्यम्' इति लिङ्गदर्शनमेव। अथवा—गुणसाधारण्यश्रुतेश्चेति। यदि इमे कर्म-

---

हौत्रप्रणवस्य च अभेदानुसन्धानं उद्गातुर्विधीयते। तस्य च फलम्—दुरुद्गीतं-अङ्गलोपादिना दुष्टं उद्गातृकर्म, होतृषदनात्—होता यस्मिन् कर्मणि कर्तृत्वेन सीदति तत् होतृषदनं हौत्रं कर्म, ततः सम्यक्कृतात् अनुसमाहरति—समादधाति—इति।

अत्र, सामवेदोत्पन्नस्यैतस्योपासनस्य होतृवेदोत्पन्नेन प्रणवेन सम्बन्धो नियतो वक्तव्यः। एवं सति, वेदान्तरोदितप्रणवेन सह, वेदान्तरोदितानामुपासनानामपि वेदान्तरोदितत्वसामान्यात्, तेनोपासनेन सह नियतस्सम्बन्धः सिद्ध्यति। वेदान्तरोदितोपासनाभिस्सह नियतश्च सम्बन्धः अस्योपासनस्य तदैव भवति, यदि समुच्चयनियमः स्यात्—इत्यन्यार्थदर्शनं लिङ्गमेतत् ॥ ६३ ॥

ननु—आश्रयसाधारण्यात् आश्रितानामुपासनानां साधारण्यम्—इति लिङ्गप्रदर्शनपरतया अस्य सूत्रस्य व्याख्या न साध्वी। आश्रयस्य प्रणवस्य उद्गीथावयवस्य वेदत्रयसाधारण्याभावात्। ओमित्याश्रावयतीत्यनेन वाक्येन आश्रयीभूतस्यैव प्रणवस्य न साधारण्यं प्रतिपाद्यते, ओमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रमविरोधात्। अपि तु, प्रणवसामान्यस्य वेदत्रयसाधारण्यप्रतिपादनद्वारा प्रकृतः प्रणवविशेषः स्तूयते। अस्तु वा आश्रयसाधारण्यात् वेदत्रयसाधारण्यं उपासनानाम्, न तु तावता सर्ववेदविहितप्रयोगेषु नियमः सिद्ध्यति, याथाकाम्येऽपि वेदत्रयसाधारण्योपपत्तेः—इत्याशङ्क्य, प्रकारान्तरेण सूत्रं योजयति—अथ वेति। अनेन

गुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युः न स्यात् ततः तदाश्रयाणां प्रत्ययानां सहभावः। ते तूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते। ततश्च आश्रयसहभावात् प्रत्ययसहभाव इति ॥ ६४ ॥

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वेति पक्षव्यावर्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः? तत्सहभावाश्रुतेः। यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति, स्तुतमनुशंसति, प्रस्तोतः साम गाय, होतरेतद्यज' इत्यादिना, नैवं उपासनानां सहभावश्रुतिरस्ति।

---

'आश्रयीभूतानां उद्गीथादीनां समुच्चयनियमाभावात् कथं तदाश्रितानामुपासनानां समुच्चयनियमः स्यात्' इतिशङ्काव्यावर्तकतया सूत्रं योजितं भवति ॥ ६४ ॥

अयमत्र सिद्धान्ताभिप्रायः—सति हि प्रमाणे अङ्गावबद्धोपासनानां समुच्चयनियमो भवेत्, न तु बाधकाभावमात्रेण। अङ्गानां हि विनियोगविधिभिः प्रधानोपकारकतयाऽवगतानां 'यत्रयत्र प्रधानं तत्रतत्राङ्गम्' इतिनियमेऽवगते, सर्वेषामङ्गानां युगपदेवानुष्ठानविधायकेन प्रयोगविधिना समुच्चयस्य बोधिततया साहित्यनियमः सिद्ध्यति। अङ्गाश्रितोपासनानां तु 'यत्रयत्रआश्रयः तत्रतत्रआश्रिताः' इत्यत्र न किञ्चित्प्रमाणमस्ति। अपि तु, 'आश्रयाभावे न आश्रितान्युपासनानि कर्तव्यानि' इत्येतावन्मात्रं आश्रित्यविधानसामर्थ्याल्लभ्यते। न च उद्गीथाङ्गेषु तन्नैयत्यदर्शनमात्रेण सम्बन्धित्वाविशेषात् आश्रितानां प्रत्ययानामपि तत् कल्पयितुं न्याय्यम्। किञ्चित्साधर्म्यदर्शनेन साधर्म्यान्तरकल्पनस्य अतिप्रसङ्गापादकत्वात्। अतश्च तेषां समुच्चयोऽपि न सिद्ध्यति, अङ्गत्वाभावे प्रयोगविधिपरिग्रहासम्भवात्। अतो गोदोहनादिवत् याथाकाम्यमेवेति। अङ्गानां स्तोत्रादीनां सहभावःश्रूयत इति। यद्यपि वैशेषिकवचनबलादङ्गानांसाहित्यावगमो न सार्वत्रिकः, प्रयाजादिषु तदभावात्, अतः प्रयोगविधिरेव अङ्गानां सर्वत्र साहित्यप्रापकः, तथापि, आश्रितानां प्रत्ययानां प्रयोगविधिपरिग्रहाभावेऽपि, यथा स्तोत्रादिषु साहित्यबोधकं विशेषवचनमस्ति एवं अङ्गावबद्धोपासनेषु यदि भवेत् तदा साहित्यनियमो भवेत्, न तु तदप्यस्तीति द्योतयितुं एवं इत्युक्तम् ॥ ६५ ॥

ननु प्रयोगवचन एषां सहभावं प्रापयेत् ।

नेति ब्रूमः, पुरुषार्थत्वादुपासनानाम् । प्रयोगवचनो हि क्रत्वर्थाना-मुद्गीथादीनां सहभावं प्रापयेत् । उद्गीथाद्युपासनानि क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत्पुरुषार्थानि-इत्यवोचाम 'पृथग्घ्यप्रतिबन्धः फलम्' (ब्र. सू. ३।३।४२) इत्यत्र । अयमेव च उपदेशाश्रयो विशेषः अङ्गानां तदालम्बनानां चोपासनानाम्—यत् एकेषां क्रत्वर्थत्वं एकेषां पुरुषार्थत्वमिति । परं च लिङ्गद्वयं अकारणमुपासनसहभावस्य, श्रुतिन्यायाभावात् । न च प्रति-प्रयोगं आश्रयकार्त्स्न्योपसंहारात् आश्रितानामपि तथात्वं विज्ञातुं शक्यम् । अतत्प्रयुक्तत्वादुपासनानाम् । आश्रयतन्त्राण्यपि ह्युपासनानि कामं आश्रया-भावे मा भूवन्, न तु आश्रयसहभावेन सहभावनियममर्हन्ति, तत्सह-भावाश्रुतेरेव ।

तस्मात् यथाकाममेव उपासनान्यनुष्ठीयेरन् ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिः असहभावं प्रत्ययानाम्—'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा. उ. ४।१७।१०) इति । सर्वप्रत्ययो-पसंहारे हि सर्वे सर्वविदः इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वं इतरेषां संकीर्त्येत ।

---

छान्दोग्ये 'यद्यृक्तो रिष्येत् भूःस्वाहेति गार्हपत्ये जुहुयात् यदि यजुष्टो रिष्येत् भुवःस्वाहेति दक्षिणाग्नौ जुहुयात् यदि सामतो रिष्येत् स्वःस्वाहेत्याहवनीये जुहुयात्' रिष्येत्—व्यङ्गतामापादयेत् - एवं प्रायश्चित्तमाम्नाय, 'एवंविद्ध वै ब्रह्मा' इत्यादिकं समाम्नातम् । तत्र एवंविदित्यनेन प्रकृतप्रायश्चित्तवित्त्वं विवक्षितम् । यदि हि उपासनानां साहित्यनियमो भवेत्, तदा यजमानस्य सर्वेषामृत्विजां च प्रायश्चि-त्तेन ब्रह्मणा रक्षणीयत्ववचनं अनुपपन्नं भवेत् । यजमानस्य रक्षणं हि कर्मफलप्रति-बन्धनिरासरूपम् । तत्तु अप्रतिबन्धफलार्थविहितैरुद्गीथाद्युपासनैरेव सिद्धम् । ऋत्विजां रक्षणं अङ्गलोपकृतवैगुण्यपरिहारः । 'मन्त्रहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः' इति मन्त्रपदोपलक्षिताङ्गवैकल्ये ऋत्विजां दोषश्रवणात् । तदपि 'यः

तस्मात् यथाकामं उपासनानां समुच्चयो विकल्पो वेति ॥ ६६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

प्रणवः स उद्गीथः' इत्याद्यङ्गवैगुण्यपरिहारार्थंविहितैरुपासनैरेव सिद्धम् । साहित्य-नियमाभावे तु, यदा उपासनानि न सन्ति तस्मिन् पक्षे ब्रह्मणा रक्षणीयत्ववचन-मुपपद्यते इति ॥ ६६ ॥

इति यथाश्रयभावाधिकरणम्

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्या
तृतीयस्याध्यायस्य तृतीयः पादः ॥

ॐ

—: * :—

तृतीयाध्याये चतुर्थः पादः

१ पुरुषार्थाधिकरणम्

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अथेदानीं, औपनिषदमात्मज्ञानं किं अधिकारिद्वारेण कर्मण्येवानुप्रविशति आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवति-इति मीमांसमानः सिद्धान्तेनैव तावत् उपक्रमते-पुरुषार्थोऽत इति । अस्मात्-वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात् पुरुषार्थः सिद्ध्यतीति बादरायण आचार्यो मन्यते । कुत एतदवगम्यते ? शब्दादित्याह । तथाहि—'तरति शोकमात्मवित्' (छा. उ. ७।१।३) 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३।२।९) 'ब्रह्मविदाप्नोति परम्' (तै. उ. २।१।१) 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६।१४।२) इति, य आत्माऽपहतपाप्मा' (छा. उ. ८।७।१) इत्युपक्रम्य 'स सर्वांश्चलोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' (छा. उ. ८।७।१) इति, 'आत्मा वा अरे द्रष्टव्यः' (बृ. उ. ४।५।६) इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' (बृ. उ. ४।५।१५) इत्येवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति ॥ १ ॥

---

पूर्वस्मिन् पादे अनेकशाखागतवाक्योदाहरणेन विद्याविषयीभूतो वाक्यार्थो निरूपितः । इह पादे, तस्या एव विद्यायाः सन्निपत्योपकारकाणि शमादीनि यज्ञादीनि कर्माणि श्रवणादीनि च निरूप्यन्ते । विद्यायाश्चाङ्गाकाङ्क्षा फलवत्त्वे सिद्धे एव भवतीत्यतः प्रथमाधिकरणे उपोद्घाततया विद्यायाः स्वातन्त्र्येण फलवत्ता निरूप्यते । विषयश्च विद्यास्वरूपकोटौ निविष्ट इति अन्तरङ्गस्य तस्य निरूपणं प्रथमं कृतम्, विद्योत्पत्त्युपयोगितया विषयमपेक्ष्यबहिरङ्गानां सन्निपत्योपकारकाणां निरूपणं तदनन्तरमिति अवसरसङ्गत्या चतुर्थपादविचारः प्रवर्तते । एवं विद्याङ्गनिरूपणमेव पादार्थः, विद्यायाः फलसाधनतानिरूपणं तु तदुपयोगितयेति न पादार्थभेदः ॥ १ ॥

अथात्र प्रत्यवतिष्ठते—

## शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

कर्तृत्वेन आत्मनः कर्मशेषत्वात् तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् विषयद्वारेण कर्मसंबन्ध्येव-इत्यतः तस्मिन् अवगतप्रयोजने आत्मज्ञाने या फलश्रुतिः सा अर्थवादः-इति जैमिनिराचार्यो मन्यते, यथा-अन्येषु-द्रव्य-संस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापँ श्लोकँ शृणोति', 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिः अर्थवादः, तद्वत् ।

कथं पुनः अस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते । कर्तृद्वारेण वाक्यात् तद्विज्ञानस्य क्रतुसंबन्ध इति चेत्, न—वाक्याद्विनियोगानुपपत्तेः । अव्यभिचारिणा हि केनचिद्द्वारेण अनारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते । कर्ता तु व्यभिचारि द्वारम्, लौकिकवैदिककर्मसाधारण्यात् । तस्मात् न तद्द्वारेण आत्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति ।

---

सिद्धान्तेनाधिकरणमुपक्रम्य पूर्वपक्षप्रतिपादकं सूत्रं अवतारयति—अथात्रेति ।

जैमिनिना हि 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात्' इत्यत्र 'यस्य पर्णमयी जुहूर्भवति' इति श्रुते पर्णतारूपद्रव्ये 'न स पापं श्लोकं शृणोति' इति श्रुतस्य अपापश्लोकश्रवणस्य, 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति चक्षुरञ्जनरूपे संस्कारे श्रुतस्य शत्रुचक्षुर्नाशस्य, 'यत् प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते' इति प्रयाजादिकर्मणि श्रुतस्य यजमानवर्मकरणस्य च, न फलरूपता; फलस्य भावितया वर्तमाननिर्देशानुपपत्तेः, फलताबोधककमिपदसमभिव्याहाराभावात्, पर्णतादीनां क्रत्वर्थत्वेन क्रतूपकारमादायैव फलाकाङ्क्षानिवृत्तेश्च-इति निरूपितम् ।

तत्र अञ्जनस्य प्रयाजादीनाञ्च प्रकरणादेव कर्माङ्गता सिध्यति, पर्णतायास्त्वनारभ्याधीतायाः यद्यपि न प्रकरणात् क्रत्वङ्गता सिध्यति, तथापि, तस्या विहिताया नैयत्यावगमात् फलाकाङ्क्षायां, जुहूस्वरूपे नियमानुपयोगेन तस्य फलत्वानु-

न—व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्र अनुपयोगात् । न हि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु कर्मसु उपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः । वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इति उपयुज्यते व्यतिरेकविज्ञानम् ।

ननु—अपहतपाप्मत्वादिविशेषणात् असंसार्यात्मविषयं औपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्,

---

पपत्तेः, अव्यभिचरितक्रतुसम्बन्धया जुह्वा क्रतोरुपस्थापितत्वात् क्रत्वपूर्वसाधनतास्वरूपांशमादाय जुह्वां तस्य निवेशः कल्प्यते । ततश्च जुहूपदे क्रतुसाधनतालक्षणोपगमात् वाक्येनैव क्रतुसम्बन्धः सिद्ध्यति ।

एवं अनारभ्याधीतस्यात्मज्ञानस्यापि क्रतावेवासाधारण्योपगमेन देहातिरेकिणाऽऽत्मना क्रतोरुपस्थापितत्वात् वाक्येनैव क्रतुसम्बन्धे सति तत्र श्रुतस्य तरति शोकमात्मविदित्यादेः न फलसमर्पकता, अपि तु फलार्थवादतैव—इति पूर्वपक्षो नात्र प्रवर्तते । यदि हि देहातिरिक्त एवात्मा उपनिषत्सु प्रतिपाद्येत तदा एवं भवेत्, न तु तथास्ति । देहातिरिक्तस्यापि तस्य असंसारित्वमपि हि उपनिषत्सु प्रतिपाद्यते । सर्वज्ञत्वादिगुणकश्चात्मा प्रतिपाद्यते । नास्य क्रतुषु उपयोगोऽस्ति । एतेषां च वचनानां नार्थान्तरपरतेत्यपि तत्रतत्र प्रसाधितमेव । अशनायाद्यतीतासंसार्यात्मज्ञानं च क्रतुप्रवृत्तिविरोध्यपि । अतः कथं तस्य क्रत्वङ्गता पर्णतान्यायेन भवेत् । अपि च—देहातिरिक्तात्मज्ञानं 'क्रतूपयुक्तं' इत्येतावन्मात्रेणैव न अप्रकृते क्रतौ निवेष्टुमर्हति । पर्णतादिवत् सत्यां हि तस्य प्रयोजनाकाङ्क्षायां क्रतौ प्रवेशो भवेत्, न तु सास्ति; स्वप्रकरणाधीततत्त्वमस्यादिमहावाक्यार्थज्ञाने त्वंपदार्थशोधनद्वारोपयुक्तस्य तस्य प्रयोजनाकाङ्क्षायाः पुनरभावात् । यदि च उपकारकतामात्रेण क्रतौ प्रवेशः स्यात्, तथा सति निषिद्धाननुष्ठानस्यापि 'देहातिरिक्तात्मज्ञानापेक्षतया तत्रापि तदङ्गं भवेत् । न चेष्टापत्तिः । तथाहिसति, 'देहातिरिक्तात्मज्ञानवतैव कृतं निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय' इति निषेधवाक्यार्थपर्यवसानेन, देहातिरिक्तात्मज्ञानरहितस्य निषिद्धानुष्ठान इव तदननुष्ठानेऽपि प्रत्यवायापरिहाराविशेषानुसन्धानेन निषिद्धानुष्ठान एव प्रवृत्तिप्रसङ्गात् । अतः न अपेक्षामात्रेण अनारभ्याधीतस्य देहातिरिक्तात्मज्ञानस्यापि कर्माङ्गता वक्तुं शक्यते, तदधिकात्मज्ञानस्य तु दूरत एव सा निरस्ता भवति—इत्यभिप्रायेण शङ्कते—नन्वपहतपाप्मत्वादीत्यादिना ।

न—प्रियादिसंसूचितस्य संसारिण एवात्मनो द्रष्टव्यत्वेनोपदेशात्। अपहतपाप्मत्वादिविशेषणं तु स्तुत्यर्थं भविष्यति।

ननु तत्र तत्र प्रसाधितमेतत्—अधिकं असंसारि ब्रह्म जगत्कारणं तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपं उपनिषत्सूपदिश्यते-इति।

सत्यं प्रसाधितम्; तस्यैव तु स्थूणानिखननवत् फलद्वारेण आक्षेपसमाधाने क्रियेते दार्ढ्याय ॥ २ ॥

## आचारदर्शनात् ॥ ३ ॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ. उ. ३।१।१) 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छा. उ. ५।११।५) इत्येवमादीनि ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्मसबन्धदर्शनानि भवन्ति। तथा उद्दालकादीनामपि पुत्रानुशासनादिदर्शनाद्गार्हस्थ्यसंबन्धोऽवगम्यते। केवलाच्चेज्ज्ञानात् पुरुषार्थसिद्धिः स्यात् किमर्थं अनेकायाससमन्वितानि कर्माणि ते कुर्युः, 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् ॥ ३ ॥

---

सत्यं प्रसाधितं तस्यैव त्विति। अयमर्थः—यथा अनारभ्याधीतायाः पर्णताया लिङ्गोपस्थापिते क्रतौ वाक्येन विनियोगः, नैवं आत्मज्ञानस्य अव्यभिचरितपदार्थद्वारोपस्थिते क्रतौ वाक्येन विनियोगो बोध्यते, अपि तु, यथा 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इति वाक्येन स्वशब्दोपात्ते क्रतौ चयनाग्नेर्विनियोगः, एवं आत्मज्ञानस्यापि [1]वचनादेव क्रतौ विनियोगः। तथाच, 'वचनबलादात्मज्ञानस्य कर्मणि विनियुक्तत्वेऽपि तरतिशोकमात्मविदित्यादिवचनानुसारेण मोक्षार्थताप्यस्तु, खादिरादिवदुभयार्थत्वोपपत्तेः' इति शङ्कायां 'शेषत्वात् पुरुषार्थवादः' इति सूत्रेण तरतिशोकमात्मविदित्यादीनामर्थवादता वर्तमानापदेशत्वादिना प्रसाध्यते। सिद्धे च केवलक्रत्वर्थत्वे क्रतौ अपहतपाप्मत्वादिविशेषणस्यानपेक्षितत्वात् असंसारित्वादेर्विरुद्धत्वाच्च तदंशे उपनिषदां न तात्पर्यम्—इत्यपि शङ्का उन्मिषति—इति ॥ २ ॥

अनारभ्याधीतस्यात्मज्ञानस्य क्रत्वङ्गताप्रसाधनार्थानि 'आचारदर्शनात्' इत्येवमादीनि सूत्राणि ॥ ३ ॥

ननु—जनकोद्दालकप्रभृतीनां निर्विशेषविद्यानिष्ठत्वेनाभिमतानां कर्मदर्शन

---

1. वचनात्—यदेवविद्ययाकरोतीत्यादिवचनात्।

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. उ. १।१।१०) इति च कर्मशेषत्वश्रवणात् विद्याया न केवलायाः पुरुषार्थहेतुत्वम् ॥ ४ ॥

## समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' (बृ. उ. ४।४।२) इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनात् न स्वातन्त्र्यं विद्यायाः ॥ ५ ॥

## तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छा. उ. ८।१५।१) इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति। तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम्।

---

'लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि' इतिन्यायेनोपपद्यते। अश्वपतेः कैकेयस्य वैश्वानरज्ञाननिष्ठस्य 'यक्ष्यमाणो वै' इत्यादिवाक्येनावगम्यमानं कर्म अनुपपन्नं न भवति। सविशेषविदां कर्मसमुच्चयस्यापेक्षितत्वात्। कथं वा ज्ञानकर्मणोरेकपुरुषनिष्ठत्वमात्रदर्शनमात्रेण विद्यायाः कर्माङ्गत्वं निर्णेतुं शक्यम्, कर्मैवविद्याङ्गमित्यपि वक्तुं शक्यत्वात्। तस्मात् न असति मूलप्रमाणे इदं विद्यायाः कर्माङ्गताबोधनसमर्थं लिङ्गं भवति—इत्यत आह—तच्छ्रुतेरिति।

यद्यपि 'यदेव विद्यया करोति' इत्यादिवचनं न विद्यायाः कर्माङ्गताबोधकमिति 'तन्निर्धारणानियमः' इति सूत्रे व्यवस्थापितम्, तथापि, अङ्गताबोधकतामुपेत्यैव आसार्वत्रिकीति परिहारान्तरं वक्तुं अयमुपक्षेपः ॥ ४ ॥

यद्यपि, विद्याकर्मणोः फलारम्भे साहित्यदर्शनं कर्मणां विद्याङ्गत्वेऽपि उपपन्नम्, तथापि, यदेवविद्ययेत्यादिवचनानुसारेण आचारदर्शनवदिदमपि कर्मप्राधान्यमादायैवोपपादनीयमिति भावः ॥ ५ ॥

इतिचैवंजातीयका श्रुतिः इत्यनेन 'धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन्सर्वभूतान्यन्यत्रतीर्थेभ्यः' इति शेषो गृह्यते। यथा-

नन्वत्र अधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते नार्थविज्ञानम्; नैष दोषः—दृष्टार्थत्वात् वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम् ॥ ६ ॥

---

विधानं-यथाशास्त्रम्, गुरोःकर्मातिशेषेण—गुरोश्शुश्रूषाख्यं कर्म कृत्वा अवशिष्टेन कालेन, आचार्यकुले स्थित्वा वेदमधीत्य, अभिसमावृत्य—गुरुकुलवासं परिसमाप्य, कुटुम्बे—गार्हस्थ्याश्रमे स्थितः शुचौ देशे अविस्मरणार्थं स्वाध्यायमधीयानः, धार्मिकान् पुत्रान् शिष्यांश्च कुर्वन्, आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य-जितेन्द्रियस्सन् तीर्थेभ्यः-विहितकर्मभ्यः अन्यत्र भूतानि-प्राणिनः अहिंसन् विद्यमानः.... ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते ।

ननु—अनेन वाक्येन कृत्स्नवेदाध्ययनानन्तरं गार्हस्थ्यविधानमात्रेण विद्यायाः कर्माङ्गता कथं लभ्यते । यद्युच्यते—अध्ययनभावनाया अर्थज्ञानफलकत्वात् भावनासमाप्तिः फलनिष्पत्तावेवेति अधीत्येत्यनेन 'अध्ययनेन वेदार्थज्ञानं सम्पाद्य' इति प्रतिपाद्यते । तथा च, कृत्स्नवेदार्थज्ञानवतो गार्हस्थ्यविधिबलात्, गार्हस्थ्यविहितकर्मानुपयोगेवेदार्थज्ञानस्य तद्वतो गार्हस्थ्यविधानस्यानुपपन्नतया, कृत्स्नवेदार्थज्ञानं गार्हस्थ्यविहितकर्मसूपयुज्यत इति सिद्धौ औपनिषदमात्मज्ञानमपि गार्हस्थ्याश्रमोपयुक्तमिति सिद्ध्यति-इति । एतावतापि हि शाब्दज्ञानस्य कर्माङ्गता सिध्यति, न तु साक्षात्कारपर्यन्ताया आत्मविद्यायाः-इति चेत्;

उच्यते—भवेदेषा अनुपपत्तिः यदि एतत्पूर्वपक्षे परमात्मविषया साक्षात्कारपर्यन्ता काचिद्विद्या भवेत्, न तु साऽस्ति, उपनिषज्जन्यज्ञानस्य कर्मविनियोगसामर्थ्येन यावन्मात्रं कर्मसूपयुज्यते देहातिरिक्तात्मगोचरं तावन्मात्रस्यैव ज्ञानस्य उपनिषत्प्रयोजनत्वोपगमात् ।

अस्तु वा संसार्यधिकात्मगोचरा साक्षात्कारपर्यन्ता आत्मविद्या । तस्या अपि, उपनिषज्जन्यात्मज्ञानस्य विद्यानुष्ठानोपयोगिनः कर्माङ्गत्वावगमेन विद्यायाः कर्माङ्गत्वं विना तदनुपपत्तेः कर्माङ्गता परिकल्प्यते । असंसार्यात्मगोचरायाश्च विद्यायाः कर्माङ्गता न कर्मज्ञानवत् दृष्टविधया, नापि प्रयाजादिवदारादुपकारकतया, अपि तु 'आत्मानमुपासीत' 'आत्मा द्रष्टव्यः' इत्यादिवाक्यैरात्मसंस्कारकत्वावगमात्, कर्मबहिर्भूतस्य चात्मनः अवगतकर्माङ्गभावविद्यासंस्कार्यत्वानुपपत्तेः आत्मपदस्य कर्मकर्तृपरतां स्वीकृत्य कर्तृसंस्कारभूता औपनिषदी विद्येति स्वीक्रियते ।

## नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' (ई. उ. २) इति, तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' (श. ब्रा. १२। ४।१।१) इत्येवंजातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया इति ॥ ७ ॥

एवं प्राप्ते प्रतिविधत्ते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दात् पक्षो विपरिवर्तते। यदुक्तं 'शेषत्वात् पुरुषार्थवादः' इति, तन्नोपपद्यते। कस्मात्? अधिकोपदेशात्। यदि संसार्येवात्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्, ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात्। अधिकस्तावच्छारीरादात्मनः असंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितः अपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु। न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिनत्तीति वक्ष्यति 'उपमर्दं च' (ब्र. सू. ३।४।१६) इत्यत्र। तस्मात् 'पुरुषार्थोऽतः शब्दात्' इति यन्मतं भगवतो बादरायणस्य तत् तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथाहि तं-अधिकं शारीरात् ईश्वरमात्मानं दर्शयन्ति श्रुतयः 'यः सर्वज्ञः सर्ववित्' (मु. उ. १।१।९) 'भीषास्माद् वातः पवते' (तै. उ. २।८।१) 'महद्भयं

---

तदभिप्रायेणोक्तं भाष्ये-कर्तृत्वेनात्मनः कर्मशेषत्वात् तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् [1]कर्मण्येवानुप्रविशतीति ॥ ६ ॥

'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्' इतिवाक्येन आत्मविद्यां प्रस्तुत्य, तद्गतः 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इतिवाक्येन कर्मसु विनियोगप्रतिपादनात् विद्यायाः कर्माङ्गता अवगम्यते। जरामर्यम्—जरामरणपर्यन्तम्। अमुमेवार्थं विशदयति—जरया वा ह्येवास्मान्मुच्यते मृत्युना वेति। तथा च विदुषोऽपि कर्मकर्तव्यतायाः आवश्यकतया विद्यायाः कर्माङ्गता सिद्ध्यति ॥ ७ ॥

---

1. विषयद्वारेण कर्मसम्बन्ध्येव-इति भाष्यस्य अर्थतोऽनुवादोऽयम्।

वज्रमुद्यतम्' (क. उ. ६।२) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ. उ. ३।८।९) 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा. उ. ६।२।३) इत्येवमाद्याः।

यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयाऽनुकर्षणं 'आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः' (बृ. उ. २।४।५) 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृ. उ. ३।४।१) 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा. उ. ८।७।४) इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति चैवमादि, तदपि 'अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः' (बृ. उ. २।४।१०) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, (बृ. उ. ३।५।१) 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा. उ. ८।१२।३) इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायां अत्यन्ताभेदाभिप्रायमिति अविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्, उपाधिकृतं तु शारीरत्वम्, 'तत्त्वमसि' नान्यदतोऽस्ति द्रष्टृ' (बृ. उ. ३।८।११) इत्यादिश्रुतिभ्यः। सर्वं चैतत् विस्तरेण अस्माभिः पुरस्तात् तत्र तत्र वर्णितम् ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

यत्तूक्तं आचारदर्शनात् कर्मशेषो विद्येति।

अत्र ब्रूमः—तुल्यं आचारदर्शनं अकर्मशेषत्वेऽपि विद्यायाः। तथाहि श्रुतिर्भवति 'एतद्ध स्म वै तद्विद्वांस आहू ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' (ऐ. आ. २।६।३) एतद्ध स्म वै तत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' (कौ. उ. २।५) 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ. उ. ३।५।१) इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदां अकर्मनिष्ठत्वं दृश्यते 'एतावदरे खल्वमृतत्वमिति होक्त्वा

---

अनेन सूत्रेण, समन्वयाध्यायादौ यो वेदान्तार्थः प्रसाधितः तस्य स्मरणं, 'देहातिरिक्त एवात्मा वेदान्तेषु प्रतिपाद्यः' इति पूर्वपक्ष्यभिमाननिरासाय। तदुपन्यस्तकर्माङ्गतासाधकप्रमाणानामन्यथाकरणं तु 'तुल्यं तु दर्शनम्' इत्यादिभिस्सूत्रैः क्रियते ॥ ८ ॥

याज्ञवल्क्यो विजहार' (बृ. उ. ४।५।१५) इत्यादिश्रुतिभ्यः। अपिच– 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम्। संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्। न तत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात् ॥ ९ ॥

यत्पुनरुक्तं 'तच्छ्रुतेः' इति, अत्र ब्रूमः—

## असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोति' इत्येषा श्रुतिः न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात्। प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. उ. १।१।१) इत्यत्र ॥ १० ॥

## विभागः शतवत् ॥ ११ ॥

यदप्युक्तं 'तं विद्याकर्मणी समन्वारभेते' इत्येतत्समन्वारम्भवचनं अस्वातन्त्र्ये विद्याया लिङ्गमिति, तत् प्रत्युच्यते। विभागोऽत्र द्रष्टव्यः–

---

अपि च यक्ष्यमाणो वै भगवन्तोऽहमस्मीत्यादि। इदमुपलक्षणं 'जनकादीनामपि निर्विशेषविदां कर्मनिष्ठता लोकसङ्ग्रहोपयुक्ता भविष्यति' इत्यस्यापि ॥ ९ ॥

ननु–यदेवविद्ययाकरोतीत्यत्र एवकारेण, 'य एव धूमवान् स वह्निमान्' इत्यत्र यथा कृत्स्नधूमाधिकरणनिष्ठता वह्नेः प्रतीयते तथा कृत्स्नकर्मसम्बन्धिता विद्यायाः प्रतीयते, न चायमर्थ उद्गीथविद्याग्रहणे सम्भवति, तस्या उद्गीथरहितकर्मसु अभावात्। अतोऽत्र विद्यापदेन यत्किञ्चित्कर्माङ्गानवबद्धामात्मविद्यामुपादाय तस्याः सर्वकर्मसम्बन्धो बोध्यत इत्येव स्वीकर्तव्यम्—इति चेत्;

न–'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इति पूर्ववाक्ये एवंपदेन प्रकृतामुद्गीथविद्यां परामृश्य, तस्या विकल्पं प्रतिपाद्य, विद्यानुष्ठानपक्षेफलाधिक्यप्रतिपादनार्थमेतद्वाक्यं यदेवविद्ययाकरोतीति हि [1]अस्मिन् पक्षे। अतो नात्र उद्गीथविद्यातिरिक्तविद्याग्रहणावसरः। एवकारश्च उद्गीथयुक्तकर्मप्रयोगसाकल्यपरो भविष्यतीति भावः। यथा च यदेवविद्ययेतितृतीयाया न कर्मशेषत्वप्रतिपादकत्वं तथा व्युत्पादितं 'तन्निर्धारणानियमः' इत्यत्र ॥ १० ॥

---

1. अस्मिन् पक्षे—विद्यापदेन उद्गीथविद्याग्रहणपक्षे।

विद्या अन्यं पुरुषं अन्वारभते कर्मान्यमिति । शतवत्—यथा 'शतं आभ्यां दीयताम्' इत्युक्ते, विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वत् । न चेदं समन्वारम्भवचनं मुमुक्षुविषयम्, 'इति नु कामयमानः' (बृ. उ. ४।४।६) इति संसारिविषयत्वोपसंहारात्, 'अथाकामयमानः' (बृ. उ. ४।४।६) इति च मुमुक्षोः पृथगुपक्रमात् । तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते, विशेषाभावात्, कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात् । एवं सति अविभागेनापि इदं समन्वारम्भवचनं अवकल्पते ॥ ११ ॥

यच्चैतत् 'तद्वतो विधानात्' इति, अत उत्तरं पठति—

## अध्ययनमात्रवतः ॥ १२ ॥

'आचार्यकुलाद्वेदमधीत्य' इत्यत्र अध्ययनमात्रस्य श्रवणात् अध्ययनमात्रवत एव कर्मविधिः-इत्यध्यवस्यामः । नन्वेवं सति अविद्यत्वात् अनधिकारः कर्मसु प्रसज्येत । नैष दोषः । न वयमध्ययनप्रभवं कर्माव-

---

ननु—विद्या अन्यं पुरुषं अन्वारभते कर्म चान्यमिति विभागेन व्याख्यानं नातीव समीचीनम्, विद्याकर्मणी इति द्वन्द्वसमासबलेन साहित्यावगमात्—इत्याशङ्क्य, स्वयं [1]प्रकारान्तरेण श्रुतिं व्याचष्टे—न चेदं समन्वारम्भवचनमिति ॥११॥

अधीत्येत्यत्र अध्ययनभावनासमाप्त्यवगमेऽपि न विद्यायाः कर्माङ्गता भवति, अध्ययनस्याक्षरावाप्तिफलकताया अपशूद्राधिकरणे प्रतिपादिततया अक्षरावाप्तिपर्यन्तकृत्स्नाध्ययनवत एव अनेन वाक्येन गार्हस्थ्यप्रतिपादनात् । न चैवं कर्मविचारमकृत्वापि दारपरिग्रहः स्यादिति वाच्यम् । दारपरिग्रहानन्तरं निरन्तरसन्तन्यमाननित्यनैमित्तिककर्मव्यग्रस्य वेदार्थज्ञानसम्पादनसामर्थ्याभावेन कर्मस्वनधिकारापत्त्या, दारपरिग्रहात् प्रागेव कर्मविचारस्य न्यायसिद्धत्वात् । [2]तदिदमुक्तं—न वयमध्ययनप्रभवमिति । न च एवंसति कर्मविचारवत् उपनिषद्विचारोऽपि दारपरिग्रहात् प्रागेव सर्वस्य स्यादिति वाच्यम् । कर्मानुपयुक्तस्य तस्य तदानीमप्रसङ्गात्, नित्यानित्य-

---

1. **प्रकारान्तरेणेति** अस्मिन् प्रकारे श्रुतप्रकाशिकोक्तदूषणस्य नावकाशः-इति ज्ञेयम् ।

2. **तदिदमुक्तमिति** भाष्यस्योक्ताभिप्रायतया निरूपणेन, श्रुतप्रकाशिकोक्तदूषणस्यानवकाशः सूचितो भवति ।

**बोधनं अधिकारकारणं वारयामः, किं तर्हि, औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यते-इत्येतावत्प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यते एवमेतदपि द्रष्टव्यमिति ॥ १२ ॥**

**यदप्युक्तं 'नियमाच्च' इति, अत्राभिधीयते—**

## नाविशेषात् ॥ १३ ॥

**'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न 'विदुषः' इति विशेषोऽस्ति । अविशेषेण नियमविधानात् ॥ १३ ॥**

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

**'कुर्वन्नेवेह कर्माणि' इत्यत्र अपरो विशेष आख्यायते । यद्यप्यत्र प्रकरणसामर्थ्यात् विद्वानेव कुर्वन्निति संबध्येत तथापि विद्यास्तुतये कर्मानु-**

---

विवेकाद्यधिकारिविशेषणाभावे सर्वेणापि कर्मविचारवत् तस्य कर्तुमशक्यत्वाच्च । अतः कर्मकाले विचारमूलकौपनिषदज्ञानस्य अप्रसक्तत्वेन तस्य कर्माङ्गता दूरनिरस्तैव भवति । तदिदमाह - **किंतर्ह्यौपनिषदमात्मज्ञानमिति** ।

अस्तु वा [1]अर्थज्ञानपर्यन्ता अध्ययनभावना, कृत्स्नवेदार्थज्ञानानन्तरं च गार्हस्थ्यविधानम् । तथापि, न कृत्स्नवेदार्थज्ञानस्य गार्हस्थ्यविहिते कर्मनिकुरुम्बे सामर्थ्यं अपर्यालोच्यैव अन्वयो वक्तुं शक्यते । अपि तु, सामर्थ्यालोचनया यस्ययस्यांशस्य यत्रयत्र सामर्थ्यं तत्र तस्य विनियोग उपगन्तव्यः । तथा च औपनिषदात्मज्ञानस्य कर्मसु सामर्थ्याभावात् न तत्र विनियोगस्सम्भवतीत्यभिप्रेत्याह--**यथा च न क्रत्वन्तरज्ञानमिति** ॥ १२ ॥

कुर्वन्नेवेह कर्माणीत्यत्र न 'विदुषः' इति विशेष उपात्तोऽस्ति । नापि पूर्वाम्नातेशावास्येतिमन्त्रानुसारेण कल्पयितुं शक्यते, विद्यायाः कर्मविरोधित्वस्य वक्ष्यमाणत्वात् । अतः अविद्वानेव कुर्वन्नेवेहकर्माणीत्यत्र सम्बध्यते—इति भावः ॥ १३ ॥

---

1. **अर्थज्ञानपर्यन्तेति** यत्तु-अस्मिन् पक्षे सूत्रास्वारस्यमिति परैर्दूषणमुक्तम्, तत् परेषामपि तुल्यम्, तैरपि उक्तपक्षाश्रयणेनापि व्याख्यातत्वात् । "अध्ययनशब्दवाच्यव्यतिरिक्तत्वात् विद्यायाः" इतिसमाधानमपि उभयोः समम् । शाब्दापरोक्षवादेऽपि प्राथमिकज्ञानस्य आपातत्वेन परोक्षतुल्यत्वात् । "सोऽहं मन्त्रविदेवास्मि नात्मवित्" इति नारदोक्तिरपि अत्र अनुकूला ।

ज्ञानमेतद्द्रष्टव्यम् । 'न कर्म लिप्यते नरे' इति हि वक्ष्यति । एतदुक्तं भवति—यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यात्-इति । तदेवं विद्या स्तूयते ॥ १४ ॥

## कामकारेण चैके ॥ १५ ॥

अपि च-एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तः तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम् 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ. उ. ४।४।२२) इति । अनुभवारूढमेव च विद्याफलं न क्रियाफलवत्कालान्तरभावीति असकृदवोचाम । अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेः अयथार्थत्वं शक्यमाश्रयितुम् ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

अपिच—कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्य अविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति 'यत्र

---

प्रकरणानुसारेण अस्य मन्त्रस्य विद्वद्विषयत्वे तु, जिजीविषेदितिलिङ् न विधौ, अपि तु, आमन्त्रणपदोदितायां कामचारानुज्ञायाम् । तथा च, "यदि यावज्जीवं कर्माणि कर्तुमिच्छति, तदा कुर्वन्नेव कर्माणि जिविषुर्भवतु नाम शतं समाः, एवं त्वयि विद्यमानेऽपि इतोऽन्यथाभावः—कर्मणो ज्ञानफलप्रतिबन्धो नास्ति, यतो न कर्म लिप्यते नरे विदुषि" इत्यर्थमादाय ज्ञानस्तुतिपरो मन्त्रो भविष्यति । अविद्वत्पक्षे तु, जिजीविषेदिति विधौ लिङ् । 'त्वयि अविदुषि नरे एवंसत्येव पापं कर्म न श्लिष्यते इतोऽन्यथा शास्त्रार्थो न भवति' इति मन्त्रार्थो द्रष्टव्यः ॥१४॥

येषां-विदुषां अस्माकं अयं-स्वप्रकाशतया भासमानः शास्त्रोक्त आत्मा अयमेव च मोक्षाख्यो लोकः । यदपि पूर्वपक्षिणोक्त नसपापंश्लोकंश्रृणोतीतिवत् ब्रह्मवेदब्रह्मैवभवतीत्यादीनां वर्तमानापदेशतया अर्थवादत्वमिति, तत्राह—अनुभवारूढमेव चेति । तथा च, यत्र फलस्य वर्तमानता न भवति कर्मविषये तत्र भवतु तस्य स्तुतिशेषता, ब्रह्मज्ञानफलस्य तु विद्यासमानकालत्वात् न अर्थवादता उपगन्तुं युक्ता ब्रह्मवेदब्रह्मैवभवतीत्यादिनिर्देशानाम्—इति भावः ॥ १५ ॥

सुगमम् ॥ १६ ॥

त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत्' (बृ. उ. २।४।१४) इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रति आशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत। तस्मादपि स्वातन्त्र्यं विद्यायाः ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

उर्ध्वरेतस्सु चाश्रमेषु विद्या श्रूयते, न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात्। न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत्—ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेदे-इति। तदपि नास्ति। तेऽपि हि वैदिकेषु शब्देषु अवगम्यन्ते 'त्रयो धर्मस्कन्धाः' (छा. उ. २।२३।१) 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा. उ. ५।१०।१) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मु. उ. १।२।११) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. उ. ४।४।२२) 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा. उ. ४) इत्येवमादिषु। प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानां अपाकृतानपाकृतर्णानां च ऊर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम्। तस्मादपि स्वातन्त्र्यं विद्यायाः ॥ १७॥

---

किं गार्हस्थ्योदिताग्निहोत्रादिकर्मशेषत्वं विद्यायाः उत सर्वाश्रमोदितकर्मशेषत्वम्? । नाद्यः, नैष्ठिकादिष्वपि सविशेषनिर्विशेषविद्ययोः श्रुतिस्मृतिपुराणेषूपलम्भात्। न द्वितीयः, सर्वकर्मरहिते परमहंसपरिव्राजकेऽपि विद्याया उपलम्भात्। न च—तस्यापि स्वाश्रमोचितं कर्मास्ति, तत्र विद्यायाश्शेषत्वमिति—वाच्यम्। तस्य हि स्वाश्रमोचितं ब्रह्मविद्यातिरिक्तं न किमपि कर्मास्ति। शौचाचमनादिकं तु तत्तदाश्रमविहितकर्मस्वङ्गमेव, न तु प्रधानम्। ततश्च तस्य तदाश्रमोचितब्रह्मविद्याङ्गतैव, न तु तां प्रति प्राधान्यमिति। अपाकृतानपाकृतर्णानामिति। ऋणानि ऋषिदेवपितृसम्बन्धीनि, तेषामपाकरणं ब्रह्मचर्ययज्ञप्रजासम्पादनेन। 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति वचनेन ऋणापाकरणं विना वैराग्ये सति पारिव्राज्यं विधीयते।

'आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे।' मोक्षं—मोक्षसाधनभूतं सन्न्यासम्। 'प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः'। इत्यादिस्मृतिरप्युदाहर्तव्या ॥ १७ ॥

इति पुरुषार्थाधिकरणम्

## २ परामर्शाधिकरणम्

# परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावाय उदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति। यतः परामर्शं एषु शब्देषु आश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम्। कुतः ? न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोस्ति। अर्थान्तरपरत्वं च एषु प्रत्येकमुपलभ्यते। त्रयो धर्मस्कन्धा इत्यत्र तावत् 'यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयः अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्वे एते पुण्यलोका भवन्ति' इति परामर्शपूर्वकं आश्रमाणामनात्यन्तिकफलत्वं संकीर्त्य, आत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते 'ब्रह्मसंस्थोऽमृतत्वमेति' इति।

ननु परामर्शेऽपि आश्रमा गम्यन्त एव।

सत्यं गम्यन्ते। स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः, न प्रत्यक्षश्रुतेः। अतश्च, प्रत्यक्षश्रुतिविरोधे सति अनादरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा।

ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं यज्ञोऽध्ययनंदानमिति प्रथम इति।

सत्यमेवम्, तथापि तु, गृहस्थं प्रत्येव अग्निहोत्रादीनां कर्मणां विधानात् श्रुतिप्रसिद्धमेव हि तदस्तित्वम्।

तस्मात् स्तुत्यर्थ एवायं परामर्शः न चोदनार्थः।

अपि च—अपवदति हि प्रत्यक्षा श्रुतिः आश्रमान्तरम् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते', 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तै. उ. १।११।१) 'नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदुः' इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते'

---

ऊर्ध्वरेतस्सु विद्याया दर्शनात् न कर्माङ्गता—इति यत् पूर्वाधिकरणावसाने उक्तं तदिह आक्षिप्य समाधीयत इति सङ्गतिः। 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति, नैष्ठिकब्रह्मचारिण आचार्यकुले शुश्रूषया यावज्जीवं वासो विधीयते। अवसादयन्—क्षीणं कुर्वन्।

(छा. उ. ५।१०।१) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मु. उ. १।२।११) इति च देवयानोपदेशः, नाश्रमान्तरोपदेशः। सन्दिग्धं चाश्रमान्तराभिधानम् 'तप एव द्वितीयः' इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. उ. ४।४।२२) इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः।

ननु ब्रह्मचर्यादेव प्रव्रजेदिति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्। सत्यमेवमेतत्। अनपेक्ष्य त्वेतां श्रुतिं अयं विचार इति द्रष्टव्यम् ॥ १८ ॥

---

'त्रयो धर्मस्कन्धाः' इत्यत्र धर्मस्कन्धपदेन ब्रह्मचर्यगार्हस्थ्यवानप्रस्थाख्याः त्रय आश्रमा यद्यपि गृहीताः, तथापि श्रुतेः न तत्र तात्पर्यम्, अपि तु,ताननूद्य पुण्यलोकप्राप्तिरूपाल्पफलतया निन्दित्वा अमृतत्वफलेन ब्रह्मसंस्था स्तूयते। सन्न्यासस्य तु तत्र गन्धोऽपि नास्ति। तत्रापि, ब्रह्मचारिवानप्रस्थयोः अग्निहोत्रादिकर्मानधिकृतान्धपङ्ग्वादिविषयतया स्मृत्याचारप्रसिद्धयोः अनुवादः। गार्हस्थ्यस्य तु 'कुटुम्बे शुचौ देशे' इत्यादिश्रुतिप्रसिद्धस्यैव अनुवादः। ब्रह्मचर्यं समाप्य गुरुदक्षिणारूपं प्रियं धनं आचार्यायाहृत्य, गार्हस्थ्यातिरिक्ताश्रमग्रहणेन प्रजातन्तुं-तन्तुवत् सन्तन्यमानां प्रजां मा व्यवच्छेत्सीः—इत्यादिश्रुत्या बाधितत्वाच्च न 'ऊर्ध्वरेतस्त्वं वैदिकम्' इति वक्तुं शक्यम्। 'ये चेमेऽरण्ये' इत्यादिवाक्यं तु अतिक्लेशसाध्यतया देवयानं स्तौति। अपि च—'तप एव द्वितीयः' इत्यत्र न स्वशब्देनाश्रमान्तरग्रहणमस्ति, अपि तु तपोलिङ्गेनानुमेयम्। तपसश्च यथाकथञ्चित् गृहस्थेऽपि सम्भवात् न तेन आश्रमान्तरं ग्रहीतुं शक्यम्। एवं 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इत्यपि उपकुर्वाणविषयं आत्यन्तिकशुश्रूषाविषयं व्याख्यातुं शक्यमिति नात्र आश्रमान्तरग्रहणं निर्धारयितुं शक्यम्। एवं 'ये चेमेऽरण्ये' इत्याद्यपि यथाकथञ्चित् गृहस्थविषयमेव द्रष्टव्यम्। युधिष्ठिरादिवत् निमित्तविशेषेण तस्यापि अरण्ये तपस्सम्भवात्। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यत्रापि न सन्न्यासविधिः। अपि तु, क्लेशात्मकतया प्रसिद्धं यत् स्मृत्यादिषु पारिव्राज्यमनधिकारिविषयं तदनुवादेन आत्मरूपस्य लोकस्य स्तुतिः 'अतिक्लेशसाध्योऽयं लोकः' इति।

यद्यपि 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिर्हि स्पष्ट आश्रमान्तरविधिरस्ति, तथापि-स नास्तीति कृत्वाचिन्तया 'वैदिकत्वेन सम्प्रतिपन्नो योऽर्थः तत्सम-

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते । वेदेऽश्रवणात् अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात् तद्विरोधात् अनधिकृतानुष्ठेयमाश्रमान्तरम् - इतिहीमां मतिं निराकरोति गार्हस्थ्यवदेवाश्रमान्तरमपि अनिच्छता प्रतिपत्तव्यमिति मन्यमानः । कुतः ? साम्यश्रुतेः । समा हि गार्हस्थ्येन आश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते 'त्रयो धर्मस्कन्धाः' इत्याद्या । यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टं एवमाश्रमान्तरमपीति प्रतिपत्तव्यम्, यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्शः उपवीतविधिपरे वाक्ये । तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य । तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यस्य वेदानुवचनादिभिः समभिव्याहारः, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यस्य च पञ्चाग्निविद्यया ।

यत्तूक्तम् 'तप एव द्वितीयः' इत्यादिषु आश्रमान्तराभिधानं सन्दिग्धमिति ।

नैष दोषः, निश्चयकारणसद्भावात् । 'त्रयो धर्मस्कन्धाः' इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम् । न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तः अन्यत्राश्रमसंबन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते । तत्र यज्ञादिलिङ्गो

---

भिव्याहृतमन्यदपि असति बाधके वैदिकत्वेनोपगन्तव्यम्, अपूर्वत्वं विध्युन्नायकं च'-इति व्युत्पादनाय अयं विचारः प्रवर्तितः ॥ १८ ॥

यथा च शास्त्रान्तरप्राप्तयोरिति । 'उपव्ययते' इति विधिसन्निधौ 'निवीतं मनुष्याणां प्राचीनावीतं पितृणां उपवीतं देवानाम्' इति समाम्नायते— वामांसस्थं दक्षिणपार्श्वव्यापि यज्ञसूत्रं उपवीतम्, दक्षिणांसस्थं वामपार्श्वव्यापि प्राचीनावीतम्, कण्ठलम्बितं निवीतम् । अत्र उपवीतं विधेयम्, निवीतप्राचीनावीतयोस्तु मानुषपित्र्यकर्मसम्बन्धितयाश्रुत्यन्तरप्रसिद्धयोरेव अनुवादः उपवीतविध्येकवाक्यत्वाय । एवमत्रापि आश्रमान्तराणां शास्त्रान्तरप्रसिद्धानामेव अनुवाद आश्रयितव्यः, समभिव्याहृतस्य गार्हस्थ्यस्य श्रौतत्वोपगमात् ।

'त्रयो धर्मस्कन्धाः' इत्यत्र धर्मस्कन्धपदोदितानां धर्माश्रमाणां त्रित्वं आश्रमग्रहणेनैव व्युत्पादनीयम् । तत्र ब्रह्मचारी स्वशब्देनैव गृहीतः । तत्रापि,

गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः, तप इत्यपि कोऽन्यः तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत । 'ये चेमेऽरण्ये' इति च अरण्यलिङ्गात् श्रद्धातपोभ्यां आश्रमगृहीतिः । तस्मात् परामर्शेऽपि अनुष्ठेयमाश्रमान्तरम् ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

विधिर्वाऽयमाश्रमान्तरस्य, न परामर्शमात्रम् । ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुद्ध्येत, प्रतीयते चात्रैकवाक्यता-पुण्यलोकफलाः त्रयो धर्मस्कन्धाः ब्रह्मसंस्थता त्वमृतत्वफलेति । सत्यमेतत् । सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात् । विस्पष्टाच्चाश्रमान्तरप्रत्ययात् गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः ।

धारणवत् । यथा 'अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणम्, अपूर्वत्वात् । तथाचोक्तं शेषलक्षणे 'विधिस्तु धारणेऽपूर्वत्वात्' इति । तद्वदिहापि आश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते ।

---

आचार्यकुलवासीत्यनेनैव उपकुर्वाणग्रहणे सिद्धे, अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति पृथग्ग्रहणं नैष्ठिकाभिप्रायमेव । यज्ञोऽध्ययनंदानमिति गृहस्थस्यैव प्रधानधर्मानुसारेण ग्रहणम् । तथा च तपएवेत्यत्रापि वानप्रस्थग्रहणमेव, तपसो वानप्रस्थं प्रत्येव प्रधानत्वात्, गृहस्थं प्रति तस्य प्राधान्याभावात् । ब्रह्मसंस्थपदेन तु सन्न्यासिनो ग्रहणमिति वक्ष्यति । अरण्यवासोऽपि वानप्रस्थस्यैव नित्य इति 'ये चेमेऽरण्ये' इत्यत्र वानप्रस्थानामेव ग्रहणम् ॥ १९ ॥

एवं ब्रह्मसंस्थस्यामृतत्वविधिपरे वाक्ये आश्रमान्तरानुवादेपि गार्हस्थ्यवत् आश्रमान्तरस्यापि श्रौतत्वं सिद्ध्यतीत्युक्त्वा, एकवाक्यताभङ्गेन अन्येषामप्याश्रमाणां अपूर्वत्वात् अत्र विधिरुपेय इत्याह—विधिर्वाऽयमाश्रमान्तरस्येति । अपूर्वत्वात्-लौकिकप्रमाणेनाप्राप्तत्वात् । विधिस्तुधारणेऽपूर्वत्वात् । प्रेताग्निहोत्रप्रकरणे अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति श्रूयते । स्रुग्बिलस्योपरिष्टात् दैवे कर्मणि समित् ध्रियते, अतोऽत्र 'अधस्तात् समिधं धारयन्ननुद्रवेत्' इत्यधोधारणविधिपरे वाक्ये उपरिधारणविध्युपगमे वाक्यभेदापत्तेः अवगतैकवाक्यता-

**यदापि परामर्श एवायमाश्रमान्तराणां, तदापि ब्रह्मसंस्थता तावत् संस्तवसामर्थ्यात् अवश्यं विधेयाऽभ्युपगन्तव्या ।**

**सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचित् आहोस्वित् परिव्राजकस्यैवेति विवेक्तव्यम् । यदि च ब्रह्मचार्यन्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टः, ततः चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषात् अनाश्रमित्वानुपपत्तेश्च यः कश्चित् चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति । अथ न परामृष्टः, ततः, परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति ।**

**तत्र वैखानसग्राहिणा तपःशब्देन परामृष्टः परिव्राडपीति केचित् ।**

**तदयुक्तम् । न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति । यथाऽत्र ब्रह्मचारिगृहमेधिनौ असाधारणेनैव स्वेन स्वेन विशेषणेन**

---

निर्वाहाय उपरिधारणे न विधिः–इति पूर्वपक्षं कृत्वा, उपरिधारणस्याप्राप्तत्वेन अनुवादासम्भवात् अगत्या वाक्यभेदमुपगम्य विधिः स्वीकर्तव्य इति सिद्धान्तितम् । तदिह दृष्टान्तीकृतम् ।

ननु–'त्रयो धर्मस्कन्धाः' इत्यत्र उक्तगत्या ब्रह्मचारिवानप्रस्थयोरूर्ध्वरेतसोस्सिद्धावपि सन्न्यासो न सिद्ध्यति, त्रित्वसङ्ख्यया चतुर्थाश्रमव्यवच्छेदात्–इत्याशङ्क्य, येनापि पूर्वपक्षिणा ब्रह्मसंस्थताया अमृतत्वफलताबोधनपरे वाक्ये आश्रमान्तरानुवादात् न तेषां वैदिकत्वमित्युच्यते तन्मतेऽपि ब्रह्मसंस्थतारूपस्सन्न्यासो विहित एव भवति–इत्यतिशयमाह—**यदापि परामर्श एवायमित्यादिना** ।

वृत्तिकारास्तु–तपश्शब्देनैव सन्न्यासिनो ग्रहणम्, ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र तु, चतुर्ष्वाश्रमेषु मध्ये यो ब्रह्मसंस्थः सोऽमृतत्वमेतीति ब्रह्मसंस्थपदं प्रकृतधर्मस्कन्धविषयमेव–इति वदन्ति । एवमपि, ब्रह्मविद्यायाः कर्माङ्गत्वाभावः प्रकृतः समर्थित एव भवति, अब्रह्मनिष्ठानां चतुर्णामाश्रमाणां अल्पफलमभिधाय ब्रह्मसंस्थपदोदितस्य ब्रह्मविदो मोक्षाभिधानस्य कर्माङ्गत्वपक्षेऽनुपपत्तेः । अयं तु पक्षो न श्रुतिस्वारस्यानुगुण इति तत्पक्षदूषणव्याजेन, प्रकृतवाक्यं ब्रह्मसंस्थपदोदितसन्न्यासविधिपरमिति साधयति—**सा च किमित्यादिना** ।

**वैखानसग्राहिणा**-वानप्रस्थग्राहिणा **तपश्शब्देन परामृष्टः परिव्राडपीति** । परिव्राजोऽपि समधिकशौचशमदमादिकं तपोऽस्त्येव, वानप्रस्थस्य ग्रीष्मे पञ्चाग्निसेव-

विशेषितौ एवं भिक्षुवैखानसावपीति युक्तम् । तपश्च असाधारणो धर्मो वानप्रस्थानाम्, कायक्लेशप्रधानत्वात्, तपश्शब्दस्य तत्र रूढेः। भिक्षोस्तु धर्म इन्द्रियसंयमादिलक्षणो नैव तपश्शब्देनाभिलप्यते। चतुष्ट्वेन च प्रसिद्धा आश्रमाः त्रित्वेन परामृश्यन्त इति अन्याय्यम् । अपि च भेदव्यपदेशोऽत्र भवति 'त्रय एते पुण्यलोकभाजः एकोऽमृतत्वभाक्' इति । पृथक्त्वे च एष भेदव्यपदेशः अवकल्पते । न ह्येवं भवति-देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरस्त्वनयोः महाप्रज्ञ इति । भवति त्वेवं-देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमित्रस्तु महाप्रज्ञ इति । तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः परिशिष्यमाणः परिव्राडेव अमृतत्वभाक् ।

कथं पुनः ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन् परिव्राजके एवावतिष्ठेत । रूढ्यभ्युपगमे च आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति ।

---

नादिवत् । तपश्चासाधारणो धर्मो वानप्रस्थानामिति । कायस्य पञ्चाग्न्यादिसेवनेन क्लेशनं हि तपः, तत्तु वानप्रस्थानामेव । सन्न्यासिभिस्तु 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा' ॥ इत्यादिशास्त्रानुसारेण, चित्तविक्षेपहेतुत्वात् पञ्चाग्न्यादिसेवनं परित्यक्तव्यमेव । शौचशमदमादिकं तु तदीयो धर्मः न तपश्शब्दार्थः । 'शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः' इति पातञ्जलसूत्रे शौचस्य पृथग्ग्रहणात्, सन्तोषपदेन तद्धेतुतया शमस्यापि पृथग्ग्रहणात् । श्रुतौ च 'तप इति तपो नानशनात् परम्' इति तपःकीर्तनानन्तरं 'शम इत्यरण्ये मुनयः' इति शमः पृथग्गृहीतः ।

ननु—ब्रह्मसंस्थपदं यौगिकं 'ब्रह्मणि संस्था अस्य' इति विग्रहात् सर्वनामार्थगर्भितम् । सर्वनाम्नश्च प्रकृतपरामर्शितास्वाभाव्यात्, प्रकृता ये धर्मस्कन्धाः त एवेह ब्रह्मसंस्थपदेन ग्राह्याः । अतश्च, त्रयाणां मध्ये अब्रह्मसंस्थो भवति पुण्यलोकभाक्, ब्रह्मसंस्थस्तु तेषां मध्ये यो भवति सोऽमृतत्वभाक्—इत्येव वाक्यार्थो वर्णनीयः-इत्यभिप्रायेण शङ्कते - कथं पुनः ब्रह्मसंस्थशब्द इति ।

अत्रोच्यते—ब्रह्मसंस्थ इति हि, ब्रह्मणि परिसमाप्तिः-अनन्यव्यापारतारूपं तन्निष्ठत्वं अभिधीयते। तच्च त्रयाणामाश्रमाणां न संभवति, स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्। परिव्राजकस्य तु, सर्वकर्मसंन्यासात् प्रत्यवायो न संभवति अननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलकः, न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म, यज्ञादीनि चेतरेषाम्, तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' (नारा. उ. ७८)

---

ब्रह्मसंस्थ इति हीति। सम्पूर्वो हि तिष्ठतिः समाप्तिवचनः, ब्रह्मणि समाप्तिश्च अमृतत्वफला ब्रह्मान्यविषयकव्यापाराराहित्यमेव, तत्तु सन्न्यासिव्यतिरिक्तानामन्येषां न सम्भवति, ऐहिकामुष्मिकनित्यनैमित्तिककाम्यव्यापारव्यग्रत्वात्। सन्न्यासिनां तु, ब्रह्मसंस्थामुद्दिश्यैव विधिना सर्वव्यापाराणां परित्यक्ततया सम्भवति ब्रह्मसंस्थत्वम्। एवञ्च सति ब्रह्मसंस्थपदस्य योगपर्यालोचनयैव प्रकृतपरामर्शित्वासम्भवात् योगार्थसामर्थ्योपस्थितसन्न्यासिपरत्वं कल्प्यते। यदि 'स्थः क च' इति सूत्रेण कर्तृवाचिकप्रत्ययान्तं 'ब्रह्मणि संतिष्ठते ब्रह्मसंस्थः' इति व्युत्पाद्यते, तदा सर्वनामगर्भत्वाभावात् प्रकृतपरामर्शिताशङ्कैव नास्तीति भावः।

ब्रह्मसंस्थ इत्यत्र यदि 'ओङ्कार एवेदं सर्वम्' इतिवाक्यसन्निधानानुसारेण ब्रह्मपदं प्रणवपरं स्वीक्रियते, तदा ओङ्कारावलम्बनसर्वात्मकब्रह्मोपासनैव ब्रह्मसंस्था। तस्याश्च निर्विशेषब्रह्मसाक्षात्कारद्वारा अमृतत्वसाधनत्वं माण्डूक्यादिश्रुतिपर्यालोचनया सिध्यतीति नामृतत्वफलत्वानुपपत्तिः। यदि तु सन्निधानानुसारेण ब्रह्मश्रुतिसङ्कोचायोगात् ब्रह्मपदं परमात्मपरमेव, तदा अमृतत्वफलत्वानुपपत्तिशङ्कैव नास्ति।

'न्यास इति ब्रह्मा' इति वाक्ये ब्रह्मत्वेन सन्न्यासः स्तूयते। तानि वा एतान्यवराणीति। पूर्वोक्तानि सत्यादीनि तपांसि सन्न्यासमपेक्ष्य अवराणि अपकृष्टानि, न्यास एव अत्यरेचयत्—आत्मानमुत्कृष्टं कृतवान्। तथा च सर्ववैदिकपदार्थातिशयिततया प्रतिपादितस्य सन्न्यासस्य यत् किञ्चिदपवादवचनं क्वचिद्दृश्यते तत् मन्दवैराग्येण सन्न्यासोद्युक्तान् प्रति कर्मसूत्साहजननार्थमिति द्रष्टव्यम्।

'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' (मु. उ. ३।२।६) इत्याद्याः श्रुतयः। स्मृतयश्च 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' (भ. गी. ५।१७) इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति। तस्मात्, परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्गः-इत्येषोऽपि दोषो नावतरति।

तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावत् ब्रह्मसंस्थतालक्षणं लभ्येतैव।

अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीं अयं आचार्येण विचारः प्रवर्तितः। विद्यत एव तु आश्रमान्तरविधिश्रुतिः प्रत्यक्षा। 'ब्रह्मचर्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' (जा. उ. ४) इति। न चेयं श्रुतिः अनधिकृतविषया शक्या वक्तुम्, अविशेषश्रवणात्। पृथग्विधानाच्चानधिकृतानाम् 'अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा' (जा. उ. ४) इत्यादिना। ब्रह्मज्ञानपरि-

---

यदि वेतरथा। यदिवेतिपदं विकल्पद्योतकम्, अथवेत्यर्थः। इतरथा-पूर्वोक्तक्रमादन्यक्रमेण। तमेवाह ब्रह्मचर्यादेव प्रव्रजेदिति। तथा च, यदा वैराग्यं तदैव सन्न्यासः, न तत्र आश्रमक्रमापेक्षा, तदाह श्रुतिरेव 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति। एवंच 'वीरहा वा एष देवानाम्' इत्यादिनिन्दावचनं अवैधाग्नित्यागविषयकमेव। यथा च गृहस्थानामेव उत्सर्गेष्टिपूर्वकमग्नित्यागे न दोषः, एवं पारिव्राज्यविधिपूर्वकमग्नित्यागे न दोषः, 'अथ पुनरव्रती वा व्रती वा' इत्यादिना कर्माधिकृतानामनधिकृतानां च सर्वेषां पारिव्राज्यविधानात्। अव्रती-अनारब्धव्रतः। यथा स सन्न्यासे व्रतसमाप्तिकालं न प्रतीक्षते, एवं, सति वैराग्ये आरब्धव्रतोऽपि न व्रतसमाप्तिं प्रतीक्षितुमर्हति, अपि तु तदैव प्रव्रजेत्। एवं, समाप्तब्रह्मचर्यव्रतवत् असमाप्तब्रह्मचर्यव्रतोऽपि न समाप्तिकालं प्रतीक्षेत। तथा, अनग्निवत् उत्सन्नाग्निरपि न प्राजापत्यादीष्टिसिद्ध्यर्थं आधानादिकर्तव्यतां प्रतीक्षेत-इति तदर्थः। ब्रह्मज्ञानपरिपाकाङ्गत्वाच्चेति। साक्षात्कारपर्यन्तता ब्रह्मज्ञानस्य परिपाकः। तथा च,

पाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम् । तच्च दर्शयति—'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' (जा. उ. ५) इति ।

तस्मात् सिद्धा ऊर्ध्वरेतस आश्रमाः, सिद्धं च ऊर्ध्वरेतस्सु विधानात् विद्यायाः स्वातन्त्र्यम्—इति ॥ २० ॥

३ स्तुतिमात्राधिकरणम्

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा. उ. १।१।३) 'इयमेवर्गग्निः साम' (छा. उ. १।६।१) 'अयं वाव लोक एषोऽग्निश्चितः' (श. ब्रा. १०।५।४।१) तदिदमेवोक्थं इयमेव पृथिवी' (ऐ. आ. २।१।२।१) इत्येवञ्जातीयकाः श्रुतयः किं उद्गीथादेः स्तुत्यर्थाः आहोस्विदुपासनाविध्यर्थाः इत्यस्मिन् संशये—

---

तत्कामिनोऽधिकारितायाः 'तस्मात् ज्ञानं समुद्दिश्य सन्न्यसेदिह बुद्धिमान् ।' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिवचनैः प्रतिपादनात् न कर्मानधिकृतस्तत्राधिकारीतिकल्पनमुचितम्-इति भावः ॥ २० ॥

इति परामर्शाधिकरणम्

पूर्वत्र वैदिकतयाऽनुष्ठेयेन गार्हस्थ्येन सह तुल्यतया आश्रमान्तराणां परामर्शात् तेषामनुष्ठेयत्वमुक्तम्; तर्हि 'इयमेव-पृथिव्येव जुहूः आदित्यः कूर्मः' इति स्तावकवाक्यसामान्यात् 'स एष रसानां रसतमः' इत्यादीनामपि स्तावकतेति प्रत्यवस्थानात् सङ्गतिः । रसतमत्वाद्युपासनानां विविदिषार्थकर्मगतवीर्यवत्तरत्वफलकताया अपि सम्भवेन [1]विद्योपकारकत्वात् पादसङ्गतिरस्याधिकरणस्य ।

एषां भूतानां पृथिवी रसः-सारभूता, कारणत्वात्, पृथिव्या आपो रसः, कारणत्वादेव, अपामोषधयो रसः, प्रधानकार्यत्वात्, ओषधीनां पुरुषो रसः, कार्यत्वादेव, पुरुषस्य वाग्रसः, 'अवदतो हि किं स्यात्' इति श्रुतेः, वाच ऋग्रसः, वाक्कार्येषु मध्ये प्रशस्तत्वात्, ऋचस्साम रसः, सामाभावे ऋचः स्तोत्रसाधनत्वा-

---

1. विद्योपकारकत्वादित्यादि अनेन इदमधिकरणं पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रत्ववादिनां असङ्गतमिति परेषां प्रत्याशा पराकृता ।

**स्तुत्यर्था इति युक्तम्, उद्गीथादीनि कर्माङ्गानि उपादाय श्रवणात्। यथा 'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः' इत्याद्याः जुह्वादिस्तुत्यर्थाः, तद्वत्—इति चेत्।**

---

सम्भवात्, साम्न उद्गीथो रसः, उद्गीथावयवोङ्कारोपास्यतया तस्य प्रकृतत्वात्, स एषः-उद्गीथः रसानां-पृथिव्यादीनां मध्ये उत्कृष्टो रसः-रसतमः, परमः-शैब्यप्रश्नादिषु परमात्मप्रतीकतया प्रतिपादनात् उत्कृष्टः, परार्ध्यः-परस्य-परमात्मनः अर्धं-स्थानं अर्हति, परमात्माभेदेनोपास्यत्वात् सालग्रामादिवत्, अष्टमः पृथिव्यादिरसानपेक्ष्य।

ननु—अत्र रसतमत्वगुणवाक्यं नोदाहर्तुमुचितम्, तत्र सिद्धान्तिनापि उपास्यताया वक्तुमशक्यत्वात्। सिद्धान्तेऽपि, परमत्वं परार्ध्यत्वं 'तेनेय त्रयी विद्या वर्तते' इतिवाक्यप्रतिपाद्यं वेदत्रयानुयायित्वं च उद्गीथगुणत्वेनोपास्यमिति न स्वीक्रियते, प्रकृतसन्दर्भप्रतिपाद्यत्वेऽपि 'आपयिता ह वै कामानां भवति' 'समर्धयिता ह वै कामानां भवति' इति आप्तिसमृद्धिगुणयोरिव परमत्वादिषु फलस्यानाम्नानात्, तद्वत् रसतमत्वेऽपि फलानाम्नानात् अनुपास्यत्वमेव सिद्धान्तेऽपि इति चेत्;

न—परमत्वं परार्ध्यत्वं च व्याख्यातेन प्रकारेण ओङ्कारसामान्यविषयमेव, शैब्यप्रश्नादिषु ओङ्कारसामान्यस्यैव ग्रहणात्। 'तेनेयं त्रयी विद्या वर्तते' इत्यपि सामान्योङ्कारविषयमेव, प्रकृतोद्गीथावयवस्योङ्कारस्य वेदत्रयानुयायित्वासम्भवात्। अतो नास्य उपास्यगुणत्वं वक्तुं शक्यम्। स्तुतिस्तु, ओङ्कारसामान्यगुणकीर्तनेऽपि सामान्यसम्बन्धिन्युद्गीथावयवे प्रणवविशेषे पर्यवस्यति। 'वेतसशाखया चावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताश्शान्ताभिरेवास्य शुचं शमयति' इति वेतसकारणानामपां शान्तत्वगुणकीर्तनेन वेतसस्तुतेर्दर्शनात्। रसतमत्वं तु प्रकृतोङ्कारगतमेव श्रुत्या प्रतिपाद्यत इति न तस्योपास्यगुणत्वानुपपत्तिः। फलानाम्नानं त्वसिद्धम्, अनुक्तवैशेषिकफलेषु कर्मवीर्यवत्तरत्वफलस्य सम्भवात्। अतो युक्तमेव रसतमत्वोदाहरणम्।

**कर्माङ्गान्युपादायश्रवणादिति।** ननु—कर्माङ्गान्युपादायश्रवणेऽपि 'यस्य पर्णमयी जुहूर्भवति' 'हिरण्मय्यः स्रुचो भवन्ति' इत्यादौ न स्तावकतोपगम्यते, अपि तु गुणविधानार्थत्वम्। एवमत्रापि गुणविधानार्थत्वं किं न स्यात्—इति चेत्;

नेत्याह । न हि स्तुतिमात्रं आसां श्रुतीनां प्रयोजनं युक्तम्, अपूर्वत्वात् । विध्यर्थतायां हि अपूर्वोऽर्थो विहितो भवति, स्तुत्यर्थतायां तु आनर्थक्यमेव स्यात् । विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिः उपयुज्यत इत्युक्तं 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इत्यत्र । प्रदेशान्तरविहितानां तूद्गीथादीनां इयं प्रदेशान्तरपठिता स्तुतिः वाक्यशेषभावमप्रतिपद्यमाना अनर्थिकैव स्यात् । इयमेवजुहूरित्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम् ।

तस्मात् विध्यर्था एव एवञ्जातीयकाः श्रुतयः ॥ २१ ॥

---

जुह्वादीनां पर्णमयत्वादेः अनुष्ठातुं शक्यतया गुणविधित्वाभ्युपगमेऽपि, रसतमत्वपृथिवीलोकाग्नित्वादेः ओङ्कारऋक्सामचित्याग्न्युक्थशस्त्रादिष्वनुष्ठातुमशक्यतया इयमेवजुहूरित्यादिवत् स्तावकतोपपत्तेः । न च उपनिषदाम्नातेन रसतमत्वादिना प्रघट्टकान्तराम्नातकर्मस्तुतिः कथं स्यादिति वाच्यम् । कर्मसम्बन्ध्युद्गीथादिना कर्मण इहोपस्थिततया उपनिषदाम्नातानामपि रसतमत्वादीनां कर्मस्तावकतोपपत्तेः ।

स्तुत्यर्थतायां त्वानर्थक्यमेव स्यादिति । ननु रुच्युत्पादनेन प्रवृत्तिविशेषकरत्वात्स्तुतेः कथमानर्थक्यमिति चेत्; उच्यते—यद्यपि विधिभिः रुच्युत्पादनमपेक्षितम्, तथापि, न तदर्थं अर्थवादा एव अपेक्षिताः, विधिनापि स्तुतेराक्षेपसम्भवात् । परंतु, यत्र अर्थवादा आम्नायन्ते विधिसन्निधौ, तत्र तेषां सार्थक्याय अर्थवादैरेवस्तोतव्यमिति नियम उपेयते । अतः, अर्थवादानां स्तावकतायां अनर्थकप्रायता स्तुतेरन्यतोऽपि सम्भवादिति, तन्मा भूदिति, उपास्यगुणसमर्पकतैव युक्ता । असति निर्विशेषप्रकरणे, उपनिषद्गतस्य गुणस्य सम्भृतिद्युव्याप्त्यादिवत् उपासनाकल्पकत्वात् । न च अनुष्ठेयत्वासम्भवेन कर्मसम्बन्धित्वासम्भवेऽपि उपासनायां कोऽपि विरोधोऽस्ति । अतः, रसतमत्वाद्याम्नानं ओमित्येतदक्षरमुद्गीथमुपासीतेति सन्निहितोपासनाविधिशेषः । एवं 'अयं वाव लोकः' इत्यादीन्यपि तत्तत्प्रकरणाम्नातोपासनाविधिशेष इति द्रष्टव्यम् ॥ २१ ॥

ननु—यद्यपि विधिभिरेव स्तुतिः आक्षेप्तुंशक्या, तथापि, तत्तद्गुणकीर्तनपूर्वकं अर्थवादैः प्राशस्त्ये प्रतिपाद्यमाने यथा प्ररोचना भवति, नैवं विध्याक्षिप्तस्तुत्या ।

## भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीत' (छा. उ. १।१।१) 'सामोपासीत' (छा. उ. २।२।१) 'अहमुक्थमस्मीति विद्यात्' (ऐ. आ. २।१।२।६) इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते । ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् ।

---

तथा च प्ररोचनातिशयाय अर्थवादा विधिभिरपेक्षिता एव । न च तत्रापि विधिसन्निहितानामेव स्तावकतेति नियमः । कामाद्यधिकरणे छान्दोग्यवाजसनेयकाम्नातानां सत्यकामत्वादीनां सर्ववशित्वादीनां च, विद्याभेदेऽपि आयतनादिसामान्यादुपस्थितदूरस्थवि[द्या](धि)स्तावकतोपगमात् स्तुत्यतिशयलाभाय । एवं च, प्रकृते उद्गीथादिभिः कर्माङ्गैः, कर्मणां दूरस्थानामपि रसतमत्वादिवाक्यप्रदेशे उपस्थिततया, तत्स्तावकता सएषरसानामित्यादिवाक्यानां प्राप्नुवती न निवारयितुं शक्यते । न च-एवमपि सन्निहितोपासनाविधिविषयसमर्पकताप्यस्तु, न तु स्तुतिमात्रमेव रसतमत्वादीनां प्रयोजनम्, सन्निहितविध्येकवाक्यताया अप्यावश्यकत्वात्-इति वाच्यम् । सन्निहितोपासनाविध्येकवाक्यतावश्यंभावेपि, कर्मविधिस्तावकतायाः क्लृप्तत्वेन तदवैरूप्याय सन्निहितविधिष्वपि स्तावकताया एव उपगन्तुं युक्तत्वात् । अन्यथा क्वचित् स्तावकत्वं क्वचित् उपासनाविषयसमर्पकतया विधायकत्वमिति एकस्यैव वाक्यस्य वैरूप्यं स्यात्–इत्याशङ्कानिवृत्त्यर्थं भावशब्दाच्चेतिसूत्रम् ।

अयं भावः–रसतमत्वादिकीर्तनस्य हि उपासनाविधिना सन्निधानात् एकवाक्यता झटिति प्रतीयते । तत्र च, प्रथमं उपासनाविषयसमर्पकतयैवान्वय उचितः । न हि तस्यां दशायां कर्मविधिस्तावकता क्लृप्ताऽस्ति । उद्गीथादिभिः कर्मस्मरणद्वारा तद्विध्येकवाक्यतापादनस्य विलम्बितत्वात् । तथा च, स्वसन्निहितविधिविषयसमर्पकतयोपयुक्तस्य (यदि) दूरस्थविधौ यथाकथञ्चित् उपस्थिते तत्स्तावकताऽनुषङ्गिकी भवति चेत्, भवतु नाम । न तु तया प्रथमप्रवृत्तमुपासनाविषयसमर्पकत्वं वारयितुं शक्यम् । कामाद्यधिकरणेऽपि, अन्यत्र स्तावकानामपि गुणवाक्यानां स्वसन्निहितोपासनाविधिविषयसमर्पकत्वमुपगतमेवेति नेदं वैरूप्यं दोषावहम् ।

ननु–यदि उक्तन्यायादेव अन्यत्र स्तावकानामपि सन्निहितविधिविषयसमर्पकतोपेयते, तथा सति 'तद् य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति कामानामपि पृथग्वेद्यतावचनमनर्थकमेव स्यात्।

**तथा च न्यायविदां स्मरणम्—**

**'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् ।**
**एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥' इति ।**

**लिङाद्यर्थो विधिरिति मन्यमानास्ते एवं स्मरन्ति । प्रतिप्रकरणं च फलानि श्राव्यन्ते 'आपयिता ह वै कामानां भवति' (छा. उ. १।१।७) 'एष ह्येव कामागानस्येष्टे' (छा. उ. १।७।९) 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छा. उ. २।२।३) इत्यादीनि । तस्मादपि उपासनविधानार्था उद्गीथादिश्रुतयः ॥ २२ ॥**

---

तद्धि, सत्यकामत्वादिगुणानां निर्विशेषविद्यास्तावकतयोपयुक्तानां दहरविद्यायामपि अवैरूप्याय स्तावकतैव भविष्यति—इतिशङ्कानिराकरणार्थमिति वक्तव्यम् । गुणानां वेद्यतायाः, आत्मानमनुविद्येति गुणिनो वेद्यत्वविधानादेव सिद्धेः—इति चेत् ;

न—न्यायप्राप्तस्यैवार्थस्य क्वचिद्विषये वाक्येनानुवादे सति, सार्वत्रिकस्यास्य दृढीकरणोपपत्तेः, न्यायदृढीकरणस्यैव अन्यार्थलिङ्गदर्शनविधया तत्प्रयोजनत्वोपपत्तेरिति ।

ननु—अत्र भाष्ये उद्गीथमुपासीतेत्यादीनि विद्याविधिवाक्यानि उदाहृत्य, तेषां विधित्वे, कुर्यात्क्रियेतेति न्यायविदां स्मरणं सम्मतित्वेनोदाहृतम् । नेदमुपपद्यते । तस्मिन् वचने उपासीतेत्यादीनां विधित्वस्यानुक्तेः । तद्वचनमप्यनुपपन्नम् । न हि कुर्यादित्येवमादयः पञ्चैव शब्दा विधायकाः । यजेतेत्यादीनामन्येषामपि विद्यमानत्वात्—इत्याशङ्कां निराकुर्वन् कारिकातात्पर्यमाह—**लिङाद्यर्थो विधिरिति मन्यमाना इति** । आदिपदेन लोट्तव्यदादयो गृह्यन्ते । कारिकायां, विधिलक्षणमित्यत्र विधिः इष्टसाधनत्वम्, तस्य लक्षणं—प्रतिपादकं एतत् - लिङादिस्वरूपम् । तत्र च केवललिङादेः प्रयोगानर्हतया कस्मिंश्चिद्धातौ प्रयोक्तव्ये, सर्वधात्वर्थानुगतार्थकाः कृभ्वस्तयः प्रयुक्ताः । पचति—पाकं करोति, पाकक्रिया भवति, अस्ति, इत्येवंरूपेण तदर्थस्यानुगततया सर्वधातुसमभिव्याहृतलिङादिग्रहणसम्भवात् । कुर्यात् क्रियेतेति करोत्वितिलोटोऽप्युपलक्षणम् । क्रियेतेति कर्मणि पृथक् लिङुदाहरणं तु, कारकभेदेऽपि लिङो विधिशक्तिकुण्ठनं नास्तीति द्योतनाय । भवेत्स्यादिति लिङ् अस्तिभवत्योरुदाहरणं 'भवतु' 'अस्तु' 'भवितव्यम्' इतिलोट्तव्ययोरपि उपलक्षणम् ॥ २२ ॥

इति स्तुतिमात्राधिकरणम्

## ४ पारिप्लवाधिकरणम्

# पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च' (बृ. उ. ४।५।१) 'प्रतर्दनो ह वै दैवोदासिः इन्द्रस्य प्रियं धामोपजगाम' (कौ. उ. ३।१) 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' (छा. उ. ४।१।१) इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः— किं इमानि पारिप्लवप्रयोगार्थानि आहोस्वित् संनिहितविद्याप्रतिपत्त्यर्थानीति।

पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्। आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्। ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत् प्रयोगशेषत्वात्-इति चेत्;

---

पूर्वस्मिन्नधिकरणे 'स एष रसानां रसतमः' इत्यादिसन्दर्भस्य विधिविषयसमर्पकतैव तात्पर्यविषयीभूतेत्युक्तम्, तर्हि 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' इत्याद्युपाख्यानानामपि 'पारिप्लवे सर्वाण्याख्यानानि शंसन्ति' इति विधिशेषतैव—इति प्रत्यवस्थानात् सङ्गतिः।

ननु—अश्वमेधः त्र्यहसाध्यः, तत्र पारिप्लवाख्यं शस्त्रं 'पारिप्लवं शंसन्ति' इति विधाय, 'सर्वाण्याख्यानानि पारिप्लवे शंसन्ति' इति यद्यपि अविशेषेण सर्वाण्याख्यानानि विनियुक्तानि, तथापि, नायं सर्वशब्दो वैदिकानि कृत्स्नान्याख्यानानि विनियुङ्क्ते, अपि तु वाक्यशेषे 'प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजा तृतीयेऽहनि वरुण आदित्यः' इत्याख्यानविशेषाणामाम्नानात् तद्विषयतया सङ्कुचद्वृत्तिरयं सर्वशब्दोऽवगम्यते। अतो न पारिप्लवशंसने वेदान्तगताख्यानानां विनियोगः सम्भवति—इति चेत्—

न—उपक्रमगतस्य सर्वशब्दस्य उपसंहारानुसारेण सङ्कोचस्य अनुचिततया वाक्यशेषस्य सर्वाख्यानोपलक्षकत्वसम्भवात्—इति पूर्वपक्षिणोऽभिप्रायः।

अयमत्र सिद्धान्ताभिप्रायः—यदि हि उपक्रमगतसर्वशब्दः सङ्कोचसहिष्णुः न भवेत्, तदा एवं स्यात्। स तु सङ्कोचमपेक्षते, सर्वेषामाख्यानानां प्रयोगस्य

तन्न । कस्मात्? विशेषितत्वात् । 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचेदेवाख्यानानि तत्र विशेष्यन्ते । आख्यानसामान्याचेत् सर्वगृहीतिः स्यात्, अनर्थकमेवेदं विशेषणं भवेत् । तस्मात् न पारिप्लवार्था एता आख्यानश्रुतयः ॥ २३ ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

असति च पारिप्लवार्थत्वे आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या । एकवाक्यतोपबन्धात् । तथाहि तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते, प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च ।

मैत्रेयीब्राह्मणे तावत् 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यया विद्यया एकवाक्यता दृश्यते । प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्याद्यया । जानश्रुतिरित्यत्रापि 'वायुर्वाव संवर्गः' इत्याद्यया । यथा 'स आत्मनो

---

अशक्यत्वात् । एवञ्च उपक्रमगतस्सर्वशब्दः केषु सङ्कोचनीयः—इत्यपेक्षायां तदपेक्षितार्थ एव वाक्यशेषेण समर्प्यत इति नात्र उपसंहारानुसार उपक्रमस्य विरोधी, अपि तु अनुकूलः-इति ॥ २३ ॥

विद्याप्रतिपादकवाक्यैस्सह एकवाक्यतोपबन्धाच्च नैषां पारिप्लवार्थत्वम्-इति सूत्रार्थः । यदि हि पारिप्लवशंसने आख्यानपदानां विनियोगः स्यात्, तदा, तावतैव प्रयोजनाकाङ्क्षाया उपरतत्वेन विद्यास्तावकतया विद्याविधिभिरेकवाक्यता न स्यात् । प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्चेति । याज्ञवल्क्येन महर्षिणा अतिप्रियां स्वभार्यां प्रति आत्मविद्योक्ता, अतः इयं अत्यन्तं हितभूता-इति हि प्रतीतौ आख्यायिकायाः प्ररोचनोपयुक्तता स्पष्टैव । बाह्यविषयासक्तानाञ्च पुरुषाणां आख्यायिकायामुच्यमानायां बाह्येभ्यो विषयेभ्यः चित्तं व्यावर्तते, ततः समाहितचित्तानां आप्तैः नीत्यादिरूपो लौकिकोऽर्थः प्रतिपाद्यत इति प्रतिपत्तिसौकर्यकरत्वं विरोधिविषयकचित्तव्यावर्तनेन लौकिकाख्यानेषु [1]दृष्टम्, सा रीतिः वेदान्तेषु योजनीयेति भावः ॥ २४ ॥

इति पारिप्लवाधिकरणम्

---

1. दृष्टमिति पञ्चतन्त्रादिरूपकथाग्रन्थानां एवंरूपता दृष्टेति भावः ।

वपामुदखिदत्' इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहित-विधिस्तुत्यर्थता तद्वत् ।

तस्मात् न पारिप्लवार्थत्वम् ॥ २४ ॥

५ अग्नीन्धनाद्यधिकरणम्

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

'पुरुषार्थोऽतः शब्दात्' (ब्र. सू. ३।४।१) इत्येतत् व्यवहितमपि संभवात् अत इति परामृश्यते । अत एव च-विद्यायाः पुरुषार्थहेतुत्वात् अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति आद्यस्यैवाधिकरणस्य फलमुपसंहरति अधिकविवक्षया ॥ २५ ॥

---

परामर्शं जैमिनिरितिद्वितीयाधिकरणं पुरुषार्थाधिकरणगुणसूत्रोपक्षिप्तोर्ध्वरेतसामाक्षेपसमाधानार्थमिति तस्यैव शेषभूतम् । तृतीयचतुर्थाधिकरणे तु स्तुतिविधिविचारप्रसङ्गागते । अतः तैस्सह सङ्गतिः अस्याधिकरणस्य [1]न वक्तव्येत्यभिप्रेत्य आद्याधिकरणप्रयोजनकथनपरतया सूत्रं योजयति—पुरुषार्थोऽतश्शब्दादित्येतदिति । पुरुषार्थाधिकरणपूर्वपक्षरीत्या विद्यायाः कर्माङ्गत्वे हि, अग्नीन्धनादियुक्तं यत् अग्निहोत्रादिकर्म भवति तदपेक्षैव विद्या भवेत्, प्रधानाभावे अङ्गानुष्ठानानुपपत्तेः । तत्तु नास्ति, किं तु, विद्यायाः स्वत एव पुरुषार्थहेतुत्वं साधितम् । अतो न विद्या अग्नीन्धनादियुक्तकर्मापेक्षा-इति भावः ।

अनेन च सूत्रेण ऊर्ध्वरेतस्सु चशब्देहीतिसूत्रार्थस्यापि [2]परामर्शात् [3]शङ्कान्तरमपि व्यावर्तितं भवति ।

---

1. नवक्तव्येतीति अनेन-परोक्ते अतश्शब्दार्थे अनौचित्यमुक्तं भवति ।

2. परामर्शादिति अनेन-अत्राधिकरणे कल्पतरुपरिमलयोरुक्तोऽर्थः सूत्रारूढः कृतो भवति । न च एवमतश्शब्दार्थवर्णने भाष्यविरोधः शङ्क्यः । अधिकरणार्थपरामर्शेन गुणसूत्रार्थपरामर्शस्य अविरोधात् ।

3. शङ्कान्तरमपीत्यादि अनेन-'भाष्योक्तमतश्शब्दार्थवर्णनं मन्दफलत्वादनादरणीयम्' इति श्रुतप्रकाशिकोक्तं दूषणं परिहृतं वेदितव्यम् ।

अत्रेयं शङ्का—विद्यायाः कर्माङ्गत्वाभावेन तस्याः प्रधानतया कर्मानपेक्षत्वेऽपि, कर्मणां विद्याङ्गत्वात् विद्यया कर्माण्यपेक्ष्यन्ते । न च विद्यायाः कर्माङ्गकत्वे प्रमाणाभावः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इतिवाक्येन विद्यायां कर्मणामङ्गत्वप्रतिपादनात् । न च—अनेन वाक्येन विविदिषायामेव कर्मणां विनियोगः, आख्यातोपात्तभावनाया भाव्यापेक्षायां [हि] विविदिषन्तीत्यत्र प्रकृत्या प्राधान्येन उपात्तोऽर्थः तथाऽन्वे(ती)ति, तत्र प्राधान्येन वेदनेच्छैव प्रतिपाद्यते, न तु वेदनम्, सन्नन्तप्रकृतौ[1] सन्प्रत्ययोपात्तमर्थं प्रति विदिधातूपात्तस्यार्थस्य विशेषणत्वात्—इति वाच्यम् । विषयसौन्दर्यज्ञानजन्यायामिच्छायां कर्मणामनुपयोगात् । अपि च 'प्रधानार्थस्यैवार्थान्तरेणान्वयः' इति सामान्यन्यायमपेक्ष्य 'इच्छेष्यमाणसमभिव्याहारे विधेयभावनाया भाव्यापेक्षायां इष्यमाणमेव भाव्यत्वेनान्वेति' इति स्वर्गकामोयजेतेत्यादिवाक्येषु क्लृप्तेन विशेषन्यायेन प्रबलेन, सामान्यन्यायस्य बाधिततया, वेदने एव कर्मणां विनियोगः । प्रमाणजन्ये वेदनस्वरूपे च कर्मणामुपयोगासम्भवात्, ज्ञानेन मोक्षे जनयितव्ये सहकारीणि तानि सम्पद्यन्त इति, अस्ति ज्ञानकालेऽपि कर्मसाहित्यम्-इति ।

अयमत्र परिहारः—यत एव ऊर्ध्वरेतस्सु परमहंसेषु विद्या दृष्टा अतः तया मोक्षरूपे फले जननीये नाग्नीन्धनाद्यपेक्षा । न च विविदिषन्तीति वाक्यं कर्मापेक्षाबोधकम् । वस्तुसौन्दर्यज्ञानलभ्यायामपीच्छायां प्रतिबन्धकीभूतपापनिरासद्वारा कर्मोपयोगसम्भवेन प्रधानतयोपस्थितायां विविदिषायामेव तेन कर्मणां विनियोगात् । न च 'इच्छेष्यमाणसमभिव्याहारे इष्यमाणस्यैव भाव्यता' इति न्यायः प्रकृते विविदिषायां कर्मविनियोगं प्रतिबध्नाति । स्वर्गकामोयजेतेत्यत्र हि विधिना इष्टसाधनत्वे बोधिते, भावनाभाव्यस्य रूपद्वयमवगतं भवति साध्यत्वमिच्छाविषयत्वं चेति । तत्र स्वर्गस्येच्छाविषयत्वं शाब्दम् । भाव्यत्वं तु कामनया अर्थाक्षिप्तम्, सिद्धे इच्छाविरहात् । कामनायां तु नोभयम् । अतः कामनामुल्लङ्घ्य स्वर्गपदमेव इष्टविशेषाकाङ्क्षापूरकं तत्रोपगतम् । यद्यपि च यागे साध्यत्वमुपस्थितम्, तथापि तस्य गौणतया मुख्यतया वा स्वर्गसाधनत्वान्वयात्प्राक् इष्टत्वं न सिद्धमिति सोऽपि तत्र भाव्यत्वेन नान्वेति । विविदिषन्तीत्यत्र तु धातूपात्ताया विविदिषाया भावनायां साध्यत्वमुपस्थितमेव । श्रवणादिप्रवृत्तिसम्पादकतया इष्टसाधनत्वात् इष्यमाणत्वमपि

---

1. प्रकृताविति ससम्यर्थो घटकत्वं सन्प्रत्ययेऽन्वेति ।

### ६ सर्वापेक्षाधिकरणम्

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

इदमिदानीं चिन्त्यते-किं विद्याया अत्यन्तमेवानपेक्षा आश्रमकर्मणां उत अस्ति काचिदपेक्षेति ।

तत्र, अत एव अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्ते ।

एवमत्यन्तमेवानपेक्षायां प्राप्तायां इदमुच्यते-सर्वापेक्षा चेति । अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव ।

ननु विरुद्धमिदं वचनम्-अपेक्षते चाश्रमकर्माणि विद्या नापेक्षते चेति ।

---

तस्य आर्थिकमस्त्येव । एवञ्च प्रधानतयोपस्थितां तां परित्यज्य न वेदनस्य साध्यत्वेनान्वय उचितः । यदि च यज्ञादिगोचरप्रवृत्तिजनकवेदनेच्छाव्यतिरेकेण ज्ञानसाधनश्रवणादिप्रवृत्तिजनिका यथा वेदनेच्छा प्रसिद्धा, एवं यागगोचरप्रवृत्तिजनकस्वर्गकामनाव्यतिरेकेण स्वर्गसाधनगोचरप्रवृत्तिजनिका यदि काचित् स्वर्गकामना पुरुषेषु इह प्रसिद्धा स्यात्, तदा विविदिषान्यायेन स्वर्गकामनाया भाव्यत्वं कल्प्येतापि । न च तदस्ति । अतोऽपि नात्र स्वर्गकामवाक्यन्यायः प्रवर्तते ।

अतो न विविदिषानन्तरं कर्मापेक्षेति न निर्विशेषविद्यया स्वकाले कर्माण्यपेक्ष्यन्त इति ॥ २५ ॥

इति अग्नीन्धनाद्यधिकरणम्

पूर्वाधिकरणोक्तं विविदिषार्थत्वं कर्मणां पुनरप्यत्राक्षिप्यते ।

विविदिषाया यज्ञादिफलत्वं हि, स्वर्गादिवत् न स्वतःपुरुषार्थतया सम्भवति, सुखरूपत्वाभावात्, अपि तु, मोक्षसाधनज्ञानजनकतया गौणपुरुषार्थत्वेन-इति वक्तव्यम् । विविदिषार्थेषु कर्मसु अधिकारश्च विविदिषागोचरेच्छावत एव वक्तव्यः । तत्र वक्तव्यम्-विविदिषेच्छा किं वेदनेच्छायां सत्यां उत तदभावेऽपि । नाद्यः, यदि कर्मकरणात् प्रागेव विविदिषेच्छासिद्ध्यर्थं वेदनेच्छोपगम्यते, तर्हि, प्रागेव विविदिषायास्सिद्धत्वात् निरर्थकमेव यज्ञादिकं विविदिषार्थत्वे स्यात् । न द्वितीयः, फलेच्छां विना साधनेच्छाया असम्भवेन वेदनेच्छाया असत्त्वे विविदिषेच्छाया एवासम्भ-

नेति ब्रूमः। उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते, उत्पत्तिं प्रति त्वपेक्षते। कुतः? यज्ञादिश्रुतेः। तथाहि श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. उ. ४।४।२२) इति यज्ञादीनां विद्यासाधनभावं दर्शयति। विविदिषासंयोगाच्च

---

वात्। अतः विविदिषोद्देशेन कर्मणां विधानासम्भवात् 'अश्वेन जिगमिषति' 'असिना जिघांसति' इत्यादाविव उपसर्जनीभूतवेदनसाधनतयैव यज्ञादीनां विधिरूपेयः—इति पूर्वः पक्षः।

अयमत्र परिहाराभिप्रायः—लोके हि भोजनादिगोचरा द्विविधेच्छा प्रसिद्धा। एका क्षुत्प्रतिबन्धकीभूतव्याधिदशायामपि भोजनगतरसानुसन्धानायत्ता, सा न तृप्तिपर्यन्तभोजनगोचरप्रवृत्त्युपयोगिनी। द्वितीया तु, औषधादिना व्याध्युपशमे सति क्षुद्दुःखासहिष्णुतादशायां जायमाना तीव्रा तृप्तिशरीरपुष्ट्याद्युपयोगिभोजनपर्यन्तप्रवृत्त्युपयोगिनी। तत्र, भोजनंतृप्त्यादिसाधनमितिज्ञानवतो व्याधिग्रस्तस्य भोजनेच्छायां सत्यां, तादृशभोजनमुत्कृष्टेच्छासाध्यमितिज्ञानात् उत्कृष्टेच्छागोचरं पुनरपीच्छान्तरं उत्कृष्टेच्छासाधनौषधसेवनप्रवृत्तिजनकमिति प्रसिद्धम्। न च—औषधसेवनं व्याध्युपशमे कारणं न बुभुक्षायाम्, सा तु भोजनगतेष्टसाधनताज्ञानादेव भवति—इति वाच्यम्। सत्यपि भोजनगतेष्टसाधनताज्ञाने उत्कटेच्छाया अदर्शनेन व्याधेः तत्र प्रतिबन्धकतया, व्याधिनिवृत्त्यनन्तरमुपलभ्यमानायामुत्कटेच्छायां प्रतिबन्धापनयनमुखेन[1] औषधसेवनस्य (तत्र) करणत्वावश्यम्भावात्। एवं च, तरति शोकमात्मविदितिवाक्यानुसारेण प्रथमतः आत्मजिज्ञासायां सत्यां 'आत्मज्ञानसाधनश्रवणाद्युपयोगिनी निदिध्यासनपरिपाकपर्यन्तंसततमुदित्वरी विविदिषा प्रतिबन्धकीभूतपापापगमे सत्येव भविष्यति' इत्यवगच्छतः पापनिवृत्तिद्वारा विविदिषाकामस्य अधिकारिणः सम्भवात् न विविदिषोद्देशेन कर्मविधाने काचिदनुपपत्तिरस्तीति, सिद्धम्—विद्यया मोक्षे जनयितव्ये न कर्मापेक्षा विविदिषाद्वारा स्वोत्पत्तौ तु विद्यायाः कर्मापेक्षा—इति।

वेदानुवचनम्—नित्याध्ययनम्। तपसा अनाशकेन—अनशनरूपेण। अनशनं च युक्ताहारत्वम्।

---

1. मुखेन—द्वारेण।

एषां उत्पत्तिसाधनभावोऽवसीयते । 'अथ यद् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' (छा. उ. ८।५।१) इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवात् यज्ञादीनामपि हि साधनभावः सूच्यते । 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि' (क. उ. २ १५) इत्येवमाद्या च श्रुतिः आश्रमकर्मणां विद्यासाधनभावं सूचयति । स्मृतिरपि

'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥' इत्येवमाद्या ।

अश्ववदिति योग्यतानिदर्शनम् । यथा च योग्यतावशेन अश्वो न लाङ्गलाकर्षणे युज्यते रथचर्यायां तु युज्यते, एवं आश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ चापेक्ष्यन्त इति ॥ २६ ॥

## शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

यदि कश्चित् मन्येत—यज्ञादीनां विद्यासाधनभावो न न्याय्यः, विध्यभावात्, 'यज्ञेन विविदिषन्ति' इत्येवंजातीयका हि श्रुतिः, अनु-

---

सर्ववेदायत्पदमामनन्तीतिश्रुत्या, सर्वेषां वेदानां ब्रह्मणि तात्पर्यमिति ब्रह्मप्रतिपादकतोच्यते । सा न कर्मकाण्डे साक्षात् सम्भवति, अपि तु, कर्मणां विविदिषाद्वारा आत्मज्ञानोपयुक्ततया कर्मभागस्यापि परम्परया समर्थनीया । एवं 'तपांसि सर्वाणि च यद्वदन्ति' इत्यपि, तपसां चित्तशुद्धिद्वारा तद्वेदनोपयोगितया कर्तृत्वोपचारः । पद्यते--गम्यते इति पदं ब्रह्माख्यम् । ओमित्येतदिति ओङ्कारस्य तदुपासनोपयुक्ततया तत्त्वेन निर्देशः । कषायः--पापं तस्य पक्तिः नाशः, तत्साधनमिति यावत् । परमा गतिः—मोक्षः, तत्साधनमिति यावत् ॥ २६ ॥

ननु—विविदिषोः 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिशास्त्रेण आचार्यशुश्रूषापूर्वकं श्रवणादिरूपस्यानेकव्यापारस्य विधानेन, कथं बाह्याभ्यन्तरकरणनिग्रहरूपं शमादिकमनुष्ठेयं कथं वा अग्निहोत्रादिकर्मानुष्ठानम् । अतः तमेतं वेदानुवचनेनेत्यादिवाक्यं तस्मादेवंविच्छान्तोदान्तइत्यादिवाक्यं च वर्तमानापदेशतया

वादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा, इत्थं महाभागा विद्या-यत् यज्ञादिभिरेतामवाप्तुमिच्छन्ति—इति ।

तथापि तु शमदमाद्युपेतः स्याद् विद्यार्थी, 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति' (बृ. उ. ४।४।२३) इति विद्यासाधनत्वेन शमदमादीनां विधानात्, विहितानां च अवश्यानुष्ठेयत्वात् ।

नन्वत्रापि 'शमाद्युपेतो भूत्वा पश्यति' इति वर्तमानापदेश उप-लभ्यते न विधिः ।

नेति ब्रूमः । तस्मादिति प्रकृतप्रशंसापरिग्रहात् विधित्वप्रतीतेः । पश्येदिति च माध्यन्दिना विस्पष्टमेव विधिमधीयते । तस्मात् यज्ञाद्यन-पेक्षायामपि शमादीन्यपेक्षितव्यानि ।

यज्ञादीन्यपि त्वपेक्षितव्यानि, यज्ञादिश्रुतेरेव ।

ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति ।

सत्यमुक्तम्, तथापि तु अपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते । न ह्ययं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तः, येनानूद्येत । 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' (तै. सं. २।६।८) इत्येवमादिषु च अश्रुतविधिकेष्वपि वाक्येषु अपूर्वत्वात् विधिं परिकल्प्य "पौष्णं पेषणं विकृतौ प्रतीयेत"

---

विद्यास्तुत्यर्थमेव—इति सूत्रव्यावर्त्यांशङ्कां दर्शयति—यदि कश्चिन्मन्येतेति । तस्मादितिप्रकृतप्रशंसापरिग्रहादिति । पूर्ववाक्ये हि 'तं विदित्वा न लिप्यते कर्मणा पापकेन' इति आत्मज्ञानस्य फलमभिहितम् । तदिह परामृश्यते प्ररोच-नार्थम्--यस्मात् आत्मज्ञानं महाफलं तस्मात् शमादिसाधनैः आत्मज्ञानं सम्पादयेत्—इति । तत्र च यदि विधिविवक्षा न स्यात् प्ररोचना व्यर्थैव स्यात् । आत्मज्ञानस्य चाविधेयतया तदनुवादेन अत्र शमादिकमेव विधीयते । न च तस्य श्रवणादि-विद्यासाधनानुष्ठानविरोधिता । तद्व्यतिरिक्तव्यापारेभ्य एव इन्द्रियनिग्रहस्य विवक्षि-तत्वात् ।

**पौष्णं पेषणं विकृतौ प्रतीयेत इत्यादिविचार इति ।** दर्शपूर्णमास-प्रकरणगतं 'पूषा प्रपिष्टभागः' इति वाक्यम् । तच्च अपूर्वत्वात् पूषदेवताके कर्मणि पेषणविधायकम् । पुरोडाशे पेषणस्य प्राप्तत्वेऽपि चरौ तत् न प्राप्नोति । दर्शपूर्ण-

इत्यादिविचारः प्रथमे तन्त्रे (पू. मी. ३।३।३४) प्रवर्तितः। तथा चोक्तम् 'विधिर्वा धारणवत्' (ब्र. सू. ३।४।२०) इति। स्मृतिष्वपि भगवद्गीतायासु, अनभिसंधाय फलं अनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम्। तस्मात् यज्ञादीनि शमदमादीनि च यथाऽऽश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि। तत्रापि एवंविदिति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनि-इति विवेक्तव्यम् ॥ २७ ॥

७ सर्वान्नानुमत्यधिकरणम्

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणसंवादे श्रूयते छन्दोगानाम् 'न ह वा एवंविदि किंचन अनन्नं भवति' (छा. उ. ५।२।१) इति। तथा वाजसनेयिनाम् 'न ह वा अस्य अनन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्' (बृ. उ. ६।१।१४) इति। सर्वमस्य अदनीयमेव भवतीत्यर्थः।

किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्याङ्गं विधीयते उत स्तुत्यर्थं संकीर्त्यते-इति संशये, विधिरिति तावत् प्राप्तम्। तथाहि प्रवृत्तिविशेषकर उपदेशो भवति, अतः प्राणविद्यासंनिधानात् तदङ्गत्वेन इयं नियमनिवृत्तिरुपदिश्यते।

---

मासयोश्च पूषदेवताककर्माभावात्, यत्र विकृतिषु पूषा देवता तत्र तस्य उत्कर्षः कर्तव्य इति।

यच्चोक्त–विरोधि विविदिषोः कर्मानुष्ठानं न सम्भवतीति, तत्राह–विविदिषासंयोगात्त्विति। तथा च, विविदिषोत्पत्तेः प्रागेव कर्मणामनुष्ठेयतया श्रवणादिकाले तेषां प्रसक्तिरेव नास्तीति न विरोधः ॥ २७ ॥

इति सर्वापेक्षाधिकरणम्

वर्तमानापदेशत्वेऽपि अपूर्वत्वात् विद्यार्थं यज्ञादिकं शमादिकञ्च विधेयम्–इति पूर्वाधिकरणे उक्तम्। तथासति 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यत्रापि प्राणविद्याङ्गतया सर्वान्नानुमतिः वर्तमानापदेशत्वेऽप्यपूर्वत्वात् विधेया भवतु–इति प्रत्यवस्थानात् सङ्गतिः।

नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात् ।

नैष दोषः । सामान्यविशेषभावाद्बाधोपपत्तेः । यथा प्राणिहिंसा-प्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च 'न कांचन परिहरेत् तद्व्रतम्' (छा. २।१३।२) इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहार-वचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते । एवं अनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेति ।

एवं प्राप्ते ब्रूमः—नेदं सर्वान्नानुज्ञानं विधीयत इति । न ह्यत्र विधायकः शब्द उपलभ्यते, 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति वर्तमानापदेशात् । न च असत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकर-त्वलोभेनैव विधिरभ्युपगन्तुं शक्यते । अपि च—'श्वादिमर्यादं प्राणस्यान्नम्' इत्युक्त्वा इदमुच्यते—'नैवंविदः किंचिदनन्नं भवति' इति । न च श्वादि-मर्यादमन्नं मानुषेण देहेन उपभोक्तुं शक्यते । शक्यते तु 'प्राणस्यान्नमिदं सर्वम्' इति विचिन्तयितुम् । तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादः, न सर्वान्नानुज्ञानविधिः ।

---

नन्वेवंसतीति । भक्ष्याभक्ष्यविभागशास्त्रव्याघातः अशक्यताया अप्युप-लक्षणम् । यत् सर्वैः प्राणिभिः अद्यते तत्सर्वं प्राणस्यान्नमिति प्रतिपाद्य नहवाएवं-विदिकिञ्चनानन्नंभवतीत्याम्नातम् । तथा च, विधिपक्षे, सर्वप्राणिभिर्यदद्यते तत् 'प्राणस्य सर्वमन्नम्' इति ज्ञानवता अदनीयमित्यर्थः । न च गजादिभिर्भक्ष्यमाणं वटकाष्ठादिकं उपासकेन भक्षयितुं शक्यम् । सामान्यविशेषभावादिति । सर्वंभक्षणीयमिति-विधिबलादेव वटकाष्ठादिकमपि पेषणादिना अदनीयतामापाद्य किञ्चित् भक्षणीयम्—इत्यपि द्रष्टव्यम् । वामदेव्यविद्याविषयेणेति । 'स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद' इति वामदेव्ये साम्नि मैथुनदृष्टिर्विहिता, तदङ्गतया 'न काञ्चन परि-हरेत् तद् व्रतम्' इति वाक्येन कामतस्समीपमागतां कामपि स्त्रियं न परिहरेत्—तस्याः कामं सम्पादयेत् इति नियमो विहितः ।

तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवाद इति । नहवाएवंविदि-किञ्चनानन्नंभवतीत्यत्र, सर्वप्राणविदाऽदनीयमिति स्पष्टो विधिर्नोपलभ्यते, अपि तु

तद्दर्शयति 'सर्वान्नानुमतिश्च प्राणात्यये' इति।

एतदुक्तं भवति—प्राणात्यये एव हि—परस्यामापदि सर्वमन्नं अदनीयत्वेनाभ्यनुज्ञायते, तद्दर्शनात्। तथाहि श्रुतिः चाक्रायणस्यर्षेः कष्टायामवस्थायां अभक्ष्यभक्षणे प्रवृत्तिं दर्शयति 'मटचीहतेषु कुरुषु' (छा. उ. १।१०।१) इत्यस्मिन् ब्राह्मणे। चाक्रायणः किलर्षिः आपद्गतः इभ्येन सामिखादितान् कुल्माषान् चखाद। अनुपानं तु तदीयं उच्छिष्टदोषात्

---

कल्पनीयः। न च—'प्राणस्य सर्वमन्नम्, अतः प्राणोपासकस्यापि प्राणभूतत्वात् सर्वमन्नम्' इत्येवं प्राणज्ञानस्तुतिपरत्वेन वाक्यस्य भक्ष्याभक्ष्यविभागशास्त्रबाधं विनैव उपपत्तौ सम्भवन्त्यां विभागशास्त्रबाधेन विधिकल्पनं—न्याय्यं इति भावः। उपासकेनापि भक्ष्याभक्ष्यविभागशास्त्रादरः कर्तव्य इत्यत्र लिङ्गप्रदर्शनपरं सूत्रं व्याचष्टे-तद्दर्शयतीति।

मटचीहतेषुकुरुष्वित्यस्मिन्ब्राह्मण इति। एवं हि श्रूयते—'मटचीहतेषु कुरुषु आटिक्या सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास, सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे, तं होवाच नेतोऽन्ये विद्यन्ते यच्चये म इम उपनिहिता इति, एतेषां मे देहीति होवाच, तानस्मै प्रददौ, हन्तानुपानमिति, उच्छिष्टं वै मे पीतं स्यादितिहोवाच, न स्विदेतेऽप्युच्छिष्टा इति, न वा अजीविष्यं इमानखादन्निति होवाच, कामो म उदपानमिति, स ह खादित्वा अतिशेषान् जायाया आजहार, साऽग्र एव सुभिक्षा बभूव, तान् प्रतिगृह्य निदधौ, स ह प्रातः सञ्जिहान उवाच, यत् बत अन्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते स मा सर्वैर्आर्त्विज्यैर्वृणीतेति, तं जायोवाच हन्त पत इमे कुल्माषा इति, तान् खादित्वा अमुं यज्ञं विततमेयाय' इति। मटच्यः—सस्यविरोधिनः कीटविशेषाः, आटिकी--असञ्जातयौवना, इभ्यः- हस्तिपकः, प्रद्राणकः---क्षुत्पीडितः, कुल्माषाः--माषविशेषाः। यच्चात्र [1]राशौ, मे-मया। अनुपानं-जलं गृहाण इति इभ्यवचनम्। 'उच्छिष्टं वा' इति चाक्रायणवचनं, नस्विदेतेऽपीति पुनरिभ्यवचनं, नवाअजीविष्यमिति चाक्रायणवचनम्। कामः-इच्छाधीनम्, अतिशेषान्-अवशिष्टान्, सुभिक्षा-लब्धान्ना, सञ्जिहानः—शयनं विसृजन्, अन्नस्य—अन्नम्।

---

1. राशाविति चयेइत्यस्य विवरणम्।

प्रत्याचचक्षे। कारणं चात्र उवाच 'न वा अजीविष्यं इमानखादन्' इति, 'कामो म उदपानम्' (छा. उ. १।१०।४) इति च। पुनश्चोत्तरेद्युः तानेव स्वपरोच्छिष्टान् पर्युषितान् कुल्माषान् भक्षयांबभूवेति। तदेतदुच्छिष्टच्छिष्ट-पर्युषितभक्षणं दर्शयन्त्याः श्रुतेः आशयातिशया लक्ष्यते-प्राणात्ययप्रसङ्गे प्राणसन्धारणाय अभक्ष्यमपि भक्षयितव्यमिति। स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावतापीति अनुपानप्रत्याख्यानादवगम्यते। तस्मात् अर्थवादो 'न ह वा एवंविदि' इत्येवमादिः॥ २८॥

## अबाधाच्च॥ २९॥

एवं च सति 'आहारशुद्धौ सत्वशुद्धिः' इत्येवमादि भक्ष्याभक्ष्य-विभागशास्त्रं अबाधितं भविष्यति॥ २९॥

## अपि च स्मर्यते॥ ३०॥

अपि च-आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्च अविशेषेण—

'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा (मनु. १०।१०४)॥'

इति। तथा 'मद्यं नित्यं ब्राह्मणः' 'सुरापस्य ब्राह्मणस्य उष्णामासिंचेयुः', (गौ. ध. ३।५।१) 'सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च स्मर्यते वर्जनमनन्नस्य॥ ३०॥

---

एतदाख्यायिकार्थं संगृह्णाति—चाक्रायणः किलर्षिरित्यादिना। नन्वनेन ब्रह्मविदश्चाक्रायणस्य भक्ष्याभक्ष्यविभागानुमतिः सूच्यते, अतो नेदं प्राणविदो भक्ष्याभक्ष्यविभागशास्त्रादरे लिङ्गम्--इति चेत्--न, ब्रह्मविदोऽपि भक्ष्याभक्ष्यविभाग-शास्त्रादरश्चेत् प्राणविदस्सोऽस्तीति किमु वक्तव्यमिति भावः॥ २८॥

पूर्वसूत्रेण, लिङ्गदर्शनानुसारेण 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यादेरर्थवादत्वमेवाश्रयणीयम्-इत्युक्तम्। अनेन तु, विभागशास्त्राबाधायापि तस्यार्थ-वादतैवाश्रयणीयेति प्रतिपाद्यते। आहारशुद्धौ अभक्ष्यवर्जनेन संपादितायां सत्वस्य-अन्तःकरणस्य शुद्धिर्भवति॥ २९॥

विदुषोऽविदुषश्च आपत्काल एव नियमपरित्यागाम्नानात्, अनापदि सर्वेणापि भक्ष्याभक्ष्यनियमोऽनुष्ठेय इति गम्यते। 'मद्यं नित्यं ब्राह्मणः' इति गौतम-

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्च अनन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां संहितायां श्रूयते 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इति । सोऽपि 'न ह वा एवंविदि' इत्यस्यार्थवादत्वादुपपन्नतरो भवति ।

तस्मादेवञ्जातीयका अर्थवादाः, न विधय इति ॥ ३१ ॥

८ आश्रमकर्माधिकरणम्

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

'सर्वापेक्षा च....' (ब्र. सू. ३।४।२६) इत्यत्र आश्रमकर्मणां विद्यासाधनत्वमवधारितम् । इदानीं तु, किं अमुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयानि उताहो नेति चिन्त्यते ।

तत्र, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना आश्रमकर्मणां विद्यासाधनत्वेन विहितत्वात् विद्यामनिच्छतः फलान्तरं

---

वचने वर्जयेन्मधुमांसगन्धमाल्येत्यादिपूर्ववाक्यात् वर्जयेदित्यनुषज्यते । अत्र नित्यमितिपदात् अप्रतिसमाधेयव्याधिं विना न ग्राह्यं मद्यमिति द्योत्यते । सुरयैव प्रतिसमाधेये व्याधौ तु तदनुमतिरस्त्येव । 'गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् । तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्' इति बार्हस्पत्यवचने लघुप्रायश्चित्तविधानस्य भिषक्क्रियाविषयताया आवश्यकत्वात् । अन्यथा, सुरापानेमरणान्तप्रायश्चित्तविधानविरोधापत्तेः । 'एतान्येव आतुरस्य भिषक्क्रियायां अप्रतिषिद्धानि भवन्ति, यानि चान्यान्येवंप्रकाराणि तेष्वप्यदोषः' इति अभक्ष्यभक्षणे भिषक्क्रियायां अदोषत्वस्मरणमपि[1] लघुप्रायश्चित्ताभिप्रायम् ॥ ३० ॥ ॥ ३१ ॥

इति सर्वान्नानुमत्यधिकरणम्

यथा व्यवस्थावचनविरोधात् सर्वान्नानुमतिवाक्यं अर्थवादः, एवं नित्यत्वप्रतिपादकवचनविरोधात् कर्मणां न विविदिषार्थत्वं सम्भवति-इति प्रत्यवस्थानात् सङ्गतिः ।

---

1. स्मरणमपीति स्मरणमिदं सुमन्तोः इति परिमले ।

कामयमानस्य नित्यान्यननुष्ठेयानि, अथ तस्याप्यनुष्ठेयानि न तर्हि एषां विद्यासाधनत्वम्, नित्यानित्यसंयोगविरोधात्-इत्यस्यां प्राप्तौ पठति—

आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्। न हि वचनस्य अतिभारो नाम कश्चिदस्ति ॥ ३२ ॥

अथ यदुक्तं 'नैवं सति विद्यासाधनत्वमेषां स्यादिति, अत उत्तरं पठति—

---

नित्यानित्यसंयोगविरोधादिति। ननु—यद्येकस्यैव वचनस्य नित्यताबोधकत्वं विविदिषार्थत्वबोधकत्वञ्चोच्येत, तथा सति एकेन वचनेन अर्थद्वयस्य बोधयितुमशक्यतया विरोधः स्यात्, तत्तु नास्ति। यावज्जीवादिवाक्येन यज्ञादीनां नित्यता बोध्यते, विविदिषन्तीतिवाक्येन विविदिषार्थता बोध्यते, अतो न विरोधः। दृष्टञ्च वचनद्वये सति एकस्योभयार्थत्वम्। यथा 'खादिरे पशुं बध्नाति' 'खादिरं वीर्यकामस्य' इति वचनद्वयानुसारेण खादिरतायाः क्रतौ नित्यत्वं कामार्थत्वञ्च-इति चेत्;

एवं मन्यते—एतावता हि प्रमाणस्य विरोधः परिहृतो भवति, एकस्य वचनस्य अर्थद्वयपरतानुपगमात्। प्रमेयविरोधस्तु न परिहृतः, न हि एकस्यैवार्थस्य आवश्यकत्वमनावश्यकत्वञ्च सम्भवति—इति। एवञ्च खादिरताया अप्युभयार्थत्वं आक्षिप्तमेव भवति। तथा च अर्थविरोधेन वचनद्वयप्रामाण्यासम्भवात् वर्तमानापदेशयुक्तं विविदिषावाक्यमेव अर्थवाद इति पूर्वः पक्षः।

अयमत्र सिद्धान्ताभिप्रायः—एकस्यैव पदार्थस्य उपाधिभेदेनावश्यकत्वानावश्यकत्वे न विरुध्येते। तथा च अग्निहोत्रादीनां जीवनादिनिमित्तकत्वेनावश्यकत्वं विविदिषासाधनत्वाकारेणानावश्यकत्वं, तथैव खादिरत्वादीनामपि क्रतूपकारार्थत्वेन क्रतावावश्यकत्वं कामार्थत्वेनानावश्यकत्वमिति।

अत्र, कर्मणां विविदिषार्थत्वे उक्ते गूढाभिसन्धेः पूर्वपक्षिणश्चोद्यं तर्हिननित्यतेति। तन्निवृत्त्यर्थश्चकारो विहितत्वाच्चेति। अपिशब्दात् विविदिषाकर्मत्वसमुच्चयः ॥ ३२ ॥

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि च एतानि स्युः, विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना। तदुक्तम् 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति। न चेदं विद्यासहकारित्ववचनं आश्रमकर्मणां प्रयाजादिवत् विद्याफलविषयं मन्तव्यम्। अविधिलक्षणत्वाद्विद्यायाः, असाध्यत्वाच्च विद्याफलस्य। विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिषाधयिषया सहकारि साधनान्तरं अपेक्षते, नैवं विद्या। तथा चोक्तम् 'अत एव चाग्नीन्धनाद्यनपेक्षा' (ब्र. सू. ३।४।२५) इति। तस्मात् उत्पत्तिसाधनत्वे एव एषां सहकारित्ववाचोयुक्तिः।

---

तर्हि नित्यानित्यसंयोगविरोधात् विविदिषार्थत्वं न सम्भवतीति शङ्कापरिहारार्थं सूत्रम्।

इदं अनुष्ठेयानिस्युरितिपदाध्याहारेण [1]योजयति—विद्यासहकारीणीति। सहकारित्वपदं प्रकृतत्वात् [2]विद्यासहकारित्वपरम्। ननु—अविधिलक्षणत्वेऽपि विद्या यथा स्वोत्पत्ताविति कर्तव्यतामपेक्षते एवं स्वफलेऽपीतिकर्तव्यतापेक्षा किं न स्यात्-इत्यत आह—तथा चोक्तमिति। विविदिषावाक्यस्य ज्ञानेन फले जनयितव्ये कर्मापेक्षताबोधकतायाः तत्र निरस्तत्वादिति भावः ॥ ३३ ॥

इति आश्रमकर्माधिकरणम्

---

1. **योजयति**—योजयित्वालब्धमर्थं कथयति।

2. **विद्यासहकारित्वेति** पुण्यकर्मभिः पापनिवृत्तिः, ततः फलोपधायिका विविदिषा, ततः श्रवणादिकम्, ततश्च विद्योत्पत्तिः-इत्येवंरूपं विद्याप्रयोजकत्वं अत्र विद्यासहकारित्वं ज्ञेयम्। सत्तामात्रेण साहित्योक्तिः 'सहैव दशभिः पुत्रैः भारं वहति गर्दभी' इतिवत्। फलकारित्वञ्च विद्याया एव। अन्यथा "अत एव चाग्नीन्धनाद्यनपेक्षा" इति सूत्रविरोधापत्तेः। कर्मणां विद्यार्थत्वपक्षे फलापवर्गाणि कर्माणि विद्योत्पत्तिपर्यन्तमनुवर्तन्त इति, सहत्वोक्तिः सूपपादा। विविदिषार्थत्वपक्षे तु कालविशेषानादरेण सद्भावमात्रं विवक्षितमिति भावः।

न चात्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि सयोगभेदात्। नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितः, न तस्य विद्याफलत्वम्। अनित्यस्तु अपरः संयोगः 'तमेतं वेदानुवचनेन' इत्यादिवाक्यकल्पितः, तस्य विद्याफलत्वम्। यथा एकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वं अनित्येन संयोगेन पुरुषार्थत्वं च, तद्वत् ॥ ३३ ॥

९ सर्वथाधिकरणम्

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि—आश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च ते एव अग्निहोत्रादयो धर्मा अनुष्ठेयाः। तएवेत्यवधारयन्नाचार्यः किं निवर्तयति। कर्मभेदाशङ्कां इति ब्रूमः। यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्यत्र

---

[1]पूर्वस्मिन्नधिकरणे, विविदिषार्थत्वेन यज्ञादिकं विधेयमित्युक्तम्, तर्हि, तेषां यज्ञादीनां प्रकरणान्तरेण मासाग्निहोत्रादिवत् प्रसिद्धयज्ञादिभ्यो भेदोऽभ्युपगन्तव्यः- इति प्रत्यवस्थानात् सङ्गतिः।

विविदिषोद्देशेन विधेयानि यज्ञादीनि प्रसिद्धयज्ञादिभ्यो भिन्नानि उत तान्येवेति सन्देहः।

तत्र पूर्वः पक्षः—यथा 'मासमग्निहोत्रं जुह्वति' इत्यादिषु अनुपादेयस्य मासस्य कर्तव्यताया बोधयितुमशक्यतया मासेऽग्निहोत्रादिकर्तव्यताबोधनात्, विहितस्य च विधानानुपपत्तेः, प्रसिद्धाग्निहोत्रादिभ्यः कर्मान्तराण्येव मासमग्निहोत्रंजुह्वतीत्यादिविधिविधेयानि; एवमत्रापि फलरूपतया विविदिषायाः कर्तव्यताया बोधयितुमशक्यत्वात् तामुद्दिश्य यज्ञादीन्येव विधेयानीति विहितविधानानुपपत्त्या प्रसिद्धयज्ञादिभ्यः कर्मान्तराण्येव। न च- मासंजुह्वतीत्यत्र आख्यातेन विधेयसमर्पणम्, इह तु यज्ञेनेत्यादिसुबन्तैः, अतो न मासाग्निहोत्रन्यायोऽत्र प्रवर्तते—इति शङ्कनीयम्। 'विहितस्य विधानानुपपत्तेः कर्मभेदः' इति न्यायस्य तौल्ये सति एतादृशवैषम्यस्याप्रयोजकत्वात्। न च-अनुपादेयगुणसमभिव्याहृततासन्निधाने सत्यपि यज्ञादिपदैर्दूरस्थ-

---

1. भाष्ये शारीरकन्यायनिर्णये च ऐकाधिकरण्यदर्शनेऽपि, परिमले 'इदं सूत्रं अधिकरणान्तरपरत्वेन योजयितुं शक्यम्' इत्युक्तम्। एतदनुसारेण 'पूर्वस्मिन्नधिकरणे' इत्यादि।

नित्यादग्निहोत्रात् कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोऽस्तीत्यर्थः। कुतः? उभयलिङ्गात् श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्गं तावत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते, न तु जुहोतीत्यादिवदपूर्वं एषां रूपं उत्पादयतीति। स्मृतिलिङ्गमपि 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' (भ.गी. ६ १)

---

कर्मप्रत्यभिज्ञानम्, अतः फलसम्बन्धमात्रपरं विविदिषावाक्यम्, मासमग्निहोत्रंजुहोतीत्यत्र तु आख्यातेन दूरस्थकर्मप्रत्यभिज्ञानाभावात् उत्पत्तिविधिरेव सम्भवतीति-वाच्यम्। अनुपादेयगुणसमभिव्याहृतासन्निधेः प्रत्यभिज्ञाविच्छेदे सति यज्ञादिनाम्नस्तदपवादकत्वं न तु जुहोतीत्याख्यातस्य–इत्यत्र नियामकाभावात्। अतः प्रकरणान्तरन्यायेन भिन्नान्येव यज्ञादीनि–इति।

सिद्धवदुत्पन्नरूपाण्येवेति। कर्मकाण्डे यद्रूपं सिद्धवद्वर्तते तदेव स्वीकृत्य, इह रूपान्तरमप्रतिपाद्य–इत्यर्थः।

अयं भावः यदि हीह यज्ञादिपदोदितकर्मान्तरोत्पत्तिः स्वीक्रियेत, तदा तानि किं मुख्ययज्ञरूपाणि उत यज्ञादीतिकर्तव्यताकत्वात् यज्ञादिपदेन गौणतया प्रतिपाद्यानि अयज्ञरूपाण्येव। नाद्यः, प्रसिद्धयज्ञादिभेदकस्य द्रव्यदेवतादिरूपस्य अपर्यवसानात्। न ह्यत्र उपदेशत इतिकर्तव्यता लभ्यते, नाप्यतिदेशतः। यज्ञत्वस्य 'स एष यज्ञः पञ्चविधः अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इत्यनेकसाधारणत्वावगमेन कस्यात्र इतिकर्तव्यता भवतीति विनिगमनाऽलाभात्। अत एव न द्वितीयोऽपि। अपि च–अग्निहोत्रादीतिकर्तव्यताप्राप्तौ यज्ञपदप्रवृत्तिनिमित्तस्य द्रव्यदेवतासम्बन्धादेः इहापि सम्पन्नतया गौणयज्ञत्वानुपपत्तेः। एवं वेदानुवचनादिकमपि प्रसिद्धवेदानुवचनादिभ्यो भिन्नतया निर्धारयितुमशक्यम्। अतो नेह प्रकरणान्तरन्यायावसरः।

ततश्च, उक्तानुपपत्त्या दूरस्थानां कर्मणां बुद्धौ विपरिवर्तमानत्वे सति तान्येवेह विविदिषार्थत्वेन विहितानि भवन्ति। नापीह प्रसिद्धाग्निहोत्रादिप्रयोगात् विविदिषाप्रयोगोऽपि भिद्यते, अपि तु, यथा स्वर्गकामस्याग्निहोत्रप्रयोगे न पृथङ्नित्यप्रयोगः, स्वर्गार्थप्रयोगान्नित्यप्रयोगवैलक्षण्याभावेन प्रयोगाद्वयतन्त्रता, एवं विविदिषाप्रयोगस्य नित्यप्रयोगस्य च तन्त्रता बोध्या।

इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति। 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इत्याद्या च संस्कारत्वप्रसिद्धिः वैदिकेषु कर्मसु, तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति। तस्मात् साध्विदमभेदावधारणम् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनम्। अनभिभवं च दर्शयति श्रुतिः ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' (छा. उ. ८।५।३) इत्यादिना। तस्मात् यज्ञादीनि आश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति निश्चितम् ॥ ३५ ॥

---

अनाश्रितः कर्मफलम्' इत्युत्तरार्धे 'स सन्न्यासी च योगी च' इति स्तुतिबलात् निरभिसन्धिककर्मकर्तुः मुमुक्षुत्वमवगम्यते। तस्यैव च कर्मणः 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इत्युत्तरश्लोके योगपदोदितायां चित्तशुद्धौ विनियोग उच्यते। तथा च, गीतावचने 'कर्मफलमनाश्रितः' इत्युक्त्या, प्रसिद्धानि यान्यग्निहोत्रादीनि फलवन्ति कर्माणि तेष्वेव फलाभिसन्धिपरित्यागे ज्ञानार्थतावगमात् मुमुक्षुणा क्रियमाणानि कर्माणि न प्रसिद्धकर्मभ्यो भिद्यन्त इति सिध्यति। तदैकार्थ्याय विविदिषावाक्येऽपि प्रसिद्धानामेव कर्मणां विनियोगः स्वीकर्तव्यः। अनाश्रितःकर्मफलमिति वचनानुसारेण, काम्यानामपि कर्मणां ज्ञानार्थतास्तीत्यपि सिध्यति इति द्रष्टव्यम्। यस्यैतेऽष्टाचत्वारिंशत्संस्कारा इति। प्रसिद्धान्येवाग्निहोत्रादीनि प्रस्तुत्य इदं वचनम्। तत्र च, अग्निहोत्रादिसंस्कारस्य क्वोपयोग इत्यपेक्षायां उत्तरवाक्यं 'स ब्रह्मणः सायुज्यं सलोकतां जयति' इति। ततश्च सायुज्यस्य विद्यैकसाध्यतया विद्याद्वारत्वे आवश्यके, प्रसिद्धानामेवाग्निहोत्रादीनां विद्योपयोग उक्तो भवतीति।

तत् सिद्धं प्रसिद्धानामेवाग्निहोत्रादीनां विविदिषावाक्ये ग्रहणेन तेषां आश्रमकर्मत्वं विद्यासहकारित्वं चेति ॥ ३४ ॥

'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' इत्यत्र, आत्मनो नाशाप्रसक्त्या आत्मानन्नश्यतीत्यनेन आत्मज्ञाननाशाभावो विवक्षितः। यथाकथञ्चिदपि हि उत्पन्नमपि आत्मज्ञानं ब्रह्मचर्यादिनियमरहितस्य साक्षात्कारपर्यन्ततां न प्राप्नो-

१० विधुराधिकरणम्

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विधुरादीनां द्रव्यादिसंपद्रहितानां च अन्यतमाश्रमप्रतिपत्तिहीनानां अन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किं वा नास्तीति संशये-

नास्तीति तावत् प्राप्तम्, आश्रमकर्मणां विद्याहेतुत्वावधारणात् आश्रमकर्मासंभवाच्चैतेषाम्-इति ।

एवं प्राप्ते इदमाह—अन्तरा चापि तु—अनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते । कुतः ? तद्दृष्टेः । रैक्ववाचक्नवीप्रभृतीनां एवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥ ३६ ॥

---

तीति, स एव ज्ञाननाशः । तथा च यथा ज्ञानेन ब्रह्मचर्यादिसाधनानि रागादिभिरनभिभवार्थमपेक्षितानि एवं कर्माण्यप्यपेक्षितानीति तात्पर्यम् ॥ ३५ ॥

इति सर्वथाधिकरणम्

अनन्तरातीताधिकरणे सहकारित्वेनचेतिसूत्रोक्तं यत् आश्रमकर्मणामेव विद्यासहकारित्वं, तत् विद्यार्थकर्मणामाश्रमकर्मभेदाशङ्कयाऽऽक्षिप्य अभेदेन समाहितम्, अतः तत् आश्रमकर्मणां विद्यासाधनत्व एवान्तर्भूतमिति, व्यवहिताधिकरणेन अस्य सङ्गतिः । तत्र आश्रमकर्मापीत्युक्त्या आश्रमकर्मबहिर्भूतानां विधुरादिकर्मणां विद्योपयोगो नास्तीति प्रतिभाति । तत्परिहारार्थत्वमस्येति सङ्गतिः ।

विधुरादीनामिति । विधुरोऽत्र मृतपत्नीकः । आदिपदेन सपत्नीक एव अन्धपङ्ग्वादिः अग्निहोत्रादिकर्मानधिकृतो विवक्षितः । अन्यतमाश्रमप्रतिपत्तिहीनानामित्यनेन, समाप्तब्रह्मचर्या अकृतदारपरिग्रहाः स्नातका विवक्षिताः ।

किं विद्यायामधिकारोऽस्तीति । ननु—अत्र यदि विद्यापदं निर्विशेषविद्याभिप्रायं तर्हि सिद्धान्ते रैक्वोदाहरणमसङ्गतम्, तस्य सविशेषसंवर्गविद्यानिष्ठत्वात् । कीदृग्विधश्च विद्याधिकारो विवक्षितः । यदि विविदिषारूपः स तु विधुराणामपि सम्भवति, वस्तुसौन्दर्यलभ्याया वेदनेच्छाया नियन्तुमशक्यत्वात् । उत्कटेच्छापि तेषु, जन्मान्तरानुष्ठितकर्मवशात् अस्मिन् जन्मनि अग्निहोत्राद्यभावेऽप्युपपद्यत इति, न तेषु अग्निहोत्राद्यभावेन तस्यापवादो वक्तुं शक्यते । नापि विद्यानुष्ठानोपयुक्तविशेषणवत्त्वमधिकारः निर्विशेषविद्यायामुपपद्यते, तस्याननुष्ठेयत्वात्—इति चेत्;

## अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे ॥ ३७ ॥

ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं; का नु खलु प्राप्तिरिति? साऽभिधीयते—

## विशेषानुग्रहश्च ॥ ३८ ॥

तेषामपि च विधुरादीनां अविरुद्धैः पुरुषमात्रसंबन्धिभिः जपोपवासदेवताराधनादिभिर्धर्मविशेषैः अनुग्रहो विद्यायाः संभवति। तथाच स्मृतिः 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यात् मैत्रो

---

उच्यते। विद्यापदं सविशेषनिर्विशेषविद्यासाधारणम्। विद्याधिकारश्च विद्याफलभाक्त्वम्। तत्र, सविशेषविद्यायां सहकारीणि अग्निहोत्रादिकर्माणि, ते[षु](षां) विधुरादेः अधिकारासम्भवात् न विद्याफलभाक्त्वं वक्तुं शक्यते। निर्विशेषविद्योत्पत्त्युपयोगीनि च अग्निहोत्रादीनि श्रवणादीनि च, तान्यपि न विधुरादीनां सम्भवन्ति, अग्निहोत्रादिषु गृहस्थस्यैवाधिकारात् निर्विशेषश्रवणादिषु यतेरेवाधिकारात्। तथा च, निर्विशेषविद्योत्पत्तेरेव तत्रासम्भवात् दूरत एव विद्याफलम्। यद्यपि विधुरादीनां वर्णमात्राधिकारीणि जपादिकर्माणि सम्भवन्ति, तथापि न तेषां विविदिषादिषूपयोगः। 'अनाश्रमी न तिष्ठेत दिनमात्रमपि द्विजः' इत्यादिनिषेधानुसारेण तेषां विद्याऽभावस्योन्नयनात्—इति पूर्वपक्षाभिप्रायः ॥ ३६ ॥

सुगमम् ॥ ३७ ॥

अयं भावः—सविशेषविद्यासु ह्यग्निहोत्रादिकर्मणां सहकारित्वं, यथा दर्शपूर्णमासादिषु प्रयाजादीनामङ्गतया विशिष्य तदेकप्रयोगान्तर्गततया विधानात् भवति नैवं विशेषेणविधिप्रयुक्तम्, अपि तु 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतश्नुते' इति कर्मसामान्यस्य तत्तदधिकारोचितस्य पृथक्प्रयुक्तस्यैव विद्याप्रतिबन्धकीभूतपापनिर्हरणेन। तथा च विधुरादिकृतकर्मणामपि धर्मेणपापमपनुदतीति शास्त्रानुसारेण पापनिवर्तकतायास्सिद्धतया विद्यासहकारित्वेन कृतानां विद्याप्रतिबन्धकीभूतपापनिवर्तकत्वोपपत्तेः सम्भवति सविशेषविद्योपयोगः। विविदिषार्थत्वमपि यज्ञादिसामान्यस्यावगम्यते, न त्वग्निहोत्रादियज्ञस्यैव। सम्भवति

ब्राह्मण उच्यते ॥' (मनु. २-८७) इति असंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयति। जन्मान्तरानुष्ठितैरपि च आश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः। तथाच स्मृतिः 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (भ. गी. ६।४५) इति जन्मान्तरसंचितानपि संस्कारविशेषान् अनुग्रहीतॄन् विद्याया दर्शयति। दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणापि अर्थिनमधिकरोति श्रवणादिषु।

तस्मात् विधुरादीनामप्यधिकारो न विरुध्यते ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतस्तु—अन्तरालवर्तित्वात् इतरत्-आश्रमवर्तित्वं ज्यायो विद्यासाधनम्, श्रुतिस्मृतिसंदृब्धत्वात्। श्रुतिलिङ्गाच्च 'तेनैति ब्रह्मवित् पुण्यकृत्तै-

---

च जपयज्ञादिकं दानादिकं च विधुरादौ। अतः तेषां विविदिषोत्पत्त्युपयोगिकर्मसु नानुपपत्तिः। जप्येनैवतुसंसिध्येदितिवचनोदाहरणं तु, जपादिषु ब्राह्मण्यमात्रस्यैवापेक्षा न तु गार्हस्थ्याद्याश्रमविशेषापेक्षेति प्रदर्शयितुम्। तत्र, मैत्र इति अहिंसाप्रधानत्वात् सर्वसुहृत्त्वं जपमात्रनिष्ठस्य विवक्षितम्। विधुरादीनां अस्मिन् जन्मनि विविदिषाप्रयुक्तकर्माभावमुपेत्यापि आह—जन्मान्तरानुष्ठितैरपीति।

यदपि पूर्वपक्षिणोऽभिमतं निर्विशेषगोचरश्रवणादौ यतिमात्राधिकारे न विधुरादीनां प्राप्तिरिति, तत्राह—दृष्टार्था चेति। अयं भावः—यद्यपि मुख्योऽधिकारो यतीनां श्रवणादिषु, सन्न्यासनियमादृष्टोपबृंहितस्यैव श्रवणस्य अपरोक्षज्ञानपर्यवसायित्वात्; तथापि, त्रैवर्णिकानां तत्र प्रतिषेधाभावात्, ज्ञानस्य दृष्टतया श्रवणादिभ्यः, तदर्थं तत्र प्रवृत्तौ नानुपपत्तिः। दृश्यते ह्युपनिषत्सु यतिव्यतिरिक्तानामपि निर्विशेषगोचरश्रवणादिकम्। परं तु तत् जन्मान्तरे अपरोक्षतापर्यवसायि भवतीति विशेषः ॥ ३८ ॥

अनाश्रमित्वनिन्दावचनस्य गतिं वक्तुं सूत्रम्।

तेनैतीति। 'तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च। एष पन्था ब्रह्मणा ह्यनुवित्तः तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च' इति मन्त्रः। तत्र, तेनेति पूर्ववाक्यप्रस्तुतोऽर्चिरादिमार्गो विवक्षितः। पुण्यकृत् तदनन्तरं तैजसः—निर्धूतपाप

जसश्च' (बृ. उ. ४।४।९) इति। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।' 'संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति च स्मृतिलिङ्गात् ॥३९॥

११. तद्भूताधिकरणम्

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम्। तांस्तु प्राप्तस्य कथंचित् ततः प्रच्युतिरस्ति नास्ति वेति संशयः।

पूर्वधर्मस्वनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात्, विशेषाभावात्-इत्येवं प्राप्ते-

उच्यते—तद्भूतस्य तु-प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदपि अतद्भावः-न ततः प्रच्युतिः स्यात्। कुतः? नियमातद्रूपाभावेभ्यः तथाहि—'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (छा. उ. २।२३।१) इति, 'अरण्यमियात् इति पदं ततो न पुनरेयात् इत्युपनिषत्' इति, 'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्। आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥' इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति।

---

ब्रह्मवित् अर्चिरादिमार्गेण याति। अत्र पुण्यस्य पापनिवर्तकताप्रतिपादनात्, अनाश्रमिणां निन्दास्मृतेश्च, आश्रमकर्मणां अतिशयेन पापनिवर्तकता सूच्यते ॥ ३९ ॥

इति विधुराधिकरणम्

पूर्वस्मिन्नधिकरणे विधुरादिकर्मणामपि विद्योपयोग उक्तः, तर्हि, ऊर्ध्वरेतस्त्वं प्राप्य पुनः गार्हस्थ्याश्रमं प्राप्तेन सम्यक्कृतानामाश्रमकर्मणां विद्योपयोगः कैमुतिकन्यायात् सिद्ध्यति—इति प्रत्यवस्थानात् सङ्गतिः। स्वनुष्ठानचिकीर्षया—सुष्ठु अनुष्ठानेच्छया। अत्यन्तमात्मानमिति। अत्यन्तमात्मानमितिवाक्ये अत्यन्तपदेन नैष्ठिकब्रह्मचारिणः पुनरावृत्त्यभावो द्योत्यते। अरण्यमियादिति। अरण्यमिति यत् पदं वानप्रस्थाश्रमरूपं तदियात्, ततः-पदात् न पुनरावर्तेत-इति योजना। 'आविमोक्षात् अनुतिष्ठेत्' इति पूर्वाश्रमप्रच्युत्यभावे तात्पर्यम्। उत्तराश्रमप्राप्तौ तु न निषेधः, 'गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्' इत्यादिशास्त्रात्। सौत्रं

यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत्' 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा. उ. ४) इति चैवमादीनि आरोहरूपाणि वचांसि उपलभ्यन्ते नैवं प्रत्यवरोहरूपाणि। न च एवमाचाराः शिष्टा विद्यन्ते।

यत्तु पूर्वधर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति;

तदसत्, 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' (भ. गी. ३।३५) इति स्मरणात्। न्यायाच्च। यो हि यं प्रति विधीयते स तस्य धर्मः, न तु यो येन स्वनुष्ठातुं शक्यते। चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात् प्रच्युतिः, नियमशास्त्रस्य बलीयस्त्वात्।

जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोः अत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥ ४० ॥

१२. आधिकारिकाधिकरणम्

## नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत, किं तस्य 'ब्रह्मचार्यवकीर्णी नैरृतं गर्दभमालभेत' इत्येतत् प्रायश्चित्तं स्यात्, उत नेति।

नेत्युच्यते। यदपि अधिकारलक्षणे निर्णीतं प्रायश्चित्तम् 'अवकी-

---

नियमपदं व्याख्याय अतद्रूपपदं व्याचष्टे— **यथा चेति।** अभावपदं व्याचष्टे- **नचैवमिति** ॥ ४० ॥

इति तद्भूताधिकरणम्

ऊर्ध्वरेतसां प्रत्यवरोहः अशास्त्रीय इत्युक्तम्, तेष्वेव ब्रह्मचर्यभङ्गे प्रायश्चित्तविचारणात् सङ्गतिः। **अवकीर्णिपशुश्चतद्वदाधानस्याप्राप्तकालत्वादितीति।** अवकीर्णिपशुः किं लौकिकाग्नौ कर्तव्यः उत आहवनीये-इति संशये, पूर्वपक्षः— यदाहवनीये जुहोतीति होममात्रस्य आहवनीये विधानात् अवकीर्णिहोमोऽपि आहवनीये कर्तव्यः। न च—यथा उपनयनहोमाः न आहवनीये कर्तव्याः, उपनयनात् प्राक् दारसङ्ग्रहस्यासंभवेन आधानासम्भवात् आहवनीयस्य सम्पादयितुमशक्यत्वात्, आधानं[हि]कृतदारस्यैव शास्त्रे विहितम्, एवं ब्रह्मचारिणोऽपि आधानासम्भवात् नाहवनीयस्सम्भवतीति लौकिकेऽग्नावेवावकीर्णिपशुर्भवेत्-इति वाच्यम्। अवकीर्णी स्नात्वा दारान् स्वीकृत्य प्रायश्चित्तं करोतु, नात्रानुपपत्तिः-इति।

र्णिपशुश्च तद्वत् आधानस्याप्राप्तकालत्वात्' (जै. सू. ६।८।२१) इति, तदपि न नैष्ठिकस्य भवितुमर्हति। किं कारणम्? 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥' इति अप्रतिसमाधेयपतनस्मरणात् छिन्नशिरस इव प्रतिक्रियानुपपत्तेः। उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावात् उपपद्यते तत् प्रायश्चित्तम् ॥ ४१ ॥

## उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥

अपि तु एके आचार्याः उपपातकमेवैतदिति मन्यन्ते। यत् नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्येत न तत् महापातकं भवति, गुरुतल्पादिषु महापातकेष्वपरिगणनात्। तस्मात् उपकुर्वाणवत् नैष्ठिकस्यापि प्रायश्चित्तस्य भावं इच्छन्ति, ब्रह्मचारित्वाविशेषात् अवकीर्णित्वाविशेषाच्च। अशनवत्—यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनःसंस्कारश्च एवमिति। ये हि प्रायश्चित्तस्याभावमिच्छन्ति तेषां न मूलमुपलभ्यते। ये तु भावमिच्छन्ति तेषां ब्रह्मचार्यवकीर्णीत्येतदविशेषश्रवणं मूलम्। तस्मात् भावो युक्ततरः।

तदुक्तं प्रमाणलक्षणे—'समा विप्रतिपत्तिः स्यात्' 'शास्त्रस्था वा तन्निमित्तत्वात्' (जै. सू. १।३।८।९) इति।

---

सिद्धान्तस्तु—उपनयनहोमवत् अवकीर्णिपशुरपि लौकिकेऽग्नावेव। 'अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्' इति अविप्लुतब्रह्मचर्यस्यैव दारपरिग्रहेऽधिकारप्रतिपादनात् प्रायश्चित्तात् प्राक् ब्रह्मचर्याविप्लवासम्भवेन दारपरिग्रहपूर्वकाधान(काल)स्याप्राप्तकालत्वात्-इति। अप्रतिसमाधेयपतनस्मरणादिति। तथा च विशेषवचनानुसारेण अवकीर्णिपशुरुपकुर्वाणविषय इति भावः ॥ ४१ ॥

अयमत्र सिद्धान्ताभिप्रायः—'प्रायश्चित्तं न पश्यामि' इति हि स्मृतिः। सा तु श्रुतिमपेक्ष्य स्वभावत एव दुर्बला। 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभं पशुमालभेत' इति श्रुतिः। अपि च-स्मृतौ न साक्षात् प्रायश्चित्ताभाव उक्तः, अपि तु नपश्यामीत्युक्तम्। तेन अभावो लक्षणीयः। अतः स्पष्टतयाप्रायश्चित्तबोधकश्रुत्यनुसाराय च स्मृत्या न प्रायश्चित्ताभावो लक्षणीयः। अपि तु श्रुत्यविरोध्यर्थान्तरमेव लक्षणीयम्। तत् उत्तराधिकरणे स्पष्टं भविष्यति।

प्रायश्चित्ताभावस्मरणं त्वेवं सति, यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम् । एवं भिक्षुवैखानसयोरपि 'वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत्' भिक्षुर्वानप्रस्थवत् सोमवल्लिवर्जं स्वशास्त्रसंस्कारश्च' इत्येवमादि प्रायश्चित्तस्मरणं अनुसर्तव्यम् ॥ ४२ ॥

१३. बहिस्तूभयथाधिकरणम्

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

यदि ऊर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं यदि वोपपातकं उभयथापि शिष्टैः ते बहिष्कर्तव्याः ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥' इति

'आरूढपतितं विप्रं मण्डलाच्च विनिस्सृतम् ।
उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत् ॥' इतिचैवमादिनिन्दातिशयस्मृतिभ्यः । शिष्टाचाराच्च । न हि यज्ञाध्ययनविवाहादीनि तैः सह आचरन्ति शिष्टाः ॥ ४३ ॥

---

यववराहादिपदेषु शास्त्रानुसारिणामन्योऽर्थः लौकिकानामन्योऽर्थः । तत्र उभयोरपि समा विप्रतिपत्तिः स्यात्--इति पूर्वपक्षे ; शास्त्रस्थानां प्रसिद्धिरेव प्रबला, शब्दार्थतत्त्वरक्षणस्य शास्त्रस्थपुरुषनिमित्तत्वात्-इति शास्त्रस्थावातन्निमित्तत्वादित्यनेन सिद्धान्तितम् । महाकक्ष-सोमम् । स्वशास्त्र-यतिधर्मप्रतिपादकं शास्त्रम् ॥ ४२ ॥

इति आधिकारिकाधिकरणम्

आरूढपतितानां शुद्ध्यर्थप्रायश्चित्तसद्भावे, कृतप्रायश्चित्तैस्तैस्सह भोजनाध्ययनादिषु शिष्टैः संव्यवहारोऽपि कार्यः-इति प्रत्यवस्थीयते ।

अयमत्र सिद्धान्ताभिप्रायः-पापानां शक्तिद्वयम् । एका इहाशुद्धिकरी, अपरा परलोकाशुद्धिकरी । तत्र प्रायश्चित्तैः परलोकाशुद्धिनिवर्तने नरकादिकं न भवति । ऐहिकाशुद्धिनिवर्तने तु शिष्टैस्संव्यवहार्यता । तत्र, आरूढपतितमित्यादिवचनात् नैष्ठिकानां वनस्थानां यतीनाञ्चावकीर्णिनाम् । शुद्धानामपि लोकेऽस्मिन् प्रत्याप-

१४ स्वाम्यधिकरणम्

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अङ्गेषु उपासनेषु संशयः। किं तानि यजमानकर्माणि आहोस्वित् ऋत्विक्कर्माणीति।

किं तावत् प्राप्तम्? यजमानकर्माणीति। कुतः? फलश्रुतेः। फलं हि श्रूयते—'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते' (छा. उ. २।३।२) इत्यादि। तच्च स्वामिगामि न्याय्यम्, तस्य

---

त्तिर्न विद्यते।' इति च [1]वचनात् ऐहिकाशुद्धिनिवृत्तिर्नास्तीत्यवगम्यते। तदनुसारेण प्रायश्चित्तंनपश्यामीतिवचनपि 'ऐहिकशुद्धिकरं प्रायश्चित्तं नास्ति' इत्यभिप्रायं द्रष्टव्यम् ॥ ४३ ॥

इति बहिस्तूभयथाधिकरणम्

पूर्वं 'कृतप्रायश्चित्तशिष्टसंव्यवहार्यः' इत्युत्सर्गस्य आरूढपतितेऽपवादो दर्शितः, तर्हि, 'क्रतौ विद्यमानो व्यापारः ऋत्विग्भिरेव कर्तव्यः' इत्युत्सर्गस्यापि क्रत्वङ्गाश्रितोपासनास्वपवादोऽस्तु–इति प्रत्यवस्थानात् सङ्गतिः।

अङ्गेषूपासनेष्विति व्यधिकरणे सप्तम्यौ, अङ्गाश्रितोपासनेष्वित्यर्थः।

फलं हि श्रूयत इति। अयं भावः—'वर्षति हास्मै वर्षयति ह य एवं वेद' इतिवाक्येषु वृष्ट्यादिरूपफलभागिन उपासनाकर्तृत्वमवगम्यते। न च उपासनाजनितं फलं ऋत्विजामिति वक्तुं शक्यम्। 'यजेत स्वर्गकामः' इति वाक्ये आत्मनेपदश्रुत्या, यागकरणको यो व्यापारः तज्जन्यस्यापि फलस्य स्वर्गकामिकर्तृगततायाः प्रतिपादनात्, ऋत्विजाञ्च [2]अतद्रूपत्वात्। न च--उपासनाजन्यं फलं न यागकरणकव्यापारजन्यम्, उपासनानां पृथक्फलतया यागेतिकर्तव्यतारूपत्वाभावात्—इति वाच्यम्। उपासनानां यागाङ्गाश्रिततया तज्जन्यस्यापि फलस्य अङ्गापेक्षताया अवश्यम्भावात्।

ननु--'यजेत स्वर्गकामः' इतिवाक्येन, स्वर्गकामिनो यजमानस्य साङ्गप्रधाने साक्षात्कर्तृत्वावगमेऽपि, 'ऋत्विग्भ्यो दक्षिणां ददाति' इति ऋत्विक्परिक्रयाम्नानात्

---

1. वचनादिति वचनमिदं कौशिकस्य इति परिमले।
2. अतद्रूपत्वात्—स्वर्गकामित्वाभावात्।

साङ्गे [प्रधाने] (प्रयोगे)अधिकृतत्वात्, अधिकृताधिकारत्वाच्च एवञ्जातीयकस्य। फलं च कर्तरि उपासनानां श्रूयते 'वर्षत्यस्मै य उपास्ते' इत्यादि।

---

परिक्रयस्य दृष्टार्थत्वाय कृत्स्ने व्यापारे साक्षात्कर्तृत्वमृत्विजामेव। यजमानस्य तु प्रयोजककर्तृत्वम्, तदभिप्रायेण च 'यजेत स्वर्गकामः' इतिवाक्ये स्वर्गकामपदस्य कर्त्राख्यातसामानाधिकरण्यम्, 'तत्प्रयोजको हेतुश्च' इति सूत्रेण प्रयोजकस्यापि कर्तृसंज्ञाविधानात्–इत्युपगम्यते। एवं च, वर्षतिहास्मैवर्षयतिहयएवंवेदेति फलभागिन उपासनाकर्तृताप्रतिपादकमप्याख्यातं प्रयोजककर्त्रभिप्रायं भविष्यतीति, न तद्बलात् यजमानस्य साक्षात्कर्तृत्वं वक्तुं शक्यम्–इति चेत्;

न–यदर्थो हि परिक्रयः तावत्स्वेव यजमानस्य प्रयोजककर्तृत्वम्, (इति) परिक्रयश्च क्रतुप्रकरणाम्नातः क्रत्वपूर्वार्थः, तत्र द्वारापेक्षायां, परमापूर्वप्रयुक्तव्यापारकर्त्रानतिरेव द्वारत्वेन सम्बध्यत इति, क्रयानतानामेव साङ्गप्रयोगकर्तृत्वावगमेन, तत्र यजमानस्य साक्षात्कर्तृत्वाभावेऽपि, उपासनानां पृथक्फलतया परमापूर्वार्थत्वाभावेन तत्र ऋत्विजां कर्तृत्वस्य अप्राप्त्या न प्रयोजककर्तृपरमाख्यातं योजयितुं युक्तं उपासनावाक्येषु। न च उपासनानामप्यङ्गावबद्धानां क्रतुप्रयोगनियततया क्रतुप्रयोगवाक्ये उपासनावाक्यानामपि सन्निधानात् परिक्रयस्य उपासनार्थत्वमपि कल्प्यत इति वाच्यम्। प्रकरणान्तरपठितानामुपासनानां यथाकथञ्चित् क्रतौ सन्निधानेऽपि प्रकरणोपात्तव्यापारमादाय निराकाङ्क्षस्य परिक्रयस्य उपासनास्वन्वयायोगात्।

अपि च–प्रधानयागकर्तृत्वं यजमानस्यैव दृष्टम्। उपासनानामपि फलसाधनतया प्रधानत्वात् तत्रापि यजमानस्यैव कर्तृत्वमुचितम्। न च–'त ह बको दाल्भ्यो विदाञ्चकार, स ह नैमिशीयानामुद्गाता बभूव, तस्मादेवंविदुद्गाता प्रब्रूयात्' इत्यादिषु उद्गात्रादिकर्तृकतया उपासनानि सिद्धवदनूद्यन्ते, अतः ऋत्विक्कर्तृकत्वमेव तेषाम्–इति वाच्यम्। असति न्याये अन्यार्थदर्शनरूपस्य लिङ्गस्य किञ्चिदर्थसाधकत्वाभावात्। अस्तु वा तद्बलात् ऋत्विजां कर्तृत्वम्, तथापि यासूपासनासु तादृग्विधं लिङ्गमुपलभ्यते तासामेव तु ऋत्विक्कर्तृकता भवेत्, न तु सर्वासामङ्गावबद्धोपासनानाम्। एतेन–औद्गात्रादिसमाख्याते काण्डे उपासनानां पाठात् तासामृत्विक्कर्मतेत्यपास्तम्। वाक्येन यजमानकर्तृकतावगमे समाख्याबाधोपपत्तेः।

ननु ऋत्विजोऽपि फलं दृष्टम् 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' (बृ. उ. १।३।२८) इति।

न। तस्य वाचनिकत्वात्। तस्मात् स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमिति आत्रेय आचार्यो मन्यते ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

नैतदस्ति स्वामिकर्माण्युपासनानीति, ऋत्विक्कर्माण्येतानि स्युः-इति औडुलोमिराचार्यो मन्यते। किं कारणम्? तस्मै हि-साङ्गाय कर्मणे यजमानेन ऋत्विक् परिक्रीयते। तत्प्रयोगान्तःपातीनि च उद्गीथाद्युपासनानि अधिकृताधिकारत्वात्। तस्मात् गोदोहनादिनियमवदेव ऋत्विग्भिर्निर्वर्त्येरन्। तथाच 'तं ह बको दाल्भ्यो विदांचकार स ह नैमिशीयानामुद्गाता बभूव' (छा. उ. १।२।१३) इति उद्गातृकर्तृकतां विज्ञानस्य दर्शयति।

यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति। नैष दोषः। परार्थत्वादृत्विजः अन्यत्रवचनात् फलसंबन्धानुपपत्तेः ॥ ४५ ॥

---

तस्य साङ्गे प्रधाने अधिकृतत्वादिति। आत्मनेपदश्रुत्या साङ्गप्रधानजन्यफलभागित्वादित्यर्थः। नन्वेतावता साङ्गप्रधानजन्यं फलं स्वामिगामि भवतु, उपासनाफलं तु कथं स्वामिगामि भवेत्—इत्यत आह—अधिकृताधिकारेति। यस्य साङ्गप्रधानजन्यं फलं तस्यैव उपासनाजनितं फलम्, उपासनाफलस्यापि [1]आश्रयीभूतव्यापारजन्यत्वात्—इति भावः। तं आगायति--आगानेन सम्पादयति ॥४४॥

अयमत्र परिहाराभिप्रायः—'ऋत्विग्भ्यो दक्षिणां ददाति' इत्याम्नातः परिक्रयः, किं 'यजेत स्वर्गकामः' इतिप्रकरणवाक्योपात्तफलमात्रोपयुक्तः यावान् व्यापारः तावन्मात्रार्थः कल्पनीयः उत क्रतावुपासनानामपि सन्निहिततया तत्साधारण्याय क्रतुप्रयोगान्तःपाती यावान् यजमानफलसाधनीभूतो व्यापारः तावन्मात्रार्थः

---

1. **आश्रयीभूतव्यापारेति** उपासनविषयीभूतोद्गीथात्मकव्यापारेत्यर्थः। उद्गीथस्य क्रियात्मकत्वं आदित्यादिमत्यधिकरणे भाष्ये वक्ष्यते।

इति विशये, सामान्येन कल्पनाया लघीयस्त्वात् अन्यार्थदर्शनेषु ऋत्विक्कर्तृकतया सिद्धवत् अङ्गावबद्धानामुपासनानामाम्नानात् औद्गात्रादिसमाख्यया ऋत्विजां उपासनार्थताया अपि प्रतीतेश्च उपासनासाधारण्येनैव क्रयस्य अङ्गता परिकल्प्यते। एतेन-यत् पूर्वपक्षिणा लिङ्गदर्शनस्याप्रयोजकत्वमुक्तं तदपि परिहृतं भवति। न हि स्वातन्त्र्येण लिङ्गदर्शनमार्त्विज्यसाधकतया इह विवक्षितम्, अपि तु परिक्रयवाक्यस्य उपासनासाधारण्येनतात्पर्यनिर्णायकतया। अस्तु वा प्रकरणवाक्योपात्तफलोपयुक्तव्यापारमात्रार्थत्वं क्रयस्य, तथापि नानुपपत्तिः। उपासनानामपि क्रतुफलप्रतिबन्धकनिरासार्थतायाः 'पृथग्ध्यप्रतिबन्धः फलम्' इत्यत्र प्रतिपादिततया तासामपि प्रकरणवाक्योपात्तफलोपयुक्तत्वानपायात्। अतः, परिक्रयानुसारेण उपासनानामपि ऋत्विक्कर्तृकतया कर्त्राख्यातपदसामानाधिकरण्यं उपासनाप्रयोजकत्वाभिप्रायमेव वक्तव्यम्। न च यागस्य साक्षात्फलसाधनतया यजमानकर्तृकतोपेयते, येन उपासनानामपि तथा यजमानकर्तृकता स्यात्, किं तु यजमानद्रव्यस्य ऋत्विग्भिस्त्यागासम्भवात्। अत एव अग्निहोत्रंजुहोतीत्यादौ जुहोतिचोदनास्थले प्रक्षेपांशस्य प्रधानत्वेऽपि ऋत्विग्भिः कर्तुं शक्यतया तेषामेव तत्र कर्तृत्वम्, दक्षिणादानस्य च अङ्गत्वेऽपि यजमानादन्येन कर्तुमशक्यतया यजमानस्यैव तत्र कर्तृत्वं उपेयते। तस्मात् प्रधानत्वमपि न यजमानकर्तृकतायां प्रयोजकम्।

ननु—यत्तूक्तमिति भाष्येण, 'फलभागिनो यजमानस्यैव वर्षतिह्यास्मैवर्षयति ह्यएवंविद्वानितिवाक्यानुसारेण उपासनायां कर्तृत्वमवगम्यते' इति पूर्वपक्षिकृता शङ्का अनूदिता। तत्परिहारग्रन्थे "परिक्रयाम्नानात् यजमानस्य साक्षात्कर्तृत्वं नोपपद्यते" इति वक्तव्यम्, "पारार्थ्येन ऋत्विजां फलसम्बन्धो नोपपद्यते" इत्युक्तिस्तु [1]न युक्ता-इति चेत्;

न—'परार्थत्वादृत्विजः' इति भिन्नं वाक्यम्। तस्य, "परिक्रीतस्य ऋत्विजो व्यापारो यजमानार्थ इति ऋत्विग्व्यापारे यजमानस्य प्रयोजकत्वात् नानुपपत्तिः" इति तात्पर्यम्। तदनन्तरं च, "यदि परिक्रीतः ऋत्विक् तर्हि तस्य कुत्राप्युपासनाफलं न स्यात्, तथा च 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' इति वचनकोपः" इति शङ्कायां "अन्यत्र वचनात् फल-

---

1. न युक्तेति ऋत्विजां फलभाक्त्वस्य पूर्वपक्षे अनाशङ्कितत्वात् अयुक्तत्वं बोध्यम्।

# श्रुतेश्च ॥ ४६ ॥

'यां वै कांचन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच' इति, 'तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानि' (छा. उ. १।७।८-९) इति च ऋत्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति । तस्मात् अङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः ॥

१५ सहकार्यन्तरविध्यधिकरणम्

# सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

---

सम्बन्धानुपपत्तेः" इति वाक्यम् । अत्र ऋत्विज इत्यनुषज्यते । न्यायानुसारेण परीक्रीतर्त्विग्व्यापारस्यान्यफलार्थत्वेऽपि, वचनेन न्यायं बाधित्वा ऋत्विजोऽपि फलं भविष्यति–इति तदर्थः ॥ ४५ ॥

यदि क्वचिदङ्गाश्रितोपासनेषु ऋत्विजां फलसम्बन्ध उपेयते, तर्हि, अङ्गाश्रितोपासनात्वाविशेषात् सर्वत्र ऋत्विजां फलभागितास्तु, एवं च 'उपास्ते' इत्यादिपदानां प्रयोजकपर्यन्तधावनमपि न भविष्यति–इति शङ्कानिवृत्त्यर्थं सूत्रम् ।

'यजेत' इत्यात्मनेपदश्रुत्या, कृत्स्नस्य फलस्य यजमानगामितायाः, परिक्रयानुसारेण च कर्त्राख्यातानां प्रयोजकपर्यन्ततायाश्च, सिद्धत्वात् न क्वचिदृत्विजः फलदर्शनमात्रेण सर्वत्र ऋत्विजां फलं उपगन्तुं न्याय्यम् ।

आशिषं–फलम् । तस्मादुहैवंवित्–यस्मात् प्रकृतमुपासनं क्रतुवीर्यवत्तरत्वमपि सम्पादयति सर्वलोककामावाप्तिं च तस्मात् उक्तप्रकारेणोपासनाभिज्ञ उद्गाता, ब्रूयात् कंतेकाममागायानीति- किं क्रतुवीर्यवत्तरत्वं आगानेन साधयामि उत सर्वलोककामावाप्तिम् ।

ननु ऋत्विजो यजमानकामप्रश्नः किमर्थः, ऋत्विजा उपासनं कर्तव्यं यजमानकामानुसारेण तस्य फलं भविष्यति; अत उक्तम्-एष ह्येव कामागानस्येष्टे इति । 'कामं ध्यायन्नप्रमत्तः' इति वाक्यानुसारेण उपासनाकाले ऋत्विजा यजमानकामस्य ध्येयत्वविधानात् यजमानकामः ऋत्विजापि ज्ञेय इति, फलप्रश्नः-इति तस्य तात्पर्यम् ॥ ४६ ॥

इति स्वाम्यधिकरणम्

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' (बृ. उ. ३।५।१) इति बृहदारण्यके श्रूयते। तत्र संशयः—मौनं विधीयते न वेति।

न विधीयत इति तावत् प्राप्तम्। बाल्येनतिष्ठासेदित्यत्रैव विधेरवसितत्वात्। न हि अथमुनिरित्यत्र विधायिका विभक्तिः उपलभ्यते। तस्मादयं अनुवादो युक्तः। कुतः प्राप्तिरिति चेत्। मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् पाण्डित्यंनिर्विद्येत्यैव प्राप्तं मौनम्। अपि च—'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इत्यत्र तावत् न ब्राह्मणत्वं विधीयते, प्रागेव

---

ऊर्ध्वरेतसां विचारप्रसङ्गे, सङ्गतिविशेषेण मध्ये उपासनानां ऋत्विक्कर्तृकता व्युत्पादिता, अस्मिन्नधिकरणे ऊर्ध्वरेतसामेव धर्मविशेषो निरूप्यते-इति सङ्गतिः।

**तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येति**। पण्डा-शास्त्रार्थविचारोपयोगिनी बुद्धिः, साऽस्य सञ्जातेति पण्डितः, तस्य कर्म पाण्डित्यं-वेदान्तविचार इति यावत्। स च, उपक्रमाद्यनुसारेण शब्दतात्पर्यनिर्धारणानुकूलो यः प्रथमाध्याये कृतः, उपक्रमादिनिर्णीततात्पर्ये प्रमाणान्तरादिविरोधाभावप्रतीत्यनुकूलश्च यो द्वितीयाध्यायकृतः, अयं द्विविधोऽपि विचारः 'श्रोतव्यो मन्तव्यः' इत्यत्र पृथङ्निर्दिष्टः, इह तु पाण्डित्यपदेन युगपदेव गृहीतः। निर्विद्य—सम्यगनुष्ठाय। बाल्येन तिष्ठासेत्—बाल्यं कामक्रोधादिराहित्यमिति उत्तराधिकरणे स्पष्टं भविष्यति, तिष्ठासेत्-स्थातुमिच्छेत्, बाल्यं सम्पादयेदिति यावत्। **अथ ब्राह्मण इति**। अत्र ब्राह्मणपदं न जातिपरम्, जातेः प्रागेव सिद्धतया अथेति पाण्डित्याद्यनन्तरभावित्वनिर्देशानुपपत्तेः। अतः, ब्रह्मणोऽयं ब्राह्मण इति शैषिकाणन्तोऽयं शब्दः, ब्रह्मसाक्षात्कारवान् भवतीत्यर्थः। एवं सति इह ब्रह्मसाक्षात्कारोद्देशेन पाण्डित्यादेर्विधानात् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति वाक्येन ऐकार्थ्यं लभ्यते।

**पाण्डित्यं निर्विद्येत्येव प्राप्तमिति**। पण्डितपदवत् मुनिपदमपि शास्त्रार्थविचारकुशलपरमेवेति पूर्वपक्षिणोऽभिप्रायः। न च अनुवादो व्यर्थः, बाल्यस्तुतिपरत्वात्—बाल्यात् प्राग्विद्यमानमपि प्रशस्तं न भवति पाण्डित्यम्, अपि तु बाल्यानन्तरमेव तत्प्रशस्तम्-इति 'बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' इतिवाक्येन प्रति

**प्राप्तत्वात्। तस्मात् अथब्राह्मण इति प्रशंसावादः, तथैव अथमुनिरित्यपि भवितुमर्हति, समाननिर्देशत्वात्-इति।**

**एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिरेवाश्रयितव्यः, अपूर्वत्वात्।**

---

पादनसम्भवात्। प्रागेव प्राप्तत्वादिति। इदं च, ब्राह्मणपदं जात्यर्थकमिति कृत्वा उक्तम्। यदापि ब्रह्मसाक्षात्कारपरं तदापि तस्य विधेयत्वं नास्ति—इत्यपि द्रष्टव्यम्।

विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिरेवाश्रयितव्यः अपूर्वत्वादिति। [1]ननु—पाण्डित्यपदोदितो विचारो न विधातव्यः, विचार्यनिर्णयार्थतया लोकत एव विचारस्य प्राप्ततया अपूर्वत्वाभावात्। षड्जादिनिर्णयार्थं तद्विचारात्मकगान्धर्वशास्त्रादिषु लोकत एव हि प्रवृत्तिर्दृश्यते। न च—विचार्यनिर्णयार्थताया विचारस्य लोकतस्सिद्धतया, विचार्यवेदान्तवाक्यानां नानाविधयोजनासु प्रसक्तासु तन्निरासेनाभिमतयोजनया वेदान्तवाक्यनिर्धारणार्थत्वे लोकतस्सिद्धेऽपि, ब्राह्मणपदोपात्ताविद्यानिवर्तकाद्वितीयात्मसाक्षात्कारार्थता वेदान्तवाक्यविचारस्य न प्राप्ता इति वाच्यम्। पारम्पर्येण तदर्थताया अपि प्राप्तत्वात्। तथाहि-येषां मते शब्दादेवापरोक्षं तन्मते अधीतसाङ्गस्वाध्यायस्य प्रथमतो जायमानं अद्वितीयात्मगोचरं यद् विज्ञानं तदप्यपरोक्षमेव। परं तु, वेदान्तवाक्येषु बहुविधयोजनाप्रतिभासात् अर्थान्तरमप्यत्र वक्तुं शक्यमिति शङ्काकलङ्कितं तत् [2]आपातरूपमिति नाविद्यानिवृत्तिक्षमम्। वेदान्तवाक्यगतोपक्रमाद्यनुसन्धानात्मकविचारेण तस्यां शङ्कायां अपनीतायां पुनर्वाक्यार्थज्ञानं निर्धारणात्मकं भवति। तदपि विपरीतभावनाप्रतिबद्धं सत् नाविद्यानिवृत्तिक्षममिति, ध्यानेन कर्तृत्वादिभावनास्वपनीतासु जायमाना सर्वप्रतिबन्धविधुरा वेदान्तवाक्यजन्या साक्षात्कारव्यक्तिः अविद्यानिवृत्तिक्षमा भवति। तथा च, विचारस्य

---

1. श्रवणादिविधेः अपूर्वविधित्वं व्यवस्थापयितुं उपक्रमते—**नन्वित्यादिना**।

2. **आपातरूपमिति** अनवधारणापरपर्यायसंशयरूपमित्यर्थः। स्वरूपसम्बन्धविशेषात्मकविषयताविशेषेण विषयविशिष्टत्वं अनवधारणत्वम्। एतच्च ऐक्यपरवाक्यजन्ये निर्विकल्पकेऽपि। विवेचितमेतत् समन्वयसूत्रभाष्यविवरणावसाने।

साक्षात्प्रयोजनं संशयप्रतिबन्धः, ततो वाक्यार्थनिर्धारणं, तत् ध्येयनिर्णयरूपतया ध्यानोपयोगि, ध्यानं अविद्यानिवर्तकसाक्षात्कारजननोपयोगीति, परम्परया विचारस्य अविद्यानिवर्तकसाक्षात्कारोपयोगिता विधिं विनैव प्राप्नोति। येऽपि शब्दादपरोक्षं नाभ्युपगच्छन्ति, तेषामपि, शाब्दं निर्धारणं परोक्षम्, ततो ध्यानसंस्कृतान्तः-करणजनितं ज्ञानं साक्षात्काररूपं इति विशेषः, अन्यत् सर्वं तुल्यमेवेति, पक्षद्वयेऽपि न वेदान्तविचारस्याप्राप्तिः वक्तुं शक्यते-इति चेत्;

उच्यते—यत एव उक्तप्रणाडिकया विचारस्याविद्यानिवर्तकसाक्षात्कारार्थता विधिं विनैव प्राप्ता, अत एव, प्रकृतवाक्ये न उक्तप्रणाडिकया साधनताऽऽश्रीयते, अपि तु, यथा विविदिषावाक्येन वस्तुसौन्दर्यज्ञानलभ्यायामिच्छायां प्रतिबन्धकी-भूतपापनिरासद्वारा कर्मणां साधनता बोध्यते, एवं प्रमाणजन्येऽपि वाक्यार्थसाक्षा-त्कारे प्रतिबन्धकीभूतपापापगमद्वारा तर्करूपस्य विचारस्य साधनता बोध्यते। न च—कर्मणां पापनिवर्तकतायाश्शास्त्रान्तरसिद्धतया पापनिवृत्तिद्वारा विधानोपगमेऽपि, वेदान्तविचारस्य पापनिवर्तकता न सिद्धेति, कथं तद्द्वारा साक्षात्कारार्थतया विधि-स्स्यात्—इति वाच्यम्। 'दिनेदिने च वेदान्तश्रवणात् भक्तिसंयुतात्। गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत्' इति विचारस्यापि पापनिवर्तकतायाः शास्त्रान्तर-सिद्धत्वात्।

न च--एवमपि, विचारस्य पापनिवर्तकता उक्तप्रमाणसिद्धा पापक्षयस्य च 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति शास्त्रेण ज्ञानसाधनत्वं सिद्धं, अतोऽयं विधिः व्यर्थ एव भवेत्--इति वाच्यम्। असति विचारविधौ विचारेण ज्ञानप्रतिबन्ध-कीभूतानामेव पापानां नियमेन नाशालाभात्। सति तु तस्मिन् साक्षात्कारोद्देशेन विचारानुष्ठानसम्भवात् ज्ञानप्रतिबन्धकीभूतपापक्षयनियमलाभः।

अत एव--यदि वा साक्षात्साधनं विचारः यदि वा परम्परया साधनं, उभ-यथाऽपि विचारप्रवृत्तावनुष्ठानविशेषो नास्ति--इति शङ्काऽपि अपगता भवति। असति विधौ विचारस्य साक्षात्कारोद्देशेनानुष्ठानालाभात्, कृतविचाराणां नियमेन साक्षात्कारोत्पत्तिः—इत्यर्थो हि न लभ्यते।

न चैवं—यदि पापनिवृत्तिद्वारा विचारस्य साक्षात्कारसाधनतोपेयेत, तथा-सति सकृद्विचारानुष्ठानेऽपि विधेश्चरितार्थतया आवृत्तिरसकृदुपदेशादित्यधिकरणे

वक्ष्यमाणा या संशयनिवृत्तिपर्यन्तं विचारस्यावृत्तिः साऽनुपपन्ना भवेत् इति वाच्यम् । न ह्येतावता लोकतस्सिद्धं यत् फलपर्यन्तं साधनानुष्ठानं तद्यावृत्तिः प्रसक्ता भवति, लोकतस्सिद्धस्य संशयविरोधित्वस्य श्रवणेऽप्रत्याख्यानात् । ततश्च, यस्य यावता कालेन नानाविधयोजनासंशयोच्छेदो भवति, तस्य तावत्पर्यन्तं श्रवणं दृष्टार्थत्वात् वितुषीभावपर्यन्तावघातवत् सिद्धं भवति । शास्त्रेण तु. संयोगान्तरन्यायेन दृष्टार्थत्वमनपबाध्यैव ज्ञानप्रतिबन्धकीभूतदुरितनिवृत्तिद्वारा साक्षात्कारार्थता बोध्यत इति, न किञ्चिदनुपपन्नम् ।

अथवा दृष्टार्थतायामपि विधेरवकाशोऽस्ति । उक्तप्रणाडिकया साक्षात्कारे श्रवणस्य पक्षतः प्राप्तत्वात् नानाविधयोजनासंशयानन्तरभाविनि 'एतस्य वाक्यस्यायमेवार्थः' इत्यवधारणे यथा 'इदं वाक्यमेतदर्थपरम्, एवंविधोपक्रमादिशालित्वात्' इत्यादिन्यायानुसन्धानात्मकं पाण्डित्यमुपयुक्तं एवं न्यायसिद्धार्थकथनपराप्तवचनमपि तत्रोपयुक्तमेव । यद्यपि आप्तवचनविश्वासरहितस्य न आप्तवाक्यान्निर्णयः, तथापि आप्तवचनविश्वासशालिनः कुशलबुद्धेरपि पक्षतश्श्रवणाप्राप्तौ तन्नियमार्थोऽयं विधिर्भविष्यति ।

ननु—श्रद्धावतः आप्तवचनादेव निर्णयेऽपि, पुनः कालान्तरे स्वोद्भावितानुपपत्तिवशेन अन्योद्भावितानुपपत्तिवशेन वा चित्तक्षोभे सति न अवधारणात्मकं वेदार्थज्ञानं सम्भवतीति, विचार एव तत्र नियमेन प्राप्नोति, यस्य तु आप्तवचनश्रवणमात्रेण न कथञ्चिदपि चित्तक्षोभः, तं प्रति विचारो नाभ्युपगम्यते । तथा च श्रुतिः—'तत्कारणं साङ्ख्ययोगाभिपन्नम्' इति । अत्र हि, आत्मज्ञाने श्रवणमननध्यानात्मकः साङ्ख्यपदोदित एक उपायः, 'आप्तवचनादवगम्य ध्यानमेव कर्तव्यम्' इति योगपदोदितोऽपर उपायः प्रतिपाद्यते । अतो न नियमविधेरवकाशः—इति चेत्;

न—श्रद्धावतः कुशलबुद्धेर्हि मार्गद्वयेऽप्यधिकारः प्रसक्तः । उत्कटश्रद्धारहितस्य कुशलबुद्धेस्तु साङ्ख्यमार्ग एवाधिकारः । मन्दबुद्धेः श्रद्धाशालिनस्तु योगमार्गे । तथा च, यस्य उभयत्राधिकारः तं प्रति अस्ति नियमविधेरवकाशः । योगमार्गगम्यत्वश्रुतिस्तु मन्दबुद्धिविषया भविष्यति ।

अथोच्येत-पाण्डित्यविधिं विनापि श्रवणनियमः सिद्ध्यत्येव । भृगुर्वै वारुणिरित्यत्र उपसन्नाय भृगवे आचार्यः शृङ्गग्राहिकया ब्रह्माप्रतिपाद्य लक्षणमुखेन ब्रह्म

ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम् । नैष दोषः । मुनिशब्दस्य ज्ञानातिशयार्थत्वात् । मननान्मुनिरिति च व्युत्पत्तिसंभवात् । 'मुनीनामप्यहं व्यासः' (भ. गी. १०।३७) इति च प्रयोगदर्शनात् । ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र । न । 'वाल्मीकिर्मुनिपुंगवः' इत्यादिषु व्यभिचारदर्शनात् । इतरा-

---

प्रतिपादयति 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना । तत्र, शृङ्गग्राहिकया लघूपायेन सम्भवति[1] गुरूपायेन तद्बोधनं 'लक्षणमुखेनैव ब्रह्म ज्ञातव्यम्' इति नियमार्थं सम्पद्यते । न च असम्भवातिव्याप्त्यादिदोषपरिहारं विना ब्रह्म लक्षण-मुखेन ज्ञातुं शक्यमिति, असम्भवादिनिरासोपयोगितया विचारोऽर्थसिद्ध एव—इति,

नैतदपि सम्भवति । शृङ्गग्राहिकयेति कोऽर्थः ? किं यथा 'अयंगौः' 'अय-मश्वः' इति बालान् प्रत्यङ्गुलिनिर्देशपूर्वकं पदार्थोपदेशः एवं ब्रह्मापि कुतो नोप-दिष्टमिति; नैवं सम्भवति । उपदेशैकगम्यस्य अतीन्द्रियस्य ब्रह्मणः अङ्गुलिनिर्दे-शानुपपत्तेः । अथ स्वरूपकथने सम्भवति किमिति जगत्कारणत्वेन निर्देश इति; नैतदपि । स्वरूपमपि [हि] सत्यंज्ञानमनन्तमिति प्रतिपाद्यत एव । जगत्कारणत्वादि-प्रतिपादनं पञ्चकोशावतरणवत् स्थूलारुन्धतीन्यायेन चित्तावतरणार्थमिति तत्प्रयोज-नानि जन्मादिसूत्र एव निरूपितानि ।

न च लक्षणकथनमात्रेण, 'तन्मुखेनैव ज्ञातव्यम्' इति नियन्तुं युक्तम् । तथासति पञ्चकोशादिप्रक्रियायाः श्रुतिषु बहुलमुपलम्भात् तत्रापि नियमः प्रसज्येत । यदि—पञ्चकोशप्रक्रियामपेक्ष्य जगत्कारणत्वादिनिर्देशेऽस्ति विशेषः, यतो लक्षणाज्ञानानन्तरं तद्विजिज्ञासस्वेति श्रूयते, अतो लक्षणेन विजिज्ञासा सम्पादनीया इति विधिः सिद्धो भवति । एवं तर्हि—इदं वाक्यं विचारे लक्षणपूर्वकत्वगुणविधानार्थमिति सम्पद्यते । तत्र विचारस्य प्राप्तिः अन्यत एवास्थेया । अतोऽस्ति विचारविधेरवकाशः ।

अस्मिन् पक्षे, दृष्टान्तीकृतस्य भाष्ये अपूर्वत्वं पक्षतः द्रष्टव्यम् ।

**मुनिशब्दस्य ज्ञानातिशयार्थत्वादिति** । ज्ञानातिशयवान् यो ध्याननिष्ठो भवति स एव मुनिरिति प्रसिद्धः, न तु विचारमात्रविश्रान्तः । तथा च, मुनिशब्देन प्रतिपाद्यस्य ध्यानस्य पाण्डित्यपदेनाप्राप्तत्वात् मुनिपदमपि विधेयसमर्पकं द्रष्टव्यम् ।

---

1. सम्भवतीति बोधने इति शेषः ।

श्रमसंनिधानात्तु पारिशेष्यात् तत्रोत्तमाश्रमोपादानम्, ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्मात् बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथापि अपूर्वत्वात् मुनित्वस्य विधेयत्वमाश्रीयते मुनिस्स्यादिति। निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम्।

तद्वतः—विद्यावतः-सन्यासिनः। कथं च विद्यावतः संन्यासिन इत्यवगम्यते। तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति।

---

निर्वेदनीयत्वनिर्देशादपीति। 'अमौनं च मौनं च निर्विद्य' इतिवाक्ये अमौनपदोदितबाल्यपाण्डित्यवत् मौनस्य निर्वेदनीयत्वमुच्यते। विदेर्लाभार्थतया मौनं सम्यक् लब्ध्वेति तदर्थः। तथा च, [1]लम्भनस्य कार्यताप्रतिपादनलाभः सूच्यत इति विधेयत्वमिति भावः।

तदधिकारादिति। ननु-'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति पूर्ववाक्ये विदित्वेति निर्देशात् विद्वत्सन्न्यासः प्रस्तुतः। न च उत्तरत्र पाण्डित्यादिसाधनविधानात् विदित्वेत्यापातज्ञानविवक्षेति वाच्यम्। न हीदं वाक्यं विधीयमानपाण्डित्याद्यधिकारिसमर्पकं, येन तथा विवक्षोच्येत। अपि तु, तस्मादितिश्रवणेन पाण्डित्यादिविधौ पुराकल्पन्यायेन स्तावकम्, यस्मात् पूर्वे ब्राह्मणाः पाण्डित्यादिसाधनैर्ज्ञानं लब्ध्वासकलविक्षेपरहितं जीवन्मुक्तिसौख्याभिव्यञ्जकं पारमहंस्यं प्रापन्नन्तः तस्मात् आधुनिकोऽपि पाण्डित्यादिसाधनैः ज्ञानं सम्पादयेत्—इत्यर्थावगमात्। अतः, कथमुच्यते पूर्ववाक्ये सन्न्यासिनः प्रस्तुतत्वात् पाण्डित्यादौ तस्याधिकारोऽवगम्यत इति—इति चेत्;

उच्यते—इदं भाष्यं 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यस्य वाक्यस्य उपलक्षणम्, तत्र हि विविदिषासन्न्यास एव विधीयते। विदित्वाव्युत्थायेतिवाक्योदाहरणं तु, पाण्डित्यादिविधौ सन्न्याससामान्यं बुद्धिस्थं भवति इत्येतावन्मात्रतात्पर्यकम्।

---

1. 'लाभस्य कार्यताप्रतिपादनात् लम्भनस्य विधेयत्वं सूच्यते' इति पाठश्चेत् सुसाधुः।

ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः, किं मौनविधिना-इत्यत आह—पक्षेणेति। एतदुक्तं भवति—यस्मिन् पक्षे भेददर्शनप्राबल्यात् न प्राप्नोति तस्मिन् एष विधिरिति।

विध्यादिवत्। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवं-जातीयके विध्यादौ सहकारित्वेन अग्न्यन्वाधानादिकमङ्गजातं विधीयते, एवं अविधिप्रधानेऽप्यस्मिन् विद्यावाक्ये मौनविधिरित्यर्थः ॥ ४७ ॥

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने, कस्मात् छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे' (छा. उ. ८।१५।१) इत्यत्र; तेन ह्युपसंहरन् तद्विषयमादरं दर्शयति-इत्यत उत्तरं पठति—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

तुशब्दो विशेषार्थः। कृत्स्नभावोऽस्य विशिष्यते। बहुलायासानि

---

ननु सति विद्यावत्त्व इति। कृतश्रवणमननस्य ब्रह्मापरोक्ष्यसिद्ध्यर्थं विपरीतभावनानिवृत्तिद्वारा ध्यानं प्राप्नोत्येव, रजतत्त्वसाक्षात्कारादौ प्रत्ययावृत्तेः कारणतायाः लोकसिद्धत्वात्—इति भावः। यस्मिन् पक्षे भेददर्शनप्राबल्यादिति। अयमर्थः—लोकसिद्धकारणतानुसारेण ब्रह्मापरोक्ष्यसाधनत्वेन तद्ध्यानस्य विधिं विना प्राप्तत्वेऽपि, ध्यानोद्देशेनासनादिनियमविधानात् तत्कालमेव ध्यानं प्राप्नोति, क्षुत्तृष्णादिपीडितस्य समाधितो व्युत्थितस्य तस्मिन् काले परमात्मनि चित्तस्थापनं न प्राप्नोति, आसनादिनियमानुष्ठानस्य तदानीमसम्भवात्। भिक्षाटनादिकालेऽपि तु यथासम्भवं परमात्मनि चित्तं स्थापनीयं इति बोधयत् इदं वाक्यं सार्थकं भवतीति भावः।

ननु—परमात्मप्रकरणे पाण्डित्यादिविध्युपगमे वाक्यभेदस्स्यात्-इत्याशङ्क्योक्तं विध्यादिवदिति। यथा दर्शपूर्णमासादिप्रधानप्रकरणे अङ्गानि विधीयन्ते अवान्तरवाक्यविधया, एवं ब्रह्मप्रकरणेऽपि तज्ज्ञानोपायतया अवान्तरवाक्यानि श्रवणादीनां विधायकानि भविष्यन्ति-इत्यभिप्रायेण तद्व्याचष्टे—यथा दर्शपूर्णमासाभ्यामिति। विध्यादौ—[1]विधिमुखे ॥ ४७ ॥

उत्तरसूत्रमवतारयति—एवमिति। अयं भावः—छान्दोग्ये 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति उपनिषदन्ते

---

1. विधिमुखे-प्रधाने। विधिर्हि प्रधानोपक्रमोऽङ्गपर्यन्तः। अत एव समिदादि विध्यन्त इति व्यवह्रियते, स हि प्रधानविधेः पश्चात्।

हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि, आश्रमान्तरकर्माणि च यथासंभवं अहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते । तस्मात् गृहमेधिनोपसंहारो न विरुद्ध्यते ॥ ४८ ॥

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तौ एवमितरावपि वानप्रस्थगुरुकुलवासौ । दर्शिता हि पुरस्ताच्छ्रुतिः 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' इत्याद्या । तस्मात् चतुर्णामप्याश्रमाणां उपदेशाविशेषात् तुल्यवत् विकल्पसमुच्चयाभ्यां प्रतिपत्तिः । इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षया अनुष्ठातृभेदापेक्षया वेति द्रष्टव्यम् ॥४९॥

---

समाम्नायते । यदि हि सन्न्यासिन एव श्रवणादिसाधनसंपन्नज्ञानसाध्याऽनावृत्तिः, तदानीं इदं नोपपद्यते । अथोच्येत—नास्मिन् वाक्ये इहैवामृतत्वं प्रतिपाद्यते, अपि तु ब्रह्मलोकं गतस्य, तच्च क्रममुक्तिसाधनानां सगुणविद्यानां फलम्, तासु गृहस्थानामधिकारो नानुपपन्नः—इति ; तदपि न सम्भवति । सगुणास्वपि विद्यासु शमादिपूर्वकं आप्रायणं निरन्तरं सर्वदा ध्यानपरता अपेक्षिता । 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः' । 'तस्मात् सर्वेषु कालेषु मामनुस्मर युद्ध्य च' इत्यदिशास्त्रात् । न चैतत् लौकिकवैदिककर्मक्षुभितचित्तानां गृहस्थानां सम्भवति । अतः सगुणविद्यासाध्यायाःक्रममुक्तेरप्यनुपपत्तेः इदं वाक्यं अनुपपन्नमेव स्यात्-इति ।

यद्यपि निर्विशेषविद्यासाध्यं इहैवामृतत्वं गृहस्थस्यानुपपन्नम्, तथापि, क्रममुक्तौ नानुपपत्तिः । शरीरधारणोपयुक्तानां लौकिककर्मणां अग्निहोत्रादिनित्यनैमित्तिककर्मणाञ्च विद्यार्थतायाः प्रमाणसिद्धतया तद्व्यतिरिक्तकाल एव सविशेषे परमात्मनि चित्तधारणं शास्त्रार्थः । तत् गृहस्थस्यापि सम्भवति । शमादिकं च तस्य विद्योपयुक्तव्यापारातिरिक्तकर्मसु सम्भवति । अतो न तेनोपसंहारानुपपत्तिः-इति परिहाराभिप्रायः ॥ ४८ ॥

ननु सूत्रे इतरपदेन ब्रह्मचारिवानप्रस्थयोर्विवक्षितत्वात् द्विवचनेन भाव्यम्, कथं बहुवचनम्, अत आह—द्वयोराश्रमयोरिति । 'ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । चत्वार आश्रमाः प्रोक्ता एकैकस्तु चतुर्विधः' इति प्रत्येकं

१६ अनाविष्कुर्वदधिकरणम्

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ. उ. ३।५।१) इति बाल्यं अनुष्ठेयतया श्रूयते। तत्र, बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति, बालभावस्य वयोविशेषस्य इच्छया संपादयितुमशक्यत्वात्, यथोपपादमूत्रपुरीषत्वादि बालचरितं, अन्तर्गता भावविशुद्धिः अप्ररूढेन्द्रियत्वं दम्भदर्पादिरहितत्वं वा बाल्यं स्यात्-इति संशयः।

किं तावत् प्राप्तम्? कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम्। ननु पतितत्वादिदोषप्राप्तेः न युक्तं कामचारताद्याश्रयणम्। न। विद्यावतः संन्यासिनो वचनसामर्थ्याद्दोषनिवृत्तेः पशुहिंसादिष्विवेति।

---

चतुर्विधाः। तत्र, गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारी चतुर्विधः। वार्तावृत्तिः शालीनवृत्तिः यायावरः घोरसंन्न्यासिकश्चेति चतुर्विधो गृहस्थः। वैखानसः औदुम्बरः वालखिल्यः फेनपश्चेति चतुर्विधो वानप्रस्थः। कुटीचको बहूदकः हंसः परमहंसश्चेति चतुर्विधस्सन्न्यासी। ततश्च उक्तगत्या ब्रह्मचारिवानप्रस्थयोः प्रकारभेदसद्भावात् बहुवचननिर्देशः॥ ४९॥

इति सहकार्यन्तरविध्यधिकरणम्

पूर्वस्मिन्नधिकरणे, प्रसिद्ध्यनुसारेण मौनशब्दस्य ज्ञानातिशयपरत्वमाश्रितम्, तद्वत् बाल्यपदमपि प्रसिद्धार्थमेव ग्राह्यमिति प्रत्यवस्थानात् सङ्गतिः।

यथोपपादं-यथोपपत्ति-नियमवर्जितमिति यावत्। ननु सर्वान्नानुमतिरित्यत्र, नहवाएवंविदिकिञ्चनानन्नंभवतीतिवाक्यं भक्ष्याभक्ष्यविभागशास्त्रानुसारेण अर्थवादः, न तु तद्विरोधेन प्राणोपासकस्य सर्वान्नानुमतिविधिः-इत्युक्तम्, एवमिहापि बाल्यपदस्य अर्थद्वयसम्भवेन नियमशास्त्रानुसाराय अप्रसिद्धत्वेऽपि दम्भादिराहित्यमेवार्थो ग्राह्यः, न तु तद्विरोध्यर्थान्तरं गृहीत्वा विदुषो नियमशास्त्रपरित्याग आश्रयणीयः-इत्यभिप्रायेण शङ्कते—नन्विति। न विद्यावतस्सन्न्यासिन इति। नहवाएवंविदीत्यत्र हि न स्पष्टो विधिः श्रूयते। अतः तस्य सामान्येनापि नियमशास्त्रेण स्तुतिपरत्वकल्पनं युक्तम्। इह तु बाल्येनतिष्ठासेदिति स्पष्टो विधिः उपलभ्यते।

एवं प्राप्तेऽभिधीयते । न । वचनस्य गत्यन्तरसंभवात् । अविरुद्धे ह्यन्यस्मिन् बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता । प्रधानोपकाराय च अङ्गं विधीयते । ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम् । न च सकलायां बालचर्यायां अङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते । तस्मात् आन्तरो भावविशेषो बालस्य अप्ररूढेन्द्रियत्वादिः इह बाल्यमाश्रीयते । तदाह—अनाविष्कुर्वन्निति । ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत् । यथा बालः अप्ररूढेन्द्रियतया न परेषामात्मानमाविष्कर्तुमीहते तद्वत् । एवं हि अस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते ।

तथाचोक्तं स्मृतिकारैः 'यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥ गूढधर्माश्रितो विद्वान् अज्ञातचरितं चरेत् । अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्' ॥ 'अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि ॥ ५० ॥

१७ ऐहिकाधिकरणम्

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र. सू. ३।४।२६) इत्यत आरभ्य

---

अतोऽस्य न सामान्येन नियमशास्त्रेण दम्भदर्पादिराहित्यमात्रे सङ्कोच आश्रयणीयः । अपि तु, यावत् बालचरितं दम्भदर्पादिराहित्यं यथोपपादं मूत्रपुरीषादिकं च, तत् सर्वमिह असङ्कोचेन स्वीकृत्य, नियमशास्त्रस्यैव सामान्यस्य अविद्वद्विषये सङ्कोच आश्रयणीयः । सामान्यशास्त्रस्य विशेषशास्त्रानुसारेण सङ्कुचद्वृत्तिताया एवोचितत्वात्-इति भावः ।

प्रधानोपकाराय चाङ्गं विधीयत इति । विद्यायां हि 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः' इति दुश्चरिताद्व्यावृत्तिः अङ्गं विधीयते । असङ्कुचिते बाल्यशब्दार्थे आश्रीयमाणे विद्याविरोधप्रसङ्गात्, प्रधानानुसाराय सङ्कुचद्वृत्तिः बाल्यशब्द आश्रयणीयः । प्रधानानुसारी ह्यङ्गवाक्यार्थो न्याय्यः-इति भावः ॥ ५० ॥

इति अनाविष्कुर्वदधिकरणम्

उच्चावचं विद्यासाधनं अवधारितम्, तत्फलं विद्या सिद्ध्यन्ती किं इहैव जन्मनि सिद्ध्यति उत कदाचित् अमुत्रापीति चिन्त्यते।

किं तावत् प्राप्तम्? इहैवेति। किं कारणम्? श्रवणादिपूर्विका हि विद्या। न च कश्चित् 'अमुत्र मे विद्या जायताम्' इत्यभिसंधाय श्रवणादिषु प्रवर्तते। समान एव तु जन्मनि विद्याजन्माभिसंधाय एतेषु प्रवर्तमानो दृश्यते। यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति, प्रमाणजन्यत्वाद्विद्यायाः। तस्मात् ऐहिकमेव विद्याजन्मेति।

एवं प्राप्ते वदामः—ऐहिकं विद्याजन्म भवति असति प्रस्तुतप्रतिबन्धे इति।

एतदुक्तं भवति—यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित् प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण, तदा इहैव विद्योत्पद्यते,

---

विद्यासाधननिरूपणानन्तरं विद्यागत ऐहिकत्वादिविशेषः चिन्त्यत इति सङ्गतिः।

समान एव तु जन्मनीति। तथा च कामानुसारेण अस्मिन्नेव जन्मनि श्रवणादिभ्यो विद्या जायत इति कल्प्यते। ननु—'चित्रया यजेत पशुकामः' इत्यादौ, पश्वादीनां फलानां इहैव कामनायां प्रसिद्धायामपि कर्मान्तरप्रतिबन्धसम्भवोन्नयनात्, वाक्ये च विशिष्य इहैवफलंभवतीतिप्रतिपादनाभावात्, 'पशवो मे स्युः' इति सामान्येन कामनया यागे प्रवर्तितव्यं असति प्रतिबन्धे इहैव फलं अन्यथा जन्मान्तरे- इति स्वीक्रियते, एवमिहापि किं न स्यात्। न स्यात्। चक्षुरादिव्यापारेषु दृष्टफलेषु ऐहिकमेव घटादिदर्शनं फलं दृष्टम्, एवं श्रवणादीनामपि दृष्टार्थतया ऐहिकफलत्वमेव वक्तव्यम्। अतः श्रवणाद्यनुष्ठानवतां इहैव विद्या भविष्यति।

ननु- विद्यायां यज्ञादयोऽपि साधनं भवन्ति, तेषां अदृष्टद्वारा फलजनकत्वात् चित्रादिफलतुल्यता विद्यायाः किं न स्यात्—इत्यत आह—यज्ञादीन्यपीति। तथा च, कर्मणां विविदिषाद्वारा विद्योपयोगित्वात् विविदिषया श्रवणादौ प्रवृत्तिः इहैव फलं साधयिष्यतीति भावः।

सूत्रे ऐहिकमपीत्यपिशब्देन आमुष्मिकमपि विद्याजन्म भवतीति समुच्चीयते। ऐहिकत्वोपपादनं 'अप्रस्तुतप्रतिबन्धे' इति। प्रस्तुतप्रतिबन्धे तु आमुष्मिकत्वमिति अर्थादुक्तं भवति। तदाह—एतदुक्तं भवतीत्यादिना। उपस्थितविपाकेन—

यदा तु खलु तत्प्रतिबन्धः क्रियते तदा अमुत्रेति। उपस्थितविपाकत्वं च कर्मणो देशकालनिमित्तोपनिपाताद्भवति। यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि तान्येवान्यस्यापीति न नियन्तुं शक्यते, यतो विरुद्धफलान्यपि कर्माणि भवन्ति। शास्त्रमपि 'अस्य कर्मण इदं फलं भवति' इत्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि संकीर्तयति। साधनवीर्यविशेषात्तु अतीन्द्रिया कस्यचिच्छक्तिः आविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठति। न च अविशेषेण विद्यायामभिसंधिः नोत्पद्यते, 'इहामुत्र वा मे विद्या जायताम्' इत्यभिसंधेर्निरङ्कुशत्वात्। श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते।
तथाच श्रुतिः दुर्बोधत्वमात्मनो दर्शयति—

'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः॥'

(क. उ. २।७) इति।

गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावम्-इति वदन्ती जन्मान्तरसंचितात् साधनात् जन्मान्तरे विद्योत्पत्तिं दर्शयति। न हि गर्भस्थस्यैव

---

प्रारब्धफलेन। ननु—प्रतिबन्धकत्वं पापकर्मणां वक्तव्यम्, तानि च चित्तशुद्ध्यर्थमनुष्ठितैः कर्मभिरेव निरस्तानि, अतः श्रवणादिकं कुर्वतः प्रतिबन्धकानां कर्मणां अभावात्, कथमामुष्मिकत्वं विद्यायाः-इत्याशङ्कानिराकरणाय तद्दर्शनादितिसूत्रावयवं व्याचष्टे—तथा च श्रुतिरित्यादिना। अयमर्थः—प्रतिबन्धकीभूतानि पापानि द्विविधानि-प्रारब्धफलानि अप्रारब्धफलानि च। तत्र विविदिषाप्रतिबन्धकीभूतानि पापानि यान्यप्रारब्धफलानि तानि विविदिषोद्देशेन कृतैः कर्मभिः नष्टानि, प्रारब्धफलानि तु भोगैकनाश्यानीति, यावद्भोगक्षयं (विना) विविदिषैव नोदेति। एवं विविदिषोत्पत्त्यनन्तरमपि यदि प्रारब्धफलानि प्रतिबन्धकानि सम्भावितानि, तदापि श्रवणादि दुर्घटमेव यावद्भोगक्षयम्। तदिदमाह 'श्रवणायापि बहुभिर्यो न लभ्यः' इति, सत्सु प्रतिबन्धकेषु श्रवणसामग्र्या अनिष्पत्तेः। विविदिषोत्पत्त्यनन्तरं विद्यमानानां श्रवणप्रतिबन्धकीभूतानां पापानामप्रारब्धफलानां तु ज्ञानोद्देशेन कृतैः कर्मभिर्नाशः। 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'। 'कषायपक्तिः कर्माणि'

ऐहिकं किंचित् साधनं संभाव्यते । स्मृतावपि—'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' (भ. गी. ६।३७) इत्यर्जुनेन पृष्टो भगवान् वासुदेवः 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' (भ. गी. ६।४०) इत्युक्त्वा, पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले संभूतिं चाभिधाय, अनन्तरम् 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' (भ. गी. ६।४३) इत्यादिना 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (भ. गी. ६।४५) इत्यन्तेन एतदेव दर्शयति ।

तस्मात् ऐहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षया-इति स्थितम् ॥ ५१ ॥

---

इत्यादिवचनपर्यालोचनया [1]ज्ञानार्थतापि यथासम्भवं कर्मणामवगम्यते । श्रवणादिषु प्रवृत्तस्यापि प्रारब्धफलानि अप्रारब्धफलानि च निदिध्यासनपरिपाकपर्यन्तं प्रतिबन्धकानि सम्भावितान्येव । तत्रापि प्रारब्धानां भोगादेव नाशः अप्रारब्धानां श्रवणादिनियमानुष्ठानेन । तदिदमाह—'शृण्वन्तोऽपि बहवो यन्न विद्युः' इति । 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यत्र हेतुमाह 'आश्चर्यो वक्ता'—दुर्लभ आचार्यः जातायामपि विविदिषायाम् । वक्तृपदं श्रवणसामग्र्या उपलक्षणम् । 'शृण्वन्तोऽपि बहवो यन्न विद्युः' इत्यत्र हेतुमाह 'कुशलोऽस्य लब्धा'—अस्य आत्मनः लब्धा-साक्षात्कारवान् कुशल एव, यो[हि](ऽपि) ध्यानं सम्यगनुतिष्ठति । कृतश्रवणस्यापि यदि ध्यानप्रतिबन्धकपापं प्रस्तुतं भवति तदा यावद्भोगक्षयं ध्यानासम्पत्तेः दुर्लभ एवात्मेति भावः । किं बहुना, क्रियमाणे श्रवणे मतिमान्द्यादिना शाब्दज्ञानमपि नोत्पद्यते । तदाह 'आश्चर्यो ज्ञाता कुशलानुशिष्टः'-कुशलेन आचार्येण बोधितोऽपि ज्ञाता आश्चर्यः-दुर्लभः । तथा च, यस्य ध्यानपरिपाकान्तं प्रतिबन्धकानि प्रारब्धानि न भवन्ति तस्य इहैव विद्या सिद्ध्यति, अन्येषां तु श्रवणादिसाधनानुष्ठाने प्रवृत्तानामपि यथायथं जन्मान्तरे-इति ॥ ५१ ॥

---

**इति ऐहिकाधिकरणम्**

1. **ज्ञानार्थतापीति** अत एव, कर्मणां विविदिषासाधनतावादिभिरपि, केषाञ्चित् कर्मणां एतदङ्गीकृतम् । अन्यथा, अदृष्टद्वारैवोपपादनीयस्य, तैः श्रवणादिविध्यनङ्गीकारात् तददृष्टैरनिर्वाह्यस्य, जन्मान्तरीयश्रवणादेर्जन्मान्तरीयसाक्षात्कारसाधनत्वस्य भाष्योक्तस्य तैरनिर्वहणापत्तेः । स्पष्टञ्चैतत् भामत्याम् । अधिकं एतधिकरणभामतीकल्पतरुपरिमलेभ्योऽवगन्तव्यम् ।

### १८ मुक्तिफलानियमाधिकरणम्

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषात् विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽपि उत्कर्षनिकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यात् इत्याशङ्क्य, आह—एवं मुक्तिफलानियम इति ।

न खलु मुक्तिफले कश्चित् एवंभूतो विशेषप्रतिनियम आशङ्कितव्यः । कुतः ? तदवस्थावधृतेः । मुक्त्यवस्था हि सर्ववेदान्तेषु एकरूपैवावधार्यते । ब्रह्मैव हि मुक्त्यवस्था । न च ब्रह्मणोऽनेकाकारयोगोऽस्ति, एकलिङ्गत्वावधारणात् 'अस्थूलमनणु' (बृ. उ. ३।८।८) 'स एष नेति नेत्यात्मा' (बृ. उ. ३।९।२६) 'यत्र नान्यत्पश्यति' (छा. उ. ७।२४।१) 'ब्रह्मैवेदममृतं पुरस्तात्' (मु. उ. २।२।११) 'इदं सर्वं यदयमात्मा' (बृ. उ. २।४।६) 'स वा एष महानज आत्मा अजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ.उ.४।४।२५)

---

सङ्गतिगर्भं पूर्वपक्षमाह—यथा मुमुक्षोरिति । उत्कर्षनिकर्षकृत इति । साधनीभूता हि विद्या ऐहिकत्वामुष्मिकत्वविशेषवती । विशेषवत्साधनसाध्यानि च फलानि विशेषवन्ति दृष्टानि लोके । मुक्तौ च, उत्पन्ने ज्ञाने आमुष्मिकत्वासम्भवात् विशेषान्तरापेक्षायाम्, सगुणोपासनासाध्यायां अवान्तरमुक्तौ उत्कर्षापकर्षरूपविशेषस्य दृष्टत्वात् इहापि उत्कर्षापकर्षरूपो विशेषो भवेत् । न च—निर्विशेषमुक्तेर्ब्रह्मरूपाया उत्कर्षनिकर्षावसम्भावितौ, ब्रह्मण एकरूपत्वात्—इति वाच्यम् । ब्रह्मरूपाया अपि तस्या आवरणनिवृत्त्यपेक्षतया, यस्य किञ्चिदावरणं निवृत्तं तस्य ईषद्ब्रह्मानन्दः स्फुरति यस्य तु कृत्स्नमावरणं निवृत्तं तस्य सम्यग्ब्रह्मानन्दः स्फुरति इत्यावरणावशेषनिरवशेषाभ्यां निर्विशेषमुक्तेरपि तारतम्यसम्भवात्—इति पूर्वपक्षी मन्यते ।

अयमत्र सिद्धान्ताभिप्रायः—ध्यानपरिपाकान्तसाधनानुष्ठानेन लब्धा या विद्या सा मोक्षसाधनम् । सा च सर्वेषां न तारतम्ययुक्ता, सगुणविद्यायामिव इह गुणविशेषासम्भवात् । निर्विशेषविद्यागतमैहिकत्वादिकं तु न फले विशेषप्रयोजकम् ।

'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इत्यादिश्रुतिभ्यः ।

अपि च-विद्यासाधनं स्ववीर्यविशेषात् स्वफले एव विद्यायां कंचिदतिशयमासञ्जयेत्, न विद्याफले मुक्तौ । तद्धि असाध्यं नित्यसिद्धस्वभावमेव विद्ययाऽधिगम्यते-इत्यसकृदवादिष्म । न च तस्यामपि उत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात् । उत्कृष्टैव हि विद्या भवति । तस्मात् तस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन् भवेत् । न तु मुक्तौ कश्चिदतिशयसंभवोऽस्ति ।

विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत् । नहि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति । सगुणासु तु विद्यासु—'मनोमयः प्राणशरीरः' (छा. उ. ३।१४।२) इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यां उपपद्यते यथास्वं फलभेदनियमः कर्मफलवत् । तथाच लिङ्गदर्शनम्—'तं यथा यथोपासते तदेव भवति' (मु. उ. ३।३) इति । नैवं निर्गुणायां विद्यायाम्, गुणाभावात् । तथाच स्मृतिः—न हि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्' (म. भा. शा. १९४।६०) इति ।

तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति ॥ ५२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः
समाप्तश्चाध्यायः

---

सम्पन्नायां विद्यायां फलावश्यम्भावात् । निरवशेषाविद्यानिवृत्तिरेव मुक्तिफलाभिव्यञ्जिका, अतो न अविद्यानिवृत्तितारतम्यानुसारेणापि मुक्तौ तारतम्यं वक्तुं शक्यम् । न च उत्पन्नायामपि विद्यायां प्रारब्धप्रतिबन्धकानि सन्तीति न ऐहिकत्वं मुक्तेस्सम्भवतीति वाच्यम् । प्रारब्धांशेन विक्षेपशक्त्यनुवृत्तावपि आवरणशक्तिनाशेन ब्रह्मस्वरूपानन्दस्य स्फुरणेन जीवन्मुक्तेः तदानीमेव सम्भवात् ।

न हि गतिरधिकास्तीति । गतिः–प्राप्यं फलं निर्विशेषे कस्यचिदधिकं कस्यचिन्न्यूनमिति नास्ति, सति हि गुणे उपास्ये तत्तारतम्यात् फले अतुल्यतां प्रवदन्तीत्यर्थः ॥ ५२ ॥

इति मुक्तिफलानियमाधिकरणम्

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वती-
श्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादि-
गुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्द-
तीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थ-
स्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वैता-
नन्दस्य कृतौ शारीरकभाष्य-
व्याख्यायां ब्रह्मविद्याभरणाख्यायां
तृतीयस्याध्यायस्य
चतुर्थः पादः
समाप्तश्चाध्यायः

ॐ

---

## चतुर्थोऽध्यायः

### प्रथमः पादः

#### १ आवृत्त्यधिकरणम्

### आवृत्तिरसकृदुपदेशात् ॥ १ ॥

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात्। अथेह चतुर्थे फलाश्रय आगमिष्यति। प्रसङ्गागतं चान्यदपि किंचित् चिन्तयिष्यते। प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः।

---

सङ्गतिं सूचयन् वृत्तवर्तिष्यमाणाध्याययोरर्थं कीर्तयति—तृतीयेऽध्याये इत्यादि। अस्मिन्नपि आवृत्त्यादीनां परापरविद्याङ्गानां निरूपणीयतया प्रायेणेत्युक्तम्। ततश्च, साधनभूतपरापरविद्यानिरूपणानन्तरं तत्फलनिरूपणं अर्थक्रमानुसारि भवति, अध्यायार्थयोस्साधनफलयोः क्रमिकत्वात्–इति भावः।

अस्मिन्नध्याये परापरविद्ययोः यत् साधारणं फलं तत् तन्त्रेणैव विचारयिष्यते। अपरविद्यायां विदुषः पापक्षयः [1]प्रथममिति स प्रथमपादे निरूप्यते, स निर्गुणविद्यासाधारणः। पापक्षयानन्तरभाविन्युत्क्रान्तिः सगुणविदाम्, सा द्वितीये पादे निरूप्यते। उत्क्रान्तिनिरूपणप्रस्तावे परविदुषः सा नास्तीति प्रतिषेधादित्यधिकरणे निरूपयिष्यते। निर्विशेषविद्यायामुत्क्रान्तिप्रतिषेधे उत्क्रान्तिप्रसङ्गागते निरूपिते, प्रसङ्गादेव निर्विशेषफलं लिङ्गशरीरलयादिकं निरूपयिष्यते। तृतीयपादे तु उत्क्रान्तस्यार्चिरादिमार्गप्राप्तिर्निरूपयिष्यते। अर्चिरादिमार्गविचारप्रसङ्गवशात् प्रतीकोपासकानां अमानवपुरुषसम्बन्धो नास्तीति प्रतिपादयिष्यते। ततश्चतुर्थे पादे अर्चिरादिमार्गेण ब्रह्मलोकं गतानां सगुणोपासकानां सत्यकामत्वाद्यभिव्यक्तिः निर्विशेषविदां तु स्वरूपेणैवावस्थितिरिति फलविभागो दर्शयिष्यते। अतः अर्थक्रमानुसारेण पादानामपि क्रमो द्रष्टव्यः।

---

1. **प्रथममिति** पापक्षयः, उत्क्रान्तिः, अर्चिरादिप्राप्तिः, ब्रह्मलोकप्राप्तिपूर्वकं सत्यकामत्वाद्यभिव्यक्तिः-इति फलक्रमे प्रथमं—इत्यर्थः।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. ४।५।६) 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' (बृ. उ. ४।४।२१) सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा. उ. ८।७।१) इति चैवमादिश्रवणेषु संशयः-किं सकृत् प्रत्ययः कर्तव्यः आहोस्विदावृत्त्येति। किं तावत् प्राप्तं? सकृत् प्रत्ययः स्यात् प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात्। अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायां अशास्त्रार्थः कृतो भवेत्। नन्वसकृदुपदेशा उदाहृताः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवमादयः। एवमपि, यावच्छब्दमावर्तयेत्–सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम्। सकृदुपदेशेषु तु वेदोपासीतेत्येवमादिषु अनावृत्तिरिति।

एवं प्राप्ते ब्रूमः—प्रत्ययावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं यावच्छब्दमेवावर्तयेत् नाधिकमिति। न। दर्शनपर्यवसानत्वादेषाम्। दर्शनपर्यवसानानि हि श्रवणादीनि

---

अत्र प्रथमाधिकरणे, विद्यासाधनभूतानि श्रवणादीनि सकृदेव कर्तव्यानि उत यावत्फलमावर्तनीयानीति सन्देहः, एवं सविशेषोपासनमपि आप्रायणमावर्तनीयं उत सकृदेव कर्तव्यमिति।

एवमपि यावच्छब्दमिति। [1]ननु—व्रीहीनवहन्तीत्यवघातमात्रश्रवणेऽपि यथा वितुषीभावपर्यन्तं तस्यावृत्तिः, एवं श्रवणादीनामपि आवृत्तिः किं न स्यात्। न स्यात्। अवघातस्य हि वितुषीभावो दृष्टं फलम्, अतः तत्सिद्धये अश्रुताप्यावृत्तिः तत्राक्षिप्यते। श्रवणादीनां तु साक्षात्कारोद्देशेन विहितानां साक्षात्कारो न दृष्टं फलम्। तस्य प्रमाणजन्यस्य तर्करूपश्रवणं प्रति न दृष्टफलत्वं वक्तुं शक्यम् एवं ध्यानमपि प्रत्ययावृत्तिरूपं न प्रमाणमिति तस्यापि साक्षात्कारो न दृष्टं फलम्। अतः अदृष्टद्वारैव श्रवणादेस्साक्षात्कारहेतुत्वात् नावघातवदिहावृत्त्याक्षेपः। सगुणोपासनानामपि ब्रह्मलोकावाप्त्यादिकमदृष्टद्वारैवेति न तत्राप्यावृत्त्याक्षेपः—इति पूर्वपक्षिणो हृदयम्।

---

1. नन्वित्यादिशङ्कानिराकरणेन, भाष्योक्तपूर्वपक्षरचनायां श्रुतप्रकाशिकोक्तं दूषणं उद्धृतं वेदितव्यम्।

आवर्त्यमानानि दृष्टार्थानि भवन्ति, यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत् ।

अपि च-उपासनं निदिध्यासनं चेति अन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते । तथाहि लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते । तथा 'ध्यायति प्रोषितनाथा पतिम्' इति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते । विद्युपास्त्योश्च वेदान्तेषु अव्यतिरेकेण प्रयोगो दृश्यते । क्वचित् विदिनोपक्रम्य उपासिनोप संहरति, यथा—'यस्तद्वेद यत् स वेद स मयैतदुक्तः' (छा. उ. ४।१।४) इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवता-

---

दर्शनपर्यवसानानि हीति । अयं भावः—यद्यपि श्रवणादिकमप्रमाणभूतम्, तथापि परम्परया साक्षात्कारे उपयुज्यते दृष्टविधयैव । तच्च व्युत्पादितं सहकार्यन्तरविधिरित्यत्र । अतः प्रमाणासम्भावनादिनिवृत्तिपर्यन्तं तान्यावर्तनीयानि । एवं सगुणोपासनेष्वप्यावृत्तिरपेक्षिता । तत्र हि फले जननीये उपास्यसाक्षात्कारो द्वारम्, 'यस्य स्यादद्धा न विचिकित्सास्ति' इति 'देवो भूत्वा देवानप्येति' इति च श्रवणात् । यद्यपि इदं वचनं विद्याविशेषप्रकरणे एव श्रुतं, तथापि यत्र श्रुतं तेषु साक्षात्कारस्य वचनबलात् द्वारता सिद्धा, ध्यानस्य ध्येयसाक्षात्कारहेतुत्वं विधुरपरिभावितकामिनीसाक्षात्कारस्थले क्लृप्तमिति, विद्यान्तराणामपि द्वारापेक्षायां अन्यत्र क्लृप्त उपास्यसाक्षात्कार एव द्वारत्वेन कल्प्यते, न चासौ सकृद्ध्यानमात्रेण सिध्यतीति, तदुपपत्तये सगुणेष्वप्युपासनेषु नैरन्तर्येणादरपूर्वकावृत्तिराक्षिप्यते । एवं च यत्र विदिधातुना सविशेषविद्या निर्दिश्यते तत्रावृत्तिरर्थादाक्षिप्ता ।

उपासीतेतिविधाने तु तस्याश्शब्दार्थतामप्याह—अपि चोपासनमित्यादि । विदिधातुनिर्देशस्थले आवृत्तेश्शब्दार्थतां वक्तुं उपासिना समानार्थतां दर्शयति—विद्युपास्त्योश्चेति । यस्तद्वेदेति । अत्र पूर्ववाक्ये रैकः प्रस्तुतः । सः-रैकः यत् वेद तत् रैकवेद्यं अन्योऽपि यो वेद । तस्यापि धर्मे सर्वलोकानां धर्मा अन्तर्गता भवन्तीति पूर्ववाक्यादनुषज्यते । स रैकः एवंमहिमशाली मया एतत्—इत्थं उक्त इति हंसस्य हंसान्तरं प्रति वचनम् । अत्र रैकगता संवर्गविद्या विदिनोपक्रान्ता, रैक्वं प्रति विद्याग्रहणार्थमागतस्य जानश्रुतेर्वाक्यं अनुमएतामिति, मामनुशाधीत्यन्वयः । अत्र वेदितृत्वेन पूर्वं निर्दिष्टो रैक्वः उपास्से इति निर्दिष्टः ।

मुपास्से' (छा. उ. ४।२।२) इति। क्वचिच्च उपासिनोपक्रम्य विदिनोपसंहरति, यथा—'मनो ब्रह्मेत्युपासीत' (छा. उ. ३।१८।१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छा. ३।१८।३) इति।

तस्मात् सकृदुपदेशेष्वप्यावृत्तिसिद्धिः। असकृदुपदेशस्तु आवृत्तेः सूचकः॥ १॥

## लिङ्गाच्च ॥ २॥

लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा ह्युद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' (छा. उ. १।५।१) इत्येतत् एकपुत्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' (छा. उ. १।५।२) इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयति। तस्मात् तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः।

---

आवृत्तेस्सूचक इति। साङ्गवेदाध्ययनादेवात्मप्रतीतेस्सिद्धतया पुनः श्रवणादिकर्तव्यताप्रतिपादनं हि, तस्याः प्रतीतेः असम्भावनादिना आपातत्वं सूचयत् असम्भावनादिनिवृत्त्यर्थं आवृत्तिं सूचयतीति[1] भावः॥ १॥

छान्दोग्ये 'असौ वा आदित्य उद्गीथः' इति उद्गीथविज्ञानं प्रस्तुत्य, 'एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच' इति एकपुत्रतादोषेण तदपोद्य, 'रश्मींस्त्वं पर्यावर्तयात् बहवो वै ते भविष्यन्ति' पर्यावर्तयादिति तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति हेस्तातङादेशो तकारलोपश्छान्दसः, पर्यावर्तयेत्यर्थः, इति उद्गीथे रश्मिदृष्टिं बहुपुत्रतायै विदधद्वाक्यं वेदनमावृत्तिपदेनानुवदतीति भवत्येतल्लिङ्गं उपासनस्यावृत्तिगर्भत्वे।

श्रवणस्यावृत्तिः कर्तव्येति सिद्धान्तिना प्रतिपादितम्। तत्र श्रवणपदेन किं विवक्षितम्—किं पदार्थमात्रव्युत्पत्तिमतो यच्छाब्दज्ञानं तदेव, उत विचारयुक्तशाब्दज्ञानम्? आद्येऽपि, किं प्रयोजनं आवृत्तेः? न तावत् 'पूर्वपूर्वपर्यायानवगतो विशेष उत्तरोत्तराभ्यासेऽवगम्यते' इति शक्यते निर्विशेषविद्यायां वक्तुम्—इत्याह—साध्यफलेषुप्रत्ययेष्विति। साध्यं फलं पूर्वपूर्वप्रत्ययानवगतविशेषविषयकत्वरूपं येषु

---

[1]. भाव इति एवं भाष्यभाववर्णनेन, श्रुतप्रकाशिकोक्तं असकृत्पदस्यहेत्वंशविषयत्वे भाष्योक्ते यद्दूषणं तदुद्धृतं वेदितव्यम्।

अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेषु आवृत्तिः। तेषु आवृत्तिसाध्यस्यातिशयस्य संभवात्। यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेव आत्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्थाऽऽवृत्तिरिति।

सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीत्यनुपपत्तेः आवृत्त्यभ्युपगम इति चेत्; न—आवृत्तावपि तदनुपपत्तेः। यदि हि 'तत्त्वमसि' इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्, ततः तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्।

अथोच्येत—न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोति, अतो युक्त्यपेक्षं वाक्यं अनुभावयिष्यति ब्रह्मात्मत्वम्—इति। तथाप्यावृत्त्यानर्थक्यमेव, साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति।

अथापि स्यात्-युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते न विशेषविषयम्। यथा 'अस्ति मे हृदये शूलम्' इत्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति यथा स एव शूली। विशेषानुभवश्च अविद्याया निवर्तकः, ततः तदर्थाऽऽवृत्तिरिति चेत्; न—असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्। नहि सकृत्प्रवृत्ताभ्यां शास्त्रयुक्तिभ्यां अनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यां अवगन्तुं शक्यते।

---

तेष्वित्यर्थः। अस्यैव ग्रन्थस्य विवरणं स्वयमुत्तरत्र करिष्यति 'अपिचानेकांशोपेते' इत्यादिना। तर्हि शाब्दबोधोत्पत्त्यर्थमेवावृत्तिरस्तु—इति शङ्कते—सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीतीति। विचारयुक्तशाब्दज्ञानं श्रवणम्—इतिपक्षमुद्भावयितुं, प्रथमतो विचारस्य प्रयोजनमाह—अथोच्येतेति। अयमर्थः—शब्दो हि स्वभावतः परोक्षज्ञानजनकः। परन्तु, यथा सन्निहितवस्तुगोचरप्रत्यक्षजननस्वभावमिन्द्रिय संस्काररूपसहकारिसाचिव्यात् व्यवहितगोचरमपि प्रत्यभिज्ञाप्रत्यक्षं जनयति, एवं विचाररूपसहकारिसाचिव्यात् शब्दोऽपि ब्रह्मविषयकापरोक्षज्ञानजनको भविष्यतीति। (भावः) यद्यपि—अर्थानुरोधितया ज्ञानापरोक्ष्यस्य प्रतिपादनात्, शब्दजन्यमपि ज्ञानं अपरोक्षात्मगोचरं अपरोक्ष नापरोक्ष्याय विचारमपेक्षते-इति, तथापि, तदुपेत्य तावताप्यावृत्तिर्नेसिद्ध्यतीत्याह—तथापीति। सामान्यविषयम्—आवृत्तिजन्यज्ञानविषयत्वयोग्यस्वरूपविशेषाविषयम्।

तस्मात् यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्यते यदि वा सामान्यमेव उभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इति आवृत्त्यनुपयोगः। न च सकृत्प्रवृत्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुम्, विचित्रप्रज्ञत्वात् प्रतिपत्तॄणाम्।

अपि च—अनेकांशोपेते लौकिके पदार्थे सामान्यविशेषवति एकेनावधानेनैकमंशमवधारयति अपरेणापरमिति स्यादप्यभ्यासोपयोगः, यथा दीर्घप्रपाठकग्रहणादिषु। नतु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तौ अभ्यासापेक्षा युक्ता—इति।

अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति, यः तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वं अनुभवितुं शक्नुयात्। यस्तु न शक्नोति, तं प्रत्युपयुज्यत एव आवृत्तिः। तथाहि छान्दोग्ये 'तत्त्वमसि श्वेतकेतो' इत्युपदिश्य 'भूय एव मा भगवान् विज्ञापयतु' इति पुनः पुनः परिचोद्यमानः तत्तदाशङ्काकारणं निराकृत्य तत्त्वमसीत्येव असकृदुपदिशति। तथा च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि दर्शितम्।

---

यदि श्रवणावृत्तिरपेक्षिता स्यात्, तदा आत्मापरोक्ष्यं कस्यापि सकृच्छ्रवणे न स्यात्, क्लृप्तकारणं विना कार्यानुदयात्। न चैतदस्ति, सकृच्छ्रवणमात्रेणैव केषाञ्चिदात्मापरोक्ष्यदर्शनात्। अतो व्यभिचारादपि नावृत्तेः कारणत्वम्—इत्याह—**न च सकृत्प्रवृत्त इति।**

पूर्वोक्तस्य द्विविधस्यापि श्रवणस्य आवृत्तिरपेक्षिता। तत्र, आद्यस्य श्रवणस्य तत्तदधिकरणनिरसनीयशङ्काकन्दलनाय पूर्वपक्षिसिद्धान्त्यभिमतसाधारणार्थज्ञानपर्यन्ता। दृश्यते हि कठिनश्लोकादौ साधारणार्थज्ञानेऽप्यावृत्त्यपेक्षा। द्वितीयस्य तु उद्भावितततत्संशयनिरसनपर्यन्ता। येषां तु कुशलबुद्धीनां जन्मान्तरीयविचारसंस्कृतत्वात् सकृत्प्रवृत्त्यैव निर्धारणादिकं तान् प्रति आवृत्त्यपेक्षाविरहेऽपि नानुपपत्तिः, जन्मान्तरीयावृत्तिमादाय व्यभिचारपरिहारसम्भवात्। वामदेवादिषु हि जन्मान्तरीयाचार्योपदेशादिकं स्वीकृत्यैव, आवृत्त्यतिरिक्ताया अपि ज्ञानसामग्र्या व्यभिचारः परिहरणीयः-इत्यभिप्रेत्य परिहरति—**अत्रोच्यत इत्यादिना।** आवृत्तेः शङ्काविशेषनिरसने उपयोग इत्यत्र लिङ्गमाह—**तथा हि छान्दोग्य इति।**

ननूक्तं—सकृच्छ्रुतं चेत् तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति, तत आवर्त्यमानमपि नैव शक्ष्यति-इति।

नैष दोषः। न हि दृष्टे अनुपपन्नं नाम। दृश्यन्ते हि सकृच्छ्रुताद्वाक्यात् मन्दप्रतीतं वाक्यार्थं आवर्तयन्तः तत्तदाभासव्युदासेन सम्यक्प्रतिपद्यमानाः।

अपिच—तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे।

तत्पदेन च प्रकृतं सद्ब्रह्मेक्षितृ जगतो जन्मादिकारणं अभिधीयते 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१।१) 'विज्ञानमानन्दं ब्रह्म' (बृ.उ. ३।९।२८) 'अदृष्टं द्रष्टृ' 'अविज्ञातं विज्ञातृ' (बृ. उ. ३।८।११) 'अजमजरममरम्' 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ.उ. ३।८।८) इत्यादिशास्त्रप्रसिद्धम्। तत्र अजादिशब्दैः जन्मादयो भावविकारा निवर्तिताः अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः। विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्। एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः। तथा, त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानः चैतन्यपर्यन्तत्वेनावधारितः।

तत्र, येषां एतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य-इत्यतः तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशः, तथापि, अध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्; तत्र एकेनावधानेनैकमंशमपोहति अपरेणापरमिति, युज्यते तत्र क्रमवती प्रतिपत्तिः। तत्त पूर्व-

---

तत्त्वमसीतिमहावाक्यार्थनिर्णये शङ्काविशेषनिरासद्वारा आवृत्तेरपेक्षेति किमु वक्तव्यम्, यतः, तादृशवाक्यार्थज्ञानोपयोगितत्त्वम्पदार्थनिर्णयायाप्यावृत्तिरपेक्षिता—इत्याह—अपिचतत्त्वमसीत्येतद्वाक्यमित्यादिना। तत्तु पूर्वरूपमेवेति। तत्पदार्थज्ञानं पूर्वरूपमेव वाक्यार्थप्रतिपत्तेः इत्यर्थः। विचारावृत्तिवत् ध्यानस्याप्यावृत्तिः कर्तृत्वादिभ्रमवासनादिनिवृत्तिपर्यन्ता—इत्यपि द्रष्टव्यम्।

रूपमेव आत्मप्रतिपत्तेः। येषां पुनर्निपुणमतीनां न अज्ञानसंशयविपर्यय-लक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसि-वाक्यार्थं अनुभवितुमिति तान् प्रति आवृत्त्यानर्थक्यमिष्टमेव। सकृदुत्पन्नैव हि आत्मप्रतिपत्तिः अविद्यां निवर्तयतीति, नात्र कश्चिदपि क्रमः अभ्युप-गम्यते।

सत्यमेवं युज्येत, यदि कस्यचित् एवं प्रतिपत्तिर्भवेत्। बलवती हि आत्मनो दुःखित्वादिप्रतिपत्तिः। अतो न दुःखित्वाद्यभावं कश्चित् प्रतिपद्यते इति चेत्;

न–देहाद्यभिमानवत् दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वो-पपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वा 'अहं छिद्ये दह्ये' इति च मिथ्याभिमानो दृष्टः। तथा, बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेषु 'अहमेव संतप्ये' इत्यध्यारोपो दृष्टः। तथा दुःखित्वाद्यभिमानोऽपि स्यात्। देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनां, सुषुप्ता-दिषु चाननुवृत्तेः। चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनन्ति 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति' (बृ. उ. ४।३।२३) इत्यादिना।

तस्मात् सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहं इत्येष आत्मानुभवः। न च एवमात्मानमनुभवतः किंचिदन्यत् कृत्यं अवशिष्यते। तथाच श्रुतिः–

---

जीवस्य असंसारिब्रह्मात्मत्वनिर्धारणोपयोगित्वं आवृत्तेरुक्तम्, तत् तदैव भवेत् यदि जीवस्य तथाविधं स्वरूपं भवेत्, तच्च नास्ति, प्रत्यक्षादिप्रमाणैस्संसारित्व-निर्धारणात्–इत्यभिप्रेत्य शङ्कते—सत्यमेवमिति। अनन्यथासिद्धप्रबलश्रुतिस्मृति-प्रमाणेन आत्मनोऽसंसारित्वप्रतिपादनात् तद्विरोधिनो लौकिकमानस्य व्यावहारिक-वस्तुविषयत्वमिति, आरम्भणाधिकरणादिषु प्रतिपादनात् नोक्तानुपपत्तिरिति परिहरति–न देहाद्यभिमानवदिति। चैतन्यात् बहिः—चैतन्यस्वरूपात्स्वरूपान्तरेण। ननु दुःखित्वादीनां स्वरूपत्वाभावेऽपि आत्मधर्मता भवतु परमार्थतः, नेत्याह-सुषुप्तादिषु चेति। व्यभिचारिणां पारमार्थिकता नास्तीति भावः। ननु-यथा सगुणेषु विज्ञानेषु जातेऽपि उपास्यसाक्षात्कारे अन्त्यप्रत्ययार्थमावृत्त्यपेक्षा, एवं निर्विशेषविदामपि साक्षात्कारानन्तरमावृत्तिः किं न स्यात्। ततश्च, यस्य सकृच्छ्र-वणेनाप्यात्मतत्त्वनिर्धारणं जातं तेनाप्यावृत्तिः कार्या–इत्याशङ्क्याह—न चैव-

'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' (बृ. उ. ४।४।२२) इति आत्मविदः कर्तव्याभावं दर्शयति। स्मृतिरपि 'यस्त्वात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टः तस्य कार्यं न विद्यते' (भ. गी. ३।१७) इति। यस्य तु नैषोऽनुभवो द्रागित्र जायते, तं प्रति अनुभवार्थ एव आवृत्त्यभ्युपगमः।

तत्रापि न तत्त्वमसिवाक्यार्थात् प्रच्याव्य आवृत्तौ प्रवर्तयेत्। न हि वरघाताय कन्यामुद्वाहयन्ति। नियुक्तस्य च 'अस्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यम्' इति अवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते। यस्तु

---

मात्मानमनुभवत इति। सगुणविद्याफलस्यान्त्यप्रत्ययाधीनत्वात् युक्ता तावत्पर्यन्तं तत्रावृत्तिः। निर्विशेषविदां तु आत्मतत्त्वसाक्षात्कारकाले इहैव मुक्तेः प्रतिपादनात् नानन्तरमावृत्त्यपेक्षा—इति भावः।

यस्त्वात्मरतिरिति। प्रियविरहितनायिकाया नायकानुसन्धानमभिलाषयुक्ततया रतिरित्युच्यते, यस्य साधकस्य तादृशं आत्मन्यनुसन्धानं—आत्मरतिः, प्राथमिकस्वरूपानन्दसाक्षात्कारः तृप्तिः, स एव जीवन्मुक्ते सन्ततः सन्तोषः।

ननु—यदि वेदान्तेषु आवृत्तियुक्तश्रवणादिविधिरुपेयते, तथासति, अमृतत्वकामिन तत्राधिकारिणं प्रकल्प्य तन्निष्ठं शास्त्रमुपगम्यताम्, आत्मा तु तच्छेषतयैव प्रतिपाद्यताम्। यदि तु, अन्यपराद्वाक्यात् आत्मा न सिध्येदिति आत्मसाक्षात्कारः प्रमारूपो न लभ्येत, तदा मास्तु तादृशः सः, सविशेषविद्यास्विव आरोपरूपसाक्षात्कारस्यैव निर्विशेषविद्यायामपि द्वारत्वोपपत्तेः-इति शङ्कां निराकर्तुमाह—तत्रापीति। उपक्रमोपसंहारैकरूप्याद्यनेकतात्पर्यलिङ्गोपेतैर्वाक्यैः अद्वितीयमात्मतत्त्वं प्रतिपाद्यते, तत्प्रतीत्युपायतया च अवान्तरवाक्यविधया श्रवणादिकं विधीयते। अतः, यथा प्रधानार्थसंरक्षणं भविष्यति तथैव वाक्यार्थ आश्रयणीयः, न तु तद्विरोधेन-इति भावः। ननु—विधिशेषतया आत्मनः प्रतिपादनेऽपि न व्याघातः, देवताधिकरणन्यायेन आत्मनोऽपि सिद्धिसम्भवादिति, नेत्याह—नियुक्तस्य चेति। तथा सति, प्रधाननियोगवाक्यानुसारेण नियोज्यपरमार्थतासिद्धेः तद्विरोधेन प्रमाणान्तरविरोधेन च अन्यपरवाक्यात् अद्वितीयात्मतत्त्वं न सिद्ध्येत्, प्रमाणान्तराविरोधे एव देवतानयः प्रवर्तते-इति भावः॥ २॥

इति आवृत्त्यधिकरणम्

स्वयमेव मन्दमतिः अप्रतिभानात् तं वाक्यार्थं जिज्ञासेत्, तस्य एतस्मिन्नेव वाक्यार्थे स्थिरीकारः आवृत्त्यादिवाचोयुक्त्या अभ्युपेयते। तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥ २ ॥

२ आत्माधिकरणम्

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

यः शास्त्रोक्तविशेषणः परमात्मा, सः किं अहमिति ग्रहीतव्यः किंवा मदन्य इति—एतद्विचारयति। कथं पुनः आत्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति। उच्यते—अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुं सति जीवेश्वरयोरभेदसंभवे, इतरथा तु गौणोऽयमभ्युपगन्तव्यः—इति मन्यते।

किं तावत् प्राप्तं ? न अहमिति ग्राह्यः। न हि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुं विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन। अपहतपाप्मत्वादिगुणश्च परमेश्वरः तद्विपरीतगुणस्तु शारीरः। ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः, ततः शास्त्रानर्थक्यम्। संसारिणोऽपीश्वरात्मत्वे अधिकार्यभावाच्छास्त्रानर्थक्यमेव, प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनम्—इति

---

पूर्वस्मिन्नधिकरणे, ब्रह्मप्रतिपत्तिसाधनानि श्रवणादीनि आवर्तनीयानीत्युक्तम्, तत्र, प्रतिपत्तिविषयीभूतं ब्रह्म अत्राधिकरणे प्रत्यगभिन्नं निर्धार्यत इति सङ्गतिः।

ननु—तत्रतत्र प्रत्यगभेदो ब्रह्मणः श्रुत्या तदविरोधिन्यायेन च प्रतिपादितः। पुनः किमर्थोऽयमारम्भः—इति चेत्,

उच्यते—शङ्काविशेषनिराकरणार्थोऽयमारम्भः।

यदि हि ब्रह्म निर्विशेषानन्दमात्रं जीवस्वरूपं भवेत्, तदा जीवस्य स्वप्रकाशतया सदाभासमानत्वात् तद्रूपं ब्रह्मापि सदा यत्नं विनैव भासेत। न च जीवस्वरूपभूतमपि ब्रह्म आवृतत्वात् न भासत इति वाच्यम्। न हि स्वप्रकाशानन्दस्वरूपब्रह्मरूपादन्यत् जीवस्य स्वरूपमस्ति, अतिरिक्तस्वरूपाभ्युपगमे ब्रह्माभेदानुपपत्तेः। ततश्च, आवरणोपगमे किमपि जीवस्वरूपं न भासेत। भासमानत्वे वा ब्रह्मस्वरूपं नित्यमेव भायात्। अतः, जीवब्रह्मणोर्भेदमुपेत्यैव ब्रह्मणोऽभानं समर्थनीयम्—इति शङ्का।

चेत्; काममेवं भवतु, न तु संसारिणो मुख्य आत्मा ईश्वरः-इत्येतत् नः प्रापयितव्यम्।

एवं प्राप्ते ब्रूमः—आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथाहि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि (व. उ. २।३४)' इति। तथा अन्येऽपि 'अहं ब्रह्मास्मि' इत्येवमाद्य आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति च आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा सर्वान्तरः' (बृ. उ. ३।४।१) 'एष त आत्माऽन्तर्याम्यमृतः' (बृ. उ. ३।७।३) 'तत् सत्यं स आत्मा तत्त्वमसि' (छा. उ. ६।८।७) इत्येवमादीनि।

यदुक्तम्—प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति;

तदयुक्तम्—गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च। यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति, यथा 'मनो ब्रह्म' (छा. उ. ३।१८।१) 'आदित्यो ब्रह्म' (छा. उ. ३।१९।१) इत्यादि। इह पुनः 'त्वमहमस्मि अहं च त्वमसि' इत्याह, अतः प्रतीकश्रुतिवैरूप्यात् अभेदप्रतिपत्तिः। भेददृष्ट्यपवादाच्च। तथाहि—'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' (बृ. उ. १।४।१०) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. उ. ४।४।१९ क. उ. ४।१०) 'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ. उ. ४।५।७) इत्येवमाद्या भूयसी श्रुतिः भेददर्शनमपवदति।

---

अयमत्र परिहारः—भासत एव आनन्दरूपेण जीवः, परं तु, तत्राविद्यादिदोषाणामारोपात् सविशेषमेव तत् भासते, निर्विशेषमात्मतत्त्वं नास्ति इति व्यवहारयोग्यं च भवति। अतो निर्विशेषात्मना तत् आवृतमित्युच्यते। न च—अभ्युपगम्यमानाऽविद्या ब्रह्मविषया तत्रारोपिता च वक्तव्या, सा च न सम्भवति, प्रकाशमाने वस्तुनि अविद्याविषयत्वानुपपत्तेः, अधिष्ठानावरणं विना अविद्यारोपानुपपत्तेश्च—इति वाच्यम्। अविद्यारोपस्यानादितया तस्य स्वपरनिर्वाहकत्वेन तदर्थं अन्येन केनचित् ब्रह्मस्वरूपावरणस्य अनपेक्षितत्वात्। स्वप्रकाशस्फुरणं च नाविद्याविषयत्वविरोधि, अपि तु सामग्रीविशेषजन्यमात्मतत्त्वज्ञानमेव तद्विरोधि—इति विशदतया प्रथमसूत्र एव प्रतिपादितम्—इति।

यच्चूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति ; नायं दोषः- विरुद्धगुणताया मिथ्यात्वोपपत्तेः ।

यत्पुनरुक्तं ईश्वराभावप्रसङ्ग इति ; तदसत्—शास्त्रप्रामाण्यात्, अनभ्युपगमाच्च । न हि 'ईश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते' इत्यभ्युपगच्छामः । किं तर्हि, संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवञ्च सति, अद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणता त्वितरस्य मिथ्या-इति व्यवतिष्ठते ।

यदप्युक्तं अधिकार्यभावः प्रत्यक्षादिविरोधश्चेति । तदप्यसत् । प्राक्प्रबोधात् संसारित्वाभ्युपगमात्, तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. २।४।१४) इत्यादिना हि, प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत् ; न—इष्टत्वात् । 'अत्र पिताऽपिता भवति' (बृ. उ. ४।३।२२) इत्युपक्रम्य 'वेदा अवेदाः' (बृ. उ. ४।३।२२) इति वचनात् इष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे ।

कस्य पुनः अयमप्रबोध इति चेत् ; 'यस्त्वं पृच्छसि तस्य ते' इति वदामः । नन्वहं ईश्वर एवोक्तः श्रुत्या ; यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः ।

योऽपि दोषः चोद्यते कैश्चित्—अविद्यया किल आत्मनः सद्वितीयत्वात् अद्वैतानुपपत्तिरिति ; सोऽप्येतेन प्रत्युक्तः ।

तस्मात् आत्मेत्येव ईश्वरे मनो दधीत ॥ ३ ॥

३ प्रतीकाधिकरणम्

## न प्रतीके न हि सः ॥ ४ ॥

'मनोब्रह्मेत्युपासीतेत्यध्यात्मं अथाधिदैवतं आकाशो ब्रह्मेति' (छा. उ. ३।१८।१) तथा 'आदित्यो ब्रह्मेत्यादेशः' (छा. उ. ३।१९।१) 'स

---

एतौ शङ्काविशेषपरिहारौ 'कस्य पुनरयं अप्रबोधः' इत्यादिशङ्कापरिहारभाष्येण सूचितौ ॥ ३ ॥

इति आत्माधिकरणम्

**यो नाम ब्रह्मेत्युपास्ते' (छा. उ. ७।१।५) इत्येवमादिषु प्रतीकोपासनेषु संशयः — किं तेष्वपि आत्मग्रहः कर्तव्यो न वेति। किं तावत् प्राप्तम्? तेष्वपि आत्मग्रह एव युक्तः। कस्मात्? ब्रह्मणः श्रुतिषु आत्मत्वेन प्रसिद्धत्वात्, प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सति आत्मत्वोपपत्तेः-इति।**

---

पूर्वस्मिन्नधिकरणे, जीवब्रह्मणोरभेदमुपजीव्य निर्विशेषविद्यासु सविशेषविद्यासु च प्रत्यगभेदेनैव ब्रह्मानुसन्धानं कर्तव्यमित्युक्तम्, तर्हि, जीवब्रह्मणोरभेदादेव ब्रह्मत्वेन भासमानेषु मनआदिप्रतीकेष्वपि आत्माभेदो द्रष्टव्यः-इति प्रत्यवस्थानात् सङ्गतिः।

निर्विशेषविद्यायां चैतन्यमात्रमनुसन्धेयम्, तत् अभिन्नमेवेति नाहंग्रहे विरोधः। सविशेषविद्यास्वपि, उपास्यस्य प्रधानस्य ब्रह्मरूपस्य अस्त्यभेदो जीवेन सहेति, तत्रापि नाहंग्रहानुपपत्तिः। 'मनो ब्रह्मेत्यादेशः' इत्यादौ मनआदिकमेव प्राधान्येन ब्रह्मदृष्ट्योपास्यम्, न च तेन सह जीवस्याभेदः, जडाजडयोरभेदासम्भवात्। अतः प्रतीकेष्वहंग्रहो नोपपद्यते-इत्यभिप्रायेण शङ्कते —कस्मादिति।

परिहरति— ब्रह्मण इति। अयमर्थः—कार्यकारणयोरनन्यत्वं तावत् अनेकैः प्रमाणैः आरम्भणाधिकरणे व्यवस्थापितम्। तथा च, मनआदीनां ब्रह्मकार्यतया ब्रह्मणा अभेदसिद्धौ ब्रह्माभिन्नजीवेनाप्यभेद इति, न मनआदिष्वहंग्रहे काचिदनुपपत्तिः।

ननु—'तदिदमप्येतर्हि य एवंवेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इत्यादिवाक्यानुसारेण प्रत्यगभिन्नात्मज्ञानस्यैव मोक्षसाधनतया निर्विशेषविद्यायामहंग्रह आदृतः। सविशेषविद्यास्वपि 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इतिवचनबलादेव अहंग्रह आदृतः। प्रतीकेषु, सत्यपि जीवैस्सह यथाकथञ्चित्प्रतीकानामभेदे न 'तथैवानुसन्धानं कार्यम्' इत्यत्र नियामकं किञ्चिदस्ति। मनआदिषु ब्रह्मदृष्टिमात्रेण विधिबलात् आम्नातफलसिद्ध्युपपत्तेः। अतः, कथमत्राहंग्रहः—इति चेत्;

न—सविशेषविद्यासु न सर्वत्र वचनमस्त्यहंग्रहे, त्वंवाअहमस्मीतिवाक्यस्य विद्याविशेषगतत्वात्। अतः, यत्र वचनं नास्ति तत्र सविशेषविद्यासु अहंग्रहोऽर्थादेवकर्तव्यः (इति)। आर्थिकश्चाहंग्रहः प्रतीकेषु व्यावर्तयितुं न शक्यते, जीवानां प्रतीकानाञ्च अभेदस्योपपादितत्वात्, ब्रह्माभेदेऽनुसन्धीयमाने ब्रह्माभिन्नजीवाभेदस्यापि उपस्थितस्य त्यागायोगात्—इति पूर्वपक्षी मन्यते।

एवं प्राप्ते ब्रूमः—न प्रतीकेषु आत्ममतिं बध्नीयात्, न हि सः— उपासकः प्रतीकानि व्यस्तानि आत्मत्वेनाकलयेत् ।

यत्पुनः ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति । तद्-सत् । प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्म-

---

अयमत्र सिद्धान्ताभिप्रायः—यथा सविशेषेषूपासनेष्वर्थादहंग्रहः, नैवं प्रतीको-पासनेषु प्राप्नोति । सविशेषब्रह्मोपासनेषु हि, इहैव आभिमानिक उपास्याभेदः फलजनने द्वारम् । न चासौ अहंग्रहं विना सम्भवति । अतस्तत्र अहङ्ग्रह आदृतः । प्रतीकेषु न तथा । अपि तु, ब्रह्मात्मना प्रतीकेषु गृहीतेषु यथोक्तं फलं सिद्ध्यति, न तु उपासकस्य प्रतीकेष्वभेदाभिमानोऽपेक्षितः । आर्थिको ह्यर्थः स उच्यते, येन विना श्रुतोऽर्थो नोपपद्यते । इह च, श्रुताया मनआदिषु ब्रह्मदृष्टेः तत्फलस्य च अहङ्ग्रहं विनैवोपपत्तेः न तस्यार्थिकता—इति ।

यदपि पूर्वपक्षिणोक्तम्—प्रतीकानां ब्रह्माभिन्नत्वात् ब्रह्माभिन्नजीवाभेदोऽपि तत्राविकलः—इति ;

तत्र वक्तव्यम्—किं प्रतीकानां ब्रह्माभेदः ब्रह्मविकारत्वात् उत ब्रह्मदृष्टि-विषयत्वात् । आद्येपि, मनोब्रह्मेत्यत्र, ब्रह्मविकारतया, मनश्शब्देन प्रधानतया प्रतिपादितो जडांशो विवक्षितः, उत उपसर्जनतया प्रतिपादितो मनोऽवच्छिन्न-सत्तांशः—इति । नाद्य इत्याह—न हि स उपासकः प्रतीकानीति । जडांशस्य ब्रह्मविकारत्वेऽपि न स्वरूपैक्यं अभेदः, अपि तु तादात्म्याख्यस्वरूपसम्बन्धविशेषः, अतो न जीवाभेदः तस्मिन्नंशे इति भावः ।

न द्वितीय इति दर्शयितुं तमुद्भावयति—यत्पुनरिति । सत्तांशस्याप्यव-च्छिन्नवेषेण विकारत्वम् । प्रतीकाभावप्रसङ्गादिति । मनआदिशब्दैः यद्यपि सत्तांशः प्रतिपाद्यते, तथापि स उपसर्जनतयैव; प्रसिद्ध्यनुसारेण जडांशस्यैव प्राधान्येन शक्यत्वात् । अतः सत्तोपसर्जनकजडांश एव ब्रह्मदृष्ट्या प्रतीके उपास्य-त्वेनावगम्यते । तत्र, यदि ब्रह्मपदसामानाधिकरण्याय इदंसर्वंयदयमात्मेत्यादिनिर्वि-शेषप्रकरणगतवाक्येष्विव सत्तांशो लक्ष्येत, तथासति शब्दस्वारस्यानुरोधेन यस्य प्रतीकत्वमवगतं तस्य परित्यागःस्यात् । अपि च-तदनुगतसत्तांशस्य निर्विकारब्रह्माभेदे बोध्यमाने मनश्शब्दार्थस्य मिथ्यात्वमपि द्योतितं भवेत्; न चैतदुचितम्—इति

ग्रहो वा। न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या। कर्तृत्वाद्यनिराकरणात्। कर्तृत्वादिसर्व(संसार)धर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः। तदनिराकरणेन चोपासनविधानम्। अतश्च उपासकस्य प्रतीकैः समत्वात् आत्मग्रहो नोपपद्यते। न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति। सुवर्णात्मनेव तु ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मदृष्टिः क्रियते ॥ ४ ॥

४ ब्रह्मदृष्ट्यधिकरणम्

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

तेष्वेवोदाहरणेषु अन्यः संशयः—किं आदित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति। कुतः संशयः? सामानाधि-

---

भावः। ब्रह्मदृष्टिविषये ब्रह्मणि तत्त्वमसीत्यादिवाक्यैर्जीवाभेदप्रतिपादनात् ब्रह्मदृष्टिविषयेषु प्रतीकेष्वपि जीवाभेदोऽनुसन्धेयः—इति आद्यद्वितीयं शङ्कते—न च ब्रह्मण आत्मत्वादिति। कर्तृत्वाद्यनिराकरणादिति। आदिपदेन तत्पदार्थगतसविशेषत्वं गृह्यते। अनिराकरणादिति अभेदाप्रतिपादनस्याप्युपलक्षणम्। निर्विशेषविद्यायां ब्रह्मणो ब्रह्मदृष्टिविषयत्वमात्रं जीवाभेदानुसन्धानप्रयोजकं न भवति. अपि तु तत्त्वंपदार्थविशोधनपूर्वकमभेदप्रतिपादनम्, इह तु प्रतीकविद्यायां न तदस्ति—इत्यभिप्रायेण सङ्ग्रहवाक्यं विवृणोति—कर्तृत्वादिसर्वधर्मेति। ननु-मनोब्रह्मेत्यादौ ब्रह्मपदेन त्रिविधपरिच्छेदशून्यवस्तुप्रतिपादनात् तदुपपत्तये इहापि कर्तृत्वादिनिराकरणं सूचितमेवेति, इदंसर्वंयदयमात्मेतिवत् इहापि वाक्यार्थौ ग्राह्यः-इत्याशङ्क्याह—सुवर्णात्मनेवत्विति। मनोब्रह्मेत्यादौ मनआदीनां प्राधान्यात् तदुपपत्तये वस्तुपरिच्छेदराहित्यं इह ब्रह्मपदेन न विवक्षणीयम्, अन्यथा प्रधानस्य मनस उपमर्दः स्यात्—इति भावः ॥ ४ ॥

इति प्रतीकाधिकरणम्

सङ्गतिं सूचयन् अधिकरणमवतारयति—तेष्वेवेति। 'आदित्यो ब्रह्म' इत्यादिवाक्यैर्हि आदित्यादेर्ब्रह्माभेदोऽनुसन्धेय इत्युच्यते। तदनुसन्धानं च आरोपात्मकम्। तत्रारोपे—आदित्यादयः प्रकारतया ब्रह्म विशेष्यतया, उत वैपरीत्यम्—इति सन्देहः।

करण्ये कारणानवधारणात् । अत्र हि ब्रह्मशब्दस्य आदित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते । 'आदित्यो ब्रह्म' 'प्राणो ब्रह्म' विद्युद्-ब्रह्म' इत्यादिसमानविभक्तिनिर्देशात् । न चात्र आञ्जसं सामानाधिकरण्यं अवकल्पते । अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानाम् । न हि भवति 'गौरश्वः' इति सामानाधिकरण्यम् ।

ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात् । नेत्युच्यते । विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात् । ततश्च प्रतीकाभावप्रसङ्गमवोचाम । परमात्मवाक्यं चेदं तदानीं स्यात्, ततश्च उपासनाधिकारो बाध्येत । परिमितविकारोपादानं च व्यर्थम् ।

तस्मात् 'ब्राह्मणोऽग्निर्वैश्वानरः' इत्यादिवत् अन्यत्रान्यदृष्ट्यध्यासे सति, क्व किंदृष्टिरध्यस्यतामिति संशयः ।

तत्र, अनियमः नियमकारिणश्शास्त्रस्याभावात्—इत्येवं प्राप्तम् । अथवा—आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्याः इत्येवं प्राप्तम् । एवं हि आदित्यादिदृष्टिभिः ब्रह्मोपासितं भवति, ब्रह्मोपासनं च फलवदिति शास्त्र-मर्यादा । तस्मात् न ब्रह्मदृष्टेरादित्यादिष्विति ।

एवं प्राप्ते ब्रूमः—ब्रह्मदृष्टिरेव आदित्यादिषु स्यादिति । कस्मात् ? उत्कर्षात्-एवं उत्कर्षेण आदित्यादयो दृष्टा भवन्ति, उत्कृष्टदृष्टेस्तेष्वध्या-

---

परिमितविकारेति । निर्विशेषवाक्यत्वे हि, कृत्स्नस्य प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय 'इदं सर्वं यदयमात्मा' इतिवत् कृत्स्नोपादानं न्याय्यम्, मनआदिपदैः परिमितानां विकाराणां तु उपादानं न न्याय्यमित्यर्थः । ननु—ब्रह्मप्राधान्यपक्षे यद्यपि ब्रह्म उपास्यं भवति, तथापि अस्मिन् पक्षे निकृष्टवस्त्वभेदो ब्रह्मणि ध्यातव्य इति नेदमुपासनं ब्रह्मप्रसादाय पर्याप्तं भवेत्, लोके उत्कृष्टे निकृष्टाभेदज्ञानस्य तत्कोपापादकत्वदर्शनात्—इत्याशङ्क्याह—ब्रह्मोपासनं चेति । ब्रह्म हि फलप्रदमिति शास्त्रसिद्धम्, अतो ब्रह्मणः प्राधान्यं फलप्रदतया शास्त्रानुमतम्, ततश्च शास्त्रानुसारेण निकृष्टाभेदानुसन्धानेनापि फलेऽवगम्यमाने तस्य लौकिकन्यायेन न बाधनमुचितं भवति—इति भावः ।

सात्। तथाच लौकिको न्यायोऽनुगतो भवति। ‘उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्या’ इति लौकिको न्यायः, यथा राजदृष्टिः क्षत्तरि। स चानुसर्तव्यः, विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्।

ननु—शास्त्रप्रामाण्यात् अनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिः नियन्तुं युक्ता-इति।

अत्रोच्यते—निर्धारिते शास्त्रार्थे एतदेवं स्यात्। सन्दिग्धे तु तस्मिन् तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते। तेन च उत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे, निकृष्टदृष्टिमध्यस्यन् प्रत्यवेयादिति श्लिष्यते।

प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वं अविरोधाद्ग्रहीतव्यम्। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते।

इतिपरत्वादपि ब्रह्मशब्दस्य एष एवार्थो न्याय्यः। तथा हि—‘ब्रह्मेत्यादेशः’, ‘ब्रह्मेत्युपासीत’, ‘ब्रह्मेत्युपास्ते’ इति च सर्वत्र इतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्तु आदित्यादिशब्दान्। ततश्च, यथा—‘शुक्तिकां रजतमिति प्रत्येति’ इत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः—प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति; एवमत्रापि आदित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते।

---

लौकिकोऽपि न्याय आश्रीयमाण इति। ब्रह्मणः फलप्रदत्वमात्रेण प्राधान्येनात्र ब्रह्मोपास्यमिति निर्धारयितुं न शक्यते। संवर्गविद्यादिषु यथाकथञ्चित् ब्रह्मण उपास्यत्वाभावेऽपि हि तदेव फलप्रदम्। एवञ्च गुणतयापि ब्रह्मसंस्पर्शिन्यामुपासनायां ब्रह्मणः फलप्रदत्वमिति किमु वक्तव्यम्। ततश्च, ब्रह्मणः प्रधानत्वेऽप्रधानत्वे वा ब्रह्मैवफलप्रदमितिश्रुतेरुपपत्तौ सत्यां ‘उत्कृष्टे न निकृष्टदृष्टिः कर्तव्या’ इति लौकिकन्यायो न बाधनीय इति भावः॥ ५॥

इति ब्रह्मदृष्ट्यधिकरणम्

वाक्यशेषोऽपि च, द्वितीयानिर्देशेन आदित्यादीनेव उपास्तिक्रियया व्याप्यमानान् दर्शयति—'स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' (छा. उ. ३।१९।४) 'यो वाचं ब्रह्मेत्युपास्ते' (छा. उ. ७.२।२) 'यः संकल्पं ब्रह्मेत्युपास्ते' (छा. उ. ७।४।३) इति च।

यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति।

तदयुक्तम्। उक्तेन न्यायेन आदित्यादीनामेवोपास्यत्वावगमात्। फलं तु अतिथ्याद्युपासने इव आदित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितं चैतत् 'फलमत उपपत्तेः' (ब्र. सू. ३।२।३८) इत्यत्र। ईदृशं चात्र ब्रह्मण उपास्यत्वं—यत् प्रतीकेषु तद्दृष्टयध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम् ॥ ५ ॥

५ आदित्यादिमत्यधिकरणम्

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

'य एवासौ तपति तमुद्गीथमुपासीत' (छा. उ. १।३।१), लोकेषु पञ्चविधं सामोपासीत' (छा. उ. २।२।१), 'वाचि सप्तविधं सामोपासीत' (छा. उ. २।८।१), 'इयमेवर्गग्निः साम' (छा. उ. १।६।१) इत्येवमादिष्वङ्गावबद्धेषूपासनेषु संशयः—किं आदित्यादिषूद्गीथादिदृष्टयो विधीयन्ते किं वा उद्गीथादिष्वेवादित्यादिदृष्टयः—इति।

तत्र, अनियमः नियमकारणाभावात्—इति प्राप्तम्। न ह्यत्र ब्रह्मण इव कस्यचित् उत्कर्षविशेषोऽवधार्यते। ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्च आदित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुम्, न त्वादित्योद्गीथादीनां विकारत्वाविशेषात् किंचित् उत्कर्षविशेषावधारणे कारणमस्ति।

अथ वा—नियमेन उद्गीथादिमतय आदित्यादिष्वध्यस्येरन्। कस्मात्? कर्मात्मकत्वादुद्गीथादीनाम्, कर्मणश्च फलप्राप्तिप्रसिद्धेः।

---

सङ्गतिः भाष्य एव स्पष्टा।

कर्मात्मकत्वादिति। ननु—उद्गीथादीनां कर्मात्मकत्वं आदित्यादीनां सिद्धरूपत्वमिति अस्तु विशेषः। तावता, कर्मात्मका एवोद्गीथादय आदित्यादिषु

उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति । तथा च 'इयमेवर्गग्निः साम' इत्यत्र 'तदेतदेतस्यामृच्यध्यूढं साम' इति ऋक्शब्देन पृथिवीं निर्दिशति सामशब्देनाग्निम् ; तच्च पृथिव्यग्न्योः ऋक्सामदृष्टिचिकीर्षायां अवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायाम् । क्षत्तरि हि राजदृष्टिकरणात् राजशब्द उपचर्यते, न राजनि क्षत्तृशब्दः ।

---

ध्येयाः न तु सिद्धरूपा आदित्यादयः उद्गीथादिषु ध्येयाः– इति नियमः कुतो लभ्यते ।

उच्यते—एवं मन्यते–फलजननसामर्थ्यं हि कर्मणस्सिद्धम् । सति सम्भवे प्राधान्येन यदुपास्यं तस्मादेव फलं वक्तव्यम् । तत्र, यदि क्रियारूपेषूद्गीथादिषु सिद्धरूपाणामादित्यादीनां दृष्टिर्विधीयेत, तथासति उद्गीथादीनां क्रियारूपत्वं सिद्धरूपादित्यादिदृष्ट्या अपगतं भवेत्, अतो न फलजननसामर्थ्यं तेषां भवेत् । आदित्यादीनामुद्गीथादिदृष्ट्योपासनायां तु, कर्मरूपोद्गीथादिदृष्ट्या आदित्यादीनां सिद्धरूपत्वमभिभूय क्रियारूपतोद्भूता भवेदिति, अस्मिन् पक्षे उपास्यस्यादित्यादेः क्रियारूपत्वोद्भवात् फलजननसामर्थ्यं सम्भवति–इति ।

प्रकृतग्रन्थस्य चामुमाशयं एतद्दूषणपरेण 'आदित्यादिभावेनापि दृश्यमानानामुद्गीथादीनां कर्मत्वानपायात्' इति सिद्धान्तगतेन वाक्येन स्वयमेव स्फुटीकरिष्यति ।

**तथाचेयमेवर्गग्निस्सामेत्यत्रेति** । 'इयमेवर्गग्निस्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते' इति वाक्ये इयमेवेति पृथिवी निर्दिश्यते । पृथिव्यग्न्योः ऋक्साम्नोश्च अभेदारोपे आलम्बनं आधाराधेयभावं प्रतिपादयितुं तदेतदेतस्यामित्यादिवाक्यम् । तत्र, ऋक्सामयोः प्रसिद्धयोः आधाराधेयभावः तस्मादृच्यध्यूढमितिवाक्ये प्रतिपादितः । अतः, तदेतदेतस्यामितिवाक्ये ऋक्सामशब्दौ पृथिव्यग्न्योराधाराधेयभावप्रतिपादनपराविति । इदं च, इयमेवेतिवाक्ये पृथिव्यग्न्योरेव ऋक्सामारोपः-इत्यत्र लिङ्गं भवति । आरोप्यवाचकेन हि पदेन अधिष्ठानग्रहणं प्रसिद्धम् । माणवके ह्यग्न्यारोपे अग्निपदेन माणवको गृह्यते । ऋक्सामयोः पृथिव्यग्न्यारोपे तु ऋक्सामपदाभ्यां पृथिव्यग्न्योर्ग्रहणमनुपपन्नं भवेत्–इति भावः ।

अपिच—'लोकेषु पञ्चविधं सामोपासीत' इत्यधिकरणनिर्देशात् लोकेषु सामाध्यसितव्यमिति प्रतीयते। 'एतद्गायत्रं प्राणेषु प्रोतम्' (छा. उ. २।११।१) इति च एतदेव दर्शयति। प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तम् 'आदित्यो ब्रह्मेत्यादेशः' (छा. उ. ३।१९।१) इत्यादिषु। प्रथमनिर्दिष्टाश्च पृथिव्यादयः चरमनिर्दिष्टा हिंकारादयः 'पृथिवी हिंकारः' (छा. २।२।१) इत्यादिश्रुतिषु। अतः अनङ्गेष्वादित्यादिषु अङ्गमतिनिक्षेप इति।

एवं प्राप्ते ब्रूमः—आदित्यादिमतय एव अङ्गेषूद्गीथादिषु क्षिप्येरन्। कुतः? उपपत्तेः। उपपद्यते ह्येवं अपूर्वसंनिकर्षात् आदित्यादिमतिभिः

---

अपि च लोकेषु पञ्चविधं सामोपासीतेति। ननु—लोकेष्विति सप्तम्या लोकानामधिकरणत्वे प्रतीतेऽपि, द्वितीयानिर्देशबलात् साम्नामेव उपास्यता अवगम्यते लोकाधिकरणत्वं तु तस्यैव गुणः, न तु, इदमुपासनं लोकविशेष्यकं सामोपसर्जनमिति सप्तमीनिर्देशात् सिद्ध्यति। न च—उत्तरत्र 'पृथिवी हिङ्कारोऽग्निः प्रस्तावः' इति वाक्येषु सामावयवानां पृथिव्यादिलोकानां च सामानाधिकरण्यनिर्देशात्, पूर्वत्र अधिकरणाधेयभावो नोपास्यत्वेन विवक्षितः, अपि तु, 'लोकान् पञ्चविधं सामोपासीत' इत्येव वाक्यार्थो विवक्षितः, सप्तमी च विषयत्वार्थेति, लोकविशेष्यकमेवेदमुपासनं भवेत्—इति [वाच्यम्] एवमपि, लोकानां प्रकारत्वं साम्नां विशेष्यत्वमिति वैपरीत्यं किमिति न स्वीक्रियते—इति चेत्;

उच्यते—'शुक्तौ रजतत्वप्रत्ययः' 'घटे घटत्वप्रत्ययः' इत्यादिप्रयोगेषु हि विषयतयाधारताप्रतिपादिकायाः सप्तम्या विशेष्यत्वार्थकत्वं दृष्टमिति, इहापि लोकानां सप्तमीनिर्देशात् प्रधानता प्रतीयते—इति तात्पर्यम्।

प्रथमनिर्दिष्टेषु चेति। 'यद्वृत्तयोगः प्राथम्यं इत्याद्युद्देश्यलक्षणम्' इतिन्यायेन प्रथमनिर्दिष्टस्य प्राधान्यमवगम्यते इति भावः।

उपपद्यते ह्येवमिति। अङ्गानङ्गसमभिव्याहृतानां ह्युपासनानां कर्मवीर्यवत्तरत्वफलकतावगम्यते। कर्मणश्च वीर्यवत्तरत्वं तदा भविष्यति, यद्युपासनैः कश्चित् कर्माङ्गेष्वतिशय आहितः स्यात्। अतः उपासनानां कर्माङ्गातिशयाधायकत्वावगमात् तेषामेव उपासनासु प्राधान्यमवगम्यत इति, अनङ्गभूतानामुपसर्जनतैवोपेया—इति भावः।

संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' छा. उ. १।१।१०) इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति ।

भवतु कर्मसमृद्धिफलेष्वेवम्, स्वतन्त्रफलेषु तु कथम् 'य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते' (छा. उ. २।२।३) इत्यादिषु ? तेष्वपि, अधिकृताधिकारात् प्रकृतापूर्वसांनिकर्षेणैव फलकल्पना युक्ता गोदोहनादिनियमवत् ।

---

ननु—'असार्वत्रिकी' इतिसूत्रे उद्गीथाश्रिताप्त्यादिदृष्टिविषयकमेतद्वाक्यमिति व्यवस्थापितम्, अतो लोकेषुपञ्चविधंसामोपासीतेत्यादीनां न कर्मवीर्यवत्तरत्वफलकता, तथा च, कथमङ्गप्रधानता तत्र स्यात्—इत्यभिप्रायेण शङ्कते—भवतुकर्मसमृद्धिफलेष्विति । स्वतन्त्रफलेषु—लोकेषुपञ्चविधंसामोपासीतेत्युपक्रम्य, 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' इत्यादिकं फलं समृद्धयतिरिक्तमाम्नातम्, तादृशफलेषु ।

तेष्वपीति । अयं भावः—असार्वत्रिकीतिसूत्रे सन्निहितोपासनाविषयकमिदंवाक्यमिति अभ्युपगमवादेनोक्तम् । कर्माङ्गसमभिव्याहृतसर्वोपासनाविषयकमिदं वाक्यं इत्यर्थस्य 'तन्निर्धारणानियमः' इत्यधिकरणे दर्शितत्वात्—इति परिहारो यद्यप्यस्ति, अभ्युपेत्य तु ब्रूमः-स्वतन्त्रफलत्वेऽपि प्रयुक्तिलाघवानुसारेण अङ्गेष्वेव लोकादिदृष्टिः कर्तव्या । यदि हि अनङ्गेष्वेवादित्यादिषु अङ्गदृष्टिः प्रक्षिप्येत, तदा आदित्योद्देशेन सामविशिष्टदृष्टिविधानात्, यत्रादित्यस्सन्निहितः तत्रेदमुपासनं कर्तव्यमिति प्राप्नोति । तत्र अविद्यमानस्य साम्न आदित्याभेददृष्टेरनुचितत्वात् सामापि प्रयुज्य एतदभेदो ध्येय इति प्राप्नोति । तथा च प्रयुक्तिगौरवम् । सामोद्देशेनादित्यदृष्टिविधौ तु, यत्र साम क्रतुना प्रयुक्तं स्वप्रयोगान्तर्गतमस्ति तत्रैवोपासनं कर्तव्यमिति, प्राक्सिद्धादित्यदृष्टिमात्रकरणात् प्रयुक्तिलाघवमिति, क्रतावधिकृतस्यैव प्रयुक्तिलाघवानुसारेण उपासनास्वधिकारात्, [1]क्रत्वपूर्वसामानाधिकरण्येनैव लोकसामाद्युपासनानां [2]फलं कल्पनीयम्—इत्यक्षरार्थः ।

---

1. क्रत्वपूर्वेति क्रत्वपूर्वजनकत्वेत्यर्थः ।
2. फलमिति फलजनकत्वमित्यर्थः ।

फलात्मकत्वाच्चादित्यादीनां उद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः। आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु।

अपि च—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. उ. १।१।१) 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' (छा. उ. १।१।१०) इति च उद्गीथमेवोपास्यत्वेनोपक्रम्य आदित्यादिमतीर्विदधाति।

यत्तूक्तं उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति।

तदयुक्तम्। स्वयमेव उपासनस्य कर्मत्वात् फलवत्त्वोपपत्तेः। आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात्।

'तदेतदेतस्यामृच्यध्यूढं साम' इति तु लाक्षणिक एव पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः। लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबन्धेन प्रवर्तते। तत्र, यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा, तथापि, प्रसिद्धयोः ऋक्सामयोः भेदेनानुकीर्तनात् पृथिव्यग्न्योश्च संनिधानात् तयोरेव एष ऋक्सामशब्दप्रयोगः ऋक्सामसंबन्धात् इति निश्चीयते। क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद्राजानमुपसर्पन् न निवारयितुं पार्यते।

---

पूर्वाधिकरणन्यायादपि उद्गीथादिष्वेव आदित्यदृष्टिः कर्तव्या—इत्याह—फलात्मकत्वाच्चेति। अधिकारवाक्यपर्यालोचनयापि उद्गीथस्यैव प्राधान्यमित्याह-अपिचोमित्येतदक्षरमिति।

सिद्धरूपादित्यादिदृष्ट्या उपास्यमाना उद्गीथादयः सिद्धभावं प्राप्नुयुः, ततो न फलजनकतासामर्थ्यं-इतिपूर्वपक्ष्युक्तं अनुवदति—यत्तूक्तमिति। कर्मभूयं भूत्वा—कर्मभावं प्राप्य। 'तदेतदेतस्यामृच्यध्यूढम्' इतिनिर्देशानुपपत्तिं सिद्धान्ते परिहरति—तदेतदेतस्यामिति।

लाक्षणिक एवेति। ननु—एवमत्र पृथिव्यग्न्योः ऋक्सामपदस्य लाक्षणिकत्वोक्त्या गौणत्वं पूर्वपक्षाभिमतमिति भाति। तत् कथम्। न ह्यत्र 'गौणत्वपक्षे सिद्धान्तत्वानुपपत्तिः लाक्षणिकत्वपक्षे सिद्धान्तत्वोपपत्तिः' इति विशेषो वक्तुं शक्यते। यदि वा गौणी वृत्तिः यदि वा लक्षणा, पक्षद्वयेऽपि 'आरोप्यवाचकेन पदेन अधिष्ठानस्य ग्रहणं न त्वधिष्ठानवाचकेन पदेन आरोप्यस्य ग्रहणम्' इति न्यायस्य प्रकृते बाधनीयत्वात्। तद्बाधनं च, पूर्वोपन्यस्तैर्वक्ष्यमाणैश्च न्यायैः

'इयमेवर्क्' इति च यथाक्षरन्यासं ऋच एव पृथिवीत्वमवधारयति। पृथिव्या ह्यृक्त्वे अवधार्यमाणे, इयमृगेवेति अक्षरन्यासः स्यात्। 'य एवं विद्वान् साम गायति' इति च अङ्गाश्रयमेव विज्ञानमुपसंहरति न पृथिव्याद्याश्रयम्।

तथा, 'लोकेषु पञ्चविधं सामोपासीत' इति यद्यपि सप्तमीनिर्दिष्टा लोकाः, तथापि, साम्न्येव तेऽध्यस्येरन्, द्वितीयानिर्देशेन साम्न उपास्य-

---

अङ्गानां प्राधान्येन उपास्यत्वावगमादेव, तत्राधिष्ठानवाचकाभ्यामृक्सामशब्दाभ्यां आरोप्ययोः पृथिव्यग्न्योः ग्रहणमिति। यदि सिद्धान्तपक्षे गौणी वृत्तिराश्रीयते, तदा, पृथिव्यग्निदृष्टिविषयत्वं गुणः, लक्षणाश्रयणे तु, ऋक्सामाध्यस्तत्वं शक्यसम्बन्धः—इति द्वयमप्युपपद्यते। न च-गौणीलक्षणयोरुक्तं सिद्धान्ताभिमतं निमित्तं पूर्ववाक्यस्य इयमेवर्गग्निस्सामेत्यस्य ऋक्सामयोः पृथिव्यग्निदृष्टिपरत्वे सम्भवति, न च तत् पूर्ववाक्यार्थहेतुकथनपरे उत्तरवाक्ये आश्रयितुं युक्तम्, हेतुवाक्यार्थविवेचनदशायां साध्यवाक्यार्थानिर्णयात्-इति वाच्यम्। तथासति पूर्वपक्षिणापि गौणीलक्षणयोः यन्निमित्तं वक्तव्यं ऋक्सामदृष्टिविषत्वं गुणरूपं ऋक्सामाधिष्ठान (त्वरूप) [त्वं शक्य] सम्बन्धात्मकं च हेतुकथनपरे वाक्ये, तदपि, पूर्ववाक्यस्य पृथिव्यग्न्योः ऋक्सामदृष्टिविधिपरत्वे एव सम्भवतीति, तुल्यो दोषः। अत इत्थं परिहारो वक्तव्यः-न ह्यत्र विधिवाक्यस्य हेतुकथनवाक्यानुसारेणैव अर्थो निर्णीयते, न्यायानुसारेणैव अर्थनिर्णयोपपत्तेः। नापि विधिवाक्यार्थसिद्धौ स उपयुज्यते, विधित एव तत्सिद्धेः। परं तु, अभेदे पूर्ववाक्येनोक्ते तत्र हेतुवन्निगदोऽयं आधाराधेयभावालम्बनं बोधयति इति। स परिहारः सिद्धान्तिपूर्वपक्षिणोरुभयोरपि तुल्यः।

अतः, गौण्या वा लक्षणया वा पूर्वपक्षवत्सिद्धान्तिनापि उपपादयितुं शक्यतया, विशिष्य लक्षणाग्रहणं, गौणीवृत्तेः लक्षितलक्षणाया दुर्बलत्वात् वस्तुगतिमनुरुद्ध्य-इति द्रष्टव्यम्।

विधिवाक्यस्वारस्येनापि ऋक्सामयोरेव पृथिव्यग्निदृष्टिः--इत्याह—इयमेवर्गिति चेति। 'य एवं विद्वान् साम गायति' इति क्रतुप्रयोगान्तर्गतगानकाले विद्याया अनुष्ठेयत्वसूचनादपि अङ्गानामुद्देश्यत्वमवगम्यते–इत्याह—य एवं विद्वानिति।

अनङ्गेषु सप्तमीनिर्देशात् तेषामेव प्राधान्यमवगम्यते -इतिपूर्वपक्ष्युक्तं अनुवदति-तथा लोकेष्विति। द्वितीयानिर्देशेन साम्न उपास्यत्वावगमादिति।

त्वावगमात्। सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति। अन्यथा पुनः लोकाः सामात्मनोपासिताः स्युः। एतेन 'एतद्गायत्रं प्राणेषु प्रोतम्' इत्यादि व्याख्यातम्। यत्रापि तुल्यो द्वितीयानिर्देशः 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' (छा. उ. २।९।१) इति, तत्रापि 'समस्तस्य खलु साम्न उपासनं साधु' (छा. उ. २।१।१) 'इति तु पञ्चविधस्य' (छा. उ. २।७।२) 'अथ सप्तविधस्य' (छा. उ २।८।१) इति च साम्न एवोपास्यत्वोपक्रमात् तस्मिन्नेवादित्याद्यध्यासः।

---

यद्यपि 'घटे घटत्वप्रत्ययः' इत्यादिसमभिव्याहारेषु विषयतयाधारतावाचिन्याः सप्तम्याः विशेष्यतापर्यवसानं व्युत्पत्तिसिद्धम्, तथापि, उपास्ते इत्यादिसमभिव्याहारे विषयत्वविवक्षायां द्वितीयैव प्रयुज्यते, न तु सप्तमी। न हि 'राजानमुपास्ते' इति वक्तव्ये राजनि' इति प्रयुज्यते। नापि 'घटं जानाति' इति विवक्षायां 'घटे' इति प्रयुज्यते। अतः, प्रकृते सप्तमीनिर्दिष्टानां लोकानां उपासनाविषयत्वं न प्रतीयते, उपासनायां प्राधान्येनविषयत्वप्रतिपत्तिस्तु दूरापास्ता। अतः, द्वितीयया साम्नामुपास्यत्वे झटित्यवगते, उत्सर्गतः प्राधान्यस्यैव प्रत्ययात्, उत्तरवाक्यगतलोकसामसामानाधिकरण्यनिर्देशानुसारेण सप्तम्याः प्रकृत्यादितृतीयार्थतामुपेत्य 'लोकात्मना सामोपासीत' इति वाक्यार्थो ग्राह्यः, न तु-द्वितीयावगतं स्वारस्येन साम्नां प्राधान्यं परित्यज्य, सप्तम्या क्लेशेन लोकानां प्राधान्यमुपगम्य, 'सामात्मना लोकानुपासीत' इति वाक्यार्थः—ग्राह्यःइति तात्पर्यम्।

तत्रापीति। समस्तस्यखलुसाम्नउपासनंसाध्विति उपक्रमे साम्न एवोपास्यत्वमुपक्षिप्य, लोकेषुपञ्चविधंसामोपासीतेति कानिचिदुपासनानि प्रपञ्च्य, उपसंहृतम्-इतितुपञ्चविधस्येति। पुनरपि 'अथ सप्तविधस्य' इत्युपक्रम्य, कानिचिदुपासनानि दर्शितानि। तथा च, उपक्रमे अवान्तरोपसंहारे पुनरवान्तरोपक्रमे च साम्न एवोपास्यत्वावगमात् तत्प्रपञ्चपरेषु वाक्येषु साम्न एव प्राधान्यविवक्षेति गम्यते। तत्र, साम्नः पञ्चविधत्वं पञ्चभक्तिकत्वम्। भक्तिः-साम्नां भागः। हिङ्कारः प्रस्तावः उद्गीथः प्रतिहारः निधनमिति पञ्चविधत्वम्। उद्गीथभक्तेः ओङ्का[रं] (राकारं) निधनाच्चोपद्रवं पृथक्कृत्य सप्तविधत्वं द्रष्टव्यम्।

एतस्मादेव च साम्न उपास्यत्वावगमात्, 'पृथिवी हिंकारः' इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः।

तस्मात् अनङ्गाश्रया आदित्यादिमतयः अङ्गेषूद्गीथादिषु क्षिप्येरन्—इति सिद्धम् ॥ ६ ॥

६ आसीनाधिकरणम्

## आसीनः संभवात् ॥ ७ ॥

कर्माङ्गसंबद्धेषु तावत् उपासनेषु कर्मतन्त्रत्वात् न आसनादिचिन्ता। नापि सम्यग्दर्शने, वस्तुतन्त्रत्वाद्विज्ञानस्य। इतरेषु तूपासनेषु किं अनियमेन-तिष्ठन् आसीनः शयानो वा प्रवर्तेत, उत नियमेन—आसीन एव-इति चिन्तयति।

तत्र, मानसत्वादुपासनस्य अनियमः शरीरस्थितेः—इत्येवं प्राप्ते—

ब्रवीति—आसीन एवोपासीतेति। कुतः? संभवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणम्, न च तत् गच्छतो धावतो वा संभवति, गत्यादीनां चित्तविक्षेपकत्वात्। तिष्ठतोऽपि, देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति। शयानस्यापि अकस्मादेव निद्रयाऽभि-

---

निर्देशविपर्यय इति। हिङ्कारादीनां सामावयवानां उपास्यत्वेन उद्देश्यतया, प्राथम्येन निर्देश उचितः, स परं सिद्धान्ते नास्तीति निर्देशविपर्ययः प्रसज्यते इति भावः।

तथा च, अङ्गावबद्धोपासनानां ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिसन्दर्भेण विधीयमानानां अङ्गानुसारितया, अङ्गानां यस्मिन् काले चोदना अङ्गेषु यदवस्थानं शरीरस्याम्नातं उत्थानमवस्थानं वा, तथैव उपासनान्यपि कार्याणि—इत्यपि सिध्यति। इयं च अङ्गावबद्धोपासनचिन्ता, ब्रह्मविद्यायां अहंग्रहे प्रतिपादिते तत्प्रसक्तानुप्रसक्त्या प्राप्ता भवति ॥ ६ ॥

इति आदित्यादिमत्यधिकरणम्

इदानीं, पुनरपि ब्रह्मविद्यायामेवासनादिनियमचिन्तां आरभते—

अत्र, सिद्धान्तिना चित्तैकाग्र्यार्थं आसननियमोऽपेक्षित इति वक्तव्यम्। तत् नोपपद्यते, अङ्गावबद्धोपासनेष्वासननियमाभावेऽपि चित्तैकाग्र्यस्य वक्तव्यतया, स्वतन्त्रोपासनेष्वपि तथासम्भवात्—इति पूर्वपक्षिणोऽभिप्रायः।

भूयेत । आसीनस्य तु एवञ्जातीयको भूयान् दोषः सुपरिहर इति, संभवति तस्योपासनम् ॥ ७ ॥

## ध्यानाच्च ॥ ८ ॥

अपिच, ध्यायत्यर्थ एषः—यत् समानप्रत्ययप्रवाहकरणम् । ध्यायतिश्च, प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिषु एकविषयाक्षिप्तचित्तेषु उपचर्यमाणो दृश्यते—'ध्यायति बकः' 'ध्यायति प्रोषितबन्धुः' इति । आसीनश्च अनायासो भवति । तस्मादपि आसीनकर्म उपासनम् ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥

अपि च—'ध्यायतीव पृथिवी' (छा. उ. ७।६।१) इत्यत्र पृथिव्यादिषु अचलत्वमेवापेक्ष्य ध्यायतिवादो भवति, तच्च लिङ्गं उपासनस्यासीनकर्मत्वे ॥ ९ ॥

## स्मरन्ति च ॥ १० ॥

स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम्—'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' (भ. गी. ६।११) इत्यादिना । अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥ १० ॥

---

आसीनस्य त्वेवंजातीयक इति । अङ्गावबद्धोपासनानामङ्गतन्त्रतया तत्रासननियमाभावेऽपि, अगत्या यावत् चित्तैकाग्र्यं सम्भविष्यति तावदेव स्वीक्रियते, स्वतन्त्रोपासनेषु तु तादृशागतिकत्वाभावात् सम्यक् चित्तैकाग्र्यं संपादनीयम्, तत्र आसननियमोऽपेक्षितः । येषां तु व्याध्यादिपीडितानां आसननियमोऽनुष्ठातुमशक्यः, तेषामप्यासननियमः नादर्तव्यः । अपि तु, यावत् चित्तैकाग्र्यं भविष्यति तावदेव यथाकथञ्चित् उपासनं संपादनीयम् । सति सम्भवे, दृढचित्तैकाग्र्याय आसननियमः आदर्तव्यः—इति भावः ॥ ७ ॥

ननु—उपासनं नाम ज्ञानधारा, सा तु चित्तैकाग्र्याभावेपि घटादिषु दृष्टा—इतिशङ्कानिराकरणार्थं सूत्रम्-ध्यानाच्चेति ।

न केवलं ज्ञानधारा उपासनम्, अपि तु, विजातीयप्रत्ययानन्तरिता ज्ञानधारा । अतः ध्येयमात्रविषयकतया चित्तस्यावस्थानं तत्रापेक्षितम्, तत् आसीनस्यैव सम्भवति-इति भावः ॥ ८ ॥

### ७ यत्रैकाग्रताधिकरणम्

दिग्देशकालेषु संशयः—किं अस्ति कश्चिन्नियमो नास्ति वा-इति। प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात् स्यादिहापि कश्चिन्नियम इति यस्य मतिः, तं प्रत्याह–

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालेषु अर्थलक्षण एव नियमः—यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति तत्रैवोपासीत, प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवत् विशेषाश्रवणात्, एकाग्रताया इष्टायाः सर्वत्राविशेषात्।

ननु विशेषमपि केचिदामनन्ति—

'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः।
मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्' (श्वे. उ. २।११)
इति यथेति।

---

ध्यानकाले शरीरस्य निश्चेष्टत्वं चापेक्षितम्, तत् आसीनस्यैव सम्भवति, नान्यस्य–इत्याह-अचलत्वमिति। निश्चेष्टेषु पृथिव्यादिषु ध्यातृत्वोत्प्रेक्षणात् निश्चेष्टतायै अत्यन्तचित्तैकाग्र्यं तत्रापेक्षितम्। अतः आसननियमः सिद्ध्यति ॥ ९ ॥

यद्यपि चित्तैकाग्र्यरूपदृष्टोपकाराय आसननियमः प्राप्तः, तथापि, आसनविशेषनियमः स्मृत्या बोध्यते नियमादृष्टाय ॥ १० ॥

इति आसीनाधिकरणम्

यथा आसननियम उपासनायाम्, एवं दिग्देशकालादिष्वपि नियमः—इति प्रत्यवस्थानात् सङ्गतिः। आरम्भेषु—आरभ्यमाणेषु दर्शपूर्णमासादिकर्मसु। वैदिकत्वाविशेषात् उपासनायामपि प्राच्यादिदिक् प्राचीनप्रवणादिदेशः पूर्वाह्णादिः कालः अपेक्षित इति पूर्वः पक्षः।

प्राचीनप्रवणः-प्राग्भागे निम्नः। शुचौ—गिरिगुहादौ रमणीये अमेध्याद्यशुचितावर्जिते, शर्कराः–सूक्ष्मपाषाणाः, शब्दजलाश्रयादिभिः, वर्जिते इत्यनुषङ्गः। शुचितादिदेशविशेषणानां प्रयोजनमाह—मनोऽनुकूले इति। उक्तविशेषणानि मनःप्रसादसम्पादकानीति भावः। तथा च, यत्र मनः प्रसीदति उपासनायां, स एव

उच्यते–सत्यं अस्त्येवंजातीयको नियमः, सति त्वेतस्मिन् तद्गतेषु विशेषेषु अनियम इति सुहृद्भूत्वा आचार्य आचष्टे। 'मनोनुकूले' इति चैषा श्रुतिः 'यत्रैकाग्रता तत्रैव' इत्येतदेव दर्शयति ॥ ११ ॥

८ आप्रायणाधिकरणम्

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

आवृत्तिः सर्वोपासनेष्वादर्तव्या-इति स्थितं आद्येऽधिकरणे। तत्र, यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तानि अवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेव एषामावृत्तिपरिमाणम्! न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचित् शासितुं शक्यम्, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। यानि पुनः अभ्युदयफलानि, तेष्वेषा चिन्ता—किं कियन्तश्चित्कालं प्रत्ययमावर्त्य उपरमेत् उत यावज्जीवमावर्तयेत्-इति। किं

---

तस्यामुपासनायां अङ्गभूतो देशः। चक्षुपीडनं-मशकादि, तद्युक्ते न तु योजयेत्—इत्यन्वयः। गुहानिवातात्मकं यत् आश्रयणं-आश्रयः तत्र प्रयोजयेत्—कुर्यादुपासनं इत्यर्थः ॥ ११ ॥

इति यत्रैकाग्रताधिकरणम्

यथा आवृत्तौ दिगादिनियमोऽनपेक्षितः, एवं आमरणंकर्तव्येतिनियमोऽपि नापेक्षितः–इति सङ्गतिः।

अनियोज्येति। [1]नियोज्यरहिता ब्रह्मात्मत्वप्रतिपत्तिः यस्योदिता तस्य पुरुषस्य शास्त्राविषयत्वं - शास्त्रार्थेऽधिकारो नास्ति, नियोज्यत्वादेरुपमर्दात्—इति भावः। अभ्युदयफलानीति। अभ्युदयफलेष्वपि यानि कर्माङ्गावबद्धानि, तेष्वपि नेयं चिन्ता, कर्मकालादन्यत्र तेषामसम्भवात्। यान्यपि 'वाचं धेनुमुपासीत' इत्यादीनि स्वतन्त्रप्रतीकोपासनानि, तेष्वपि नेयञ्चिन्ता, [2]ध्येयस्यैव प्राप्यत्वाभावात्, [3]अपि

---

1. नियोज्यरहिता—आत्मनः नियोज्यत्वाधिकृतत्वकर्तृत्वाद्यभावावगाहिनी।
2. ध्येयस्यैवेति एवकारः ध्येयस्य प्राप्यत्वाभावायोगं व्यवच्छिनत्ति।
3. अपित्विति तानीति शेषः।

तावत् प्राप्तम् ? कियन्तश्चित्कालं प्रत्ययमभ्यस्य उत्सृजेत्, आवृत्तिविशिष्टस्य उपासनशब्दार्थस्य कृतत्वात्-इति ।

---

तु अग्निहोत्रादिवदभ्युदयफलानि, तत्र आवृत्त्याधिक्यात् फलभूमा भवति । यानि तु प्रतिपत्तव्यफलविषयाण्युपासनानि तेष्वियं चिन्ता ।

कियन्तश्चित्कालं प्रत्ययमभ्यस्येति । ननु— प्रतिपत्तव्यवस्तुगोचराणि यानि दहरशाण्डिल्याद्युपासनानि, तेषां इहैवोपास्याभेदेनसाक्षात्कारो द्वारम् । [1]तत्र कथं कियन्तश्चित्कालमावृत्तोपासनं सिद्ध्येत् । न च—उपास्याभेदसाक्षात्कारस्य द्वारत्वेऽपि, यदा साक्षात्कारः तदनन्तरमुत्सृजेत्, न त्वाप्रायणमावर्तयेत्-इति वाच्यम् । उपास्यसाक्षात्कारस्य अन्तकाले अपेक्षिततया तदर्थं आप्रायणमावृत्तेरपेक्षितत्वात् । 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः' इति शास्त्रानुसारेण अन्त्यप्रत्ययस्य पारलौकिकफलेषु सर्वत्र अपेक्षितत्वात् । न च—अन्त्यप्रत्ययो यथा अग्निहोत्रफलेषु अदृष्टवशात् भवति एवमुपासनाफलेष्वप्युपपत्तेः न तदर्थमावृत्तिरपेक्षितेति-वाच्यम् । कर्मणां दृष्टेन द्वारेण अन्त्यप्रत्ययाजनकतया तेष्वदृष्टाश्रयणेऽपि, उपासनेषु आवृत्त्यात्मकदृष्टद्वारेणान्त्यप्रत्ययजनकत्वोपपत्तौ अदृष्टकल्पनाया अनुचितत्वात् । श्रूयते च आप्रायणमावृत्तिः कर्तव्यतया 'स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' [2]'अहरहर्वा एवंवित् स्वर्गं लोकमेति' 'आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य स खल्वेवंवर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते' इति । तस्मात् कथं कियन्तश्चित्कालं प्रत्ययमावृत्य विसृजेत्—इति चेत्;

उच्यते—अ[न्त](न्त्य)काले उपासनानां प्रत्ययजननार्थं अदृष्टद्वारकत्वं तावत् अवश्यमङ्गीकर्तव्यम् । येषां तावत्, उपासनया अन्त्यप्रत्ययः सम्पन्नः ततःप्रबलप्रारब्धकर्मान्तरप्रतिबन्धादुपासनाफलप्राप्तिर्नास्ति, तेषां, भवान्तरे उपासनाफलप्राप्तिर्वक्तव्या । तत्र च अन्त्यप्रत्ययः अदृष्टाधीन एव । अपि च—अ[न्त](न्त्य)कालेऽपि

---

1. तत्र—तथा सति ।

2. अहरहर्वेति एवंविदित्यनेन अन्वयं परिमलोक्तं आश्रित्य इदमुदाहृतम् । छान्दोग्यभाष्ये तु स्वर्गलोकमतीत्यनेनान्वय उक्तः । तथापि अयमप्यन्वयो विवक्षितुं शक्य इति भावः ।

**एवं प्राप्ते ब्रूमः—आप्रायणादेवावर्तयेत् प्रत्ययम्, अन्त्यप्रत्ययवशाद-दृष्टफलप्राप्तेः। कर्माण्यपि हि जन्मान्तरोपभोग्यं फलं आरभमाणानि तदनु-रूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति, 'सविज्ञानो भवति सविज्ञान-**

---

येषां प्रबलेन व्याधिना चित्तव्यामोहादिकं प्राप्तं प्रबलवासनान्तरोद्भवात् अन्यगोचरो वा अन्त्यप्रत्ययः, तेषामपि जन्मान्तरे एव उपासनाफलं वक्तव्यमिति, अदृष्टद्वारकत्वे आवश्यके किं आप्रायणमावृत्त्या। न च प्रारब्धादपि सगुणोपासनायाः प्रबलतया उपासकस्य ब्रह्मविद्याफलगोचर एवान्त्यप्रत्यय इति वाच्यम्। तथा सति यदैव सवि-शेषब्रह्मसाक्षात्कारः तदैव शरीरपातप्रसक्त्या, शरीरधारणाय प्रारब्धस्य अवश्यं प्रबलताया वक्तव्यत्वात्। नापि वचनानुसारेण सर्वासूपासनास्वाप्रायणमावृत्तिः प्राप्नोति। अहरहर्वा एवंविदितिवाक्यस्य दहरविद्यागतत्वात्। प्रायणान्तमोङ्कारमभि-ध्यायीतेत्यस्य त्रिमात्रप्रणवोपासनाप्रकरणगतत्वात्। सखल्वेवंवर्तयन्यावदायुषमिति च कर्मणामेवावृत्तिमाप्रायणं प्रतिपादयति। अतः प्रमाणाभावात् आप्रायणमावृत्तिः न प्राप्नोति-इति पूर्वः पक्षः।

अयमत्र सिद्धान्ताभिप्रायः—आमुष्मिकफलानामन्त्यप्रत्ययस्तावदपेक्षितः। तत्र, यत्फलगोचरोऽन्त्यप्रत्ययः तदनन्तरं तदेव फलं प्राप्यत इति तावदुपेयम्। 'तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्' इति श्रुतेः, 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तंतमेवैति कौन्तेय सदा तद्भावभावितः' इति स्मृतेश्च। ततश्च, यस्य अन्तकाले ब्रह्मविषयकप्रत्ययस्सम्पन्नः तेन ब्रह्म प्राप्यमेव। नापि रोगादीनामन्त्यप्रत्ययप्रतिबन्ध-कता, अ[न्त](न्त्य)काले यत्किञ्चित्फलगोचरप्रत्ययावश्यम्भावात्। नापि आप्रायणमा-वृत्तिमतामपि अ[न्त](न्त्य)काले वासनान्तरोद्भवः प्रबलप्रारब्धाधीन इति सम्भावयितुं शक्यम्। सगुणनिष्ठानां साक्षात्कारानन्तरं शरीरसद्भावावगत्या शरीरस्थित्युपयुक्त-प्रारब्धस्य प्राबल्यकल्पनेऽपि, शरीरपातकालेऽपि अन्त्यप्रत्ययप्रतिबन्धकप्रारब्धस्य प्राबल्यकल्पने प्रमाणाभावात्। अपि तु, आप्रायणमनुवृत्तोपासनावासनाया उद्भूत-त्वात् तत्सहकारिणां नित्यनैमित्तिककर्मणां ब्रह्मलोकावाप्तिफलकानां ब्रह्मविद्यायुक्त-तया वीर्यवत्तरत्वाच्च वासनान्तरसहितप्रारब्धस्यापि अभिभवः कल्प्यते। एवं 'स यदास्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वं आक्रमते' इत्यादिषु उपासकस्य एतच्छरीरपातानन्तरमेवार्चिरादिसम्बन्धप्रतिपादनं उपपद्यते। दृष्टं च कर्मविपाक-

मेवानूत्क्रामति' (बृ. उ. ४ ४।२) 'यच्चित्तस्तेनैष प्राणमायाति, प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' (प्र. उ. ३।१०) इति चैवमादिश्रुतिभ्यः, तृणजलूकानिदर्शनाच्च। प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकालभावि भावनाविज्ञानं अपेक्षेरन्। तस्मात् ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययाः तेष्वाप्रायणादावृत्तिः।

---

ग्रन्थोक्तानां प्रायश्चित्तानां प्रारब्धादिभ्यः प्राबल्यम्। ततश्च, यस्य आप्रायणमावृत्तिः तस्य अ[न्त](न्त्य)काले ब्रह्मसाक्षात्कारस्य, ततः अर्चिरादिपर्वणा ब्रह्मप्राप्तेश्च अवश्यंभावात्, अ[न्त](न्त्य)कालसाक्षात्कारोपयोगिदृढसंस्कारसिद्धये चित्तैकाग्र्यसमयेषु आप्रायणमावृत्तिरपेक्षिता। तथा च, 'सदा तद्भावभावितः' 'तस्मात् सर्वेषु कालेषु मामनुस्मर' इति च स्मृतिलिङ्गमप्युपपद्यते। अहरहर्वा एवंविदिति प्रायणान्तमोङ्कारमभिध्यायीतेति च उपासनाविशेषप्रकरणगतमपि न्यायप्राप्तार्थानुवादकं सत् सर्वसाधारणं लिङ्गं भवत्येव। 'स खल्वेवं वर्तयन्' इत्यपि न केवलकर्मणामेवावृत्तिं प्रतिपादयति, ब्रह्मलोकापुनरावृत्तेः कर्मभ्योऽसम्भवात्। 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य' इति सर्वेन्द्रियाणामात्मविषयकनिरोधस्य उपासनां विना अन्यत्रानुपयुक्तत्वात्। अतः, इदं वाक्यं उपासनासहितानामेव कर्मणां आवृत्तिं विदधाति।

सविज्ञानो भवति—मरणकाले फलविषयकविज्ञानसहितो भवति। सविज्ञानं—विज्ञानविषयीकृतमेव फलं अन्ववक्रामति-प्राप्नोति। यच्चित्तः—यत्फलविषयकं चित्तं अस्य तेन-चित्तविषयीकृतेन फलेन सह प्राणमायाति—प्राणप्रधानो भवति, प्राणः तेजसा—उदानेन युक्तः सह आत्मना—स्वेन जीवं यथासङ्कल्पितं लोकं नयति, 'अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापम्' इति वाक्ये उदानस्य फलप्रापकत्वश्रवणात्, 'तेजो ह वा उदानः' इति तेजःपदस्य उदाने प्रयोगाच्च, 'तेजसा-उदानेन' इति व्याख्यातम्। यथा तृणजलूका तृणान्तगता तृणान्तरप्राप्तौ उभयतृणसम्बद्धा भवति, एवं जीवः उत्क्रान्तिकाले एतच्छरीरसम्बद्ध एव अन्त्यप्रत्ययेन भाविशरीरमपि विषयतया स्पृशति—इति, 'तद्यथा तृणजलायुका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मा इदंशरीरंनिहत्याविद्यांगमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति' इतिश्रुतितात्पर्यम्।

प्रत्ययास्त्वेते—उपासनारूपाः, प्रायणकालभावि भावनाविज्ञानं—भावना दृढसंस्कारः तज्जन्यं विज्ञानम्। प्रतिपत्तव्यफलभावनात्मकाः—भावनाद्वारकाः। अनेन

तथाच श्रुतिः 'स यावत्क्रतुरस्माल्लोकात्प्रैति' (श. ब्रा. १०।६।३।१) इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति।

स्मृतिरपि—'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तंतमेवैति कौन्तेय सदा तद्भावभावितः' (भ. गी. ८।६) इति।

'प्रयाणकाले मनसाऽचलेन' (भ. गी. ८।१०) इति च। 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत' (छा. उ. ३।१७।६) इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति॥ १२॥

९ तदधिगमाधिकरणम्

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ १३॥

गतस्तृतीयशेषः। अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते।

---

विशेषणेन—येषूपासनेषु ध्येयमन्यत् प्राप्यं च फलं अन्यदेव यथा पञ्चाग्न्यादिषु तत्र दृष्टविधया अ[न्त](न्त्य)काले फलप्राप्त्याधायकत्वासम्भवात् आप्रायणमावृत्तिर्नापेक्षिता, अग्निहोत्रादिकर्मवत् अदृष्टसामर्थ्यादेवान्त्यप्रत्ययाक्षेपकत्वात्—इति सूचयति।

'स यावत्क्रतुरस्माल्लोकात् प्रैति—यावद्विषयकोपासनाविशिष्टः प्रैति, तावद्विभूतिमानयं भवति। अत्र यावत्क्रतुःप्रैतीति प्रायणकालेऽप्युपासनावैशिष्ट्यप्रतिपादनात् आप्रायणमनुवृत्तिस्सूच्यते। एतत् त्रयम्—'अच्युतमस्यक्षितमसि प्राणसंशितमसि' इति मन्त्रत्रयं[प्रतिपद्येत-]उच्चारयेत्-इत्यत्र च, प्रायणकाले उपासकस्य मन्त्रत्रयोच्चारणकर्तव्यताप्रतिपादनात्, उपासकानां प्रायणकालेऽपि कर्तव्यशेषो वर्तेत इति द्योतयति, तदेतत् अन्यार्थदर्शनविधया प्रायणकालेऽपि प्रत्ययावृत्तिं सूचयति॥ १२॥

**इति आप्रायणाधिकरणम्**

गतस्तृतीयशेष इति। 'आवृत्तिरसकृदुपदेशात्' इत्यारभ्य 'आप्रायणात्तत्रापि हि दृष्टम्' इत्यन्तैरधिकरणैः 'परमात्मप्रत्ययः सविशेषगोचर एकाग्रचित्तेन आप्रायणमावर्तनीयः, निर्विशेषगोचरस्तु आतत्त्वसाक्षात्कारम्' इति निरूपितोऽर्थः साधनतया तृतीयान्तर्गतियोग्योऽपि, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'

**ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते न क्षीयते वा इति संशयः। किं तावत् प्राप्तम्? फलार्थत्वात् कर्मणः फलमदत्त्वा न सम्भाव्यते क्षयः। फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता। यदि तत् अन्तरेणैव फलोपभोगं अपवृज्येत, श्रुतिः कदर्थिता स्यात्। स्मरन्ति च 'न हि कर्म क्षीयते' (गौ. सू. १९।५) इति। नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति। नैष दोषः। प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेः गृहदाहेष्ट्यादिवत्।**

**अपिच-प्रायश्चित्तानां दोषसंयोगेन विधानात् भवेदपि दोषक्षपणार्थता; न त्वेवं ब्रह्मविद्यायां विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्म-**

---

इति परमात्मनः प्रियतया तद्विषयकप्रत्ययस्य इष्टत्वेन फलान्तर्गतिरपि विद्यते—इति द्योतयितुं फलाध्याये सम्बद्धः—इति भावः।

इह, सविशेषनिर्विशेषविद्ययोः फलभूतः पापक्षयः सहैव विचार्यते। सविशेषविद्यायां च अस्य प्रथमभाव इति, तमेव प्रथमं निरूपयति।

**प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेरिति।** 'पापिना प्रायश्चित्तं कार्यम्' इत्येवंविधेषु वाक्येषु पापं अधिकारिविशेषणं निवर्तनीयत्वाभिप्रायेण नोपादीयते, येन तन्निवृत्तिः प्रायश्चित्तफलं भवेत्, 'नाभुक्तं क्षीयते कर्म' इति भोगं विना कर्मक्षयासम्भवात्। अपि तु, यथा 'यस्याहिताग्नेरग्निर्गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति गृहदाहो निमित्ततया अधिकारिविशेषणं एवं पापम्-इत्यर्थः।

ननु—विधेयस्य प्रायश्चित्तस्य फलापेक्षायां अधिकारिविशेषणतयोपात्तस्य पापस्य निवृत्तिरेव योग्यतया फलं कल्प्यते। अतः प्रायश्चित्तवाक्येषु पापोपादानं स्वनिवृत्तिफलद्योतनार्थमेव, उपस्थितपापनिवृत्तिं फलं परित्यज्य प्रायश्चित्तानां फलान्तरकल्पने प्रमाणाभावात्। गृहदाहेष्ट्यादौ उपात्तस्य गृहदाहस्य फलाकाङ्क्षापूरकत्वासामर्थ्यात्[1], अगत्या तत्र तस्य निमित्ततैव परिकल्प्यते। एवञ्च नाभुक्तमितिवाक्ये 'अकृतप्रायश्चित्तं कर्म' इति विवक्षणीयम्। एवं, विद्याया अपि कर्मविरोधित्वस्य शास्त्रेण प्रतिपादनात् 'विद्यारहितपुरुषगतम्' इत्यपि कर्मविशेषणं

---

1. असामर्थ्यादिति गृहदाहस्य निष्पन्नत्वेन निष्पादयितुमशक्यत्वात्, ध्वंसस्येव निर्वर्तयितुमप्यशक्यत्वात् इति भावः।

विदः कर्मक्षये तत्फलस्य अवश्यं भोक्तव्यत्वात् अनिर्मोक्षः स्यात् । नेत्युच्यते । देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति । तस्मात् न ब्रह्माधिगमे दुरितनिवृत्तिरिति ।

एवं प्राप्ते ब्रूमः—तदधिगमे—ब्रह्माधिगमे सति उत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः—उत्तरस्याश्लेषः पूर्वस्य विनाशः । कस्मात्? तद्व्यपदेशात् । तथा हि, ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्य आगामिनो दुरितस्य अनभिसंबन्धं विदुषो व्यपदिशति 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छा. उ. ४।१४।३) इति । तथा, विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा. उ. ५।२४।३) इति । अयमपरः कर्मक्षयव्यपदेशो भवति 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. उ. २।२।८) इति ।

यदुक्तं अनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति ।

नैष दोषः, न हि वयं कर्मणः फलदायिनीं शक्तिं अवजानीमहे, विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यते-इति वदामः ।

---

नाभुक्तमितिवाक्ये विवक्षणीयमेव-इत्याशङ्क्याह—अपि चेति । 'नैवं ब्रह्मविद्यायां विधानमस्ति' इति निर्विशेषविद्याभिप्रायम् । ततश्च, निर्विशेषविद्याया दोषसंयोगेन विधानाभावात् न तन्निवृत्तिः प्रायश्चित्तवत् फलत्वेन वक्तुं शक्या । सविशेषविद्यायां तु यद्यपि विधानमस्ति, तथापि दोषनिर्घातार्थत्वमर्थवादैरवगन्तव्यम् न च ब्रह्मप्राप्तिफलेन निराकाङ्क्षायां तस्यां आर्थवादिकं फलं नाभुक्तमितिवचनविरुद्धं कल्पयितुं युक्तं इति भावः ।

देशकालनिमित्तापेक्ष इति । यथा, सत्स्वप्यन्येषु भोक्तव्येषु कर्मसु कस्यचित् कर्मणः वृत्त्युद्भवात् तत्फलं कालविशेषे प्राप्यते, एवं ब्रह्मविद्या यदा उद्भूता भविष्यति तदा तस्या अपि फलप्रदातृत्वं भविष्यति—इति पूर्वपक्षिणोऽभिप्रायः ।

अयमपरः—निर्विशेषविद्याविषयः-इति यावत् ।

शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते न प्रतिबन्धाप्रतिबन्धयोरपि । 'न हि कर्म क्षीयते' इत्येतदपि स्मरणं औत्सर्गिकम्–'न भोगादृते कर्म क्षीयते तदर्थत्वात्' इति । इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः, 'सर्वं पाप्मानं तरति' 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यादिश्रुतिस्मृतिभ्यः ।

यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति ।

तदसत् । दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः ।

यत्पुनरेतदुक्तं न प्रायश्चित्तवत् दोषक्षयोद्देशेन विद्याविधानमस्तीति ।

अत्र ब्रूमः—सगुणासु तावत् विद्यासु विद्यत एव विधानम् । तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्च अविवक्षाकारणं नास्ति, इत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिः तासां फलमिति निश्चीयते । निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, तथापि, अकर्त्रात्मत्वबोधात् कर्मप्रदाहसिद्धिः ।

अश्लेष इति च, आगामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मवित् इति दर्शयति । अतिक्रान्तेषु तु, यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेद इव, तथापि, विद्यासामर्थ्यात् मिथ्याज्ञाननिवृत्तेः तान्यपि प्रविलीयन्त

---

**सगुणासु तावद्विद्यास्विति ।** न च विहितायामपि तस्यां निराकाङ्क्षत्वात् आर्थवादिकफलकल्पनानुपपत्तिरिति वाच्यम् । सविशेषविद्यासु ब्रह्मप्राप्तिरपि अर्थवादत एव कल्प्या, तथा च, फलाकाङ्क्षायां यद्यत् अर्थवादेभ्यः फलत्वयोग्यमुपस्थितं तस्य सर्वस्य फलत्वं कल्प्यत इति, कर्मक्षयोऽपि तत्र फलं भविष्यतीति भावः ।

**यद्यपि विधानं नास्तीति ।** अविधेयस्यापि ज्ञानस्य यथा वाक्यशेषानुसारेण मोक्षः फलत्वेनावगम्यते एवं कर्मक्षयोऽपि फलत्वेनावगन्तुं शक्यत एव-इति परिहारः सम्भवत्येव । प्रकारान्तरेणाप्याह–**तथापीति ।** ब्रह्मज्ञानेन मूलभूतायामविद्यायां निवर्तितायां तन्मूलानां कृत्स्नानामपि सांसारिकधर्माणां निवृत्तेः कर्मापि नष्टं भवतीति भावः ।

इत्याह विनाशइति। पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेषु 'अकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यत्काले' इति ब्रह्मविदवगच्छति।

एवमेव च मोक्ष उपपद्यते। अन्यथा हि, अनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात्।

न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भवितुमर्हति, अनित्यत्वप्रसङ्गात्, परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य।

---

अश्लेष इति चेति। ननु-निर्विशेषविद्यायां यदा आत्मतत्त्वसाक्षात्कारः सम्पन्नः तदा, जीवत्यपि विदुषि साक्षात्कारप्राचीनानां कर्मणां नाशः तदनन्तरभाविनामश्लेषो वक्तव्यः; तन्नोपपद्यते। न हि कृतब्रह्मसाक्षात्कारस्य सर्वज्ञो विरक्तस्य पापे प्रवृत्तिः सम्भवति, येन, कृतेऽपि तस्मिन् विदुषि तस्य फलजननसामर्थ्यानुत्पत्तिरूपोऽश्लेषो भवेत्। सविशेषविदस्तु फलारम्भः शरीरपातावसर इति अन्त्यप्रत्ययसमये प्राचीनानां पापानां नाशः तदनन्तरभाविनामश्लेषो वक्तव्यः, न च प्रायणानन्तरं तस्य पापप्रसक्तिरस्ति, येन तदश्लेषः फलं भवेत्-इति चेत्,

उच्यते-निर्विशेषविदस्तावत् जीवद्दशायां न बुद्धिपूर्वं पापे प्रवृत्तिः सम्भवति, [अपि तु] प्रबलप्रारब्धानुसारेण प्रमादा[त् प्र](दपि तत्प्र)वृत्तिस्सम्भवति, 'इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः। ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम-प्राप्ताः' इति मन्त्रानुसारेण पुत्रादिपापस्यापि तस्मिन् प्रसक्तिरस्ति, तस्य सर्वस्यापि अश्लेषो 'न लिप्यते कर्मणा पापकेन' इतिश्रुतेर्विषयो भविष्यति; सविशेषविदि तु प्रयाते[यः]अन्यकृतपापसंश्लेषः, तदभावः 'तद्यथा पुष्करपलाशे' इति वाक्यस्य विषयो भविष्यतीति, न काचिदनुपपत्तिः।

यद्यपि पापक्षयोऽर्थवादेभ्योऽवगम्यते, तथापि तस्य ब्रह्मप्राप्तिरूपप्रधानफलापे-[क्षित](क्ष)त्वात् तद्विवक्षा अवश्यं वक्तव्या-इत्याह-एवमेव चेति। कर्मफलस्यैहिकत्वनियमाभावात् प्रतिबन्धकाभावे सति देशकालानुसारेण तत् भवतीति वक्तुं युक्तम्, विद्याफलं तु ब्रह्मापरोक्ष्यसमानकालं पुनरावृत्तिरहितमिति वक्तव्यम्, तत् प्रतिबन्धकीभूतपापनिवृत्तिं विना नोपपद्यते-इत्यभिप्रेत्याह-[न च देशकालनिमित्तेति](अनित्यत्वप्रसङ्गादिति) ॥ १३ ॥

इति तदधिगमाधिकरणम्

तस्मात् ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥ १३ ॥

१० इतरासंश्लेषाधिकरणम्

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्य अश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशात् निरूपितौ, धर्मस्य पुनः शास्त्रीयत्वात् शास्त्रीयेण ज्ञानेन अविरोधः–इत्याशङ्क्य, तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते।

इतरस्यापि-पुण्यस्य कर्मणः एवं-अघवत् असंश्लेषः विनाशश्च ज्ञानवतो भवतः। कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्, 'उभे उ हैवैष एते तरति' (बृ. उ. ४।४.२२) इत्यादिश्रुतिषु च दुष्कृतवत् सुकृतस्यापि प्रणाशव्यपदेशात्, अकर्तात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात्, 'क्षीयन्ते चास्य कर्माणि' (मु. उ. २.२।८) इति च अविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दो दृश्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्, ज्ञानफलापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैतं सेतुमहोरात्रे तरतः' (छा. उ. ८.४.१) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य "सर्वे पाप्मानोऽतो निवर्तन्ते" इति अविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्।

---

अतिदेशनिवर्त्यां विशेषाशङ्कां आह—धर्मस्य पुनरिति। अपि च-विदुषि धर्माश्लेषवचनस्य विषयो न लभ्यते, निर्विशेषविदः तत्राधिकाराभावात्। न च अधिकाराभावेऽपि पुण्यमपि कृतं फलं जनयितुं समर्थम्। सविशेषविदस्तु प्रायणकाले एवाश्लेषो वक्तव्यः, न च तदा पुण्यं प्रसक्तं यस्याश्लेषः स्यात्–इति पूर्वः पक्षः।

सह दुष्कृतेन सुकृतमप्यनुक्रम्येति। "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वेपाप्मानोऽतो निवर्तन्ते' इति हि श्रूयते। न च अश्लेषस्य विषयासम्भवः, स्वस्याधिकाराभावेऽपि तदुद्देशेन पुत्रादिभिः कृतं यत् तटाकप्रतिष्ठादिकं तत्फल तत्र प्रसक्तमिति तस्याश्लेषो भविष्यति ॥१४॥

इति इतरासंश्लेषाधिकरणम्

पाते त्विति तुशब्दः अवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेः अवश्यंभाविनी विदुषः शरीरपाते मुक्तिः-इत्यवधारयति ॥ १४ ॥

११ अनारब्धाधिकरणम्

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वयोरधिकरणयोः ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशः अवधारितः। स किं अविशेषेण—आरब्धकार्ययोरनारब्धकार्ययोश्च भवति उत विशेषेण—अनारब्धकार्ययोरेव-इति विचार्यते।

तत्र 'उभे उ हैवैष एते तरति' (बृ उ. ४ ४।२२) इत्येवमादिश्रुतिष्वविशेपश्रवणात् अविशेषेणैव क्षयः-इत्येवं प्राप्ते।

प्रत्याह—अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे-जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते सुकृतदुष्कृते

---

अधिकरणद्वयेन उत्सृष्टस्य कर्मनाशस्य, प्रारब्धे अपवादः क्रियते—इति सङ्गतिं सूचयितुं वृत्तं कीर्तयति—पूर्वयोरिति।

ननु–तस्यतावदेवचिरमिति श्रुत्या शरीरपातावधिप्रतिपादनात् शरीरधारणोपयुक्तप्रारब्धकर्मव्यतिरिक्तविषयमेव 'उभे उ हैवैषः' इत्यादिवचनं भविष्यति–इति चेत्;

न। निर्विशेषविद्यया ह्युपादानभूताज्ञाननाशे, किञ्चिदवशिष्यत इति वक्तुं न शक्यते, निरुपादानकार्यस्थित्ययोगाद्। अतो ब्रह्मसाक्षात्कारानन्तरं प्रारब्धमवशिष्यत इति वक्तुं न शक्यते। तस्यतावदेवचिरमितिवाक्यस्य निर्विशेषविद्याप्रकरणगतत्वेन, सविशेषविद्यागतपुण्यपापासम्बन्धवचनसङ्कोचकतेतिशङ्कैव नास्ति। (इति)। तद्वचनं तु, तस्य—विदुषः तावदेव चिरं-विलम्बः, यावत् अस्मात् शरीरात् न विमोक्ष्यते—इति प्रतिपाद[यत्](यितुं), 'शरीरपातानन्तरं विलम्बो नास्ति' इत्येतावन्मात्रे एवकारार्थे पर्यवस्यति, न तु 'तावत्पर्यन्तं विलम्बः' इत्यपि प्रति–पादयति-इति पूर्वः पक्षः।

निर्विशेषविद्यानिष्ठानां प्रजापतीन्द्रप्रभृतीनां सविशेषविदामश्वपतिकेकयप्रभृतीनां च शरीरधारणस्य श्रुत्या अवगमेन विद्याफले प्रारब्धस्य प्रतिबन्धकता अवश्यं कल्पनीया। तत्र, निर्विशेषविद्यायाः अविद्यानिवर्तकत्वस्वाभाव्यात् आवरण-

ज्ञानाधिगमात् क्षीयेते, न त्वारब्धकार्ये सामिभुक्तफले, याभ्यां एतत् ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६।१४।२) इति शरीरपातावधिकरणात् क्षेमप्राप्तेः। इतरथा हि-ज्ञानादशेषकर्मक्षये सति, स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत, तत्र शरीरपातप्रतीक्षां नाचक्षीत।

ननु—वस्तुबलेनैव अयमकर्त्रात्मावबोधः कर्माणि क्षपयन् कथं कानिचित् क्षपयेत् कानिचिच्चोपेक्षेत। न हि समानेऽग्निबीजसंपर्के केषांचिद्बीजशक्तिः क्षीयते केषांचिन्नक्षीयत इति शक्यमङ्गीकर्तुम्-इति।

उच्यते—न तावत् अनाश्रित्य आरब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्यान्तरालेप्रतिबन्धासंभवात् भवति वेगक्षयप्रतिपालनम्। अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति। बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कंचित्कालमनुवर्तत एव।

अपिच नैवात्र विवदितव्यम्—ब्रह्मविदा कंचित्कालं शरीरं ध्रियते, न वा ध्रियते-इति। कथं हि एकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं च अपरेण प्रतिक्षेप्तुं शक्येत। श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेन एतदेव निरुच्यते।

---

शक्त्यंशेन अविद्यायां निवर्तितायामपि विक्षेपशक्त्यंशेन प्रारब्धोपादानांशोऽनुवर्तत इति कल्प्यते। सविशेषविदां तु शरीरपातावसर एव फलारम्भः।

न च--'यावदधिकारमवस्थितिराधिकारिकाणाम्' इत्यधिकरणे एव प्रारब्धस्य प्रतिबन्धकता दर्शिता, किमर्थमिदमधिकरणम्-इति वाच्यम्। तत्र हि—प्रारब्धस्य प्रतिबन्धकतामुपेत्यैव 'तस्य अनेकशरीरग्रहणोपयोगिता नास्ति' इति शङ्कायां 'वसिष्ठादीनामनेकशरीरदर्शनात् प्रारब्धस्यानेकशरीरानुयायितास्ति'—इति प्रतिपादितमिति न तेन अस्य पौनरुक्त्यम।

तथा च, तस्यतावदेवचिरमित्यपिवचनं प्रारब्धस्य प्रतिबन्धकतां सूचयत् स्वरसं भवति—इति सिद्धान्ताभिप्रायः ॥ १५ ॥

इति अनारब्धाधिकरणम्

तस्मात् अनारब्धकार्ययोरेव सुकृतदुष्कृतयोः विद्यासामर्थ्यात् क्षय इति निर्णयः ॥ १५ ॥

१२ अग्निहोत्राद्यधिकरणम्

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः, सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति । तुशब्द आशङ्कामपनुदति । यन्नित्यं कर्म वैदिकमग्निहोत्रादि तत् तत्कार्यायैव भवति, ज्ञानस्य यत् कार्यं तदेव अस्यापि कार्यमित्यर्थः । कुतः ? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृ. उ. ४।४।२२) इत्यादिदर्शनात् ।

ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः ।

नैष दोषः । ज्वरमरणकार्ययोरपि दधिविषयोः गुडमन्त्रसंयुक्तयोः तृप्तिपुष्टिकार्यदर्शनात् । तद्वत् कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः ।

नन्वनारभ्यो मोक्षः, कथमस्य कर्मकार्यत्वमुच्यते ।

---

विद्यया प्रारब्धव्यतिरिक्तपुण्यपापयोर्नाशः प्रतिपादितः । तत्र, पुण्यस्य प्रारब्धव्यतिरिक्तस्यापि विद्योपयोगिनो विद्यया नाशो नास्तीति प्रतिपादनार्थं एतदधिकरणम् ।

अयमत्र पूर्वपक्षाभिप्रायः—निर्विशेषविद्यायां कर्मणामुपयोगो वक्तुं न शक्यते, कर्मविरोधिन्या विद्यायाः कर्माजन्यत्वात् । तथा च 'तमेतं वेदानुवचनेन' इत्यादि वचनं वर्तमानापदेशत्वात् अर्थवादो भविष्यति । नापि सविशेषविद्यायां कर्मोपयोगप्रतिपादकं किञ्चित् स्पष्टं वचनमस्ति । अतो नित्यनैमित्तिककर्मणामपि विद्यया विनाशः—इति ।

सिद्धान्तस्तु-काष्ठजातीयविरोधिनोऽप्यग्नेः काष्ठादुत्पत्तिदर्शनात्, सति प्रमाणे विरोधिन्या अपि विद्यायाः कर्मभ्य उत्पत्तौ नानुपपत्तिः । न च तमेतमितिवाक्यस्य अर्थवत्त्वसम्भवे अ[र्थ](नु)वादत्वं कल्पयितुं न्याय्यम् । तथा च, विद्योद्देशेन कृतानां अग्निहोत्रादीनां परंपरया विद्याकार्योपयोगित्वात्, न तेषां इतरकर्मवत् विद्याविनाश्यत्वं सम्भवति । नापि सविशेषविद्यायां कर्मणामनुपयोग [1]इति । 'सख-

---

1. इत्यपिनेत्यन्वयः

नैष दोषः। आरादुपकारकत्वात् कर्मणः। ज्ञानस्यैव हि प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते। अतएव च अतिक्रान्तविषयमेतत् कार्यकरत्वाभिधानम्। न हि ब्रह्मविद आगाम्यग्निहोत्रादि सम्भवति। अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवति आगाम्यप्यग्निहोत्रादि। तस्यापि निरभिसंधिनः कार्यान्तराभावात् विद्यासंगत्युपपत्तिः ॥ १६ ॥

किंविषयं पुनः इदमश्लेषविनाशवचनम्? किंविषयं वा अदो विनियोगवचनं एकेषां शाखिनाम् 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। अत उत्तरं पठति—

---

स्वेवं वर्तयन्' इति वाक्यस्य आत्मनिसर्वेन्द्रियाणिसम्प्रतिष्ठाप्येतिसमभिव्याहारानुसारेण, ब्रह्मलोकप्राप्तिद्वारा अपुनरावृत्तिप्रतिपादनेन च, विद्यासहितकर्मानुष्ठानपरत्वावगमात्। न च तत्र कर्मणामुपयोगप्रकारोऽयमिति निरूपयितुं न शक्यत इति वाच्यम्। आरब्धायामुपासनायामाप्रायणमनुवर्तनीयायां प्रतिबन्धकपापसम्भवेन तन्निराकरणद्वारा विद्यास्वरूपोपयोगसम्भवात्। तथा च श्रुतिः—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।' तत् उभयं सह—एकस्मिन् काले, ज्ञात्वा अनुतिष्ठति यः। तदुभयं किम्-इत्यपेक्षायां विद्यांचाविद्यांचेत्युक्तम्। विद्या-सविशेषविषया, अविद्या—कर्माणि। निर्विशेषविद्यायां कर्मसाहित्यासम्भवात् सविशेषविद्याग्रहणम्। सः अविद्यया—कर्मणा मृत्युं-पापं विद्यानुवृत्तिप्रतिबन्धकीभूतं तीर्त्वा—नाशयित्वा आप्रायणमनुवृत्तया विद्यया अमृतं—कैवल्यं क्रमेणाश्नुते। तथा च स्मृतिः—'तपो विद्या च विप्रस्य निश्श्रेयसकरं परम्। तपसा कल्मषं हन्ति विद्ययामृतमश्नुते॥' इति ॥ १६ ॥

ननु—विद्योत्पत्तेः प्राचीनानि यानि नित्यनैमित्तिककर्माणि, तेषां विद्योत्पत्तावुपयोगः, विविदिषार्थत्वात्; यानि तु काम्यानि अभुक्तफलानि तेषां विद्योत्पत्त्या विनाशः; भुक्तफलानि तु स्वत एव नष्टानि; प्रारब्धं तु भोगैकनाश्यम्—इति, विद्योत्पत्तेः प्राग्भाविनां कर्मणां सुहृद्द्विषत्संक्रमणं नोपपद्यते। विद्यानन्तरभाविनां तु अश्लेष एव। अतः 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यस्य विषयो नोपपद्यते। न च येषामश्लेषविनाशौ तद्विषयमिद संक्रमणं भविष्यतीति वाच्यम्। दायदृष्टान्तेन ह्येतदवगम्यते—यदा दायस्य पुत्रेषु

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतः—अग्निहोत्रादेर्नित्यात्कर्मणः अन्यापि ह्यस्ति साधुकृत्या, या फलमभिसंधाय क्रियते, तस्या एष विनियोग उक्त एकेषां शाखिनाम् 'सुहृदः साधुकृत्यामुपयन्ति' इति । तस्या एव चेदं अघवदश्लेषविनाश-निरूपणं इतरस्याप्येवमसंश्लेष इति । तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिः उभयोरपि जैमिनिबादरायणयोरा-चार्ययोः ॥ १७ ॥

१३ यदेवाधिकरणम्

## यदेव विद्ययेति हि ॥ १८ ॥

समधिगतमेतदनन्तराधिकरणे—नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतं उपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सह एककार्यं भवति-इति । तत्र, अग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति ।

---

संक्रमणं तदा पुण्यपापयोस्सुहृद्द्विषत्संक्रमणम् । तत्र च, यद्यपि सविशेषफलस्य प्रायणकालभावित्वात् तदानीं विनष्टयोः पुण्यपापयोः दायवत् संक्रमणं भवतु नाम । निर्विशेषविद्याफलं तु जीवत एव साक्षात्कारसमानकालमिति, तदानीं विदुषस्सका-शाद्विनष्टयोः दायसंक्रमणपर्यन्तं निराधारस्थित्ययोगेन स्वरूपत एव नष्टतया, कथं दायसंक्रमणकाले सुहृद्द्विषत्संक्रमणं भवेत्—इत्यभिप्रायेण शङ्कते—किं विषयं पुनरिति ।

अयं भावः-ययोः पुण्यपापयोः अश्लेषविनाशौ तयोरेव सुहृद्द्विषत्संक्रम-णम्, अपेक्षानुसारात्-इति हानौतूपायनशब्दशेषत्वादित्यत्र निरूपितम् । अतो दायदृष्टान्तेन एतद्विवक्षितम्—यथा विदुषाऽनुपभोग्यस्य स्थितस्य दायस्य अन्यैरुप-भोगः, एवं विद्यामाहात्म्यात् विदुषाऽनुपभोग्ययोः पुण्यपापयोः सुहृद्द्विषद्भोगः-इति, न तु संक्रमणेऽपि तुल्यकालत्वम्, अतो नानुपपत्तिः—इति ॥ १७ ॥

इति अग्निहोत्राद्यधिकरणम्

येषां कर्मणां विद्योपयोग उक्तः तेषामेव विद्यावैशिष्ट्यचिन्ता—इति सङ्गतिं द्योतयन् वृत्तं कीर्तयति—समधिगतमिति ।

'य एवं विद्वान् यजति' 'य एवं विद्वान् जुहोति' 'य एवं विद्वाञ्छंसति' 'य एवं विद्वान् उद्गायति' 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं' (छा. उ. ४।१७-१०) 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा. उ. १।१।१०) इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति, केवलमप्यस्ति।

तत्रेदं विचार्यते—

किं विद्यासंयुक्तमेव अग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते न केवलम्? उत विद्यासंयुक्तं केवलं चाविशेषेण? इति। कुतः संशयः? 'तमेतं—आत्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनां अविशेषेण आत्मवेदनाङ्गत्वेन श्रवणात्। विद्यासंयुक्तस्य चाग्निहोत्रादेः विशिष्टत्वावगमात्।

किं तावत्प्राप्तं? विद्यासंयुक्तमेव अग्निहोत्रादि कर्म आत्मविद्याशेषत्वं प्रतिपद्यते न विद्याहीनम्। विद्योपेतस्य विशिष्टत्वावगमात् विद्याविहीनात्। 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवंविद्वान्' (बृ. उ. १।३।५)

---

विद्यासंयुक्तमेवाग्निहोत्रादीति। ननु–विद्यानां विविदिषोपयुक्तकर्माङ्गत्वाभावात्, विद्यासंयुक्तमेवाग्निहोत्रादीति कथमुच्यते। न च विद्यानां कर्मसु सर्वत्राङ्गत्वात् विविदिषुकर्मस्वपि विद्यानुप्रवेशो भवेदिति वाच्यम्। 'तन्निर्धारणानियमः' इत्यत्र कर्माङ्गताया विद्यासु निरासात्;

उच्यते-विद्यासंयुक्तानां कर्मणां 'पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न' 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति' [एवंविद्वान्] इत्यादिवाक्यैः प्रशंसाऽवगम्यते। 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तांश्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यति' इत्यादिषु च विद्यारहितानां प्रस्तावादिकर्मणां निन्दावगम्यते। अतो विद्यानां पुनः कर्माङ्गत्वमित्याशङ्का। न च-प्रस्तोतर्यादेवतेत्यस्मिन्नेव सन्दर्भे विद्यारहितानामेव प्रस्तोत्रादीनां आर्त्विज्यमुपलभ्यते, यदेवविद्ययाकरोतीत्यादिवाक्ये च तदेववीर्यवत्तरंभवतीति पृथक् फलं च विद्यानामवगम्यत इति कथं कर्माङ्गता-इति वाच्यम्। नित्येषु कर्मसु तावत् यथाशक्त्यनुष्ठानम्, तत्र प्रस्तोत्रादीनां विद्वत्त्वाभावात् विद्यानुष्ठानशक्त्यभावेन केवलप्रस्तावादिकर्मसु प्रवृत्तिर्नानुपपन्ना। अत एव उषस्त्यागमनानन्तरं तत उपदेशं लब्ध्वा साङ्गकर्मकरणसम्भवात् तद्रहित-

इत्यादिश्रुतिभ्यः । 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (भ. गी. २।३९) 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय' (भ. गी. २।४९) इत्यादिस्मृतिभ्यश्च—इति ।

एवं प्राप्ते प्रतिपद्यते—यदेव विद्ययेति हि । सत्यमेतत्-विद्यासंयुक्तं कर्म अग्निहोत्रादिकं विद्याविहीनात् कर्मणोऽग्निहोत्रात् विशिष्टं विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात्; तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्म अग्निहोत्रादिकम् । कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति अविशेषेण अग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात् ।

ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमात् विद्याविहीनमग्निहोत्रादि आत्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम् ।

नैतदेवम् । विद्यासहायस्याग्निहोत्रादेः विद्यानिमित्तेन सामर्थ्यातिशयेन योगात् आत्मज्ञानं प्रति कश्चित् कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्य-इति युक्तं कल्पयितुम् । न तु 'यज्ञेन विविदिषन्ति' इत्यत्र अविशेषेण आत्मज्ञानाङ्गत्वेन श्रुतस्य अग्निहोत्रादेः अनङ्गत्वं शक्यमभ्युपगन्तुम् । तथा हि श्रुतिः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. उ. १।१।१०) इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेः वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा, विद्या-

---

कर्मकरणे उषस्तिना शाप उपक्षिप्तः । वीर्यवत्तरमित्यत्र तरप्प्रत्ययश्च स्वार्थिको भविष्यति अल्पाच्तरमित्यादाविव । यदि तु अर्थाधिक्यसम्भवे स्वार्थकता न न्याय्या, तदा सर्वाङ्गोपेतात् कर्मणः फलाधिक्यावश्यम्भावात्, यथाशक्ति किञ्चिदङ्गविकलात् कर्मणः सर्वाङ्गयुक्तं शक्तस्य कर्म वीर्यवत्तरमिति भविष्यति । न चैवमपि अशक्तस्य विविदिषार्थं केवलकर्मसम्भवात् कथं विविदिषार्थेषु कर्मसु अङ्गावबद्धोपासननियम इति वाच्यम् । शक्तस्य विद्यानुष्ठाने विविदिषोपयोगिकर्म विद्यायुक्तमेव भविष्यति - इति पूर्वपक्षिणोऽभिप्रायः ।

यदेवविद्ययेति वाक्यं, न सर्वाङ्गयुक्तकर्मकरणपक्षे विद्यमानं यत् फलाधिक्यं तत्प्रतिपादनपरम्, तस्य न्यायसिद्धतया वाक्यस्यानुवादकतापत्तेः । अतः 'पृथग्ध्य प्रतिबन्धः फलम्' इत्यत्रोक्तन्यायेन विद्यानां फलान्तरकथनपरमेव । अतः पृथक्-

विहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति । कर्मणश्च वीर्यवत्त्वं तत्-यत् स्वप्रयोजनसाधनप्रसहत्वम् । तस्मात्, विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं च उभयमपि, मुमुक्षुणा मोक्षप्रयोजनोद्देशेन इह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्, तत्, यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धाध्यानतात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सह एककार्यं भवतीति स्थितम् ॥ १८ ॥

१४ भोगेनत्वधिकरणम्

## भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

अनारब्धकार्ययोः पुण्यपापयोः विद्यासामर्थ्यात् क्षय उक्तः । इतरे

---

फलत्वात् न कर्माङ्गतोपपद्यते । प्रशंसापि विद्यासंयुक्तस्य कर्मणः प्रतिबन्धराहित्यफलान्तरसम्बन्धादेव । 'तांश्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यति' इति अविद्वत्तायां शापस्तु उषस्तेः स्वमाहात्म्यप्रकटनार्थ एव, शापानन्तरं प्रस्तोत्रादीनां कर्मभ्य उपरमोऽपि शापभयादेव, न तु 'विद्याभावे कर्म विगुणं भविष्यति' इत्यभिप्रायेण । अयं चार्थः उषस्तिचाक्रायणोपाख्यानपर्यालोचनया अवगम्यत एव । अतो न विविदिषार्थे कर्मणि विद्यानियमः ॥ १८ ॥

इति यदेवाधिकरणम्

'अनारब्धकार्ये एव तु' इत्यस्य अग्निहोत्रादिनित्यकर्मसु अपवादे दर्शिते तत्प्रसङ्गात् ब्रह्मविद्योपयुक्तेषु कर्मसु अङ्गावबद्धोपास्तिनियमो निराकृत इति प्रसक्तानुप्रसक्तं अधिकरणद्वयं विहाय व्यवहिताधिकरणेन सङ्गतिमाह—अनारब्धकार्ययोरिति ।

अयमत्र पूर्वपक्षाभिप्रायः-विक्षेपांशेनाविद्या प्रारब्धोपयोगितया सत्यपि ब्रह्मसाक्षात्कारे अनुवृत्ता । अतः तस्या ब्रह्मसाक्षात्कारादपि प्रबलतया न तेन निरासः सम्भवति । नापि निरासकमन्यत् किञ्चित् उपलभ्यते । अतः, प्रारब्धक्षपणानन्तरमपि तदंशस्यानुवृत्तत्वात् विद्यायाः कैवल्यहेतुता नोपपद्यते । अपि च-येषां अनेकजन्मप्रापकं प्रारब्धमस्ति तेषां जन्मान्तरे ब्रह्मसाक्षात्कारसंस्कारोच्छेदात् तत्र च पापादिकर्मणः यस्यकस्यचित् प्रसक्तस्य अश्लेषासम्भवात् पुनरपि जन्मान्त-

तु आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति 'ब्रह्मैव सन् ब्रह्माप्येति' इति चैवमादिश्रुतिभ्यः।

ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपातात् भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तं एवं पश्चादप्यनुवर्तेत।

न। निमित्ताभावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, न च तादृशं अत्र किंचिदस्ति।

नन्वपरः कर्माशयः अभिनवमुपभोगमारप्स्यते।

---

रमिति न मोक्षः प्रारब्धक्षयेऽपि सम्भवति। न च अपरोक्षीकृतब्रह्मतत्त्वानां न जन्मान्तरे संस्कारोच्छेद इति वाच्यम्। मरणस्य संस्कारविच्छेदकतया तथाकल्पनानुपपत्तेः। न च तस्यतावदेवचिरमितिवाक्येन कैवल्यप्राप्तौ प्रारब्धक्षयावधिकरणात् तथा कल्पनीयमिति वाच्यम्। येषामेकजन्मप्रापकं प्रारब्धं तदभिप्रायेण तच्छ्रुत्युपपत्तेः। एवं, सविशेषोपासकानामपि यदि केनचित् प्रबलेन प्रारब्धेन जन्मान्तरं तदा तेषामपि संस्कारप्रमोषेण विद्यानुवृत्तेरसम्भवात् न जन्मान्तरेऽपि फलप्राप्तिः -- इति।

अमुं पूर्वपक्षाभिप्रायं 'ननु सत्यपि सम्यग्दर्शने' इति, 'नन्वपरः कर्माशयः' इति चानूद्य स्वयमेव निराकरिष्यति।

प्रथमतः सिद्धान्तं दर्शयन् सूत्रं योजयति–इतरे त्वारब्धकार्ये इति। अयमत्र परिहाराभिप्रायः—प्रारब्धक्षपणानन्तरं अविद्याया निरासकः ब्रह्मसाक्षात्कार एव, पूर्वं प्रारब्धरूपप्रतिबन्धकवशेन तस्या निवर्तकत्वेऽपि प्रतिबन्धकाभावे निवृत्त्युपपत्तेः। नापि, येषामनेकजन्मप्रापकं प्रारब्धं तेषां संस्कारप्रमोषः सम्भवति। अधिकारिपुरुषाणां संस्काराप्रमोषस्य श्रुतिस्मृतिसिद्धत्वात्, अन्येषामपि विदुषां ज्ञानस्यमुक्तिसाधनताप्रतिपादकशास्त्रानुसारेण संस्काराप्रमोषस्य कल्पनीयत्वात्। यदि हि येषां अनेकजन्मप्रापकं प्रारब्धं तेषां संस्कारप्रमोषेण जन्मान्तरकृतकर्मणां विद्यया नाशाभावात् मुक्तिर्नास्ति - इति सम्भाव्येत, तदा, अनेकजन्मप्रापकप्रारब्धसम्भावनया कस्यापि प्रवृत्तिर्न स्यात्। [1]अतो मोक्षशास्त्रसार्थक्याय पूर्वकृतदृढसंस्कारवशात्

---

1. अत इति ल्याप्यत्वं पञ्चम्यर्थः, मोक्षेत्यादि सम्पद्यन्त इत्यन्तं ज्ञाप्यम्।

न । तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपाते उपभोगान्तरमारभते, तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धम्—इत्यतः साध्वेतत्—आरब्धकार्यक्षये विदुषः कैवल्यं अवश्यं भवतीति ॥ १९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य प्रथमः पादः

---

जन्मान्तरेऽपरिमुषितसंस्कारा(त्) ब्रह्मविदः प्रारब्धक्षये स्वभावसिद्धब्रह्मसाक्षात्कारेण अविद्यालेशं दग्ध्वा सम्पद्यन्ते । एवं सविशेषविदामपि आप्रायणकृतोपासनासम्पन्नसंस्कारदार्ढ्यात् सहकारिकर्मसामर्थ्याच्च जन्मान्तरे अपरिमुषितस्मृतित्वं द्रष्टव्यम् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतिरपि, प्रारब्धबलायत्तशरीरविमोक्षो यावन्न भवति तावानेव विलम्बः इति प्रारब्धक्षयमवधीकरोति । सा न एकशरीरमात्राभिप्राया व्याख्येया—इति ॥ १९ ॥

इति भोगेनत्वधिकरणम्

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
चतुर्थाध्यायस्य प्रथमः पादः

चतुर्थाध्याये द्वितीयः पादः

१ वागधिकरणम्

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अथ अपरासु विद्यासु फलप्राप्तये देवयानं पन्थानं अवतारयिष्यन् प्रथमं तावत् यथाशास्त्रं उत्क्रान्तिक्रममन्वाचष्टे। समाना हि विद्वदविदुषो-रुत्क्रान्तिः-इति वक्ष्यति।

अस्ति प्रायणविषया श्रुतिः 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा. उ. ६।८।६) इति। किमिह वाच एव वृत्तिमत्या मनसि संपत्तिरुच्यते उत वाग्वृत्तेः-इति विशयः। तत्र, वागेव तावत् मनसि संपद्यत इति प्राप्तम्। तथाहि श्रुतिरनुगृहीता भवति, इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा। तस्मात् वाच एवायं मनसि प्रलय इति।

एवं प्राप्ते ब्रूमः—वाग्वृत्तिः मनसि संपद्यत इति।

कथं वाग्वृत्तिरिति व्याख्यायते, यावता वाङ्मनसीत्येव आचार्यः

---

ननु—प्रारब्धावसाने सत्सम्पत्तावुक्तायां तत्प्रकारो निरूपणीयः, वागादि-लयप्रकारस्तु किमिति निरूप्यते-इत्याशङ्क्याह—अथापरास्वित्रति। अयमर्थः—सविशेषविदां मूर्धन्यनाडीद्वारा अर्चिरादिमार्गेण ब्रह्मसम्पत्तिर्वक्तव्या। वागादिवृत्ति-लयस्तु मूर्धन्यनाडीप्राप्तावुपाय इति तदुपयोगितया निरूप्यते। वृत्तिलयपूर्विका वागादिप्राणानामुत्क्रान्तिः निर्विशेषविदां नास्ति-इति प्रतिषेधद्वारा परविद्यायामपि तत्प्रतिपादनं [1]सङ्गतम्। वागादिस्वरूपलयेन हि परब्रह्मविदां इहैव ब्रह्मसम्पत्तिः।

अस्यसोम्यपुरुषस्येत्यत्र 'सम्पद्यते' इतिपदं लयप्रतिपादकम्। सतासोम्य-तदा सम्पन्नोभवतीत्युक्त्वा स्वमपीतोभवतीतिवाक्येन सम्पत्तिपदस्य लयपरताप्रति-पादनात्। प्रयतः—म्रियमाणस्य।

ननु—'भोगेनत्वितरे क्षपयित्वा सम्पद्यते' इति सूत्रादनुवृत्तं 'सम्पद्यते' इतिपदं इह सूत्रे वाक्पदेन सम्बद्धं वाच एव लयं प्रतिपादयेत्—इति शङ्कते—कथं वाग्वृत्तिरिति। अविभागोवचनादिति सूत्रेण उत्तरत्र विशिष्य निर्विशेषविदां

---

1. सङ्गतमिति प्रतियोगिप्रसिद्धिसम्पादकतयेति भावः।

पठति। सत्यमेतत्। पठिष्यति तु परस्तात् 'अविभागो वचनात्' (ब्र. सू. ४।२।१६) इति। तस्मात् अत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते। तत्त्वप्रलयविवक्षायां तु सर्वत्रैव अविभागसाम्यात् किं परत्रैव विशिंष्यात् 'अविभागः' इति। तस्मात् अत्र वृत्त्युपसंहारविवक्षा। वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्तावव्वस्थितायां इत्यर्थः। कस्मात्? दर्शनात्। दृश्यते हि वाग्वृत्तेः पूर्वमुपसंहारो मनोवृत्तौ विद्यमानायाम्। न तु, वाच एव वृत्तिमत्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्यात् वाच एवायं मनस्यप्ययो युक्त इत्युक्तम्। नेत्याह। अतत्प्रकृतित्वात्। यस्य हि यत उत्पत्तिः तस्य तत्र प्रलयो न्याय्यः मृदीव शरावस्य। न च, मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति। वृत्त्युद्भवाभिभवौ तु अप्रकृतिसमाश्रयावपि दृश्येते। पार्थिवेभ्यो हीन्धनेभ्यः तैजसस्याग्नेर्वृत्तिरुद्भवति अप्सु चोपशाम्यति।

---

वागादिस्वरूपलयतिपादनात्, ततोऽन्यत्र स्वरूपलयोनास्तीत्यवगम्यते, अतो वाक्पदं वाग्वृत्तिपरम्—इति परिहरति—सत्यमेतदिति।

दृश्यते हि वाग्वृत्तेरिति। ननु--यद्यपि लोके प्रथमतो मनसि विद्यमान एव वागादिकार्यनिरोधमात्रमुपलभ्यते, न तु वाचः स्वरूपमेव निरुद्धमित्युपलभ्यते, तथापि वाङ्मनसीतिश्रुतिसामर्थ्यात् मुमूर्षूणां वागादीन्द्रियलय एवोपेयः। न च मनसो वाचं प्रति प्रकृतित्वाभावात् कथं तस्मिन् वाचो लयः श्रुत्या प्रतिपादयितुं शक्यत इति वाच्यम्। वाग्वृत्तेरपि वागुपादानत्वेन मनसि लयासम्भवात्। श्रुतिसामर्थ्यानुसरणं तु स्वरूपपक्षेऽपि समानम्—इति चेत्;

उच्यते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुत्या जीवेन सह प्राणानां उत्क्रान्तिप्रतिपादनात् स्वरूपपरत्वं वाक्यस्य वक्तुं न शक्यते। अतो लोकसिद्धार्थानुवादकं इदं वाक्यं आश्रयणीयं लाक्षणिकार्थविशेषनिर्धारणोपयोगितया। लोके च वागादिकार्यलयः प्रसिद्ध इति, इहापि वागादिकार्यलय एव प्रतिपाद्यते। न च लोके तस्य मनोऽधिकरणकत्वं न प्रसिद्धमिति कथं तदंशेऽनुवादःस्यादिति वाच्यम्। मनसीति 'यस्य च भावेन भावलक्षणम्'[1] इति सप्तमी भविष्यति। यदि तु सा उपपदविभक्तिः न कारक-

---

1. इति सप्तमीति तथा च वृत्तिमति मनसि सति-इत्यर्थ इति भावः

कथं तर्ह्यस्मिन् पक्षे शब्दः 'वाङ्मनसि संपद्यते' इति ? अत आह- शब्दाच्चेति। शब्दोऽप्यस्मिन् पक्षेऽनुकूलः। वृत्तिवृत्तिमतोरभेदोपचारात्- इत्यर्थः ॥ १ ॥

## अतएव च सर्वाण्यनु ॥ २ ॥

'तस्मादुपशान्ततेजाः। पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' (प्र. उ. ३।९) इत्यत्र अविशेषेण सर्वेषामेवेन्द्रियाणां मनसि सम्पत्तिः श्रूयते। तत्रापि अत एव-वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासंभवात् शब्दोपपत्तेश्च, वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनु- वर्तन्ते। सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं 'वाङ्मनसि संपद्यते' इत्युदाहरणानुरोधेन ॥ २ ॥

---

विभक्तौ सम्भवन्त्यां स्वीकर्तुमुचिता, वृत्तिलयानुवादेन तदा मनोऽधिकरणताविधिपरं एतद् भवतु। न च वागादिवृत्तीनां अप्रकृतौ मनसि लयो नोपपद्यत इति वाच्यम्। मनसो [1]वृत्तिलयप्रयोजकवागादिसंयोगाधारत्वेन वृत्तिलयं प्रत्यधिकरणत्वोपपत्तेः, जलेऽग्निश्शाम्यतीतिवत्।

सौत्रं शब्दाच्चेतिपदं शब्दोपपत्तेश्चेत्यर्थकं व्याचष्टे—शब्दोऽपीति ॥ १ ॥

उपशान्तं तेजः—शरीरौष्ण्यं यस्य तथाभूतः। ऊष्मोपशमो हि मृतस्य चिह्नम्। पुनर्भवं उद्दिश्य। ननु-सूत्रद्वयेन 'मनसि इन्द्रियवृत्तिलयो भवति' इति प्रतिपाद्यते, तत् एकेनैव सूत्रेण सम्भवति, अतः सूत्रद्वयं किमर्थम्-इत्याशङ्क्याह- सर्वेषां करणानामिति। वाङ्मनसिसम्पद्यत इति वाक्पदस्य वागिन्द्रियपरतामुपेत्य प्रथमसूत्रेण न्याये प्रतिपादिते, द्वितीयं सूत्रं वाक्पदस्य श्रुत्यन्तरानुसारेण इन्द्रियमा- त्रोपलक्षकताप्रतिपादनार्थं सत्, 'यथा श्रुत्यन्तरानुसारेण लोकदर्शनानुसारेण च वाक्पदं सर्वेन्द्रियोपलक्षणार्थं तथैव श्रुत्यन्तरसत् दर्शनाच्च वृत्तिलयलक्षकतापि भवि- ष्यति' इति उपपत्त्यन्तरसूचकमपि भविष्यति इति भावः ॥ २ ॥

इति वागधिकरणम्

---

1. वृत्तिलयेत्यादि वृत्तेरिव वृत्तिलयस्यापि विलक्षणो मनस्संयोगः प्रयोजकः, तदाधारत्वेनेत्यर्थः। अधिकरणत्वोपपत्तेः—अधिकरणत्वनिर्देशोपपत्तेः। तथा च अधिकरणत्वनिर्देशः औपचारिक इति भावः।

२ मनोऽधिकरणम्

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

समधिगतमेतत् 'वाङ्मनसि संपद्यते' इत्यत्र वृत्तिसंपत्तिविवक्षेति। अथ यत् उत्तरं वाक्यम् 'मनः प्राणे' इति, किमत्रापि वृत्तिसंपत्तिरेव विवक्ष्यते उत वृत्तिमत्संपत्तिः-इति विचिकित्सायाम्, वृत्तिमत्संपत्तिरेवात्रेति प्राप्तम्। श्रुत्यनुग्रहात् तत्प्रकृतिकत्वोपपत्तेश्च। तथाहि—'अन्नमयं हि सोम्य मन आपोमयः प्राणः' (छा. उ. ६।५।४) इति अन्नयोनि मन आमनन्ति अब्योनिं च प्राणम्। आपश्चान्नमसृजन्त इति श्रुतिः। अतश्च यत् मनः प्राणे प्रलीयते अन्नमेव तत् अप्सु प्रलीयते, अन्नं हि मनः आपश्च प्राणः प्रकृतिविकाराभेदात् इति।

एवं प्राप्ते ब्रूमः—तदपि आगृहीतबाह्येन्द्रियवृत्ति मनः वृत्तिद्वारेणैव प्राणे प्रलीयते इति उत्तराद्वाक्यादवगन्तव्यम्। तथाहि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायां अवस्थितायां मनोवृत्तीनामुपशमो दृश्यते। न च मनसः स्वरूपाप्ययः प्राणे संभवति। अतत्प्रकृतित्वात्। ननु दर्शितं मनसः प्राणप्रकृतित्वम्। नैतत् सारम्। न हि ईदृशेन प्राणादिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति। एवमपि हि अन्ने मनः संपद्येत अप्सु चान्नं अप्स्वेव च प्राणः। न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणं अस्ति। तस्मात् न मनसः प्राणे स्वरूपाप्ययः। वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारात्-इति दर्शितम् ॥ ३ ॥

---

यथा वागुपलक्षितानां सर्वेषां बाह्यकरणानां मनसि वृत्तिलयः, एवं मनसोऽपि प्राणे वृत्तिलय एव 'मनः प्राणे' इत्यनेन प्रतिपाद्यते—इति पूर्वन्यायातिदेशात् सङ्गतिः। विशेषाशङ्कामतिदेशव्यावर्त्यामाह—तत्प्रकृतिकत्वोपपत्तेश्चेति। सौत्रतत्पदार्थमाह-तदपीति। आगृहीतबाह्येद्रियवृत्तीति मनसो विशेषणं पृथक्पदम् ॥३॥

इति मनोऽधिकरणम्

३ अध्यक्षाधिकरणम्

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स्थितमेतत्—यस्य यतो नोत्पत्तिः तस्य तस्मिन् वृत्तिप्रलयो न स्वरूपप्रलय इति। इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते—किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः किंवा देहेन्द्रियपञ्जराध्यक्षे जीवे- इति। तत्र, श्रुतेरनतिशङ्क्यत्वात् प्राणस्य तेजस्येव संपत्तिः स्यात्, अश्रुतकल्पनाया अन्याय्यत्वात्-इति।

---

'मनः प्राणे' इत्यनन्तरं समाम्नाते प्राणस्तेजसीतिवाक्ये विचारकरणात् सङ्गतिः।

शरीरगतौष्ण्ये सत्येव प्राणवृत्तिर्लीयते इति लोकप्रसिद्धेः, प्राणस्तेजसीत्यत्रापि वृत्तिलय एव विवक्षितः पूर्वन्यायात्-इति स्थिते, श्रुत्यन्तरपर्यालोचनया जीवोऽप्यत्रोपसंहर्तव्यो वा न वेति विचार्यते।

अश्रुतकल्पनाया अन्याय्यत्वादिति। ननु—'तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसस्सूतग्रामण्योऽभिसमायन्ति एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' उग्राः—वैश्यात् शूद्रायामुत्पन्नाः, प्रत्येनसः—एनस्विनां प्रतिकूलाः-तेषां शिक्षार्थं विनियुक्ता राजभटाः, सूताः—क्षत्रियाद्ब्राह्मण्यामुत्पन्नाः, ग्रामण्यः-ग्रामनेतृत्वेन राज्ञा विनियुक्ताः, प्रयान्तः राजानमभिलक्ष्य समायन्ति—सङ्गता भवन्ति, एवमेव इममात्मानं अन्तकाले सर्वे प्राणाः-इन्द्रियाणि अभिसमायन्ति, यत्र-यस्मिन् काले एतदूर्ध्वोच्छ्वासीभवति-यदेतदूर्ध्वोच्छ्वसनं तद्वान् जीवो भवति—इति प्राणस्य जीवेन सह सम्बन्धः प्रतिपाद्यते। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति च प्राणस्य जीवेन सहोत्क्रान्तिः प्रतिपाद्यते। न च प्राणस्य जीवेन सहोत्क्रान्तिः प्रायणकाले जीवप्राणयोः सम्बन्धाभावे उपपद्यते। सविज्ञानोभवतीति च, विज्ञायतेऽनेनेतिव्युत्पत्त्या विज्ञानपदोदितप्राणसाहित्यं जीवस्य प्रतिपाद्यते मरणकाले। अतः श्रुत्यन्तरपर्यालोचनया जीवसाहित्यस्यापि उत्क्रान्तिकाले प्राणस्य अवश्यं वक्तव्यतया, कथं प्राणस्तेजसीति यथाश्रुतमाश्रयितुं शक्यम्—इति चेत्;

न—एवमेवेममात्मानमितिवाक्येन हि न मुख्यस्य प्राणस्य जीवोपगमनं प्रतिपाद्यते, अपि तु इन्द्रियाणामेव। तमुत्क्रामन्तंप्राणोऽनूत्क्रामतीतिवाक्यं तु,

**एवं प्राप्ते प्रतिपद्यते 'सोऽध्यक्षे' इति। सः—प्रकृतः प्राणः अध्यक्षे अविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मनि अवतिष्ठते, तत्प्रधाना प्राणवृत्तिः भवतीत्यर्थः। कुतः—तदुपगमादिभ्यः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यन्तरं अध्य-**

[1]जीवोत्क्रान्तिं विहाय तामनुसृत्य पृथक् प्राणोत्क्रान्तेः प्रतिपादनात् मरणकाले जीव-प्राणयोर्वियोगमेव प्रतिपादयतीति, सिद्धान्तप्रतिकूलमेव। सविज्ञानोभवतीत्यत्र च विज्ञानपदं भावव्युत्पत्त्या अ[न्त](न्त्य)काले भाविप्रत्ययसाहित्यं वक्ति, न तु प्राण-साहित्यम्। अतः, न उदाहृतवचनानुसारेण अ[न्त](न्त्य)काले जीवप्राणयोस्साहित्यं सिद्ध्यति।

यदि तु-'सह ह्येतस्मिन् शरीरे वसतः सहोत्क्रामतः' इति 'कस्मिन्न्व-हमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति प्राण-सहितस्य जीवस्य उत्क्रान्तेः स्पष्टं प्रतिपादनात् अ[न्त](न्त्य)काले प्राणस्य जीवं प्रति गमनमपेक्षितम्—इत्युच्यते,

तदापि, प्राणस्तेजसीत्यत्र तेजसः प्रागेव जीवो नोपसंहर्तव्यः, अपि तु तेजोऽनन्तरमेव। न च विनिगमनाविरहः। तेजसः पूर्वं जीवोपसंहारे हि, 'प्राण-वृत्तिः जीवे लीयते सवृत्तिके जीवे सत्येव, जीववृत्तिश्च वृत्तिमति तेजसि सत्येव' इति वक्तव्यम्। नैतल्लोकसिद्धम्। प्राणवृत्तौ परिस्पन्दात्मिकायां लीयमानायां शरीरोष्मा-नुवर्तते इत्येतावन्मात्रं हि लोकसिद्धं, न तु अन्त्यप्रत्ययरूपायां जीववृत्तौ लीयमा-नायामपि शरीरोष्मानुवर्तते इत्यत्र लोकसम्प्रतिपत्तिरस्ति। अतः तेजसः प्राक् तदुपसंहारे लोकसिद्धार्थानुवादकत्वासम्भवात् तेजोऽनन्तरमेव जीवो निवेशनीयः-- इति पूर्वपक्षाभिप्रायः।

अयमत्र सिद्धान्ताभिप्रायः-एवमेवेममात्मानमन्तकालेसर्वेप्राणाअभिसमायन्ती-तिवचनं यद्यपि इन्द्रियाणामेव जीवोपगमनं साक्षात्प्रतिपादयति, तथापि, अन्तकाले प्राणे लीनानामिन्द्रियाणां प्राणस्य जीवोपगमनं विना तं प्रत्युपगमनानुपपत्त्या प्राणो-पगमनमाक्षिपति। तमुत्क्रामन्तंप्राणोऽनूत्क्रामतीत्यत्रापि 'जीवः प्रथमं पृथगेवोत्क्रा-मति तमनुसृत्य पश्चात् प्राण उत्क्रामति' इत्यर्थो न विवक्षितः। प्राणं विहाय केव-लस्य जीवस्य उत्क्रमणासम्भवस्य तद्गुणसारत्वादितिन्यायसिद्धत्वात्, 'सहोत्क्रामतः'

1. जीवोत्क्रान्तिं विहाय—जीवेनसहोत्क्रान्तिं अप्रतिपाद्य।

क्षोपगामिनः सर्वान् प्राणान् अविशेषेण दर्शयति। विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ. उ. ४।४।२) इति पञ्चवृत्तेः प्राणस्य अध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां चेतरेषां 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. उ. ४।४।२) इति। 'सविज्ञानो भवति' इति च अध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन् अपीतकरणग्रामस्य प्राणस्य अवस्थानं गमयति।

ननु—'प्राणस्तेजसि' इति श्रूयते, कथं 'प्राणोऽध्यक्षे' इत्यधिकावापः क्रियते ;

नैष दोषः। अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्य अपेक्षणीयत्वात् ॥ ४ ॥

कथं तर्हि प्राणस्तेजसीतिश्रुतिः, इत्यत आह—

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

सः-प्राणसंपृक्तोऽध्यक्षः तेजस्सहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेषु अवतिष्ठते इत्यवगन्तव्यम्, प्राणस्तेजसीतिश्रुतेः। ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति, न प्राणसंपृक्तस्याध्यक्षस्य। नैष दोषः। 'सोऽध्यक्षे'

---

इति श्रुतेश्च। अपि च प्राणमनूत्क्रामन्तंसर्वेप्राणाअनूत्क्रामन्तीत्युत्तरवाक्ये प्राणे लीनानामिन्द्रियाणां प्राणमनुसृत्य पृथगुत्क्रान्तिः वक्तुं न शक्यते। अतः अनुशब्देन सहोत्क्रममाणानामपीन्द्रियाणां प्राणाधीनत्वमात्रं विवक्षितम्। एवं तमुत्क्रामन्तंप्राणोऽनूत्क्रामतीत्यत्रापि सहोत्क्रममाणस्यापि प्राणस्य जीवाधीनत्वमात्रं विवक्षितमिति न सिद्धान्तानानुगुण्यं तस्य वाक्यस्य। 'सविज्ञानः' इत्यत्रापि भाविफलविज्ञानसाहित्योक्त्या प्राणसम्बन्ध आक्षिप्यते। प्राणसम्बन्धाभावे विज्ञानानुपपत्तेः।

नन्वस्तु श्रुत्यन्तरानुसारेण जीवोपसंहारः, तथापि तस्य क्व निवेशः। तेजसः प्राङ्निवेशे हि प्राणस्तेजसीतिश्रुत्या प्राणस्य अव्यवधानेन तेजसि लयोऽवगम्यमानो बाधितो भवेत्—इत्यभिप्रेत्य शङ्कते—ननु प्राणस्तेजसीति श्रूयत इति ॥ ४ ॥

उक्तशङ्काव्यावर्तकं सूत्रम्। तेजसोऽनन्तरं जीवनिवेशेऽपि पूर्वपक्ष्युपगते, तेजःपरस्यांदेवतायामितिश्रुतेः परदेवतायां तेजसः साक्षाल्लयोऽवगम्यमानो बाधितो भवेदेव। अत्रापि प्रत्यक्षसिद्धस्वाभावस्तुल्य एव। न हि वृत्तिमति जीवे सत्येव

इति अध्यक्षस्याप्यन्तराले उपसंख्यातत्वात्। योऽपि हि स्रुघ्नात् मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोऽपि स्रुघ्नात् पाटलिपुत्रं यातीति शक्यते वदितुम् । तस्मात् प्राणस्तेजसीति प्राणसंपृक्तस्याध्यक्षस्यैव एतत् तेजस्सहचरितेषुभूतेष्ववस्थानम् ॥ ५॥

कथं 'तेजस्सहचरितेषु भूतेषु' इत्युच्यते, यावता एकमेव तेजः श्रूयते प्राणस्तेजसीति ? अत आह—

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

न एकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते, कार्यस्य शरीरस्य अनेकात्मकत्वदर्शनात्। दर्शयतश्च एतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' (छा. उ. ५।३।३) इति। तत् व्याख्यातम् 'त्र्यात्म-

---

तेजस ऊष्मरूपवृत्त्युपशमो लोके प्रसिद्धः। अतः भाष्योक्तपाटलीपुत्रगमनन्यायेन तेजःपरस्यांदेवतायामिति निर्देशः प्रत्यक्षसिद्धत्वाभावेऽपि उपगन्तव्यः, तथासति प्राणस्तेजसीत्यत्रैव तथा कुतो नावगम्यते—इति तात्पर्यं भाष्यस्य ।

उक्तप्रकारेण प्राणानन्तरं जीवनिवेशकथनं पूर्वपक्ष्युक्तार्थप्रतिबन्दीरूपेणोपन्यस्तम् । वस्तुतस्तु-नात्र, यथा श्रुत्यन्तरप्राप्तानां वरुणलोकादीनां अर्चिरादिमार्गपर्वतया क्रमेण निवेशः एवं जीवस्य श्रुत्यन्तरप्राप्तस्य प्राणानन्तरं तेजसः पूर्वं निवेशः, अध्याहारप्रसङ्गात्। अपि तु, तेजःपदेनैव लक्षणया जीवस्य ग्रहणम् ।

तत्रेयमाशङ्का—लक्षणापक्षे प्राणपदेनैव कुतो जीवो न लक्ष्यत इति ।

तन्निराकरणार्थं सूत्रे तेजसीत्यनुक्त्वा भूतेष्वितिनिर्देशः कृतः। तेजःपदेन हि श्रुत्यन्तरप्राप्तानि भूतानि उपलक्षणीयान्येव। तथा च, तेजःपदे एव लक्षणायाः प्रवृत्तत्वात् श्रुत्यन्तरप्राप्तो जीवोऽपि लक्षणीयः-इति तदाशयः। अपि च—प्राणपदे जीवलक्षणायां, प्राणवत् जीवस्यापि तेजोवृत्तावूष्मरूपायां सत्यामेव लय उपगन्तव्य इति, लोकसिद्धार्थानुवादता न भवेत्। तेजःपदेन जीवलक्षणायां तु न जीवस्य तेजसि लयोऽभ्युपगन्तव्यः। अपि तु, भूतान्तरजीवविशिष्टे तेजसि प्राणलयमात्रम्। तत्र, भूतान्तरयुक्ततेजस्सम्पर्को जीवस्य उत्तरसूत्रे दर्शयिष्यते। प्राणस्य तत्र लयस्तु, मरणकाले प्राणव्यापारोपरमानन्तरमप्यूष्मसद्भावोपलम्भेन लोकसिद्धः अनुवदितुं शक्यते ॥ ५ ॥

उत्तरसूत्रमवतारयति— कथमिति ।

त्वात्तु भूयस्त्वात्' (ब्र. सू. ३।१।२) इत्यत्र। श्रुतिस्मृती च एतमर्थं दर्शयतः। श्रुतिः 'पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' (बृ. ४।४।५) इत्याद्या। स्मृतिरपि

'अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः॥' (मनु. १ २७) इत्याद्या।

---

रंहत्यधिकरणे हि, पञ्चभूतात्मकसूक्ष्मशरीरविशिष्ट एव जीव इतः परलोकं गच्छति—इति, 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नप्रतिवचनाभ्यां व्यवस्थापितम्। अतो मरणकाले भूतान्तरसम्पर्कस्यावश्यकत्वात् तेजःपदं भूतपञ्चकात्मकशरीरलक्षकम्।

दर्शयतइति द्विवचनं प्रश्नप्रतिवचनाभिप्रायेण व्याख्याय श्रुतिस्मृत्यभिप्रायेण व्याचष्टे—श्रुतिस्मृती चैतमिति। 'स यत्रायमात्माबल्यं न्येत्य संमोहमिव न्येति अथैनमेते प्राणा अभिसमायन्ति' अबल्यं—अबलस्य भावं न्येत्य—नितरामेत्य इति मरणावस्थां प्रक्रम्य 'पृथिवीमयः' इत्यादिकमाम्नातम्। अतः पञ्चभूतविशिष्टत्वं मरणकाले उक्तश्रुतिसिद्धम्। मात्राः—भूतांशभूताः, दशार्धानां-पञ्चानां, सर्वं—प्राणिजातं, सम्भवति-उत्पद्यते।

ननु-वाङ्मनसिदर्शनादित्यादिभिस्त्रिभिरधिकरणैः वागुपलक्षितानामिन्द्रियाणां मनसि लयः मनसः प्राणे प्राणस्य जीवभूतान्तरविशिष्टे तेजसि लय इति 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि' इतिश्रुतिमवलम्ब्योक्तम्। इदं तु श्रुत्यन्तरविरुद्धम्। 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः, यच्चित्तः तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति' [प्र. उ. ४.९ १०] इत्यत्र, प्रथमं तेजसो लयः अनन्तरमिन्द्रियाणां [1]मनस्सहिते जीवे सत्येव लयः जीवस्य प्राणसम्पर्कः प्राणः [2]तेजश्शब्दोक्तोदानेनैव सम्पृच्यते-इत्यवगम्यते—इति चेत्;

---

1. मनस्सहितेजीवे इति 'प्राणबन्धनंहिसोम्यमनः' इत्यादिश्रुतिबलात् मनश्शब्दः मनउपहितजीवपर इति भावः।

2. तेजश्शब्दोक्तोदानेनैवेति पूर्वसन्दर्भानुसारेण उदानपर एवात्र तेजश्शब्द इति भावः।

ननु च उपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायां 'क्वायं तदा पुरुषो भवति' (बृ. उ. ३।२।१३) इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः' इति।

अत्रोच्यते—तत्र, कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्य इन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता। इह पुनः, भूतोपादानाद्-

---

उच्यते—'अस्यसोम्यपुरुषस्येति श्रुतिः लोकानुसारेण प्रवृत्ता प्रमाणान्तरसंवादात् बलवतीति, तस्मादुपशान्तइति श्रुतिः संवादाभावात् तदनुसारेण व्याख्येया। इन्द्रियैर्मनसिसम्पद्यमानैरित्यत्र [1]यथाश्रुतग्रहणानुपपत्त्या अस्या अपि श्रुतेः [2]प्रमाणान्तरनिरीक्षकत्वेन मुख्यार्थविधिपरत्वाभावात्। अतः 'तस्मादुपशान्ततेजाः' इत्यत्र पाठप्राप्तप्राथम्यं [3]न विवक्षितम्। 'यच्चित्तस्तेनैष प्राणमायाति' इत्यत्रापि जीवस्य प्राणे लयो न विवक्षितः, अपि तु, मरणकाले जीवस्य प्राणसम्पर्कमात्रम्।

बृहदारण्यके 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति' इति म्रियमाणं जीवं प्रस्तुत्य, आर्तभागेन याज्ञवल्क्यं प्रति 'क्वायं पुरुषो भवति' इति जीवाश्रये पृष्टे, 'रहस्यार्थोऽयं एकान्ते वक्तव्यः' इत्यभिप्रायेण 'आहरसोम्यहस्तमार्तभाग आवामेवैतस्य वेदिष्यावो न नावेतत् सजने' इति एकान्ते गमनपूर्वकं याज्ञवल्क्येन योऽर्थ उचरितः सोऽर्थः श्रुत्या प्रतिपाद्यते तौहयदूचतुरित्यादिना। रहसि गत्वा कर्माश्रयता जीवस्य आर्तभागयाज्ञवल्क्याभ्यां निर्णीतेति तौहयदूचतुरित्यादिश्रुतिवचनार्थः।

स्थूलदेहोपादानभूतसूक्ष्माश्रयत्वे सत्येव जीवस्य शरीरग्रहणं प्रति निमित्ततया कर्मणः, तदाश्रयतोक्तिर्मरणकाले न विरुध्यते—इत्यभिप्रायेण परिहरति—अत्रोच्यत इत्यादिना। गृह्णन्ति-पुरुषपशुं बध्नन्तीति ग्रहाः—इन्द्रियाणि। इन्द्रियवृत्तिरपि विषयाधीनेति विषया अतिग्रहाः।

---

1. यथाश्रुतग्रहणानुपपत्त्येति स्वाप्रकृतौ स्वस्य स्वरूपलयायोगात् इति भावः।
2. प्रमाणान्तरेति मनोवृत्तौ सत्यां वाग्वृत्तिलयस्य प्रत्यक्षं अत्र प्रमाणान्तरम्।
3. प्राथम्यमिति इदमुपलक्षणं तेजश्शब्दस्योदानार्थतायाः अपि।

द्यान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्। प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितम्, न त्वाश्रयान्तरं निवारितम्। तस्मादविरोधः ॥ ६ ॥

### ४ आसृत्युपक्रमाधिकरणम्

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना किंवा विशेषवती-इति विशयानानां विशेषवतीति तावत् प्राप्तम्। भूताश्रयविशिष्टा ह्येषा। पुनर्भवाय च भूतान्याश्रीयन्ते। न च विदुषः पुनर्भवः संभवति। अमृतत्वं हि विद्वानश्नुते इति स्थितिः। तस्मात् अविदुष एव एषोत्क्रान्तिः।

ननु विद्याप्रकरणे समाम्नानात् विदुष एवैषा भवेत्।

न। स्वापादिवत् यथाप्राप्तानुकीर्तनात्। तथाहि—'यत्रैतत् पुरुषः

---

वाङ्मनसिदर्शनादित्यारभ्य निरूपिताया उत्क्रान्तेः सिद्धान्तपूर्वपक्षयोस्सगुणोपासनेष्वनुचिन्तनीयतया फलभेदः ॥ ६ ॥

इति अध्यक्षाधिकरणम्

उत्क्रान्तिः निर्गुणविदां नास्तीति वक्ष्यते, सगुणविदां अस्ति न वेति चिन्ता। यदापि सगुणविदामुत्क्रान्तिः तदापि विदुषामविदुषां च सा समाना उत अस्ति वैषम्यमिति।

तत्र पूर्वः पक्षः—सगुणविदामपि ब्रह्मस्वरूपभूतममृतत्वमेव 'न च पुनरावर्तते' इति तान् प्रति अपुनरावृत्तेश्श्रवणात् फलं वक्तव्यम्, ब्रह्मस्वरूपं तु व्यापीति न तत्प्राप्त्यर्थं तेषां गतिरपेक्षिता। तदभावे गत्यर्थोत्क्रान्तिरपि तेषां नास्ति—इत्येकः पूर्वपक्षिणोऽभिमानः। अर्चिरादिमार्गेण ब्रह्मप्राप्तिकथनं तु, अश्वमेधादिना ब्रह्मलोकप्राप्त्यभिप्रायं नेतव्यम्। न च सगुणब्रह्मप्रकरणविरोधः। लिङ्गेन प्रकरणबाधोपपत्तेः—इति।

ननु, 'अस्य सोम्य पुरुषस्य प्रयतः' इति निर्विशेषप्रकरणे उत्क्रान्तेराम्नानात् निर्विशेषविदामपि यदा उत्क्रान्तिः तदा सविशेषविदां सास्तीति किमु वक्तव्यम्—इत्यभिप्रायेण शङ्कते—नन्विति। यथा निर्विशेषप्रकरणे स्वापादिकीर्तनं ब्रह्मस्वरूपप्रतिपत्त्यर्थम्, एवमुत्क्रान्तिकीर्तनमपि ब्रह्मस्वरूपप्रतिपत्त्यर्थं न विदुष उत्क्रान्तिं साधयितुं शक्नोति—इत्यभिप्रायेण परिहरति—न स्वापादिवदिति।

स्वपिति नाम' 'अशिशिषति नाम' 'पिपासति नाम' (छा. उ. ६।८।१, ३,५) इति च सर्वप्राणिसाधारणा एव स्वापादयः अनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते। एवं इयमप्युत्क्रान्तिः महाजनगतैवानुकीर्त्यते 'यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः संपद्यते स आत्मा तत्त्वमसि' इत्येतत् प्रतिपादयितुम्। प्रतिषिद्धा चैषा विदुषः 'न तस्य प्राणा उत्क्रामन्ति' (बृ. ४।४।६) इति। तस्मात् अविदुष एवैषेति।

एवं प्राप्ते ब्रूमः—समाना च एषोत्क्रान्तिः वाङ्मनसीत्याद्या विद्वदविदुषोः आसृत्युपक्रमात् भवितुमर्हति, अविशेषश्रवणात्। अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति। विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारं आश्रयते। तदेतत् आसृत्युपक्रमादित्युक्तम्।

ननु—अमृतत्वं हि विदुषा प्राप्तव्यम्, न च तत् देशान्तरायत्तम्, तत्र, कुतो भूताश्रयत्वं सृत्युपक्रमो वा-इति।

अत्रोच्यते—अनुपोष्य चेदम्, अदग्ध्वाऽत्यन्तमविद्यादीन् क्लेशान् अपरविद्यासामर्थ्यात् आपेक्षिकममृतत्वं प्रेप्सते; संभवति तत्र सृत्युपक्रमो भूताश्रयत्वं च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः ॥ ७ ॥

---

सविशेषविदां उत्क्रान्तिस्तावदपेक्षिता अर्चिरादिमार्गेण ब्रह्मप्रतिपत्त्यर्थम्। ब्रह्मस्वरूपस्य व्यापित्वेऽपि सगुणोपासनानुरूपभोगोपयुक्तं तत्स्वरूपं ब्रह्मलोकावच्छिन्नमेव। सविशेषप्रकरणेषु तयोर्ध्वमायन्नमृतत्वमेतीति अमृतत्वफलकीर्तनमपि 'आभूतसम्प्लवं स्थानं अमृतत्वं हि भाष्यते' इत्यमुख्यामृतत्वाभिप्रायं भविष्यति। अपुनरावृत्तिश्रवणमपि क्रममुक्त्यभिप्रायम्। एवं च सविशेषप्रकरणेषु अर्चिरादिना ब्रह्मप्राप्तिकथनं न प्रकरणादुत्क्रष्टव्यं भवति। अयं सिद्धान्तः सूत्रे 'अमृतत्वं चानुपोष्य' इत्यंशेन सङ्गृहीतः। उपपूर्वात् 'उषदाहे' इत्यस्मात् क्त्वाप्रत्यये रूपं उपोष्येति, ततो नञ्समासः।

### ५ तदापीत्यधिकरणम्

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

'तेजः परस्यां देवतायाम्' इत्यत्र, प्रकरणसामर्थ्यात् तत्-यथाप्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यते इत्येतदुक्तं भवति । कीदृशी पुनरियं संपत्तिः स्यात्-इति चिन्त्यते ।

तत्र, आत्यन्तिक एव तावत् स्वरूपप्रविलय इति प्राप्तम् । तत्प्रकृतित्वोपपत्तेः । सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम् । तस्मात् आत्यन्तिकीयमविभागापत्तिरिति ।

---

यदापि सविशेषविदामुत्क्रान्तिः, तदापि अविद्वदुत्क्रान्तिमपेक्ष्य सा विलक्षणोपेया, विद्वदविदुषोः प्राप्यस्य फलस्य विलक्षणत्वेन तदुपयोगिन्या उत्क्रान्तेरपि विलक्षणत्वावश्यंभावात्, कारणवैलक्षण्येन हि कार्यवैलक्षण्यम्-इत्यपरः पूर्वपक्ष्याशयः ।

तस्योत्तरम्—समानाचासृत्युपक्रमादिति । सृतिः-मार्गः मूर्धन्यनाडीमारभ्य ब्रह्मलोकप्राप्त्यर्थं समाम्नातः, तावत्पर्यन्तं समानैवोत्क्रान्तिः विद्वदविदुषोः । अनन्तरं विद्वान् मूर्धन्यनाडीं प्राप्तो भवति अविद्वान् नाड्यन्तरम् । तथा च, उत्क्रान्तौ किञ्चित्सालक्षण्ये सत्यपि मूर्धन्यनाडीमारभ्य वैलक्षण्यस्य विद्यमानतया न फलवैलक्षण्यानुपपत्तिः ॥ ७ ॥

इति आसृत्युपक्रमाधिकरणम्

उत्क्रान्तिप्रसङ्गात्, विद्वदविदुषोः तत्र विशेषं निरूप्य, प्राणस्तेजसीति वाक्यानन्तरं समाम्नातं तेजःपरस्यांदेवतायामितिवाक्यं विचारयति—तेजः परस्यां देवतायामित्यत्रेत्यादिना ।

तत्रात्यन्तिक एव तावदिति । ननु-सुषुप्तौ प्रकृतिभूतब्रह्माश्रयोऽपि लयः सावशेष एव भवतीति 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यत्रोक्तम् । मरणकालेऽप्यात्यन्तिकलयोपगमे कर्मविद्याविधिवैयर्थ्यं तुल्यमेव । अतः कथमयं पूर्वः पक्षः-इति चेत् ;

उच्यते—शङ्काविशेषनिराकरणार्थोऽयमारम्भः । तेजःपरस्यांदेवतायामित्यत्र सावशेषलयाभिधानं अर्चिरादिमार्गप्रतिपत्त्युपयोग्युत्क्रान्तिनिरूपणावसरे न सङ्गतम् ।

एवं प्राप्ते ब्रूमः—तत्-तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतं आपीतेः—आसंसारमोक्षात् सम्यग्ज्ञाननिमित्तात् अवतिष्ठते। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' (क. उ. ५।७) इत्यादिसंसारव्यपदेशात्। अन्यथा हि, सर्वः प्रायणसमय

---

यथा, राज्ञो मार्गप्रतिपत्त्युपयोगिरथगजादिसाहित्ये सति झटिति मार्गगमनमेव भवति न तु मध्ये क्वचिदप्यवस्थानम्, एवं, प्रयतो जीवस्य मार्गप्रतिपत्त्युपयोगिप्राणादिपरिष्वङ्गे सति झटिति शरीराद्बहिर्निर्गमनमेव, न तु शरीरमध्ये परस्यां देवतायामवस्थानं वक्तव्यम्। मार्गप्रतिपत्तौ तस्योपयोगाभावात्। अतोऽत्र परदेवतासम्पत्तिः आत्यन्तिकी वक्तव्या। न च कर्मविद्याविधिविरोधः। एतस्य वाक्यस्य प्रकरणानुसारेण निर्विशेषविद्वद्विषयत्वोपपत्तेः। न च—तस्मिन्नुत्क्रान्तिप्रतिषेधो वक्ष्यते—इति वाच्यम्। द्विविधाह्युत्क्रान्तिः प्राणानाम्। एका तावत् स्वस्वगोलकेभ्यः शरीरमध्ये एव हृदयं प्रति 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुतिसिद्धा, अपरा 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतिसिद्धा शरीराद्बहिः। तत्र, द्वितीया निर्विशेषविदो मा भूत्। आद्या तु भवतु, कानुपपत्तिः। ततश्च एतद्वाक्यानुसारेण सविशेषविद्यायामुत्क्रान्तिविशेषचिन्तनं न लभ्यते—इत्येतावान् पूर्वः पक्षः।

न चैवंसति एकस्यैव 'सम्पद्यते' इतिपदस्य वागादिषु वृत्तिलयपरत्वं तेजःपरस्यांदेवतायामित्यत्र तु आत्यन्तिकलयपरत्वमिति वैरूप्यं प्रसज्यते—इति वाच्यम्। पुनस्संसारदर्शनानुपपत्त्या हि यथाश्रुतार्थपरतां परित्यज्य लोकानुसारतो वृत्तिलयार्थतोपगता। प्रकृतवाक्यस्य विद्वद्विषयताशङ्कायां तु तत्र पुनस्संसारानपेक्षणात् वागादिष्वप्यात्यन्तिकलयोपपत्तेः।

अस्तु वा प्रकृतवाक्यस्य निर्विशेषविदतिरिक्तविषयता, तथापि, उत्क्रान्त्युपगमे, लिङ्गशरीरस्य महत्त्वे सति रूपवत्त्वात् बहिर्गमनावसरे उपलम्भः स्यात्-इत्यादिशङ्काशूकोद्धारणार्थोऽप्ययमारम्भः।

अयमत्र सिद्धान्ताभिप्रायः। नास्य प्रकरणानुसारेण निर्विशेषविद्विषयता उपगन्तुं न्याय्या। तदीयेन्द्रियादीनां स्वप्नप्रपञ्चप्रविलयवत् युगपदेव अधिष्ठाने ब्रह्मणि प्रविलयस्य वक्तव्यतया वाङ्मनसीत्यादिक्रमानुपपत्तेः। अतो न आन्तरोत्क्रान्तिरपि सम्भाविता। अतोऽस्य वाक्यस्य सुषुप्त्यादिवाक्यवत् सर्वसाधारण्यमेव

एव उपाधिप्रत्ययस्तमयात् अत्यन्तं ब्रह्म संपद्येत। तत्र, विधिशास्त्रमनर्थकं स्यात् विद्याशास्त्रं च। मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात् तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवद्बीजभावावशेषैव एषा सत्संपत्तिरिति ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

तच्च इतरभूतसहितं तेजो जीवस्यास्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति। तथाहि नाडीनिष्क्रमणश्रवणादिभ्यः अस्य सौक्ष्म्यमुपलभ्यते। तत्र, तनुत्वात् संचारोपपत्तिः स्वच्छत्वाच्च अप्रतीघातोपपत्तिः। अत एव च देहान्निर्गच्छत् पार्श्वस्थैर्नोपलभ्यते ॥ ९ ॥

---

पूर्वोक्तं उपगन्तुं न्याय्यम्। न च तस्मिन्नपि किञ्चित्कालं प्रायणसमये ब्रह्मण्यवस्थानकथनमनुपयुक्तमिति वाच्यम्। उत्क्रान्तिजनितवेदनापनोदनाय विश्रान्त्यर्थतासम्भवात्। विश्रान्तिप्रयोजनं तु तदोकोग्रज्वलनमित्यधिकरणे स्फुटं भविष्यति। निर्विशेषविद्व्यतिरिक्तविषयत्वे च, कर्मविद्याविधिसार्थक्याय अनात्यन्तिकलयपरतैव वाक्यस्य युक्ता—इति ॥ ८ ॥

अनेकावयवारब्धस्यापि सूक्ष्मता [1]त्रसरेण्वादिवत्। पार्श्वस्थैरनुपलम्भस्तु, उद्भूतरूपवत्त्वाभावात् सूक्ष्मशरीरस्य। यथा च नायनरश्मीनां [2]स्वभावविशेषात् [3]काचादिभिः अप्रतिघातः, एवं सूक्ष्मशरीरस्य शरीरान्निर्गमने न प्रतिघातः। स्वच्छत्वं अप्रतिघातप्रयोजक(स्व)रूपविशेषः ॥ ९ ॥

---

1. **त्रसरेण्वादिवदिति** त्रसरेण्वादीनां जालसूर्यमरीचिभ्योन्यत्रानुपलम्भात परिमाणतस्सौक्ष्म्यं इति भावः।

2. **स्वभावविशेषात्**—अनुद्भूतरूपस्पर्शवत्त्वमत्र स्वभावविशेषः, एतदेव च स्वच्छत्वं द्रष्टव्यम्।

3. **काचादिभिरिति** अभ्रसमूहः आदिशब्दार्थः काचद्रव्यमभ्रसमूहश्च हि स्वच्छस्वभावस्य नेत्रतेजसो न प्रतिघातकम्, तदन्तरितवस्तुनोऽपि नेत्रेणोपलम्भात्।

## नोपमर्देनातः ॥ १० ॥

अतएव-सूक्ष्मत्वात् न अस्य स्थूलस्य शरीरस्य उपमर्देन दाहादि-निमित्तेन इतरत् सूक्ष्मं शरीरं उपमृद्यते ॥ १० ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव च सूक्ष्मस्य शरीरस्य एष ऊष्मा, यं एतस्मिन् शरीरे संस्पर्शेन ऊष्माणं विजानन्ति । तथा हि मृतावस्थायां अवस्थितेऽपि देहे विद्यमाने-ष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते, जीवदवस्थायामेव तूपलभ्यते, इत्यतः उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति । तथा च श्रुतिः—'उष्ण एव जीविष्यन् शीतो मरिष्यन्' इति ॥ ११ ॥

६ प्रतिषेधाधिकरणम्

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

'अमृतत्वं चानुपोष्य' इत्यतो विशेषणात्, आत्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः । तत्रापि केनचित्कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति ।

---

स्पष्टम् ॥ १० ॥

सूक्ष्मशरीरस्योत्क्रान्तिं प्रसाध्य प्रसङ्गात् तत्र प्रमाणोपन्यासार्थं इदं सूत्रम्। यद्यपि 'तस्यैषा दृष्टिः यदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति' इतिवाक्यं जाठराग्निविषयम्, तथापि, जाठराग्नेः सूक्ष्मशरीरान्तर्गतिविवक्षया तस्यैवायमूष्मेति प्रतिपादनात् नानुपपन्नम् ॥ ११ ॥

**इति तदापीत्यधिकरणम्**

प्रस्तुताया उत्क्रान्तेः निर्विशेषवित्सु अपवादकरणात् सङ्गतिः ।

नतस्यप्राणाउत्क्रामन्तीत्यादिवाक्यानां शरीरापादानकोत्क्रान्तिप्रतिषेधकत्व-शारीरापादानकोत्क्रान्तिप्रतिषेधकत्वान्यतरकोट्यनिर्धारणात् संशयः । यदि हि नतस्यप्राणाउत्क्रामन्तीत्यादिवाक्यानां शारीरापादानकोत्क्रान्तिप्रतिषेधपरता, तदा, नतस्यप्राणाउत्क्रामन्तीत्यादिवाक्यानां विदुषस्सकाशात् प्राणा नोत्क्रामन्ति—न वियुज्यन्ते मरणकाले, अपि तु तेन संश्लिष्टा एव भवन्ति—इत्यर्थस्सिध्यति । तथा च, एतेषां वाक्यानाम् 'एष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा' इत्यादिवाक्यप्रति-

अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. का. ४।४।६) इत्यतः परविद्याविषयात् प्रतिषेधात् न परब्रह्मविदो देहात् प्राणानामुत्क्रान्तिरस्ति-इति चेत्। नेत्युच्यते। यतः, शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां न शरीरात्। कथमवगम्यते? 'न तस्मात् प्राणा उत्क्रामन्ति' (बृ. उ. मा. ४।२।८) इति शाखान्तरे पञ्चमीप्रयोगात्। संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते। तस्मादिति च प्राधान्यात् अभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते न देहः। न तस्मात्—उच्चिक्रमिषोः जीवात् प्राणा अपक्रामन्ति, सहैव तेन भवन्ति-इत्यर्थः। सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहात्-इति ॥१२॥

एवं प्राप्ते प्रत्युच्यते—

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

नैतदस्ति-यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिः उत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वात्-इति। यतः देहापादान एव उत्क्रान्तिप्रतिषेधः एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते।

तथाहि—आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति' (बृ. उ. ३।२।११) इत्यत्र 'नेति होवाच याज्ञवल्क्यः' इति अनुत्क्रान्तिपक्षं परिगृह्य, न तर्ह्ययं अनुत्क्रान्तेषु प्राणेषु मृतः—इत्यस्यामाशङ्कायाम्, 'अत्रैव समवनीयन्ते' इति प्रविलयं प्राणानां प्रतिज्ञाय,

---

पाद्यशरीरावयवापादानकोत्क्रान्तिविरोधित्वाभावात्, 'परब्रह्मविदोऽपि देहादुत्क्रम्य लोकान्तरं प्राप्य तत्रामृतत्वं' इत्यर्थस्सिध्यति। शरीरापादानकोत्क्रान्तिप्रतिषेधपरत्वे तु प्राणानां बहिर्निर्गमनाभावेन लोकान्तरप्राप्तेरसम्भवात् इहैवामृतत्वमिति।

प्रतिषेधादितिचेदित्यंशः पूर्वपक्षावसरे सिद्धान्तिशङ्कानुवादार्थः, तं व्याचष्टे-अथाकामयमान इति। सिद्धान्तनिराकरणमुखेन पूर्वपक्षप्रतिपादनार्थो नशारीरादित्यंशः, तं व्याचष्टे—नेत्युच्यत इति। सम्बन्धविशेषे व्यवस्थाप्यत इति। यथा नटस्यश्रृणोतीति अपादानेऽपि सम्बन्धमात्रविवक्षया षष्ठी, एवं 'न तस्य प्राणाः' इत्यत्रापि अपादान एव सम्बन्धमात्रविवक्षया षष्ठी भविष्यति इति भावः ॥ १२ ॥

**तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेः उच्छ्वयनादीनि समामनन्ति। देहस्य चैतानि स्युः, न देहिनः।**

---

उच्छ्वयनादीनि समामनन्तीति। ननु, 'यत्रायं पुरुषो म्रियते' इति पूर्ववाक्ये प्राधान्येन पुरुषः प्रस्तुतः, अतः उदस्मात्प्राणाःक्रामन्तीत्यत्रापि अपादानतया इदंपदेन पुरुष एव परामर्शनीयः। तथा च प्रश्नवाक्यस्य देह्यपादानकत्वविषयकतया नेतिहोवाचेतिनिर्णयवाक्यमपि देह्यपादानकोत्क्रान्तिप्रतिषेधपरमेव भविष्यति। एवं सति उच्छ्वयनादिकं देहधर्मभूतं यद्यपि सउच्छ्वयतीत्यत्र तत्पदपरामृष्टे उत्क्रान्तिनिषेधावधौ देहिनि नान्वेति, तथापि, अत्र देहिपरस्य तत्पदस्य देहे लक्षणा भविष्यति। स उच्छ्वयति—तत्सम्बन्धी देह उच्छ्वयतीति यावत्। न च उपसंहारस्वारस्यानुरोधेन उपक्रमगतस्य उदस्मात्प्राणाइति इदंपदस्यैव देहपरता कल्पयितुं न्याय्या। तस्मात् नात्र देहापादानकोत्क्रान्तिप्रतिषेधावगमः—इति चेत्;

उच्यते—उपसंहारानुसरणे भूयोनुग्रहश्चेल्लभ्यते तदा, उपक्रमोऽपि अन्यथयितव्य इति [1]प्रहतमेव। ततश्च, प्रकृते न सउच्छ्वयत्याध्मायतीत्यस्यैव वाक्यस्य 'देह्यपादानकोत्क्रान्तिप्रतिषेधपर उपक्रमः' इति पक्षे अनुपपत्तिः, अपि तु 'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति' (नामेति) इति यः उत्तरत्र आर्तभागप्रश्नः सोऽप्यनुपपन्न एव। अयं प्रश्नः तदोपपद्यते, यदि पूर्ववाक्ये 'विदुषः प्राणाः देहात् नोत्क्रम्य लोकान्तरं गच्छन्ति, अपि तु, अत्रैव लयं यान्ति' इत्यर्थो विवक्ष्येत। तदा 'यदि लीनत्वात् प्राणा विद्वांसं जहति तं किं न जहाति' इति प्रश्नः उत्तिष्ठति। देह्यपादानकप्रतिषेधपरत्वे तु, विदुषि किञ्चित्पदार्थत्यागाप्रतिपादनात् किमेनंनजहातीति प्रश्नः ['नामेति' इति]नाममात्रंनजहातीत्युत्तरं च असङ्गतमेव स्यात्। अतः यत्रायंपुरुषइति पुरुषे प्रस्तुतेऽपि 'उदस्मात् प्राणाः' इत्यत्र पुरुषसम्बन्धिशरीरमेव परामृश्यते। अपि च 'यत्रायं पुरुषः' इति पूर्ववाक्ये, यत्र-शरीरे अयं—पुरुषो म्रियते इति शरीरमपि प्रस्तुतमेवेति, न काचिदनुपपत्तिः।

[2]अथापि स्यात्—'यत्रायं पुरुषो म्रियते' इति न विशिष्य विद्वत्पुरुषोपादानम्, अपि तु पुरुषसामान्योपादानम्।

---

1. प्रहतमेव-डिण्डिमताडितमेव, प्रसिद्धमिति यावत्।

2. **अथापिस्यात् इत्यादिः** श्रुतप्रकाशिकायां स्वसिद्धान्ततया प्रतिपाद्यते। "अथापिस्यात्" इति शङ्कायाश्च "अत्रोच्यत" इत्यादिना समाधानम्।

ननु—आर्तभागस्य प्रथमः प्रश्नः 'याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहाः' इति सविषयेन्द्रियगोचरः । तस्योत्तरं 'अष्टौ ग्रहाः' इत्यादि । पुनश्च 'याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नम्' इति द्वितीयः प्रश्नः । तस्योत्तरं 'अग्निर्वै मृत्युस्सोऽपामन्नं अपपुनर्मृत्युञ्जयति' इति । पुनश्च तृतीयः प्रश्नः 'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते' इत्यादि । तथा च, मृत्युतरणहेतुभूतदेवताविज्ञानवान् द्वितीयप्रश्नोत्तरे प्रस्तुतः, स एव यत्रायंपुरुषइति विवक्ष्यते । अतो विद्वद्विषयमेवेदं वाक्यम्—इति चेत्,

न-एतावता हि [1]अपमृत्युतरणेहेतुभूतदेवताविज्ञानवानेव इह गृह्यते । न च तस्मिन् शरीरादुत्क्रान्तिः प्रतिषेद्धुं शक्या, परब्रह्मविद्व्यतिरिक्तानां सर्वेषां संसारोपगमात् ।

अपि च 'यत्रायं पुरुषो म्रियते किमेनं न जहाति' इति प्रश्नानन्तरं 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' इत्यादिना प्रकृतं पुरुषं यत्रास्येतिपरामृश्य, मरणे सति कायं तदा पुरुषोभवतीति प्रश्ने 'कर्म हैव तदूचतुः अथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः' इति तस्य कर्माश्रयता प्रतिपादिता । अतोऽपि अब्रह्मविदेव इह सन्दर्भे प्रतिपाद्यत इति गम्यते । अतः कथमिह शरीरादुत्क्रान्तिः प्रतिषेद्धुं शक्या । तस्मात् 'उदस्मात् प्राणाः क्रामन्त्याहो नेति नेतिहोवाच याज्ञवल्क्यः' इति वाक्यमपि शारीरापादानकोत्क्रान्तिप्रतिषेधपरम् । 'न तस्मात् प्राणा उत्क्रामन्ति' इति तु शारीरापादानकोत्क्रान्तिप्रतिषेधपरमिति स्पष्टमेव । ततश्च सउच्छ्वयतीत्यादिवाक्यं लक्षणयैव योजनीयम् । किमेनंनजहातीत्यपि, 'प्राणा एनं न जहति अन्यदपि किमेनं न जहाति' इत्यभिप्रायम्—इति चेत्;

अत्रोच्यते—'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति' इति परब्रह्मविद्विषयमेव । पूर्ववाक्ये ब्रह्मविद एव प्रस्तुतत्वात् । 'याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नम्' इत्यत्र संसारमृत्युतरणहेतुभूता हि देवता पृष्टा । यदिदंसर्वंमृत्योरन्नमित्यत्र मृत्युपदेन, सर्वेषां प्राणिनां बन्धनहेतुभूतं ग्रहातिग्रहलक्षणं यद्वस्तु तद्विवक्षितम्, पूर्ववाक्ये तस्य प्रस्तुतत्वात् । ग्रहातिग्रहलक्षणबन्धननिदाननाशिका च देवता मृत्युमृत्युभूता (देवता) परं ब्रह्मैव, तस्य वेदान्तवृत्त्यभिव्यक्तस्य ग्रहातिग्रहोपादानभूताविद्यानिवर्तकत्वात् ।

---

1. अपमृत्युरणेहेतुभूतेत्यादि देवताऽत्र परब्रह्मातिरिक्तेति पूर्वपक्षिणोऽभिमानः ।

तत्सामान्यात् 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्रापि अभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः, यद्यपि प्राधान्यं देहिनः-इति व्याख्येयं येषां पञ्चमीपाठः । येषां तु षष्ठीपाठः तेषां विद्वत्संबन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वात् अस्य वाक्यस्य, देहापादानैव सा प्रतिषिद्धा भवति, देहादुत्क्रान्तिः प्राप्ता न देहिनः ।

---

न च तथासति 'अग्निर्वै मृत्युस्सोऽपामन्नम्' इत्युत्तरासाङ्गत्यमिति वाच्यम् । मृत्युमृत्युभूताया देवतायाः 'यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनम्' इति शास्त्रतो ब्रह्मरूपत्वेन प्रसिद्धत्वात् तामनुक्त्वा, मृत्युमृत्युमपि सम्भावयितुं लौकिकदृष्टान्तमात्रं अग्निर्वैमृत्युस्सोऽपामन्नमिति प्रतिपाद्यत इति नोत्तरस्य प्रश्नानानुगुण्यम् । अतः उदस्मात्प्राणाःक्रामन्तीति वाक्यं पूर्वोत्तरसन्दर्भपर्यालोचनया परब्रह्मविदश्शरीरादुत्क्रान्तिनिषेधपरमेव ।

न च आर्तभागसन्दर्भस्य ब्रह्मविद्विषयत्वे कर्माश्रयताप्रतिपादनमसङ्गतमिति वाच्यम । तस्य प्रासङ्गिकत्वात् । ग्रहातिग्रहलक्षणं हि बन्धन, अविदुषां संसारप्रयोजकत्वेन विदुषां च नाशनीयत्वेन प्रस्तुतम् , तत्र 'ग्रहातिग्रहलक्षणस्यापि संसारहेतोः किं प्रयोजकम्' इत्यभिप्रायेणैव यत्रास्यपुरुषस्येत्यादि लोकसिद्धाविद्वत्पुरुषविषयकम् , न तु प्रकृतविद्वत्पुरुषविषयकम् , अयोग्यत्वात् ।

तत् सिद्धं 'उदस्मात् प्राणाः' इत्यादिवाक्यानुसारेण 'न तस्मात् प्राणा उत्क्रामन्ति' इत्यपि देहादुत्क्रान्तिप्रतिषेधपरम् ।

न च-'योऽकामो निष्कामः' इति पूर्ववाक्ये विदुषः प्रस्तुततया तस्मादितिपदेन तस्य परामर्शे, कथं शरीरादुत्क्रान्तिप्रतिषेधपरं स्यात्-इति वाच्यम् । शरीरपरेणापि तस्मादितिपदेन आध्यासिकाभेदमालम्ब्य शरीरलक्षणोपपत्तेः ।

तदिदमाह--अभेदोपचारेणेति । अवश्यं च इत्थमेवोपगन्तव्यम् । यदि हि, तस्मात्-विदुषस्सकाशात् प्राणा नोत्क्रामन्ति अपि तु तेन सहायान्ति-इत्यर्थो विवक्ष्येत, तदा 'अत्रैव समव[नी](ली)यन्ते' इति इहैवलयप्रतिपादको वाक्यशेषः कदर्थितो भवेत् । देहादुत्क्रान्तिः प्राप्तेति । 'चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्का

अपि च 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. ४।४।२) इत्येवं अविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनं च दर्शयित्वा,

---

मन्ति' इतिपूर्ववाक्यपर्यालोचनया लोकतश्च देहादेव प्राणानामुत्क्रान्तिः प्राप्ता। अतः देहापादानकोत्क्रान्तिप्रतिषेधपरत्वे नतस्येतिवाक्यं अप्रसक्तप्रतिषेधः स्यात्।

न च–'अत्र ब्रह्म समश्नुते' इतिवाक्यपर्यालोचनया प्राणानामिहैवलयः प्रसक्तः, स निषिध्यते नतस्यप्राणाउत्क्रामन्तीति–[1]इहैव लयेन विदुषस्सकाशात् प्राणा न वियुज्यन्ते अपि तु अत्रैव समवलीयन्ते–विदुष्येव संपृक्ता भवन्ति-इति। एवंसति 'अत्र ब्रह्म समश्नुते' इति वाक्यस्य यथार्थग्रहणे प्रसक्तस्य प्राणवियोगस्य वारितत्वात्, अवियुक्तप्राणस्य च अत्रैव मुख्याया ब्रह्मप्राप्तेः असम्भवात्, साक्षात्काररूपा प्राप्तिः 'समश्नुते' इत्यनेन विवक्षिता–इति वाच्यम्।

'अत्र ब्रह्म समश्नुते' इति वाक्येन यथाश्रुतेन अत्रैवब्रह्मप्राप्त्यभिधायकेन विदुषि प्राणलयाक्षेपेऽपि, न ऊर्ध्वाक्रमणरूपोत्क्रान्तिः विद्वदपादानका प्राणानां प्राप्ता भवति। ततश्च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यादिवाक्यसिद्धदेहापादानकोत्क्रान्तिः अविद्वत्साधारण्येन विदुष्यपि प्रसक्ता नतस्यप्राणाउत्क्रामन्तीति निषिध्यते। एवंसति, उत्क्रामन्तीत्यपि न वियोगलक्षकं भविष्यति। अनुत्क्रान्तानां च प्राणानां विदुष्येव लयं 'अत्रैव समवलीयन्ते' इति वाक्यं स्वारस्येन प्रतिपादयति। विगलितोपाधेश्च ब्रह्मात्मनावस्थानरूपां ब्रह्मप्राप्तिं 'अत्र ब्रह्म समश्नुते' इति वाक्यं प्रतिपादयति। तथा च, सर्वेषां वाक्यानां देहापादानकोत्क्रान्तिपक्षे एव [2]स्वरसतया न देहापादानकोत्क्रान्तिप्रतिपादकता आस्थेयेति भावः।

ननु-नतस्यप्राणाउत्क्रामन्तीत्यत्र अपादानापेक्षायां अन्तरङ्गप्रत्यासत्त्या विदुष एवोपस्थितस्य अन्वये सति, कथं वाक्यान्तरपर्यालोचनया शरीरावयवानामपादानता भवेत्–इत्याशङ्क्याह—अपि च चक्षुष्टो वेति। इति नु कामयमानः' इत्युपसंहारसमभिव्याहृतेन 'अथाकामयमानः' इति विद्वद्विषयकोपक्रमेण हि अयमर्थोऽव-

---

1. इहैवलयेन वियुज्यन्ते-इति न-इत्यन्वयः।

2. **स्वरसतयेति** आर्तभागप्रश्नोत्तरसन्दर्भस्य विजिगीषुकथान्तर्गतत्वात्, तत्रत्यपञ्चप्रश्नेषु "चतुर्थपञ्चमायोः अविद्वद्विषयता, तृतीयप्रश्नस्य विद्वद्विषयता" इति व्याख्यानमेव विजिगीषुकथात्वपोषकतया स्वरसमित्यपि अभ्युच्चयो द्रष्टव्यः।

'इति नु कामयमानः' (बृ. ४।४।६) इति उपसंहृत्याविद्वत्कथाम्, 'अथाकामयमानः' (बृ. ४।४।६) इति व्यपदिश्य विद्वांसं, यदि तद्विषयेऽपि उत्क्रान्तिमेव प्रापयेत् असमञ्जस एव व्यपदेशः स्यात् ।

तस्मात् अविद्वद्विषये प्राप्तयोः गत्युत्क्रान्त्योः विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय । न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मणः उत्क्रान्तिर्गतिर्वोपपद्यते, निमित्ताभावात् । 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति ॥ १३॥

## स्मर्यते च ॥ १४ ॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः—'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः' (म. भा. शा. २३९।२३) ॥ इति ।

ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते—'शुकः किल वैयासकिः मुमुक्षुः आदित्यमण्डलमभिप्रतस्थे, पित्रा च अनुगम्याहूतो भो इति प्रतिशुश्राव'-इति ।

न । सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम्, सर्वभूतदृश्यत्वाद्युपन्यासात् । न हि अशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः । तथाच तत्रैवोपसंहृतम्—'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्' (म. शा. ३३३।२०) इति ।

---

गम्यते—अविदुषो [यदुक्तं] (यदुत्क्रान्तिः) तद्वैपरीत्येन विद्वान् सम्पद्यते—इति । अविदुषि च शरीरावयवापादानकोत्क्रान्तिः परलोकगमनं पुनस्सञ्चरणं इत्यादिकं निरूपितम्, तत् विदुषि नास्तीति उपक्रमे एव निर्णये सति, कथं नतस्यप्राणा-उत्क्रामन्तीतिवाक्ये, उपस्थितत्वेन विद्वानेव अपादानत्वेन अध्याहर्तुं शक्यते—इति भावः ॥ १३ ॥

सम्यक्—स्वाभेदेन । पद्यते-मार्गद्वयेन प्राप्यते यत् पुण्यफलम्, तद्रहितस्य मार्गे—ब्रह्मविद्यारूपे पदैषिणो देवा मुह्यन्ति—इत्यन्वयः । उपरिष्टात्-कार्यंबादरिरित्यधिकरणे ॥ १४ ॥

इति प्रतिषेधाधिकरणम्

तस्मात् अभावः परब्रह्मविदो गत्युत्क्रान्त्योः। गतिश्रुतीनां तु विषयं उपरिष्टाद्व्याख्यास्यामः ॥ १४ ॥

७ परसम्पत्त्यधिकरणम्

## तानि परे तथा ह्याह ॥ १५ ॥

तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदः

---

'एवमेवास्य परिद्रष्टुरिमाष्षोडकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुतिः, यथा नद्यः समुद्रं पाप्य अस्तं गच्छन्ति एवमेव सप्राणमसृजतेतिश्रुत्युपक्रान्ताः प्राणाद्या जीवोपाधयः पुरुषपदोदिते परमात्मनि लयं [गच्छन्ति इति] प्रतिपादयति। 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति श्रुतिस्तु, कलाशब्दोदितानां जीवोपाधीनां प्रतिष्ठापदोदितासु असाधारणस्वस्वप्रकृतिषु पृथिव्यादिषु लयं प्रतिपादयति। अतः श्रुतिविप्रतिपत्तेः संशयः।

पूर्वस्मिन्नधिकरणे विद्वदुपाधीनामुत्क्रान्तिर्नास्तीत्युक्तम्, तद्विषये एव विचारान्तरप्रवर्तनात् सङ्गतिः।

तत्र पूर्वः पक्षः—घटादिकार्याणां हि असाधारणस्वस्वप्रकृतिष्वेव लयो दृष्टः, एवं विद्वदुपाधीनामपि असाधारण [स्वस्व] प्रकृतिष्वेव पृथिव्यादिषु लयो भविष्यति। तथा च 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति श्रुतिरेव मुख्यया वृत्त्या उपपादिता भवति। पुरुषंप्राप्यास्तंगच्छन्तीति, कलालयाधारभूतपृथिव्यादिकं प्रति पुरुषस्याधारतया कथञ्चिद्योजनीया। एवञ्च ज्ञानकृतोऽपि लयो [1]घटादिलौकिकलयवत् सावशेष एव, कलासूक्ष्मावस्थाविशिष्टपृथिव्यादिपरिशेषात्—इति।

भवेदेवम्, यदि ज्ञाने सति पृथिव्यादिपरिशेषो भवेत्, तत्त्वज्ञानेन तु [2]अविद्यामूलभूतस्य कृत्स्नस्यापि अविद्यया सह निरस्ततया पृथिव्यादिपरिशेषाभावात् पुरुषपर्यन्त एव कलाप्रविलय उपगन्तव्यः। दृश्यते हि लोकेऽपि अग्निना पटे दग्धे उपादानभूततन्त्वाद्यवस्थाभिः (सह) पटदाह इति। 'गताः कलाः' इति श्रुतिः लौकिकभ्रान्तिमूलकार्थानुवादिनी-इति सिद्धान्तमाह-तानि पुनरित्यादिना ॥१५॥

इति परसम्पत्त्यधिकरणम्

---

1. घटादीनां दण्डपातादिजन्यलयवत्।
2. अविद्यामूलभूतस्येति बहुव्रीहिः।

तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते । कस्मात् ? तथा ह्याह श्रुतिः 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्र. उ. ६।५) इति ।

ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' (मु. उ. ३।२।७) इति विद्वद्विषयैव अपरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह स्म ।

न । सा खलु व्यवहारापेक्षा, पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति । इतरा तु विद्वत्प्रतिपत्त्यपेक्षा, कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव संपद्यत इति । तस्माददोषः ॥ १५ ॥

८ अविभागाधिकरणम्

## अविभागो वचनात् ॥ १६ ॥

स पुनः विदुषः कलाप्रलयः किं इतरेषामिव सावशेषो भवति आहोस्वित् निरवशेष इति । तत्र प्रलयसामान्यात् शक्त्यवशेषताप्रसक्तौ ब्रवीति अविभाग एवेति । कुतः ? वचनात् । तथाहि कलाप्रलयमुक्त्वा वक्ति

---

यत्तावदुक्तं 'तत्त्वज्ञानेन अविद्याया निरस्ततया पुरुषपर्यन्तः कलाप्रविलयः' इति, तन्न सम्भवति । एकस्य तत्त्वज्ञाने सति अविद्यायाः प्रविलीनत्वेन तन्मूलककृत्स्नप्रपञ्चविलये सति सर्वेषामेव युगपदेव असंसारिता भवेत् । अतः सावशेष एव कलाप्रविलयः—इत्यभिप्रायेण पूर्वपक्षयति—तत्र प्रलयसामान्यादिति ।

पुरुषंप्राप्यास्तंगच्छन्तीत्युक्तौ सावशेषताशङ्कायां 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते, स एषोऽकलोऽमृतो भवति' इति पुरुषमात्रपरिशेषता प्रतिपाद्यते । अतो वचनबलात् न सावशेषलय उपगन्तव्यः । न च निरवशेषलये संसारिशून्यतापत्तिः । अज्ञाननानात्वस्वीकारेण तदीयतत्त्वज्ञानेन तदीयाज्ञाननिवृत्त्या तन्मूलकस्य [1]प्रपञ्चैकदेशस्य अपगमेऽपि अवशिष्टप्रपञ्चसत्त्वेऽनुपपत्त्यभावात्—इति सिद्धान्तयति—अविभागएवेतीति ॥ १६ ॥

इति अविभागाधिकरणम्

---

1. प्रपञ्चैकदेशस्येति प्रतिजीवं प्रपञ्चभेदः, तेषां समुदायः प्रपञ्चशब्दस्यार्थः । तत्तज्जीवाज्ञानमूलक प्रपञ्च प्रपञ्चैकदेशः, तस्येत्यर्थः ।

'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' (प्र. उ. ६।५) इति। अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः। तस्मात् अविभाग एवेति ॥ १६ ॥

९ तदोकोऽग्राधिकरणम्

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता। संप्रति तु अपरविद्याविषयामेव चिन्तां अनुवर्तयति।

समाना चासृत्युपक्रमात् विद्वदविदुषोरुत्क्रान्तिः—इत्युक्तम्। तमिदानीं सृत्युपक्रमं दर्शयति। तस्य उपसंहृतवागादिकलापस्य उच्चिक्रमिषतो विज्ञानात्मनः ओकः-आयतनं हृदयम्, 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुतेः। तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना च उत्क्रान्तिः श्रूयते—तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' (बृ. उ. ४।४।२) इति।

सा किं अनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चित् विदुषो विशेषनियमः-इति विचिकित्सायां, श्रुत्यविशेषादनियमप्राप्तौ आचष्टे—

---

उत्क्रान्तिप्रसक्तानुप्रसक्तं निरूप्य पुनरपि उत्क्रान्तिमेव निरूपयति-समाप्ता प्रासङ्गिकी परविद्यागता चिन्तेति।

'चक्षुष्टो वा मूर्ध्नो वा' इत्यादिश्रुतिः सर्वसाधारण्येन चक्षुरादिद्वारत्वमनियतं उत्क्रान्तौ प्रतिपादयति। 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुतिस्तु अवान्तरामृतत्वप्राप्तौ मूर्धन्यनाड्या उत्क्रमणं नियच्छति। नाड्यन्तराणां तु विष्वग्विद्यमानानां लोकान्तरप्रयोजकोत्क्रमणहेतुत्वं प्रतिपादयति। तत्र उपासकानां मूर्धन्यनाड्यैवोत्क्रमणं नियतं उतानियतमिति संशये—

समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च, मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्यस्त्वितरे। कुतः? विद्यासामर्थ्यात्। यदि विद्वानपि इतरवत् यतःकुतश्चिद्देहदेशादुत्क्रामेत् नैव उत्कृष्टं लोकं लभेत, तत्र, अनर्थिकैव विद्या स्यात्। तच्छेषगत्यनुस्मृतियोगाच्च– विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिः अनुशीलयितव्या विद्याविशेषेषु विहिता, तामभ्यस्यन् तयैव प्रतिष्ठत इति युक्तम्। तस्मात् हृदयालयेन ब्रह्मणा सुपासितेन अनुगृहीतः–तद्भावं समापन्नः विद्वान् मूर्धन्ययैव शताधिकया-शतादतिरिक्तया एकशततम्या नाड्या निष्क्रामति-इतराभिरितरे।

तथाहि हार्दविद्यां प्रकृत्य समामनन्ति—

'शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥' (छा. उ. ८।६।६) इति॥ १७॥

---

नियमप्रापकाभावादनियमः। न च तयोर्ध्वमायन्नितिश्रुतिर्नियामिका। तया खलु, 'मूर्धन्यनाड्या यो निष्क्रामति सोऽमृतत्वं प्राप्नोति' इति प्रतिपाद्यते, न तु 'उपासको मूर्धन्यनाड्या' इति। न च उपासकस्यामृतत्वप्राप्तिर्नियता मरणानन्तरम्। येन अर्थात् तस्य मूर्धन्यनाडीसम्बन्धः सिद्धो भवेत्। नापि तस्य स्वप्रयत्नानुसारेण मूर्धन्यया नाड्या निष्क्रमणं सम्भवति। जीवद्दशायामेव नाडीद्वारविवेचनसामर्थ्याभावेन मरणवेदनायुक्तस्य सुतरां नाडीद्वारविवेचनासम्भवात्। न च 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते' इति श्रुत्या नाडीद्वारानिष्क्रमणोपयुक्तःहृदयाग्रवर्त्यन्तःकरणपरिणामविशेषरूपस्य ज्ञानस्य प्रतिपादनात् मरणसमये नाडीद्वारविवेकः सम्भवतीति वाच्यम्। एवमपि, हृदयस्याधोमुखतया तदग्रे जायमानस्य प्रद्योतस्य अधोमुखनाडीद्वारविवेकोपयुक्तत्वेऽपि मू[र्धा](र्धन्या)भिमुखब्रह्मनाडीद्वारविवेकोपयुक्तत्वानुपपत्तेः। अतः, यदा मूर्धन्यनाड्योत्क्रमणं तदैव ब्रह्मलोकप्राप्तिरिति, न विदुषो मरणानन्तरमेव ब्रह्मलोकप्राप्तिः, नाड्यन्तरेणापि उत्क्रमणस्य निवारयितुमशक्यत्वात्– इति पूर्वः पक्षः।

अयमत्र सिद्धान्ताभिप्रायः—उपासकस्य तावत् शरीरपातानन्तरं अमृतत्वमवश्यंभावि, तत्प्रतिबन्धकपुण्यपापयोरश्लेषविनाशयोः प्रतिपादितत्वात्। अमृत-

## १० रश्म्यधिकरणम्

# रश्म्यनुसारी ॥ १८ ॥

अस्ति हार्दविद्या 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (छा. उ. ८।१।१) इत्युपक्रम्य विहिता। तत्प्रक्रियायाम् 'अथ या एता हृदयस्य नाड्यः' (छा. उ. ८।६।१) इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसंबन्धमुक्त्वा, उक्तम् 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. उ. ८।६।५) इति। पुनश्चोक्तम् 'तयोर्ध्वमायन्नमृतत्वमेति'

---

त्वप्राप्तिश्च मूर्धन्यनाड्युत्क्रमणनियता, तयोर्ध्वमायन्निति श्रुतेः। तथा च, विदुषः श्रुतार्थापत्त्या मूर्धन्यनाड्या निष्क्रमणं सिद्ध्यति। न च मुमूर्षावेदनायुक्तस्य तदानीं द्वारविवेकानुपपत्तिः। 'तेजः परस्यां देवतायाम्' इति वाक्यसिद्धया सत्सम्पत्त्या विश्रमणेन मुमूर्षावेदनाया अपगतत्वात्। सत्स्वपि नाड्यन्तरद्वारेषु तदानीं मूर्धन्यनाडीगोचर एव हृदयाग्रप्रद्योतस्तु, विद्याशेषभूता या ब्रह्मनाडीद्वारागत्यनुस्मृतिः अहरहरनुचिन्तनारूपा, यश्चेश्वरानुग्रहः, तद्वशात् भवति। हृदयपुण्डरीकं च अधोमुखं नाडीचक्रपर्यन्तम्। ऊर्ध्वाभिमुखायाश्च ब्रह्मनाड्या जीवप्रवेशार्थं द्वारं नाभिचक्रप्रदेशे। नाभिचक्रमारभ्य मूर्धदेशपर्यन्तं हि ब्रह्मनाडी प्रसृता। तथा च, मरणकाले हृदयपुण्डरीकं प्रविष्टस्य जीवस्य, विद्यासामर्थ्येनामृतत्वप्राप्तेरवश्यम्भावात् विद्याशेषभूतहृदयनाडीध्यानाहितसंस्कारवशेन च मूर्धन्यनाडीद्वारगोचरहृदयाग्रप्रद्योते सति, ईश्वरानुगृहीतस्य हृदयपुण्डरीकान्तर्गत्या नाभिचक्रलग्नां मूर्धन्यनाडीं प्रविश्य मूर्ध्नो निर्गमने न काचिदनुपपत्तिः—इति।

पूर्वपक्षे, मार्गध्यानकाले [1]न ब्रह्मनाडीचिन्तनम्, सिद्धान्ते तु तच्चिन्तनम्—इति फलभेदः ॥ १७ ॥

इति तदोकोऽग्राधिकरणम्

मूर्धन्यनाडीनिष्क्रमणानन्तरं रश्मिसम्बन्ध इति, पूर्वाधिकरणेनास्य सङ्गतिः।

सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वेति। 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छति इमञ्चामुञ्च एवमेवैता आदित्यस्य रश्मयः उभौ लोकौ गच्छन्ति इमञ्चामुञ्च, अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः

---

1. न ब्रह्मनाडीचिन्तनमिति अनियतत्वादिति भावः।

(छा. उ. ८।६।६) इति । तस्मात् शताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते। तत किं अविशेषेणैव अहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वं आहोस्वित् अहन्येव-इति संशये सति, अविशेषश्रवणात् अविशेषेणैव तावत् रश्म्यनुसारीति प्रतिज्ञायते ॥ १८ ॥

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

अस्त्यहनि नाडीरश्मिसंबन्ध इति अहनि मृतस्य स्याद्रश्म्यनुसारित्वम्, रात्रौ तु प्रेतस्य न स्यात्, नाडीरश्मिसंबन्धविच्छेदात्-इति चेत्—

न—नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात् । यावद्देहभावी हि शिराकिरणसंपर्कः । दर्शयति चैतमर्थं श्रुतिः 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' (छा. उ. ८।६।२) इति । निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते, प्रतापादिकार्यदर्शनात् । स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वं ऋत्वन्तररजनीषु शैशिरेष्विव दुर्दिनेषु । 'अहरेवैतद्रात्रौ दधाति' इति च एतदेव दर्शयति । यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेण ऊर्ध्वमाक्रमेत, रश्म्यनुसारानर्थक्यं भवेत् । न ह्येतत् विशिष्याधीयते—यो दिवा प्रैति स रश्मीनपेक्ष्योर्ध्वमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैव-इति । अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षिकफला विद्येति अप्रवृत्तिरेव

---

प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' इतिवाक्येन ग्रामद्वयसंपृक्तमहामार्गवत् आदित्यरश्मीनां शरीरगतनाडीरारभ्यादित्यपर्यन्तं व्याप्तिर्दर्शिता । रश्मिपदस्योभयलिङ्गत्वात् 'ता आसु....तेऽमुष्मिन्' इत्यत्र स्त्रीलिङ्गपुल्लिङ्गतत्पदाभ्यां रश्मिपरामर्शः ॥ १८ ॥

सिद्धान्तेनोपक्रम्य, पूर्वपक्षनिरासपूर्वकं पुनस्सिद्धान्तप्रदर्शनार्थम् सूत्रम् । सुगमम् ।

अत्रापि, पूर्वपक्षे रश्मिसम्बन्धस्यानियतत्वात् न मार्गान्तर्गततया तस्य चिन्तनम्, सिद्धान्ते तु नियततया चिन्तनम्-इति फलभेदः ॥ १९ ॥

इति रश्म्यधिकरणम्

तस्यां स्यात्, मृत्युकालानियमात्। अथापि रात्रावुपरतोऽहरागममुदीक्षेत अहरागमेऽपि अस्य कदाचित् अरश्मिसंबन्धार्हं शरीरं स्यात् पावकादिसंपर्कात्। 'स यावत् क्षिप्येन्मनः तावदादित्यं गच्छति' (छा. उ. ८ ६.५) इति च श्रुतिः अनुदीक्षां दर्शयति। तस्मात् अविशेषेणैवेदं रात्रिंदिवं रश्म्यनुसारित्वम् ॥ १९ ॥

## ११ अयनाधिकरणम्

## अतश्चायनेऽपि दक्षिणे ॥ २० ॥

अतएव च—उदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च विद्यायाः, अनियतकालत्वाच्च मृत्योः, दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेः, भीष्मस्य च प्रतीक्षादर्शनात्, 'आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्' (छा. उ. ४।१५।५) इति च श्रुतेः, अपेक्षितव्यमुत्तरायणम्-इतीमामाशङ्कां अनेन सूत्रेण अपनुदति।

---

पूर्वस्मिन्नधिकरणे—रात्रौ प्रेतस्यापि रश्मिसम्बन्ध उपपद्यत एव, रात्रावपि सूर्यकिरणसद्भावात्। यदि तु रात्रौ मृतस्य सूर्यकिरणसम्बन्धो नोपेयेत, तदा 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इतिनियमवचनं पीड्येत, यदि तु दिवसप्रतीक्षा स्वीक्रियेत तदा त्वरावचनम्। यदि तु रात्रौ प्रेतस्य रश्मिसम्बन्धाभावात् विद्याफलं ब्रह्मलोकप्राप्तिः नास्तीत्युच्येत, तदा विद्यायाः पाक्षिकफलत्वेन मरणकालानिश्चयात् कस्यापि विद्यायां प्रवृत्तिर्न स्यात्—इति न्यायः स्थितः दक्षिणायनमृतेऽपि विदुषि अतिदिश्यते—

दक्षिणायनमृतोऽपि विद्वान् रश्मिभिस्सम्बद्ध्य ब्रह्मलोकं गच्छत्येव। नाडीकिरणसम्बन्धस्य यावद्देहभावितया दक्षिणायनेऽपि तस्यानपायात्। दक्षिणायनमृतस्याप्युत्तरायणोदीक्षणं तु नोपपद्यते मार्गप्रतिपत्त्यर्थम्। त्वरावचनविरोधात्। दक्षिणाय-[नमरणा] (ना) पराधमात्रेणार्चिरादिमार्गप्राप्त्यभावे, विद्यायाः पाक्षिकफलत्वप्रसक्त्या कस्यापि प्रवृत्ति र्नस्यात्—इति।

विशेषाशङ्कामाह—उत्तरायणेति। 'दिवसः शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्' इतिवचनादित्यर्थः। आपूर्यमाणपक्षादिति। यद्यप्यत्र आतिवाहिकाः प्रतिपाद्यन्ते, तथापि, तत्तत्कालाभिमानिनीनां

प्राशस्त्यप्रसिद्धिरविद्वद्विषया। भीष्मस्य तूत्तरायणप्रतिपालनं आचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं च। श्रुतेस्त्वर्थं वक्ष्यति 'आतिवाहिकास्तल्लिङ्गात्' (ब्र. सू. ४।३।४) इति॥ २०॥

ननु च—'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥' (भ. गी. ८।२३) इति कालप्राधान्येनोपक्रम्य, अहरादिकालविशेषः स्मृतौ अपुनरावृत्तये नियमितः, कथं रात्रौ दक्षिणायने वा प्रयातः अनावृत्तिं यायादिति।

अत्रोच्यते—

## योगिनः प्रति च स्मर्यते स्मार्ते चैते॥ २१॥

योगिनः प्रति च अयमहरादिकालविनियोगोऽनावृत्तये स्मर्यते। स्मार्ते चैते योगसांख्ये, न श्रौते। अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेषु अवतारः।

ननु—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।' 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' (भ. गी. ८।२४-२५) इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति।

---

देवतानां आतिवाहिकत्वं तत्कालमृतत्वे उपपद्यते इत्याशयः। अत एव 'यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ'। इति कालमुपक्रम्यैव 'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इतिगीतावचनमुपपद्यते।

प्राशस्त्यप्रसिद्धिरविद्वद्विषयेति। विदुषः सर्वप्रतिबन्धकनिवृत्त्या फलप्राप्तेरवश्यम्भावित्वात् दिवसइत्यादिवचनमविद्वद्विषयम्। भीष्मस्य मरणाय उत्तरायणप्रतीक्षणमपि यत् भारते प्रतिपादितं, तत् अविदुषः प्रति तत्प्राशस्त्यप्रतिपादनाय। पितृप्रसादात् भीष्मस्य स्वच्छन्दमरणं भारते एव प्रसिद्धम्॥ २०॥

सूत्रे योगपदं [योग] साङ्ख्यपरम्। पातञ्जलशास्त्रोक्तो योग इह योगपदेन विवक्षितः। कपिलोक्तो बुद्धिपुरुषविवेकः साङ्ख्यपदोदितः। अस्मिन् पक्षे गीतावचने योगपदमपि साङ्ख्यस्याप्युपलक्षणम्। तथा च, प्रत्यासत्त्या, स्मृत्युक्तः कालनियमः स्मृत्युक्तयोगसाङ्ख्यविषयः इति द्रष्टव्यः।

उच्यते—'तं कालं वक्ष्यामि' (भ. गी. ८।२३) इति स्मृतौ कालप्रतिज्ञानात्, विरोधमाशङ्क्य परिहार उक्तः। यदा पुनः स्मृतावपि अग्न्याद्या देवता एव आतिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥ २१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः

---

गीतावचनमपि अर्चिराद्यातिवाहिकविषयं इति वक्तुं शङ्कते—नन्विति। अभ्युपेत्यवादत्वं सूत्रस्य दर्शयति—उच्यत इत्यादिना। वास्तविकं गीतावचनार्थं स्वयमाह—यदा पुनरिति। अस्मिन् पक्षे 'यत्र काले' इति कालपदेनोपक्रमस्तु आतिवाहिकगणे कालाभिमानिदेवतासत्त्वात् तल्लक्षणार्थ एव। योगपदमपि कर्मोपासनात्मकयोगपरं गीतायां द्रष्टव्यम् ॥ २१ ॥

इति अयनाधिकरणम्

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां
चतुर्थाध्यायस्य द्वितीयः पादः

चतुर्थाध्याये तृतीयः पादः

१ अर्चिराद्यधिकरणम्

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तम् । सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते । नाडीरश्मिसंबन्धेनैका 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. उ. ८।६।५) इति । अर्चिरादिकैका 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' (बृ. उ. ६।२।१५) इति । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौ. उ. १।३) इत्यन्या । 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' (बृ. उ. ५।१०।१) इत्यपरा । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु. उ. १।२।११) इति चापरा ।

तत्र संशयः—किं परस्परं भिन्ना एताः सृतयः किं वा एकैवानेकविशेषणा-इति । तत्र प्राप्तं तावत् भिन्ना एताः सृतय इति । भिन्नप्रकरणगतत्वात् भिन्नोपासनाशेषत्वाच्च । अपिच 'अथैतैरेव रश्मिभिः'

---

पूर्वस्मिन् पादे उत्क्रान्तिर्निरूपिता, अस्मिन् पादे, उत्क्रान्त्यनन्तरभाविनी अर्चिरादिमार्गप्राप्तिरिति अर्चिरादिमार्गविषयको विचारः क्रियते—इति पादयोः पौर्वापर्यम् ।

[1]अत्र भिन्नप्रकरणगतत्वहेतुः, उपासनैक्येऽपि मार्गवैलक्षण्याम्नानं यत्र वर्तते शाखाभेदेन तदभिप्रायः । ननु—उपासनैक्येऽपि मार्गवैलक्षण्येनाम्नानं न मार्गभेदसाधकम्, उपास्यगुणानामिव मार्गपर्वणामपि उपसंहारसम्भवात्—इत्याशङ्क्य, यत्र उपासनभेदेन मार्गभेदाम्नानं तत्र उपसंहारस्य वक्तुमशक्यतया मार्गभेदो भवत्येव-इत्यभिप्रायेणाह—भिन्नोपासनाशेषत्वाच्चेति ।

ननु—मार्गपर्वणामर्चिरादीनां सर्वत्र किञ्चित्किञ्चित्प्रत्यभिज्ञानात् ऐक्ये सति मार्गस्य, उपसंहारो भविष्यतीति चेत्—न । उपासनभेदे यस्यामुपासनायां यावन्ति मार्गपर्वाण्याम्नातानि तावतामेव तत्राङ्गतया, प्रत्यभिज्ञामात्रेण उपसंहारासम्भवात् । अन्यथा ब्रह्मण उपास्यगुणानामपि सर्वेषां सर्वत्र[2] उपसंहारः स्यात् ।

---

1. भिन्नोपासनाशेषत्वाच्चेतिहेतोरपुनरुक्ततार्थं आह—अत्रेत्यादि ।
2. सर्वत्रेति उपास्यस्य ब्रह्मण एकत्वात्—इति भावः ।

इत्यवधारणं अर्चिराद्यपेक्षायामुपरुद्ध्येत, त्वरावचनं च पीडयेत 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' (छा. उ. ८।६।५) इति । तस्मात् अन्योन्यभिन्ना एवैते पन्थान इति ।

एवं प्राप्तेऽभिदध्महे—अर्चिरादिनेति । सर्वो ब्रह्मप्रेप्सुः अर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे । कुतः ? तत्प्रथितेः । प्रथितो ह्येष मार्गः सर्वेषां विदुषाम् । तथाहि पञ्चाग्निविद्याप्रकरणे 'येऽचामी अरण्ये श्रद्धां सत्यमुपासते' (बृ. उ. ६।२।१५) इति विद्यान्तरशीलिनामपि अर्चिरादिका सृतिः श्राव्यते ।

स्यादेतत्—यासु विद्यासु न काचिद्गतिरुच्यते तास्वियमर्चिरादिकोपतिष्ठताम्, यासु त्वन्या श्राव्यते तासु किमित्यर्चिराद्याश्रयणम्-इति ।

अत्रोच्यते—भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः । एकैव त्वेषा सृतिः अनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित्केनचिद्विशेषणेनो-

---

अवधारणमर्चिराद्यपेक्षायामुपरुद्ध्येतेति । अथैतैरेवरश्मिभिरित्यत्र केवलानां रश्मीनां ऊर्ध्वाक्रमणहेतुत्वावगमात् पर्वान्तरोपसंहारे एवकारो बाधितो भवेदिति भावः । अपि च—अथैतैरेवरश्मिभिरित्यत्र पर्वान्तरोपसंहारे विलम्बस्य तत्तत्पर्वप्राप्तिव्यवधानकृतस्य अवश्यंभावात् 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति रश्मिप्राप्त्यनन्तरं झटित्यादित्यप्राप्तिवचनमपि असङ्गतं भवेत्—इत्याह- त्वरावचनं चेति ।

एवं सति यथा एक एव ग्रामो मार्गभेदैः यथायथं लोके प्राप्यते एवं एकोऽपि ब्रह्मलोको मार्गभेदेन प्राप्यो भविष्यतीति पूर्वपक्षाभिप्रायः ।

अयमत्र सिद्धान्ताभिप्रायः--'ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्ति' इति [1]सामान्यवचनेन सर्वासूपासनासु अर्चिरादिमार्गः प्रतिपाद्यते । तत्र, यद्युपासनाविशेषेषु मार्गान्तरमङ्गीक्रियेत, तथासति एतस्य वचनस्य सङ्कोचः कल्पनीयः स्यात्, अथ वा तत्तन्मार्गेण सह अस्य विकल्पोऽभ्युपगम्येत । न हि मार्गद्वयसमुच्चयो वक्तुं शक्यते, एकेनैव मार्गेण ब्रह्मलोकप्राप्तेस्सिद्धतया मार्गान्तरानपेक्षणात् । न च मार्गैक्यमुपगम्य सङ्कोचविकल्पयोः परिहारसम्भवे तयोरङ्गीकारो युक्तः ।

---

1. स्थलत्रयवचनैकदेशसमुच्चयेनेदं वचनम् ।

पलक्षितेति वदामः। सर्वत्र एकदेशप्रत्यभिज्ञानात् इतरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि हि, विद्यैकत्वे, भवति इतरेतरविशेषणोपसंहारवत् गतिविशेषणानामप्युपसंहारः। विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव। तथाहि 'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' (बृ. उ. ६।२।१५) 'तस्मिन् वसति शाश्वतीः समाः' (बृ. उ. ५।१०।१) 'सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते' (कौ. उ. १।४) 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति' (छा. उ. ८।४।३) इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते।

यत्तु एतैरेवेत्यवधारणं अर्चिराद्याश्रयणे न स्यादिति।

नैष दोषः। रश्मिप्राप्तिपरत्वादस्य। न ह्येक एवशब्दो रश्मींश्च प्रापयितुमर्हति अर्चिरादींश्च व्यावर्तयितुम्। तस्मात् रश्मिसंबन्ध एवायमवधार्यत इति द्रष्टव्यम्।

त्वरावचनं तु अर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया शैघ्र्यार्थत्वात् नोपरुद्ध्यते। यथा निमिषमात्रेणात्रागम्यत इति।

अपिच–'अथैतयोः पथोर्न कतरेणचन' (छा. उ. ५।१०।८) इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानं आचक्षाणा, पितृयाणव्यतिरिक्तं एकमेव

---

अपि च-मार्गैक्यकल्पनायां लाघवानुसारिण्यां सत्यां न गौरवग्रस्तं मार्गबहुत्वकल्पनं उचितम्। एवञ्च तत्रतत्राम्नानविशेषस्थले अर्चिरादिमार्गपर्वप्रत्यभिज्ञानं ऐक्यावगमकं अबाधितं भवति। न चात्र, सर्वत्राम्नातानां ब्रह्मगुणानां उपसंहारे उपास्यगुणानन्त्यप्रसक्त्याऽनुष्ठानाशक्तिरिव तत्रतत्राम्नातानां क्वचित् मार्गपर्वणां उपसंहारे अशक्तिरापद्यते।

अपि च-देवयानपितृयाणावध्वानावनुक्रम्य 'अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति' इति मार्गद्वयभ्रष्टानामधोगतिराम्नायते। तत्र, यद्यर्चिरादिमार्गापेक्षया ब्रह्मलोकप्रापकं मार्गान्तरं उपगम्येत, तदा इदमपि वचनं पीडितं भवेत्।

अतो विद्याविशेषेषु आम्नातानां पर्वविशेषाणां अर्चिरादावन्तर्भावमुपगम्यैव समीचीनलोकप्रापकमार्गद्वित्वमाश्रयणीयम्।

देवयानं अर्चिरादिपर्वाणं पन्थानं प्रथयति। भूयांसि च अर्चिरादिस्मृतौ मार्गपर्वाणि अल्पीयांसि तु अन्यत्र। भूयसां चानुगुण्येन अल्पीयसां नयनं न्याय्यं इत्यतोऽपि अर्चिरादिनातत्प्रथितेरित्युक्तम् ॥ १ ॥

२ वाय्वधिकरणम्

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति। तदेतत् सुहृद्भूत्वा आचार्यो प्रथयति।

'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौ. उ. १।३) इति कौषीतकिनां देवयानः पन्थाः पठ्यते। तत्र, अर्चिरग्निलोकशब्दौ तावत् एकार्थौ ज्वलनवचनत्वात्-इति नात्र संनिवेशक्रमः क्वचिदन्वेष्यः।

वायुस्तु अर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन् स्थाने निवेशयितव्य इति।

---

ते—उपासकाः तेषु-ब्रह्मलोकेषु, ब्रह्मलोकान्तर्गतानां ब्रह्मविष्णुरुद्रादिभोगभूमीनां बहुत्वात् तदभिप्रायं बहुवचनम्। पराः संवत्सराः, प्रशंसायां मतुप्, प्रशस्तसंवत्सरशालिनः—दीर्घजीविन इति यावत्, तस्य ब्रह्मणः पराः—संवत्सरान्। जितिः-जयः। व्युष्टिः-व्याप्तिः। अपि च-यदि ब्रह्मलोकप्रापकं मार्गबहुत्वं उपगम्य विकल्पः स्वीक्रियेत, तदा विकल्पस्वीकार एव न दोषावहः, अपि तु, अथैतैरेव-रश्मिभिरित्याद्यल्पपर्वमार्गेण सह अनेकपर्वकार्चिरादिमार्गस्य विकल्प उपगन्तव्य इति, विकल्पे विषमशिष्टतापि प्रसक्ता भवति—इत्याह—भूयांसि चेति ॥ १ ॥

इति अर्चिराद्यधिकरणम्

मार्गैक्येन तत्तच्छाखाम्नातानां पर्वविशेषाणामुपसंहारे स्थिते, आगम्यमानानां क्रम इदानीं चिन्त्यते उपासनाकाले मार्गपर्वणां चिन्तनक्रमाय।

स प्रजापतिलोकं स ब्रह्मलोकम्। प्रजापतिः—विराट्, ब्रह्मा-हिरण्यगर्भः।

अयमत्र पूर्वः पक्षः—'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकम्' इति पाठानुसारेण अग्निलोकपदोदितार्चिरनन्तरं वायोर्निवेशः कर्तव्यः। न च 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायु(लोक)मागच्छति' इति बृहदारण्यक-

उच्यते — 'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम्' (छा. उ. ५।१०।१।२) इत्यत्र संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुं अभिसंभवन्ति। कस्मात्? अविशेषविशेषाभ्याम्। तथाहि—'स वायुलोकम्' इत्यत्र अविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते

---

पाठानुसारेण वायोः प्रथमस्थानता किं न स्यादिति वाच्यम्। तत्र हि पाठक्रमस्य नियामकत्वं क्लृप्तम्, सवरुणलोकंसइन्द्रलोकंसप्रजापतिलोकंसब्रह्मलोकमित्युत्तरत्र यथापाठं वरुणलोकादीनां निवेशोपगमात्। अतः अग्निवायुलोकयोरपि पाठो नियामको भविष्यति। बृहदारण्यके तु 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजहीते यथा डम्बरस्य (वाद्यविशेषस्य) खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स उर्ध्वं आक्रमते स(ब्रह्म)लोकमागच्छत्यशोकमहिमम्' इति वाक्ये चन्द्रलोकानन्तरं अशोकत्वादिविशेषणको ब्रह्मलोक आम्नातः। न तत्र पाठक्रमो नियामकः, चन्द्रानन्तरं विद्युदादीनां निवेशनीयत्वात्।

न च अग्निलोकानन्तरं वायोर्निवेशाभ्युपगमे अर्चिषोऽहरितिश्रौतक्रमविरोधः, अर्चिषइत्यादिपञ्चमीनां हेतुत्वार्थकताया वक्ष्यमाणत्वात्, हेतुत्वस्य च पूर्वत्वगर्भत्वात्—इति वाच्यम्। मार्गैक्ये दृढन्यायसिद्धे वायोः क्वचिदवश्यंनिवेशनीयत्वेन, तदितोऽन्तेनिवेशो वायुदत्तच्छिद्रेणादित्यप्राप्तेरसम्भवात् आदित्यात्प्राङ्निवेशाय श्रुतिक्रमस्य क्वचिदवश्यं भञ्जनीयत्वेन, पाठानुग्रहाय अर्चिषोऽहरित्यत्रैव भङ्गोऽस्तु।

न चैवं—यद्यादित्यात् पूर्वभावो वायोरावश्यकः तथासति अव्यवधानेनैव आदित्यात् पूर्वं निवेशः किं न स्यात्—इति वाच्यम्। तेनसऊर्ध्वआक्रमते इति निर्देशस्य चन्द्रपर्याये व्यवधानेनापि दृष्टतया अव्यवधानानपेक्षणात्।

अतः पाठानुग्रहाय अर्चिरनन्तरमेव वायोर्निवेश इति।

अयमत्र सिद्धान्ताभिप्रायः—'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति' इत्यत्र तावत्,

यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति' (बृ. उ. ५।१०।१) इति। एतस्मात् आदित्याद्वायोः पूर्वत्वदर्शनाद् विशेषात् अब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः।

कस्मात्पुनः अग्नेःपरत्वदर्शनाद्विशेषात् अर्चिषोऽनन्तरं वायुर्न निवेश्यते। नैषोऽस्ति विशेष इति वदामः।

ननूदाहृता श्रुतिः—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' इति।

उच्यते—केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति। पदार्थोपदर्शनमात्रं ह्यत्र क्रियते एतमेतंचागच्छतीति। इतरत्र पुनः वायुप्रत्तेन रथचक्रमात्रेण छिद्रेण ऊर्ध्वमाक्रम्य आदित्यमागच्छतीति अवगम्यते क्रमः।

तस्मात् सूक्तं अविशेषविशेषाभ्यामिति।

वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' (बृ. उ. ६।२।१५) इति समामनन्ति। तत्र आदित्यानन्तर्याय देवलोकात् वायुमभिसंभवेयुः। वायुमब्दादिति तु छन्दोगश्रुत्यपेक्षयोक्तम्।

---

रथचक्रपरिमितेन वायुदत्तच्छिद्रेण [1]ऊर्ध्वमाक्रामतीत्युक्तौ आक्रमणीय ऊर्ध्वदेशः क इत्यपेक्षायां सआदित्यमागच्छतीति उत्तरवाक्यानुसारेण आदित्यरूपस्स इत्यवगमात्, वायुदत्तच्छिद्रस्य आदित्यप्राप्तौ साधकतमत्वं तृतीयाश्रुत्या प्रतीयते। साधकतमत्वं च वायुदत्तच्छिद्रस्य अव्यवधानेन आदित्यप्राप्तौ उपपद्यते। न च श्रौतोऽर्थः पाठमात्रेण बाधितुं न्याय्यः। 'तेन स ऊर्ध्वमाक्रमते स(ब्रह्म)लोकमागच्छति' इत्युत्तरत्र तु अव्यवधानपरित्यागः चन्द्रमसोविद्युतमिति श्रौतक्रमानुसारादेव अगत्या आदृतः। अतः आदित्यात् पूर्वं संवत्सरादनन्तरं वायुर्निवेशयितव्यः—इति।

एवं छान्दोग्यगतार्चिरादिपाठानुसारेण 'संवत्सरानन्तरं वायोर्निवेशः कर्तव्यः' इति यथासूत्रं व्याख्याय, बृहदारण्यकगतार्चिरादिपाठानुसारेण 'संवत्सरानन्तरं देवलोकः तदनन्तरं वायुर्निवेशनीयः' इत्याह—वाजसनेयिनस्त्विति।

---

1. ऊर्ध्वमिति श्रुतौ ऊर्ध्वं इति प्रथमा द्वितीयार्थे इति भावः।

छान्दोग्यवाजसनेयकयोस्तु एकत्र देवलोको न विद्यते परत्र संवत्सरः। तत्र श्रुतिद्वयप्रत्ययात् उभावप्युभयत्र ग्रथयितव्यौ। तत्रापि, माससंबन्धात् संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम् ॥ २ ॥

---

ननु—छान्दोग्यवाजसनेयकपर्यालोचनया मासादित्ययोर्मध्ये संवत्सरदेवलोकवायूनां निवेशे वक्तव्ये, अहश्शुक्लपक्षोत्तरायणानामुत्तरोत्तरत्वदर्शनात् उत्तरायणानन्तरं संवत्सरनिवेशे स्थितेऽपि, 'वायोः पूर्वं संवत्सरानन्तरं देवलोकः' इति कथं नियन्तुं शक्यम्। यथा हि 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति वायोः आदित्याव्यवधानेन पूर्वं निवेशः प्रतीयते एवं देवलोकादादित्यमिति पञ्चम्या देवलोकस्यापि आदित्याव्यवधानेन पूर्वं निवेशोऽवगम्यते—इति चेत्;

उच्यते—'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति देवलोकस्य मासादित्यसान्निध्यमवगम्यते। तत्र, वायोरनन्तरं देवलोकनिवेशे, तस्य संवत्सरवायुभ्यां द्वाभ्यां मासं प्रति व्यवधानं भवेत् आदित्येन तु अत्यन्तसान्निध्यम्, तन्माभूत्, अपि तु मासादित्ययोः सान्निध्यं व्यवधानं च तुल्यमेव भवतु इति संवत्सरवाय्वोर्मध्ये एव देवलोको निवेशनीयः।

[1]केचित्तु—'यो यः पवते एष देवानां गृहाः' इत्यर्थवादात् आकाशस्थानां देवलोकानां स्तम्भात्मना स्थितेन वायुना अवष्टब्धतया देवगृहान्तर्गतत्वोपपत्तेश्च वायुरेव देवलोक इति मासेभ्यो देवलोकमिति वाजसनेयकपाठेऽपि वायुमब्दादिति सूत्रस्य नानुपपत्तिः—इति वदन्ति ॥ २ ॥

इति वाय्वधिकरणम्

व्यवहिताधिकरणे यन्मार्गैक्यमुक्तम्, यच्च तदुपेत्यैव आदित्यात्पूर्वं निवेशनं वायोः अव्यवहिताधिकरणे, तदुभयमपि न सम्भवतीत्याक्षिप्यते।

तथा हि—कौषीतक्याम्नातानां वरुणलोकादीनां क्व निवेशः। न तावत् अर्चिषोऽनन्तरम्,[2] 'स यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति

---

1. केचित्—शिवविष्णुविशिष्टाद्वैतिनः।

2. अनन्तरमिति अनन्तरपूर्वं इत्यर्थः। अव्यवहितपूर्वं इति यावत्। व्यवहितपूर्वता तु न सम्भवद्युक्तिका, अनुत्क्रान्तस्य गत्यसम्भवात्।

## ३ तटिदधिकरणम्

### तटितोऽधि वरुणः संबन्धात् ॥ ३ ॥

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' (छा. उ. ४।१५।५) इत्यस्या विद्युत उपरिष्टात् स वरुणलोकमित्ययं वरुणः संबद्ध्यते। अस्ति हि संबन्धो विद्युद्वरुणयोः। यदा हि विशाला विद्युतः तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्ति अथापः प्रपतन्ति। 'विद्योतते स्तनयति वर्षिष्यति वा' (छा. ७।११।१) इति च ब्राह्मणम्। अपां चाधिपतिर्वरुण इति श्रुति-स्मृतिप्रसिद्धिः।

वरुणादधि इन्द्रप्रजापती, स्थानान्तराभावात् पाठसामर्थ्याच्च। आगन्तुकत्वादपि वरुणादीनां अन्त एव निवेशः, वैशेषिकस्थानाभावात्। विद्युच्च अन्त्या अर्चिरादौ वर्त्मनि ॥ ३ ॥

---

उत्क्रान्त्यनन्तरमेव रश्मिपदोदितार्चिस्सम्बन्धप्रतिपादनात्। नाप्यर्चिरादीनां मध्ये, अर्चिषोऽहरित्यादिपञ्चमीभिः पर्वणां बद्धक्रमत्वात्। नापि विद्युदन्ते, तदनन्तरं अमानवपुरुषस्य नेतृत्वात्। वरुणादीनां तटिदनन्तरं निवेशे हि तेषां नेतृता वक्तव्या, आतिवाहिकत्वस्य वक्ष्यमाणत्वात्, तथा च अमानवपुरुषस्य तटिदनन्तरं नेतृत्वं विरुद्ध्येत। तथा च वरुणादीनां अर्चिरादिषु निवेशासम्भवात् कौषीतकिगतं मार्गान्तरमेवेति, मार्गैक्यमुपगम्य यत् वायोरादित्यात्पूर्वनिवेशनीयत्वमुक्तं तन्न सम्भवतीति पूर्वः पक्षः।

सिद्धान्तमाह—आदित्याच्चन्द्रमसमित्यादिना। नभसि विद्युतोऽनन्तरं मेघा उपलभ्यन्ते। अप्पतेश्च वरुणस्य मेघेष्ववस्थानं न्याय्यम्। अतः तटिदनन्तरं वरुणो निवेशनीयः। वरुणानन्तरं च यथापाठं इन्द्रादीनां निवेशः। न तु अनेकप्रमाणसिद्धं मार्गैक्यं परित्याज्यम्। तटिदनन्तरं तु अमानवपुरुषस्य वरुणादीनां च नेतृत्वं समुच्चयेन भविष्यतीति 'वैद्युतेनैव ततः' इति सूत्रे वक्ष्यते, अतो नानुपपत्तिरिति।

आगन्तुकत्वादपीति। लोके सभायां आगतानां पुरुषाणां असति विशेषनियामके अन्त एव निवेशो दृष्टः, पूर्वं विद्यमानानां क्लृप्तस्थानतया उद्वापासम्भवात्, तथा अत्रापि भविष्यतीति भावः ॥ ३ ॥

इति तटिदधिकरणम्

## ४ आतिवाहिकाधिकरणम्

# आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

तेष्वेवार्चिरादिषु संशयः—किमेतानि मार्गचिह्नानि उत भोगभूमयः अथवा नेतारो गन्तॄणाम्—इति ।

तत्र मार्गलक्षणभूता अर्चिरादय इति तावत् प्राप्तम् । तत्स्वरूपत्वादुपदेशस्य । यथा हि लोके कश्चित् ग्रामं नगरं वा प्रतिष्ठासमानः अनुशिष्यते—गच्छेतस्त्वं अमुं गिरिं ततो न्यग्रोधं ततो नदीं, ततो ग्रामं नगरं वा प्राप्स्यसि-इति ; एवमिहापि अर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याद्याह ।

अथवा भोगभूमयः इति प्राप्तम् । तथाहि—लोकशब्देन अग्न्यादीननुबध्नाति 'अग्निलोकमागच्छति' इत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते, 'मनुष्यलोकः पितृलोको देवलोकः, (बृ. उ. १।५।१६) इति च । तथा च ब्राह्मणम् 'अहोरात्रेषु ते लोकेषु सज्जन्ते' (श.ब्रा. १०।२।६।८) इत्यादि ।

तस्मात् नातिवाहिका अर्चिरादयः । अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेषु अतिवाह्यानतिवाहयन्तीति ।

---

अर्चिरादीनां क्रमनिरूपणानन्तरं तेषां स्वरूपं अस्मिन्नधिकरणे चिन्त्यत इति सङ्गतिः ।

लौकिकमार्गचिह्नोपदेशतुल्यत्वादर्चिषोऽहरित्याद्युपदेशस्य अर्चिषोऽहरित्यादीनामपि मार्गचिह्नत्वम्—इत्येकः पक्षः ।

अग्निलोकमागच्छतीति अर्चिषो लोकत्वेन कौषीतकिशाखायामनुवादात्, अहरादीनामपि लोकत्वमवगम्यते, लोकपदं भोगभूमिवाचकतया प्रसिद्धमिति, भोगभूमय एवार्चिरादयः—इत्यपरः पक्षः ।

तदिदं पूर्वपक्षद्वयं प्रतिपादयति—तत्र मार्गलक्षणभूता अर्चिरादय इत्यादिना । ते—अर्चिरादिलोकं गताः, अहोरात्रं लोकेषु भोगाय सज्जन्ते-आसक्ता भवन्ति । मार्गेषु सीमाविशेषेषु स्थिता राजनियुक्ताः पुरुषाः गन्तॄन् स्वसीम्नः सीमान्तरं ये प्रापयन्ति ते आतिवाहिका इत्युच्यन्ते, इदं चातिवाहिकत्वं अचेतनानामर्चिरादीनां न सम्भवतीत्याह—अचेतनत्वादपीति ।

एवं प्राप्ते ब्रूमः—आतिवाहिका एवैते भवितुमर्हन्ति । कुतः ? तल्लिङ्गात् । तथाहि--'चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा. उ. ४।१५।५) इति सिद्धवत् गमयितृत्वं दर्शयति । तद्वचनं तद्विषयमेवोपक्षीणमिति चेत् । न । प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य । यदि अर्चिरादिषु पुरुषा गमयितारः प्राप्ताः ते च मानवाः, ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणं अमानवइति ॥ ४ ॥

ननु लिङ्गमात्रं अगमकं न्यायाभावात् । नैष दोषः—

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

---

प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्येति । 'तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वाक्येन, विद्युल्लोकपर्यन्तं स्वत एवोपासकानां गमनम्, अनन्तरं त्वातिवाहिकप्रयुक्तम्-इत्यर्थो विवक्षितो(यदि)भवेत्, तदा 'पुरुष एनान् ब्रह्म गमयति' इत्येव वदेत्, तावतैवोक्तार्थसिद्धेः, न तु 'अमानवः' इति विशेषणं वदेत्, तद्वशेन तु, 'पूर्वत्रापि पुरुषा गमयितारस्सन्ति, परं तु ते मानवाः, विद्युल्लोकानन्तरं तु अमानवः' इति विशेषं द्योतयति ॥ ४ ॥

ननु–'तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वाक्यानुसारेण पूर्वेषां गमयितृत्वं नास्तीति येनोच्यते तं प्रति इदं वक्तुं शक्यम्, अस्य वाक्यस्य पूर्वत्र मानवत्वद्योतकतया गमयितृत्वाभावद्योतकत्वाभावात् । यस्तु, प्रमाणाभावादेव पूर्वेषां गमयितृत्वं नास्तीति वदति, तं प्रति नेदं लिङ्गमुपन्यासार्हम् । न च इदमेव पूर्वेषां गमयितृत्वे प्रमाणमिति वाच्यम् । अस्य वाक्यस्य विद्युल्लोकानन्तरममानव-पुरुषगमयितृत्वविधिपरतया अर्चिरादीनां गमयितृत्वाबोधकत्वात्-इत्यभिप्रायेण शङ्कते-ननु लिङ्गमात्रमिति ।

गन्तॄणां अर्चिरादिपदमुख्यार्थानां च उभयेषां व्यामोहात्—प्रज्ञाराहित्यात्, लोके मूर्च्छितादीनां अन्यप्रयुक्तगमनदर्शनेन उपासकानामपि प्रज्ञारहितानां अन्यैरेव गमनस्यापेक्षिततया, [1]असति बाधके, अर्चिरादिपदानां तन्मुख्यार्थाभिमानिदेवतालक्ष-

---

1. असति बाधके इति बाधकाभावाच्च इत्यर्थः । सतिबाधके इति वा पाठः स्यात् । अर्चिरादिपदानांमुख्यार्थत्वे अनुपपत्तिरूपबाधकसत्त्वात् इत्यर्थः ।

ये तावदर्चिरादिमार्गगाः ते देहवियोगात्संपिण्डितकरणग्रामा इति अस्वतन्त्राः, अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यम्—इत्यतः अर्चिरद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते। लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति। अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः। न हि रात्रौ प्रेतस्य अहस्स्वरूपाभिसंभव उपपद्यते, न च प्रतिपालनमस्ति—इत्युक्तं पुरस्तात्। ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति। अर्चिरादिशब्दता चैषां अर्चिराद्यभिमानादुपपद्यते।

'अर्चिषोऽहः' इत्यादिनिर्देशस्तु आतिवाहिकत्वेऽपि न विरुध्यते-अर्चिषा हेतुना अहरभिसंभवति अह्ना हेतुना आपूर्यमाणपक्षम्-इति। तथाच लोके प्रसिद्धेष्वप्यातिवाहिकेषु एवंजातीयक उपदेशो दृश्यते—गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तम्--इति।

अपि च--उपक्रमे 'तेऽर्चिरभिसंभवन्ति' (बृ. उ. ६-२-१५) इति संबन्धमात्रमुक्तं न संबन्धविशेषः कश्चित्। उपसंहारे तु 'स एनान् ब्रह्म गमयति' (छा. उ. ४।१५।६) इति संबन्धविशेषः अतिवाह्यातिवाहकत्वलक्षण उक्तः, तेन स एवोपक्रमेऽपीति निर्धार्यते।

---

कतया आतिवाहिकपुरुषसिद्धिः—इत्यभिप्रायेण सूत्रं व्याचष्टे—ये तावदिति। 'तत् पुरुषोऽमानवः' इति वाक्यं तु यथा न प्रकृतार्थविरोधि तथा पूर्वसूत्रे एव निरूपितम्। अनवस्थितत्वादपीति। मार्गचिह्नानि देशतः पूर्वोत्तरभावेन समकालं व्यवस्थितानि, अर्चिरादिमुख्यार्थस्तु न तथा—इति भावः।

अर्चिषा हेतुनेति। यद्यपि 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रेण गुणवाचकात् हेतुपञ्चमी विहिता, द्रव्याश्रितश्च गुणो जाड्यादिः, अर्चिरादिस्तु न तथा, तथापि [1]बाहुलकात् पञ्चमी हेतौ। इदं छान्दसप्रक्रियया भविष्यति ॥ ५ ॥

---

1. बाहुलकात् पञ्चमी हेतावित्यादि—व्यत्ययो बहुलमिति छान्दसेन विभक्तिव्यत्ययेन तृतीयार्थे पञ्चमी।

संपिण्डितकरणत्वादेव च गन्तॄणां न तत्रोपभोगसंभवः। लोकशब्दस्तु अनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते, अन्येषां तल्लोकवासिनां भोगभूमित्वात्।

अतः अग्निस्वामिकं लोकं प्राप्तः अग्निनाऽतिवाह्यते वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यम् ॥ ५ ॥

कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः—विद्युतो ह्यधि वरुणादय उपक्षिप्ताः, विद्युतस्त्वनन्तरं आ ब्रह्मप्राप्तेः अमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमिति—

अत उत्तरं पठति—

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

ततः—विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैव अमानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम्। 'तान् वैद्युता[त्][न्]पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति' (बृ. उ. ६।२।१५) इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु, तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचित् अनुग्राहकाः—इत्यवगन्तव्यम्। तस्मात् साधूक्तं आतिवाहिका देवतात्मानः अर्चिरादय इति ॥ ६ ॥

५ कार्याधिकरणम्

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

'स एनान् ब्रह्म गमयति' (छा. उ. ४।१५।५) इत्यत्र विचिकित्स्यते— किं कार्यं अपरं ब्रह्म गमयति आहोस्वित् परमेव अविकृतं मुख्यं ब्रह्म—इति। कुतः संशयः? ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्च।

---

विद्युल्लोकानन्तरं अमानवपुरुषस्य प्राधान्येन गमयितृत्वं विद्युदाद्यभिमानिनां तु तदुपसर्जनतयेति समुच्चयेऽपि, वैद्युतेनैवेत्येवकारः विद्युदाद्यभिमानिनां प्राधान्यमात्रनिवृत्तिपरः—इति द्रष्टव्यम् ॥ ६ ॥

इति आतिवाहिकाधिकरणम्

मार्गनिरूपणानन्तरं प्राप्यं इदानीं निरूप्यत इति सङ्गतिः।

तत्र, कार्यमेव सगुणं अपरं ब्रह्म एनान् गमयति अमानवः पुरुषः— इति बादरिराचार्यो मन्यते। कुतः? अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात्। न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वा अवकल्पते। सर्वगतत्वात्, प्रत्यगात्मत्वाच्च गन्तॄणाम् ॥ ७ ॥

## विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' (बृ. उ. ६।२।१५) इति च श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरिति गम्यते। न हि बहुवचनेन विशेषणं परस्मिन् ब्रह्मण्यवकल्पते। कार्ये तु अवस्थाभेदोपपत्तेः संभवति बहुवचनम्। लोकश्रुतिरपि विकारगोचरा-

---

'गतेरर्थवत्त्वमुभयथा' इत्यत्र 'प्रतिषेधादिति चेत्' इत्यत्र च, निर्विशेषविद्भिः प्राप्यं परं ब्रह्म नोत्क्रान्तिपूर्विकां गतिमपेक्षते—इति प्रतिपादितम्। अस्मिंस्त्वधिकरणे, सविशेषविद्भिः गतिपूर्वकं प्राप्यं शुद्धं परं ब्रह्मैवेति शङ्क्यते। यद्यपि, सिद्धान्तेऽपि दहरादिसविशेषविद्यानिष्ठानां क्रमेण परब्रह्मप्राप्तिरवश्यम्भाविनी इत्युपेयत एव, तथापि, 'अर्चिरादिना क्रमेणैव परप्राप्तिः' इत्यत्र [1]आशङ्का।

अस्मिंश्चाधिकरणे मतान्तरकथनव्याजेन पूर्वपक्षः प्रदर्शयिष्यते। प्रथमतो मतान्तरकथनव्याजेन सिद्धान्तः प्रदर्श्यते—कार्यमेवेत्यादिना ॥ ७ ॥

ननु—ब्रह्मशब्दस्य विशुद्धे ब्रह्मण्येव मुख्यत्वात् सएनान्ब्रह्मगमयतीत्यत्र न सोपाधिकब्रह्मविवक्षा, तस्य परिच्छिन्नत्वेन निरङ्कुशब्रह्मत्वायोगात्—इत्याशङ्क्य, 'न केवलं गत्युपपत्तय एव सोपाधिकपरतोपेयते, ब्रह्मगमयतीतिछान्दोग्यपाठस्थाने बृहदारण्यके ब्रह्मलोकान्गमयतीत्यादिसमाम्नानादपि' इत्याह—विशेषितत्वाच्चेति। ननु—लोकपदं न परब्रह्मविवक्षाविरोधि, 'ब्रह्मैव लोकः' इति कर्मधारयसम्भवात्—इत्याशङ्क्य, तथा सति बहुवचनमनुपपन्नं स्यात् ब्रह्मण एकत्वात् इत्याह—बहुवचनेनेति। तथा च, अर्चिरादिना भोगस्थानभूतलोकविशेषप्राप्तेरवगमात् लोकविशेषोपाधिकब्रह्मणा सह भोगसाम्यमेव सविशेषनिष्ठैः प्राप्यम्, न तु परामृतम् इति भावः।

---

1. आशङ्का—अर्चिरादिना साक्षादेव परप्राप्तिः न तु क्रमेण-इत्याशङ्का।

यामेव सन्निवेशविशिष्टायां भोगभूमौ आञ्जसी। गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' (बृ. उ. ४।४।२३) इत्यादिषु। अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मणि अनाञ्जसः स्यात्। तस्मात् कार्यविषयमेवेदं नयनम् ॥ ८ ॥

ननु—कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते, समन्वये हि समस्तस्य जगतो जन्मादिकारणं ब्रह्मेति स्थापितम्—इति।

अत्रोच्यते—

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुशब्दः आशङ्काव्यावृत्त्यर्थः। परब्रह्मसामीप्यात् अपरस्य ब्रह्मणः, तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते। परमेव हि ब्रह्म विशुद्धोपाधिसंबन्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानं अपरम्-इति स्थितिः ॥ ९ ॥

ननु-कार्यप्राप्तौ अनावृत्तिश्रवणं न घटते, न हि परस्माद्ब्रह्मणोऽन्यत्र क्वचित् नित्यता सम्भवति](तां संभावयन्ति)। दर्शयति च देवयानेन पथा प्रस्थितानां अनावृत्तिम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा.उ.४।१५।६) इति, 'तेषामिह न पुनरावृत्तिः' (बृ. उ. मा. ६।१।१८) इति, तयोर्ध्वमायन्नमृतत्वमेति' (छा. उ. ८।६।६, क. उ. ६।१६) इति च-इति।

अत्र ब्रूमः—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः तदध्यक्षेण हिरण्यगर्भेण सह अतः परं-परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इतीत्थं क्रममुक्तिः अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या। न हि अञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीति उपपादितम् ॥ १० ॥

---

गौणी त्वन्यत्रेति। लोक्यत इति लोकः-प्रकाशरूपः इति यौगिकीति भावः ॥८॥

अपरस्य ब्रह्मणः—लोकविशेषोपाधिकस्येति यावत् ॥ ९ ॥

'परब्रह्मप्राप्तिः' इतिपदाध्याहारेण सूत्रं व्याचष्टे—परिशुद्धं विष्णोः परमं पदमिति ॥ १० ॥

## स्मृतेश्च ॥ ११ ॥

स्मृतिरप्येतमर्थमनुजानाति—

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति ।

तस्मात् कार्यब्रह्मविषया एव गतिश्रुतय इति सिद्धान्तः ॥ ११ ॥

कं पुनः पूर्वपक्षं आशङ्क्य अयं सिद्धान्तः प्रतिष्ठापितः 'कार्यं बादरिः' इत्यादिनेति ।

स इदानीं सूत्रैरेवोपदर्श्यते—

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

जैमिनिस्त्वाचार्यः 'स एनान् ब्रह्म गमयति' इत्यत्र परमेव ब्रह्म प्रापयतीति मन्यते । कुतः ? मुख्यत्वात् । परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम्, गौणमपरम्, मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥१२॥

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेति' इति च गतिपूर्वकं अमृतत्वं दर्शयति । अमृतत्वं च परस्मिन् ब्रह्मण्युपपद्यते न कार्ये, विनाशित्वात् कार्यस्य । 'अथ यत्रान्यत् पश्यति तदल्पं तन्मर्त्यम्' (छा. ७।२४।१) इति वचनात् । परविषयैव च एषा गतिः कठवल्लीषु पठ्यते । न हि तत्र विद्यान्तरप्रक्रमोऽस्ति 'अन्यत्र धर्मादन्यत्राधर्मात्' (क. उ. २।१४) इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥ १३ ॥

---

प्रतिसञ्चरे—ब्राह्मप्रलये, कृतात्मानः—साक्षात्कृतनिरुपाधिकात्मानः, परस्य-ब्रह्मणः, अन्ते—देहावसाने ॥ ११ ॥

परमेव ब्रह्म प्रापयतीति मन्यत इति । न च परस्य ब्रह्मणः स्वरूपभूतत्वेन नित्यसन्निहिततया न गत्यपेक्षेति वाच्यम् । शास्त्रबलेन 'अर्चिरादिना ब्रह्मलोकं गत्वा अविद्यां विधूय स्वरूपेणावस्थितो भवति' इति कल्पनोपपत्तेः ॥१२॥

कठवल्लीषु पठ्यत इति । 'शतं चैका च हृदयस्य नाड्यः' इति वाक्यं हि कठवल्लीष्वपि पठ्यते ।

## न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

अपिच–'प्रजापतेः सभां वेश्म प्रपद्ये' (छा. उ. ८।१४।१) इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः, 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा. उ. ८।१४।१) इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात्। 'यशोऽहं भवामि ब्राह्मणानाम्' (छा. उ. ८।१४।१) इति च सर्वात्मत्वानुक्रमणात्। 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' (श्वे. उ. ४।१९) इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः। सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका हार्दविद्यायामुदिता 'तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' (छा. उ. ८.५।३) इत्यत्र। पदेरपि च गत्यर्थत्वात् मार्गापेक्षाऽवसीयते। तस्मात् परब्रह्मविषया गतिश्रुतयः–इति पक्षान्तरम्।

---

ननु–नेदं प्रकृतोपन्यासार्हम्। अत्र हि सविशेषविद्यानां परप्रापकत्वं जैमिनिमते विवक्षितम, न तु निर्विशेषविद्याया गतिसापेक्षत्वम्, निर्विशेषविद्यायां गत्यपेक्षायाः प्रागेव निरस्तत्वात्–इति चेत्,

उच्यते–सविशेषविद्यानां अर्चिरादिना परप्रापकत्वं परस्य सर्वगततया अनुपपन्नम्–इति शङ्कायां, यथा निर्विशेषविषयविद्यायाः परप्रापकत्वेन सम्मताया गत्यपेक्षा कठवल्लीपर्यालोचनया, एवं सविशेषविद्याया अपि किं न स्यात्–इत्यभिप्रायः[1]।

निर्विशेषविद्याया गत्यपेक्षत्वे निराकृतेऽपि, कठवल्लीगतस्य गतिवाक्यस्य गतिं प्रसङ्गाद्वक्तुं अयमुपक्षेपः ॥ १३ ॥

ननु 'प्रजापतेस्सभां वेश्म प्रपद्ये' इति उपासकानां प्रजापतिसभाप्राप्त्यभिसन्धेः प्रतिपादनात् तैः सभागतं सोपाधिकमेव ब्रह्म प्राप्यम्–इत्याशङ्कायामाह–'न च कार्ये प्रतिपत्त्यभिसन्धिः' इति।

अपिचेतिपदं, शङ्काव्यावर्तनद्वारा मुख्यत्वादिहेतुसमुच्चयाय[2]। नामरूपयोर्निर्वहितुर्नामरूपासंस्पृष्टत्वस्य तेयदन्तरेत्यनेन विवक्षितत्वात् निरुपाधिकवस्तुगोचरेयं विद्येत्यवगमात्, सभां प्राप्य अविद्यां निवर्त्य परमेव ब्रह्म अत्र प्राप्यम्। एवंस-

---

1. इत्यभिप्रायः—इत्यभिप्रायकः तद्वाक्योपन्यासः।
2. समुच्चयायेति साधकभाव इव बाधकाभावोऽपि अर्थसिद्धिहेतुः इति भावः।

तावेतौ द्वौ पक्षौ आचार्येण सूत्रितौ-गत्युपपत्त्यादिभिरेको मुख्यत्वादिभिरपरः। तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुं न तु मुख्यत्वादयो गत्युपपत्त्यादीनिति, आद्य एव सिद्धान्तो व्याख्यातः, द्वितीयस्तु पूर्वपक्षः। न हि, असत्यपि संभवे मुख्यस्यैवार्थस्य ग्रहणम् इति कश्चिदाज्ञापयिता विद्यते। परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा. उ. ८।६।६) इतिवत्। 'प्रजापतेः सभां वेश्म प्रपद्ये' इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिः न विरुध्यते। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनं सर्वकर्मा सर्वकाम इत्यादिवदवकल्पते।

---

त्येव 'यशोऽहं भवामि ब्राह्मणानाम्' इत्यादिना, 'यशः-प्रकाशः साक्षिरूपो यो ब्राह्मणादीनां तदहं भवामि' इति सर्वात्मतागोचरफलाभिसन्धिप्रतिपादनं उपपद्यते-इति परिहाराभिप्रायः।

एवं मतद्वयमुपन्यस्य, बादरिमतस्य सिद्धान्तत्वे नियामकमाह—तावेताविति। जैमिनिना, मुख्यत्वं तयोर्ध्वमायन्नितिदर्शनं च उपन्यस्तम्। तत्र, मुख्यत्वमप्रयोजकम्, अनुपपत्तौ अमुख्यार्थग्रहणस्य न्यायसिद्धत्वात्-इत्याह—न ह्यसत्यपीति। दहरविद्यागतं तयोर्ध्वमायन्नितिदर्शनं अमृतत्वञ्चानुपोष्येति व्याख्यातमेव। कठवल्लीगतं तु, सविशेषविद्यागतगत्यनुवादेन निर्विशेषविद्यास्तुत्यर्थं भविष्यति — सविशेषविद्याभिरुत्क्रान्तिगतिपूर्वकं क्लेशेनापि गौणमेवामृतत्वं प्राप्यम्, निर्विशेषविद्यया तु इहैव उत्क्रान्त्यादिक्लेशं विनैव परं प्राप्यमिति प्रशस्ता निर्विशेषविद्या—इति। इत्थमेव कर्मफलप्रापकनाडीकीर्तनस्य विष्वङ्ङन्या उत्क्रमणेभवन्तीत्यस्य गतिर्वक्तव्या—इत्याह—परविद्याप्रकरणेऽपि चेति। आकाशोवैनामेत्यादिवाक्यं यदि निरुपाधिकवस्तुगोचरं, तदा प्रजापतेस्सभामित्यादिवाक्यं तत उत्कृष्टव्यम्, निर्विशेषविद्यया इहैव ब्रह्मप्राप्तेः अनेकप्रमाणसिद्धतया प्रजापतिसभाप्राप्त्यपेक्षाविरहात्—इत्याह—प्रजापतेस्सभामिति। वस्तुतस्तु आकाशोवा इत्यादिवाक्यं सविशेषविषयमेव, नामरूपासंस्पृष्टत्वकीर्तनं तु तत्र वस्तुगत्या, अन्यथा नामरूपनिर्वहितृत्वप्रजापतिसभाप्राप्त्यादिकीर्तनासाङ्गत्यापातात्, तत्र यशोऽहमित्यादिसर्वात्मत्वकीर्तनं तु उपास्ये नानुपपन्नम्, सविशेषस्यापि सर्वात्मत्वानपायात्, फलं तु तस्य क्रममुक्त्या भविष्यति—इत्यभिप्रेत्याह—सगुणेऽपि चेति। ततश्च,

तस्मात् अपरविषया एव गतिश्रुतयः ।

केचित् पुनः, 'पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति उत्तराणि सिद्धान्त-सूत्राणि' इत्येतां व्यवस्थां अनुरुद्ध्यमानाः, परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति ।

तदनुपपन्नम्, गन्तव्यत्वानुपपत्तेर्ब्रह्मणः । यत् सर्वगतं सर्वान्तरं सर्वात्मकं च परं ब्रह्म 'आकाशवत्सर्वगतश्च नित्यः' 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' (बृ. उ. ३।४।१) 'आत्मैवेदं सर्वम्' छा. उ. ७.२५।२) 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' (मु. उ. २।२।११) इत्यादिश्रुति-निर्धारितविशेषं, तस्य गन्तव्यता न कदाचिदप्युपपद्यते । न हि गतमेव गम्यते । अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके ।

ननु-लोके गतस्यापि गन्तव्यता देशान्तरविशिष्टा दृष्टा । यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छ(ती)ति । तथा अनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभूतमेव गन्तव्यं दृष्टम् । तद्वत् ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात् कथञ्चिद्गन्तव्यता स्यात्-इति ।

न । प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. ६।१९) 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. उ. ३।८।८) 'सबाह्याभ्यन्तरो ह्यजः' (मु. उ. २।१।२) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४।२५) 'स एष नेति नेत्यात्मा' (बृ. उ. ३।९।२६) इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादि-विशेषयोगः परमात्मनि कल्पयितुं शक्यते । येन भूप्रदेशवयोऽवस्थान्यायेन

---

तत्क्रतुन्यायेन गत्युपपत्त्यादिभिश्च, सविशेषविदां सोपाधिकब्रह्मप्राप्तिः साक्षात्, क्रमेण तु निरुपाधिकप्राप्तिः—इत्युपसंहरति—तस्मादपरेति ।

केचित्तु–अर्चिरादिना कार्यं हिरण्यगर्भाख्यमेव ब्रह्म प्राप्यम्-इति बादरि-मतेन पूर्वपक्षं प्रदर्श्य, अर्चिरादिना परमेव ब्रह्म प्राप्यम्-इति जैमिनिमतेन सिद्धान्तं वर्णयन्ति । तन्मतं दूषयितुं अनुवदति—केचित् पुनरिति ।

अत्र परशब्देन, प्राप्यं ब्रह्म किं निरुपाधिकं विवक्षितं उत सोपाधिकम्? नाद्य इत्याह—गन्तव्यत्वानुपपत्तेरिति ।

अस्य गन्तव्यता स्यात्। भूमयसोस्तु प्रदेशान्तरस्थादिविशेषयोगात् उपपद्यते देशकालविशिष्टा गन्तव्यता।

जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्—

न। विशेषनिराकरणश्रुतीनामनन्यार्थत्वात्। उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्। न। तासामेकत्वप्रतिपादनपरत्वात्। मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयत् शास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति।

कस्मात् पुनः उत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वं न पुनरितरशेषत्वमितरासामिति।

उच्यते—विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात्। न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः काचिदाकाङ्क्षोपजायते, पुरुषार्थसमाप्तिबुद्ध्युपपत्तेः, 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई. उ. ७) 'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४।२।४) 'विद्वान्न बिभेति कुतश्चन। एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' (तै. उ. २।९।१) इत्यादिश्रुतिभ्यः। तथैव च विदुषां तुष्टयनुभवादिदर्शनात्। विकारानृताभिसंधापवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यते। नैवं उत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति। प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते। तथाहि 'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति' (छा. उ. ६।८।३) इत्युपन्यस्य, उदर्के सत एवैकस्य

---

निर्विशेषं ब्रह्म अपलपन्, पराशयस्थं द्वितीयं पक्षं शङ्कते—जगदुत्पत्तीति। अनन्यार्थत्वादिति। तथा च सप्रपञ्चत्वनिष्प्रपञ्चत्वप्रतिपादकश्रुतीनां विरोधे प्रसक्ते अनन्यार्थकनिष्प्रपञ्चत्वश्रुत्यनुसारेण सप्रपञ्चत्ववाक्यानि नेयानि—इति भावः।

सृष्टिप्रतिपादकश्रुतीनां न 'सप्रपञ्चः परमात्मा' इत्येवंपरता, तासां सृष्टिप्रतिपादनद्वारा कारणवस्तुमात्रसम्भावनायाः श्रुत्यैव प्रतिपादनात्—इत्याह—प्रत्यक्षं त्विति। तत्र—अद्भिः अन्ने जीर्णे सति यदेतत्-शरीराख्यं शुङ्ग-कार्यं उत्पतितं नेदम् अमूलम्—अकारणकम्, अतः अस्य मूलमन्नमेव - इति दृष्टान्तमुक्त्वा, यथा अत्र कार्यानुसारेण अन्नरूपं कारणमुपगतम्, एवं अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ

जगन्मूलस्य विज्ञेयत्वं दर्शयति । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' (तै. उ. ३।१।१) इति च ।

एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वात् नानेकशक्तियोगो ब्रह्मणः । अतश्च गन्तव्यत्वानुपपत्तिः । 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४।४।६) इति च परस्मिन् ब्रह्मणि गतिं निवारयति । तद्व्याख्यातं 'स्पष्टो ह्येकेषाम्' ब्र. सू. ४।२।१३) इत्यत्र ।

गतिकल्पनायां च, गन्ता जीवो गन्तव्यस्य ब्रह्मणः अवयवो विकारोऽन्यो वा ततः स्यात् । अत्यन्ततादात्म्ये गमनानुपपत्तेः । यद्येवं ततः किं स्यात् ?

उच्यते । यद्येकदेशः, तेन एकदेशिनो नित्यप्राप्तत्वात् न पुनर्ब्रह्मगमनमुपपद्यते । एकदेशैकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना, निरवयवत्वप्रसिद्धेः ।

विकारपक्षेऽप्येतत्तुल्यम्, विकारेणापि विकारिणो नित्यप्राप्तत्वात् । न हि घटो मृदात्मतां परित्यज्यावतिष्ठते, परित्यागे वा अभावप्राप्तेः । विकारावयवपक्षयोश्च, तद्वतः स्थिरत्वात् ब्रह्मणः संसारगमनमप्यनवक्लृप्तम् ।

---

अद्भिस्सोम्यशुङ्गेनतेजोमूलमन्विच्छ तेजसासोम्यशुङ्गेनसन्मूलमन्विच्छ-इत्युपसंहृतम् । यतोवेत्य दिवाक्येऽपि यत्पदेन कारणत्वादेर्वस्तूपलक्षकतैव प्रतिपादिता, न तु 'कारणत्वमेव वस्तुस्वरूपम्' इति प्रतिपादितम्-इत्याह—यतो वा इमानीति । तथा च, सृष्टिवाक्यानां वस्तुसम्भावनया उपलक्षणमात्रपरत्वात्, 'अथात आदेशो नेति नेति' 'सत्यं ज्ञानम्' इत्यादिस्वरूपनिष्ठवाक्यविरोधे व्यावहारिकसृष्ट्यादिपरतैवोपेया-इत्युपसंहरति—एवमिति ।

अवयवो विकारोऽन्यो वेति । यद्यपि विकारावयवविकल्पेऽपि अन्यत्वमविशिष्टम्, तथापि, तयोर्विकल्पयोः जीवोऽयुतसिद्धो ब्रह्मणा भवति, अन्यइतिविकल्पस्तु विश्लिष्टत्वाभिप्रायः ।

ब्रह्मप्राप्तिर्हि मुक्तिः तथा च संसारो ब्रह्माप्राप्त्या व्यवस्थापनीयः, विकारावयवपक्षयोश्च तदवयवशालिनो ब्रह्मणो नित्यं विद्यमानतया जीवस्य ब्रह्मवियोगासम्भवात् संसारानुपपत्तिः—इत्याह—विकारावयवपक्षयोश्चेति ।

अथान्य एव जीवो ब्रह्मणः ; सः अणुः व्यापी मध्यमपरिमाणो वा भवितुमर्हति । व्यापित्वे गमनानुपपत्तिः, मध्यमपरिमाणत्वे च अनित्यत्वप्रसङ्गः, अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः । प्रतिषिद्धे च अणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात् । परस्माच्चान्यत्वे जीवस्य 'तत्त्वमसि' इत्यादिशास्त्रबाधप्रसङ्गः ।

विकारावयवपक्षयोरपि समानोऽयं दोषः । विकारावयवयोः तद्वतोऽनन्यत्वात् अदोष इति चेत् । न । मुख्यैकत्वानुपपत्तेः ।

सर्वेष्वेतेषु पक्षेषु अनिर्मोक्षप्रसङ्गः । संसार्यात्मत्वानिवृत्तेः । निवृत्तौ वा स्वरूपनाशप्रसङ्गः । ब्रह्मात्मत्वानभ्युपगमाच्च ।

यत्तु कैश्चिज्जल्प्यते--नित्यानि नैमित्तिकानि च कर्माणि अनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, सांप्रतदेहोपभोग्यानि च कर्माणि उपभोगेनैव क्षप्यन्ते, इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतया एवंवृत्तस्य सेत्स्यति--इति ।

तदसत्, प्रमाणाभावात् । न ह्येतत् शास्त्रेण केनचित् प्रतिपादितं मोक्षार्थीत्थं समाचरेदिति । स्वमनीषया त्वेतत्तर्कितम्, यस्मात् कर्मनिमित्तः संसारः तस्मात् निमित्ताभावान्न भविष्यतीति । नचैतत् तर्कयितुमपि शक्यते निमित्ताभावस्य दुर्ज्ञानत्वात् । बहूनि हि कर्माणि जात्यन्तरसंचितानि इष्टानिष्टविपाकानि एकैकस्य जन्तोः संभाव्यन्ते । तेषां विरुद्धफलानां युगपदुपभोगासंभवात्, कानिचिल्लब्धावसराणि इदं जन्म निर्मिमते कानिचित्तु

---

अनन्यत्वाददोषइतिचेदिति । अयुतसिद्धत्वात् तत्त्वमस्यादिवाक्यं नानुपपन्नमित्यर्थः । तत्त्वमस्यादिवाक्यानि नायुतसिद्धत्वं जीवब्रह्मणोः प्रतिपादयन्ति, अपि तु स्वरूपैक्यम्, तथा च परस्य तद्विरोधः—इति परिहरति—मुख्यैकत्वानुपपत्तेरिति ।

जीवस्य संसारित्वं अग्न्यौष्ण्यवत् स्वभावः, तत् मोक्षदशायामवतिष्ठते वा अपगच्छति वा । आद्यं दूषयति—सर्वेषु चैतेष्विति । निवृत्तौ वेति । सति धर्मिणि स्वभावनाशादर्शनात् स्वभावनाशो धर्मिणा सहैव भवेदिति भावः ।

प्रसङ्गात् मतान्तरं अनूद्य दूषयति—यत्तु कैश्चिदिति ।

देशकालनिमित्तप्रतीक्षाण्यासते इत्यतः, तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासंभवात् न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम्। कर्मशेषसद्भावसिद्धिश्च 'तद् य इह रमणीयचरणाः' (छा. उ. ५।१०।७) 'ततः शेषेण' (गौ. सू. ११।२९) इत्यादिश्रुतिस्मृतिभ्यः।

स्यादेतत्— नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति।

तन्न। विरोधाभावात्। सति हि विरोधे क्षेप्यक्षेपकभावो भवति। न च जन्मान्तरसंचितानां सुकृतानां नित्यनैमित्तिकैः अस्ति विरोधः, शुद्धिरूपत्वाविशेषात्। दुरितानां तु अशुद्धिरूपत्वात् सति विरोधे भवतु क्षपणम्, न तु तावता देहान्तरनिमित्ताभावसिद्धिः। सुकृतनिमित्तत्वोपपत्तेः। दुश्चरितस्याप्यशेषक्षपणानवगमात्। न च 'नित्यनैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रं न पुनः फलान्तरोत्पत्तिः' इति प्रमाणमस्ति, फलान्तरस्याप्यनुनिष्पादिनः संभवात्। स्मरति ह्यापस्तम्बः—'तद्यथा आम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणं अर्था अनूत्पद्यन्ते' इति। न च असति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित् प्रतिज्ञातुं शक्यम्, सुनिपुणानामपि सूक्ष्मापराधदर्शनात्। संशयितव्यं तु भवति। तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव।

न च अनभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्यात्मनः कैवल्यं आकाङ्क्षितुं शक्यम्। अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात्।

स्यादेतत्—कर्तृत्वभोक्तृत्वकार्यं अनर्थः, न तच्छक्तिः, तेन शक्त्यवस्थानेऽपि कार्यपरिहारात् उपपन्नो मोक्ष इति। तच्च न। शक्तिसद्भावे कार्यप्रसवस्य दुर्निवारत्वात्। अथापि स्यात्—न केवला शक्तिः कार्यमारभते अनपेक्ष्य अन्यानि निमित्तानि। अतः एकाकिनी सा स्थितापि नाप-

---

फलान्तरस्याप्यनुनिष्पादिन इति। अग्न्यन्वाधानप्रस्तरप्रहरणाङ्गभूतमन्त्रप्रकाश्यानि फलानि असत्यामपि कामनायां भवन्ति—इत्यभ्युपगमात्, नित्येष्वपि कर्मसु अस्ति आनुषङ्गिकं फलं इत्यभिप्रायः।

राद्ध्यतीति । तच्च न—निमित्तानामपि शक्तिलक्षणेन संबन्धेन नित्यसंबद्धत्वात् । तस्मात् कर्तृत्वभोक्तृत्वस्वभावे सति आत्मनि असत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथंचन मोक्षं प्रत्याशास्ति । श्रुतिश्च—'नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ३।८) इति ज्ञानादन्यं मोक्षमार्गं वारयति ।

परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः, प्रत्यक्षादिप्रमाणाप्रवृत्तेः—इति चेत्—

न । प्राक्प्रबोधात्स्वप्नव्यवहारवत् तदुपपत्तेः । शास्त्रं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ. उ. ४।५।१५) इत्यादिना अप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा, पुनः प्रबुद्धविषये 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इत्यादिना तदभावं दर्शयति ।

तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वात् न कथंचन गतिरुपपादयितुं शक्या ।

किंविषयाः पुनः गतिश्रुतय इति ।

उच्यते—सगुणविद्याविषया भविष्यन्ति । तथा हि क्वचित् पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते क्वचित् पर्यङ्कविद्यां क्वचिद्वैश्वानरविद्याम् । यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते यथा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा. उ. ४।१०।५) इति 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म (छा. उ. ८।१।१) इति च, तत्रापि वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैवोपास्यत्वात् संभवति गतिः । न क्वचित् परब्रह्मविषया गतिः श्राव्यते, यथा गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' इति । 'ब्रह्मविदाप्नोति परम्' इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे, वर्णितेन न्यायेन देशान्तरप्राप्त्यसंभवात् स्वरूपप्रतिपत्तिरेवेयं अविद्याध्यारोपितनामरूप-

---

तच्च न—निमित्तानामपीति । अदृष्टादीनां क्रियानिमित्तानां, शक्त्यात्मना, कर्त्रा सम्बध्यमानेन स्वरूपेण, नित्यमवस्थितत्वात् इत्यर्थः ।

यत्रापि ब्रह्म प्रकृत्येति । वैश्वानरपर्यङ्कविद्ययोस्तावत् ब्रह्म प्रकृत्यैव गतिरुक्ता, अन्यत्रापि यत्र ब्रह्म प्रकृत्य गतिरुच्यते—इत्यर्थः ।

प्रविलयापेक्षया अभिधीयते 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४।४।७) इत्यादिवत्—इति द्रष्टव्यम् ।

अपिच—परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यात् अनुचिन्तनाय वा । तत्र, प्ररोचनं तावत् ब्रह्मविदो न गत्युक्त्या क्रियते, स्वसंवेद्येनैव अव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः । न च नित्यसिद्धनिःश्रेयसनिवेदनस्य असाध्यफलस्य विज्ञानस्य गत्यनुचिन्तने काचिदपेक्षोपपद्यते ।

तस्मात् अपरब्रह्मविषया गतिः । तत्र, परापरब्रह्मविवेकानवधारणेन अपरस्मिन् ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते ।

किं द्वे ब्रह्मणी—परमपरं चेति । बाढं द्वे, 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' (प्र. उ. ५।२) इत्यादिदर्शनात् । किं पुनः परं ब्रह्म, किमपरमिति । उच्यते । यत्र अविद्याकृतनामरूपादिविशेषप्रतिषेधाद् अस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत् परम् । तदेव यत्र नामरूपादिविशेषेण केनचित् विशिष्टं उपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' (छा. उ. ३।१४।५) इत्यादिशब्दैः तदपरम् । नन्वेवमद्वितीयश्रुतिरुपरुध्येत । न । अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात् ।

तस्य चापरब्रह्मोपासनस्य तत्संनिधौ श्रूयमाणम् 'स यदि पितृलोककामो भवति' (छा. उ. ८।२।१) इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः । तस्य च देशविशेषावबद्धत्वात्

---

परविषया—निर्विशेषविषया । तत्र प्ररोचनं तावदिति । कठवल्लीगतगतिप्रतिपादनस्य प्ररोचनार्थताया अत्रैवोक्ततया प्ररोचनार्थत्वाभावे नातीव तात्पर्यमिति द्रष्टव्यम् ।

एतद्वै सत्यकामेति । यद्यपि अस्यां श्रुतौ हिरण्यगर्भः अपरं ब्रह्म बिम्बरूपं परं ब्रह्मेति विवक्षितम्, प्रकृते तु, सोपाधिकं बिम्बरूपं अपरं निरुपाधिकमेव परमिति विभागो विवक्षितः, तथापि—यथा अस्यां श्रुतौ एकस्यैव चैतन्यस्य परापरभावो विवक्षितः, एवमिहापि एकस्यैवेश्वरस्य सोपाधिकत्वनिरुपाधिकत्वाभ्यां परापरभावो विवक्षितः—इति तात्पर्यम् ॥ १४ ॥

इति कार्याधिकरणम्

तत्प्राप्त्यर्थं गमनमविरुद्धम् । सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिः–इत्यवादिष्म ‘तद्गुणसारत्वात्’ (ब्र. सू. २।३।२९) इत्यत्र ।

तस्मात् ‘कार्यं बादरिः’ इत्येष एव स्थितः पक्षः । ‘परं जैमिनिः’ इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनाय-इति द्रष्टव्यम् ॥ १४ ॥

६. अप्रतीकालम्बनाधिकरणम्

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥

स्थितमेतत् - कार्यविषया गतिः, न परविषयेति ।

इदमिदानीं संदिह्यते-किं सर्वान् विकारालम्बनान् अविशेषेणैव अमानवः पुरुषः प्रापयति ब्रह्मलोकं उत कांश्चिदेवेति । किं तावत् प्राप्तम्? सर्वेषामेवैषां विदुषां अन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् । तथाहि ‘अनियमः सर्वासाम्’ (ब्र. सू. ३।३।३१) इत्यत्र अविशेषेणैवैषा विद्यान्तरेष्ववतारितेति ।

---

गतिगन्तव्यनिरूपणानन्तरं गन्तृस्वरूपं निरूप्यत इति सङ्गतिः ।

मनोब्रह्मेत्यादिप्रतीकोपासकान् अहङ्ग्रहोपासकांश्च अविशेषेणैव अमानवः पुरुषो ब्रह्मलोकं प्रापयति उत अप्रतीकोपासकानेवेति संशयः ।

अयमत्र पूर्वपक्षाशयः–‘स एनान् ब्रह्म गमयति’ इत्यत्र एतत्पदपरामृष्टानां अमानवः पुरुषो नेतेति तावत् अविवादम् । तेन च ‘तद्य इत्थंविदुर्येचामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसंभवन्ति’ इति पूर्ववाक्ये[1] ये प्रस्तुताः तेषां परामर्शः । तद्यइत्थंविदुरिति पञ्चाग्निविदः, येचामीअरण्येश्रद्धांसत्यमिति इतरब्रह्मविदश्च प्रस्तुताः । न च–येचामीअरण्ये इति वाक्ये अहङ्ग्रहोपासकानामेव ग्रहणं, तेषामेव प्राधान्येन ब्रह्मोपासकत्वात्, प्राधान्येनब्रह्मोपासकेष्वेव श्रद्धांसत्यमित्युपासत इति निर्देशस्वारस्यात्, मनोब्रह्मेत्यादौ तु न प्राधान्येन ब्रह्मोपास्यते, अपि तु मनस उपसर्जनतया । अतः सएनान्ब्रह्मगमयतीत्यत्र न प्रतीकालम्बनानां ग्रहणं भवेत्–इति वाच्यम् । यदि हि ‘ये चामी अरण्ये’ इति वाक्ये प्रतीकोपासकानां

---

1. वाक्यमिदं स्थलत्रयवचनैकदेशसमुदायरूपम् ।

एवं प्राप्ते प्रत्याह—अप्रतीकालम्बनानिति । प्रतीकालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान् नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते । न ह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति । अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः ।

तत्क्रतुश्च अस्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः । यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते, 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः । न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति, प्रतीकप्रधानत्वादुपासनस्य । नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते, यथा पञ्चाग्निविद्यायाम् 'स एनान् ब्रह्म गमयति' इति । भवतु यत्र एवमाहत्यवाद उपल-

---

ग्रहणं न स्यात्, तदा तेषां कर्मप्राप्यपितृयाणस्याभावात् देवयानाभावाच्च मार्गद्वयभ्रष्टानां तृतीयमार्गप्राप्तिः स्यात्, सा मा भूदिति, देवयानसम्बन्धसिद्ध्यर्थं 'ये चामी अरण्ये' इति वाक्ये प्रतीकोपासका अपि ग्राह्या एवेति, तेषामप्यमानवपुरुषो नेता भवेदेव—इति ।

अयमत्र सिद्धान्ताभिप्रायः—यद्यपि पूर्ववाक्ये प्रतीकोपासकाः प्राप्ताः, तथापि 'स एनान्' इत्यत्र न तेषां ग्रहणम् । तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव ब्रह्मप्राप्तौ योग्यता, प्राधान्येन ब्रह्मोपासनारहितानां ब्रह्मक्रतुत्वाभावात् न तेषां प्राप्तियोग्यता । सर्वनामानि च न केवलंप्रस्तुतपरामर्शकानि, अपि तु, यत् प्रस्तुतं योग्यं च तत्परामर्शकानि । न चैवं पञ्चाग्निविदामपि सएनानित्यत्र ग्रहणं न स्यादिति वाच्यम् । पञ्चाग्निविद्याप्रकरणपठिते सएनानितिवाक्ये तद्वर्जनानुपपत्तेः । अतः पञ्चाग्निविद्याविषये तत्क्रतुन्यायबाध एवाश्रीयते । एवञ्च [1]अनियमस्सर्वेषामितिन्यायः प्रतीकोपासकेषु अमानवपुरुषनयने सङ्कोच्यते ।

[2]केचित्तु 'ये चामी अरण्ये' इति वाक्यगतयत्पदप्रतिनिर्देशाय तेऽर्चिषमेवाभिसम्भवन्तीत्यत्र तत्पदेन प्रकरणिनां पञ्चाग्निविदां प्रासङ्गिकानां श्रद्धातपोभ्यां ब्रह्मोपासकानां च ग्रहणे सति, सएनानित्यत्र पञ्चाग्निविदामेव ग्रहणम् । न ह्यत्र प्रासङ्गिकानामपि ग्रहणे यत्पदप्रसक्तिरस्ति । तेऽर्चिषमेवाभिसम्भवन्तीत्यत्रपरामर्शमात्रेणैव तस्य निराकाङ्क्षत्वोपपत्तेः । तथा च, पञ्चाग्निविद्यागतवाक्यानुसारेण

---

1. उपासकाभिप्रायेण सर्वेषामिति पुल्लिङ्गनिर्देशः ।
2. केचित्—शास्त्रदर्पणकृतः कल्पतरुकाराः ।

श्यते । तदभावे तु औत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिः नेतरेषामिति गम्यते ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति—'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा. उ. ७।१।५) 'वाग्वाव नाम्नो भूयसी' 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' (छा. उ. ७।२।२) 'मनो वाव वाचो भूयः' (छा. उ. ७।३।१) इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानां उपपद्यते । ब्रह्मतन्त्रत्वे तु, ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात् ।

तस्मात् न प्रतीकालम्बनानां इतरैस्तुल्यफलत्वमिति ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य तृतीयः पादः

---

अहङ्ग्रहोपासकानामपि ब्रह्मप्राप्तिर्न सिद्ध्यति, किमु प्रतीकोपासकानाम् । अहङ्ग्रहोपासकानां ब्रह्मप्राप्तिस्तु, तत्क्रतुन्यायात् उपकोसलविद्यायां अर्चिरादिमार्गं प्रस्तुत्य 'एष देवपथो ब्रह्मपथः' इति तस्य सामान्येन ब्रह्मप्रापकत्वकीर्तनाच्च सिद्ध्यति—इत्याहुः ॥ १५ ॥

प्रतीकोपासकानां ब्रह्मक्रतुत्वाभावे लिङ्गदर्शनमेतत् । यदि 'नाम ब्रह्म' इत्यादौ प्राधान्येन ब्रह्मैवोपास्यं भवेत्, तदा उपास्यतारतम्येन फलतारतम्यं न स्यात्, ब्रह्मण उपास्यस्य सर्वत्राविशिष्टत्वात् । नामादीनां प्राधान्ये तु, तेषामुत्तरोत्तरोत्कर्षात् फलोत्कर्षप्रतिपादनमुपपद्यते ।

ननु—'यो नाम ब्रह्मेत्युपास्ते' इति नामोपासनायां, नाम्नो यो विषयः तत्र कामचारः—तस्य प्राप्तिः फलत्वेनाम्नाता । नामापेक्ष्य वाचमधिकां प्रतिपाद्य 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' इति । एवमुत्तरत्रापि तत्तदुपास्यवस्तुविषयभूतं तत्तदुपासकेन प्राप्यमिति प्रतिपादितम् । न चैतावता पूर्वपूर्वमपेक्ष्य उत्तरोत्तरं फलोत्कर्षः सिद्ध्यति । सर्वं हि वस्तुजातं नाम्नो विषयः, वाचोऽपि सर्वं विषयभूतम्, एवं मनसोऽपि, एवमुत्तरत्रापि—इति चेत् ;

उच्यते—अत्र यावन्नाम्नोगतमित्यादिना लोकसिद्धो यो नामविषयः स न गृह्यते, अपि तु, 'नाम वा ऋग्वेदः' इत्यादिना नामादीनां तत्तत्प्रकरणे यत्र व्याप्तिराम्नाता, तत्र उपासकस्य कामचारो विवक्षितः, स च अस्मिन् प्रकरणे पूर्वपूर्वमपेक्ष्योत्तरोत्तरमधिकैव दर्शितेति न काचिदनुपपत्तिः ॥ १६ ॥

इति अप्रतीकालम्बनाधिकरणम्

इति श्रीमच्छारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाख्यायां चतुर्थाध्यायस्य तृतीयः पादः

---

चतुर्थाध्याये चतुर्थः पादः ।

१ संपद्याविर्भावाधिकरणम्

## संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" (छा. उ. ८।१२।३) इति श्रूयते । तत्र संशयः—किं देवलोकाद्युपभोगस्थानेष्विव आगन्तुकेन केनचिद्विशेषेण अभिनिष्पद्यते आहोस्वित् आत्ममात्रेणेति ।

किं तावत् प्राप्तम् ? स्थानान्तरेष्विव आगन्तुकेन केनचिद्रूपेण अभिनिष्पत्तिः स्यात्, मोक्षस्यापि फलत्वप्रसिद्धेः । अभिनिष्पद्यत इति च उत्पत्तिपर्यायत्वात् । स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्थासु स्वरूपानपायात् विभाव्येत । तस्मात् विशेषेण केनचित् अभिनिष्पद्यते-इति ।

---

निर्विशेषविदां सकलपुण्यपापक्षये इहैव प्राणानां लयो न तूत्क्रान्तिरिति दर्शितम् । सविशेषविदां तु पुण्यपापक्षये मूर्धन्यया नाड्या उत्क्रम्य अर्चिरादिना सगुणब्रह्मप्राप्तिर्भवतीति प्रतिपादितं त्रिपाद्याम् । अस्मिन् पादे, निर्विशेषविदां विलीनप्राणानां स्वाभाविकेन विशुद्धचिदात्मना ब्रह्माभेदेन, [1]आरोपितेन च सर्वज्ञत्वादिना, अवस्थानम्, सविशेषविदां कार्यब्रह्मप्राप्तानां तु सविशेषब्रह्मसायुज्येनावस्थानम्—इति निरूप्यते ।

अत्र प्रथमाधिकरणे निर्विशेषविदां स्वाभाविकेन रूपेण अवस्थानं निरूप्यते ।

ननु—अभिनिष्पद्यतइतिपदं यद्यपि उत्पत्तिं प्रतिपादयति, तथापि, स्वेनेतिपदेन स्वरूपस्याभिनिष्पाद्यत्वावगमात् स्वरूपस्य नित्यसिद्धतया उत्पत्त्यनुपपत्तेः अभिनिष्पद्यत इतिपदमपि अभिव्यक्त्यर्थकं भविष्यति—इत्यत आह—स्वरूपमात्रेणचेदभिनिष्पत्तिरिति । विद्यायाः स्वरूपाभिव्यक्तिः फलमिति वक्तुं न शक्यम्, स्वप्रकाशस्य जीवस्य नित्याभिव्यक्तस्वरूपत्वात् । अतः, उपपत्त्यनुसारेण अभिनिष्पद्यतइतिपदस्य उत्पत्त्यर्थकत्वे स्थिते, स्वेनेतिपदं स्वीयेनेत्यर्थकं भविष्यति—इत्यभिप्रेत्य परिहरति—पूर्वास्वप्यवस्थास्विति ॥ १ ॥

---

1. **आरोपितेनेति** यावत्सर्वमुक्ति, शुद्धचिति अज्ञारोपितं सर्वज्ञत्वादिकं चिद्रूपे मुक्तेऽपि । बद्धजीवान्तराविद्याकृतत्वात्तस्य स्वाभाविकब्रह्मात्मनावस्थानं मुक्तस्य अविरुद्धम् । अतएव सर्वज्ञत्वादेर्नानुसन्धानम्-इति भावः ।

एवं प्राप्ते ब्रूमः—केवलेनैवात्मनाऽऽविर्भवति न धर्मान्तरेणेति। कुतः? स्वेनरूपेणाभिनिष्पद्यत इति स्वशब्दात्। अन्यथा हि स्वशब्देन विशेषणं अनवक्लृप्तं स्यात्। नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति। न, तस्यावचनीयत्वात्। येनैव हि केनचिद्रूपेण अभिनिष्पद्यते तस्यैवात्मीयत्वोपपत्तेः स्वेनेतिविशेषणं अनर्थकं स्यात्। आत्मवचनतायां तु अर्थवत्, केवलेनैवात्मरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणापीति ॥ १ ॥

कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये सति, इत्यत आह—

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

योऽत्र अभिनिष्पद्यतइत्युक्तः स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते, पूर्वत्र तु 'अन्धो भवति' 'अपि रोदितीव' 'विनाशमेवापीतो भवति' (छा. उ. ८।९।११) इति च अवस्थात्रयकलुषितेनात्मना-इत्ययं विशेषः। कथं पुनरवगम्यते मुक्तोऽयमिदानीं भवतीति? प्रतिज्ञानादित्याह। तथा हि 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा. उ. ८।११।३) इति अवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा. उ. ८।१२।१) इति चोपन्यस्य, 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति चोपसंहरति। तथा आख्यायिकोपक्रमेऽपि 'य आत्माऽपहतपाप्मा' इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम्। फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजनापेक्षा। यदपि अभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वं तदपि

---

स्वेनेतिविशेषणसार्थक्याय स्वाभाविकेनैव रूपेण अभिनिष्पत्तौ प्रतिपादितायां 'स्वप्रकाशस्वरूपस्य बन्धावस्थायामपि अभिव्यक्ततया बन्धमोक्षयोर्वैलक्षण्यं न स्यात्' इति पूर्वपक्षिणा प्रतिपादितम्, तन्निरासाय उत्तरसूत्रमवतारयति—कः पुनरिति॥

स्वप्रकाशस्यापि स्वरूपस्य बन्धदशायां अविद्याध्यस्तविशेषैराच्छादिततया न स्फुटतयाऽवभासः, मुक्तौ तु अविद्यादेर्निस्स्वरूपतापत्त्या अधिष्ठानपरिशेषात् स्फुटतयाऽवभासः स्वरूपस्य-इति परिहाराभिप्रायः। विस्तरेण चायमर्थो जिज्ञासासूत्रे एव निरूपितः ॥ २ ॥

पूर्वावस्थापेक्षम्, यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत्। तस्माददोषः ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

कथं पुनः मुक्त इत्युच्यते —यावता 'परं ज्योतिरुपसंपद्य' इति कार्यगोचरमेवैनं श्रावयति, ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात्। न च अनतिवृत्तो विकारविषयात् कश्चित् मुक्तो भवितुमर्हति, विकारस्य आर्तत्वप्रसिद्धेः-इति।

नैष दोषः। यतः आत्मैवात्र ज्योतिश्शब्देनावेद्यते प्रकरणात्। 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' (छा. उ. ८।७।१) इति हि प्रकृते परस्मिन्नात्मनि, न अकस्मात् भौतिकं ज्योतिः शक्यं ग्रहीतुम्, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। ज्योतिश्शब्दस्तु आत्मन्यपि दृश्यते 'तद्देवा ज्योतिषां ज्योतिः' (बृ. उ. ४।४।१६) इति। प्रपञ्चितं चैतत् 'ज्योतिर्दर्शनात्' (ब्र. सू. १।३।४०) इत्यत्र ॥ ३ ॥

२ अविभागाधिकरणम्

## अविभागेन दृष्टत्वात् ॥ ४ ॥

परञ्ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते यः, स किं परस्मादात्मनः पृथगेव भवति उत अविभागेनैवावतिष्ठते—इति वीक्षायाम्, 'स

---

ननु—प्रजापतिविद्यागतेन 'एष सम्प्रसादः'-इति वाक्येन, निर्विशेषविदामपि आदित्यं प्राप्य स्वेन रूपेणाभिनिष्पत्तिः अवगम्यते, अतः सा आगन्तुकरूपगोचरैव भवेत्, स्वाभाविकस्वरूपाभिनिष्पत्त्यर्थं आदित्यादिप्राप्तेरनपेक्षणात्—इत्याशङ्कानिवृत्त्यर्थं सूत्रं आत्माप्रकरणादिति।

ज्योतिर्दर्शनादित्यत्र परञ्ज्योतिरितिवाक्यगतज्योतिःपदस्य ब्रह्मपरताया व्यवस्थापितत्वात् नेयं शङ्कोचिता। तस्यैव न्यायस्य स्मरणार्थं इदं सूत्रमिति न पुनरुक्ततादोषः ॥ ३ ॥

इति सम्पद्याविर्भावाधिकरणम्

मुक्तौ स्वेनरूपेणाविर्भूतं यत् जीवस्वरूपं तत् भेदेनैव ब्रह्मणो भवतीति प्रत्यवस्थानात् संगतिः।

तत्र पर्येति ' इति अधिकरणाधिकर्तव्यनिर्देशात् ' ज्योतिरुपसंपद्य ' इति च कर्तृकर्मनिर्देशात् भेदेनैवावस्थानमिति यस्य मतिः तं व्युत्पादयति। अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुतः? दृष्टत्वात् । तथाहि ' तत्त्वमसि ' ' अहं ब्रह्मास्मि ' ' यत्र नान्यत् पश्यति ' ' न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत् ' इत्येवमादीनि वाक्यानि अविभागेनैव परमात्मानं दर्शयन्ति । यथादर्शनमेव च फलं युक्तं तत्क्रतुन्यायात् ।

' यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।

एवं मुनेर्विजानत आत्मा भवति गौतम ' (क. उ. ४।१५)

इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यानि अविभागमेव दर्शयन्ति । नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्त्वभेदेऽप्युपचर्यते । स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि ' ( छा. उ. ७.२४।१ ) इति "आत्मरतिरात्मक्रीडः " (छा. उ. ७.२५।२) इति चैवमादिदर्शनात् ॥ ४ ॥

३ ब्राह्माधिकरणम्

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

स्थितमेतत्–' स्वेन रूपेण ' इत्यत्र आत्ममात्ररूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति । अधुना तु तद्विशेषबुभुत्सायामभिधीयते—स्वं

---

ननु–तत्रतत्र तत्त्वमसीत्याद्यनेकश्रुतिपर्यालोचनया जीवस्य ब्रह्माभेदः पारमार्थिक इति व्यवस्थापितम् । पुनः कथं, मुक्तो भेदेनावतिष्ठत इति शङ्क्यते- इति चेत् ;

एवम्–सतत्रपर्येतीत्यादिभेदनिर्देशस्य फलोपदेशगततया साधनीभूतज्ञानोपदेशगताभेदनिर्देश औपचारिको यथाकथञ्चिन्नेयः । फलस्य प्रधानतया तदुपदेशानुसारेण साधनोपदेशनयनस्योचितत्वात्-इति ।

अयमत्र सिद्धान्ताभिप्रायः–' स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः ' ' ब्रह्म वेद ब्रह्मैव भवति ' इति फलोपदेशेष्वपि अभेदश्रवणात् तदुपोद्बलितं तत्त्वमस्यादिवाक्यमपि नान्यथा व्याख्यातुमुचितम् , अपि तु, क्वाचित्को मुक्तौ भेदनिर्देश एव यथाकथञ्चिद्व्याख्येयः-इति ॥ ४ ॥

इति अविभागाधिकरणम्

अस्य रूपं ब्राह्मं अपहतपाप्मत्वादि सत्यसंकल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च, तेन स्वरूपेण अभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते। कुतः? उपन्यासादिभ्यः तथात्वावगमात्। तथाहि—'य आत्माऽपहतपाप्मा' इत्यादिना 'सत्यकामः सत्यसंकल्पः' (छा. उ. ८।७।१) इत्येवमन्तेन उपन्यासेन एवमात्मकतां आत्मनो बोधयति। तथा 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' (छा. उ. ८।१२।१३) इति ऐश्वर्यरूपमावेदयति, 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा. उ. ७।१५।२) इति च। 'सर्वज्ञः, सर्वेश्वरः' इत्यादिव्यपदेशाश्च एवं उपपन्ना भविष्यन्तीति ॥ ५॥

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

यद्यपि अपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते, तथापि, शब्दविकल्पजा एवैते, पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते। चैतन्यमेव तु अस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेण अभिनिष्पत्तिर्युक्ता। तथा च श्रुतिः 'एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. उ.

---

ब्रह्माभेदेनाभिव्यक्तं मुक्तस्वरूपं सविशेषमेव-इति प्रत्यवस्थानात् सङ्गतिः।

ननु—सविशेषत्वमाविद्यकमिति तत्रतत्र व्यवस्थापितम्, अतः, 'मुक्तः परमार्थतया सविशेषः' इति कथं पूर्वः पक्षः कर्तुं शक्यते-इति चेत्;

एवम्—मुक्तौ श्रूयमाणं सविशेषत्वं आविद्यकमिति वक्तुं न शक्यते। तदानीं अविद्याया अभावात्। अतः तत् पारमार्थिकमेवेति।

सूत्रे उपन्यासादिभ्यइति उपन्यासपदं उपक्रमपरम्। प्रजापतिविद्यायां हि उपक्रमे श्रुतं अपहतपाप्मत्वादिगुणजातं आविर्भूतस्वरूपजीवगतमेवेत्युक्तं 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यत्र। तथा 'सर्वांश्च लोकानाप्नोति' इत्यादिकमपि परविद्याफलत्वेन उपक्रमे श्रूयते। आदिपदेन 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' इत्याद्युपसंहारः, भूमविद्यागतं 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यादिकं च गृह्यते। न चेदं सर्वलोककामावाप्त्यादि दहरविद्यादिफलं भविष्यतीति शङ्कनीयम्, विद्यान्तरगतस्य विद्यान्तरविषयत्वकल्पनानुपपत्तेः ॥ ५॥

प्रज्ञानघनएवेत्येवकारेण ज्ञानव्यतिरिक्तरूपान्तरप्रतिषेधात्, 'असङ्गो ह्ययं पुरुषः' 'अथात आदेशो नेति नेति' इति च सर्वप्रतिषेधात्, विशेषणाभावद्य-

४।५।१३) इत्येवंजातीयका अनुगृहीता भविष्यति। सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते-सत्याः कामा अस्येति। तथापि उपाधिसंबन्धाधीनत्वात् तेषां न चैतन्यवत् स्वरूपत्वसंभवः, अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वं 'न स्थानतोऽपि परस्योभयलिङ्गम्' (ब्र. सू. ३।२।११) इत्यत्र। अतएव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थं आत्मरतिरित्यादिवत्। न हि मुख्यान्येव रतिक्रीडामिथुनानि आत्मनि शक्यन्ते वर्णयितुम्, द्वितीयविषयत्वात्तेषाम्। तस्मात् निरस्ताशेषप्रपञ्चेन प्रसन्नेन अव्यपदेश्येन बोधात्मना अभिनिष्पद्यते-इति औडुलोमिराचार्यो मन्यते ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमपि—पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि, व्यवहारापेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्य अप्रत्याख्यानात् अविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥

### ४ संकल्पाधिकरणम्

## संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

हार्दविद्यायां श्रूयते—'स यदि पितृलोककामो भवति संकल्पादेवास्य

---

कत्वे प्रबलप्रमाणसिद्धे, क्वचित् मुक्तौ श्रूयमाणं जक्षणादिकं अर्थवादो भविष्यति। तथा(च) 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिना मुक्तावपि सर्वविशेषप्रतिषेधो दृश्यते ॥ ६ ॥

यद्यपि मुक्तजीवगताविद्या निवृत्ता, तथापि, बद्धजीवसम्बद्धाभिरविद्याभिः ईश्वरे सर्वज्ञत्वादिकमारोपितम्, अन्येषु जीवेषु च जक्षणादिकम्। तथा च ब्रह्मात्मनाऽवस्थिते ब्राह्ममपहतपाप्मत्वादिकं मुक्ते उपपद्यते, सर्वात्मकत्वादेव जीवान्तरगतं ब्राह्मलौकिकं जक्षणादिकं उपपद्यते, न च—व्यावहारिकं सत्यकामत्वादिकं ब्राह्मं जैवं जक्षणादिकं च पारमार्थिकेन निर्विशेषचिदात्मना—विरुद्ध्यते, अतो नोपन्यासादीनां निरालम्बनार्थवादत्वमात्रं कल्पयितुमुचितम्-इति भावः ॥ ७ ॥

इति ब्राह्माधिकरणम्

इतःप्रभृति आपादपरिसमाप्तेः सविशेषविद्याफलचिन्ता।

पितरः समुत्तिष्ठन्ति' (छा. उ. ८।२।१) इत्यादि। तत्र संशयः--किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुः उत निमित्तान्तरसहित इति।

तत्र—सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता। यथा लोके अस्मदादीनां संकल्पात् गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवति, एवं मुक्तस्यापि स्यात्। एवं दृष्टविपरीतं न कल्पितं भविष्यति। संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभां अपेक्ष्य उच्यते। न च संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चलत्वात् पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युः—इत्येवं प्राप्ते—

ब्रूमः—संकल्पादेव तु केवलात् पित्रादिसमुत्थानमिति। कुतः? तच्छ्रुतेः। 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिका हि श्रुतिः निमित्तान्तरापेक्षायां पीडयेत। निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्यात्, भवतु, न तु 'प्रयत्नान्तरसंपाद्यं निमित्तान्तरम्' इतीष्यते, प्राक्तत्संपत्तेः वन्ध्यसंकल्पत्वप्रसङ्गात्। न च श्रुत्यवगम्येऽर्थे लोकवदिति सामा-

---

पूर्वत्र, मुक्तजीवविषयकसविशेषनिर्विशेषश्रुतीनां व्यावहारिकत्वपारमार्थिकत्वाभ्यां विरोधः परिहृतः। सङ्कल्पादेवास्यपितरस्समुत्तिष्ठन्तीत्यत्र व्यवहारदशायामेव ब्राह्मलौकिकभोगसाधनेषु एवकारेण सङ्कल्पातिरिक्तकारणकलापनिरासः प्रतिपाद्यते। न हि तत् उपपद्यते, व्यवहारदशायामेवपुष्कलभोगसाधनानां सङ्कल्पातिरिक्तसाधनापेक्षादर्शनेन तदभावस्य श्रुत्या प्रतिपादयितुमशक्यत्वात्। न हि मानोरथिकानां गृहादीनां पुष्कलभोगसाधनता दृष्टा। अतः, ब्राह्मलौकिकानां पुष्कलभोगसाधनानां पित्रादीनां कारणान्तरसापेक्षत्वे लोकप्रमाणसिद्धे, एवकारः कारणान्तराणामल्पप्रयत्नसाध्यतार्थो भविष्यति—इति सङ्गतिगर्भः पूर्वपक्षः।

अयमत्र सिद्धान्ताभिप्रायः—सङ्कल्पादेवेतिश्रुतिप्रामाण्यात्, सङ्कल्पमात्रसाधनानामपि न लोकदृष्टिमात्रेण पुष्कलभोगसाधनता नास्तीति वक्तुं शक्यते। न चैवं ब्राह्मलौकिकानां पित्रादीनां सङ्कल्पमात्रसाध्यत्वे उपादानतयापि कारणान्तरापेक्षा [1]न स्यादिति वाच्यम्। संकल्पादेवेत्येवकारस्य सजातीयसाधनान्तरव्यावर्तकतया जीव-

---

1. न स्यादिति न च इष्टापत्तिः। मतभेदेन वासनानां भूतानाञ्च उपादानत्वस्य वक्ष्यमाणत्वात्।

न्यतोदृष्टं क्रमते। संकल्पबलादेव च एषां यावत्प्रयोजनं स्थैर्योपपत्तिः, प्राकृतसंकल्पविलक्षणत्वात् मुक्तसंकल्पस्य ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव च-अवन्ध्यसंकल्पत्वात्, अनन्याधिपतिर्विद्वान् भवति, नास्यान्योऽधिपतिर्भवतीत्यर्थः। न हि प्राकृतोऽपि संकल्पयन् अन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति। श्रुतिश्चैतद्दर्शयति—अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. उ. ८।१।६) इति ॥ ९ ॥

५ अभावाधिकरणम्

## अभावं बादरिराह ह्येवम् ॥ १० ॥

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिश्रुतेः मनस्तावत् संकल्पसाधनं सिद्धम्। शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न वा सन्तीति समीक्ष्यते।

तत्र, बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां च अभावं महीयमानस्य विदुषो मन्यते। कस्मात्? एवं ह्याह आम्नायः 'मनसैतान् कामान्

---

गतयत्नाद्यनपेक्षत्वेऽपि उपादानापेक्षायामनुपपत्त्यभावात्। तदिदमुक्तं 'निमित्तान्तरमपि तु यदि सङ्कल्पानुविधाय्येव' इत्यादि ॥ ८ ॥

ननु- तत्तल्लोकाधिपतिभिरधिकारिपुरुषैः सङ्कल्पप्रतिबन्धसम्भवात् कथं सङ्कल्पादेवेति वचनम्- इतिशङ्का अत्र व्यावर्त्यते।

अनन्याधिपतित्वम् -ईश्वरातिरिक्ताधिपतिरहितत्वम्। ईश्वरस्तु [शास्त्रप्रामाण्यादेव नोपासकानां सङ्कल्पं प्रतिबध्नातीति कल्प्यते, अन्यैश्च प्रतिबन्ध ईश्वराज्ञावशादेव न भवतीति च ॥ ९ ॥

इति सङ्कल्पाधिकरणम्

यदि श्रुतिप्रामाण्यात् सङ्कल्पातिरिक्तसाधनापेक्षा उपासके नास्ति, तर्हि 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इति श्रुतिप्रामाण्यात् शरीरमपि सविशे(षे)[षविद्या]फलोपभोगे मास्तु—इति प्रत्यवस्थानात् सङ्गतिः।

पश्यन् रमते य एते ब्रह्मलोके' (छा. उ. ८।१२।५) इति। यदि मनसा शरीरेन्द्रियैश्च विहरेत्, मनसेतिविशेषणं न स्यात्। तस्मात् अभावः शरीरेन्द्रियाणां मोक्षे ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्त्वाचार्यो मनोवत् शरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते। यतः 'स एकधा भवति त्रिधा भवति' (छा. ७।२६।२) इत्यादिना अनेकधाभावविकल्पमामनन्ति। न ह्यनेकविधता विनाशरीरभेदेन आञ्जसी स्यात्। यद्यपि निर्गुणायां भूमविद्यायां अयमनेकधाभावविकल्पः पठ्यते, तथापि, विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति ॥ ११ ॥

उच्यते—

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

बादरायणः पुनराचार्यः अत एव—उभयलिङ्गश्रुतिदर्शनात् उभयविधत्वं साधु मन्यते। यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा

---

ननु—मनसेतिनिर्देशो मनःप्रापको भविष्यति, कथमेतावता शरीराभावोऽवगन्तव्यः—इति चेत्;

न। 'कामान् पश्यन् रमते' इति भोगप्रतिपादनादेव अर्थसिद्धे मनसि तन्निर्देशस्य इतरव्यावर्तकत्वात्। न च—भूमविद्यायां 'स एकधा भवति त्रिधा भवति' इत्यादिनिर्देशस्य एकस्मिन् जीवे शरीरभेदोपाधिकतया निर्वहणीयतया, शरीरमपि अवान्तरमुक्तौ स्वीकर्तव्यम्—इति वाच्यम्। भूमविद्यायां निर्विशेषविषयायां आम्नातस्य शरीरभेदस्य सविशेषविद्यायां सञ्चारयितुमयोग्यत्वात्, परममुक्तौ भूमविद्याफलभूतायां शरीरासम्भवाच्च, तस्यार्थवादमात्रत्वात्—इति बादरेर्भावः ॥ १० ॥

पर्यङ्कविद्यायां 'तमित्थंवित् पादेनैवाग्रे आरोहति तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात्' इत्याम्नानेन शरीरसम्बन्धस्तावदवगम्यते। दहरविद्यायां च 'यंयमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव समुत्तिष्ठति' इति सङ्कल्पानुसारिकामप्राप्तेराम्नानात्, सत्यां कामनायां अनेकशरीरग्रहणमपि सम्भवति। तथा च, सविशेष-

त्वशरीरतां तदाऽशरीर इति। सत्यसंकल्पत्वात्, संकल्पवैचित्र्याच्च। द्वादशाहवत्। यथा द्वादशाहः सत्रमहीनश्च भवति उभयलिङ्गश्रुतिदर्शनात् एवमिदमपीति ॥ १२ ॥

## तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

यदा तनोः-सेन्द्रियस्य शरीरस्य अभावः तदा, यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वपि उपलब्धिमात्रा एव पित्रादिकामा भवन्ति एवं मोक्षेऽपि स्युः। एवं ह्येतदुपपद्यते ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

भावे पुनस्तनोः, यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्ति एवं मुक्तस्याप्युपपद्यते ॥ १४ ॥

---

विद्याफलभूतस्यानेकशरीरग्रहणस्यानुवादेन भूमविद्यायां सर्वात्मकत्वाभिप्रायेण सालम्बनस्तुतिसम्भवे, न निरालम्बनस्तुतिस्वीकारो युक्तः। मनसेति तु अनुवादमात्रम् नेतरपरिसङ्ख्या-इति जैमिन्यभिप्रायः ॥ ११ ॥

सङ्कल्पानुसारेण सशरीरताया अशरीरतायाश्च अवान्तरमुक्ते सम्भवात् उभयश्रुत्यनुग्रहोपपत्तौ, न कस्या अपि श्रुतेः स्वारस्यभङ्गो युक्तः।

द्वादशाहवदितिदृष्टान्तस्यायमर्थः—'द्वादशाहमृद्धिकामा उपेयुः' इति वचनात्, 'सप्तदशावराश्चतुर्विंशतिपरमा आसीरन्' इतिद्वादशाहप्रकरणपठितादेव वचनाच्च, द्वादशाहस्य सत्रत्वमवगम्यते। तथा 'द्वादशाहेन प्रजाकामं याजयेत्' इतिवचनात् तस्य अ[हीन](हर्गण)त्वं च। आसिचोदनावत्त्वं वा उपपूर्वकेणधातुचोदनावत्त्वं वा सत्रलक्षणं, अहर्गणसाध्यत्वे सति यजतिचोदनावत्त्वं अहीनलक्षणं च मीमांसकसम्प्रदायसिद्धम्। एवं [1]लक्षणान्तरमपि सत्राहीनयोः मीमांसकसम्प्रदायागतं यथासम्भवमुन्नेयम्। तथा च उभयलक्षणयुक्ततया यथा द्वादशाहस्योभयविधत्वम्, एवं अवान्तरमुक्तस्यापि श्रुतिद्वयप्रामाण्यात् कामानुसारेण सशरीरत्वाशरीरत्वोपगमे न काचिदनुपपत्तिः-इति बादरायणमतम् ॥ १२ ॥

यदा शरीरराहित्यं तदा, यथा स्वप्नदशायां वासनापरिणामभूताः पित्रादयो भोग्याः तथा मुक्तस्यापि वासनापरिणामभूताः पित्रादयो भोग्या इति ॥ १३ ॥

---

1. लक्षणान्तरमिति बहुत्वनियतकर्तृकत्वं सत्रस्य, तन्नियमरहितकर्तृकत्वं अहीनस्य, लक्षणान्तरम्। इदञ्च मीमांसाभाष्यकृन्मतानुसारि। स्पष्टश्चैतत् परिमले।

६ प्रदीपाधिकरणम्

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

'भावं जैमिनिर्विकल्पामननात्' इत्यत्र सशरीरत्वं मुक्तस्योक्तम्। तत्र, त्रिधाभावादिष्वनेकशरीरसर्गे, किं निरात्मकानि शरीराणि दारुयन्त्राणीव सृज्यन्ते किं वा सात्मकान्यस्मदादिशरीरवत्—इति भवति वीक्षा।

तत्र च आत्ममनसोर्भेदानुपपत्तेः एकेन शरीरेण योगात् इतराणि शरीराणि निरात्मकानि—इत्येवं प्राप्ते—

प्रतिपद्यते—प्रदीपवदावेश इति। यथा प्रदीप एकः अनेकप्रदीपभावमापद्यते विकारशक्तियोगात्, एवं एकोऽपि सन् विद्वान् ऐश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति। कुतः? तथाहि दर्शयति शास्त्रं एकस्यानेकभावम् 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा. उ. ७।२६।२) इत्यादि। नैतद् दारुयन्त्रोपमाभ्युपगमेऽवकल्पते नापि जीवान्तरावेशे। न च निरात्मकानां शरीराणां प्रवृत्तिः संभवति।

यत्तु—आत्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासंभव इति।

नैष दोषः। एकमनोऽनुवृत्तीनि समनस्कान्येव अपराणि शरीराणि

---

स्थूलशरीरस्यापि भावे तु, यथा जाग्रति भौतिका भोग्या भवन्ति एवं मुक्तस्यापि पित्रादिकामाः भौतिका एवेति ॥ १४ ॥

इति अभावाधिकरणम्

पूर्वाधिकरणव्यवस्थापितकामनानुसार्यनेकशरीराणां सजीवत्वव्यवस्थापनात् सङ्गतिः।

आत्ममनसोर्भेदानुपपत्तेरिति। [1]यद्यपि एकस्यैवात्मनोऽविद्योपाधिकस्य व्यापकत्वेन सर्वशरीरसम्बन्धितासम्भवात् तस्य भेदानपेक्षत्वं सर्वशरीरसंसर्गार्थम्, तथापि, अन्तःकरणोपहितस्यैव प्रमातृत्वेन अन्तःकरणपरिच्छेदेन तस्य परिच्छिन्नत्वात् अन्तःकरणभेदं विना न सर्वेषां शरीराणां प्रमातृ(त्व)संसर्गस्सिध्यतीति भावः।

एकमनोऽनुवृत्तीनीति। प्राक्सिद्धं यदेकं मनः तेन संकल्पवशात्सृज्यमानैः मनोभिः सर्वेष्वपि शरीरेषु अविद्योपाधिकस्यैव जीवस्य अवच्छेदसम्भवात्, न

---

1. यद्यपीत्यादि एतच्छङ्कासमाधानेन श्रुतप्रकाशिकोक्तं भाष्यदूषणं निरस्तं वेदितव्यम्।

सत्यसंकल्पत्वात् स्रक्ष्यति। सृष्टेषु च तेषु उपाधिभेदादात्मनोऽपि भेदेन- अधिष्ठातृत्वं योक्ष्यते। एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोग- प्रक्रिया ॥ १५ ॥

कथं पुनः मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते, यावता 'तत् केन कं विजानीयात्' (बृ. उ. ४।५।१५) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ. उ. ४।३।३०) 'सलिल एको द्रष्टा- ऽद्वैतो भवति' (बृ. उ. ४।३।३२) इति चैवंजातीयका श्रुतिः विशेषविज्ञानं वारयति, इत्यत उत्तरं पठति—

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः—सुषुप्तम् 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' (छा. उ. ६।८।१) इति श्रुतेः। संपत्तिः—कैवल्यम्, 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४.४.६) इति श्रुतेः। तयोरन्यतरामवस्थामपेक्ष्य एतत् विशेषसंज्ञा- भाववचनम्। क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते क्वचित् कैवल्यावस्थाम्। कथमवगम्यते? यतः, तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति (बृ. उ. २।४।११) 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ. उ. २।४।१४) 'यत्र सुप्तो न कंचन काम कामयते न कंचनं स्वप्नं पश्यति' (बृ. उ. ४।३।१९। मा. उ. ५) इत्यादि- श्रुतिभ्यः। सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरम्, यत्रै- तदैश्वर्यमुपवर्ण्यते। तस्माददोषः ॥ १६ ॥

---

कायव्यूहस्य प्रमातृ(त्व)सम्बन्धविधुरता, योगमाहात्म्यादेव अनेकान्तःकरणावच्छेदेन एकस्यैवानुसन्धातृत्वमपि सम्भवतीति न काचिदनुपपत्तिः-इति भावः ॥ १५ ॥

यत्रत्वस्यसर्वमात्मैवाभूदित्यादिना विशेषविज्ञानाभावः क्वचित् सुषुप्तिं प्रस्तुत्य दर्शितः क्वचित् परममुक्तिं प्रस्तुत्य, अतः अवान्तरमुक्तौ सशरीरतया विशेष- विज्ञानवत्त्वे न काचिदनुपपत्तिः ॥ १६ ॥

इति प्रदीपाधिकरणम्

७ जगद्व्यापाराधिकरणम्

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यं व्रजन्ति, किं तेषां निरवग्रहमैश्वर्यं भवति आहोस्वित् सावग्रहमिति संशयः। किं तावत् प्राप्तम् ? निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति, 'आप्नोति स्वाराज्यम्' (तै. उ. १।६।२) 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै. उ. १.५।३) 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. उ. ७।२५।२, ८।१।६) इत्यादिश्रुतिभ्यः- इत्येवं प्राप्ते —

पठति—जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः ? तस्य तत्र प्रकृतत्वात् असन्निहितत्वाच्चेतरेषाम्। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः। तमेव प्रकृत्य उत्पत्त्याद्युपदेशात्, नित्यशब्दनिबन्धनत्वाच्च। तदन्वेषणविजिज्ञासनपूर्वकं तु इतरेषामणिमाद्यै-

---

यदि सङ्कल्पानुसारेण समनस्कानेकशरीरस्रष्टृत्वं तर्हि सङ्कल्पादेव निरवग्रहैश्वर्यमप्युपासकस्यास्तु-इति प्रत्यवस्थानात् सङ्गतिः।

जगदुत्पत्त्यादिव्यापारं वर्जयित्वेति। अयं भावः—उपासकानां सङ्कल्पानुसारेण निरवग्रहैश्वर्ये कल्प्यमाने जगदुत्पत्त्यादिव्यापारोऽपि तेषामङ्गीकर्तव्यः। न चैतदुपपद्यते, अनादिसिद्धं परमात्मानं प्रकृत्य तस्यैकस्यैव यतोवेत्यादिवाक्यैः जगद्व्यापारप्रतिपादनात्, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिवचनैः अन्येषां तन्निषेधाच्च। तथा च श्रुतिविरोधे न सत्यसङ्कल्पतामात्रेण तस्य निरवग्रहैश्वर्यकल्पनोचिता, अपि तु स्वभोग्यविषय एव तस्य सत्यसङ्कल्पत्वमुपगन्तव्यम्-इति।

ननु 'यतोवेत्यादिवाक्यमुपासकविषयकमप्यस्तु-इत्याशङ्क्याह—तस्य तत्र प्रकृतत्वादित्यादिना। नित्यशब्दनिबन्धनत्वाच्चेति। नित्यसिद्धस्य कारणत्वप्रतिपादकश्रुतिजातस्य, नित्यसिद्धं यस्यैश्वर्यं स एव विषय उचितः, न तु साधनायत्तानित्यैश्वर्य उपासकः, नित्यानित्यसंयोगविरोधात्-इति भावः। यद्यपि 'सर्वकर्मा सर्वकामः' 'सर्वैश्वर्यसम्पन्नः शम्भुराकाशमध्ये' इत्यादिनिरङ्कुशैश्वर्यविषयोपासकानां तत्क्रतुन्यायेन निरङ्कुशैश्वर्यं फलमपेक्षितम्. तथापि, ईश्वरैकत्वप्रमापकश्रुतिस्मृतिन्यायैः एतादृशविषये तत्क्रतुन्यायः संकोचनीयः ॥ १७ ॥

श्वर्यं श्रूयते। तेन असन्निहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैतेषां अनैकमत्ये कस्यचित् स्थित्यभिप्रायः कस्यचित् संहाराभिप्रायः इत्येवं विरोधोऽपि कदाचित् स्यात्। अथ कस्यचित् संकल्पमनु अन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥ १७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' इत्यादिप्रत्यक्षोपदेशात् निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत् परिहर्तव्यम्।

अत्रोच्यते। नायं दोषः, आधिकारिकमण्डलस्थोक्तेः। आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेषु अवस्थितः पर ईश्वरः, तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणं अनन्तरम् 'आप्नोति मनसस्पतिम्' (तै. उ. १।६।२) इत्याह। यो हि सर्वमनसां, पतिः पूर्वसिद्ध ईश्वरः तं प्राप्नोतीत्येतदुक्तं भवति। तदनुसारेणैव च अनन्तरं 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' इत्याह। एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम् ॥ १८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम्। तथाह्यस्य द्विरूपां स्थितिं आहाम्नायः 'तावानस्य महिमा ततो ज्यायाँश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपा-

---

पूर्वपक्षोपन्यस्तश्रुतीनां गतिं वक्तुं सूत्रम्।

आप्नोतिमनसस्पतिमितिप्राक्सिद्धपरमेश्वरप्राप्तिपूर्वकमेव वाक्पतिरित्यादिप्रतिपादनात् तत्तन्त्रमेव वाक्पतित्वादिकं इत्याह—एतदुक्तमिति। एवंसति 'तमीश्वराणां परमं महेश्वरम्' इत्यादि नित्यसिद्धेश्वरविषयं उपपद्यत इति भावः ॥ १८ ॥

पादोऽस्य सर्वा भूतानीति। विकारजातं परमात्माप्यस्ततया तदेकदेश (एव) इव। त्रिपादस्यामृतं दिवीति। अधिष्ठानं तु परमात्मा विकारातीतः तदधिकः

दस्यामृतं दिवि' (छा. उ. ३।१२ ६) इत्येवमादिः। न च तन्निर्विकारं रूपं इतरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुम्, अतत्क्रतुत्वात् तेषाम्। अतश्च, यथैव द्विरूपे परमेश्वरे निर्गुणंरूपमनवाप्य सगुण एवावतिष्ठन्ते, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्ते इति द्रष्टव्यम् ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' (क. उ. ५।१५) इति, 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' (गी. १५।६) इति च। तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धं इत्यभिप्रायः ॥२०॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं, यस्मात् भोगमात्रमेवैषां अनादिसिद्धेनेश्वरेण समानं इति श्रूयते—'तमाहापो वै खलु मीयन्ते लोकोऽसौ' (कौ. उ. १।६) इति 'यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' (बृ. उ. १।५।२०) 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ. उ. १।५।२३) इत्यादिभेदव्यपदेश लिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वात् अन्तवत्त्वमैश्वर्यस्य स्यात्, ततश्च एषां आवृत्तिः प्रसज्येतेति, अत उत्तरं भगवान् बादरायण आचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं

---

स्वप्रकाशः स्वमहिमप्रतिष्ठितः। न च तन्निर्विकारं रूपमिति। निर्विशेषसाक्षात्काराभावेन अविद्याया अ(नु)[नि]वृत्तेरुपासकानां इति भावः ॥ १९ ॥

स्पष्टम् ॥ २० ॥

तं-उपासकं स्वसमीपमागतं ब्रह्मा आह। आपः अमृतरूपाः, मीयन्ते-भुज्यन्ते, असौ लोकः—भोग्यः पदार्थः तवापि साधारण इत्यर्थः ॥ २१ ॥

आवृत्तिः प्रसज्येतेति। न चेष्टापत्तिः, 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते' इति श्रुतिविरोधात् ॥

शास्त्रोक्तविशेषणं गच्छन्ति, यस्मिन् अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि, यस्मिन् ऐरं मदीयं सरः, यस्मिन् अश्वत्थः सोमसवनः, यस्मिन् अपराजिता पूर्ब्रह्मणः, यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म, यश्च अनेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते, ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते । कुतः ? 'तयोर्ध्वमायन्नमृतत्वमेति' (छा. उ. ८।६।६, 'तेषां न पुनरावृत्तिः' (बृ. उ. ६।२।१५) 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा. उ. ४।१५।६) 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा. उ. ८।१५।१) इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिः तथा वर्णितम् 'कार्यात्यये तदध्यक्षेण सहातःपरम्' (ब्र. सू. ४।३।१०) इत्यत्र । सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः, तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति ।

अनावृत्तिःशब्दादनावृत्तिःशब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य चतुर्थः पादः
समाप्तश्चाध्यायः

समाप्तमिदं ब्रह्मसूत्रशाङ्करभाष्यम्

---

शास्त्रोक्तविशेषणमिति । 'अरश्चह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरः तदश्वत्थस्सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' इत्यादि शास्त्रम् । अर इति ण्य इति च अर्णवसदृशयोर्जलाशययोस्संज्ञा । ऐरम्-इरा-मद्यं तत्सम्बन्धि, मदीयं-मदकरम् । सोमः-अमृतं, तत् यस्मात् स सोमसवनः । विमितं-निर्मितम् । मन्त्रार्थवादादिप्रदेशेषु कौषीतक्यादिगतेषु ।

'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यादौ अध्यायपरिसमाप्तिद्योतनाय पदमेवाभ्यस्यते, कृत्स्नसूत्राभ्यासस्तु शास्त्रसमाप्तिं द्योतयति-इत्याह—सूत्राभ्यास इति ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वती-
श्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादि-
गुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्द-
तीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थ-
स्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीम-
दद्वैतानन्दस्य कृतौ शारीरकभाष्य-
व्याख्यायां ब्रह्मविद्याभरणाख्यायां
चतुर्थस्याध्यायस्य
चतुर्थः पादः
अध्यायश्च समाप्तः

ओम्

ब्रह्मविद्याभरणग्रन्थस्समाप्तः

ERRATA

सभाष्यब्रह्मविद्याभरणद्वितीयभागे मुद्रणाशुद्धिस्थलेषुपठितव्यशुद्ध-प्रदर्शिनीपट्टिका—

| पुटे | पङ्क्तौ | शुद्धम् | पुटे | पङ्क्तौ | शुद्धम् |
|---|---|---|---|---|---|
| 1 | 5 | कारणम् | 122 | 12 | पूर्वकृत्व |
| 2 | 3 | द्वितीयो | 123 | 6 | परमाणु |
| 2 | 15 | कपिलादि | 123 | 15 | अणुत्वा |
| 2 | 19 | वेदान्तं | 123 | 15 | अभ्युपगमे |
| 4 | 5 | स्मृतीनां | 123 | 15 | प्रयत्नो |
| 6 | 11 | इतराः । | 129 | 21 | ज्ञानवानहं |
| 7 | 5 | श्चोदनाया | 136 | 11 | गन्ध |
| 7 | 12 | सन्मार्गे | 149 | 26 | सङ्गतिर्दर्शिता |
| 7 | 12 | सङ्ग्रह | 164 | 10 | स्तुनो |
| 8 | 12 | रौद्रं | 164 | 11 | क्षणयोः |
| 10 | 10 | पेक्षं | 164 | 24 | अदःपद |
| 10 | 15 | तानि | 167 | 23 | पारमार्थिक |
| 32 | 2 | पपत्तेः | 169 | 11 | भिप्रायः |
| 35 | 5 | लोके | 175 | 17 | इत्येवं |
| 37 | 21 | स्वरूपं | 178 | 16 | आन्तराणां |
| 51 | 11 | प्रतिज्ञा | 209 | 21 | षाड्गुण्य |
| 53 | 9 | उद्घापिते | 209 | 21 | बलैश्वर्य |
| 54 | 6 | आकाश | 243 | 21 | द्वारैवो |
| 59 | 15 | शृङ्गेणापि | 290 | 10 | इत्येवं |
| 59 | I5 | चैवं | 297 | 1 | अधि. १७ |
| 81 | 10 | इत्येतदपि | 299 | 1 | अधि. १७ |
| 91 | 4 | दुःखमोहा | 301 | 1 | अधि. १७ |
| 97 | 9 | एव | 302 | 24 | न्तःकरणा |

